# SREEMANNARAYANEEYAM

*Of*

NARAYANA BHATTAPADA

WITH THE COMMENTARY, BALABODHINI

*Of*

KONATH KRISHNA WARIYAR

*Published by*

KONATH SANKARA WARIYAR



FIRST EDITION

1132/1957.

Copies 1000] [Price Rupees 10



RAJA PRESS, TRIPUNITHURA.

# श्रीमन्नारायणीयम्

नारायणभट्टपादप्रणीतम्

कोणत्त् कृष्णवारियर् महाशयप्रणीतया

बालबोधिन्याख्यया व्याख्यया समेतम्

कोणत्त शङ्करवारियर् महाशयेन प्रकाशितम्



प्रथम संस्करणम्

११३२/१९५७

प्रतय. १०००] [मूल्यं [illegible] रू १°

मुद्रणाधिकार काङ्कुन्न् अच्युतवारियर् महा[illegible]स्वीकृत

राजा प्रस्, तृश्शिवपुरी

# श्रीमन्नारायणीयम्

नारायणभट्टपादप्रणीतम्

कोणत्त् कृष्णवारियर् महाशयप्रणीतया

बालबोधिन्याख्यया व्याख्यया समेतम्

कोणत्त शङ्करवारियर् महाशयेन प्रकाशितम्



प्रथम संस्करणम्

११३२/१९५७

प्रतयः १०००] [मूल्यं दश रूप्यकाणि रू १०



---

राजा प्रस्, पूर्णवेदपुरी

# अवतारिका

विजानन्ति हि विपश्चितः श्रीशङ्करभगवत्पूज्यपादानां, पय्यूरभिजनाना माचार्यभट्टभ्रातॄणाम्, अन्येषामपि बहूनां बहुश्रुतानां महाकवीनाञ्च या खलु जनयित्री, सैव केरळधात्री तत्तद्गुणसादरयात्सोदरतामर्हतां श्रीमन्नारायण भट्टपादानामपि प्रसवित्रीति। उत्तरे निळानद्यास्तीरे परिलसतः श्रीनावादेवाय तनादविदूरे स्थितवति 'मेल्पुत्त'रिति सुप्रतीते मूसुरागारे ७३५ तमे कोल म्बाब्दे भट्टपादा जनिमलभन्त। तच्चागारं कालेन विच्छिन्नसन्तानम् इदानी मवशिष्यते नाममात्रेण। भट्टपादैरेव स्वकृतस्य प्रक्रियासर्वस्वमिति सुप्र सिद्धस्य ग्रन्थस्यान्ते,

'भूखण्डे केरळाख्ये सरितमिह निळामुत्तरेणैव नावा-
क्षेत्रे गव्यूतिमात्रे पुनरुपरिनवग्रामनाम्नि स्वधाम्नि।
धर्मिष्ठाद्भट्टतन्त्रायसिलमतपटोर्मातृदत्ताद्द्विजेन्द्रा-
ज्जातो नारायणाख्यो निरवहदतुलां देवनारायणाज्ञाम्॥'

इत्यनेन पद्येन व्यक्तमावेदितमात्मनो जन्मस्थानकुलादिकम्॥

'मीमांसादि स्वतातान्निगममविकलं माधवाचार्यवर्या-
त्तर्कं दामोदराख्यादपि पदपदवीमच्युताख्याद्बुधेन्द्रात्।
तेषां कारुण्ययोगात् किमपि च कवितामाप्नुवं काममेत-
द्भूयात् कृष्णार्पणं मे भवतु च सततं धीरधारेः कथायाम्॥'

इति तत्कृतपद्यान्तरादवगम्यते वेदेषु पदवाक्यप्रमाणविद्यासु च सद्गुरुभ्यः समुचिता शिक्षा तैस्समासादीति। अत्राच्युताख्याद्बुधेन्द्रादिति सभक्त्य तिशयमुत्कीर्तिताः पदपदवीविनेतार एव (तृक्कण्डियूर् अच्युतपिषारोटि) निमित्तता मवापुर्धीरधारेः श्रीकृष्णस्य कथायामासङ्गे भट्टपादकवितायाः इति हि स्म पुराविदः माहुः। गुरुणा वातरोगेण निकाममवशतां नीतेन गुरुणा तेन रोगप्रशममीहता

सुविहिते कर्मविपाकप्रायश्चित्ते श्रुतिशास्त्रधर्मविद्भिः शिष्य एव निर्भरभक्तिप्रेरितो रोगप्रतिमामस्य गृह्णात्। दानमप्यनन्तरमेवामुष्य दाता, प्रतिगृहीता घातकी च। गुरुः कल्यतया सम्पन्नमनोरथः स तु व्यजनि तेवासी परां द्रुता र्थेनामापेदे। विश्वात्मनः परमात्मनः कृष्णाभिधेनात्मना रोगनिवृत्तौ परमौषध निश्चित्य च सत्वरमेव स दृश्यनदीं पुण्यतमं प्रचेतसां तपोभूमिं गुरुपवन पुरं समासाद्य प्रपद्य भगवच्चरणौ नतो निषेदाश्रमं। दिने दिने श्रीमद्भागवतार्थसंग्रहस्वरूपाणां पद्यानां दशकं निर्माय भक्तप्रवरोऽसौ हरिमस्तौषीत्। यावत्तु तादृशानां पद्यानां सङ्ख्या सहस्राद्वरता प्रापत्, समग्रापि भागवतार्थस्तेषु यथाक्रमं संगृहीतश्चाभूत्, तावदेव तस्य चक्षुषोर्लक्ष्यतामगात् किल भगवान् पुण्डरीकाक्षः। अत एव शतकस्यान्तिमेन, 'अग्रे पश्यामि तेजो निबिडतरकलायावलीलोभनीयं पीयूषाप्लावितोऽहम्' इत्यादिपद्येन भगवतस्साक्षात्कारं खलु सानन्दभरं कविरपि स्म निर्दिशति। परमसुन्दरसाम्यान्तरामाजितकुन्तलान्तैरञ्चितमन्तु दरीमण्डलैश्चावीतं तारुण्यारम्भरम्याद्भुतमङ्गलविग्रहं हृषीकेशं भक्त्यानन्दतरङ्गिताक्षो विलोकयन् नूनं केशादारभ्य पादान्तमनुक्रमणाभिष्टौति स्म च दशकेनानेन। तथा भगवदनुग्रहपात्रीभूते, तथा परमानन्दपीयूषाप्लाविते च तस्मिन् भक्तवरेण्ये कथं पुनरवस्थातुमामया प्रभवेयुः। समूलमुन्मूलिताः कायिकमानसाः सकलातङ्कास्सञ्चारिताश्चे तदा किलावादीच्च—

'हे रोगा मम यूयमेव सुहृदो यैर्निस्पृहोऽयं जनः
काव्यालङ्कृतितर्कशाब्दिकसमामध्येषु शास्त्रेषु च।
नो चेत् कृष्णपदारविन्दभजनं नेदान्तकेऽनामपि
त्यक्त्वा हन्त हरे इति प्रमादहमहो याम्येव याम्यां पुरीम्॥ इति॥

अतिमदशकस्यान्ते 'आयुरारोग्यसौख्यम्' इति कलिदिननिर्देशेन वर्ण्यते, ७६२ तमस्य कोळम्बाब्दस्य वृश्चिकमासि २८ तमे दिने स्वातिकृष्णचतुर्दशीभ्यां मिलिते रविवारे (१२-१२-१५८७ A. D.) स्तोत्रग्रन्थोऽयं समाप्तिं प्राप इति। उत्तमसाहित्यसमुच्चयनायकायमानं भक्तिरसामृतग्रन्थिं, श्रीमद्भागवतक्षीरोदोद्धृतनवनीतं तच्च स्तवरत्नं विषयतया कर्तृतया च नारा

यणानुबन्धि नारायणीयमिति प्रथतेतराम् । महापण्डितैर्महाकविभिश्च भट्टपादैः सन्त्युपहृतानि सुरसरस्वत्या बहूनि शास्त्रसाहित्यनिबन्धनरत्नानि । * तानि सर्वाण्यपि गाम्भीर्यसौन्दर्यादिभिस्स्वस्वोचितगुणैर्विभूषितानि हठादपहरन्ति पण्डितानां सहृदयानाञ्च चेतांसि । तेषु नारायणीयमापादचूडं श्रीहरेश्चरितामृतासेकादतिमधुरम्, प्रतिपदं भगवदाभिमुख्यबोधकपदबन्धादविच्छिन्नतदनुसन्धानसाधनञ्चेति रुच्यं पथ्यञ्च महौषधमिव दरातिशयस्यास्पदं भवति । अस्य महाग्रन्थस्य व्याख्यया सह नागरलिपिभिर्मुद्रयित्वा प्रकाशने प्रवृत्तानामुद्यमस्सर्वथा श्लाघामर्हत्येव । अस्ति यद्यप्यस्य भक्तप्रियाभिधानं व्याख्यानं समूलं मुद्रितं प्रकाशितञ्च, तथापि तस्यातिसंक्षिप्तत्वान्नातिसंक्षेपविस्तरेणानेनाभिनवव्याख्यानेन सहास्य पुनः प्रकाशनं नूनमुपकरिष्यति यथाश्रुतमूलार्थजिज्ञासूनाम् । अन्यासामपि भट्टपादकृतीनामेवं प्रकाशनं यद्यकरिष्यत, तर्हि बहूनामत्यन्तमुपाकरिष्यत ॥

---

* १) श्रीपादसप्ततिः ।
२) गुरुवायुपुरेशस्तोत्रम् ।
३) गोश्रीनगरवर्णनम् ।
४) मातृमहीशप्रशस्तिः ।
५) शैलाब्धीश्वरप्रशस्तिः ।
६) सूक्तश्लोकः ।
७) आश्वलायनक्रियाक्रमः ।
८) प्रक्रियासर्वस्वम् ।
९) धातुकाव्यम् ।
१०) पाणिनीयप्रामाण्यसाधनम् ।
११) मानमेयोदये मानपरिच्छेदः ।
१२) तन्त्रवार्तिकनिबन्धनम् ।
१३) राजसूयप्रबन्धः ।
१४) दूतवाक्यम् ।
१५) पाञ्चालीस्वयंवरः ।
१६) नाळायणीचरितम् ।
१७) सुन्दोपसुन्दोपाख्यानम् ।
१८) सुभद्राहरणम् ।
१९) कौन्तेयाष्टकम् ।
२०) किरातम् ।
२१) कैलासवर्णनम् ।
२२) मत्स्यावतारः ।
२३) नृगमोक्षः ।
२४) निरनुनासिकम्, अथवा शूर्पणखाप्रलापः ।
२५) राक्षसोत्पत्तिः ।
२६) अहल्यामोक्षः ।
२७) बालकाण्डम् ।
२८) दक्षयज्ञः ।
२९) स्वाहासुधाकरम् ।
३०) कोटिविरहः ।

केरळेषु 'कोणत्त्' इति विख्याते पारशवान्वये १०५९ तमे कोळम्बवर्षे प्राप्तजन्मा, 'कृष्णवारियर्' इति सुप्रतीतः पण्डिताग्रणीरस्य व्याख्यानस्य निर्माता। बाल्ये स्वमातुलादिभिरेव काव्यादिषु विनीतोऽसौ 'देशमङ्गलम्' इति प्रथिते केरळीयाढ्यद्विजन्मालये आचार्यतामङ्गीकृत्य कृतवसतीनां 'वाटानाकुरुश्शि' नारायणशास्त्रिणां निकटे न्यायशास्त्रस्य प्रकरणग्रन्थान् पपाठ। १०८३ तमे वर्षे पूर्णवेदपुरीं (Tripunithura) गत्वा श्रीपरीक्षिद्रामवर्मनाम्नामद्यतनगोश्रीमहाराजानां, तार्किकतिलक-पण्डितराज-निरदमानां 'श्री मान्तिट्ट कुञ्चुनम्पूतिरि' महाशयानामन्तेवासी भूत्वा तत्र शास्त्रे वादग्रन्थानप्यध्यगीष्ट। सहृदयतिलक-पण्डितराज-श्रीरामपिषारटकानां सकाशे अलङ्कारशास्त्रञ्च। ज्योतिश्शास्त्रेऽप्यसौ महामतिरतीव विशारद आसीत्। अस्यावरज एव ग्रन्थस्यास्य प्रकाशकः श्रीमान् 'शङ्करवारियर्' महाशयः। योऽसावपि ज्योतिःशिल्पशास्त्रयोर्निष्णातः। १०९० तमे वर्षे गोश्री (Cochin) राज्ये विद्याभ्यासाधिकृतैराङ्गलकलाशालायामसौ संस्कृताध्यापकपदे न्ययोजि। ११९८ तम वर्षं यावदेतत् पदमधिष्ठाय पुनरधिकृतैरनुमतयावज्जीववेतनभागादानः स्वतो विरतोऽभूत्। संवत्सरान्तरमिहवासाच्च। अध्यापकपदे तिष्ठन्नेव प्रस्तुतव्याख्याने व्यापृत आसीत्। परन्तु समारब्धव्याख्यानपरिसमाप्तौ विधिर्विरोधीव प्रत्यवातिष्ठत। अष्टोत्तराशीतिदशकानि अनन्तरदशके पञ्चमसर्ग यावदेवानेन पण्डितवरेण्येन व्याख्या निरमायि। अवशिष्टभागस्य तु तदीयज्ञातिष्वन्यतमेन 'काट्टुकुळत्त अच्चुतवारियर्' इति प्रथितेन विद्वद्वरेण कृतं व्याख्यानम्। भट्टपादकृतस्य मत्समानितमन्ते ग्रन्थस्याल्पभागो विवरणशून्यो माभूदिति। सापि, सुभद्राहरणप्रबन्धस्याप्यस्ति 'कृष्णवारियर्' महाशयेन कृता व्याख्या। सति महाजनानामनुग्रहे, विधेरप्यानुकूल्ये शक्यतैव प्रकाशमानेतु कालेन। अचिरादेव ग्रन्थस्यास्य पुनर्मुद्रणमपेक्षितं यथा भविता, तथाऽत्र विदुषामादरो भूयादित्याशासमानस्सपरितोषं तेषां पुरस्तादिममवतारयामि॥

इति,

बुधिया विधेय,

एरणाकुलम्
15—5—1957 } पण्डितराज, के अच्युतप्पोतुवाळ्

महामहिमश्री
दर्शनकलानिधिरामवर्म्मपरीक्षिद्गोश्रीमहाराजानाम्

# अभिप्रायः

सुपरिचितं खलु सुधियां श्रीमद्भागवतार्थसङ्ग्रहस्वरूपं भक्तशिरोमणिभि श्रीनारायणभट्टपादै गुरुपवनपुरेश्वरं भुवनेश्वरं निषेवमाणैर्विरचितं नारायणीयं नाम स्तुतिरत्नम् । भगवच्चरितमहिम्नोरनुवर्णनैरयं स्तवराजः कस्य नाम चित्तं न द्रावयति भक्तजनेषु । प्रकृष्टकाव्यगुणानां सम्पदा सहृदयेषु कस्य वा हृदयं न करोत्यानन्दघनञ्च ॥

श्रुतं प्रागेव, अस्यानायासेनार्थप्रतिपत्तिकरं व्याख्यानं कृतमस्ति काव्यरसज्ञेन श्रीकृष्णचरणारविन्दनिरतान्तःकरणेन (कोणत्त्) कृष्णनाम्ना पण्डितपारशववरेणेति । स्वर्गतस्य व्याख्यातुरनुजन्मा ज्योतिश्शिल्पशास्त्रयोर्वैदुष्येण विख्यातनामा शङ्करपारशवस्तदद्य मुद्रणसंस्कारं प्रापय्य प्रकाशमानयतीति जानन्तस्सन्तुष्यामः । ज्यायसि भ्रातरि भक्तिभूम्न, लोकोपकारकरणे जागरूकताया, गीर्वाणवाण्यां प्रणयविशेषस्य चानुगुणोऽयमुद्यमस्सर्वथाप्यनुमोदनमर्हत्येव ॥

यथा पुनर्मुद्रणमस्य त्वरितं भवेत्, तथा महाजनादरं प्रचारञ्च प्राप्नुयादयं ग्रन्थ इति प्रार्थयामहे करुणावरुणालयं रमारमणम् ॥

पूर्णवेदपुरी,
१०-५-१९५७

इति,
रामवर्मा परीक्षिद्गोश्रीमहाराजः ॥

श्री

# नारायणीयम्

## बालबोधिन्याख्यया व्याख्यया समेतम् ।

### प्रथमदशकम्

व्यत्यस्तपादकमलं साचीकृतमुखाम्बुजम् ।
आपूरयन्तं मुरलीं नमामि पुरुषोत्तमम् ॥

नमस्तेभ्यो दयालुभ्यः श्रीगुरुभ्यो मुहुर्मुहुः ।
येषां प्रसादाच्छिष्यो हि याति मन्दोऽप्यमन्दताम् ॥

श्रीनारायणभट्टस्य कवेरतिमनोहरम् ।
नारायणीयमिति यत् स्तोत्रं जयति पावनम् ॥

यथामति मया तस्य ललिता बालबोधिनी ।
वाक्ययोजनया युक्ता व्याख्या काचिद्विलिख्यते ॥

क्व नारायणभट्टस्य गिरः क्वाल्पा च मे मतिः ।
वासुदेवकथालापः इत्यत्रासि समुद्यतः ॥

भक्तप्रियेत्यस्य काचिद्व्याख्या यद्यपि राजते ।
तथाऽपि सा न बालानामुपकाराय कल्पते ॥

तत्रैव दर्शितो मार्गो मयाऽप्यत्रानुगम्यते ।
यानि तस्यां त्वनुक्तानि लिख्यन्ते तान्यपि स्फुटम् ॥

इह खलु शब्दब्रह्मण्यतीव प्रयतितमनाः तत्र भवान् परमभागवतः श्रीनारायणकविर्भक्तानुग्रहाय श्रीमद्भागवतार्थानुसारि नारायणीयाभिधानं स्तोत्रं

रत्नं चिकीर्षुः प्रारिप्सितस्य ग्रन्थस्य विघ्नविघाताय परब्रह्मस्वरूपानुसन्धान रूपं मङ्गलं शिष्योपदेशायादौ ग्रन्थतो निबध्नाति—

सान्द्रानन्दावबोधात्मकमनुपमितं कालदेशावधिभ्यां
निर्मुक्तं नित्यमुक्तं निगमशतसहस्रेण निर्भास्यमानम् ।
अस्पष्टं दृष्टमात्रे पुनरुरुपुरुषार्थात्मकं ब्रह्म तत्त्वं
तत्तावद्भाति साक्षाद्गुरुपवनपुरे हन्त भाग्यं जनानाम् ॥ १ ॥

**सान्द्रानन्देति** ॥ अथ यद्यपीदं स्तोत्रं समस्तमपि मङ्गलमिति न पृथक् मङ्गलाचरणमावश्यकम्, तथापि जगत्सृष्ट्यादीनामत्र प्रतिपिपादयिषिततया, यस्माज्जगदुत्पत्तिस्तत्स्वरूपस्य प्रथमं प्रदर्शनमावश्यकम्, तस्य च परब्रह्मस्वरूपानुसन्धानरूपत्वेन मङ्गलोत्तमतया मङ्गलं कृतमित्युक्तेरपि नानुपपत्तिरित्यनुसन्धेयम् । तत् यत् ब्रह्म गुरुपवनपुरे तावत् साक्षात् भाति । तत् प्रसिद्धं निष्कलं ब्रह्म । गुरुपवनपुरे गुरुवायुपुरमिति केरलेषु प्रसिद्धे देवालये । तावत् क्रमेण । साक्षात् चाक्षुषतया मानसतया स्वप्रकाशसद्रूपेण चेत्यर्थः । भाति प्रत्यक्षगोचरीभवति । अत्रायमाशयः—पूर्वं श्रीगुरुपवनपुरे प्रतिमारूपेण भासमानं श्रीवासुदेवं चक्षुषा साक्षात्कृत्य स्वस्वाधिकारानुरोधेनार्चनवन्दनप्रदक्षिणनामसङ्कीर्तनस्तोत्रपाठस्वरूपध्यानादिना भजतां जनानां झटिति भगवतः श्रीहरेः प्रसादेन प्राप्तभक्तियोगतया अहमखण्डं ब्रह्मास्मीति चित्तवृत्तिरुदेति, सा च ब्रह्मविषया सती ब्रह्मगताज्ञाननाशनद्वारा तत्कार्यभूतं शरीरादिप्रपञ्चं तदन्तर्भूतामखण्डाकारां चित्तवृत्तिमपि बाधते । तदा दर्पणाद्यभावे बिम्बप्रतिबिम्बैक्यवत् प्रत्यगभिन्नं सच्चिदानन्दं ब्रह्म स्वप्रकाशसद्रूपेणावतिष्ठत इति । हृदये यावत् क्रमेण प्रत्यक्षगोचरत्वं निरूपितम् । ब्रह्मणः स्वरूपमाह—सान्द्रानन्दावबोधात्मकं तत्त्वमिति । सान्द्रौ घनीभूतावानन्दावबोधौ आनन्दज्ञाने आत्मा स्वरूपं यस्य तत् सान्द्रानन्दावबोधात्मकम् । अवबोधो ज्ञानम् । आनन्दस्य सान्द्रत्वं सर्वदेशकालाद्यनवच्छिन्नत्वम् । अवबोधस्य च घटादिविषयानवच्छिन्नत्वम् । तत्त्वं सत्स्वरूपम् । सच्चिदानन्दस्वरूपमिति समुदि

तोऽर्थः । अनेन च ब्रह्मणः स्वरूपलक्षणमुक्तम् । ब्रह्मणोऽद्वितीयत्वमाह—अनुपमितमिति । उपमितं न भवतीत्यनुपमितम् । सजातीयस्य विजातीयस्य वाऽन्यस्याभावात् केनाप्युपमातुमशक्यमतोऽद्वितीयमिति भावः । ब्रह्मणो नित्यत्वं विभुत्वं चाह—कालदेशावधिभ्यां निर्मुक्तमिति । कालश्च देशश्च कालदेशौ ताभ्यामवधी कालतो योऽवधिर्देशतश्च योऽवधिस्ताभ्याम् । निर्मुक्तं नितरां मुक्तम् । कालावधेर्निर्मुक्तत्वान्नित्यत्वं, देशावधेर्निर्मुक्तत्वाद्विभुत्वं चेति द्रष्टव्यम् । नित्यत्वेन ब्रह्मणः सृष्टेः पूर्वं पश्चादपि विद्यमानतया जगतो निमित्तत्वेन, विभुत्वात् कटकादौ सुवर्णवदनुस्यूतत्वोपादानकारणत्वेन च जगत्कारणस्वरूपं तटस्थलक्षणमप्यर्थादनेनोक्तमिति वेदितव्यम् । ब्रह्मणि मायातत्कार्योपरागराहित्यं दर्शयति—नित्यमुक्तमिति । नित्यं मायया मुक्तम् । कालत्रितयेऽपि मायातत्कार्योपरागरहितमित्यर्थः । अतो न ब्रह्मात्मतामुपगतस्य मायातत्कार्योपरागसम्भव इति ध्येयम् । ब्रह्मणि प्रमाणं दर्शयति—निगमशतसहस्रेण निर्भास्यमानमिति । निगमा उपनिषद्वाक्यानि तेषां शतसहस्रेण । अनेकैरुपनिषद्वाक्यैरित्यर्थः । निर्भास्यमानं नितरां सुव्यक्ततया भास्यमानं प्रकाश्यमानम् । प्रतिपाद्यमानमिति यावत् । ननूपनिषद्वाक्यैः सुव्यक्ततया ब्रह्मणः श्रवणेऽपि कुतो नाहमखण्डं ब्रह्मास्मीति चित्तवृत्तिरुदेतीत्यत आह—दृष्टमाले पुनः अस्पष्टमिति । दृष्टमाले केवलमुपनिषद्वाक्यैः श्रुते । पुनश्शब्दो विशेषे । तमाह—अस्पष्टमिति । स्पष्टम् अहमखण्डं ब्रह्मास्मीति ज्ञानगोचरं न भवतीत्यस्पष्टम् । श्रवणे सत्यपि विभ्रम इव न देहात्मधीरपयाति, किन्तु मननादिनैव, तस्मात्तस्यामपगतायामेव ब्रह्मास्मीति चित्तवृत्तिरुदेतीति भावः । ब्रह्मात्मतामुपगतानां न पुनरावृत्तिरिति दर्शयितुमाह—उरुपुरुषार्थात्मकमिति । उरुः परमः पुरुषार्थ आत्मा यस्य तत् । उरुत्वं च पुरुषार्थे पुनरावृत्तिरहितत्वम् । अतो न प्राप्तब्रह्मैक्यानां पुनरावृत्तिरिति भावः । एवमनायासेन पुरुषार्थलब्धिस्सुकृतपरिपाकैकमूलेत्याह—हन्त जनानां भाग्यमिति । हन्तेति हर्षे । जनानामित्यविशेषेण निर्देशात् सर्वेषामपि भगवद्भजनाधिकारो द्योत्यते । भाग्यं सुकृतपरिपाकः । जनानां भाग्ये सति हर्षाविर्भावोऽस्य कवेः शुकनारदादिवत् परमकारुणिकतया परार्थघटनाकुतुकित्वं व्यनक्ति । भजध्वमिति शेषः ॥

अथैवमतिदुर्लभस्य ब्रह्मदर्शनस्य सुलभत्वे सत्यपि वृथा मार्गान्तरगवेषणादिना क्लेशमनुभवतोऽविवेकिनो जनाननुशोचन् स्वचिकीर्षितप्रदर्शनेन कर्तव्यमुपदिशति—

एवं दुर्लभ्यवस्तुन्यपि सुलभतया हस्तलब्धे यदन्य-
त्तन्वा वाचा धिया वा भजति बत जनः क्षुद्रतैव स्फुटेयम् ।
एते तावद्वयं तु स्थिरतरमनसा विश्वपीडापहत्यै
निश्शेषात्मानमेनं गुरुपवनपुराधीशमेवाश्रयामः ॥ २ ॥

**एवमिति ॥** जनः दुर्लभ्यवस्तुनि एवं सुलभतया हस्तलब्धे अपि बत अन्यत् तन्वा वाचा धिया वा भजति यत्, सा इयं स्फुटा क्षुद्रता एव । दुःखेन लब्धुं प्राप्तुं शक्यं दुर्लभ्यं वस्तु । सच्चिदानन्दं ब्रह्मेत्यर्थः । एवमुक्तप्रकारेण । सुलभतया अनायासेन । हस्तलब्धे करप्राप्त इव स्थिते सति । अपीत्यनेन अहो जनानामविवेकितेति द्योत्यते । बतेति खेदे । अन्यत् देवतान्तरम्, मार्गान्तरं विषयादि वा । तन्वा शरीरेण । वाचा वचनेन । धिया बुद्ध्या । भजति सेवते । सेति विधेयप्राधान्यात् स्त्रीत्वम् । स्फुटा स्पष्टा । क्षुद्रता असारता । अविवेकितेति यावत् । वयन्तु न तथेत्याह—एते वयं तु तावत् एनं गुरुपवनपुराधीशमेव स्थिरतरमनसा आश्रयामः इति । वयमित्यात्मनि बहुवचनम् । एत इति स्वस्य भगवद्भजनसंरम्भं द्योतयति । तु तावदिति विशेषे । वयं तथा क्षुद्रता न कुर्म इत्यर्थः । एनं पुरस्तात् समीपे वर्तमानम् । गुरुपवनपुराधीशं गुरुपवनपुरनाथम् । एवकारेण देवतान्तरस्य विषयादेश्च व्यवच्छेदः । स्थिरतरमनसा स्थिरतरेणात्यर्थं स्थिरेण मनसा उपलक्षिताः सन्तः । आश्रयामः सेवामहे । गुरुपवनपुराधीशसेवनस्य फलमाह—विश्वपीडापहत्यै इति । विश्वपीडाः समस्तदुःखानि तासामपहतिर्निवृत्तिः । ये त्वकामाः सेवन्ते, तेषां विश्वपीडानिवृत्तिर्मोक्ष इति विवेकः । ननु 'प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः' इति न्यायाद्ब्रह्मादीनामपूजने कथं श्रेयोलाभ इति चेत्तत्राह—निश्शेषात्मानमिति । निश्शेषश्चराचरात्मकः प्रपञ्चः आत्मा

यस्य सः,' निश्शेषात्मा, अन्तर्यामीति च तम् । अतोऽस्य पूजायां कृतायां सर्वे ब्रह्मादयः पूज्याः पूजिता इति न प्रत्यवाय इति भावः । अत्रा र्थान्तराण्यपि शब्दशक्त्या व्यज्यन्ते । तथाहि—दुर्लभ्यं वस्तु मनुष्यजन्म, तस्य पुण्यपापसाम्यावस्थायामेव लभ्यत्वात् । तस्मिन् सुलभतया हस्तलब्धे जनोऽन्यद्विषयादिकं शरीरान्तरेणापि साध्यं तन्वा वाचा धिया वा भजतीति यत्, सा क्षुद्रतैव । एते कथञ्चिल्लब्धमनुष्यजन्मानो वयं स्थिरतरमनसा विश्वपीडापहत्यै निश्शेषात्मानमेनं गुरुपवनपुराधीशमाश्रयाम एव । न तु विषयादिकमित्यर्थः । किञ्च दुर्लभ्यं वस्तु भक्तियोगः, तस्याकृतसुकृतैरलभ्य त्वात् । तस्मिन् सुलभतया कथारसामृतशरीरनिमज्जनमात्रेणायासं विना हस्तलब्धे जनोऽन्यत् कर्मयोगादिकं तन्वा, तर्कवादादिकं वाचा, अव्यक्तमार्गणादिकं धिया वा भजतीति यत्, सा स्फुटा क्षुद्रतैव । तथाच वक्ष्यति —'अव्यक्तं मार्गयन्तः' इत्यादिना । वयं तु स्थिरतरेण भक्तियोगेन स्थिरीकृतेन मनसा उपलक्षिता एव गुरुपवनपुराधीशमाश्रयामः । अपि च, दुर्लभ्यं वस्तु श्रीभागवताख्यं पुराणम्, तस्मिन् सुलभतया ब्रह्मनारदादिपरम्परया हस्तलब्धे अन्यद्विषयादि तन्वा, पुराणं काव्यादि वा वाचा, अव्यक्तमार्गणादि वा धिया भजतीति यत्, सा क्षुद्रता स्फुटा । एते वयमेनं श्रीभागवतप्रधानप्रतिपाद्यं गुरुपवनपुराधीशमेव आश्रयामः । अर्चनादिना तन्वा, स्वरूपध्यानेन धिया, श्रीभागवतार्थप्रतिपादकं स्तोत्रं निर्माय वाचा चाराधयाम इत्यर्थः । स्तोत्रस्यास्य सारसंग्रहरूपत्वमाह— स्थिरतरेण श्रीभागवतसारार्थोद्धरणेऽत्यर्थमवहितेन मनसा उपलक्षिता इति । अनेन सारमात्रप्रतिपादकतयाऽस्य सारसंग्रहरूपत्वमिति द्रष्टव्यम् । अवान्तरप्रयोजन माह—विश्वपीडापहत्यै इति । विश्वेषां स्त्रीशूद्रादीनामपि पीडानिवृत्तिर्मोक्षः तदर्थम् । अमुनाऽस्मिन् स्तोत्रे स्त्रीशूद्रादीनामप्यधिकार उक्तः । एतेन स्वचिकीर्षित प्रतिज्ञाऽपि कृतेत्यनुसन्धेयम् ॥

एवं भक्तियोगेन भगवत उपास्यत्वं प्रतिपाद्य मुक्तानामुपासनासिद्धये श्रीगुरुपवनपुराधीशस्य भगवतः स्वरूपं वर्णयति—

निष्कम्पे नित्यपूर्णे निरवधिपरमानन्दपीयूषरूपे
निर्लीनानेकमुक्तावलिसुभगतमे निर्मलब्रह्मसिन्धौ ।
कल्लोलोल्लासतुल्यं खलु विमलतरं सत्त्वमाहुस्तदात्मा
कस्मान्नो निष्कलस्त्वं सकल इति वचस्त्वत्कलास्वेव भूमन् ॥४॥

निष्कम्प इति ॥ विमलतरं सत्त्वं निर्मलब्रह्मसिन्धौ कल्लोलोल्लासतुल्यम् आहुः खलु । विमलतरम् अतिशयेन निर्मलम् । रजस्तमोमेलनरहितमित्यर्थः । सत्त्वं सत्त्वाख्यो गुणविशेषः । निर्मलब्रह्मसिन्धौ । ब्रह्मैव सिन्धुः समुद्रः । ब्रह्मसिन्धुरिति रूपकम् । निर्मलं मायातत्कार्योपरागरहितम् । तच्च तत् ब्रह्मेति कर्मधारयः । सिन्धौ नैर्मल्यमनाविलत्वम् । कल्लोलोल्लासतुल्यं कल्लोलानां महोर्मीणा मुल्लासः प्रादुर्भावस्तेन तुल्यं सदृशम् । अयमाशयः—यथा कल्लोलानां समुद्राद्भेदो न विद्यते, तथा निष्कलब्रह्मणः शुद्धसत्त्वस्यापि न भेद इति । आहुरित्यस्य आचार्या इत्यादिः । एतेनास्मिन्नर्थे प्रमाणं दर्शितम् । खल्विति प्रसिद्धौ । रूपकस्य सादृश्यमूलकत्वात् ब्रह्मणः समुद्रसाम्यमुपपादयति—निष्कम्पे नित्यपूर्णे निरवधिपरमानन्दपीयूषरूपे निर्लीनानेकमुक्तावलिसुभगतमे इति । निष्कम्पे निर्विकारे । अन्यत्र अक्षोभ्ये । अतिगम्भीर इत्यर्थः । नित्यपूर्णे अखण्डे । अन्यत्र वर्षासु ग्रीष्मे च वृद्धिक्षयरहिते । निरवधिपरमानन्दपीयूषरूपे निर्गतः अवधिर्यस्मात् स निरवधिः । कालतो देशत उपाधितश्चापरिच्छेद्य इत्यर्थः । यः परमानन्दः स एव पीयूषममृतम् । मुक्तैरास्वाद्यत्वात् पीयूषसाम्यं परमानन्दस्य । तद्रूपे । अन्यत्र निरवधिः मस्त्वन्दनादिप्रयोज्यानन्दादतिशयितः परमानन्दो यस्मात् । तच्च तत् पीयूषं तस्य रूपमुत्पत्तिर्यस्मात्तस्मिन् । निर्लीनानेकमुक्तावलिसुभगतमे निर्लीना नितरां लीनाः पुनरावृत्तिं विना ऐक्यमुपगता ये मुक्तास्तेषामावलिः समूहस्तेन सुभगतमे अतीव सुभगे । इतरेषामपि मुमुक्षाजनक इत्यर्थः । अन्यत्र निर्लीनाभिरनेकमुक्तावलिभिः बहुविधैर्मुक्तामणिभिः सुभगतमे अतीव शोभिते । अत्र सादृश्यं श्लेषमूलमित्यवसेयम् । नन्वेवं शुद्धसत्त्वस्य निष्कलब्रह्माभेदेऽपि भगवतः श्रीगुरुपवनपुराधीशस्य कथमाह—तदात्मा त्वं यस्मात् नो निष्कलः इति । तत् शुद्धसत्त्वम् आत्मा

निष्कम्पे नित्यपूर्णे निरवधिपरमानन्दपीयूषरूपे
निर्लीनानेकमुक्तावलिसुभगतमे निर्मलब्रह्मसिन्धौ ।
कल्लोलोल्लासतुल्यं खलु विमलतरं सत्त्वमाहुस्तदात्मा
कस्मान्नो निष्कलस्त्वं सकल इति वचस्त्वत्कलास्वेव भूमन् ॥४॥

निष्कम्प इति ॥ विमलतरं सत्त्वं निर्मलब्रह्मसिन्धौ कल्लोलोल्लासतुल्यम् आहुः खलु । विमलतरम् अतिशयेन निर्मलम् । रजस्तमोमेलनरहितमित्यर्थ. । सत्त्वं सत्त्वाख्यो गुणविशेषः । निर्मलब्रह्मसिन्धौ । ब्रह्मैव सिन्धुः समुद्रः । ब्रह्मसिन्धुरिति रूपकम् । निर्मलं मायातत्कार्योपरागरहितम् । तच्च तत् ब्रह्मेति कर्मधारय । सिन्धौ नैर्मल्यमनाविलत्वम् । कल्लोलोल्लासतुल्यं कल्लोलानां महोर्मीणाम् उल्लास. प्रादुर्भावस्तेन तुल्यं सदृशम् । अयमाशय.—यथा कल्लोलानां समुद्राद्भेदो न विद्यते, तथा निष्कलब्रह्मण· शुद्धसत्त्वस्यापि न भेद इति । आहुरित्यस्य आचार्या इत्यादिः । एतेनास्मिन्नर्थे प्रमाणं दर्शितम् । खल्विति प्रसिद्धौ । रूपकस्य सादृश्यमूलकत्वात् ब्रह्मणः समुद्रसाम्यमुपपादयति—निष्कम्पे नित्यपूर्णे निरवधिपरमानन्दपीयूषरूपे निर्लीनानेकमुक्तावलिसुभगतमे इति । निष्कम्पे निर्विकारे । अन्यत्र अक्षोभ्ये । अतिगम्भीर इत्यर्थः । नित्यपूर्णे अखण्डे । अन्यत्र वर्षासु ग्रीष्मे च वृद्धिक्षयरहिते । निरवधिपरमानन्दपीयूषरूपे निर्गतः अवधिर्यस्मात् स निरवधि. । कालतो देशत उपाधितश्चापरिच्छेद्य इत्यर्थः । यः परमानन्द. स एव पीयूषममृतम् । मुक्तैरास्वाद्यत्वात् पीयूषसाम्यं परमानन्दस्य । तद्रूपे । अन्यत्र निरवधिः स्रक्चन्दनादिप्रयोज्यानन्दादतिशयितः परमानन्दो , यस्मात् । तच्च तत् पीयूषं तस्य रूपमुत्पत्तिर्यस्मात्तस्मिन् । निर्लीनानेकमुक्तावलिसुभगतमे निर्लीना नितरां लीनाः पुनरावृत्तिं विना ऐक्यमुपगता ये मुक्तास्तेषामावलिः समूहस्तेन सुभगतमे अतीव सुभगे । इतरेषामपि मुमुक्षाजनक इत्यर्थः । अन्यत्र निर्लीनाभिरनेकमुक्तावलिभिः बहुविधैर्मुक्तामणिभिः सुभगतमे अतीव शोभिते । अत्र सादृश्यं श्लेषकृतमित्यवसेयम् । नन्वेवं शुद्धसत्त्वस्य निष्कलब्रह्माभेदेऽपि भगवतः श्रीगुरुपवनपुराधीशस्य किमायातमित्यत आह—तदात्मा त्वं कस्मात् नो निष्कल· इति । तत् शुद्धसत्त्वम् आत्मा

स्वरूपं यस्य स तदात्मा। कस्मात्? निष्कळः निष्कळ एव। तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायान्निष्कळब्रह्माभिन्नशुद्धसत्त्वाभिन्नस्य तव निष्कळब्रह्माभिन्नत्वमिति भावः। ननु सकळमूर्तिर्भगवानिति वचसां निर्विषयत्वापत्तिरत आह—हे भूमन् सकळ इति वच त्वत्कलासु एव इति। भूमन् परिपूर्ण। सकळ सकळमूर्तिः। वचो व्यवहारः। त्वत्कलासु तव कलाम्वशावतारेषु। न तु त्वयि। त्वं तु निष्कळ एवेत्यर्थः॥

एवं भगवन्मूर्तेः स्वरूपमभिधाय सम्प्रति तस्या उत्पत्तिमाह—

निर्व्यापारोऽपि निष्कारणमज भजसे यत्क्रियामीक्षणाख्यां
तेनैवोदेति लीना प्रकृतिरसतिकल्पाऽपि कल्पादिकाले।
तस्याः संशुद्धमंशं कमपि तमतिरोधायकं सत्त्वरूपं
स त्वं धृत्वा दधासि स्वमहिमविभवाकुण्ठ वैकुण्ठ रूपम्॥ ५॥

**निर्व्यापार इति**॥ हे अज त्वं निर्व्यापारः अपि ईक्षणाख्यां क्रियां भजसे यत् तेन एव लीना अपि असतिकल्पा प्रकृतिः कल्पादिकाले उदेति। हे अज विष्णो। निर्गतो व्यापारो यस्मात् स निर्व्यापारः निष्क्रियस्सन्नपि। ईक्षणाख्यां मायाप्रेरणात्मिकाम्। क्रियां व्यापारम्। भजसे अङ्गीकरोषि। यथा अयस्कान्तमणिर्निष्क्रियोऽपि स्वसन्निधिमात्रेण लोहधातुमाकर्षति, तद्वदिति भावः। लीना द्विपरार्धावसाने त्वयि लयं प्राप्ता। अनेन प्रकृतेरनादित्वं द्योत्यते। असतिकल्पा प्रायेणासती। सदसद्भ्यामनिर्वचनीयेत्यर्थः। प्रकृतिर्माया। कल्पादिकाले कल्पानां ब्रह्मणो दिनानामादिकाले आद्यदिनारम्भे। ब्रह्मणस्त्वयावसानकाल इति यावत्। न तु कल्पस्यादिकाले, तदा प्रकृतिलयाभावात्। उदेति प्रकाशते। ननु किमर्थं तव मायाप्रेरणमिति चेत्तत्राह— निष्कारणमिति। निर्गतं कारणं यस्मात् तन्निष्कारणमिति भजनक्रियाविशेषणम्। तव मायाप्रेरणे कारणं वयं न विद्म इति भावः। हे स्वमहिमविभवाकुण्ठ वैकुण्ठ स त्वं तस्याः तं सत्त्वरूपं कमपि अंशं धृत्वा रूपं दधासि। स्वमहिमविभवाकुण्ठ स्वस्य महिमा योगैश्वर्यं

एवं विभव शक्तिस्तेनाकुण्ठ अप्रतिहतचिच्छक्ति तादृश । अनेन सम्बोधनेन जीवेश्वरयोश्शरीरपरिग्रहस्य तुल्यतया कथं जीव संसरति, ईश्वरस्तु संसारयतीति शङ्का परिहृता । जीवस्य मायापरतन्त्रत्वात् संसारित्वम्, ईश्वरस्य तु स्वाधीनतया मायया लीलाविग्रहपरिग्रह इति महद्वैषम्यम् । अतो नेश्वरस्य जीववद्देहपरिग्रहेऽपि ससारित्वप्रसङ्ग इति । वैकुण्ठ विकुण्ठनिलय । स माथामेरक । तस्या मायाया । ते पूर्वोक्तम् । सत्त्वरूप सत्त्वगुणैकरूपम् । रूपमपीत्यनेन रजोगुणाद्यात्मकानामशान्तराणां सद्भावो व्यज्यते । अशं भागम् । धृत्वा उद्धृत्य । रूप लीलाविग्रहम् । दधासि धत्से । अनुग्रहायेति भाव । ननु विग्रहपरिग्रहेऽज्ञानाभिभवप्रसङ्ग इत्यत आह— अतिरोधायकमिति । तिरोधायक चिदानन्दात्मस्य विधायक न भवतीत्यतिरोधायकम् । तरणिमण्डले दीप्यमाने यथा तिमिरनिकरो दूरेऽपसरति, तद्वच्चिदानन्दात्मनि स्फुट भासमानेऽज्ञानमपि दूरेऽपसरतीति भाव । अत्र हेतुमाह— सशुद्धमिति । सशुद्ध रजस्तमोमेलनाभावात् स्फटिकवदतिनिर्मलमित्यर्थ ॥

अथ भगवन्मूर्ते सौन्दर्य वर्णयति द्वाभ्याम् —

तत्ते प्रत्यग्रधाराधरललितकलायावलीकेलिकार
लावण्यस्यैकसार सुकृतिजनदृशां पूर्णपुण्यावतारम् ।
लक्ष्मीनिश्शङ्कलीलानिलयनममृतस्यन्दसन्दोहमन्तः
सिञ्चत् सञ्चिन्तकानां वपुरनुकलये मारुतागारनाथ ॥ ६ ॥

तदिति ॥ हे मारुतागारनाथ तत् प्रत्यग्रधाराधरललितकलायावलीकेलिकार लावण्यस्य एकसार सुकृतिजनदृशा पूर्णपुण्यावतार लक्ष्मीनिश्शङ्कलीला निलयन सञ्चिन्तकानामन्त अमृतस्यन्दसन्दोह सिञ्चत ते वपु अनुकलये । मारुतागार गुरुपवनपुरं तस्य नाथेति भगवत्सम्बोधनम् । तत् पूर्वोक्त शुद्धसत्त्वमयम् । प्रत्यग्रस्याभिनवस्य धाराधरस्य मेघस्य ललिताया मनोहराया कलायावल्या कलाय कुसुमपङ्क्तेश्च केलिं विलास करोतीति प्रत्यग्रधाराधरललितकलायावलीकेलिकारम् । कान्त्या नूतनजलधरसदृशं कलायकुसुमसमानमित्यर्थ । अत्र जलधरोपमया शीत

स्वरूपं यस्य स तदात्मा । कस्मात्त्वं निष्कळः निष्कळ एव । तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायान्निष्कलब्रह्माभिन्नशुद्धसत्त्वाभिन्नस्य तव निष्कलब्रह्माभिन्नत्वमिति भावः । ननु सकलमूर्तिर्भगवानिति वचसो निर्विषयत्वापत्तिरत आह—हे भूमन् सकलः इति वचः त्वत्कलासु एव इति । भूमन् परिपूर्ण । सकलः सकलमूर्तिः । वचो व्यवहारः । त्वत्कलासु तव कलास्वंशावतारेषु । न तु त्वयि । त्वं तु निष्कळ एवेत्यर्थः ॥

एवं भगवन्मूर्तेः स्वरूपमभिधाय सम्प्रति तस्या उत्पत्तिमाह—

निर्व्यापारोऽपि निष्कारणमज भजसे यत्क्रियामीक्षणाख्यां
तेनैवोदेति लीना प्रकृतिरसतिकल्पाऽपि कल्पादिकाले ।
तस्याः संशुद्धमंशं कमपि तमतिरोधायकं सत्त्वरूपं
स त्वं धृत्वा दधासि स्वमहिमविभवाकुण्ठ वैकुण्ठ रूपम् ॥ ५ ॥

निर्व्यापार इति ॥ हे अज त्वं निर्व्यापारः अपि ईक्षणाख्यां क्रियां भजसे यत्, तेन एव लीना अपि असतिकल्पा प्रकृतिः कल्पादिकाले उदेति । हे अज विष्णो । निर्गतो व्यापारो यस्मात् स निर्व्यापारः निष्क्रियस्सन्नपि । ईक्षणाख्यां मायाप्रेरणात्मिकाम् । क्रियां व्यापारम् । भजसे अङ्गीकरोषि । यथा अयस्कान्तमणिर्निष्क्रियोऽपि स्वसन्निधिमात्रेण लोहधातुमाकर्षति, तद्वदिति भावः । लीना द्विपरार्धावसाने त्वयि लयं गता । अनेन प्रकृतेरनादित्वं द्योत्यते । असतिकल्पा प्रायेणासती । सदसत्त्वाभ्यामनिर्वचनीयेत्यर्थः । प्रकृतिर्माया । कल्पादिकाले कल्पानां ब्रह्मणो दिनानामादिकाले आद्यदिनारम्भे । ब्रह्मकल्पावसानकाल इति यावत् । न तु कल्पस्यादिकाले, तदा प्रकृतिलयाभावात् । उदेति प्रकाशते । ननु किमर्थं तव मायाप्रेरणमिति चेत्तत्राह— निष्कारणमिति । निर्गतं कारणं यस्मात् तन्निष्कारणमिति भजनक्रियाविशेषणम् । तव मायाप्रेरणे कारणं वयं न विद्म इति भावः । हे स्वमहिमविभवाकुण्ठ वैकुण्ठ स त्वं तस्याः तं सत्त्वरूपं कमपि अंशं धृत्वा रूपं दधासि । स्वमहिमविभवाकुण्ठ स्वस्य महिमा योगैश्वर्यं स

एवं विभव शक्तिस्तेनाकुण्ठः अप्रतिहतचिच्छक्तिः तादृश । अनेन सम्बोधनेन जीवेश्वरयोश्शरीरपरिग्रहस्य तुल्यतया कथं जीवः संसरति, ईश्वरस्संसारयतीति शङ्का परिहृता । जीवस्य मायापरतन्त्रतया संसारित्वम्, ईश्वरस्य तु स्वाधीनतया मायया लीलाविग्रहपरिग्रह इति महद्वैषम्यम् । अतो नेश्वरस्य जीववद्देहपरिग्रहेऽपि संसारित्वप्रसङ्ग इति । वैकुण्ठ विकुण्ठनिलय । स माया प्रेरक । तस्या मायाया । ते पूर्वोक्तम् । सत्त्वरूप सत्त्वं गुणस्वरूपम् । कमपीत्यनेन रजोगुणाद्यात्मकानामंशान्तराणां सद्भावो व्यज्यते । अंशं भागम् । धृत्वा उद्धृत्य । रूपं लीलाविग्रहम् । दधासि धत्से । अनुग्रहायेति भाव । ननु विग्रहपरिग्रहेऽज्ञानाभिभवप्रसङ्ग इत्यत आह— अतिरोधायकमिति । तिरोधायक चिदानन्दांशस्य पिधायक न भवतीत्यतिरोधायकम् । तरणिमण्डले दीप्यमाने यथा तिमिरनिकरो दूरेऽपसरति, तद्वच्चिदानन्दांशे स्फुट भासमानेऽज्ञानमपि दूरेऽपसरतीति भाव । अत्र हेतुमाह— संशुद्धमिति । संशुद्ध रजस्तमोमेलनाभावात् स्फटिकवदतिनिर्मलमित्यर्थ ॥

अथ भगवन्मूर्तेः सौन्दर्यं वर्णयति द्वाभ्याम् —

तत्ते प्रत्यग्रधाराधरललितकलायावलीकेलिकारं
लावण्यस्यैकसारं सुकृतिजनदृशां पूर्णपुण्यावतारम् ।
लक्ष्मीनिश्शङ्कलीलानिलयनममृतस्यन्दसन्दोहमन्तः
सिञ्चत् सञ्चिन्तकानां वपुरनुकलये मारुतागारनाथ ॥ ६ ॥

तदिति ॥ हे मारुतागारनाथ तत् प्रत्यग्रधाराधरललितकलायावलीकेलिकारं लावण्यस्य एकसारं सुकृतिजनदृशां पूर्णपुण्यावतारं लक्ष्मीनिश्शङ्कलीलानिलयनं सञ्चिन्तकानामन्तः अमृतस्यन्दसन्दोहं सिञ्चत् ते वपुः अनुकलये । मारुतागारं गुरुपवनपुरं तस्य नाथेति भगवत्सम्बोधनम् । तत् पूर्वोक्तं शुद्धसत्त्वमयम् । प्रत्यग्रस्याभिनवस्य धाराधरस्य मेघस्य ललिताया मनोहराया कलायावल्या कलाय कुसुमपङ्क्तेश्च केलिं विलासं करोतीति प्रत्यग्रधाराधरललितकलायावलीकेलिकारम् । कान्त्या नूतनजलधरसदृशं कलायकुसुमसमानं चेत्यर्थ । एव नवनवोन्मेषं ...

मेव भक्ताभीष्टफलप्रदत्वं, फळायकुसुमोपमया सौकुमार्यातिशयश्च भगवन्मूर्तेर्ध्वन्यते। लावण्यस्य लावण्यद्रव्यस्य। एकसारं केवलसारांशेन निर्मितम्। अत एव सुकृति जनदृशां सुकृतिजनानां भक्तियोगेन भगवदुपासनं कुर्वतां जनानां दृशां नेत्राणाम्। पूर्णपुण्यावतारं पूर्णस्य निरुपमस्य पुण्यस्यावतार. प्रादुर्भावस्तथाविधम्। सुकृतिनां पुण्यसञ्चयमेव भगवन्मूर्त्याकारेण परिणतं चक्षुरिन्द्रियमाह्यतामुपगतमित्यर्थः। लक्ष्मी निश्शङ्कलीलानिलयनं लक्ष्म्याः पद्मासनायाः निर्गता विमम्मातिशयादपगता शङ्का भयं यास्यस्ता निश्शङ्काः याः लीलाः विहारास्तासा निलयनं स्थानम्। यद्वक्षसि सुखासीना लक्ष्मीर्निश्शङ्कं क्रीडतीत्यर्थः। एतेन भगवतः सौभाग्यातिशयो ध्वन्यते। सञ्चिन्तकानानुपासकानाम्। अन्तः हृदये। अमृतस्यन्दसन्दोहम्। अमृतसन्दस्य पीयूषद्रवस्य सन्दोहं सिञ्चत्। उपासकानां हृदयं ब्रह्मानन्दामृतद्रवेणाप्लाव्य समस्त सन्तापशान्तिं कुर्वाणमित्यर्थः। अनेन भगवत्स्वरूपध्यानस्य फलं दर्शितम्। ते तव। वपुर्लीलाविग्रहम्। अनुकलये पुनः पुनः स्मरामि॥

कष्टा ते सृष्टिचेष्टा बहुतरभवखेदावहा जीवभाजा-
मित्येवं पूर्वमालोचितमजित मया नैवमद्याभिजाने।
नोचेज्जीवाः कथं वा मधुरतरमिदं त्वद्वपुश्चिद्रसार्द्रं
नेत्रैः श्रोत्रैश्च पीत्वा परमरससुधाम्भोधिपूरे रमेरन् ॥ ७ ॥

कष्टेति॥ हे अजित ते सृष्टिचेष्टा कष्टा एवं मया पूर्वमालोचितम्। अजित मायापारतन्त्र्यरहित। ते तव। सृष्टिचेष्टा सृष्टिरूपो व्यापार। एवमनेन प्रकारेण। मया मन्देन। पूर्वं भवत्स्वरूपास्वादनात् पूर्वम्। आलोचितं विचिन्तितम्। ननु कुतः कष्टेत्यत आह—जीवभाजा बहुतरभवखेदावहा इतीति। जीवो लिङ्गशरीरं तं भज न्ते जीवभाजो जीवास्तेषाम्। बहुतरो जननमरणादिरूपो नानाविधो भवखेदः संसारदुःखं तमावहत्यादधातीति बहुतरभवखेदावहा। इति हेतो.। यतो जीवाना नानाविधजननमरणादिक्लेशकारिणी भवतस्सृष्टि॰, ततः कष्टेत्यर्थः। तत्तु न तथेत्याह —अद्य एवं न अभिजाने इति। अद्य मम चेतसि भवत्स्वरूपास्वादनव्यापृते। एवं ते सृष्टिचेष्टा कष्टेति। न अभिजाने न निश्चिनोमि। किन्तु महानुपकार एवेति

निश्चिनोमीति भावः। अत्र हेतुमाह—नोचेत् जीवाः चिद्रसार्द्रं मधुरतरमिदं त्वद्वपुः नेत्रैः श्रोत्रैः च पीत्वा कथं वा परमरससुखाम्भोधिपूरे रमेरन् इति। नोचेत् यदि भवान् सृष्टिचेष्टां न करोति तर्हीत्यर्थः। चिद्रसार्द्रं चिद्रसेन चिदानन्दामृतद्रवेण अन्तर्बहिश्चार्द्रं सिक्तम्। व्याप्तमित्यर्थः। अत एव मधुरतरमतिशयेन मधुरम्। इदम् अधुना मम मानसप्रत्यक्षगोचरम्। तव वपुस्त्वद्वपुः। नेत्रैः श्रोत्रैश्च पीत्वा नेत्रैः सतृष्णमवलोक्य श्रोत्रैः सादरं श्रुत्वा। चकारेणात्रानुक्तस्य मनसः समुच्चयः। मनसा ध्यात्वा चेत्यर्थः। सुकृतपरिपाकवशादिति भावः। कथं वा केन वा प्रकारेण। परमरससुधाम्भोधिपूरे परमरसः परमानन्द एव सुधाम्भोधिरमृतसमुद्रस्तस्य पूरे जलपूरे। रमेरन् उन्मज्जननिमज्जनादिकं कुर्युः। अत्र संसारे जीवानां परमानन्दसम्पादकं भगवन्मूर्तेर्दर्शनश्रवणादिकमेव, न तु विषयोपभोगादिकम्। तस्मादेवं विधस्य परमानन्दस्यानुदयादिति ध्येयम्॥

इत्थं भगवतो मूर्तेर्लोकोत्तरं सौन्दर्यमुपवर्ण्य अनन्तरं फलदातृत्वेऽपि लोकोत्तरत्वमाह—

नम्राणां सन्निधत्ते सततमपि पुरस्तैरनभ्यर्थितान-
प्यर्थान् कामानजस्रं वितरति परमानन्दसान्द्रां गतिं च।
इत्थं निश्शेषलभ्यो निरवधिकफलः पारिजातो हरे त्वम्
क्षुद्रं तं शक्रवाटीद्रुममभिलषति व्यर्थमर्थिव्रजोऽयम्॥ ८॥

नम्राणामिति॥ हरे त्वं पारिजातः निरवधिकफलः। हे हरे विष्णो। त्वं पारिजातः त्वदात्मकः पारिजातः। पारिजातो देवतरुविशेषः। 'पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥' इत्यमरवचनात् सुरद्रुमविशेषवाची पारिजातशब्द इति द्रष्टव्यम्। सुरद्रुमेषु च पारिजातस्यैव श्रेष्ठत्वम्। निर्गतोऽवधिः संख्यया प्रकारतो वा येभ्यस्तानि निरवधिकानि फलानि यस्मिन् स निरवधिकफलः। नानाविधानन्तफलप्रद इत्यर्थः। ननु यथा देवतरुात्मकः पारिजातो यागादिभिर्विधिवान् प्रमाय स्वर्गमुपगतैः प्राप्यः, तथा भगवदात्मकः पारिजातोऽपि किं तादृशैरेव प्राप्यः? नेत्याह—

निरवधिमनन्तं फलति । निश्शेषैः सर्वैर्जनैर्लभ्यः प्राप्यः । ये भक्तास्तैः भक्ते-नः सर्वैरपि प्राप्य इत्यर्थः । भगवत्स्वरूपपारिजातस्य कल्पकादाधिक्यमाह— इत्थमिति । इत्थम् अनेन प्रकारेण । तमेव प्रकारमाह — नम्राणां पुरः सन्ततमपि सन्निधत्ते । ततः अनभ्यर्थितानपि प्रचुरम् अर्थान् कामान् परमानन्दसान्द्रां गतिं च वितरति इति । नम्राणां भगवत्पादयोः प्रणामपराणां पुरः पुरस्तात् । सन्ततमपि सर्वदाऽपि । न तु यदाकदाचिदिति भावः । सन्निधत्ते सान्निध्यं करोति । तदभिलषितवस्तुप्रदानाय सदा तेषां पुरस्तात् प्रादुर्भवतीत्यर्थः । सुरतरुस्तु न नम्राणां, किन्तु स्वर्लोकं प्राप्तानामेव । न तु सन्ततमपि, अपि तु कदाचिदेव । न तु स्वयं सन्निधत्ते, किन्तु ते तत्सन्निधिमेव गच्छन्ति । तेनर्थः । अनभ्यर्थितानयाचितान् । अर्थान् धनानि । कामान् भोगान् । परमानन्दसान्द्रां परमः सर्वोत्कृष्ट आनन्दस्तेन सान्द्रा घनीभूता ताम् । सान्द्रानन्दमयीमित्यर्थः । गतिं गमनम् । अत्र सायुज्यमिति यावत् । वितरति ददाति । सुरतरुस्तु केवलमभ्यर्थितेष्वर्थेषु कांश्चन ददाति । न त्वनभ्यर्थितान् सर्वानर्थान् कामान् मोक्षं वा वितरति । अनेन भगवदात्मक पारिजातस्योत्कर्षरूपो व्यतिरेको दर्शितः । एवम्भूते भगवदात्मके पारिजाते स्थिते न वृथा सुरद्रुमप्राप्तौ यत्नः कर्तव्य इत्याह— अयं अर्थिव्रजः क्षुद्रं तं शक्रवाटीद्रुमं व्यर्थमभिलषति इति । अर्थिनां याचकानां व्रजः समूहः । क्षुद्रं नम्राणां सन्निधानाकरणान्निस्सारम् । तं प्रसिद्धम् । शक्रवाटीद्रुमं शक्रस्येन्द्रस्य वाटी आरामः । नन्दनोद्यानमित्यर्थः । तस्यां द्रुमः पारिजातस्तम् । व्यर्थं वृथा । अभिलषति इच्छति । अधिकफलप्रदे भगवति तिष्ठति न वृथा न्यूनफलप्रदस्य सुरद्रुमस्य प्राप्तौ यत्नः कर्तव्य इति भावः ॥

इत्थं भगवतः फलदातृत्वे सुरतरोराधिक्यमभिधाय विधिशङ्करादिभ्योऽप्यधिकफलप्रदत्वमुत्कर्षयन्नाह—

कारुण्यात्काममन्यं ददति खलु परे स्वात्मदस्त्वं विशेषा-
दैश्वर्यादीशतेऽन्ये जगति परजने स्वात्मनोऽपीश्वरस्त्वम् ।

त्वय्युच्चैरारमन्ति प्रतिपदमधुरे चेतनाः स्फीतभाग्या-
स्त्वञ्चात्माराम एवेत्यतुलगुणगणाधार शौरे नमस्ते ॥ ९ ॥

कारुण्यादिति ॥ परे कारुण्यात् अन्यं कामं ददति खलु । परे विधिशङ्करादयः । कारुण्यात् करुणया । अन्यं स्वात्मव्यतिरिक्तम् । काममभिलाषम् । ददति यच्छन्ति । ददतीति बहुवचनम् । खल्विति प्रसिद्धौ । प्रसिद्धमेषां स्वात्मव्यतिरिक्तफलप्रदत्वमित्यर्थः । त्वं विशेषात् स्वात्मदः । विशेषात् विशिष्य । स्वस्यात्मा स्वरूपं ब्रह्म तं ददातीति स्वात्मदः । ब्रह्मसायुज्यप्रद इत्यर्थः । अन्ये ऐश्वर्यात् जगति परजने ईशते । अन्ये ब्रह्मादयः । ऐश्वर्यात् निग्रहानुग्रहशक्तेः । जगति लोके । परजने स्वभिन्नेषु जनेषु । ईशते निग्रहानुग्रहशक्ता भवन्ति । त्वं स्वात्मनः अपि ईश्वरः । स्वस्यात्मा स्वात्मा तस्येश्वरो निग्रहानुग्रहकर्ता । किं पुनरन्येषामित्यपिशब्दार्थः । अयमत्राशयः—त्वं त्वत्स्वरूपाणामेव जीवानां संसारदुःखप्रतिपादनेन निग्रहं, भक्त्या त्वां भजतां तेषामेव मोक्षप्रदानेनानुग्रहञ्च करोषीति । ननु भगवतः स्वात्मप्रदानेन किं प्रयोजनमित्यत्र आह—स्फीतभाग्याः चेतनाः त्वयि उच्चैः आरमन्ति इति । स्फीतं बहुषु जन्मान्तरेषु पुण्यकर्मणा सुविहिततया वृद्धिमुपगतं भाग्यं सुकृतपरिपाको येषां ते स्फीतभाग्याः । इदं विशेषणं रमणहेतुतयोक्तम् । चेतना जीवाः । त्वयि परमानन्दस्वरूपे । उच्चैरतिशयेन । आरमन्ति त्वामासाद्य पुनरावृत्तिं विना रमन्त इत्यर्थः । अत्र हेतुमाह—प्रतिपदमधुरे इति । पदे पदे प्रतिपदं सर्वदा मधुरे । आनन्दमये इति यावत् । भगवांस्तु नान्यत्र कुत्रापि रमत इत्याह—त्वञ्च आत्माराम एवेति । चस्त्वर्थो विशेषे वर्तते । विशेषमाह—आत्माराम एवेति । आत्मना स्वस्वरूपेण रमत इत्यात्मारामः । एवकारेण नान्यत्र भगवान् रमत इति दर्शितम् । इति अतो हेतोः । हे अतुलगुणगणाधार शौरे ते नमः । अतुलगुणगणाधार अतुलानामनन्तानां गुणगणानां पूर्वोक्तानां गुणसमूहानामाधार आश्रयभूत । शौरे वसुदेवपुत्र । आभ्यां सम्बोधनाभ्यां गुणाश्रयतया वसुदेवपुत्रत्वस्वीकारेण भक्तवात्सल्यस्य च प्रतिपादनाद्भगवतो नमस्कार्यत्वं व्यज्यते ॥

अथ श्रीगुरुपवनपुराधीशस्यैव भगवत्पदवाच्यत्वम्, नान्येषामित्याह—

ऐश्वर्यं शङ्करादीश्वरविनियमनं विश्वतेजोहराणां
तेजस्संहारि वीर्यं विमलमपि यशो निस्पृहैश्चोपगीतम् ।
अङ्गासङ्गा सदा श्रीरखिलविदसि न क्वापि ते सङ्गवार्ता
तद्वातागारवासिन् मुरहर भगवच्छब्दमुख्याश्रयोऽसि ॥ १० ॥

ऐश्वर्यमिति ॥ हे वातागारवासिन् मुरहर त्वं भगवच्छब्दमुख्याश्रयः असि । वातागारवासिन् गुरुवायुपुरनाथ । मुरहर मुरासुरमर्दन । त्वम् त्वमेवेत्यर्थः । असति बाधके सर्वं वाक्यं सावधारणमिति न्यायात् । भगवच्छब्दमुख्याश्रयः भगवच्छब्दस्य भगवानिति पदस्य मुख्याश्रयो वाच्यार्थः । इतरेषु तु भगवच्छब्दो लक्षणया प्रयुज्यत इत्यर्थः । अत्र हेतुमाह— तदिति । तत्तस्मात् । तत्पदार्थमाह— ते ऐश्वर्यं शङ्करादीश्वरविनियमनं, वीर्यं विश्वतेजोहराणां तेजस्संहारि विमलं यशः निस्पृहैः अपि उपगीतञ्च, श्रीः सदा अङ्गासङ्गा, त्वं अखिलवित् असि, क्वापि सङ्गवार्ता न इति । ते तव । एतदुत्तरत्रापि सङ्गच्छते । ईश्वरस्य भाव ऐश्वर्यं निग्रहानुग्रहशक्तिः । शङ्करादीश्वरविनियमनं शङ्कर आदिर्येषां ते शङ्करादयः ते च ते ईश्वरा ईशितारस्तेषां विनियमनं तत्तदधिकारप्रवर्तकम् । ते वीर्यं विश्वेषां सर्वेषां तेजः पराक्रमं हरन्तीति विश्वतेजोहरा. श्रीशङ्करादयस्तेषाम् । तेजः प्रभावं संहर्तुं शीलमस्यास्तीति तेजस्संहारि । तथाच वक्ष्यति— 'मुहुस्तावच्छक्रं वरुणमजयो नन्दहरणे' इत्यादि । ते तव विमलम् निर्मलं । पापशोधकमिति यावत् । यशः कीर्तिः । निस्पृहैः फलेच्छारहितैः श्रीनारदश्रीशुकप्रभृतिभिरपि । किं पुनः सस्पृहैरित्यपिशब्दार्थः । उपगीतं वर्णितम् । त्वच्चरितमाधुरीसमाकृष्यमानतया श्रीमद्भागवतादिरूपेणोपवर्णितमित्यर्थः । श्रीः लक्ष्मीः । सदा सर्वदा अवियुक्ता । ते तव अङ्गासङ्गा अङ्गे वक्षस्यासङ्गोऽवस्थानं यस्याः सा । सर्वदा तव वक्षःस्थलमाश्रित्यैव वर्तत इत्यर्थः । अखिलं सर्वं वेत्ति जानातीत्यखिलवित् । इतरे तु त्वद्व्यतिरिक्तं सर्वं जानन्ति, नतु त्वाम् । त्वं तु त्वामपि जानासीत्यर्थः । ते तव क्वापि कुत्रचिदपि । सङ्गवार्ता सङ्गस्सक्तिस्तस्य वार्ता कथा । एभिः षड्भिर्वाक्यैर्भगवति लोकोत्तराणामैश्वर्यादीनां सद्भावो दर्शितः । तत्र प्रथमेन वाक्येनैश्वर्यं, द्वितीयेन तेजः, तृतीयेन यशः,

चतुर्थेन श्रीमत्त्वं, पञ्चमेन सर्वज्ञत्त्वं, षष्ठेन निस्सङ्गत्त्वं चेति विवेकः । एवं विधै श्वर्यादिसम्पन्न एव भगवानित्युच्यत इत्यवसेयम् ॥

इति प्रथमदशकम् ।

## द्वितीयदशकम्

*अथ 'तत्ते प्रत्यग्रधाराधर' इत्यादिना संक्षेपेण वर्णितं भगवतो दिव्यमङ्गल विग्रहं भक्तानां स्वरूपध्यानसौकर्याय तत्तदवयववर्णनपुरस्सरं प्रदर्शयति द्वाभ्याम्*—

सूर्यस्पर्धिकिरीटमूर्ध्वतिलकप्रोद्भासिफालान्तरं
कारुण्याकुलनेत्रमार्द्रहसितोल्लासं सुनासापुटम् ।
गण्डोद्यन्मकराभकुण्डलयुगं कण्ठोज्वलत्कौस्तुभं
त्वद्रूपं वनमाल्यहारपटलश्रीवत्सदीप्रं भजे ॥ ॥ १ ॥

**सूर्यस्पर्धीति ॥** ऊर्ध्वतिलकप्रोद्भासिफालान्तरं कारुण्याकुलनेत्रं आर्द्रहसितोल्लासं सुनासापुटं गण्डोद्यन्मकराभकुण्डलयुगं कण्ठोज्वलत्कौस्तुभं वनमाल्यहारपटलश्रीवत्सदीप्रं त्वद्रूपं भजे । सूर्येण सह स्पर्धत इति सूर्यस्पर्धि प्रभाभिः सूर्यसन्निभं किरीटं यस्य तत् सूर्यस्पर्धिकिरीटम् । ऊर्ध्वमूर्ध्वाग्रतया विन्यस्तं तिलकं कस्तूरीचन्दनादिविरचितं विशेषकं तेन प्रकर्षेणोद्भासते शोभत इत्यूर्ध्वतिलक प्रोद्भासि तादृशं फालस्य ललाटस्य अन्तरं मध्यभागो यस्य तदूर्ध्वतिलकप्रोद्भासिफाला न्तरम् । कारुण्येन कृपया आकुले पार्श्वयोः पुरस्ताच्च सेवार्थमागतानां नारदादीनां भक्तानामवलोकनाय पुनः पुनश्चञ्चले नेत्रे यस्य तत् कारुण्याकुलनेत्रम् । भक्तेषु प्रेम्णा आर्द्रो हसितोल्लासः उल्लसन्मन्दहासो यस्य तदार्द्रहसितोल्लासम् । नासाया नासिकायाः पुटमुदरम् । तिलकुसुमसमानतया शोभनं नासापुटं यस्य तत् सुनासापुटम् । गण्डयोः कपोलयोरुद्यत् दीप्यमानं मकरस्यामेवाभा यस्य तन्मकराभं मकराकारं कुण्डलयोः कर्णाभरणयोर्युगं यस्य तत् गण्डोद्यन्मकराभकुण्डलयुगम् । कण्ठे गळे उज्वलन् देदीप्यमानः कौस्तुभस्तन्नामधेयो मणिर्यस्य तत् कण्ठोज्वलत्कौस्तुभम् ।

यत्त्रैलोक्यमहीयसोऽपि महितं सम्मोहनं मोहनात्
कान्तं कान्तिनिधानतोऽपि मधुरं माधुर्यधुर्यादपि।
सौन्दर्योत्तरतोऽपि सुन्दरतरं त्वद्रूपमाश्चर्यतोऽ-
प्याश्चर्यं भुवने न कस्य कुतुकं पुष्णाति विष्णो विभो ॥ ३ ॥

यदिति ॥ हे विभो विष्णो त्वद्रूपं भुवने कस्य कुतुकं न पुष्णाति। विभो संसारार्णवोत्तारणसमर्थ। अत्र तदित्यध्याहर्तव्यम्, पूर्ववाक्ये यच्छब्ददर्शनात्। तत्तादृशमित्यर्थः। त्वद्रूपं तव रूपं दिव्यमङ्गलविग्रहः। भुवने लोके। कस्य कुतुकं दर्शनश्रवणस्वरूपध्यानादावौत्सुक्यम्। न पुष्णाति न वर्धयति। मुमुक्षूणां जीवन्मुक्तानामपि त्वद्रूपं दर्शनादावौत्सुक्यं जनयतीत्यर्थः। अत्र हेतुं प्रदर्शयंस्तत्त्वार्थं विवृणोति—यत्त्रैलोक्येत्यादिना। यत् त्रैलोक्ये महीयसः अपि महितम्। त्रैलोक्यमहीयसः त्रैलोक्ये लोकत्रये यन्महीयः पूजिततमं वस्तु, ततोऽपि महितं पूजितम्। किञ्च मोहनात् सम्मोहनम्। मोहनात् यदस्मिंस्त्रैलोक्येऽतिमोहनं वस्तु, तस्मादपीत्यर्थः। अपिच कान्तिनिधानतः अपि कान्तम्। कान्तिनिधानतः कान्त्याः शोभाया निधानं निधिस्तस्मादपि कान्तं मनोहरम्। अन्यच्च माधुर्यधुर्यादपि मधुरम्। यत् माधुर्यधुर्यं माधुर्यस्य मधुरताया धुर्यं धूर्वहम्, तस्मादपि मधुरं माधुर्ययुक्तम्। अपरञ्च सौन्दर्योत्तरत अपि सुन्दरतरम्। यत् सौन्दर्योत्तरं सौन्दर्येणोत्तरमुत्कृष्टतमम्, तस्मादपि सुन्दरतरमतिसुन्दरम्। किञ्च, आश्चर्यतः अपि आश्चर्यम्। यदाश्चर्यम् अद्भुतालम्बनं वस्तु, तस्मादपि आश्चर्यमद्भुततमम्। अत्र सकलजनवल्लभत्वरूपं सौभाग्यं भगवत उक्तम्। जनवाल्लभ्यमपि सौभाग्यमेवेत्यवगन्तव्यम् ॥

तत्तादृङ्मधुरात्मकं तव वपुः सम्प्राप्य सम्पन्मयी
सा देवी परमोत्सुका चिरतरं नास्ते स्वभक्तेष्वपि।
तेनास्या बत कष्टमच्युत विभो त्वद्रूपमानोज्ञक-
प्रेमस्थैर्यमयादचापलबलाच्चापल्यवार्तोदभूत् ॥ ४ ॥

तत्तादृगिति ॥ हे विभो अच्युत सा देवी तव वपुः सम्प्राप्य स्वभक्तेष्वपि चिरतरं न आस्ते। विभो प्रभो। अच्युत श्रीकृष्ण। सा प्रसिद्धा। देवी

लक्ष्मी । तव श्रीनारायणस्य । वपु शरीर सम्प्राप्य त्वद्वक्षसि वासं लब्ध्वे त्यर्थ । स्वभक्तेपु स्वस्या भक्तेषु । किं पुनरन्यभक्तेष्वित्यपिशब्दार्थ । चिरतरम् अतिचिरकालम् । अनेन कश्चित् काल वसतीति दर्शितम् । न आस्ते न स्थिर्ति करोति। ननु किं लक्ष्मी स्वयं स्वभक्तेपु वसति, उत रूपान्तरेणेति चेतत्राह— सम्पन्मयी इति । सम्पन्मयी धनधान्यादिरूपिणी सती । ननु कुतो न स्वभक्ते ष्वास्त इत्यत्राह—परमोत्सुका इति । परमोत्सुका अत्यर्थमुत्कण्ठिता । त्वद्वपुस्सौ न्दर्याकृष्टचेतस्तयाऽन्यत्र गन्तुमशक्यत्वादिति भाव । लक्ष्म्या औत्सुक्ये हेतुं प्रदर्शयन् त्वद्वपुर्विशिनष्टि—तत्तादृङ्मधुरात्मकमिति । तदेव तादृक् तत्सदृश यस्य तत् तत्ता दृक् । निरुपममित्यर्थ । मधुरो माधुर्यवानात्मा स्वरूपं यस्य तन्मधुरात्मकम् माधु र्यैकसारमित्यर्थ । अतो देव्या औत्सुक्यमिति भाव । तेन अस्या त्वद्रूपमानोज्ञक प्रेमस्थैर्यमयात् अचापल्यबलात् चापल्यवार्ता उदभूत् बत कष्टम् । तेन उक्तरीत्या स्वभक्तेष्वपि स्थिरतयाऽनवस्थानेन । अस्या देव्या । त्वद्रूपमानोज्ञकप्रेमस्थैर्यमयात् तव रूप त्वद्रूप तस्य यन्मानोज्ञक रामणीयकम्, तेन यत् प्रेम्ण त्वद्विषयानुराग प्रकर्षस्य स्थैर्यं स्थिरत्व तन्मयात्तद्रूपात् । अचापल्यबलात् अचापल चापल्याभावस्तस्य बलात् प्रभावेण । चापल्यवार्ता चापल्यस्य वार्ता व्यवहार । चपलेय लक्ष्मीरिति जनव्यवहार इत्यर्थ । उदभूदुद्भूता । बत कष्टमिति द्विरुक्ति खेदातिशयेन । गुण एव दोषतया परिणत इति खेदकारणमनुसन्धेयम् । एतेन भगवत प्रियतमावल्ल भत्वरूपं सौभाग्यमुक्तम् । एतदपि सौभाग्यमित्युच्यत इत्यवगन्तव्यम् ॥

उक्तमेवार्थं प्रमाणप्रदर्शनेन द्रढीकुर्वन्नाह—

लक्ष्मीस्तावकरामणीयकहृतैवेय परेष्वस्थिरे-
त्यस्मिन्नन्यदपि प्रमाणमधुना वक्ष्यामि लक्ष्मीपते ।
ये त्वद्ध्यानगुणानुकीर्तनरसासक्ता हि भक्ता जना-
स्तेष्वेषा वसति स्थिरैव दयितप्रस्तावदत्तादरा ॥ ५ ॥

लक्ष्मीरिति ॥ हे लक्ष्मीपते अहम् इय लक्ष्मी तावकरामणीयकहृता एव परेषु अस्थिरा इत्यस्मिन् अन्यत् प्रमाणमपि अधुना वक्ष्यामि । लक्ष्मीपते

लक्ष्म्या श्रीदेव्या पते प्रियतम । इथ त्वद्वल्लभा। लक्ष्मी श्री । तावकरामणी यकहृता तावकेन त्वत्सम्बन्धिना रामणीयकेन रमणीयतया हृता समाकृष्टहृदया। एवकारेण परेष्वस्थिरत्वे कारणान्तरस्य व्यवच्छेद । परेषु स्वभक्तेषु। स्थिरा स्थिरवासा न भवतीत्यस्थिरा। इति एव विधे। अस्मिन् अर्थे। अन्यत् शब्द व्यतिरिक्तम्। प्रमाण अनुमानमित्यर्थ । अपि समुच्चये। अधुना इदानीम्। वद्यामि कथयिष्यामि। अनुमानमाह—य इत्यादि। त्वद्ध्यानगुणानुकीर्तनरसा सक्ता हि भक्ता ये जना, एषा तेषु स्थिरा एव वसति। त्वद्ध्यानगुणानुकीर्तनरसा सक्ता तव ध्यान त्वद्ध्यान तस्मिन् गुणाना तव भक्तवात्सल्यादीना यदनुकीर्तन पुन पुन कीर्तन तत्र च यो रसस्तत्रासक्ता तत्परा । हीति प्रसिद्धौ। त्वद्ध्या नगुणानुकीर्तनरसासक्तत्वेन प्रसिद्धा इत्यर्थ । भक्ता भगवद्भक्ता । सन्तीति शेष । एषा लक्ष्मी । तेषु तथाविधेषु भक्तेषु। स्थिरा अचञ्चला । एवकारेण कदाचिदपि चाञ्चल्याभाव उक्त । अत्र हेतुमाह— दयितप्रस्तावदत्तादरा इति। दयितस्य प्रियतमस्य प्रस्ताव प्रसङ्ग तत्र दत्त आदरो यया सा। प्रियतमकथाश्रवणकौतु कादित्यर्थ । प्रियजनकथाश्रवण कामिना विरहताप श्लथयति। अतो निरहवेदनाया सह्यतया तथाविधेषु भगवद्भक्तेषु स्थिरैव रमतीति भाव । अनुमानन्तु— लक्ष्मीस्त्वदीयरामणीयकाकृष्यमाणसतया परेष्वस्थिरा त्वद्गुणानुकीर्तनरसासक्तेषु प्रिय तमकथाश्रवणकौतुकेन स्थिरावस्थायिनीत्वात्। या या त्वद्गुणानुकीर्तनरसासक्तेषु प्रियतमकथाश्रवणकौतुकेन स्थिरावस्थायिन्य, तास्त्वदीयरामणीयकाकृष्यमाणसतया परेष्वस्थिरा, यथा त्वद्गुणानुकीर्तनरसासक्ते उद्धवे गोपवाटिकामुपगते प्रियतम कथाश्रवणकौतुकेन तत्समीपे स्थिरावस्थायिन्यस्त्वदीयरामणीयकाकृष्यमाणसतया स्वभर्तृष्वप्यस्थिरा गोपकुमार्य इति। अनेन ये नामात्र सम्पत्समृद्धि वाञ्छन्ति, तैर्भक्त्या भगवत्स्वरूपध्यानगुणकीर्तनानि सर्वदा कर्तव्यानीत्युपदिष्ट कविनेत्यत्र गन्तव्यम् ॥

इत्थ भगवत स्वरूपमुपवर्ण्य तच्छ्रवणस्य मोक्षोपायमास्मिन्नभक्तियोग सिद्ध्युपायता दर्शयति—

एवम्भूतमनोज्ञतानवसुधानिष्यन्दसन्दोहनं
त्वद्रूपं परचिद्रसायनमयं चेतोहरं शृण्वताम् ।
सद्यः प्रेरयते मतिं मदयते रोमाञ्चयत्यङ्गकं
व्यासिञ्चत्यपि शीतबाष्पविसरैरानन्दमूर्छोद्भवैः ॥ ६ ॥

एवम्भूतेति ॥ त्वद्रूपं सद्यः शृण्वतां मतिं प्रेरयते मदयते । तव रूपं त्वद्रूपम् । सद्यो झटिति । शृण्वतां श्रोतॄणाम् । मतिं बुद्धिम् । प्रेरयते आकर्षति । विषयेभ्यो बलादाकृष्य स्वस्मिन् सन्निधापयतीत्यर्थः । मदयते आनन्दविवशा मापादयति । किञ्च, अङ्गकं रोमाञ्चयति । अङ्गकं शरीरम् । रोमाञ्चयति आनन्द विवशतया पुलकितं विदधाति । अपिच, आनन्दमूर्छोद्भवैः शीतबाष्पविसरैः व्यासिञ्चति अपि । आनन्दस्य मूर्छा वृद्धिस्तत्प्रकाशादुद्भवः उत्पत्तिर्येषां तैरानन्दमूर्छोद्भवैः । शीतबाष्पविसरैः शीतबाष्पस्य शिशिराश्रुणो विसरैः प्रसरैः । व्यासिञ्चति विशेषेणासमन्तात् सेचनं करोति । अनेन शीतबाष्पप्रसरस्याधिक्यं तेनानन्दमूर्छाया अतिशयश्च ध्वन्यते । अपिरुक्तार्थसमुच्चये । अत्र हेतुं प्रदर्शयन् त्वद्रूपं विशिनष्टि— चेतोहरमिति । चेतो हरतीति चेतोहरं मनोहरम् । अत्र हेतुमाह—एवम्भूतमनोज्ञतानवसुधानिष्यन्दसन्दोहनं परचिद्रसायनमय मिति । एवम्भूतमनोज्ञतानवसुधानिष्यन्दसन्दोहनम् एवम्भूता एवंविधापूर्वोक्ता या मनोज्ञता रमणीयता सैव नवसुधानिष्यन्दो नवसुधाया नूतनपीयूषस्य । नवत्वग्रहणं माधुर्यातिशयद्योतनाय । निष्यन्दो द्रवस्तस्य सन्दोहनं वर्षकम् । पर चिद्रसायनमयं परौ सर्वोत्कृष्टौ चिद्रसौ चित् ज्ञानं रस आनन्दश्च तयोरयन मयं मार्गस्वरूपम् । चिदानन्दप्रापकमित्यर्थः । भगवत्स्वरूपानुसन्धानस्य चिदान न्दावाप्तिहेतुत्वादिति भावः । अनेन च भगवत्स्वरूपश्रवणे सञ्जाताह्लादानां जनानां प्रेमलक्षणा भक्तिरुदजायत इत्यप्युक्तमिति वेदितव्यम् ॥

अथ पूर्वस्मिन् श्लोके सूचिताया भक्तेर्मोक्षोपायमौत्कृष्ट्यं प्रदर्शयति—

एवम्भूततया हि भक्त्यभिहितो योगस्स योगद्वयात्
कर्मज्ञानमयाद्भृशोत्तमतरो योगीश्वरैर्गीयते ।

सौन्दर्यैकरसात्मके त्वयि खलु प्रेमप्रकर्षात्मिका
भक्तिर्निश्रममेव विश्वपुरुषैर्लभ्या रमावल्लभ ॥ ७ ॥

एवम्भूततयेति। सः भक्त्यभिहितः योगः एवम्भूततया कर्मज्ञानमयात् योगद्वयात् भृशोत्तमतरः हि। सः नारदादिभिरप्यङ्गीकृततया प्रसिद्धः। भक्त्यभिहितः भक्तिरित्यभिहितः उक्तः भक्त्याख्य इत्यर्थः। योगः मोक्षोपायः। एवम्भूततया उक्तरीत्या सर्वाङ्गीणाह्लादजनकतया। कर्मज्ञानमयात् कर्ममयात् ज्ञानमयाच्च। योगयोर्मोक्षोपाययोर्द्वयं योगद्वयं तस्मात्। भृशोत्तमतरः भृशमतिशयेनोत्तमतरः श्रेष्ठतरः। हीति प्रसिद्धौ। प्रसिद्धमधिकश्लाघ्यत्वं भक्तियोगस्येत्यर्थः। अत्र प्रमाणमाह— योगीश्वरैः गीयत इति। योगीश्वरैः योगिनामृषीणामीश्वरैः श्रेष्ठैर्व्यासादिभिः। गीयते वर्ण्यते। पुराणेष्विति शेषः। भक्तियोगस्य श्रेष्ठत्वे कारणान्तरमप्याह— हे रमावल्लभ त्वयि भक्तिः विश्वपुरुषैः निश्रममेव लभ्या इति। रमाया लक्ष्म्या वल्लभ प्रियतम। विश्वे सर्वे पुरुषा विश्वपुरुषास्तैः। निर्गतः श्रमः आयासो यस्मात्तन्निश्रममिति क्रियाविशेषणम्। एवकारोऽन्ययोगव्यवच्छेदार्थकः। लभ्या प्राप्या। खल्विति प्रसिद्धौ। भक्तेः स्वरूपमाह— प्रेमप्रकर्षात्मिका इति। प्रेम्णः प्रकर्षः उत्कर्षः आत्मा स्वरूपं यस्याः सा प्रेमप्रकर्षात्मिका। प्रेमप्रकर्षोदये हेतुमाह— सौन्दर्यैकरसात्मके इति। सौन्दर्यमेको रस आत्मा स्वरूपं यस्य स सौन्दर्यैकरसात्मकस्तस्मिन्। सौन्दर्यस्य रसत्वं निरतिशयाह्लादजनकत्वात्। सौन्दर्यामृतमये इत्यर्थः ॥

अथैवम्भूततयेत्यादिश्लोकमेव विवृणोति—

निष्कामं नियतस्वधर्मचरणं यत् कर्मयोगाभिधं
तद्दूरेत्यफलं यदौपनिषदज्ञानोपलभ्यं पुनः।
तत्त्वव्यक्ततया सुदुर्गमतरं चित्तस्य तस्माद्विभो
त्वत्प्रेमात्मकभक्तिरेव सततं स्वादीयसी श्रेयसी ॥ ८ ॥

निष्काममिति। कर्मयोगाभिधं निष्कामं नियतस्वधर्मचरणं यत्, तत् दूरेत्यफलम्। कर्मयोग इत्यभिधा संज्ञा यस्य तत् कर्मयोगाभिधम्। निर्गत·

काम फलाभिसन्धिर्यस्मात्तन्निष्कामम्। नियतस्वधर्मचरणं नियतस्य नित्यनैमित्तिकादेः स्वधर्मस्य सन्ध्यावन्दनस्नयागादेश्चरणमनुष्ठानम्। दूरेत्य दूरभवं फलं मोक्षाख्यं प्रयोजनं यस्य तद्दूरेत्यफलम्। यत् पुनः औपनिषदज्ञानोपलभ्यम्, तत् तु अव्यक्ततया चित्तस्य सुदुर्गमतरम्। औपनिषदज्ञानोपलभ्यम् औपनिषदं उपनिषत्प्रतिपाद्यं ब्रह्म तस्य ज्ञानेन अहमखण्डं ब्रह्मास्मीत्येवरूपेण उपलभ्यं प्राप्यम्। ब्रह्मात्मनाऽवस्थानमित्यर्थः। अव्यक्ततया करणागोचरतया। चित्तस्य मनसः। सुदुर्गमतरं सुतरां दुर्गमतरं प्राप्तुमशक्यम्। हे विभो तस्मात् त्वत्प्रेमात्मकभक्तिः एव सततं स्वादीयसी श्रेयसी। विभो कर्मज्ञानभक्तियोगफलप्रदानसमर्थ। तस्मात् पूर्वोक्तात् कारणात्। त्वत्प्रेमात्मकभक्तिः त्वयि प्रेम त्वत्प्रेम तदात्मिका भक्तिः। एवकारेण कर्मज्ञानयोगव्यवच्छेदः। सततम् उत्पत्तौ, तदनन्तरम्, फलप्राप्तौ च। स्वादीयसी अतिशयेनास्वादनीया। श्रेयसी ब्रह्मादिभिरपि प्रशस्यतरा चेत्यर्थः॥

सम्प्रति निष्काममित्यादिनोक्तमुपपादयति द्वाभ्याम्—

अत्यायासकराणि कर्मपटलान्याचर्य निर्यन्मला
बोधे भक्तिपथेऽथवाऽप्युचिततामायान्ति किं तावता।
क्लिष्ट्वा तर्कपथे परं तव वपुर्ब्रह्माख्यमन्ये पुन-
श्चित्तार्द्रत्वमृते विचिन्त्य बहुभिस्सिद्ध्यन्ति जन्मान्तरैः॥ ९॥

अत्यायासेति॥ केचित् अत्यायासकराणि कर्मपटलानि आचर्य निर्यन्मलाः बोधे अथवा भक्तिपथे अपि उचिततामायान्ति। अत्यायासकराणि बहुधनव्ययकायक्लेशादिभिः साध्यानि। कर्मपटलानि कर्मणां यागप्रायश्चित्तादीनां पटलानि समूहान्। आचर्य अनुष्ठाय। निर्यन्मलाः निर्गतपापाः सन्तः। बोधे ज्ञानयोगे। अथवा भक्तिपथे भक्तियोगे। अयमाशयः—ये विरक्तास्तेषां ज्ञानयोगेऽधिकारः। ये तु नातीव विरक्तास्तेषां भक्तियोगेऽधिकार इति। उचिततामधिकारिताम्। आयान्ति प्राप्नुवन्ति। तावता किम्। तावता तावन्मात्रेण। किं किं प्रयोजनम्। भक्तियोगे प्रवृत्तानामस्माकमेतावन्मात्रोपयोगिना कर्मयोगेन

न किञ्चित् प्रयोजनमित्यर्थः। एतेन तदूदूरेत्यफलमित्युपपादितम्। अन्ये पुनः चित्तार्द्रत्वम् ऋते तर्कपथे क्लिष्टा परं ब्रह्माख्यं तव वपुः विचिन्त्य बहुभिः जन्मान्तरैः सिद्ध्यन्ति। अन्ये पुनः अपरे तु विरक्तम्मन्या इत्यर्थः। चित्ता र्द्रत्वं चित्तस्य मनसः आर्द्रत्वं रागद्वेषादिराहित्यम्। ऋते विना। तर्कपथे तर्काणां वेदान्तप्रतिपाद्ययुक्तीनां पन्था विचारमार्गस्तस्मिन्। क्लिष्टा क्लेशाननुभूय। परं सर्वोत्कृष्टम्। ब्रह्मेत्याख्या यस्य तत् ब्रह्माख्यम्। वपुः स्वरूपम्। विचिन्त्य विविधैर्न्यायैर्विचार्य। बहुभिरनेकैः। अन्यानि जन्मानि जन्मान्तराणि तैः। सिद्ध्यन्ति प्राप्नुवन्ति। वपुरत्रापि कर्म। अनेन तत्त्वव्यक्ततया सुदुर्गमतरमित्युपपादितम्॥

एवं निष्काममित्यादिश्लोके सुदुर्गमतरमित्यन्तमुपपाद्य अनन्तरं त्वत्प्रेमा त्मकेत्याद्युपपादयति—

त्वद्भक्तिस्तु कथारसामृतझरीनिर्मज्जनेन स्वयं
सिद्ध्यन्ती विमलप्रबोधपदवीमक्लेशतस्तन्वती।
सद्यस्सिद्धिकरी जयत्ययि विभो सैवास्तु मे त्वत्पद-
प्रेमप्रौढिरसार्द्रता द्रुततरं वातालयाधीश्वर ॥ १० ॥

त्वद्भक्तिरिति॥ अयि वातालयाधीश्वर त्वद्भक्तिः तु जयति। वाता लयाधीश्वर गुरुवायुपुरनाथ। त्वयि भक्तिस्त्वद्भक्तिः। तुर्विशेषे। तमाह—जय तीति। कर्मज्ञानयोगाभ्यामुत्कर्षेण वर्तत इत्यर्थः। अत्र हेतुमाह—सद्यस्सिद्धि करीति। सद्यः इहैव जन्मनि सिद्धिं मोक्षं करोतीति सद्यस्सिद्धिकरी। इतरयोस्तु न जन्मान्तरायासं विना सद्यो मोक्षदातृत्वमिति भावः। ननु ब्रह्मज्ञानेनैव मुक्तिः नान्यस्तस्याः कश्चिदुपायोऽस्तीति श्रुतिप्रतिपादिततया कथं भक्तेर्मोक्षसाधनत्व मित्यत आह— विमलप्रबोधपदवीं तन्वती इति। विमलप्रबोधपदवीं विमलो निर्मलः शरीराद्यहम्ममाभिमानरहितो यः प्रबोधः प्रकृष्टो बोधः अहमखण्डं ब्रह्मास्मी त्येवंरूपः स एव पदवी मोक्षमार्गस्ताम्। तन्वती कुर्वाणा। एवञ्च ज्ञानद्वारा भक्तेर्मोक्षहेतुत्वान्नानुपपत्तिरिति भावः। ननु कर्मज्ञानयोगयोरपि प्रबोधजनकतया भक्तेः को विशेष इति चेत्तत्राह— अक्लेशत इति। धनव्ययदेहायासयुक्ति

चिन्तनादिक्लेश विनेत्यर्थ । सकललोकगुरोर्भगवत प्रभावादिति भाव । ननु कथ भक्तेरुत्पत्तिरित्यत आह — कथारसामृतझरीनिर्मज्जनेन स्वय सिद्धचन्ती इति । कथारसामृतझरीनिर्मज्जनेन कथाया तवालौकिकव्यापारप्रतिपादकपुराणादौ यो रस शृङ्गारादिरसास्वाद स एवामृतझरीनिर्मज्जनम् अमृतझरी अमृतप्रवाहस्तत्र निर्मज्जन नितरा मज्जन तेन । स्वयमनायासेन । सिद्धचन्ती सिद्धिं गच्छन्ती । अत्रायमाशय —त्वत्कथा शृण्वता पुन पुन शुश्रूषा जायते, ततश्च विविधविषय तृष्णा अपैति, ततश्चित्तशुद्धिद्वारा भक्ति स्वयमेवोत्पद्यत इति । एतेन त्वत्पे मात्मकैरवाद्युपपादितम् । एव भक्तियोगस्योत्कर्ष प्रतिपाद्य स्वस्यापि तत्सिद्धिं प्रार्थयते— मे सा त्वत्पदप्रेमप्रौढिरसार्द्रता एव अस्तु इति । मे मम । सा सर्वोत्कृष्टा । त्वत्पदप्रेमप्रौढिरसार्द्रता तव पद चरणकमल त्वत्पद तत्र यत्प्रेम स्नेहस्तस्य प्रौढिरतिशय स एव रसो रसनीयत्वाद्रसपदवाच्यस्तेनार्द्रता विलीन हृदयता । एवकारेण कर्मयोगादिव्यवच्छेद । तस्य कालान्तरे फलप्रदत्वेन शीघ्र फलप्रदत्वाभावादिति भाव । ननु यदि त्व भक्तिमभिलपसि, तर्हि कथा श्रवणादिसक्तो भव, किं प्रार्थनेनेत्यत आह—द्रुततरमिति । द्रुततरमतिशीघ्रम् । त्वत्कथाश्रवणादिप्रयोज्यकालविलम्ब विना अधुनैवेत्यर्थ । ननु कथ कथाश्रवणा दिकारण विना भक्तिरुत्पद्यत इत्याशङ्का परिहरन् भगवन्त सम्बोधयति— विभो इति । विभो कर्तुमकर्तुमन्यथाकर्तुमपि समर्थ । अतो न किञ्चिदपि तव दुष्करमिति भाव ॥

इति श्रीनारायणीयव्याख्याया बालबोधिन्या द्वितीयदशकम् ॥

## तृतीयदशकम् ॥

एव भक्तेर्मोक्षोपायमौलिनामुत्पत्तिञ्च प्रतिपाद्य अनन्तर भक्ताना स्वरूप वर्णयति—

पठन्तो नामानि प्रमदभरसिन्धौ निपतिता
स्मरन्तो रूप ते वरद कथयन्तो गुणकथाः ।

चरन्तो ये भक्तास्त्वयि खलु रमन्ते परमम्-
नहं धन्यान् मन्ये समधिगतसर्वाभिलषितान् ॥ १ ॥

पठन्त इति ॥ अहम् अमून् धन्यान् मन्ये। अमून् भक्तान्। धन्यान् भाग्यवतः। मन्ये निश्चिनोमि। कुत इत्यत आह—समधिगत सर्वाभिलषितानिति। समधिगतानि प्राप्तानि सर्वाण्यभिलषितान्यभीष्टानि यैस्ते समधिगतसर्वाभिलषितास्तान्। भगवत्पादारविन्दस्य समस्तपुरुषार्थरूपतया तत्रासौ पुनर्ब्रह्मलोकादिकमपि न वाञ्छन्तीति भावः। अथःपदार्थमाह—हे वरद ये भक्ताः त्वयि खलु परं रमन्ते इति। वरद भक्ताभीष्टवरप्रदानैक निरत। खल्वित्यवधारणे। त्वय्येव नान्यत्र विषयादाविस्यर्थः। परमतिशयेन। रमन्ते त्वत्स्वरूपानुसन्धानादिना परमानन्दमनुभवन्ति। भगवत्स्वरूपानुसन्धानादि प्रकारमाह— ते नामानि पठन्तः रूपं स्मरन्तः गुणकथाः कथयन्तः प्रमद भरसिन्धौ निपतिताः चरन्तः इति। ते तव। नामानि रामकृष्णेत्यादीनि। पठन्त उच्चैस्तरं जपन्तः। रूपं दिव्यमङ्गलविग्रहम्। स्मरन्त ध्यायन्तः। गुणकथाः गुणा भक्तवात्सल्यादयस्तान् कथा अत्यद्भुतानि चरित्राणि च। कथयन्त. रसावेशविवशतया परस्परं भाषमाणाः। अत एव प्रमदभरसिन्धौ प्रमदभर आनन्दातिशय एव सिन्धुस्समुद्रस्तत्र। निपतिता मग्नाः। अत एव चरन्तो गृहाद्यनपेक्षया भवत्क्षेत्रपुण्यतीर्थादिषु सञ्चरन्तश्च सन्त.। अत्र भक्तानां प्रशंसया कवेस्तथात्वसिद्धौ महत्युत्कण्ठा व्यज्यते॥

ननु किमर्थमेवं भक्तान् स्तौषि, त्वमपि मम नामानि पठन् मत्स्वरूपं ध्यायन् मत्कथाश्च कथयंस्तेषामन्यतमो भवेत्याशङ्कायामाह—

गदक्लिष्टं कष्टं तव चरणसेवारसभरेऽ
प्यनासक्तं चित्तं भवति बत विष्णो कुरु दयाम्।
भवत्पादाम्भोजस्मरणरसिको नामनिवहा-
नहं गायं गायं कुहचन विवत्स्यामि विजने ॥ २ ॥

गदक्लिष्टमिति ॥ चित्तं तव चरणसेवारसभरे अपि अनासक्तं भवति कष्टं बत । अत्र ममेत्यध्याहर्तव्यम् । मम चित्तं मनः । तवोपासकानां कौतुकाधायकस्य । चरणसेवारसभरे चरणयोः पादकमलयोर्या सेवा उपासनम् । अनुचिन्तनमिति यावत् । तत्र यो रस. सुखं तस्य भरे अतिशयेऽपि । किं पुनर्नामोच्चारणादावित्यपिशब्दार्थ. । आसक्तं तत्परं न भवतीत्यनासक्तम् । समाधातुमशक्यमित्यर्थः । अत्र हेतुमाह—गदक्लिष्टमिति । गदैः वातपित्तादिभिरान्तरै रागादिभिश्च क्लिष्टं पीडितम् । तथाच रोगातुरोऽहं न भक्ताननुकर्तुं समर्थ इति भाव. । कष्टं बतेति खेदातिशये । ननु किमत्र मया विधेयमिति चेत्तत्राह— हे विष्णो दयां कुरु इति । मयीति शेषः । मदेकशरणोऽयमिति मत्वा मय्यनन्यशरणे कृपां विधेहीत्यर्थः । ननु मदीयकृपया तव किं प्रयोजनमिति चेत्तत्राह—अहं भवत्पादाम्भोजस्मरणरसिकः नामनिवहान् गायं गायं कुहचन विजने विवत्स्यामि इति । भवत्पादाम्भोजस्मरणरसिक· भवतः पादाम्भोजयो पादारविन्दयो. स्मरणे चिन्तने रसिको जातकौतुकः सन् । नामनिवहान् नाम्नां निवहान् समूहान् । गायं गायमिति पौन.पुन्ये द्विरुक्तिः । पुन पुनर्गायन्नित्यर्थे । कुहचन कुत्रचित् । विजने जनरहिते प्रदेशे । ध्यानसौकर्यार्थम् । अन्यथा जनबाधया मनस· स्थिरीकरणमशक्यमिति भाव. । विवत्स्यामि वासं करिष्यामि । यद्यहं त्वत्कृपाभाजनमभविष्यम्, तदैवं करिष्यामीत्यर्थ. ॥

ननु किमिति त्वया कृपा प्रार्थ्यते, रोगशान्तिरेव प्रार्थ्यतामित्यत आह—

कृपा ते जाता चेत्किमिव न हि लभ्यं तनुभृतां
मदीयक्लेशौघप्रशमनदशा नाम कियती ।
न के के लोकेऽस्मिन्ननिशमयि शोकाभिरहिता
भवद्भक्ता मुक्ताः सुखगतिमसक्ता विदधते ॥ ३ ॥

कृपेति ॥ ते कृपा जाता चेत् तनुभृतां किमिव न हि लभ्यम् । ते तवेश्वरस्य । कृपा दया । जाता उत्पन्ना चेत् । तनुभृतां प्राणिनाम् । स्त्रीशूद्रादीनां

पशुपक्ष्यादीनामपि। किमिव कीदृशमभिलषितं वस्तु। न लभ्यं न प्राप्तुं शक्यम्। सर्वमप्यभिलषितं त्वदैक्यरूपं निश्रेयसमपि लभ्यमेवेत्यर्थः। नन्वेवं सत्यपि तव किमायातमिति चेत्तत्राह—मदीयक्लेशौघप्रशमनदशा नाम कियती इति। मदीयक्लेशौघप्रशमनदशा मदीयानां मत्सम्बन्धिनां क्लेशौघानां बाह्यानामाभ्यन्तराणामपि सर्वेषां रोगाणां प्रशमनस्य प्रशान्तेर्दशा स्थितिः। नामेति स्वर्थे। कियती कियन्माला अतिलघीयसी। त्वत्कृपायां जातायां सर्वाभिलषितानामनायासेन सिद्धेः सैव प्रार्थ्यते। तस्यां च सिद्धायां त्वत्प्राप्त्युपायमौलिभूतभक्तियोगस्य रोगनिवृत्त्या प्राप्तुं शक्यतया मम सर्वाण्यभीष्टानि सिद्धानीति भावः। नन्वेवंविधकृपापात्रीभूता विरला इति चेन्नेत्याह—अयि अस्मिन् लोके के के न सुखगतिं विदधते इति। अयीत्यनन्तरं पूर्वश्लोकाद्विष्णो इत्यनुवृत्त्या योजनीयम्। अयि विष्णो सर्वव्यापिन्। अनेन सर्वमप्येतत् दृश्यत इति व्यज्यते। सुखगतिं सुखेन सञ्चारम्। विदधते कुर्वन्ति। ननु यदि सुखेनास्मिन् लोके सञ्चारः क्रियते, तर्हि संसारबन्धः स्यादित्यत आह—असक्ताः इति। असक्ताः सुखेष्वासक्तिं विना। सुखानुभवे वासनाया अनुत्पत्त्या तस्य संसारबन्धहेतुत्वाभावादिति भावः। ननु कथमीदृशीं दशामुपगता इत्यत आह—मुक्ताः इति। मुक्ताः जीवन्मुक्ताः। जीवन्मुक्तानां स्वरूपमाह—अनिशं शोकाभिरहिताः इति। शोकैरविद्याकार्यभूतैर्दुःखैरभिरहिता नितरां वियुक्ताः। जीवन्मुक्तौ हेतु प्रदर्शयति—भवद्भक्ताः इति। भवद्भक्तेर्मुक्तिहेतुत्वादिति भावः। अस्मिंल्लोके भवद्भक्तया निवृत्तसमस्तदुःखजाता जीवन्मुक्ताः परानुग्रहमात्रपरतया सुखेष्वसक्ताः के के न यथेष्टं चरन्तीत्यर्थः॥

*ननु के त इत्यत आह—*

मुनिप्रौढा रूढा जगति खलु गूढात्मगतयो
भवत्पादाम्भोजस्मरणविरुजो नारदमुखाः।
चरन्तीश स्वैरं सततपरिनिर्भातपरचि-
त्सदानन्दाद्वैतप्रसरपरिमग्नाः किमपरम् ॥ ४ ॥

मुनिप्रौढा इति॥ हे ईश नारदमुखाः मुनिप्रौढाः जगति स्वैरं चरन्ति खलु। ईश जगत्परिपालक। नारदो मुखमादिर्येषां ते नारदमुखाः श्रीनारदश्रीशुक

प्रभृतयः। मुनिप्रौढाः मुनिश्रेष्ठाः। जगति लोके। स्वैरं सुखेन। चरन्ति सञ्चरन्ति। खल्विति प्रसिद्धौ। तेषां सुखसञ्चारे हेतुमाह—सततपरिनिर्भातपरचित्सदानन्दाद्वैतप्रसरपरिमग्नाः इति। सततं सर्वदा परिनिर्भातमनुभवपदवीमवतीर्णं यत् परचित्सदानन्दं सच्चिदानन्दं ब्रह्म तदेवाद्वैतमुपाधिलयात्तस्य प्रसरः सम्प्लवः तस्मिन् परिमग्नाः परितो मग्नाः तदेकीभूताः सन्त इत्यर्थः। तेषां परानन्दैक्ये हेतुमाह—भवत्पादाम्भोजस्मरणविरुजः इति। भवतः पादाम्भोजयोः पादारविन्दयोर्यत् स्मरणं तेन विगता रुजोऽविद्याकार्यभूतक्लेशपरम्परा येभ्यस्ते। ननु कुतो न ते दृश्यन्त इत्यत आह—गूढात्मगतयः इति। गूढा परैरदृश्या आत्मनः स्वस्य गतिर्गमनं येषां ते। ननु कथमिदं ज्ञायत इत्यत आह—रूढाः इति। रूढाः प्रसिद्धाः। पुराणेषु प्रसिद्धमेषामस्मदादिभिरदृश्यतया गमनमित्यर्थः। इतः परं न तेषां किमपि लभ्यमवशिष्टमित्याह—अपरं किमिति। अपरमन्यत्। लभ्यमिति शेषः। ऐवंविधाया अवस्थाया नान्यत् किमपि लभ्यमवशिष्टमित्यर्थः॥

ननु किमिति त्वया ज्ञानं न प्रार्थ्यत इत्याशङ्कां परिहर्तुं भक्तेस्तत्कार्यकारित्वमाह—

> भवद्भक्तिः स्फीता भवतु मम सैव प्रशमये-
> दशेषक्लेशौघं न खलु हृदि सन्देहकणिका।
> न चेद्व्यासस्योक्तिस्तव च वचनं नैगमवचो
> भवेन्मिथ्या रथ्यापुरुषवचनप्रायमखिलम् ॥ ५ ॥

भवद्भक्तिरिति॥ मम भवद्भक्तिः स्फीता भवतु। भवति भक्तिर्भवद्भक्तिः। स्फीता प्रवृद्धा। भवतु जायताम्। सा एव अशेषक्लेशौघं प्रशमयेत्। सा भवद्भक्तिः। एवकारेण ज्ञानव्यवच्छेदः। अशेषक्लेशौघम् अशेषाणां समस्तानां क्लेशानां संसारदुःखानामोघं सञ्चयम्। प्रशमयेन्निवर्तयिष्यति। मुक्तिं दास्यतीत्यर्थः। हृदि सन्देहकणिका न खलु। हृदि हृदये। सन्देहकणिका सन्देहस्य संशयस्य कणिका लेशः। खल्वित्ययोगव्यवच्छेदे। अत्र विपक्षे बाधकमाह—न चेत् व्यासस्य उक्तिः तव वचनं नैगमवचः च

अखिलं रथ्यापुरुषवचनप्रायं मिथ्या भवेदिति । न चेत् यदि भवद्भक्तिः समस्तसन्तापनाशिनी न स्यात्तर्हि । व्यासस्योक्तिः पुराणवचनानि । तव वचनं अर्जुनमुद्धवं प्रति च यदुक्तं तत् । नैगमवच. नैगमानां वेदज्ञाना वचो वचनम् । अखिलं समस्तम् । रथ्यापुरुषवचनप्रायं रथ्यापुरुषाणामनाप्तानां यद्वचनमुक्तिस्तत्प्रायं तत्तुल्यम् । मिथ्या असदर्थबोधकम् । यदि भवद्भक्तिर शेषक्लेशौघं न प्रशमयेत्तर्हि व्यासादिवचनं रथ्यापुरुषवचनवदप्रमाणं स्या दित्यर्थ. ॥

नन्वत्र भक्तिज्ञानयोर्मोक्षहेतुत्वस्य तुल्यतया कुतो ज्ञानमेव न प्रार्थ्यत इत्याशङ्कां परिहर्तुं ज्ञानयोगाद्भक्तियोगस्य चारुत्वमाह—

भवद्भक्तिस्तावत् प्रमुखमधुरा त्वद्गुणरसात्
किमप्यारूढा चेदखिलपरितापप्रशमनी ।
पुनश्चान्ते स्वान्ते विमलपरिबोधोदयमिल-
न्महानन्दाद्वैतं दिशति किमतः प्रार्थ्यमपरम् ॥ ६ ॥

भवद्भक्तिरिति ॥ भवद्भक्ति तावत् त्वद्गुणरसात् प्रमुखमधुरा । भवति भक्तिर्भवद्भक्ति । तावदिति विशेषे । तमाह—प्रमुखमधुरेति । त्वद्गु णरसात् तव गुणेषु यो रस प्रीति. । त्वदीयालौकिकचरितश्रवणादौ य. शृङ्गारादिरसास्वादजश्चमत्कारस्तस्मादित्यर्थः । प्रमुखमधुरा प्रमुखे प्रारम्भ एव मधुरा आह्लादकारिणी । ज्ञानयोगस्य तु न प्रारम्भ एवाह्लादकारि त्वमिति भाव । किञ्च, किमपि आरूढा चेत् अखिलपरितापप्रशमनी । किमपि किञ्चित् । आरूढा वृद्धिमुपगता । अत्रापि त्वद्गुणरसादिति योज्यम् । अयं भाव—त्वद्गुणान् शृण्वता पुन॰ पुन. शुश्रूषा जायते, पुन पुन. श्रवणेन च कथारसामृतशरीनिर्मज्जनात्त्वद्भक्तिर्वृद्धिमुपयास्यतीति । अखिलपरितापप्रशमनी अखिलानां समस्तानां परितापानामाध्यात्मिकादिसन्ता पाना प्रशमनी समूलोन्मूलनकारिणी । अपिच, पुनः अन्ते स्वान्ते विमल परिबोधोदयमिलन्महानन्दाद्वैतं दिशति च । पुन. अनन्तरम् । अन्ते अवसाने ।

स्वान्ते हृदि। विमलपरिबोधोदयमिलन्महानन्दाद्वैतं विगतो मल. शरीरायहम्ममाभिमानो यस्मात् स विमलः स चासौ परिबोधम् अहमखण्डं ब्रह्मास्मीति ज्ञानं तस्योदयः उत्पत्तिः। उत्पन्नं ब्रह्मज्ञानमित्यर्थः। तेन मिलत् सम्मिलितं यन्महानन्दस्य महत आनन्दस्य। आनन्दे महत्त्वं स्रक्चन्दनाद्युपाधिनव च्छिन्नत्वम्। अद्वैतमैक्यम्। ब्रह्मैक्यमिति फलितम्। दिशनि ददानि। च कारोऽत्र पूर्वोक्तसमुच्चये। अत अपरं किं प्रार्थ्यम्। अतोऽस्मादद्वैतात्। अपरं भक्तेरन्यत्। प्रार्थ्यं प्रार्थनीयम्। आदिमध्यावसानेष्वाह्लादजनकतया भक्तिरेव प्रार्थ्या नान्यत् किमपि प्रार्थ्यमित्यर्थः॥

एवं साध्यभक्तिं प्रयोजनपर्यन्तामुपवर्ण्य स्वस्य तस्यामनधिकारमाशङ्क्य क्रियात्मिकां साधनभक्तिं प्रार्थयते—

विधूय क्लेशान्मे कुरु चरणयुग्मं धृतरसं
भवत्क्षेत्रप्राप्तौ करमपि च ते पूजनविधौ।
भवन्मूर्त्यालोके नयनमथ ते पादतुलसी-
परिघ्राणे घ्राणं श्रवणमपि ते चारुचरिते ॥ ७ ॥

विधूयेति ॥ त्वं मे क्लेशान् विधूय चरणयुग्मं भवत्क्षेत्रप्राप्तौ करं ते पूजनविधौ अपि नयनं भवन्मूर्त्यालोके च धृतरसं कुरु। मे मम। क्लेशान् बाह्यान् वातादीनाभ्यन्तरान् रागादींश्च। विधूय दूरीकृत्य। अन्यथा चरणादीना रोगपीडितत्वे तत्राभिलाषश्च न स्यादिति भाव। चरणयुग्मं चरणयो. पाद योर्युग्मं युगलम्। भवत्क्षेत्रप्राप्तौ भवत क्षेत्रं भवत्क्षेत्रं तत्र प्राप्तिर्गमनं तत्र। करं बाहुम्। ते तव। पूजनविधौ पूजनस्य पूजाकरणस्य विधिरनुष्ठानं तस्मिन्। नयनं नेत्रयुगलम्। भवन्मूर्त्यालोके भवतो मूर्तिः प्रतिमा तस्या आलोके दर्शने। चकारोऽपिशब्दश्च समुच्चये। धृतो रस आग्रहो येन तत् धृतरसं सञ्जातकौतुकम्। कुरु विधेहि। किञ्च, अथ घ्राणं ते पादतुलसीपरिघ्राणे श्रवणं ते चारुचरिते अपि। अथ पुन। घ्राणं घ्राणेन्द्रियम्। ते तव। पादतुलसीपरिघ्राणे पादतुलसी पादयोरर्चिता तुलसी तस्याः परिघ्राणे।

श्रवणं श्रोत्रेन्द्रियम् । चारुचरिते चारुणि मनोहरे चरिते कथायाम् । कथाश्रवणे इत्यर्थः । चारुत्वविशेषणेन मनसो रागादिपीडितत्वान्मनोहरेपि त्वचरिते हन्त मे नाभिरुचिरुदेतीति कवेः खेदो ध्वन्यते । अपिशब्दोऽत्रापि समुच्चये । अत्रापि धृतरसं कुर्विति योजनीयम् ॥

अथ स्मरणं प्रार्थयते—

प्रभूताधिव्याधिप्रसभचलिते मामकहृदि
त्वदीयं तद्रूपं परमसुखचिद्रूपमुदियात् ।
उदञ्चद्रोमाञ्चो गलितबहुहर्षाश्रुनिवहो
यथा विस्मर्यासं दुरुपशमपीडापरिभवान् ॥ ८ ॥

**प्रभूतेति** ॥ प्रभूताधिव्याधिप्रसभचलिते मामकहृदि त्वदीयं परमसुखचिद्रूपं तत् रूपमुदियात् । प्रभूताधिव्याधिप्रसभचलिते प्रभूतैः प्रवृद्धैः आधिभिः आन्तरैः रागादिभिः व्याधिभिः बाह्यैर्वातादिभिश्च प्रसभं बलाच्चलिते शरीरादियोगक्षेमैकतत्परे । मामकहृदि मामके मदीये हृदि हृदये । त्वदीयं त्वत्सम्बन्धि । परमसुखचिद्रूपं चिदानन्दस्वरूपम् । एतद्विशेषणं पीडापरिभवविस्मरणहेतुत्वेनोपन्यस्तमिति द्रष्टव्यम् । तत् सूर्यस्पर्धिकिरीटमित्यादीना पूर्वं प्रतिपादितम् । रूपं दिव्यमङ्गलविग्रहः । उदियात् प्रादुर्भवतु । यथा तरणिमण्डलं तिमिरनिकरमुन्मूलयदेवोदेति, तथा मदीयाधिव्याधिसञ्चयानुन्मूलयदेव मम चेतसि प्रादुर्भवत्वित्युदियादित्यनेन द्योत्यते । अत्रोदियादित्यस्य पूर्वं तथेत्यध्याहर्तव्यम्, उत्तरवाक्ये यथेति दर्शनात् । तथा तेन प्रकारेण । तमेव प्रकारमाह—यथा अहम् उदञ्चद्रोमाञ्चः गलितबहुहर्षाश्रुनिवहः दुरुपशमपीडापरिभवान् विस्मर्यासमिति । उदञ्चन् उद्गच्छन् रोमाञ्चो रोमहर्षणं यस्य स उदञ्चद्रोमाञ्चः । त्वत्स्वरूपास्वादजनितहर्षातिरेकेण पुलकितशरीरः सन्नित्यर्थः । गलितः द्रुतो बहूनां प्रभूतानां हर्षाश्रूणां सन्तोषाश्रूणां निवहः समूहो यस्य स गलितबहुहर्षाश्रुनिवहश्च सन् । दुरुपशमपीडापरिभवान् दुरुपशमाः शमयितुमशक्याः याः पीडाः आभ्यन्तरा बाह्याश्च तासां परिभवान् तत्कर्तृकानुपद्रवान् । विस्मर्यासं विस्मरन् भविष्यामि ॥

किमुक्तैर्भूयोभिस्तव हि करुणा यावदुदिया-
दहं तावद्देव प्रहितविविधार्तप्रलपितः ।
पुरः क्लृप्ते पादे वरद तव नेष्यामि दिवसा-
न्यथाशक्ति व्यक्तं नतिनुतिनिषेवा विरचयन् ॥ १० ॥

किमुक्तैरिति ॥ भूयोभिः उक्तैः किम् । भूयोभिः प्रभूतैः उक्तैर्भाषितैः। किं न किञ्चित् प्रयोजनमित्यर्थः । किं पुनः करिष्यतीति चेत्तत्राह—हे देव अहं प्रहित विविधार्तप्रलपितः तावत् पुरः क्लृप्ते तव पादे यथाशक्ति व्यक्तं नतिनुतिनिषेवाः विरचयन् दिवसान् नेष्यामि इति । देव भक्तानां हृदि प्रकाशमान । प्रहितं त्यक्तं विविधं नानाप्रकारमार्तप्रलपितमार्तप्रलापो येन सः प्रहितविविधार्तप्रलपितः सन् । तावत् तत्पर्यन्तम् । पुरः पुरस्तात् । क्लृप्ते कल्पिते। दृषदादिष्विति भावः । वक्ष्यति च 'दृषदि हृदि मृदि क्वापि वा भावयित्वा' इति । तव ईश्वरस्य । पादे चरणकमले । यथाशक्ति शक्तिमनतिक्रम्य । रोगातुरोऽहं यावच्छक्नोमि, ताव दित्यर्थः । व्यक्तं स्पष्टम् । ये भवदुपासकान् परिहसन्ति, तेभ्यो लज्जां विहायेति भावः । नतिनुतिनिषेवाः नतिर्नमस्कारः नुतिः स्तुतिः निषेवा पूजादि ताः । विरचयन् विशेषेण सादरं रचयन् कुर्वाणः । दिवसान् नेष्यामि कालयापनं करिष्यामि । अत्र दिवसानित्यनेन भगवत्कृपालाभे महदौत्सुक्यं व्यज्यते । भगव त्पदयोर्नमस्कारादीनां फलवत्तां दर्शयन् सम्बोधयति—वरद इति । वरद भक्ताभीष्ट वरप्रद । तावत्पदार्थं दर्शयति—यावत् तव हि करुणा उदियादिति । यावत् यदा । हीति वाक्यालङ्कारे । करुणा कृपा । उदियात् उदेष्यति ॥

इति भक्तस्वरूपवर्णनं भक्तिप्रार्थना च तृतीयं दशकम् ।

इति श्रीनारायणीयव्याख्यायां बालबोधिन्यां

प्रथमस्कन्धपरिच्छेदः ।

---

आदितः श्लोकसंख्या ३०

ब्रह्मचर्येति ॥ अमी वयं भवत्पराः ब्रह्मचर्यदृढतादिभिः यमैः आप्लवादि नियमैश्च पाविताः सुखासनं अपि वा पङ्कजाद्यं दृढं कुर्महे। अमी यदा ते कृपा उदेष्यति, तदा प्राप्तारोग्याः । वयमिति बहुवचनेनाष्टाङ्गयोगचर्याप्रतिबन्धकरोग निवृत्तौ तत्राधिकारप्राप्तेरात्मनः कृतार्थताभिमानो द्योत्यते। भवान् परो भजनीय तथा प्रधानभूतो येषां ते भवत्पराः भवदुपासनमात्रतत्पराः सन्तः। न तु रोगनिवृत्त्या देहसुखप्राप्तौ विषयानुभवतत्परा भविष्याम इति भावः। ब्रह्मचर्यस्य स्त्रीणां दर्शनस्पर्शनादिवर्जनस्य दृढता कदाचिदप्यप्रच्युतिरादिर्येषां ते ब्रह्म चर्यदृढतादयः तैः। आदिशब्देनाहिंसासत्यास्तेयादि गृह्यते। यमैः यमाख्यैरङ्गैः। आप्लवादिनियमैः आप्लवः स्नानमादिर्येषां ते आप्लवादयः। अत्रादिशब्देन मनःशुद्धिजपतपोहोमादि गृह्यते। ते च ते नियमा नियमाख्यान्यङ्गानि तैः। पाविताः परिशुद्धकायवाङ्मानसाः सन्तः। सुखासनं तन्नामधेयमासनम्। अपि वा अथवा। पङ्कजं पद्मासनमाद्यं यस्य तत् पङ्कजाद्यम्। सुखासनं पद्मासनं स्वस्तिकासनमन्यद्वेत्यर्थः। दृढं यथा अन्तराऽन्तरा भेदं विना दीर्घदीर्घ कालमवस्थातुं शक्यते तथा। कुर्महे अभ्यासेन वशीकरिष्याम इत्यर्थः। अत्र यमनियमासनाख्यानि त्रीणि योगाङ्गान्युक्तानि॥

*आसनजयानन्तरं प्राणायामं प्रत्याहारञ्च करिष्याम इत्याह—*

**तारमन्तरनुचिन्त्य सन्ततं प्राणवायुमभियम्य निर्मलाः।**
**इन्द्रियाणि विषयादथापहृत्यास्महे भवदुपासनोन्मुखाः ॥ ३ ॥**

तारमिति ॥ वयम् अन्तः तारं सन्ततमनुचिन्त्य प्राणवायुमभियम्य निर्मलाः अथ इन्द्रियाणि विषयादपहृत्य भवदुपासनोन्मुखाः आस्महे। अन्तः हृदये। तारं प्रणवम्। सन्ततं तैलधारावत् घण्टानादवच्चाविच्छिन्नम्। अनुचिन्त्य विजातीयप्रत्ययैर्व्यवधानं विना ध्यात्वा। प्राणवायुं श्वासानिलम्। अभियम्य पूरककुम्भकरेचकैः स्वाधीनं कृत्वा। यथा स्वहस्तयोः प्रसारणाकुञ्च नादौ स्वाधीनता, तथा श्वासानिलस्यापि बहिर्निस्सारणेऽन्तस्संस्थापनेऽन्यत्र प्रणयने च स्वाधीनतां सम्पाद्येत्यर्थः। अत एव निर्गता मला रागादयो

दोषा येभ्यस्ते निर्मला सन्त । तदुक्तम्—'प्राणायामैर्दहेद्दोषान्' इति । अथ प्राणायामानन्तरम् । इन्द्रियाणि बहिर्मुखानि चक्षुरादीनि । विषयात् रूपादितत्तद्विषयात् । अपहृत्य अन्तर्मुखानि कृत्वा प्रत्याहृत्य । इति प्रत्याहार उक्त । भवदुपासनोन्मुखा भवत उपासने धारणाध्यानादिरूप उन्मुखा सन्नद्धा सन्त । आस्महे वर्तामहे ॥

प्रत्याहारानन्तर धारणा करिष्याम इत्याह—

अस्फुटे वपुषि ते प्रयत्नतो धारयेम धिषणा मुहुर्मुहुः ।
तेन भक्तिरसमन्तरार्द्रतामुद्वहेम भवदङ्घ्रिचिन्तका. ॥ ४ ॥

अस्फुट इति ॥ वय ते अस्फुटे वपुषि प्रयत्नन मुहुर्मुहु धिषणा धारयेम । स्फुट चक्षुषा साक्षात्कृतत्वेन स्पष्ट प्रतीयमानम् । तन्न भवतीत्य स्फुटम् । केवल श्रुतत्वेनापातत प्रतीयमानमित्यर्थ । तथाविधे । ते तव विष्णो । वपुषि भक्तानुग्रहायाङ्गीकृतलीलाविग्रहे । अस्य स्वरूप 'सजलजल धरश्यामलम्' इत्यादिनाऽत्र वक्ष्यति । प्रयत्नत तत्तदवयवस्फुरणार्थमवधानेन । धिषणा बुद्धिम् । मुहुर्मुहु पुन पुन । अनेन यदा बुद्धेरन्यविषयावलम्बननिद्रादोषा दिना धारणाप्रतिबन्धो जायते, तदा न विरता भविष्याम इति द्योत्यते । धारयेम सस्थापयिष्याम । इति धारणोक्ता । धारणाया फलमाह—भवदङ्घ्रिचिन्तका वय तेन भक्तिरसम् अन्त आर्द्रताम् उद्वहेम इति । भवदङ्घ्रिचिन्तका भव च्चरणाम्भोजस्मरणनिरता । तेन धारणाभ्यासेन । भक्तिरस भक्तिरेव रसो रस नीयत्वाद्रसपदवाच्यस्तम् । अत एव अन्त हृदये । आर्द्रता सिक्तताम् । विलीनतामिति यावत् । अत्र चकारोऽध्याहर्तव्य । उद्वहेम प्राप्नुयाम इत्यर्थ ॥

धारणाया अनन्तर ध्यान करिष्याम इत्याह—

विस्फुटावयवभेदसुन्दर त्वद्वपु सुचिरशीलनावशात् ।
अश्रम मनसि चिन्तयामहे ध्यानयोगनिरतास्त्वदाश्रया ॥ ५ ॥

'विस्फुटावयवभेदसुन्दरमिति ॥ त्वदाश्रयाः 'वयं ध्यानयोगनिरताः' विस्फुटावयवभेदसुन्दरं 'त्वद्वपुः सुचिरशीलनावशात् मनसि अश्रमं' चिन्तयामहे । त्वमाश्रयः शरणं येषां ते त्वदाश्रयाः। ध्यानयोगनिरताः ध्यानाख्ये योगे भवत्प्राप्त्युपाये निरतास्तत्पराः सन्तः। विस्फुटावयवभेदसुन्दरं 'विस्फुटाः' विशेषेण स्फुटाः स्पष्टाः अवयवानां श्रीमत्पादादिकेशान्तानां भेदाः विशेषा' यस्य तद्विस्फुटावयवभेदम्। तच्च तत् सुन्दरमङ्गप्रत्यङ्गविन्याससौष्ठवयुक्तमिति' विशेषणयोरपि विशेषणसमासः । तव वपुस्त्वद्वपुः । सुचिरशीलनावशात् सुचिरं दीर्घकालं या शीलना धारणाया अभ्यासस्तद्वशात् । अश्रममनायासेन। एतत् क्रियाविशेषणम्। मनसि हृदयकमले। अवाङ्मुखं हृदयकमलमूर्ध्वाग्रं भावयित्वा तदुपरि सूर्याचन्द्रमसावग्निञ्च विचिन्त्य तत्र वह्निमध्ये इत्यर्थः। एतद्वक्ष्यति—'चित्तपद्ममथ वाञ्छम्। ऊर्ध्वाग्रं भावयित्वा रविविधुशिखिनः संविचिन्त्योपरिष्टात्तत्रस्थं भावये त्वाम्' इति। चिन्तयामहे भावयामहे। तत्तदवयवेषु प्रत्येकं मनः संस्थापयिष्याम इत्यर्थः। इति ध्यानयोगः ॥

*एवं प्राप्तध्यानयोगानां समाधेः प्राप्तिं दर्शयति ध्यायतामित्यादिद्वाभ्याम्—*

ध्यायतां सकलमूर्तिमीदृशीमुन्मिषन्मधुरताहृतात्मनाम् ।
सान्द्रमोदरसरूपमान्तरं ब्रह्म रूपमयि तेऽवभासते ॥ ६ ॥

समाधिस्तु द्विविधः सविकल्पको निर्विकल्पकश्चेति । तत्र च प्रथमं सविकल्पकसमाधिमाह—ध्यायतामिति ॥ अयि ईदृशीं सकलमूर्तिं ध्यायताम् उन्मिषन्मधुरताहृतात्मनां सान्द्रमोदरसरूपम् आन्तरं ब्रह्म अवभासते । अयीत्यनन्तरं भगवन्निति शेषः। ईदृशीम् अतिसौन्दर्ययुक्ताम्। सकलमूर्तिं सकलाकरचरणाद्यवयवोपलक्षिता मूर्तिर्विग्रहस्ताम् । ध्यायतां चिन्तयताम्। अत एवोन्मिषन्त्या अभिव्यक्तया मधुरतया माधुर्येण हृतो वशीकृतः आत्मा मनो येषां ते उन्मिषन्मधुरताहृतात्मानस्तेषाम्। योगिनामिति शेषः। सान्द्रमोदरसरूपं सान्द्रानन्दैकरसस्वरूपम्। आन्तरं अन्तरिन्द्रियमात्रम्। अनेन च सविकल्पकसमाधौ ज्ञातृज्ञानज्ञेयभेदेनाभेदेन चावभासत इति द्योत्यते। अवभासते प्रकाशते ।

ननु कथं सकलमूर्तिं त्वां ध्यायतां सान्द्रानन्दैकरसं ब्रह्मप्रभासत इत्याशङ्का यामाह—ते रूपमिति। ते शुद्धसत्त्वमयविग्रहस्य तव। रूपं स्वरूपम्। शुद्ध सत्त्वमयस्य निष्कलब्रह्माभेदो निष्कम्पे इत्यादिना पूर्वं प्रतिपादितः। तथा च सुवर्णमयकटककुण्डलादिमाने यथा सुवर्णमपि भासते, तथा शुद्धसत्त्व मयविग्रहमाने शुद्धसत्त्वाभिन्नं निष्कलं ब्रह्मापि भासत इति भावः। इति सविकल्पकसमाधिरभिहितः॥

अथ निर्विकल्पकसमाधिं दर्शयति—

**तत्समास्वदनरूपिणीं स्थितिं त्वत्समाधिमयि विश्वनायक।**
**आश्रिताः पुनरतः परिच्युतावारभेमहि च धारणादिकम्॥ ७॥**

तत्समास्वदनरूपिणीमिति॥ अयि विश्वनायक तत्समास्वदनरूपिणीं स्थितिं त्वत्समाधिमाश्रिताः वयम् अतः परिच्युतौ पुनश्च धारणादिकमारभेमहि। विश्वनायक विश्वेषां लोकानां नायक अधिप। तत्समास्वदनरूपिणीं तस्य ब्रह्मणः समास्वदनं सम्यगास्वादनमनुभवन्तद्रूपिणीं तद्रूपाम्। स्थितिमव स्थानम्। ज्ञातृज्ञेययोरपि ज्ञानरूपेणावस्थानमित्यर्थः। तद्रूपम्। तव ब्रह्मणः समाधिस्त्वत्समाधिस्तम्। इति निर्विकल्पकसमाधिरुक्तः। आश्रिताः प्राप्ताः। अतो निर्विकल्पकसमाधेः। परिच्युतौ भ्रंशे सति। पुनश्च पश्चादपि। धारणा आदिर्यस्य तद्धारणादिकम्। अयमभिप्रायः—निर्विकल्पकसमाधेर्लय विक्षेपकषायरसास्वादात्मकाश्चत्वारो विघ्नाः सम्भवन्ति, तत्र लयो निद्रा, विक्षेपोऽ न्यावलम्बनम्, कषायो विषयवासनया स्तब्धीभावः, रसास्वादः सविकल्पकानन्दा स्वादनमेतैर्दोषैः परिच्युतौ सत्यां पुनरपि धारणादिकमारब्धव्यमिति॥

समाधिविजयानन्तरं जीवन्मुक्तिं प्रार्थयते—

**इत्थमभ्यसननिर्भरोल्लसत्त्वत्परात्मसुखकल्पितोत्सवाः।**
**मुक्तसक्तकुलमौलितां गताः सञ्चरेम शुकनारदादिवत्॥ ८॥**

**इत्थमिति ॥** वयमित्थम् अभ्यसननिर्भरोल्लसत्त्वत्परात्मसुखकल्पितोत्सवाः मुक्तभक्तकुलमौलितां गताः शुकनारदादिवत् सञ्चरेम। इत्थमनेन प्रकारेण। अभ्यसनेन धारणाध्यानसमाधीनामभ्यासेन निर्भरमत्यर्थम् उल्लसदाविर्भूतं यत्त्व त्परात्मसुखं त्वत्स्वरूपमेव परात्मसुखमानन्दरूपं परं ब्रह्म तेन कल्पितो निर्वृत्तः। तदनुभवजनित इत्यर्थः। उत्सवो हर्षातिरेको येषां ते अभ्यसननिर्भरोल्ल सत्त्वत्परात्मसुखकल्पितोत्सवाः। मुक्तभक्तकुलमौलितां मुक्ता जीवन्मुक्ताश्च ते भक्ताश्चेति मुक्तभक्तास्तेषां कुलानि समूहास्तेषां मौलितां श्रेष्ठताम्। गताः प्राप्ता.। शुकनारदादिवत् श्रीशुकश्रीनारदादय इव। सञ्चरेम सञ्चरितुमाशा स्महे। प्रार्थनायां लिङ्। इदमत्रानुसन्धेयम्—यद्यपि ब्रह्मणि साक्षात्कृते त्वज्ञान तत्कार्यपूर्वसञ्चितकर्मसञ्चयादीनां बाधिततया मुक्तबन्धना ब्रह्मनिष्ठा भवन्ति, तथापि प्रारब्धकर्मपरिसमाप्तिपर्यन्तं तत्फलानि भुञ्जाना यथेन्द्रजालमिदमिति ज्ञानवन्तः इन्द्रजालं पश्यन्तोऽपि न परमार्थतया पश्यन्ति, तद्वदेतांश्च लोक व्यवहारानपरमार्थतया पश्यन्तश्चरन्ति। ईदृशीं दशामुपगता एवात्र जीवन्मुक्ता इत्युच्यन्त इति ॥

अथ विजितसमाधीनां योगिनां यथेष्टां गतिमाह त्वत्समाधीत्यादिसप्तभि —

**त्वत्समाधिविजये तु यः पुनर्मङ्क्षु मोक्षरसिकः क्रमेण वा ।**
**योगवश्यमनिलं षडाश्रयैरुन्नयत्यज सुषुम्नया शनैः ॥ ९ ॥**

**त्वत्समाधीति ॥** हे अज य तु त्वत्समाधिविजये मङ्क्षु क्रमेण वा मोक्षरसिक. योगवश्यम् अनिलं षडाश्रयै. सुषुम्नया शनैः उन्नयति। अज जनन मरणादिवर्जित। त्वत्समाधिविजये त्वयि ब्रह्मात्मनि समाधिश्चित्तैकाग्र्यम्। निर्विकल्पकसमाधिरित्यर्थः। तस्य विजयो निवातस्थदीपवद्दीर्घकालमवस्थानं तस्मिन् सति। मङ्क्षु झटिति। क्रमेण ऊर्ध्वलोकसुखान्यनुभूय। मोक्षरसिक मोक्षे अपवर्गे रसिकस्तत्परः। अत स इत्यध्याहर्तव्यम्। स. सद्य. क्रमेण वाऽ पवर्गकाम इत्यर्थ.। योगवश्यं योगेन प्राणायामेन वश्यं स्वाधीनीकृतम्। अनिल प्राणमारुतम्। षडाश्रयैः षड्भिराश्रयैः स्थानैः मूलाधारनाभिहृदुरस्तालुमूलभ्रूमध्य

रूपैः । सुषुम्नया सुषुम्नानाडीद्वारा । शनैर्मन्दम् । उन्नयति स्वपार्ष्णिना गुदं सम्पीड्य क्रमेणोर्ध्वमधिरोपयतीत्यर्थः ॥

एतावत्पर्यन्तं निराग्रहाणामूर्ध्वलोकाभिलाषिणाञ्च योगिनां समानम् । अथ तयोर्विशेषमभिधातुमारभमाणः प्रथमं सूचीकटाहन्यायेन निराग्रहस्य विशेषमाह—

**अग्निवासरेति ॥** भवत्परः अग्निवासरवलर्क्षपक्षगैः उत्तरायणजुषा च दैवतैः रविपदं प्रापितः मोदवान् ध्रुवपदान्तमीयते। भवान् परः सेव्यतया प्रधानो यस्य स भवत्परः। योगीति शेषः। अग्निर्वह्निः वासरो दिवसः वलर्क्ष पक्षः शुक्लपक्षस्तान् गच्छन्त्यधिष्ठानतया प्राप्नुवन्तीत्यग्निवासरवलर्क्षपक्षगानि तैः। उत्तरायणं सूर्यस्योत्तरदिग्गमनोचितमयनं वर्त्म। उत्तरायणाख्यान् षण्मासानित्यर्थः। तज्जुषते‌ऽधितिष्ठतीत्युत्तरायणजुट् तेन। चकारो‌ऽनुक्तानां संवत्सराभिमानिदेवतादीनां समुच्चयार्थः। दैवतैः अग्न्याद्यभिमानिभिर्दैवतैः। रविपदं रवेः सूर्यस्य पदम्। ज्योतिश्चक्रमिति यावत्। प्रापितो नीतः। मोदवान् तत्तद्देवतातुल्य भोगानुभवजनितानन्दातिशययुक्तः। ध्रुवपदमन्तो‌ऽवधिर्यस्य तत् ध्रुवपदान्तं ध्रुवलोक पर्यन्तम्। ईयते प्राप्नोति। अयमर्थः—स्वेच्छया शरीरमुत्सृज्य सूर्यरश्मि द्वारा निर्गच्छन्तं जीवमग्निदेवता स्वलोकमार्गेण नीत्वा अहरभिमानि देवताहस्तं प्रापयति। सा च शुक्लपक्षाभिमानिदेवताम्, सा चोत्तरायण षण्मासाभिमानिदेवताम्, सा च संवत्सराभिमानिदेवताम्, सा च देवलोक मार्गेण नीत्वा वायुदेवताम्, सा च स्वलोकमार्गेणादित्यदेवताम्, सा च स्वमण्डल द्वारा चन्द्रदेवताम्, सा च स्वलोकमार्गेण विद्युल्लोकञ्च नयति। ततश्च ध्रुव लोकान्तं गच्छतीति ॥

अथ ब्रह्मलोकप्राप्तिमाह—

**आस्थितो‌ऽथ महरालये यदा शेषवक्त्रदहनोष्मणाऽर्द्यते।**
**ईयते भवदुपाश्रयस्तदा वेधसः पदमतः पुरैव वा ॥ १२ ॥**

**आस्थित इति ॥** अथ महरालये आस्थितः यदा शेषवक्त्रदहनोष्मणा अर्द्यते, तदा भवदुपाश्रयः अतः पुरा एव वा वेधसः पदम् ईयते। अथ ध्रुवपदप्राप्त्यनन्तरम्। महरालये महर्लोके। भृग्वादीनां कल्पायुषां लोको महर्लोक इत्युच्यते। आस्थितः सुखेन वसन्। शेषवक्त्रदहनोष्मणा शेषस्यानन्तस्य वक्त्रदहनः त्रैलोक्यदाहायोर्ध्वशिखोज्ज्वलन्मुखाग्निस्तस्योष्मणा उष्णेन। अर्द्यते पीड्यते। भवदुपाश्रयः भवन्तमेव शरणं गतः सन् वा। अतः शेषवक्त्रदहनोष्म

प्राप्ते । पुरा प्राक् । वेधसः ब्रह्मणः । पदं स्थानं सत्यलोकम् । ईयते प्राप्नोति । अयमाशयः—यो यं महरालयमास्थितो जीवल्लोषवक्त्रदहनोष्मप्राप्ति पर्यन्तं निवसति, स तदा भृग्वादिभिः सह ततो जनलोकं गत्वा पुनस्तदुपर्यपि क्रमेण गच्छति । यस्तु त्वरितं त्वत्पदं जिगमिषुर्भवति, तं विद्युल्लोकावधिगतं ब्रह्माज्ञया कश्चिदमेयवपुर्ब्रह्मलोकादागत्य विद्युल्लोकमार्गेण पर्जन्यशक्रप्रजापतिमार्गेण च नीत्वा विरजानदीं तारयित्वा ब्रह्मलोकं प्रापयति, तदा दिव्यशरीरश्च भवतीति ॥

ब्रह्मलोकं प्राप्तानां योगिनां गतिद्वैविध्यमाह—

**तत्र वा तव पदेऽथवा वसन् प्राकृतप्रलय एति मुक्तताम् ।**
**स्वेच्छया खलु पुरा विमुच्यते संविभिद्य जगदण्डमोजसा ॥ १३ ॥**

तत्र वेति ॥ तत्र वा अथवा तव पदे वसन् प्राकृतप्रलये मुक्ततामेति । अत्र, ब्रह्मलोकं प्राप्तो योगीत्यादि । तत्र ब्रह्मलोके । अथवेति पक्षान्तरे । तव विष्णोः । पदे लोके । वसन् निवसन् । अत्रेदमनुसन्धेयम्—सत्यलोक एव ब्रह्मविष्णुगिरिशानां लोकाः अन्तर्भूताः । यद्वक्ष्यति-'व्यशोऽस्मिन् सत्यलोके' इत्यादि । ब्रह्मविष्णुगिरिशानामुपासकास्तत्तल्लोकं प्राप्य तत्तत्समानभोगाः निवसन्ति इति । प्राकृतप्रलये प्राकृतानां प्रकृतिकार्याणां महदहङ्कारादीनां प्रलये नाशे । ब्रह्मप्रलय इति यावत् । मुक्ततां मोक्षम् । ब्रह्मणा सह मुक्तो ब्रह्ममात्रमवतिष्ठत इत्यर्थः । इत्येकविधा गतिः । अन्यविधां गतिमाह— स्वेच्छया पुरा खलु विमुच्यते इति । अत्र पूर्ववाक्यादथवेत्यनुवृत्त्या आदौ योजनीयम् । स्वेच्छया स्वस्य इच्छया अभिलाषेण । यदि ब्रह्मादिभोगेष्वतिविरक्ततया सत्वरमेव मुमुक्षा जायते, तर्हीत्यर्थः । पुरा प्राकृतप्रलयात् प्राक् । खल्वित्यवधारणे । विमुच्यते मुक्तो भवति । ननु कथमेतदित्यत आह—ओजसा जगदण्डं संविभिद्येति । ओजसा स्वस्य योगबलेन । जगदण्डं ब्रह्माण्डम् । संविभिद्य सम्यग्विभिद्य भेदनं कृत्वा ॥

ब्रह्माण्डभेदनप्रकारमाह—

**तस्य च क्षितिपयोमहोऽनिलद्योमहत्प्रकृतिसप्तकावृतीः ।**
**तत्तदात्मकतया विशन् सुखी याति ते पदमनावृतं विभो ॥ १४ ॥**

**तस्य चेति ॥** तस्य च क्षितिपयोमहोऽनिलद्योमहत्प्रकृतिसप्तकावृतीः तत्तदात्मकतया विशन् सुखी ते अनावृतं पदं याति। अत्र योगीत्यादि.। तस्य ब्रह्माण्डस्य। चकारो वाक्यालङ्कारे। क्षितिपयोमहोऽनिलद्योमहत्प्रकृति सप्तकावृतीः क्षितिः पृथिवी, पयो जलम्, महस्तेज', अनिलो वायु', द्यौराकाशश्चेति क्षितिपयोमहोऽनिलद्यावः, महत् महत्तत्त्वम्, प्रकृतिर्माया चासां सप्तकमेवावृतयः आवरणानि ताः। अत्र महत्पदमहन्तत्त्वस्याप्युपलक्षणम्। तेन पञ्चभूतानि महदहङ्कारौ चेति सप्तावरणानि। प्रकृत्यावरणं त्वष्टमं व्यापकमेव। एतान्यावरणानीति तात्पर्यार्थः। तत्तदात्मकतया तत्तदावरणस्वरूपेण। विशन् प्रविशन्। तत्तदावरणेषु सूक्ष्मशरीरेण सह प्रविशन्नित्यर्थः। सुखी तत्र तत्र निरतिशयसुखमनुभवन्। एतेन तादृशां भगवदुपासकाना न कदाचिदपि दु'खसंस्पर्श इति द्योत्यते। ते तव ब्रह्मस्वरूपस्य। अनावृतमावरणरहितम्। पदं स्थानम्। याति प्राप्नोति। आवरणान्यतिक्रम्य प्राणेन्द्रियाणि स्वस्वकारणेषु विलाप्यानावृतं ब्रह्मात्मत्वमवतिष्ठत इत्यर्थः। ननु ब्रह्माण्डाद्बहिः कस्याप्यभावात् कथं तदतिक्रम्य त्वत्पदं प्राप्नोतीत्याशङ्कां परिहर्तुं भगवन्तं सम्बोधयति— विभो इति। विभो परिपूर्ण। तथाच ब्रह्माण्डस्यान्तर्बहिश्च तव विद्यमानतया न ब्रह्माण्डमतिक्रम्य त्वत्पदप्राप्तेरनुपपत्तिरिति भाव' ॥

एवं मुक्त पुनर्न संसरतीत्याह—

**अर्चिरादिगतिमीदृशीं व्रजन् विच्युतिं न भजते जगत्पते।**
**सच्चिदात्मक भवद्गुणोदयानुच्चरन्तमनिलेश पाहि माम् ॥ १५ ॥**

**अर्चिरादीति ॥** हे जगत्पते ईदृशीम् अर्चिरादिगतिं व्रजन् विच्युतिं न भजते। हे जगत्पते हे जगन्नायक। ईदृशीमेवंविधा पूर्वोक्ताम्। अर्चिरादिगतिम् अर्चिस्तेज आदिर्यस्याः सा अर्चिरादिस्तादृशी गतिर्गमनं ताम्। स्वेच्छया देहमुत्सृज्याग्न्यादिदेवताद्वारा त्वत्पदपर्यन्तं गमनमित्यर्थ.। व्रजन् प्राप्त। जीव इति शेषः। विच्युतिं पुनरावृत्तिम्। न भजते नोपगच्छति। अत्र हेतुं प्रदर्शयन् भगवन्तं सम्बोधयति— सच्चिदात्मक इति। सच्चिदात्मक सच्चिदानन्दस्वरूप।

एवमष्टाङ्गयोगेन भगवदुपासनं तत्फलञ्चोपवर्ण्य अनन्तरं रोगनिवृत्तिं प्रार्थयते— हे अनिलेश मां पाहि इति। अनिलेश गुरुवायुपुरनाथ। मां बाह्यैराभ्यन्तरैश्च रोगैरातुरमनन्यशरणम्। पाहि रक्ष। नन्वनुपासकस्य तव कथं रक्षणीयतेत्यत आह— भवद्गुणोदयान् उच्चरन्तमिति। भवद्गुणोदयान् भवतो गुणानां भक्तवात्सल्यादीनामुदयानुत्कर्षान्। उच्चरन्तं यथाशक्ति कीर्तयन्तम्। अतो मदीयान् गुणानुच्चरन्नयं मदुपासक इति मत्वा मां त्रायस्वेत्यर्थः॥

इति अष्टाङ्गयोगवर्णनं योगसिद्धिवर्णनं च
चतुर्थं दशकं सपञ्चकम्।

पञ्चमदशकम्।

अथ भगवतो जगत्सृष्टिमभिधास्यन्नादौ तदुपपत्तये जगतः प्रागभावं दर्शयति द्वाभ्याम्—

व्यक्ताव्यक्तमिदं न किञ्चिदभवत् प्राक् प्राकृतप्रक्षये
मायाया गुणसाम्यरुद्धविकृतौ त्वय्यागताया लयम्।
नो मृत्युश्च तदाऽमृतं च समभून्नाह्नो न रात्रेः स्थिति
स्तत्रैकस्त्वमशिष्यथाः किल परानन्दप्रकाशात्मना ॥ १ ॥

व्यक्ताव्यक्तमिति॥ प्राक् प्राकृतप्रक्षये व्यक्ताव्यक्तम् इदं किञ्चित् न अभवत्। प्राक् पुरा। प्राकृतप्रक्षये प्राकृतानां प्रकृतिकार्याणां प्रक्षये प्रलये। ब्रह्मप्रलय इत्यर्थः। व्यक्तमव्यक्तञ्चेति व्यक्ताव्यक्तं स्थूलसूक्ष्मात्मकं कार्यकारणात्मकं वा। इदं शरीरादिकम्। किञ्चित् किमपि वस्तु। अत्र हेतुमाह—मायाया त्वयि लयमागतायामिति। त्वयि ब्रह्मात्मनि। लयं विलीनताम्। आगताया प्राप्ताया सत्याम्। मायालये हेतुमाह—गुणसाम्यरुद्धविकृतौ इति। गुणास्सत्त्वरजस्तमांसि तेषां साम्यं शुक्लरक्तकृष्णतन्तुसमुदायरूपरज्जुवदेकीभूयावस्थानं तेन रुद्धा निरुद्धप्रसरा विकृति

विकारो यस्यास्तस्याम्। मायायास्तदा ब्रह्मणि लीनत्वात्तत्कार्येषु न किञ्चिदप्यासीदित्यर्थः। एतदेव प्रपञ्चयति—नो मृत्युरित्यादिना सार्धेन श्लोकेन। तदा मृत्युः अमृतं च नो समभूत्। तदा ब्रह्मप्रलये। मृत्युः संसारः। अमृतमपवर्गः। नो समभूत् न सञ्जातः। किञ्च, अह्नः रात्रेश्च स्थितिः न। अह्नो दिवसस्य। स्थितिर्मर्यादा। विभाग इति यावत्। समभूदित्यनुवर्तते। ननु तदा किमासीदित्यत आह—तत्र त्वमेकः अशिष्यथाः किल इति। तत्र तदा। त्वं ब्रह्मस्वरूपः। एकः अद्वितीयः सन्। अशिष्यथाः अवशिष्टोऽभूः। एकत्वमेवाह—परानन्दप्रकाशात्मना इति। आनन्दः प्रकाशश्चेत्यानन्दप्रकाशौ। प्रकाशः चित्। एतच्च सत्त्वस्याप्युपलक्षणम्। परौ सर्वोत्कृष्टावानन्दप्रकाशावेवात्मा स्वरूपं तेन। अतो न तदानीं तव लीलाविग्रहादिकमप्यासीदित्यर्थः। किलेति वार्तायाम्। तेनास्या अवस्थायास्त्वद्वाक्यरूपाम्नायान्तैकवेद्यता द्योत्यते॥

कालः कर्म गुणाश्च जीवनिवहा विश्वञ्च कार्यं विभो
चिल्लीलारतिमेयुषि त्वयि तदा निर्लीनतामाययुः।
तेषां नैव वदन्त्यसत्त्वमयि भोः शक्त्यात्मना तिष्ठतां
नो चेत् किं गगनप्रसूनसदृशां भूयो भवेत्सम्भवः ॥ २ ॥

काल इति॥ किञ्च, हे विभो तदा चिल्लीलारतिमेयुषि त्वयि कालः कर्म गुणाश्च जीवनिवहाः विश्वं कार्यञ्च निर्लीनतामाययुः। विभो सर्गस्थितिलयनिदानभूत। अनेन सम्बोधनेन निर्लीनतायामुपपत्तिर्दर्शिता। तदा ब्रह्मप्रलये। चिल्लीलारतिं चिति चिदानन्दे या लीला विहारः। स्वरूपानुसन्धानमिति यावत्। तत्र रतिमिच्छाम्। एयुषि प्राप्नुवति। योगनिद्रामारब्धुमिच्छतीत्यर्थः। त्वयि सच्चिदानन्दात्मके। कालः कालाख्यशक्तिः। कर्म जीवादृष्टम्। गुणाः सत्त्वरजस्तमांसि। जीवनिवहाः जीवानां निवहाः समूहाः। किं बहुना, विश्वं समस्तं कार्यं मायाप्रपञ्चः। निर्लीनतां नितरां लीनतामदर्शनम्। आययुः प्रापुः। शुक्लरक्तकृष्णतन्तुसमुदायरूपरज्जुवत् सत्त्वरजस्तमोगुणसमुदायरूपा मूलप्रकृतिर्जतुपिण्डे सुवर्णरेणुवत् स्वस्यां स्वस्वकर्मवासनाभिः सह गिरीशैरनन्त

कोटिभिर्जीवैः कालाख्यशक्त्या च सह त्वयि विलीनाभूदित्यर्थः। ननु किमिति ते विलीना बभूवुरित्युच्यते, विनष्टा बभूवुरित्येवोच्यतामित्यत आह—अयि भोः तेषामसत्त्वं न वदन्ति एवेति। भो इत्यनन्तरं भगवन्निति शेषः। तेषां कालादीनाम्। असत्त्वं सद्भावाभावम्, गगनकुसुमवत्। न वदन्ति न वर्णयन्ति। श्रुतिद्रष्टार इति शेषः। एवकारोऽयोगव्यवच्छेदार्थः। अत्रोपपत्तिमाह—शक्त्यात्मना तिष्ठतामिति। शक्त्यात्मना कारणरूपेण। तिष्ठतां स्थितानाम्। ननु लीना चेदसन्त एवेत्याशङ्क्य विपक्षे बाधकमाह—नो चेत् गगनप्रसूनसदृशां भूयः सम्भवः भवेत् किमिति। नो चेत् यद्येषामसत्त्वम्, तर्हि। गगनप्रसूनसदृशामाकाशकुसुमवदत्यन्तमसताम्। तेषामित्यत्रापि सम्बध्यते। भूयः प्रलयावसाने। सम्भवः उत्पत्तिः। किंशब्दः क्षेपे। न भवेदित्यर्थः। एतद्यानिष्टमतस्तेषां कारणरूपेणावस्थानमङ्गीकर्तव्यमिति भावः॥

अथ भगवतो जगत्सृष्टिप्रकारमाह—

एवञ्च द्विपरार्धकालविगताबीक्षां सिसृक्षात्मिकां
बिभ्राणे त्वयि चुक्षुभे त्रिभुवनीभावाय माया स्वयम्।
मायातः खलु कालशक्तिरखिलादृष्टं स्वभावोऽपि च
प्रादुर्भूय गुणान् विकास्य विदधुस्तस्याः सहायक्रियाम्॥ २॥

एवञ्चेति॥ त्वयि एवं द्विपरार्धकालविगतौ च ईक्षां बिभ्राणे माया त्रिभुवनीभावाय स्वयं चुक्षुभे। त्वयि ब्रह्मात्मनि। एवमुक्तप्रकारेण। द्विपरार्धकालविगतौ द्विपरार्धसंवत्सरात्मकस्य कालस्य विगताववसाने। अयमर्थः—अस्मादृशामेकः संवत्सरो देवानामहोरात्रमित्युच्यते। तादृशाहोरात्रैष्षष्ट्युत्तरशतत्रयपरिमितैर्दिव्यसंवत्सरः, दिव्यसंवत्सरैर्द्वादशभिर्दैवतं युगम्, द्वे दिव्ययुगसहस्रे ब्रह्मण एकमहोरात्रम्, तादृशाहोरात्रैरेव ब्राह्मः संवत्सरः, तादृशसंवत्सराणां शतं ब्रह्मणः परमायुः, एवञ्चास्मादृशां द्विपरार्धपरिमितैस्संवत्सरैर्ब्रह्मणः संवत्सराणां शतमिति द्विपरार्धजीवी ब्रह्मेत्युच्यते। तस्यापवर्गानन्तरं द्विपरार्धकालः प्रलयः, तस्यावसानकालो द्विपरार्धकालविगतिरित्युच्यत इति।

चस्त्वर्थे। ईक्षां मायाप्रेरणरूपां क्रियाम्। बिभ्राणे अङ्गीकृतवति। त्रिभुवनी भावाय पूर्वमतथाभूताऽपि पुनस्त्रिभुवनरूपेण विवर्तितुमित्यर्थः। स्वयमित्यनेन यथाऽयस्कान्तमणिसन्निधाने लोहधातुः स्वयं क्षोभमुपयाति, तद्वदिति दर्शितम्। चुक्षुभे ब्रह्मणः पृथगिव प्रकाशमुपगता। ईक्षायाः स्वरूपमाह—सिसृक्षात्मिकामिति। स्रष्टुमिच्छा सिसृक्षा आत्मा स्वरूपं यस्यास्ताम्। ईक्षा सिसृक्षेत्यादिपदवाच्यां क्रियामित्यर्थः। अथ मायाकार्याण्याह—मायातः कालशक्तिः अखिलादृष्टं स्वभाव. अपि च प्रादुर्भूय गुणान् विकास्य तस्याः सहायक्रियां विदधुः खलु इति। मायातः एवं क्षुब्धाया मायायाः। कालशक्तिः कालाख्यशक्तिः। अखिलादृष्टम् अखिलानां जीवानामदृष्टं सुकृतदुष्कृतरूपम्। अपि चेति समुच्चये। प्रादुर्भूय प्रकाशमुपगम्य। गुणान् सत्त्वादीन्। विकास्य साम्यावस्थामपास्य कार्योन्मुखान् कृत्वा। तस्या मायायाः। सहायक्रियां त्रिभुवननिर्माणे परिकर्म। विदधुः कृतवन्तः। खल्विति प्रसिद्धौ। नैव च स्वोत्प्रेक्षामूलकमेतत्, किन्तु पुराणादिषु प्रसिद्धमित्यर्थः॥

एवं मायासृष्टिमुक्त्वा अनन्तरं पुरुषस्वरूपमाह—

**मायासन्निहितोऽप्रविष्टवपुषा साक्षीति गीतो भवान्**
**भेदैस्तां प्रतिबिम्बितो विविशिवान् जीवोऽपि नैवापरः।**
**कालादिप्रतिबोधिताऽथ भवता सञ्चोदिता च स्वयं**
**माया सा खलु बुद्धितत्त्वमसृजद्योऽसौ महानुच्यते ॥ ४ ॥**

मायासन्निहित इति॥ मायासन्निहितः अप्रविष्टवपुषा भवान् साक्षी इति गीतः। मायाया सन्निहितो मायासन्निहितः। मायोपाधिक इति यावत्। अप्रविष्टवपुषा प्रविष्टं न भवतीत्यप्रविष्टं तेन मायाश्रयत्वेन बहिः स्थितेन वपुषा स्वरूपेण। उपलक्षित इति शेषः। एकांशेन मायामवष्टभ्य स्थित इत्यर्थः। अत्र सन्निहित इत्यनेन परमार्थरूपस्य परमात्मनोऽपरमार्थरूपोपाधिसम्बन्धस्य अपरमार्थता द्योत्यते। भवान् विष्णुः। साक्षीति सर्वप्रकाशकत्वात्। गीतः कथितः। वेदान्तविद्भिरिति शेषः। अथ जीवानामपि भगवदभेदमाह—भेदैः तां प्रतिबिम्बितः विविशिवान् जीवः अपीति। भेदैः। यावदुपाधिभेद

माश्रय विभज्येत्यर्थ । ता मायाम्। तत्कृतोपाधीनिति यावत्। प्रतिबिम्बित प्रतिबिम्बरूपेण, न तु साक्षात्। विविशिवान् प्रविष्ट शरीरादिष्वहमित्यभिमन्य मान । अत्र भवानित्यनुवर्तते। भवानेवेति सावधारणम्। जीवो जीवात्मा। अपि समुच्चये । अवधारणेन व्यवच्छेद्यमाह—अपर न एव इति। अपर अन्य । अयोगव्यवच्छेदार्थमेवकार । नन्वीश्वरस्य जीवाभेदे ससारित्वप्रसङ्ग जीवानामीश्वराभेदात् ससाराभावो वा स्यादिति चेन्न, जीवेश्वरयोरभेदेऽप्य विद्यया ससारो, विद्यया तदभावश्चोपपद्यते। तथाहि—विद्या नाम विक्षेपशक्ति प्रधाना ईश्वरोपाधि । ययेश्वर सृष्ट्यादि करोति। अविद्या नामावरणशक्तिप्रधाना जीवोपाधि । ययेश्वरस्सन्नपि, जीवस्तत्कृतोपाधिभेदेन ससारी भवतीति जीवे श्वरयोरैक्येऽपीश्वरस्य ससारित्व जीवात्मा तदभावो वा नापद्येतेति सक्षेप । अथ मायाकार्यस्य महत सृष्टिमाह—अथ सा माया बुद्धितत्त्वम् असूत खलु इति। अथ अनन्तरम्। सा पूर्वोक्ता। बुद्धितत्त्वमित्यस्य तदित्यादि । असूत जनयामास । खल्विति पुराणादिप्रसिद्धि द्योतयति। ननु माया किं स्वयमेवासूतउत सहायान्तरसहेत्यत आह—कालादिप्रतिबोधिता स्वय भवता सञ्चोदिता चेति। कालादिप्रतिबोधिता कालादिभि कालकर्मस्वभावै प्रतिबोधिता सक्षोभिता गुणान् विकाश्य तेषु कार्योन्मुखतामुत्पादितवती। भवता पुरुषेण। सञ्चोदिता आहितवीर्या । तत्सदार्थमाह—य असौ महानुच्यते इति। महान् महत्तत्त्वम्। अत्र इतीत्यध्याहर्तव्यम्। उच्यते। निगमान्तनिर्दिष्ट इति शेष ॥

एव महत सृष्टिमभिधायानन्तर तस्य स्वरूपमाह—

तत्रासौ त्रिगुणात्मकोऽपि च महान् सत्त्वप्रधान स्वय
जीवेऽस्मिन् खलु निर्विकल्पमहमित्युद्बोधनिष्पादक ।
चक्रेऽस्मिन् सविकल्पबोधकमहन्तत्त्व महान् खल्वसौ
सम्पुष्ट त्रिगुणैस्तमोऽतिबहुल विष्णो भवत्प्रेरणात् ॥ ५ ॥

तत्रेति ॥ तत्र असौ महान् त्रिगुणात्मक अपि सत्त्वप्रधान अस्मिन् जीवे स्वय निर्विकल्पम् उद्बोधनिष्पादक खलु। तत्र मायाकार्येषु। असावनु

पदमुक्तः। महान् महत्तत्त्वम्। त्रयो गुणा आत्मा यस्य स त्रिगुणात्मकः। सत्त्वं प्रधानं यस्य स सत्त्वप्रधानः सन्। जीवे इत्येकवचनेन यथा वृक्षाणां समष्टिर्वनम्, तद्वज्जीवानां समष्टिरेको जीवस्तस्मिन्निति दर्शितम्। निर्विकल्पं मनुष्यत्वादिविशेषणांशानवगाहि। एतच्च निष्पत्तिरूपक्रियाविशेषणम्। उद्बोध निष्पादकः उद्बोधस्य ज्ञानस्य निष्पादको निष्पत्तिकारणम्। निर्विकल्प ज्ञानस्य स्वरूपमाह—अहमितीति। अहमित्येवंरूपस्येत्यर्थः। खल्विति प्रसिद्धौ। अथाहन्तत्त्वस्य निष्पत्तिमाह—असौ महान् अहन्तत्त्वं चक्रे इति। असौ पूर्वोक्तः। अहन्तत्त्वमहङ्कारम्। चक्रे कृतवान्। ननु किं स्वयमुत सहायान्तरेण सह कृतवानित्यत आह—हे विष्णो भवत्प्रेरणात् खलु इति। भवतः प्रेरणं भवत्प्रेरणं तस्मात्। यतो हि भवान् महत्तत्त्वमधिष्ठाय प्रेरितवांस्तस्मादित्यर्थः। खल्वित्यवधारणे। न तु स्वयं कृतवानित्यवधारणार्थः। अहन्तत्त्वस्य स्वरूप माह—अस्मिन् सविकल्पबोधकं त्रिगुणैः सम्पुष्टं तमोऽतिबहुलमिति। अस्मिन् जीवे। सविकल्पबोधकं मनुष्यत्वादिविशेषणांशावगाहिज्ञानजनकम्। त्रिगुणैः सत्त्वादिभिः। सम्पुष्टं पुष्टिमुपगतम्। अपिरत्राध्याहर्तव्यः। त्रिगुणात्मकमपि तमोऽतिबहुलम् अतिशयेन तमःप्रधानम्॥

अथाहङ्कारस्य त्रैविध्यमिन्द्रियाधिष्ठानदेवतानां सृष्टिश्चाह—

**सोऽहं च त्रिगुणक्रमात् त्रिविधतामासाद्य वैकारिको**
**भूयस्तैजसतामसाविति भवन्नाद्येन सत्त्वात्मना।**
**देवानिन्द्रियमानिनोऽकृत दिशावातार्कपाश्यश्विनो**
**वह्नीन्द्राच्युतमित्रकान् विधुविधिश्रीरुद्रशारीरकान्॥ ६॥**

सोऽहमिति॥ सः अहञ्च भूयः त्रिगुणक्रमात् त्रिविधतामासाद्य वैकारिकः तैजसतामसौ इति भवन् सत्त्वात्मना आद्येन इन्द्रियमानिनः देवान् अकृत। सः महत्कार्यभूतः। अहमहङ्कारः। चस्त्वर्थे। भूयः पुनः। त्रिगुणक्रमात् त्रिगुणानां सत्त्वादीनां क्रमात् क्रमेण। सत्त्वं रजस्तम इति क्रमेण तिस्रो विधाः प्रकारा यस्य स त्रिविधस्तस्य भावस्त्रिविधता ताम्। आसाद्य प्राप्य।

५° ११८

तैजसश्च तामसश्चेति तैजसतामसौ । इति एवं प्रकारेण । भवन् परिणत । सत्त्वात्मना सत्त्वगुणस्वरूपेण । आद्येन वैकारिकेण । इन्द्रियमानिन इन्द्रियाणामधिष्ठातॄन् । देवान् देवता । असृज सृष्टवान् । के ते देवा इत्यत आह— दिग्वातार्कपाश्यश्विन वह्नीन्द्राच्युतमित्रकान् विधुविधिश्रीरुद्रशारीरकानिति । दिशा च वातश्चार्कश्च पाशी अश्विनौ चेति दिग्वातार्कपाश्यश्विनस्तान् । दिशा दिक् । पाशी प्रचेता । वह्निश्चेन्द्रश्चाच्युतश्च मित्रश्च कश्चेति वह्नीन्द्राच्युतमित्रकास्तान् । अच्युत उपेन्द्र । क प्रजापति । विधुश्च विधिश्च श्रीरुद्रश्च शारीरकश्चेति विधुविधिश्रीरुद्रशारीरकास्तान् । विधुश्चन्द्र । विधिश्चतुर्मुख । शारीरक क्षेत्रज्ञ । अत्रेद बोध्यम्—श्रोत्रत्वक्चक्षूरसनघ्राणाना ज्ञानेन्द्रियाणा क्रमादधिष्ठानदेवता दिग्वातार्कप्रचेतोऽश्विन । तत्र चायं जीव कर्णविवरादिषु स्थितानां श्रोत्रादीन्द्रियाणा स्वस्वाधिष्ठानदेवताभिर्दिगादिभि प्रेरितै श्रोत्रादिभि शब्दस्पर्शरूपरसगन्धाख्यान् विषयाननुभवति । एव वाक्पाणिपादपायूपस्थाख्याना कर्मेन्द्रियाणा क्रमादधिष्ठानदेवताभिर्वह्नीन्द्रोपेन्द्रमित्रप्रजापतिभि प्रेरितैर्वागादिभि कर्मेन्द्रियैर्वचनादानगमनपुरीषोत्सर्गानन्दाननुभवति । एव मनोबुद्ध्यहङ्कारचित्ताना क्रमादधिष्ठानदेवताभिश्चन्द्रचतुर्मुखश्रीरुद्रक्षेत्रज्ञै प्रेरिताभिर्मनोबुद्ध्यादिभिरन्त करण वृत्तिभि सङ्कल्पनिश्चयशरीराभिमानधारणा अनुभवतीति ॥

पुनरपि वैकारिकसृष्टिमाह—

भूमन् मानसबुद्ध्यहङ्कृतिमिलच्चित्ताख्यवृत्त्यन्वित
तच्चान्तःकरण विभो तव बलात्सत्त्वांश एवासृजत् ।
जातस्तैजसतो दशेन्द्रियगणस्तत्तामसांशात् पुन
स्तन्मात्र नभसो मरुत्पुरपते शब्दोऽजनि त्वद्बलात् ॥ [illegible] ॥

भूमन्निति ॥ हे भूमन् विभो तव बलात् सत्त्वांश एव मानसबुद्ध्यह ङ्कृतिमिलच्चित्ताख्यवृत्त्यन्वित तत् अन्त करण च असृजत् । भूमन् परिपूर्ण । विभो जगत्कारणभूत । तव ईश्वरस्य । बलात् प्रेरणात् । सत्त्वांशो वैकारिक । एवकारेण तैजसतामसयोर्व्यवच्छेद । मानसबुद्ध्यहङ्कृतिमिलच्चित्ताख्यवृत्त्यन्वित मानस च

बुद्धिश्चाहङ्कृतिश्चेति मानसबुद्ध्यहङ्कृतयः। मानसं मनः। अहङ्कृतिरहङ्कारः। ताभिर्मिलन्त्या उपलक्षितया, चित्तमित्याख्या यस्याः सा चित्ताख्या तादृशी वृत्तिरन्तःकरणवृत्तिस्तया अन्वितम्। मनोबुद्ध्यहङ्कारचित्तभेदेन चतुर्विधमित्यर्थः। तत् सत्त्वप्रधानम्। चकारः पूर्वोक्तानां समुच्चये। असृजत् सृष्टवान्। एवं सात्त्विकाहङ्कारस्य सृष्टिमभिधायानन्तरं राजसाहङ्कारस्य सृष्टिमाह—हे मरुत्पुरपते त्वद्बलात् तैजसतः दशेन्द्रियगणः जातः इति। मरुत्पुरपते गुरुवायुपुरनाथ। त्वद्बलात् त्वत्प्रेरणात्। तैजसतो राजसाहङ्कारात्। दशेन्द्रियगणः दशानामिन्द्रियाणां चक्षुरादिज्ञानेन्द्रियाणां वागादिकर्मेन्द्रियाणां च गणः समूहः। जातः उत्पन्नः। अथ तामसाहङ्कारस्य सृष्टिमाह—तत्तामसांशात् पुनः नभसः तन्मात्रं शब्दः अजनि इति। अत्रापि त्वद्बलादिति सम्बध्यते। तत्तामसांशात् तस्याहङ्कारस्य तामसांशात् तामसात्तमोमयादंशात् भागात्। तामसाहङ्कारादित्यर्थः। पुनश्शब्दः स्वर्थे। नभसः आकाशस्य। तन्मात्रम् अपञ्चीकृतत्वात् सूक्ष्मोऽशः। एतच्च शब्दविशेषणम्। अजनि जातः॥

पुनरपि तामसाहङ्कारसृष्टिं प्रपञ्चयति—

शब्दाद्व्योम ततः ससर्जिथ विभो स्पर्शं ततो मारुतं
तस्माद्रूपमथो महोऽथ च रसं तोयं च गन्धं महीम्।
एवं माधव पूर्वपूर्वकलनादाद्याद्यधर्मान्वितं
भूतग्राममिमं त्वमेव भगवन् प्राकाशयस्तामसात्॥ ८॥

शब्दादिति॥ हे विभो माधव भगवन् त्वमेव तामसात् इमं भूतग्राममाकाशयः। विभो जगत्कारणभूत। माधव लक्ष्मीपते। भगवन् भजनीयगुण। स्तोत्रे सम्बोधनैः प्रयोजनवद्भिरेव भवितव्यमिति नास्ति नियमः। सति प्रयोजने तत्प्रदर्शनमावश्यकमिति सर्वत्र द्रष्टव्यम्। एवकारेण सहायान्तरनिरपेक्षत्वं दर्शितम्। तामसात् तामसाहङ्कारात्। इममधुना दृश्यमानम्। भूतग्रामं पृथिव्यादिमहाभूतपञ्चकम्। प्राकाशयः प्रकाशितवानसि। महाभूतगुणानाह— पूर्वपूर्वकलनात् आद्याद्यधर्मान्वितमिति। पूर्वपूर्वकलनात् पूर्वपूर्वैः पूर्वपूर्वं निर्दिष्टैः

कल्पनादुत्पादनात्। आद्याद्यधर्मान्वितम् उत्तरमुत्तरमाद्याद्याना धर्मैर्गुणैरन्वित सहि तम्। अयमाशय —आकाश शब्दगुणक, वायु शब्दस्पर्शगुणक, तेज शब्द स्पर्शरूपगुणकम्, जल शब्दस्पर्शरूपरसगुणकम्, पृथिवी शब्दस्पर्शरूपरसगन्धव तीति। पूर्वपूर्वकल्पनप्रकारमाह—एवमिति। एवमनेन प्रकारेण। तमेव प्रकार माह—शब्दात् व्योम तत स्पर्श तत मारुत तस्मात् रूपम् अथो मह अथ च रस तोय गन्ध महीञ्च ससर्जिथ इति। शब्दात्तमसस्तन्मात्रात्। व्योम आकाशम्। तत आकाशात्। स्पर्श वायोस्तन्मात्रम्। तत स्पर्शात्। मारुत वायुम्। तस्माद्वायो। रूप तेजसस्तन्मात्रम्। अथो अनन्तरम्। महस्तेज। रूपा दिति भाव। अथ च अनन्तरञ्च। रस जलस्य तन्मात्रम्। तेजस इति भाव। तोय जलम्। रसादिति भाव। गन्ध पृथिव्यास्तन्मात्रम्। जला दिति भाव। महीं पृथिवीम्। गन्धादिति भाव। चकार समुच्चये। ससर्जिथ सृष्टवानसि॥

सम्प्रत्येतैस्तत्त्वैर्भगवतो ब्रह्माण्डनिर्माणप्रकारमाह—

एते भूतगणास्तथेन्द्रियगणा देवाश्च जाताः पृथङ्
नो शेकुर्भुवनाण्डनिर्मितिविधौ देवैरमीभिस्तदा।
त्व नानाविधशक्तिभिर्नुतगुणस्तत्त्वान्यमून्याविश-
श्चेष्टाशक्तिमुदीर्य तानि घटयन् हैरण्यमण्ड व्यधाः ॥ ९ ॥

एत इति॥ एते भूतगणा तथा इन्द्रियगणा देवा जाताश्च भुवनाण्ड निर्मितिविधौ पृथक् नो शेकु। एते पूर्वोक्ता। भूतगणा भूताना शब्दादि सूक्ष्मभूतानामाकाशादिमहाभूतानाञ्च गणा समूहा। इन्द्रियगणा इन्द्रियाणा ज्ञानेन्द्रियाणां कर्मेन्द्रियाणाञ्चान्त करणसहिताना गणा। देवा इन्द्रियाणा मधिष्ठातार 'दिग्वातार्कपाश्यश्विन' इत्यादिनोक्ता। जाता उत्पन्ना। चकारोऽप्यर्थक। भुवनाण्डनिर्मितिविधौ भुवनाण्डस्य ब्रह्माण्डस्य निर्मितिर्निर्माण तस्या विधिर्व्यापारस्तस्मिन्। पृथक् पृथग्भूतत्वादित्यर्थ। नो शेकु न शक्ता बभूवु। अत्र यदेत्यध्याहर्तव्यम्। यदा न शेकुस्तदेति योजना। तदा त्वम् अमीभि

देवैः नानाविधसूक्तिभिः नुतगुणः अमूनि तत्त्वानि आविशन् चेष्टाशक्तिमुदीर्य तानि घटयन् हैरण्यमण्डं व्यधाः। तदा तस्मिन्नवसरे। त्वमीश्वरः। नानाविधसूक्तिभिः नानाविधाभिर्बहुविधाभिस्सूक्तिभिः स्तोत्रैः। नुताः स्तुताः गुणा भक्तवात्सल्यादयो यस्य स नुतगुणः सन्। अयमभिप्रायः—मायासृष्ट्यनन्तरमेव तच्छब्दसत्त्वांशमादाय तेनाङ्गीकृतलीलाविग्रहं भवन्तं देवाः स्तुतवन्त इति। अमूनि पूर्वोक्तानि। तत्त्वानि आकाशादीनि। आविशन् स्वयोगबलेन प्रविष्टः सन्। चेष्टाशक्ति क्रियाशक्तिम्। उदीर्य उत्पाद्य। तानि तत्त्वानि। घटयन् गुणप्रधानभावेन संयोजयन्। हैरण्यं प्रकाशबहुलत्वात् पारदपिण्डवदत्युज्ज्वलम्। अण्डं ब्रह्माण्डाख्यं स्वशरीरम्। व्यधाः निर्मितवानसि॥

एवं ब्रह्माण्डसृष्टिमभिधायानन्तरं भगवतो विराट्स्वरूपनिर्माणप्रकारमाह—

**अण्डं तत् खलु पूर्वसृष्टसलिलेऽतिष्ठत् सहस्रं समा**
**निर्भिन्दन्नकृथाश्चतुर्दशजगद्रूपं विराडाह्वयम्।**
**साहस्रैः करपादमूर्धनिवहैर्निश्शेषजीवात्मको**
**निर्भातोऽसि मरुत्पुराधिप स मां त्रायस्व सर्वामयात्॥ १०॥**

अण्डमिति॥ तत् खलु अण्डं पूर्वसृष्टसलिले सहस्रं समाः अतिष्ठत्। तत् पूर्वोक्तम्। खल्वित्यवधारणे। पूर्वसृष्टसलिले पूर्वं सृष्टे निर्मिते सलिले जले। आवरोणदक इत्यर्थः। सहस्रमित्येकवचनम्, 'विंशत्याद्यास्सदैकत्वे सर्वाः संख्येयसंख्ययोः' इत्यमरवचनात्। समाः संवत्सरान्। अत्यन्तसंयोगे द्वितीया। अतिष्ठत् स्थितमभूत्। त्वं निर्भिन्दन् चतुर्दशजगद्रूपं विराडाह्वयमकृथाः। अत्र तत इत्यादिः। त्वमीश्वरः। त्वमित्यनन्तरमण्डमित्यनुवृत्त्य द्वितीयान्ततया विपरिणमय्य योजनीयम्। निर्भिन्दन् स्वांशेन तत् प्रविश्य विविधं विभजन्। चतुर्दश जगन्ति पातालरसातलमहातलसुतलवितलातलक्षोणीतलाम्बरस्वर्गमहोजनतपस्सत्याख्या लोका रूपं स्वरूपं यस्य तच्चतुर्दशजगद्रूपम्। विविधं राजते शोभत इति विराट् विराडित्याह्वयं संज्ञा यस्य तद्विराडाह्वयम्। शरीरमिति शेषः। अकृथाः सृष्टवानसि। भगवतो विराट्स्वरूपस्य स्वरूपान्तरवैलक्षण्यं प्रदर्शयति—

हे मरुत्पुराधिप त्वं साहस्रैः करपादमूर्धनिवहैः निश्शेषजीवात्मको निर्भातः असीति। मरुत्पुराधिप गुरुवायुपुरनाथ। अत्र य इत्यध्याहर्तव्यमुत्तरत्र स इत्यस्य दर्शनात्। साहस्रैः सहस्रसंख्यैः। करपादमूर्धनिवहैः कराः बाहवः पादाः अङ्घ्रयो मूर्धानः शिरांसि चेति करपादमूर्धानस्तेषां निवहैः समूहैः। उपलक्षित इति शेषः। निश्शेषाणां चराचराणां जीवो जीवानां समष्टिरात्मा स्वरूपं यस्य स निश्शेषजीवात्मकः। हिरण्यगर्भपदवाच्य इत्यर्थः। निर्भातः आविर्भूतः। अथ रोगशान्तिं प्रार्थयते—स त्वं मां सर्वामयात् त्रायस्व इति। स तथाविधः। मामनन्यशरणम्। सर्वामयात् सर्वस्मात् बाह्यादाभ्यन्तराच्चामयाद्रोगसमूहात्। त्रायस्व रक्ष॥

इति विराडुद्भवोत्पत्तिप्रकारवर्णनं

पञ्चमं दशकम्।

## षष्ठदशकम्॥

एवं भगवतो विराडाह्वयस्य स्थूलशरीरस्योत्पत्तिमभिधाय सम्प्रत्युपासनार्थं तदवयवभेदकल्पनाप्रकारमाह—

एवं चतुर्दशजगन्मयतां गतस्य
पातालमीश तव पादतलं वदन्ति।
पादोर्ध्वदेशमपि देव रसातलं ते
गुल्फद्वयं खलु महातलमद्भुतात्मन्॥ १॥

एवमित्यादि॥ हे ईश अद्भुतात्मन् एवं चतुर्दशजगन्मयतां गतस्य तव पादतलं पातालं वदन्ति। ईश जगद्रक्षक। अनेन सम्बोधनेन जगदनुग्रहायैव तवैतादृशस्वरूपपरिग्रह इति द्योत्यते। अद्भुतात्मन् अद्भुतं आश्चर्यकार्यात्मा स्वरूपं यस्य स तथाविधः। कस्यचिदप्येवंविधस्वरूपादर्शनादिति

भाव. । एवं 'निर्भिन्दन्नङ्ध्या' इत्यादिनोक्तेन प्रकारेण । चतुर्दशजगन्मयतां पातालादिचतुर्दशभुवनस्वरूपताम् । गतस्य प्राप्तस्य । पादयोस्तलं पादतलम् । पातालं तदाख्यं लोकम् । वदन्ति कीर्तयन्ति । उपासनाविदो मुनय इति शेष । हे देव ते पादोर्ध्वदेशं रसातलमपि । देव प्रकाशमान । ते तव । पादोर्ध्वदेशं पादयोश्चरणकमलयोरूर्ध्वदेशमुपरिभागम् । प्रपदयुगलमित्यर्थः । रसातलं तदाख्य लोकम् । वदन्तीत्यत्रानुवर्तते । अपिस्समुच्चये । गुल्फद्वयं महातलं खलु । गुल्फयोर्द्वयं युग्मं । महातलं तदाख्यं लोकम् । ते इति । वदन्तीति चात्राप्यनुवर्तते ॥

> जङ्घे तलातलमथो सुतलञ्च जानू
> किञ्चोरुभागयुगलं वितलातले द्वे ।
> क्षोणीतलं जघनमम्बरमङ्ग नाभि-
> र्वक्षश्च शक्रनिलयस्तव चक्रपाणे ॥ २ ॥

जङ्घे इति ॥ अङ्ग चक्रपाणे तव जङ्घे तलातलम् । चक्रपाणे सुदर्शनधर । तव विराट्स्वरूपस्य । जङ्घे जङ्घाद्वयम् । तलातलं तदाख्यो लोक । अथो जानू सुतलञ्च । अथो अनन्तरम् । जानू जानुद्वयम् । सुतलं तदाख्यो लोक । चकार. समुच्चये । किञ्च अपि च । ऊरुभागयुगलमूर्वोर्भागावूर्ध्वाधोभागौ तयोर्युगलं युग्मम् । वितलं चातलं च वितलातले तदाख्यौ लोकौ । अधोभागो वितलमूर्ध्वभागोऽतलमिति विवेक । जघनं क्षोणीतलम् । जघनं कटितटम् । ननु 'पश्चान्नितम्बो स्त्रीकट्या क्लीबे तु जघनं पुर' इत्यमरवचनाज्जघनपदमयोऽगोत्वानुपपन्न इति चेन्न, लक्षणयाऽत्र जघनपदस्य भगवत्कटितटबोधकत्वात् । लक्षणाफलं तु सौन्दर्यातिशयप्रतीति । क्षोणीतलं भूलोक । नाभि अम्बरम् । नाभि नाभिप्रदेश. । अम्बरमाकाशलोक । वक्ष शक्रनिलय च । वक्ष उर.स्थलम् । शक्रनिलय स्वर्गलोक । चकारोऽत्रापि समुच्चये । तवेति सर्वत्रापि सम्बध्यते ॥

> ग्रीवा महस्तव मुखं च जनस्तपस्तु
> फालं शिरस्तव समस्तमयस्य सत्यम् ।

एवं जगन्मयतनो जगदाश्रितैर-
रप्यन्यैर्निबद्धवपुषे भगवन् नमस्ते ॥ ३ ॥

ग्रीवेति ॥ समस्तमयस्य तव ग्रीवा महः। समस्तमयस्य विश्वात्मनः। ग्रीवा कण्ठदेशः। महो महर्लोकः। मुखं जनः च। मुखं वदनम्। जनः जनलोकः। चकारः समुच्चये। फालं तु तपः। फालं ललाटम्। तपस्तदाख्यो लोकः। तवेति सर्वत्र सम्बध्यते। तव शिरः सत्यम्। शिरो मूर्धा। सत्यं सत्यलोकः। एवं भगवतो जगन्मयीं मूर्तिमभिधाय तन्मयं भगवन्तं स्तौति—एवं जगन्मय तनो हे भगवन् ते नमः इति। एवमुक्तप्रकारेण। जगन्मयतनो जगन्मयी पातालादिचतुर्दशभुवनात्मिका तनुर्मूर्तिर्यस्य तथाविध। ते तुभ्यम्। इत्थं जगन्मयस्य भगवतोऽवयवाः सामान्येन कथिताः, अथापरे के इत्याकाङ्क्षायामाह—जगदाश्रितैः अन्यैः अपि निबद्धवपुषे इति। जगदाश्रितैर्लोकाश्रितैः। अन्यैरपरैः। अपिस्समुच्चये। निबद्धं सम्पूर्णावयवत्वेन सम्पादितं वपुश्शरीरं यस्य सः निबद्धवपुस्तस्मै निबद्धवपुषे॥

अथ जगदाश्रितैरप्यन्यैर्निबद्धवपुषे इति यदुक्तम्, तदेव प्रपञ्चयति—

त्वद्ब्रह्मरन्ध्रपदमीश्वर विश्वकन्द
छन्दांसि केशव घनास्तव केशपाशाः।
उल्लासिचिल्लियुगलं द्रुहिणस्य गेहं
पक्ष्माणि रात्रिदिवसौ सविता च नेत्रे ॥ ४ ॥

त्वद्ब्रह्मरन्ध्रपदमिति ॥ हे ईश्वर विश्वकन्द त्वद्ब्रह्मरन्ध्रपदं छन्दांसि। विश्वकन्द जगत्कारणभूत। त्वद्ब्रह्मरन्ध्रपदं तव ब्रह्मरन्ध्रं द्वादशान्तमेव पदं स्थानम्। छन्दांसि वेदाः। हे केशव तव केशपाशाः घनाः। केशव श्रीकृष्ण। केशपाशाश्चिकुराः। घनाः मेघाः। उल्लासिचिल्लियुगलं द्रुहिणस्य गेहम्। उल्लासि शोभनम्। चिल्लियुगलं भ्रूयुगलम्। द्रुहिणस्य ब्रह्मणः। गेहं गृहम्। पक्ष्माणि रात्रिदिवसौ। पक्ष्माणि ऊर्ध्वाधस्तनान्यक्षिरोमाणि। रात्रिश्च दिवसश्च रात्रिदिवसौ। ऊर्ध्वतनानि रात्रिरधस्तनानि दिवस इति विवेकः। नेत्रे सविता

च । नेत्रे नयनकमले । सविता सूर्यः । चकारोऽत्रानुक्तसमुच्चये । तेन सांख्य योगौ मकरकुण्डले, छत्रं विकुण्ठनिलय इत्यादि द्रष्टव्यम् । सर्ववाक्येषु तवेति सम्बध्यते ॥

निश्शेषविश्वरचना च कटाक्षमोक्षः
कर्णौ दिशोऽश्वियुगलं तव नासिके द्वे ।
लोभत्रपे च भगवन्नधरोत्तरोष्ठौ
तारागणश्च रदनाः शमनश्च दंष्ट्रा ॥ ५ ॥

निश्शेषेति ॥ हे भगवन् तव कटाक्षमोक्षः निश्शेषविश्वरचना च । तव विराट्स्वरूपस्य । कटाक्षमोक्षः कटाक्षोऽपाङ्गदर्शनं तस्य मोक्षो विक्षेपः । निश्शेषविश्वरचना निश्शेषाणां समस्तानां विश्वानां च चराचरात्मकप्रपञ्चानां रचना निर्माणम् । कर्णौ दिशः । कर्णौ श्रोत्रे । दिशः हरितः । द्वे नासिके अश्वियुगलम् । नासिके नासापुटे । अश्वियुगलमश्विनोस्तन्नाम्नोर्देवयोर्युगलं युग्मम् । लोभत्रपे अधरोत्तरोष्ठौ च । लोभश्च त्रपा चेति लोभत्रपे । त्रपा लज्जा । अधरोष्ठो लोभः, उत्तरोष्ठस्त्रपा चेति द्रष्टव्यम् । रदनाः तारागणः च । रदनाः दन्ताः । तारागणस्ताराणां नक्षत्राणां गणः समूहः । शमनः दंष्ट्रा च । शमनोऽन्तकः । सर्वत्र चकार उक्तानां समुच्चये । तवेति सर्वत्र सम्बध्यते च ॥

माया विलासहसितं श्वसितं समीरो
जिह्वा जलं वचनमीश शकुन्तपङ्क्तिः ।
सिद्धादयः स्वरगणा मुखरन्ध्रमग्नि-
र्देवा भुजाः स्तनयुगं तव धर्मदेवः ॥ ६ ॥

मायेति ॥ हे ईश तव विलासहसितं माया । ईश जगद्रक्षक । तव जगन्मयस्य । विलासयुक्तं हसितं विलासहसितम् । विलासो लीला । अथवा विलासेन हसितं विलासहसितम् । लीलास्मितमित्यर्थः । श्वसितं समीरः । श्वसितं श्वासानिलः । समीरो वायुः । जिह्वा जलम् । जिह्वा रसना । जल

मुदकम्। वचनं शकुन्तपङ्क्तिः। वचनं भाषितम्। शकुन्तपङ्क्तिः शकुन्तानां पक्षिणां पङ्क्तिरावलिः। स्वरगणाः सिद्धादयः। स्वरगणाः स्वराणां षड्जादीनां गणाः समूहाः। सिद्धादयः सिद्धविद्याधरचारणादयः। मुखरन्ध्रम् अग्निः। मुखरन्ध्रं वदनच्छिद्रम्। अग्निर्वह्निः। भुजा देवाः। भुजा बाहवः। देवा इन्द्रादयो लोकपालाः। स्तनयुगं धर्मदेवः। स्तनयोर्युगं स्तनयुगम्। सर्वत्र तवेति सम्बध्यते॥

पृष्ठं त्वधर्म इह देव मनः सुधांशु-
रव्यक्तमेव हृदयाम्बुजमम्बुजाक्ष।
कुक्षिः समुद्रनिवहा वसनं तु सन्ध्ये
शेफः प्रजापतिरसौ वृषणौ च मित्रः ॥ ७ ॥

पृष्ठं त्विति॥ हे देव अम्बुजाक्ष इह पृष्ठं तु अधर्मः। देव प्रकाशमान। अम्बुजे पद्मे इवाक्षिणी नेत्रे यस्य सोऽम्बुजाक्षस्तथाविध। इह अस्मिन् विराट्स्वरूपे। विराट्स्वरूपपटक इत्यर्थः। पृष्ठं पृष्ठभागः। तुशब्दः समुच्चये। मनः सुधांशुः। मनश्चित्तम्। सुधांशुश्चन्द्रमाः। हृदयाम्बुजम् अव्यक्तमेव। हृदयाम्बुजं हृदयकमलम्। अव्यक्तं सत्त्वादीनां त्रयाणां गुणानां साम्यम्। कुक्षिः समुद्रनिवहाः। कुक्षिरुदरम्। समुद्रनिवहाः समुद्राणां निवहाः समूहाः। वसनं तु सन्ध्ये। वसनं वस्त्रयुगलम्। तुरतापि समुच्चये। सन्ध्ये सन्ध्ययोर्द्वयम्। शेफः असौ प्रजापतिः। शेफः मेढ्रम्। वृषणौ मित्रश्च। वृषणौ मुष्कयोर्युगम्। चकारः समुच्चये। इहेति सर्वत्र सम्बध्यते॥

श्रोणीस्थलं मृगगणाः पदयोर्नखास्ते
हस्त्युष्ट्रसैन्धवमुखा गमनं तु कालाः।
विप्रादिवर्णभवनं वदनाब्जबाहु-
चारूरुयुग्मचरणं करुणाम्बुधे ते ॥ ८ ॥

श्रोणीस्थलमिति॥ हे करुणाम्बुधे ते श्रोणीस्थलं मृगगणाः। करुणाम्बुधे कृपासमुद्र। ते अस्मदस्य तव। श्रोणीस्थलं कटिप्रदेशः। मृगगणाः

मृगाणां पशूनां गणा समूहाः। पदयो नखा. हस्त्युष्ट्रसैन्धवमुखाः। पदयो पादकमलयोः। नखा नखरा.। हस्तिनो गजा। उष्ट्रा: क्रमेलका.। सैन्धवा अश्वा.। हस्त्यादिकं मुखमादिर्येषा ते हस्त्युष्ट्रसैन्धवमुखाः। गमनं तु कालः। गमनं गतिः। काला दिवसमासादिभेदभिन्नाः समया.। ते इति सर्वत्रान्वेति। ते वदनाब्जबाहुचारूरुयुग्मचरणं विप्रादिवर्णभवनम्। वदनाब्जबाहुचारूरुयुग्मचरणं वदनाब्जं वदनकमलं बाहव करा, चारु मनोहरमूरुयुग्ममूरुयुगलं चरणौ पादौ चेति समाहारद्वन्द्वः। विप्रादिवर्णभवनं विप्रादीनां ब्राह्मणादीनां वर्णानां जीवानां भवनं स्थानम्। विप्रक्षत्रियवैश्यशूद्राणां यथासंख्यं तव वदनाब्ज बाहूरुयुग्मचरणमित्यर्थः॥

संसारचक्रमयि चक्रधर क्रियास्ते
वीर्यं महासुरगणोऽस्थिकुलानि शैलाः।
नाड्यस्सरित्समुदयस्तरवश्च रोम
जीयादिदं वपुरनिर्वचनीयमीश ॥ ॥ ९ ॥

संसारचक्रमिति॥ अयि चक्रधर ते क्रियाः संसारचक्रम्। चक्रधर चक्रायुध। ते जगन्मयस्य तव। क्रियाश्चेष्टाः। संसारचक्रं संसारो जननमरणमेव चक्रम्। परिवृत्तिसाम्यात् संसारे चक्रारोप। वीर्यं महासुरगणः। महासुरगणो महतामसुराणां गण. समूह.। अस्थिकुलानि शैलाः। अस्थिकुलान्यस्थ्नां कुलानि समूहा। शैलाः पर्वता.। नाड्य. सरित्समुदय। सरित्समुदयः सरितां नदीनां समुदय समूह.। लोम तरव च। लोम रोमसञ्चय। तरवो वृक्षाः। चकार. समुच्चये। ते इति सर्वत्र सम्बध्यते। एवं विराट्स्वरूपमुपवर्ण्यानन्तरं स्तौति— हे ईश अनिर्वचनीयमिदं वपुः जीयादिति। ईश जगद्रक्षक। अनिर्वचनीयं त्वत्कृपा विना ब्रह्मादिभिरप्यशक्यवर्णनम्। इदं यथाशक्ति मया वर्णितम्। वपुर्विराट्स्वरूपम्। जीयात् सर्वोत्कर्षेण वर्तताम्। एवंविधं ते वपु सर्वदा मम प्रादुर्भवत्विति भाव॥

एवं विश्वमूर्त्युपासनासिद्धये भगवतो विराट्स्वरूपमुपवर्ण्यानन्तरं तत्राधिकारिण आह—

मुदकम्। वचन शकुन्तपङ्क्ति । वचन भाषितम्। शकुन्तपङ्क्ति शकुन्ताना पक्षिणा पङ्क्तिरावलि । स्वरगणा सिद्धादय । स्वरगणा स्वराणा षड्जादीना गणा समूहा । सिद्धादय सिद्धविद्याधरचारणादय । मुखरन्ध्रम् अग्नि, । मुखरन्ध्र वदनच्छिद्रम्। अग्निर्वह्नि । भुजा देवा । भुजा बाहव । देवा इन्द्रादयो लोकपाला । स्तनयुग धर्मदेव । स्तनयोर्युग स्तनयुगम्। सर्वत्र तवेति सम्बध्यते ॥

पृष्ठ त्वधर्म इह देव मन सुधांशु
रव्यक्तमेव हृदयाम्बुजमम्बुजाक्ष ।
कुक्षि समुद्रनिवहा वसन तु सन्ध्ये
शेफ प्रजापतिरसौ वृषणौ च मित्रः ॥ ७ ॥

पृष्ठ त्विति ॥ हे देव अम्बुजाक्ष इह पृष्ठ तु अधर्म । देव प्रकाशमान। अम्बुजे पद्मे इवाक्षिणी नेत्रे यस्य साऽम्बुजाक्षस्तथाविध । इह अस्मिन् विराट्स्वरूपे। विराट्स्वरूपपटक इत्यर्थ । पृष्ठ पृष्ठभाग । तुशब्द समुच्चये । मन सुधांशु । मनश्चित्तम्। सुधांशुश्चन्द्रमा । हृदयाम्बुजम् अव्यक्तमेव। हृदयाम्बुज हृदयकमलम्। अव्यक्त सत्त्वादीनां त्रयाणा गुणाना साम्यम्। कुक्षि समुद्रनिवहा । कुक्षिरुदरम्। समुद्रनिवहा समुद्राणा निवहा समूहा । वसन तु सन्ध्ये । वसन वस्त्रयुगलम्। तुरत्रापि समुच्चये। सन्ध्ये सन्ध्ययोर्द्वयम्। शेफ असौ प्रजापति । शेफस्र मेढ्रम्। वृषणौ मित्रश्च। वृषणौ मुष्कयोर्युगम्। चकार समुच्चये। इहेति सर्वत्र सम्बध्यते॥

श्रोणीस्थल मृगगणा पदयोर्नखास्ते
हस्त्युष्ट्रसैन्धवमुखा गमन तु कल्पा ।
विप्रादिवर्णभवनं वदनाब्जबाहु
चारूरुयुग्मचरण करुणाम्बुधे ते ॥ ८ ॥

श्रोणीस्थलमिति ॥ हे करुणाम्बुधे ते श्रोणीस्थल मृगगणा । करुणाम्बुधे कृपासमुद्र। ते त्वत्सम्बन्धि तव। श्रोणीस्थल कटिप्रदेश । मृगगणा

मृगाणां पशूनां गणाः समूहाः। पदयो नखा. हस्त्युष्ट्रसैन्धवमुखाः। पदयोः पादकमलयोः। नखा नखराः। हस्तिनो गजा.। उष्ट्राः क्रमेलका.। सैन्धवा अश्वाः। हस्त्यादिकं मुखमादिर्येषां ते हस्त्युष्ट्रसैन्धवमुखाः। गमनं तु कालाः। गमनं गतिः। काला दिवसमासादिभेदभिन्नाः समयाः। ते इति सर्वत्रान्वेति। ते वदनाब्जबाहुचारूरुयुग्मचरणं विप्रादिवर्णभवनम्। वदनाब्जबाहुचारूरुयुग्मचरणं वदनाब्जं वदनकमलं बाहवः कराः, चारु मनोहरमूरुयुग्ममूरुयुगलं चरणौ पादौ चेति समाहारद्वन्द्वः। विप्रादिवर्णभवनं विप्रादीनां ब्राह्मणादीनां वर्णानां जीवानां भवनं स्थानम्। विप्रक्षत्रियवैश्यशूद्राणां यथासंख्यं तव वदनाब्जबाहूरुयुग्मचरणमित्यर्थः॥

संसारचक्रमयि चक्रधर क्रियास्ते<br>
वीर्यं महासुरगणोऽस्थिकुलानि शैलाः।<br>
नाड्यस्सरित्समुदयस्तरवश्च रोम<br>
जीयादिदं वपुरनिर्वचनीयमीश॥ ॥ ९ ॥

संसारचक्रमिति॥ अयि चक्रधर ते क्रियाः संसारचक्रम्। चक्रधर चक्रायुध। ते जगन्मयस्य तव। क्रियाश्चेष्टाः। संसारचक्रं संसारो जननमरणमेव चक्रम्। परिवृत्तिसाम्यात् संसारे चक्रारोप। वीर्यं महासुरगण। महासुरगणो महतामसुराणां गणः समूहः। अस्थिकुलानि शैलाः। अस्थिकुलान्यस्थ्नां कुलानि समूहाः। शैला पर्वता.। नाड्य. सरित्समुदयः। सरित्समुदय सरितां नदीनां समुदयः समूहः। लोम तरवः च। लोम रोमसञ्चयः। तरवो वृक्षाः। चकारः समुच्चये। ते इति सर्वत्र सम्बध्यते। एवं विराट्स्वरूपमुपवर्ण्यानन्तरं स्तौति— हे ईश अनिर्वचनीयमिदं वपुः जीयादिति। ईश जगद्रक्षक। अनिर्वचनीयं त्वत्कृपां विना ब्रह्मादिभिरप्यशक्यवर्णनम्। इदं यथाशक्ति मया वर्णितम्, वपुर्विराट्स्वरूपम्। जीयात् सर्वोत्कर्षेण वर्तताम्। एवंविधं ते वपु. सर्वदा मम प्रादुर्भवत्विति भाव॥

एवं विश्वमूर्त्युपासनासिद्धये भगवतो विराट्स्वरूपमुपवर्ण्यानन्तरं तत्राधिकारिण आह—

ईदृग्जगन्मयवपुस्तव कर्मभाजा
कर्माऽवसानसमये स्मरणीयमाहुः ।
तस्यान्तरात्मवपुषे विमलात्मने ते
वातालयाधिप नमोऽस्तु निरुन्धि रोगान् ॥ १० ॥

ईदृगिति ॥ हे जगन्मय ईदृक् तव वपु कर्मभाजा कर्मावसानसमये स्मरणीयमाहु । जगन्मय विश्वमूर्ते । ईदृगुक्तप्रकारम् । वपु शरीरम् । विराट् स्वरूपमित्यर्थ । कर्म पूजनादि भजन्ति कुर्वन्तीति कर्मभाजस्तेषाम् । कर्मावसान समये कर्मण पूजाया अवसानसमये अवसानकाले । स्मरणीय स्मर्तुं योग्यम् । आहु । मुनय इति शेष । शरीराभिमानिभिर्निष्करोपासना अशक्येति भाव । एव विध मूर्त्युपासक क्रमाच्छुद्धसत्त्वमयमूर्त्युपासनायामधिकारी भविष्यतीति प्रदर्शयन् भग वन्त स्तौति—हे वातालयाधिप तस्य अन्तरात्मवपुषे विमलात्मने ते नम अस्तु इति । वातालयाधिप गुरुवायुपुरनाथ । तस्य विराज । अन्तरात्मवपुषे अन्तर्यामिरूपाय । विमल आत्मा यस्य स विमलात्मा तस्मै । शुद्धसत्त्वस्वरूपायेत्यर्थ । ते तुभ्यम् । नमश्शब्दयोगाच्चतुर्थी । एवञ्च विराट्स्वरूप ध्यायता क्रमाद्यदन्तर्यामि शुद्धसत्त्व मयमपि तव रूप भासत इत्यधिकारिताप्राप्तिरिति भाव । अथैतादृशोपासना सिद्धये रोगनिवृत्तिं प्रार्थयते—हे विभो त्व रोगान् निरुन्धि इति । विभो शक्तिसम्पन्न । रोगानित्यस्य ममेत्यादि । ममानन्यशरणस्य । रोगान् बाह्या नाभ्यन्तरांश्च । निरुन्धि नाशय । मम रोगान् विधूय मा त्वदुपासने समर्थं विधेहीत्यर्थ ॥

इति विराड्देहस्य जगदात्मत्ववर्णने

षष्ठ दशकम् ।

---

## सप्तमदशकम् ॥

एवं भगवतो विराडाह्वयस्य स्थूलशरीरस्य तत्तदवयवभेदकल्पनाप्रकारमभिधायानन्तरं देवासुरनरतिर्यगादिभेदेन नानाविधां सृष्टिमभिधास्यन्नादौ तदनुरूपशरीरपरिग्रहादिप्रकारमाह—

एवं देव चतुर्दशात्मकजगद्रूपेण जातः पुन-
स्तस्योर्ध्वे खलु सत्यलोकनिलये जातोऽसि धाता स्वयम् ।
यं शंसन्ति हिरण्यगर्भमखिलत्रैलोक्यजीवात्मकं
योऽभूत् स्फीतरजोविकारविकसन्नानासिसृक्षारसः ॥ १ ॥

एवमिति ॥ हे देव एवं चतुर्दशात्मकजगद्रूपेण जातः त्वं पुनः स्वयं तस्य ऊर्ध्वे सत्यलोकनिलये धाता जातः असि खलु । देव माययाऽनावृतत्वात् प्रकाशमान । अनेन सम्बोधनेन भगवतः सर्गविधानतदनुकूलशरीरपरिग्रहादिना न संसारबन्ध इति द्योत्यते । वक्ष्यति च 'न सर्गविधिभिर्बन्धोऽपि सञ्जायते' इति । एवमुक्तप्रकारेण । चतुर्दशात्मकजगद्रूपेण पातालादिचतुर्दशभुवनस्वरूपेण । जातः परिणतः । पुनरनन्तरम् । तस्य तव जगन्मयशरीरस्य । ऊर्ध्वमुपरि । सत्यलोकनिलये सत्यलोकाख्ये आस्पदे । धाता ब्रह्मा । जातः उत्पन्नः । हंसारूढां चतुर्मुखां तप्तकाञ्चनसन्निभां शुक्लाम्बरां कमण्डल्वादिधारिणीं तनुमङ्गीकृतवानित्यर्थः । खल्विति प्रसिद्धौ । धातुर्नामान्तरमाह—यं हिरण्यगर्भं शंसन्ति इति । यं धातारम् । हिरण्यगर्भं हिरण्यगर्भनामानम् । शंसन्ति कीर्तयन्ति । शास्त्रविदः इति शेषः । हिरण्यगर्भपदवाच्यत्वे हेतुमाह—अखिलत्रैलोक्यजीवात्मकमिति । अखिलाः सकलास्त्रैलोक्यस्य विराजो जीवाः जीवानां समष्टिरात्मा अन्तरात्मा यस्य तदखिलत्रैलोक्यजीवात्मकम् । पञ्चप्राणमनोबुद्धिदशेन्द्रियगणात्मकसूक्ष्मशरीरसमष्ट्युपाधिकमित्यर्थः । सूक्ष्मसमष्ट्या हिरण्यगर्भपदवाच्य इति भावः । धातुः सिसृक्षाया हेतुमाह—यः स्फीतरजोविकारविकसन्नानासिसृक्षारसः अभूदिति । स्फीते प्रवृद्धे रजसो रजोगुणस्य विकारे कार्यभूतैर्भेदबुद्ध्युपकारबुद्धिरागद्वेषादिभि

## सप्तमदशकम् ॥

एवं भगवतो विराडाह्वयस्य स्थूलशरीरस्य तत्तदवयवभेदकल्पनाप्रकारमभिधायानन्तरं देवासुरनरतिर्यगादिभेदेन नानाविधां सृष्टिमभिधास्यन्नादौ तदनुरूपशरीरपरिग्रहादिप्रकारमाह—

एवं देव चतुर्दशात्मकजगद्रूपेण जातः पुन-
स्तस्योर्ध्वे खलु सत्यलोकनिलये जातोऽसि धाता स्वयम् ।
यं शंसन्ति हिरण्यगर्भमखिलत्रैलोक्यजीवात्मकं
योऽभूत् स्फीतरजोविकारविकसन्नानासिसृक्षारसः ॥ १ ॥

एवमिति ॥ हे देव एवं चतुर्दशात्मकजगद्रूपेण जातः त्वं पुनः स्वयं तस्य ऊर्ध्वे सत्यलोकनिलये धाता जातः असि खलु। देव माययाऽनावृतत्वात् प्रकाशमान। अनेन सम्बोधनेन भगवतः सर्गविधानतदनुकूलशरीरपरिग्रहादिना न संसारबन्ध इति द्योत्यते। वक्ष्यति च 'न सर्गविधिभिर्बन्धोऽपि सञ्जायते' इति। एवमुक्तप्रकारेण। चतुर्दशात्मकजगद्रूपेण पातालादिचतुर्दशभुवनस्वरूपेण। जातः परिणत। पुनरनन्तरम्। तस्य तव जगन्मयशरीरस्य। ऊर्ध्वमुपरि। सत्यलोकनिलये सत्यलोकाख्ये आस्पदे। धाता ब्रह्मा। जात. उत्पन्न। हंसारूढां चतुर्मुखां तप्तकाञ्चनसन्निभां शुक्लाम्बरां कमण्डल्वादिधारिणीं तनुमङ्गीकृतवानित्यर्थः। खल्विति प्रसिद्धौ। धातुर्नामान्तरमाह—यं हिरण्यगर्भं शंसन्ति इति। यं धातारम्। हिरण्यगर्भं हिरण्यगर्भनामानम्। शंसन्ति कीर्तयन्ति। शास्त्रविद इति शेषः। हिरण्यगर्भपदवाच्यत्वे हेतुमाह—अखिलत्रैलोक्यजीवात्मकमिति। अखिलाः सकलास्त्रैलोक्यस्य विराजो जीवाः जीवानां समष्टिरात्मा अन्तरात्मा यस्य तदखिलत्रैलोक्यजीवात्मकम्। पञ्चप्राणमनोबुद्धिदशेन्द्रियगणात्मकसूक्ष्मशरीरसमष्ट्युपाधिकमित्यर्थ.। सूक्ष्मसमष्ट्या हिरण्यगर्भपदवाच्य इति भावः। धातुः सिसृक्षायां हेतुमाह—य. स्फीतरजोविकारविकसन्नानासिसृक्षारसः अभूदिति। स्फीतैः प्रवृद्धैः रजसो रजोगुणस्य विकारैः कार्यभूतैर्भेदबुद्ध्युपकारबुद्धिरागद्वेषादिभिः

विकसन्नाविर्भवन् नानासिसृक्षा देवासुरनरतिर्यगादिभेदेन नानाविधानां प्राणिनां सिसृक्षा स्रष्टुमिच्छा तत्र रसः आसक्तिर्यस्य स स्फीतरजोविकारविकसन्नाना सिसृक्षारसः ॥

अथ धातुः कृत्यमाह—

सोऽयं विश्वविसर्गदत्तहृदयः सम्पश्यमानः स्वयं
बोधं खल्वनवाप्य विश्वविषयं चिन्ताकुलस्तस्थिवान् ।
तावत्त्वं जगतां पते तप तपेत्येवं हि वैहायसीं
वाणीमेनमशिश्रवः श्रुतिसुखां कुर्वंस्तपःप्रेरणाम् ॥ २ ॥

सोऽयमिति ॥ सः अयं विश्वविसर्गदत्तहृदयः स्वयं सम्पश्यमानः विश्वविषयं बोधमनवाप्य चिन्ताकुलः तस्थिवान् खलु । स इत्यनेन यं शंसन्ती त्याद्युक्तस्य परामर्शः । अयं धाता । विश्वविसर्गदत्तहृदयः विश्वेषां सर्वेषां चराचराणां विसर्गे गुणवैषम्याद्विविधे सर्गे दत्तहृदयः उत्साही सन् । अत एव स्वयं सम्पश्यमानः जिज्ञासमानः । विश्वविषयं जगद्विषयकम् । बोधं ज्ञानम् । किमाश्रयं कीदृगिदं विश्वमित्येवंरूपं ज्ञानमित्यर्थः । अनवाप्य अप्राप्य । अत एव चिन्ताकुलः चिन्तया किमभिकरणं किंस्वरूपं जगत् सृजामीति चिन्तया आकुलः पर्याकुलः । तस्थिवानित्यस्य यावदित्यादिः । तस्थिवान् स्थितः । खल्विति प्रसिद्धौ । हे जगतां पते तावत् त्वं तपःप्रेरणां कुर्वन् तप तप इत्येवं वैहायसीं वाणीम् एनमशिश्रवः । जगतां लोकानाम् । पते उत्पत्तिस्थितिलयनिदानभूत । तावत् यावत्तस्थिवांस्तस्मिन्नवसर इत्यर्थः । तपःप्रेरणां तपसि प्रेरणां प्रवर्तनम् । तप तपश्चर । तप तपेति भगवतो वाण्या अनुकरणम् । द्विरुक्तिः प्रेरणरूपत्वात् । वैहायसीं विहायसि आकाशेऽभिव्यक्ताम् । वाणीं वाचम् । एनं धातारम् । अशिश्रवः श्रावितवानसि । भगवतो वाण्या मनोहरत्वमाह—श्रुतिसुखामिति । श्रुतिसुखां श्रवणानन्दजननीम् ॥

भगवद्वाक्यश्रवणानन्तरं धातुः प्रवृत्तिमाह—

कोऽसौ मामवदत् पुमानिति जलापूर्णे जगन्मण्डले
दिक्षूद्वीक्ष्य किमप्यनीक्षितवता वाक्यार्थमुत्पश्यता ।
दिव्यं वर्षसहस्रमात्ततपसा तेन त्वमाराधित-
स्तस्मै दर्शितवानसि स्वनिलयं वैकुण्ठमेकाद्भुतम् ॥ ३ ॥

कोऽसाविति ॥ त्वं जगन्मण्डले जलापूर्णे कः असौ पुमान् मामवदत् इति दिक्षु उद्वीक्ष्य किमपि अनीक्षितवता वाक्यार्थमुत्पश्यता दिव्यं वर्षसहस्रमात्ततपसा तेन आराधितः तस्मै स्वनिलयं वैकुण्ठं दर्शितवानसि । जगन्मण्डले जगतां लोकानां मण्डले चक्रवाले । जलापूर्णे जलेन आ समन्तात् पूर्णे सति । अनेन वक्तुरसम्भावितत्वं तेन विधेर्विस्मयश्च ध्वन्यते । असौ विप्रकृष्टदेशवर्ती । वचनश्रवणेन तथाविधः कश्चित् पुमाननुमीयत इति भावः । अदसस्तु प्रत्यक्ष विषये विप्रकृष्टे शक्तिः । यदुक्तम्—'इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥' इति । वक्तुः पुरुषस्या नुमितत्वेन प्रत्यक्षगोचरबुद्धानान्मानसप्रत्यक्षगोचरत्वाद्वा नात्रादःपदप्रयोगानुप पत्तिः । पुमान् पुरुषः । मया न कोऽपि सृष्टः, मत्सृष्टेः पूर्वं न कोप्यासीत् । पुनः कोवाऽसौ पुमानित्यर्थः । अवदत् अकथयत् । इति एवम् । विचिन्त्येति शेषः । उद्वीक्ष्य वक्तुर्दिदृक्षया सम्यगवलोक्य । किमपि किञ्चिदपि । किमपीति नपुंसकशब्दप्रयोगेण न केवलं वक्तारम्, किन्तु जलपूरव्यतिरिक्तं किञ्चिदपि न दृष्टवानिति द्योत्यते । वाक्यार्थं तप तपेति वाक्यस्यार्थं तप श्चरणमिष्टसाधनमित्येवंरूपम् । उत्पश्यता अधिगच्छता । वर्षसहस्रं वर्षाणां संवत्सराणां सहस्रम् । अत्यन्तसंयोगे द्वितीया । आत्तं कृतं तपो येन स आत्ततपाः तेन । तेन विधिना । आराधितः सेवितः । तस्मै विषये । स्वनिलयं स्वस्य निलयं वासस्थानम् । वैकुण्ठं वैकुण्ठलोकम् । दर्शितवान् प्रदर्शितवान् । वैकुण्ठस्य विशेषमाह—एकाद्भुतमिति । एकमद्वितीयमद्भुतं विस्मयालम्बनम् । यस्माददुभुतान्तरं नास्ति, तादृशमित्यर्थः ॥

यदुक्तमेकाद्भुतमिति, तदेव विवृणोति त्रिभिः—

माया यत्र कदापि नो विकुरुते भाते जगद्भ्यो बहिः
शोकक्रोधविमोहसाध्वसमुखा भावा नु दूरं गताः।
सान्द्रानन्दझरी च यत्र परमज्योतिः प्रकाशात्मके
तत्ते धाम विभावितं विजयते वैकुण्ठरूपं विभो ॥ ४ ॥

मायेति ॥ हे विभो तत् विभावितं वैकुण्ठरूपं ते धाम विजयते। विभो सर्वव्यापिन्। विभावितं ब्रह्मणे दर्शितमित्यर्थः। वैकुण्ठरूपं वैकुण्ठाख्यम्। ते तव विष्णोः। धाम निलयः। विजयते सर्वोत्कर्षेण वर्तते। अत्र हेतुं प्रदर्शयंस्तत्पदार्थं विवृणोति—मायेत्यादिना। यत्र माया कदापि नो विकुरुते। यत्र वैकुण्ठे। कदापि ब्रह्मण उत्पत्तौ प्रलये वा। न विकुरुते न विकारमाविष्करोति। आत्मानमीश्वरात् पृथक्त्वेन प्रदर्श्य शरीराद्यहम्ममाभिमानादिरूपं कार्यं न करोतीत्यर्थः। ननु सत्यलोकस्य माययाऽऽवृतत्वात् कथं तदेकदेशे विकुण्ठनिलये माया विकारासम्भव इति चेत्तत्राह—जगद्भ्यः बहिः भाते इति। जगद्भ्यश्चतुर्दश भुवनेभ्यः। बहिः बहिर्भागे। भाते शोभिते। सत्यलोकानन्तर्गतत्वेनानावृत इत्यर्थः। मायाविकाराभावमेव विवृण्वन्नाह—शोकक्रोधविमोहसाध्वसमुखाः भावाः नु दूरं गताः इति। यत्रेत्यत्रानुवर्तते। यत्र विकुण्ठनिलये। शोको दुःखं, क्रोधोऽमर्षः, विमोहश्शरीराद्यहम्ममाभिमानः, साध्वसं भयम्। शोकक्रोधविमोहसाध्वसानि मुखमादिर्येषां ते शोकक्रोधविमोहसाध्वसमुखाः। भावाः चित्तवृत्तयः। नु विशेषे। तमाह—दूरं गताः इति। दूरं दूरदेशम्। गताः प्राप्ताः। इतरत्र तु नैवं शोकाद्यभाव इति भावः। विकुण्ठनिलये सर्वदा सर्वेऽपि ब्रह्मानन्दमनुभवन्तीत्याह—यत्र सान्द्रानन्दझरी च इति। सान्द्रानन्दझरी सान्द्रानन्दस्य ब्रह्मानन्दस्य झरी प्रवाहः। अत्र झरीशब्देन जलप्रवाहे यथा जना उन्मज्जननिमज्जनादिना क्रीडन्ति, तथा तत्रत्या ब्रह्मानन्दप्रवाहे उन्मज्जननिमज्जनादिना क्रीडन्तीति द्योत्यते। अस्तीति शेषः। अत्र हेतुमाह—परमज्योतिःप्रकाशात्मके इति। परमं सर्वोत्कृष्टम्। आदित्यचन्द्रादीनामपि प्रकाशकत्वप्रदमित्यर्थः। तथाविधं ज्योतिः ब्रह्म तेजः तदेव प्रकाशो यत्र स परमज्योतिःप्रकाशः, स एवात्मा यस्य तत् परमज्योतिः

प्रकाशात्मकं तत्र। भगवत्पदस्य ब्रह्मतेजोमयत्वात्तत्रत्यानां सर्वदा ब्रह्मानन्दानुभव उपपद्यत इत्यर्थः॥

यस्मिन् नाम चतुर्भुजा हरिमणिश्यामावदातत्विषो
नानाभूषणरत्नदीपितदिशो राजद्विमानालयाः।
भक्तिप्राप्ततथाविधोन्नतपदा दीव्यन्ति दिव्या जना
स्तत्ते धाम निरस्तसर्वशमलं वैकुण्ठरूपं जयेत् ॥ ५ ॥

यस्मिन्निति॥ वैकुण्ठरूपं ते धाम जयेत्। वैकुण्ठरूपं वैकुण्ठाख्यम्। ते तवेश्वरस्य। धाम निलयनम्। जयेत् सर्वोत्कर्षेण वर्तताम्। प्रार्थनायां लिङ्। अनेन स्वस्यापि तत्प्राप्त्यौत्सुक्यं व्यज्यते। जयप्रार्थनायां हेतुमाह—निरस्तसर्व शमलं तदिति। निरस्तानि निराकृतानि सर्वाणि सकलानि शमलानि अज्ञान तत्कार्याणि यस्मात्तन्निरस्तसर्वशमलम्। तत्पदार्थमाह—यस्मिन् नाम दिव्या जनाः दीव्यन्तीति। यस्मिन् यादृशे पदे। नामेति त्वर्थे। दिव्यास्त्वत्स्वरूपाः। दीव्यन्ति रमन्ते। ननु कथं त्वत्स्वरूपप्राप्तिरिति चेत्तत्राह—भक्तिप्राप्ततथाविधो न्नतपदा इति। भक्त्या फलाभिसन्धिरहितया प्रेमलक्षणया भक्त्या प्राप्तं लब्धं तथा विधं तादृशमुन्नतं पदं स्थानं यैस्ते भक्तिप्राप्ततथाविधोन्नतपदाः। भगवत्सारूप्य स्वरूपं दर्शयन्नाह—चतुर्भुजाः हरिमणिश्यामावदातत्विषः नानाभूषणरत्नदीपित दिशः राजद्विमानालया इति। चत्वारो भुजाः करा येषा ते चतुर्भुजाः। श्यामा अवदाता स्वच्छा त्विट् शोभा येषां ते श्यामावदातत्विषः। हरिमणय इन्द्र नीलोपलानीव श्यामावदातत्विषो हरिमणिश्यामावदातत्विषः। नानाविधानि भूषणान्याभरणानि किरीटकटकाङ्गदादीनि तेषाम्। तत्प्रत्युप्तैरित्यर्थः। रत्नैः मरतकमाणिक्यादिभिर्दीपिताः प्रकाशिता दिशो यैस्ते नानाभूषणरत्नदीपितदिशः। राजन्ति मणिकिङ्किणीजालमालादिशोभितानि विमानान्यालयो गृहं येषां ते राज द्विमानालयाः। विकुण्ठनिलयस्यैवंविधगुणगणसमग्रतया जयः प्रार्थ्यत इति भावः॥

नानादिव्यवधूजनैरभिवृता विद्युल्लतातुल्यया
विश्वोन्मादनहृद्यगात्रलतया विद्योतिताशान्तरा।

त्वत्पादाम्बुजसौरभैककुतुकाल्लक्ष्मीः स्वयं लक्ष्यते
यस्मिन् विस्मयनीयदिव्यविभवं तत्ते पदं देहि मे ॥ ६ ॥

नानेति ॥ मे तत् ते पदं देहि। मे मम त्वदाश्रयस्य। ते तव विष्णोः। पदं स्थानम्। देहि प्रयच्छ। मदाश्रयोऽयमिति विचिन्त्य मां त्वत्पदं प्रापयेत्यर्थः। भगवत्पदप्रार्थनाया हेतुमाह—विस्मयनीयदिव्यविभवमिति। विस्मयनीया विस्मयालम्बनभूता दिव्या सात्त्विका विभवाः समृद्धयो यस्मिंस्तत्। तत्पदार्थमाह—यस्मिन् लक्ष्मीः त्वत्पादाम्बुजसौरभैककुतुकात् स्वयं लक्ष्यते इति। लक्ष्मीः श्रीः। त्वत्पादाम्बुजसौरभैककुतुकात् तव पादाम्बुजयोः पादारविन्दयोः यत् सौरभं सौरभ्यं तत्रैककुतुकात् अव्यभिचारिणा कौतुकेन। अत्र पादयोरम्बुजारोपात् सौरभ्योपपत्तिः। अत्र त्वदेककुतुकादिति वक्तव्ये त्वत्पादाम्बुजसौरभैककुतुकादित्युक्तिर्लक्ष्म्या भगवति प्रेमातिशयद्योतनार्था। स्वयं लक्ष्यते मूर्तिधरा तत्रत्यानां नयनगोचरीभवति। लक्ष्म्याः स्वरूपमाह—नानादिव्यवधूजनैः अभिवृता विद्युल्लतातुल्यया विश्वोन्मादनहृद्यगात्रलतया विद्योतिताशान्तरा इति। नानादिव्यवधूजनैः अनेकाभिर्दिव्याङ्गनाभिः। अभिवृता परिवृता। विद्युल्लतातुल्यया विद्युल्लताभिस्तटिल्लताभिस्तुल्यया सदृश्या। विश्वोन्मादनहृद्यगात्रलतया विश्वेषां सर्वेषामुन्मादनी उन्मादजननी हृद्या मनोहरा गात्रलता अङ्गयष्टिस्तया। विद्योतितानि प्रकाशितान्याशान्तराणि दिगन्तराणि यया सा विद्योतिताशान्तरा ॥

अथ ब्रह्मा तत्र भगवत्स्वरूपमद्राक्षीदित्याह—

तत्रैवं प्रतिदर्शिते निजपदे रत्नासनाध्यासितं
भास्वत्कोटिलसत्किरीटकटकाद्याकल्पदीप्राकृति।
श्रीवत्साङ्कितमात्तकौस्तुभमणिच्छायारुणं कारणं
विश्वेषां तव रूपमैक्षत विधिस्तत्ते विभो भातु मे ॥ ७ ॥

तत्रेति ॥ विधिः एवं प्रतिदर्शिते तत्र निजपदे तव रूपमैक्षत। विधिः ब्रह्मा। एवमुक्तप्रकारेण। प्रतिदर्शिते यथाध्यानं स्थितस्यैव ब्रह्मणः पुरत इव योगैश्वर्येण करतलामलकवत् प्रत्यक्षीकृते। तत्र तस्मिन्। निजपदे वैकुण्ठे

लोके। तव विष्णो । रूप दिव्यमङ्गलविग्रहम्। ऐक्षत दृष्टवान्। भगवतो दिव्यमङ्गलविग्रहस्य स्वरूपमाह—रत्नासनाध्यासित भास्वत्कोटिलसत्किरीटकटकाद्याकल्पदीप्राकृति श्रीवत्साङ्कितम् आत्तकौस्तुभमणिच्छायारुण विश्वेषा कारणमिति। रत्नासनाध्यासित रत्नासन मणिपीठमध्यासितमुपविष्टम्। भास्वता सूर्याण कोटय इव लसन्त किरीटकटकाद्या किरीटवलयाङ्गदप्रभृतय आकल्पा अलङ्कारास्तै किरीटकटकाद्याकल्पैर्दीप्रा दीपनशीला आकृतिर्यस्य तत् भास्वत्कोटिलसत्किरीटकटकाद्याकल्पदीप्राकृति। श्रीवत्साङ्कित श्रीवत्सेन भृगो पादचिह्नेनाङ्कित वक्षस्थलङ्कृतम्। आत्तकौस्तुभमणिच्छायारुणम् आत्तस्य कण्ठदेशेऽलङ्कृतस्य कौस्तुभमणे कौस्तुभाख्यस्य रत्नस्य छायया कान्त्या अरुण भास्वरम्। विश्वेषा सर्वेषा चराचराणाम्। कारण कारणभूतम्। एव भगवत्स्वरूपमनुसन्धाय स्वस्यापि तस्य चाक्षुषप्रत्यक्ष प्रार्थयते—हे विभो ते तत् मे भातु इति। विभो परिपूर्ण। अनेन सम्बोधनेन इहापि भवता तत् प्रदर्शयितु शक्यत इति सूचितम्। तत् यद्विधिरैक्षत। रूपमित्यत्रानुवर्तते। भातु प्रत्यक्ष भवत्वित्यर्थ॥

पुनरपि भगवत्स्वरूप वर्णयन् प्रार्थयते—

**कालाम्भोदकलायकोमलरुचीचक्रेण चक्र दिशा-**
**मावृण्वानमुदारमन्दहसितस्यन्दप्रसन्नाननम् ।**
**राजत्कम्बुगदारिपङ्कजधरश्रीमद्भुजामण्डल**
**स्रष्टुस्तुष्टिकर वपुस्तव विभो मद्रोगमुद्वासयेत् ॥ ८ ॥**

**कालाम्भोदेति** ॥ हे *विभो कालाम्भोदकलायकोमलरुचीचक्रेण दिशा* चक्रमावृण्वानम् उदारमन्दहसितस्यन्दप्रसन्नानन राजत्कम्बुगदारिपङ्कजधर श्रीमद्भुजामण्डल स्रष्टु तुष्टिकर तव वपु मद्रोगमुद्वासयेत्। विभो शक्तिसम्पन्न। कालाम्भोदकलायकोमलरुचीचक्रेण कालाम्भोदवत् कालमेघवत् कलायवत् कलायकुसुमवच्च कोमलाना रुचीना त्विषा चक्रेण समूहेन। अत्र प्रथमोपमया यथा कालाम्भोद शीघ्र वृष्टिप्रदस्तथा भगवद्वपु शीघ्रफलप्रदमिति, द्वितीयोपमया भगवद्वपुष सौकुमार्यातिशयश्च ध्वन्यते। दिशा चक्र दिङ्मण्डलम्। आवृ

ध्वानमाच्छादयत्। उदारस्यातिमनोहरस्य मन्दहसितस्य मन्दहासस्य स्यन्दे निरन्तरप्रसरेण प्रसन्नमाननं मुखं यस्य तदुदारमन्दहसितस्यन्दप्रसन्नाननम्। राजत् विराजतां कम्बुगदारिपङ्कजानां कम्बुः पाञ्चजन्यं, गदा कौमोदकी, अरिः, सुदर्शनं पङ्कजं पद्मञ्चेति कम्बुगदारिपङ्कजानि तेषां धरं श्रीमत् शोभायुक्तं भुजानां चतुर्णां बाहूनां मण्डलं समूहो यस्य तद्राजत्कम्बुगदारिपङ्कजधरश्रीमद्भुजामण्डलम्। सद्यः क्षणः। तुष्टिकरं दर्शनेन सन्तोषजनकम्। तव विष्णोः। वपु· शरीरम्। मद्रोगं ममानन्यशरणस्य रोगं बाह्यमाभ्यन्तरं चामयसमूहम्। उद्वासयेदपाकरोतु। प्रार्थनायां लिङ्॥

भगवत्स्वरूपं दृष्ट्वा ब्रह्मा किं कृतवानिति चेत्तत्राह—

दृष्ट्वा सम्भृतसम्भ्रमः कमलभूस्त्वत्पादपाथोरुहे
हर्षावेशवशंवदो निपतितः प्रीत्या कृतार्थीभवन्।
जानास्येव मनीषितं मम विभो ज्ञानं तदापादय
द्वैताद्वैतभवत्स्वरूपपरमित्याचष्ट तं त्वां भजे ॥ ९ ॥

दृष्ट्वेति॥ कमलभूः दृष्ट्वा हर्षावेशवशंवदः सम्भृतसम्भ्रमः त्वत्पाद पाथोरुहे निपतितः कृतार्थीभवन् प्रीत्या इति आचष्ट। कमलभूर्ब्रह्मा। दृष्ट्वेत्यस्य भवन्तमित्यादिः। हर्षावेशवशंवदः हर्षस्य सन्तोषातिशयस्यावेशः प्रादुर्भावस्तस्य वशंवदोऽधीनः। अत एव सम्भृतसम्भ्रमः सम्भृतः सम्भरित सम्भ्रमो येन सः। झटिति कर्तव्येषूपचारपूजास्तुत्यादिष्वितिकर्तव्यतामूढतया कञ्चित् कालं किञ्चिदिव कुर्वन् स्थित इत्यर्थः। नहि सम्भ्रान्ताः किञ्चिदपि कर्तव्यं सम्यक् जानन्तीति भाव.। त्वत्पादपाथोरुहे भवच्चरणाम्बुजे। निपतित· साष्टाङ्गं दण्डवत् पतितः। कृतार्थीभवन् भगवद्दर्शनात् कृतार्थतामुपगतः। प्रीत्या सन्तोषातिशयेन। उपलक्षित इति शेष.। इति अनेन प्रकारेण। आचष्ट आख्यातवान्। इतीत्यनेनोक्तं वचनप्रकारमाह—हे विभो त्वं मम मनीषितं जानासि एव। द्वैताद्वैतभवत्स्वरूपपरं तत् ज्ञानमापादय इति। विभो परिपूर्ण। अनेन सम्बोधनेन सर्वान्तर्यामितया सर्वजनबुद्धिसाक्षित्वं व्यनक्ति। अत एवाह—जानासीति। मनीषितमभिलषितम्। एवकारोऽयोग व्यवच्छेदार्थ.। अतो यद्यपि मया न वक्तव्यमस्ति, तथापि वक्ष्यामीति भाव·। द्वैताद्वैतभवत्स्वरूपपरं द्वैतमद्वैतं च यत् भवत्स्वरूपं भवत· स्वरूपं तत्परं तद्विष

यकम् । तत् यथार्थम् । आपादय मय्यनुग्रहेणोत्पादय । अथ स्तौति—अहं तं त्वां भजे इति । तं यं विधिरेवमाचष्ट तम् । त्वामीश्वरम् । भजे आराधयामि ॥

अथ भगवान् किमकरोदिति चेत्तत्राह—

आताम्रे चरणे विनम्रमथ तं हस्तेन हस्ते स्पृशन्
बोधस्ते भविता न सर्गविधिभिर्बन्धोऽपि सञ्जायते ।
इत्याभाष्य गिरं प्रतोष्य नितरां तच्चित्तगूढः स्वयं
सृष्टौ तं समुदैरयः स भगवन्नुल्लासयोल्लाघताम् ॥ १० ॥

आताम्र इति ॥ अथ त्वम् आताम्रे चरणे विनम्रं तं हस्तेन हस्ते स्पृशन् इति गिरमाभाष्य स्वयं तच्चित्तगूढः तं सृष्टौ समुदैरयः । अथ ब्रह्मणः प्रार्थनानन्तरम् । आताम्रे अरुणसरोरुहवदीषत्ताम्रे । अत्र आङ् ईषदर्थे । चरणे पादकमले । विनम्रं विशेषेण भक्तिविश्वासादिभिः सह नम्रं नमनशीलम् । तं ब्रह्माणम् । सखायमिव हस्तेन हस्ते स्पृशन् । करेण करे गृहीत्वेत्यर्थः । इति अनेन प्रकारेण । गिरं वाचम् । आभाष्य सानुसरणमुक्त्वा । नितरामत्यर्थम् । प्रतोष्य सन्तुष्टं कृत्वा । तच्चित्तगूढः तस्य ब्रह्मणश्चित्ते चेतसि गूढः अन्तर्हितस्सन् । तं ब्रह्माणम् । सृष्टौ सृष्टिकर्मणि । समुदैरयः सम्यगुदैरयः प्रेरितवान् । ब्रह्मणो हृद्यन्तर्यामिरूपेण स्थित्वा तं सृष्टौ प्रेरितवानित्यर्थः । इतीत्यनेनोक्तं प्रकारमाह—ते बोध. भविता । सर्गविधिभिः बन्धः अपि न सञ्जायते इति । ते तव । बोध यत् प्रार्थितम्, तत् ज्ञानम् । भविता भविष्यति । सर्गविधिभिः सृष्टिव्यापारैः । बन्धः संसारबन्धः । सञ्जायत इति वर्तमानसामीप्ये लट् । अथ प्रार्थयते—हे भगवन् सः त्वम् उल्लाघतामुल्लासय इति । भगवन्नैश्वर्यादिसम्पन्न । सः यो ब्रह्माणं सृष्टौ प्रेरितवांस्तादृशः । उल्लाघतामित्यस्य ममेत्यादिः । उल्लाघतामारोग्यम् । उल्लासय प्रकाशय । सम्यक् सम्पादयेत्यर्थः ॥

इति हिरण्यगर्भोत्पत्ति-तपश्चरण-वैकुण्ठस्वरूप-भगवत्स्वरूपसाक्षात्कार-भगवदनुग्रहवर्णनं सप्तमं दशकम् ।

इति श्रीनारायणीयव्याख्यायां बालबोधिन्यां

द्वितीयस्कन्धपरिच्छेदः ।

आदितः श्लोकसंख्या ७५

ण्वानमाच्छादयत्। उदारस्यातिमनोहरस्य मन्दहसितस्य मन्दहासस्य स्यन्देन निरन्तरप्रसरेण प्रसन्नमाननं मुखं यस्य तदुदारमन्दहसितस्यन्दप्रसन्नाननम्। राजतां विराजतां कम्बुगदारिपङ्कजाना कम्बुः पाञ्चजन्यं, गदा कौमोदकी, अरिः, सुदर्शनं, पङ्कजं पद्मञ्चेति कम्बुगदारिपङ्कजानि तेषां धरं श्रीमत् शोभायुक्तं भुजानां चतुर्णां बाहूनां मण्डलं समूहो यस्य तद्राजत्कम्बुगदारिपङ्कजधरश्रीमद्भुजामण्डलम्। स्रष्टुः ब्रह्मणः। तुष्टिकरं दर्शनेन सन्तोषजनकम्। तव विष्णोः। वपुः शरीरम्। मद्रोगं ममानन्यशरणस्य रोगं बाह्यमाभ्यन्तरं चामयसमूहम्। उद्वासयेदपाकरोतु। प्रार्थनायां लिङ्॥

भगवत्स्वरूपं दृष्ट्वा ब्रह्मा किं कृतवानिति चेत्तत्राह—

दृष्ट्वा सम्भृतसम्भ्रमः कमलभूस्त्वत्पादपाथोरुहे
हर्षावेशवशंवदो निपतितः प्रीत्या कृतार्थीभवन्।
जानास्येव मनीषितं मम विभो ज्ञानं तदापादय
द्वैताद्वैतभवत्स्वरूपपरमित्याचष्ट तं त्वां भजे ॥ ९ ॥

दृष्ट्वेति॥ कमलभूः दृष्ट्वा हर्षावेशवशंवदः सम्भृतसम्भ्रमः त्वत्पाद पाथोरुहे निपतितः कृतार्थीभवन् प्रीत्या इति आचष्ट। कमलभूर्ब्रह्मा। दृष्ट्वेत्यस्य भवन्तमित्यादिः। हर्षावेशवशंवदः हर्षस्य सन्तोषातिशयस्यावेशः प्रादुर्भावस्तस्य वशंवदोऽधीनः। अत एव सम्भृतसम्भ्रमः सम्भृतः सम्भरित सम्भ्रमो येन सः। झटिति कर्तव्येषूपचारपूजास्तुत्यादिष्वितिकर्तव्यतामूढतया कञ्चित् कालं किञ्चिदिव कुर्वन् स्थित इत्यर्थः। नहि सम्भ्रान्ता किञ्चिदपि कर्तव्यं सम्यक् जानन्तीति भाव। त्वत्पादपाथोरुहे भवच्चरणाम्बुजे। निपतित साष्टाङ्गं दण्डवत् पतितः। कृतार्थीभवन् भगवद्दर्शनात् कृतार्थतामुपगत। प्रीत्या सन्तोषातिशयेन। उपलक्षित इति शेष। इति अनेन प्रकारेण। आचष्ट आख्यातवान्। इतीत्यनेनोक्तं वचनप्रकारमाह—हे विभो त्वं मम मनीषितं जानासि एव। द्वैताद्वैतभवत्स्वरूपपरं तत् ज्ञानमापादय इति। विभो परिपूर्ण। अनेन सम्बोधनेन सर्वान्तर्यामितया सर्वजनबुद्धिसाक्षित्वं व्यनक्ति। अत एवाह—जानासीति। मनीषितमभिलषितम्। एवकारोऽयोग व्यवच्छेदार्थ.। अतो यद्यपि मया न वक्तव्यमस्ति, तथापि वक्ष्यामीति भाव। द्वैताद्वैतभवत्स्वरूपपरं द्वैतमद्वैतं च यत् भवत्स्वरूपं भवत स्वरूपं तत्पर तद्विष

यकम् । तत् यथार्थम् । आपादय मय्यनुग्रहेणोत्पादय । अथ स्तौति—अहं तं त्वां भजे इति । तं यं विधिरेवमाचष्ट तम् । त्वामीश्वरम् । भजे आराधयामि ॥

अथ भगवान् किमकरोदिति चेत्तत्राह—

आताम्रे चरणे विनम्रमथ तं हस्तेन हस्ते स्पृशन्
बोधस्ते भविता न सर्गविधिभिर्बन्धोऽपि सञ्जायते ।
इत्याभाष्य गिरं प्रतोष्य नितरां तच्चित्तगूढः स्वयं
सृष्टौ तं समुदैरयः स भगवन्नुल्लासयोल्लाघताम् ॥ १० ॥

आताम्र इति ॥ अथ त्वम् आताम्रे चरणे विनम्रं तं हस्तेन हस्ते स्पृशन् इति गिरमाभाष्य स्वयं तच्चित्तगूढः तं सृष्टौ समुदैरयः । अथ ब्रह्मणः प्रार्थनानन्तरम् । आताम्रे अरुणसरोरुहवदीषत्ताम्रे । अत्र आङ् ईषदर्थे । चरणे पादकमले । विनम्रं विशेषेण भक्तिविश्वासादिभिः सह नम्रं नमनशीलम् । तं ब्रह्माणम् । सखायमिव हस्तेन हस्ते स्पृशन् । करेण करे गृहीत्वेत्यर्थः । इति अनेन प्रकारेण । गिरं वाचम् । आभाष्य सानुसरणमुक्त्वा । नितरामत्यर्थम् । प्रतोष्य सन्तुष्टं कृत्वा । तच्चित्तगूढः तस्य ब्रह्मणश्चित्ते चेतसि गूढः अन्तर्हितस्सन् । तं ब्रह्माणम् । सृष्टौ सृष्टिकर्मणि । समुदैरयः सम्यगुदैरयः प्रेरितवान् । ब्रह्मणो ह्यन्तर्यामिरूपेण स्थित्वा तं सृष्टौ प्रेरितवानित्यर्थः । इतीत्यनेनोक्तं प्रकारमाह—ते बोधः भविता । सर्गविधिभिः बन्धः अपि न सञ्जायते इति । ते तव । बोधः यत् प्रार्थितम्, तत् ज्ञानम् । भविता भविष्यति । सर्गविधिभिः सृष्टिव्यापारैः । बन्धः संसारबन्धः । सञ्जायत इति वर्तमानसामीप्ये लट् । अथ प्रार्थयते—हे भगवन् स त्वम् उल्लाघतामुल्लासय इति । *भगवन्नैश्वर्यादिसम्पन्न । सः यो ब्रह्माणं सृष्टौ प्रेरितवांस्तादृशः ।* उल्लाघतामित्यस्य ममेत्यादिः । उल्लाघतामारोग्यम् । उल्लासय प्रकाशय । सम्यक् सम्पादयेत्यर्थः ॥

इति हिरण्यगर्भोत्पत्ति-तपश्चरण-वैकुण्ठस्वरूप-भगवत्स्वरूपसाक्षात्कार-भगवदनुग्रहवर्णनं सप्तमं दशकम् ।

इति श्रीनारायणीयव्याख्यायां बालबोधिन्यां

द्वितीयस्कन्धपरिच्छेदः ।

आदितः श्लोकसंख्या ७५

## तृतीयस्कन्धपरिच्छेदः
### अष्टमदशकम् ।

एवं भगवतो लब्धवरस्य ब्रह्मणो ब्राह्मकल्पादारभ्य पाद्मकल्पार्वाचीनरात्रि पर्यन्तानि संक्षेपेण वर्णयितुमारभते—

एवं तावत् प्राकृतप्रक्षयान्ते ब्राह्मे कल्पे ह्यादिमे लब्धजन्मा ।
ब्रह्मा भूयस्त्वत्त एवाप्य वेदान् सृष्टिं चक्रे पूर्वकल्पोपमानाम् ॥ १ ॥

एवमिति ॥ प्राकृतप्रक्षयान्ते आदिमे ब्राह्मे कल्पे एवं तावत् लब्धजन्मा ब्रह्मा भूयः त्वत्तः एव वेदान् आप्य पूर्वकल्पोपमानां सृष्टिं चक्रे । प्राकृतप्रक्षयान्ते प्राकृतप्रक्षयस्य महाप्रलयस्यान्ते अवसाने । आदिमे आद्ये । ब्राह्मे कल्पे । इदानीन्तनस्य ब्रह्मण आद्यदिनारम्भ इत्यर्थः । एवमुक्तप्रकारेण । तावत् प्रथमम् । लब्धजन्मा लब्धं जन्म जननं येन सः । भूयः पुनः । त्वत्त एव । त्वत्तोऽन्यस्मात्, अन्यस्य तदानीमभावात् । वेदान् ऋग्यजुस्सामाथर्वणाख्यांश्चतुरो निगमान् । आप्य लब्ध्वा । पूर्वकल्पोपमानां पूर्वकल्पसदृशीम् । चक्रे कृतवान् ॥

एतदेवाह द्वाभ्याम्—

सोऽयं चतुर्युगसहस्रमितान्यहानि
तावन्मिताश्च रजनीर्बहुशो निनाय ।
निद्रात्यसौ त्वयि निलीय समं स्वसृष्टै-
र्नैमित्तिकप्रलयमाहुरतोऽस्य रात्रिम् ॥ २ ॥

सोऽयमिति ॥ सः अयं चतुर्युगसहस्रमितानि तावन्मिताः रजनीः च बहुशः निनाय । सः पूर्वोक्तः । अयं ब्रह्मा । चतुर्युगसहस्रमितानि चतुर्युग सहस्रेण चतुर्युगाणां कृतत्रेताद्वापरकलिसंज्ञितानां चतुर्णां युगानां सहस्रेण मितानि परिमितानि । अहानि दिवसान् कल्पाख्यान् । तावन्मिताश्चतुर्युगसहस्रमिताः । रजनीः रात्रीः । चकारः समुच्चये । बहुशो बहुवारम् । निनाय नीतवान् ।

ब्रह्मणो रात्रैर्नैमित्तिकप्रलयसञ्ज्ञा व्युत्पादयन्नाह—असौ स्वसृष्टे सम त्वयि निलीय निद्राति। अत अस्य रात्रिं नैमित्तिकप्रलयमाहु इति। असौ ब्रह्मा। स्वसृष्टे स्वेन सृष्टैश्चराचरात्मकै पदार्थसार्थै। सम सह। त्वयि श्रीनारायणे। निलीय विलय प्राप्य। निद्राति स्वपति। अतो ब्रह्मणो निद्रावशात्। अस्य ब्रह्मण। नैमित्तिकप्रलय निमित्तजन्यत्वान्नैमित्तिक प्रलयम्। आहुर्वदन्ति। शास्त्र विद इति शेष ॥

अस्मादृशां पुनरहर्मुखकृत्यतुल्यां
सृष्टिं करोत्यनुदिन स भवत्प्रसादात्।
प्राक् ब्राह्मकल्पजनुषां च परायुषां तु
सुप्तप्रबोधनसमास्ति तदापि सृष्टि ॥ ३ ॥

**अस्मादृशामिति** ॥ स पुन भवत्प्रसादात् अनुदिनम् अस्मादृशामह र्मुखकृत्यतुल्या सृष्टि करोति। स ब्रह्मा। पुनश्शब्दस्त्वर्थे। भवत्प्रसादात् भवत प्रसादादनुग्रहात्। दिने दिनेऽनुदिनम्। अस्मादृशामस्मद्विधानाम्। अह र्मुखकृत्यतुल्याम् अहर्मुखे दिवसारम्भे यानि कृत्यानि शौचाचमनादीन्यवश्य कर्तव्यानि, तत्तुल्या तत्सदृशीम्। सृष्टिं सृष्टिकर्म। करोति विदधाति। ननु मार्कण्डेयादीना परायुषा कल्पावसाने नाशप्रसङ्ग इत्याशङ्क्य, यद्यपि तेषा नाशोऽस्ति, तथापि कश्चिद्विशेषोऽस्तीति ते चिरायुष इत्युच्यन्त इत्यभिप्रायेण तेषा विशेषमाह—प्राक् ब्राह्मकल्पजनुषा च परायुषामपि तु तदा सृष्टि सुप्त प्रबोधनसमा अस्ति इति। प्राक् पूर्वम्। ब्राह्मकल्पजनुषा ब्राह्मे कल्पे जनु जन्म येषा तेषाम्। चशब्दो वाक्यालङ्कारे। परमतिचिरकालमायुर्येषा ते परायुषस्तेषा मार्कण्डेयादीनाम्। तुर्विशेषे। विशेषमाह—सुप्तप्रबोधनसमेति। तदा कल्पारम्भे। सुप्तप्रबोधनसमा सुप्तस्य निद्रामुपगतस्य प्रबोधनेन समा सदृशी। स्वापप्रबोधतुल्येत्यर्थ। ननु ब्रह्मण इव तेषा स्वापप्रबोधावेवास्तु, किमिति सृष्टिरस्तीत्युच्यत इति चेन्न, तेषा ब्रह्मणि लीनत्वात् पुनश्च ब्रह्मणैव सृष्टत्वाच्च। नच ब्रह्मणोऽपि भगवति लीनत्व पुन सृष्टत्व चास्त्विति वाच्यम्,

प्रतिकल्पं ब्रह्मणः सृष्टेरप्रसिद्धेः स्वापप्रबोधावेव। ननु परायुषां मार्कण्डेयादीनाम् अस्मादृशामिव सृष्टिरेवास्तु, किमर्थं सुप्तप्रबोधनतुल्यतोच्यत इति शङ्कनीयम्, तेषां प्राक्कल्पविषयानुस्मरणानुवृत्त्यापत्तेः। ननु तेषां कल्पावसाने नाशः, कल्पारम्भे च सृष्टिरिति चेच्चिरायुष इति व्यवहारानुपपत्तिरिति चेन्न, तेषां सृष्टेः सुप्तप्रबोधनतुल्यत्वाच्चिरायुष इति व्यवहारात्। अस्मादृशां तु सृष्टेर्न तथात्वमिति न तथा व्यवहार इत्यनुसन्धेयम्॥

इदानीं ब्रह्मणो वयः प्रदर्शयन्नाह—

पञ्चाशदब्दमधुना स्ववयोर्धरूप-
मेकं परार्धमतिवृत्त्य हि वर्ततेऽसौ।
तत्रान्त्यरात्रिजनितान् कथयामि भूमन्
पश्चाद्दिनावतरणे च भवद्विलासान् ॥ ४ ॥

पञ्चाशदब्दमिति॥ अधुना असौ स्ववयोर्धरूपं पञ्चाशदब्दम् एकं परार्धमतिवृत्त्य वर्तते हि। असौ ब्रह्मा। स्ववयोर्धरूपं स्वस्य वयसो द्विपरार्धलक्षणस्यार्धं पूर्वार्धं तद्रूपं तल्लक्षणम्। पञ्चाशदब्दं पञ्चाशत् अब्दाः संवत्सरा यस्मिंस्तादृशम्। एकं परार्धं पूर्वमस्माकं संवत्सराणामेकं परार्धम्। परार्धसंज्ञा [illegible] संख्याया लीलावत्यामुक्ता। 'एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः। अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात्॥ जलधिश्चान्त्यं मध्यं परार्धमिति दशगुणोत्तरं संज्ञा। संख्यायाः स्थानानां व्यवहारार्थं कृता पूर्वैः॥' इति। अतिवृत्त्य अतिक्रम्य। हि प्रसिद्धौ। अयं वराहकल्पो द्वितीयपरार्धस्यादिम इति प्रसिद्धः। तस्मिन् वर्तत इत्यर्थः। अथ कतमस्मिन् कल्पे जातानि भवच्चरितानि कथयितुमुपक्रान्तोऽसीति चेत्, तत्राह—हे भूमन् अहं तत्र अन्त्यरात्रिजनितान् पश्चात् दिनावतरणे च भवद्विलासान् कथयामि इति। भूमन् कालदेशापरिच्छिन्न। अनेन सम्बोधनेन सर्वेष्वपि कल्पेषु भवद्विलासानां नासम्भावितत्वमिति सूच्यते। तत्र ब्राह्मादिषु कल्पेषु मध्ये। अन्त्यरात्रिजनितान् अन्त्यरात्रौ समनन्तरातीतस्य पाद्मकल्पस्यार्वाचीनायां रात्र्यां जनितान् सञ्जातान्। पश्चादनन्तरम्। दिनावतरणे पाद्मकल्पारम्भे। चकारः समुच्चये। अत्रान्त्यरात्रि

जनितानित्यस्माज्जनितानीत्येतन्मात्रमनुवृत्त्य योजनीयम् । पाद्मकल्पारम्भे च जनितानित्यर्थ. । भवद्विलासान् भवतो विलासान् सर्गप्रलयादिसम्बन्धिनीर्लीला: । कथयामि वर्णयितुमारभे । अत्र वर्तमानसामीप्ये लट् ॥

अथ तत्रान्त्यराज्ञिजनितानित्यनेनोक्तान् भगवद्विलासान् वर्णयति त्रिभिः—

दिनावसानेऽथ सरोजयोनिस्सुषुप्तिकामस्त्वयि सन्निलिल्ये ।
जगन्ति च त्वज्जठरं समीयुस्तदेदमेकार्णवमास विश्वम् ॥ ५ ॥

**दिनावसान इति** ॥ अथ सरोजयोनि दिनावसाने सुषुप्तिकामः त्वयि सन्निलिल्ये । अथेति प्रकरणारम्भद्योतनाय । सरोजयोनिर्ब्रह्मा । दिनावसाने दिनस्य पूर्वकल्पस्यावसाने । सुषुप्तिकाम. स्वापाभिलाषी .सन् । त्वयि श्रीनारायणे । सन्निलिल्ये लीनोऽभूत् । लीन· सन् निद्रां कृतवानित्यर्थ. । जगन्ति त्वज्जठरं समीयु च । जगन्ति लोकाः । त्वज्जठरं तव जठरमुदराभ्यन्तरम् । समीयु प्रापु । ब्रह्मणा सहेति भाव । चकार. समुच्चये । तदा इदं विश्वमेकार्णवमास । तदा ब्रह्मप्रलये । विश्वं भुवनम् । एकोऽर्णव. समुद्रो यस्मिन् तदेकार्णवम् । एकार्णववज्जलमात्रशेषमित्यर्थ. । आस अभूत् ॥

तवैव वेषे फणिराजि शेषे जलैकशेषे भुवने स्म शेषे ।
आनन्दसान्द्रानुभवस्वरूपः स्वयोगनिद्रापरिमुद्रितात्मा ॥ ६ ॥

**तवैवेति** ॥ त्वं भुवने जलैकशेषे तव वेषे एव फणिराजि शेषे शेषे स्म । भुवने लोके । जलैकशेषे जलमात्रशेषे सति । वेषे रूपान्तरे । फणिराजि नागश्रेष्ठे । शेषे अनन्ते । शेषे स्म शयितोऽभूः । शयितस्य भगवतोऽवस्था दर्शयति—आनन्दसान्द्रानुभवस्वरूप स्वयोगनिद्रापरिमुद्रितात्मा इति । आनन्देन सान्द्रो घनीभूतो योऽनुभवो ज्ञानं स एव स्वरूपं यस्य स आनन्दसान्द्रानुभवस्वरूप । स्वस्य योग· स्वरूपानुसन्धानमेव निद्रा स्वपनं तया परिमुद्रित· सम्यक् लाञ्छित. आत्मा स्वरूपं यस्य स स्वयोगनिद्रापरिमुद्रितात्मा । सान्द्रानन्दैकस्वस्वरूपमनुसन्दधानस्सन्नित्यर्थ ॥

कालाख्यशक्तिं प्रलयावसाने प्रबोधयेत्यादिशता किलादौ ।
त्वया प्रसुप्तं परिसुप्तशक्तिव्रजेन तत्राखिलजीवधाम्ना ॥ ७ ॥

कालाख्यशक्तिमिति ॥ तत्र आदौ परिसुप्तशक्तिव्रजेन अखिलजीवधाम्ना त्वया इति कालाख्यशक्तिमादिशता प्रसुप्तम् । तत्र आदौ प्रलयारम्भ इत्यर्थः । परिसुप्तो लीनः शक्तीनां मूलप्रकृतिमहदहङ्कारादीनां व्रजसमूहो यस्मिन् सः परिसुप्तशक्तिव्रजः, तेन । अखिलजीवधाम्ना अखिलानां सर्वेषां जीवानां संसारदुःखखिन्नानाम् धाम्ना अतिचिरकालं विश्रमस्थानभूतेन । त्वया श्रीनारायणेन । इति अनेन प्रकारेण । आदिशता आज्ञापयता सता । प्रसुप्तं कालाख्यशक्त्या सहाभेदमवलम्ब्य स्थितमित्यर्थः । प्रसुप्तमित्यत्र भावे क्तः । इतीत्यनेनोक्तं भगवत आदेशप्रकारमाह—प्रलयावसाने त्वं प्रबोधय इति । प्रलयावसाने प्रलयस्य चतुर्युगसहस्रलक्षणाया रात्रेरवसाने सति । मामिति शेषः । प्रबोधय प्रतिबोधय ॥

एवं भगवतो रात्रिवृत्तमुपवर्ण्य अनन्तरमहरारम्भचेष्टितं वर्णयितुमुपचक्रममाणः प्रथमं कालाख्यशक्तेर्भगवन्नियोगानुष्ठानप्रकारमाह—

चतुर्युगाणां च सहस्रमेवं त्वयि प्रसुप्ते पुनरद्वितीये ।
कालाख्यशक्तिः प्रथमप्रबुद्धा प्राबोधयत्त्वां किल विश्वनाथ ॥ ८ ॥

चतुर्युगाणामिति ॥ हे विश्वनाथ त्वयि चतुर्युगाणां सहस्रम् एवं प्रसुप्ते पुनः कालाख्यशक्तिः प्रथमप्रबुद्धा त्वां प्राबोधयत् किल । विश्वनाथ लोकनाथ । त्वयि श्रीनारायणे । चतुर्युगाणां कृतत्रेताद्वापरकलिसंज्ञितानां चतुर्णां युगानाम् । सहस्रमित्यत्यन्तसंयोगे द्वितीया । एवमुक्तप्रकारेण । प्रसुप्ते योगनिद्रामवलम्ब्य स्थिते सति । पुनरनन्तरम् । प्रथमप्रबुद्धा प्रथमं भगवत्प्रबोधात् पूर्वमेव प्रबुद्धा परित्यक्तनिद्रा सती । प्राबोधयत् प्रबोधितवती । किलेति पुराणप्रसिद्धिद्योतनाय । भगवति प्रसुप्ते न कस्यचिदपि जाग्रदवस्था समजनीति दर्शयितुमाह—अद्वितीये इति । न विद्यते द्वितीयो यस्मात् सोऽद्वितीयः तस्मिन् अद्वितीये । भगवति प्रसुप्ते सति सर्वेऽपि प्रसुप्ता बभूवुरित्यर्थः ॥

एवमहरारम्भे प्रबोधितस्य भगवतः कृत्यमाह—

**विबुध्य च त्वं जलगर्भशायिन् विलोक्य लोकानखिलान् प्रलीनान्।**
**तेष्वेव सूक्ष्मात्मतया निजान्तः स्थितेषु विश्वेश ददाथ दृष्टिम् ॥ ९ ॥**

**विबुध्येति** ॥ हे जलगर्भशायिन् विश्वेश त्वं विबुध्य अखिलान् लोकान् प्रलीनान् विलोक्य दृष्टिं ददाथ च। जलस्य आवरणोदकस्य गर्भे मध्ये शेते वर्तत इति जलगर्भशायी तथाभूत इति भगवतस्तदानीन्तनावस्था प्रदर्शनपरमेतत्सम्बोधनम्। विश्वेश लोकनाथ। विबुध्य योगनिद्रां परित्यज्य। अखिलान् सर्वान्। लोकान् भुवनानि। प्रलीनान् त्वयि विलयं प्राप्तान्। विलोक्य दृष्ट्वा। ददाथ दत्तवान्। ननु विलीनानां लोकानां कथं दर्शनसम्भव इत्यत आह—सूक्ष्मात्मतया निजान्तःस्थितेषु तेषु एव इति। सूक्ष्मात्मतया कारणरूपेण। निजान्तःस्थितेषु स्वस्याभ्यन्तरे वर्तमानेषु। तेषु लोकेषु। सूक्ष्म रूपेण स्वोदरे वर्तमानेष्वेव लोकेषु दृष्टिं दत्तवान्। नान्यत्रेत्येवकारार्थः। स्वोद राभ्यन्तरे कारणरूपेण विद्यमानत्वाल्लोकानां दर्शनोपपत्तिरिति भावः॥

अथ नाभिपद्मद्वारा भगवतः प्रपञ्चसृष्टिप्रकारं वर्णयितुमुपक्रमते—

**ततस्त्वदीयादयि नाभिरन्ध्रादुदञ्चितं किञ्चन दिव्यपद्मम्।**
**निलीननिश्शेषपदार्थमालासंक्षेपरूपं मुकुलायमानम् ॥ १० ॥**

**तत इति** ॥ अयि ततः त्वदीयात् नाभिरन्ध्रात् किञ्चन दिव्यपद्मम् उदञ्चितम्। अयीत्यनन्तरं विश्वेश इति पूर्वस्मादनुवृत्त्य योजनीयम्। ततः विलोकनानन्तरम्। त्वदीयात् त्वत्सम्बन्धिनः। नाभिरन्ध्रात् नाभिसुषिरात्। किञ्चन अनिर्वचनीयमत्यद्भुतम्। दिव्यपद्मं दिव्यप्रकाशबहुलत्वात् सत्त्वमयं पद्ममरविन्दम्। उदञ्चितमुद्भूतम्। भगवन्नाभिकमलस्य विशेषमाह—निलीननिश्शेष पदार्थमालासंक्षेपरूपं मुकुलायमानमिति। निलीननिश्शेषपदार्थमालासंक्षेपरूपं निलीनानां त्वयि लयमुपागतानां निश्शेषाणां समस्तानां पदार्थानां जीवतदुपभोग्यानां वस्तूनां माला समूहस्तस्य संक्षेपः सूक्ष्मरूपेणावस्थानं तद्रूपम्। निश्शेषप्रपञ्च बीजरूपमित्यर्थः। मुकुलायमानं मुकुलावस्थया स्थितम्॥

भगवन्नाभिकमलमेव वर्णयन्नाह—

तदेतदम्भोरुहकुड्मलं ते कलेवरात्तोयपथे प्ररूढम् ।
बहिर्निरीतं परितः स्फुरद्भिः स्वधामभिर्ध्वान्तमलं न्यकृन्तत् ॥ ११ ॥

तदेतदिति ॥ तत् एतत् अम्भोरुहकुड्मलं ते कलेवरात् तोयपथे प्ररूढं बहिः निरीतं परितः स्फुरद्भिः स्वधामभिः ध्वान्तम् अलं न्यकृन्तत् । तत् जगत्कारणत्वेन प्रसिद्धम् । एतत् अनुपदमुक्तम् । अम्भोरुहकुड्मलम् अम्भोरुहस्य अरविन्दस्य कुड्मलं मुकुलम् । ते तव श्रीनारायणस्य । कलेवराच्छरीरात् । तोयपथे परितो जलावृतत्वाज्जलाभ्यन्तर एवेत्यर्थः । प्ररूढमङ्कुरितम् । बहिः जलमतिक्रम्य बहिर्भागे । निरीतं निर्गतं सत् । परितः सर्वतः । स्फुरद्भिः प्रकाशमानैः । स्वधामभिः स्वस्य धामभिर्दीप्तिभिः । ध्वान्तमन्धकारम् । अलमत्यर्थम् । न्यकृन्तत् दूरीचकार । अन्धकारं दूरीकुर्वदेवोन्मीलितमभूदित्यर्थः ॥

एवं भगवन्नाभिकमलमुपवर्ण्यानन्तरं तस्मिन् पूर्वकल्पावसाने भगवति निलीय प्रसुप्तस्य ब्रह्मणः प्रादुर्भावमाह—

संफुल्लपत्रे नितरां विचित्रे तस्मिन् भवद्वीर्यधृते सरोजे ।
स पद्मजन्मा विधिराविरासित् स्वयंप्रबुद्धाखिलवेदराशिः ॥ १२ ॥

संफुल्लपत्र इति ॥ संफुल्लपत्रे नितरां विचित्रे भवद्वीर्यधृते तस्मिन् सरोजे स पद्मजन्मा विधिः आविरासीत् । संफुल्लानि सम्यग्विकसितानि पत्राणि दलानि यस्मिंस्तस्मिन् संफुल्लपत्रे । नितरामत्यर्थम् । विचित्रे असामान्यत्वाद्विस्मयजनके । भवद्वीर्यधृते भवत ईश्वरस्य वीर्येण योगैश्वर्येण धृते प्रतिष्ठिते । एतानि विशेषणानि भगवन्नाभिकमलस्य स्वरूपकीर्तनपराणि । तस्मिन् पूर्वोक्ते । सरोजे कमले । सः यो भगवति निलीय दिनावसाने निद्रामुपगतः । पद्मजन्मेति विधेर्नामान्तरप्रदर्शनपरम् । पद्माज्जन्म यस्य स इति व्यधिकरणबहुव्रीहिः । पद्मे प्रादुर्भूतत्वात् पद्मजन्मेति प्रसिद्ध इत्यर्थः । विधिर्ब्रह्मा आविरासीत् आविर्बभूव । ब्रह्मणः सर्वज्ञतामाह—स्वयंप्रबुद्धाखिलवेदराशिरिति । स्वयमुपदेशं विना प्रबुद्धः शब्दतः

अर्थतश्चाधिगतः अखिलाना समस्तानां वेदानामृग्यजूस्सामाथर्वाख्यानां राशिः समूहो यस्य सः। सर्वज्ञ इत्यर्थः॥

एवं भगवन्नाभिकमले ब्रह्मण. प्रादुर्भावमुपवर्ण्यानन्तरं प्रार्थयते—

अस्मिन् परात्मन् ननु पाद्मकल्पे त्वमित्थमुत्थापितपद्मयोनिः।
अनन्तभूमा मम रोगराशीन् निरुन्धि वातालयवास विष्णो॥ १३॥

अस्मिन्निति॥ ननु वातालयवास परात्मन् विष्णो अस्मिन् पाद्मकल्पे इत्थम् उत्थापितपद्मयोनिः अनन्तभूमा त्वं मम रोगराशीन् निरुन्धि। नन्वित्या मन्त्रणे। वातालयवास गुरुवायुपुरवास। परात्मन् परब्रह्मस्वरूप। इत्थमनेन प्रकारेण। उत्थापित प्रकाशित. पद्मयोनिर्ब्रह्मा येन स उत्थापितपद्मयोनिः। अनन्तोऽपरिच्छिन्नः भूमा महिमा यस्य सोऽनन्तभूमा। ममानन्यशरणस्य। रोग राशीन् रोगाणां बाह्यानामाभ्यन्तराणां च राशीन् समूहान्। निरुन्धि निवारय॥

इति प्रलय-जगत्सृष्टिप्रकारवर्णनम्

अष्टमं दशकं सटिकम्।

---

## नवमदशकम्॥

एवं पाद्मकल्पे ब्रह्मण. प्रादुर्भावमुपवर्ण्यानन्तरं तस्य प्रवृत्तिं वर्णयितु मुपक्रमते—

स्थितस्स कमलोद्भवस्तव हि नाभिपङ्केरुहे
कुतः स्विदिदमम्बुधावुदितमित्यनालोकयन्।
तदीक्षणकुतूहलात् प्रतिदिशं विवृत्तानन-
श्चतुर्वदनतामगादिकमदष्टदृष्टयम्बुजाम् ॥ १॥

स्थित इति ॥ तव हि नाभिपङ्केरुहे स्थित स कमलोद्भव चतुर्वदन तामगात्। तव श्रीनारायणस्य। हीति वाक्यालङ्कारे। नाभिपङ्केरुहे नाभिकमल कर्णिकायाम्। स्थित वर्तमान। स पूर्वोक्त। कमलोद्भव ब्रह्मा। चत्वारि वदनानि मुखानि यस्य स चतुर्वदनस्तस्य भावस्तत्ता ताम्। अगात् प्राप। वदनकमलानि विशिनष्टि—विकसदष्टदृष्टयम्बुजामिति। विकसन्ति उन्मीलितानि अष्टौ दृष्टयम्बुजानि नेत्रकमलानि यस्यास्ताम्। चतुर्वदनत्वप्राप्तौ हेतुमाह—तदीक्षणकुतूहलात् प्रतिदिश विवृत्तानन इति। तदीक्षणकुतूहलात् तस्य कमलोत्पत्तिस्थानस्य ईक्षणे अवलोकने कुतूहलात् कौतुकात्। दिशि दिशि प्रति दिशम्। चतुर्षु दिक्ष्वित्यर्थ। विवृत्त विचलितमानन मुख येन स विवृत्तानन सन्। अम्बुजोत्पत्तिस्थानावलोकनकौतुके हेतु प्रदर्शयन्नाह—इति अनालोकयन्निति। इति इत्येतदित्यर्थ। अनालोकयन्नपश्यन्। इतिशब्दार्थं विवृणोति—इदम् अम्बुधौ कुत स्विदुदितमिति। इद दृश्यमानमम्बुजम्। अम्बुधावेकार्णवे। कुत कस्मादधिष्ठानात्। स्विदिति वितर्के। उदितमुत्पन्नम्। भगवन्नाभिकमलकर्णिकामध्ये वर्तमानस्य ब्रह्मणश्चतुर्षु दिक्षु युगपद्वीक्षणकौतुके सति चत्वारि वदनकमलानि प्रादुरासन्नित्यर्थ ॥

महार्णवविघूर्णित कमलमेव तत् केवल
विलोक्य तदुपाश्रय तव तनुन्तु नालोकयन्।
क एष कमलोदरे महति निस्सहायो ह्यह
कुत स्विदिदमम्बुज समजनीति चिन्तामगात् ॥ २ ॥

महार्णवेति ॥ अत्र पूर्वस्मात् श्लोकात् कमलोद्भव इत्यनुवृत्त्य योजनीयम्। कमलोद्भव इति चिन्तामगात्। इति अनेन प्रकारेण। अगात् प्राप। चिन्ताप्रकारमाह— महति कमलोदरे निस्सहाय एक अह हि क, इदमम्बुज कुत स्वित् समजनि इति। महति विशाले। कमलोदरे कमलकर्णिकामध्ये। निस्सहाय सहायरहित। वर्तमान इति शेष। हिस्त्वर्थे। क कीदृश। इद दृश्यमानम्। अम्बुज कमलम्। कुत कस्मादधिष्ठानात्। स्विदिति वितर्के। समजनि उत्पन्नम्। चिन्ताया हेतुमाह— महार्णवविघूर्णित केवल तत् कमल

मेव विलोक्य तदुपाश्रयं तव तनुं तु नालोकयन्निति। महार्णवविघूर्णितं महत्ये कीभूय वर्तमाने अर्णवे समुद्रे विघूर्णितं कम्पितम्। केवलमेकम्। तत् पूर्वोक्तम्। कमलं पद्मम्। एवकारेणान्यस्य व्यवच्छेदः। विलोक्य दृष्ट्वा। तदुपाश्रयं तस्य कमलस्योपाश्रयमधिष्ठानभूतम्। तव श्रीनारायणस्य। तनुं शरीरम्। नालोकयन् अपश्यन्॥

पुनश्चैव निश्चितवानित्याह—

अमुष्य हि सरोरुहः किमपि कारणं सम्भवे-
दिति स्म कृतनिश्चयस्स खलु नालरन्ध्राध्वना।
स्वयोगबलविद्यया समवरूढवान् प्रौढधी-
स्त्वदीयमतिमोहनं न तु कलेबरं दृष्टवान् ॥ ३ ॥

अमुष्य हीति॥ स खलु इति स्म कृतनिश्चयः। सः ब्रह्मा। खल्विति त्वर्थे। इति स्म अनेन प्रकारेण। कृतो निश्चयो येन स कृतनिश्चयः। निश्चितवानित्यर्थः। इतिशब्दार्थमाह—अमुष्य हि सरोरुहः किमपि कारणं सम्भवेदिति। अमुष्य मदधिष्ठानभूतस्य। हीति वाक्यालङ्कारे। सरोरुहः कमलस्य। किमपि किञ्चित्। कारणमधिष्ठानम्। अधस्तादिति भावः। सम्भवेदित्यत्र सम्भावनायां लिङ्। केनचित् कारणेन सता भवितव्यमित्यर्थः। एवं निश्चितवतो ब्रह्मणः प्रवृत्तिमाह—नालरन्ध्राध्वना समवरूढवानिति। नालरन्ध्राध्वना नालस्य कमलनालस्य रन्ध्रं सुषिरमेवाध्वा मार्गस्तेन। समवरूढवान् अवरोहणं कृतवान्। कथमस्यायमुपायबोधः समभवदित्यत आह—प्रौढधीरिति। प्रौढा ऊहापोहनिपुणा धीर्बुद्धिर्यस्य सः। ननु बुद्धिसामर्थ्ये सत्यपि कथं सूक्ष्मरन्ध्रप्रवेशस्सम्भवेदित्यत आह—स्वयोगबलविद्यया इति। योगबलं तपोबलम्। विद्या आत्मज्ञानम्। योगबलसहिता विद्या योगबलविद्या स्वस्य योगबलविद्या स्वयोगबलविद्या तया। तपसा विद्यया च प्राप्तैश्वर्यतया अतिसूक्ष्मशरीरो भूत्वा तत्सरोरुहनालरन्ध्रं प्रविष्टवानित्यर्थः। एवमपि न सिद्धं तस्य समीहितमित्याह—त्वदीयं कलेबरं तु न दृष्टवानिति। त्वदीयं त्वत्सम्बन्धि कलेबरं दिव्यमङ्गलविग्रहम्।

न दृष्टवान् न ददर्श। भगवद्दिव्यमङ्गलविग्रहस्य विशेषमाह—अतिमोहनमिति। अतिशयेन जगन्मोहनमित्यर्थः॥

ततः सकलनालिकाविवरमार्गगो मार्गयन्
प्रयस्य शतवत्सरं किमपि नैव सन्दृष्टवान्।
निवृत्य कमलोदरे सुखनिषण्ण एकाग्रधीः
समाधिबलमादधे भवदनुग्रहैकाग्रही ॥ ४ ॥

तत इति॥ ततः सकलनालिकाविवरमार्गगः मार्गयन् शतवत्सरं प्रयस्य किमपि न सन्दृष्टवानेव। ततः इत्यनन्तरं स इति पूर्वस्मादनुवृत्त्य योजनीयम्। ततः एकस्यां नालिकायां भगवद्वेषणानन्तरम्। स ब्रह्मा। सकलानि समस्तानि नालिकाविवराणि नालरन्ध्राण्येव मार्गास्तान् गच्छतीति सकलनालिकाविवरमार्गगः। मार्गयन् गवेषयन्। शतवत्सरं दिव्यसंवत्सराणां शतम्। अत्यन्तसंयोगे द्वितीया। प्रयस्य प्रयासं कृत्वा। किमपि किञ्चिदपि। न सन्दृष्टवान् न ददर्श। एवकारोऽयोगव्यवच्छेदार्थः। कमलनालस्य बहुरन्ध्रत्वादेकेन रन्ध्रेणावरुह्यान्विष्य अदृष्ट्वा पुनरन्येन पुनश्चान्येनेत्येवंप्रकारेणातन्द्रितो भूत्वा दिव्यसंवत्सराणां शतं यतमानोऽपि न किञ्चिदप्यद्राक्षीदित्यर्थः। एवं लौकिकव्यापारेणानवाप्तकामस्तपश्चरितुमारभतेत्याह—निवृत्य कमलोदरे सुखनिषण्ण एकाग्रधीः समाधिबलमादधे इति। निवृत्य कमलनालरन्ध्रात् बहिर्निर्गत्य। कमलोदरे कमलकर्णिकायाम्। सुखनिषण्णः सुखेन निषण्णः उपविष्टः। एतच्च यमनियमप्राणायामप्रत्याहाराणामुपलक्षणम्। एकाग्रा भगवतस्तत्तदवयवेष्ववहिता धीर्बुद्धिर्यस्य स एकाग्रधीः। अनेन धारणोक्ता। एतच्च ध्यानस्याप्युपलक्षणम्। समाधिबलं समाधेः सविकल्पकस्य निर्विकल्पकस्य च बलं परिच्युतिं विना दीर्घकालावस्थानम्। आदधे कृतवान्। ननु किमर्थमेव कृतवानिति चेत्तत्राह—भवदनुग्रहैकाग्रही इति। भवतोऽनुग्रह एवैकस्मिन्नाग्रहोऽभिलाषोऽस्यास्तीति भवदनुग्रहैकाग्रही॥

एवं तपः स्थितो ब्रह्मा भगवन्तमद्राक्षीदित्याह—

शतेन परिवत्सरैर्दृढसमाधिबन्धोल्लस-
त्प्रबोधविशदीकृतस्स खलु पद्मिनीसम्भवः।

अदृष्टचरमद्भुतं तव हि रूपमन्तर्दृशा
व्यचष्ट परितुष्टधीर्भुजगभोगभागाश्रयम् ॥ ५ ॥

शतेनेति ॥ सः पद्मिनीसम्भवः खलु तव हि रूपं परितुष्टधीः अन्तर्दृशा व्यचष्ट। सः पूर्वोक्तः। पद्मिनीसम्भवो ब्रह्मा। खल्विति त्वर्थे। तव श्रीनारायणस्य। हीत्यवधारणे। तवैवेत्यर्थः। रूपं दिव्यमङ्गलविग्रहम्। परितुष्टा सन्तुष्टा धीर्बुद्धिर्यस्य सः परितुष्टधीः। सन्तोषातिशयेन परवश इत्यर्थः। अन्तर्दृशा भगवताऽनुगृहीतेन दिव्येन चक्षुषा। व्यचष्ट दृष्टवान्। यद्यप्यत्र सन्तोषातिरेके भगवद्रूपदर्शनमेव कारणम्, तथापि कार्यकारणयोः पौर्वापर्यव्यतिक्रमेण निर्देशाद् अतिशयोक्तिभेद इति द्रष्टव्यम्। केचित्तु व्यचष्टेत्यनन्तरं परितुष्टधीरभवदिति वाक्यं योजयन्ति। ब्रह्मणा दृष्टस्य भगवद्दिव्यमङ्गलविग्रहस्य स्वरूपमाह—अदृष्टचरम् अद्भुतं भुजगभोगभागाश्रयमिति। अदृष्टचरं पूर्वमदृष्टम्। अद्भुतमाश्चर्यरूपम्। भुजगस्यानन्तस्य भोगश्शरीरं तस्य भागस्तत्कल्पिततल्पदेशः आश्रयो यस्य तत् भुजगभोगभागाश्रयम्। यद्यपि 'भोगस्सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इति वचनात् भुजगग्रहणमनुपयुक्तम्, तथाप्यत्र विशेषपरतया भुजगग्रहणस्य सार्थकत्वमित्यवसेयम्। ननु कथमेवंविधस्य भगवद्रूपस्य दर्शनेऽधिकारितामुपगत इति चेत्तत्राह—शतेन परिवत्सरैः दृढसमाधिबन्धोल्लसत्प्रबोधविशदीकृतः इति। परिवत्सरैः दिव्यसंवत्सरैः। नन्वत्र विशेषणविशेष्ययोस्समानलिङ्गवचनकत्वनियमात् शतेनेत्यस्य परिवत्सरैरित्येतद्विशेषणत्वानुपपत्तिरिति चेन्न, विशेषणविशेष्ययोर्न सर्वत्र समानलिङ्गवचनकत्वनियमः, किन्त्वसति विशेषानुशासने समानलिङ्गवचनकत्वमित्येव। अत एव 'दारान् पद्मभुवस्त्रिलोकजननीं वन्दे गिरां देवताम्' इत्यादौ 'दाराक्षतलाजानां बहुत्वञ्च' इति लिङ्गानुशासनसूत्रेण दारशब्दस्य स्त्रीत्वमेकवचनत्वं वा न सम्भवतीति पुंस्त्वं बहुवचनत्वं चोपपद्यते। एवमेव प्रकृतेऽपि 'विंशत्याद्यास्सदैकत्वे सर्वास्संख्येयसंख्ययोः' इत्यनुशासनात् शतेनेत्येकत्वं नपुंसकत्वं च नानुपपन्नमिति ध्येयम्। दृढसमाधिबन्धोल्लसत्प्रबोधविशदीकृत दृढेन अन्तरान्तरा परिच्युतिरहितेन समाधेश्चित्तैकाग्र्यस्य बन्धेन ग्रथनेन उल्लसता प्रादुर्भूतेन प्रबोधेन प्रकृष्टेन बोधेन। बोधे प्रकर्षश्च ध्यातृध्येयध्यानभेदभावनाभावादैकात्म्य

विधे ब्रह्मन्। अक्षतामनपायिनीम्। भुवनत्रयीरचनदक्षता भुवनत्रयीरचने जगत्त्रितयनिर्माणे दक्षता सामर्थ्यं। लभस्व प्राप्नुहि। मदनुग्रहं ममानुग्रहम्। जगन्निर्माणविधौ यथदहमनुगृह्णामि, तत्तदित्यर्थः। गृहाण गृहीष्व। भूय च पुनरपि। अत्युत्कटा अतिशयिता। अत एवाखिलसाधनी यद्यदिच्छति, तत्स्यानायासेन निष्पादयित्री। भक्तिं प्रेमप्रकर्षलक्षणा। चकारस्समुच्चये। भवतु जायताम्॥

एवमनुगृह्य भगवति तिरोहिते वेधसः प्रवृत्तिमाह—

शतं कृततपास्ततः स खलु दिव्यसंवत्सरा
न्नवाप्य च तपोबलं मतिबलं च पूर्वाधिकम्।
उदीक्ष्य किल कम्पितं पयसि पङ्कजं वायुना
भवद्बलविजृम्भितः पवनपाथसी पीतवान् ॥ ९ ॥

शतमिति॥ ततः स खलु शतं दिव्यसंवत्सरान् कृततपाः पूर्वाधिकं तपोबलं मतिबलं च अवाप्य पङ्कजं पयसि वायुना कम्पितमुदीक्ष्य पवनपाथसी पीतवान् किल। ततः वरलाभानन्तरम्। सः ब्रह्मा। शतमित्येकत्वाद्युपपत्तिः पूर्वमुक्ता। कृतं चीर्णं तपो येन स कृततपाः। पूर्वाधिकं पूर्वस्मादधिकम्। मतिबलं बुद्धिसामर्थ्यम्। अवाप्य प्राप्य। पङ्कजं स्वाधिष्ठानकमलम्। पयसि एकार्णवे। वायुना तत्कालीनेनात्युत्कटेन वातेन। कम्पितं चलितम्। उदीक्ष्य दृष्ट्वा। पवनो वातश्च पाथो जलञ्चेति पवनपाथसी। पीतवान् न्यपिबत्। किलेति वार्तायाम्। ननु कथं ब्रह्मणः एकार्णवजलादिपानसामर्थ्यं जातमिति चेत्तत्राह— भवद्बलविजृम्भितः इति। भवानेव बलं भवद्बलं तेन विजृम्भितो वर्धितः सन्। 'बलं मे वैकुण्ठस्तव च जगतां चापि स बलम्' इति प्रह्लादवचनात्॥

ब्रह्मणस्त्रिलोकसृष्टिप्रकारमाह—

तवैव कृपया पुनः सरसिजेन तेनैव स
प्रकल्प्य भुवनत्रयीं प्रववृते प्रजानिर्मितौ।
तथाविधकृपाभरो गुरुमरुत्पुराधीश्वर
त्वमाशु परिपाहि मां गुरुदयोक्षितैरीक्षितैः ॥ १० ॥

तवैवेति ॥ सः पुनः तव कृपया एव तेन सरसिजेन एव भुवनत्रयीं प्रकल्प्य प्रजानिर्मितौ प्रववृते । सः ब्रह्मा । पुनरनन्तरम् । तव श्रीनारायणस्य । कृपया करुणया । हेतौ तृतीया । तेन स्वाधिष्ठानेन । सरसिजेन पङ्कजेन । भुवनत्रयीं भुवनानां त्रयीं त्रितयम् । भूर्भुवःस्वरिति त्रीन् लोकानित्यर्थः । प्रकल्प्य सृष्ट्वा । अयमर्थः—अतलवितलसुतलतलातलमहातलरसातलपातालानां सप्तानां भूर्लोकेऽन्तर्भावात्, महर्जनस्तपस्सत्यमित्येतेषां स्वर्लोके चान्तर्भावात् त्रिलोकपक्षः कथ्यते । तच्च नाभिकमलं द्विसप्तधा विभज्य चतुर्दशलोकानकल्पयदिति । प्रजानिर्मितौ प्रजानां शुभाशुभादृष्टतारतम्येन तत्तल्लोकयोग्यानां जीवानां निर्मितौ शरीरविरचनायाम् । प्रववृते प्रवृत्तोऽभूत् । अथ प्रार्थयते— हे गुरुमरुत्पुराधीश्वर तथाविधकृपाभरः त्वं गुरुदयोक्षितैः ईक्षितैः आशु मा परिपाहि इति । गुरुमरुत्पुराधीश्वर गुरुवायुपुरनाथ । तथाविधः तादृशः । सर्वजनविषय इत्यर्थः । कृपाभरः करुणातिशयो यस्य सः तथाविधकृपाभरः । गुरुदयोक्षितैः गुर्व्या घनीभूतया दयया करुणारसेन उक्षितैः सिक्तैः ईक्षितैः कटाक्षैः । आशु झटिति । मामनन्यशरणम् । परिपाहि समस्तसन्तापशान्तिं कृत्वा त्रायस्वेत्यर्थः ॥

इति जगत्सृष्टिप्रकारवर्णनं

नवमं दशकम् ।

---

## दशमदशकम् ॥

अथ वैकुण्ठेत्यादिभिर्दशभिर्ब्रह्मणः सृष्टिभेदानाह—

वैकुण्ठ वर्धितबलोऽथ भवत्प्रसादा-
　दम्भोजयोनिरसृजत् किल जीवदेहान् ।
स्थास्नूनि भूरुहमयानि तथा तिरश्चां
　जातिं मनुष्यनिवहानपि देवभेदान्　　॥ १ ॥

वैकुण्ठेति ॥ हे वैकुण्ठ अथ भवत्प्रसादात् वर्धितबलः अम्भोजयोनिः जीवदेहान् असृजत् किल । वैकुण्ठ विकुण्ठनिलय । अथ अनन्तरम् । भवत्प्रसादात् भवतः प्रसादात् । वर्धितं बलं यस्य सः वर्धितबलः । वियाकर्मभ्यां प्राप्तै श्वर्य इत्यर्थः । अम्भोजयोनिर्ब्रह्मा । जीवदेहान् जीवानां देहान् । स्वस्वकर्मानुरूपभोगायतनानि शरीराणि । असृजत् सृष्टवान् । किलेति पुराणप्रसिद्धिं द्योतयति । ननु कीदृशानि तानि शरीराणीत्यत आह—भूरुहमयानि स्थास्नूनि तथा तिरश्चां जातिं मनुष्यनिवहान् देवभेदान् अपि इति । भूरुहमयानि भुवि रोहन्तीति भूरुहाः तरुलतागुल्मादयस्तद्रूपाणि । स्थास्नूनि स्थावराणि । तिरश्चां पशुपक्ष्यादीनाम् । मनुष्यनिवहान् मनुष्याणां निवहान् समूहान् । देवभेदान् देवानां भेदान् यक्षकिन्नरगन्धर्वाद्यवान्तरभेदान् । अपिस्समुच्चये ॥

अथ ब्रह्मणस्तामससृष्टिमाह—

मिथ्याग्रहास्मिमतिरागविकोपभीति-
रज्ञानवृत्तिमिति पञ्चविधां स सृष्ट्वा ।
उद्दामतामसपदार्थविधानदून-
स्तेने त्वदीयचरणस्मरणं विशुद्ध्यै ॥ २ ॥

मिथ्याग्रहेति ॥ सः इति पञ्चविधाम् अज्ञानवृत्तिं सृष्ट्वा विशुद्ध्यै त्वदीयचरणस्मरणं तेने । सः ब्रह्मा । इति अनेन प्रकारेण । पञ्चविधां पञ्चप्रकाराम् । अज्ञानवृत्तिं अज्ञानकार्यम् । सृष्ट्वा निर्माय । विशुद्ध्यै अज्ञाननिवृत्तये । त्वदीयचरणस्मरणं त्वदीयचरणयोर्भवच्चरणाम्भोरुहयोः स्मरणमनुचिन्तनम् । तेने कृतवान् । इतिशब्दार्थमाह—मिथ्याग्रहास्मिमतिरागविकोपभीतिः इति । आत्मनोऽन्यत्वेन प्रपञ्चस्यास्तित्वप्रतीतिर्मिथ्याग्रहः । शरीरादावहम्ममाभिमानोऽस्मिमतिः । उपभोग्यबुद्ध्या धनादिष्विच्छा रागः । धनाद्यपहर्तरि क्रोधो विकोपः । उपभोग्यपदार्थानां व्ययनाशाद्युत्प्रेक्षया जनितं भयं भीतिः । मिथ्याग्रहोऽस्मिमती रागो विकोपश्चेति मिथ्याग्रहास्मिमतिरागविकोपाः तत्सहिता भीतिर्मिथ्याग्रहास्मिमतिरागविकोपभीतिः । ब्रह्मणो भगवच्चरणस्मरणे हेतुमाह—उद्दामतामसपदार्थविधान

दूनः इति। उद्दामानां प्रभूतानां तामसपदार्थानां केवलतमोगुणकार्याणां मिथ्याग्रहादीनां विधानेन निर्माणेन दूनः क्षीणमानसः सन् ॥

भगवच्चरणस्मरणेन विशुद्धस्य ब्रह्मणः प्रवृत्तिमाह—

तावत् ससर्ज मनसा सनकं सनन्दं
भूयः सनातनमुनिञ्च सनत्कुमारम्।
ते सृष्टिकर्मणि तु तेन नियुज्यमाना-
स्त्वत्पादभक्तिरसिका जगृहुर्न वाणीम् ॥ ३ ॥

तावदिति ॥ तावत् मनसा सनकं सनन्दं भूयः सनातनमुनिं सनत्कुमारं च ससर्ज। तावत् यावद्भगवच्चरणस्मरणेन विशुद्धोऽभूत्तावदित्यर्थः। स इति पूर्वस्मादनुवृत्त्य योजनीयम्। सः ब्रह्मा। मनसा चेतसा। भूयः पुनः। ससर्ज सृष्टवान्। ते तु तेन सृष्टिकर्मणि नियुज्यमानाः वाणीं न जगृहुः। ते सनकादयः। तुर्विशेषे। विशेषमाह—वाणीं न जगृहुरिति। तेन ब्रह्मणा। सृष्टिकर्मणि सृष्टिरूपे व्यापारे। नियुज्यमानाः प्रेरिताः। वाणीं ब्रह्मण आज्ञावचनम्। न जगृहुः नाङ्गीकृतवन्तः। अत्र हेतुमाह—त्वत्पादभक्तिरसिकाः इति। त्वत्पादयोस्त्वच्चरणाम्भोरुहयोर्या भक्तिः प्रेमलक्षणा तस्यां रसिका इच्छावन्त सन्तः। शरीरादियन्धकारणं सृष्टिकर्म नैच्छन्नित्यथ. ॥

अथ श्रीशङ्करस्य प्रादुर्भावमाह—

तावत् प्रकोपमुदितं प्रतिरुन्धतोऽस्य
भ्रूमध्यतोऽजनि मृडो भवदेकदेशः।
नामानि मे कुरु पदानि च हा विरिञ्चे-
त्यादौ रुरोद किल तेन स रुद्रनामा ॥ ४ ॥

तावदिति ॥ तावत् उदितं प्रकोपं प्रतिरुन्धतः अस्य भ्रूमध्यतः भवदेकदेशः मृडः अजनि। तावत् यदा सनकादयो निजाज्ञोल्लङ्घनं चक्रुस्तदेत्यर्थः। उदितम् उत्पन्नम्। प्रकोपं प्रकृष्टं कोपम्। प्रतिरुन्धत धिया नियच्छतः। अस्य

ब्रह्मण । भ्रूमध्यत भ्रुवोर्मध्यात् । भवदेकदेश भवत एकदेश एकाश । मृड श्रीशङ्कर । अजनि जात । श्रीशङ्करस्य रुद्रपदवाच्यत्वे कारणमाह— तेन स रुद्रनामा किल इति । तेन तस्मात् कारणात् । स श्रीशङ्कर । रुद्रनामा रुद्राख्य । किलेति प्रसिद्धौ । तत्पदार्थमाह—इति आदौ रुरोद इति । इति अनेन प्रकारेण । आदौ प्रथमम् । रुरोद रोदनं कृतवान् । इतिशब्दार्थमाह—हा विरिञ्च ते नामानि पदानि च कुरु इति । विरिञ्च ब्रह्मन् । मे मम । नामानि नामधेयानि । पदानि स्थानानि । कुरु विधेहि ॥

एकादशाह्वयतया च विभिन्नरूप
रुद्रं विधाय दयिता वनिताश्च दत्वा ।
तावन्त्यदत्त च पदानि भवत्प्रणुन्नः
प्राह प्रजाविरचनाय च सादरं तम् ॥ ५ ॥

एकादशेति ॥ अत्र मिथ्याग्रहेत्यत स इत्यनुवृत्त्य योजनीयम् । स च भवत्प्रणुन्न रुद्रम् एकादशाह्वयतया विभिन्नरूप विधाय दयिता वनिता च दत्वा तावन्ति पदानि च अदत्त । त सादरं प्रजाविरचनाय प्राह च । स ब्रह्मा । चस्त्वर्थे । भवत्प्रणुन्न भवता प्रणुन्न प्रेरित । एकादश आह्वयानि नामानि यस्य स एकादशाह्वय, तस्य भाव एकादशाह्वयता तया । रुद्रस्य आह्वयानि चैकादश । 'मन्युर्मनुर्महिनसो महान् शिव ऋतुध्वज । उग्ररेता भव कालो वामदेवो धृतव्रत ॥' इति भागवतोक्तानि वेदितव्यानि । विभिन्नानि रूपाणि यस्य स विभिन्नरूप तथाविधम् । विधाय कृत्वा । दयिता प्रियतमा । वनिता स्त्रिय । 'धीर्वृत्तिरुशनोमा च नियुत्सर्पिरिलाम्बिका । इरावती सुधा दीक्षा ॥' इति भागवतोक्ता एकादश स्त्रियश्च दत्वेत्यर्थ । तावन्ति 'हृदिन्द्रियाण्यसुर्व्योमवायुरग्निर्जलं मही । सूर्यश्चन्द्रस्तपश्चैव' इत्येकादश भागवतोक्तानि । पदानि स्थानानि । अदत्त दत्तवान् । त रुद्रम् । सादर सम्मानसहितम् । एतच्च क्रियाविशेषणम् । तच्छब्दार्थविशेषण वा । प्रजाविरचनाय प्रजाना विरचनाय निर्माणाय । स्वभार्यासु धीवृत्त्यादिषु सुतानुत्पादयितुमित्यर्थ । प्राह न्ययुङ्क्त । चकारस्समुच्चये ॥

रुद्राभिसृष्टभयदाकृतिरुद्रसङ्घ-
सम्पूर्यमाणभुवनत्रयभीतचेताः ।
मा मा प्रजाः सृज तपश्चर मङ्गलाये-
त्याचष्ट तं कमलभूर्भवदीरितात्मा ॥ ६ ॥

रुद्राभिसृष्टेति ॥ कमलभूः भवदीरितात्मा तम् इति आचष्ट । कमलभूः ब्रह्मा । भवता ईरितः प्रचोदितः आत्मा मनो यस्य सः भवदीरितात्मा । तं रुद्रम् । इति अनेन प्रकारेण । आचष्ट आख्यातवान् । इतिशब्दार्थमाह— त्वं मा मा प्रजाः सृज, मङ्गलाय तपः चर इति । मा मेति द्विरुक्तिः सम्भ्रमात् । सृज सृष्टिं कुरु । मङ्गलाय शुभाय । अत्र हेतुमाह—रुद्राभिसृष्टभयदाकृतिरुद्रसङ्घसम्पूर्यमाणभुवनत्रयभीतचेताः इति । रुद्रेणाभिसृष्टैः स्वलीपूत्पादितैः भयदाकृतिभिर्भयङ्करस्वरूपै रुद्रसङ्घैः रुद्राणां सङ्घैः समूहैः सम्पूर्यमाणां सम्यक् पूर्यमाणां यत् भुवनत्रयं तस्मात् भीतं भयाक्रान्तं चेतो मानसं यस्य स ॥

एवं रुद्रस्य प्रादुर्भावमुपवर्ण्यानन्तरं मरीच्यादीनामुत्पत्तिमाह—

तस्याथ सर्गरसिकस्य मरीचिरत्रि-
स्तत्राङ्गिराः क्रतुमुनिः पुलहः पुलस्त्यः ।
अङ्गादजायत भृगुश्च वसिष्ठदक्षौ
श्रीनारदश्च भगवन् भवदङ्घ्रिदासः ॥ ७ ॥

तस्येति ॥ अथ तत्र सर्गरसिकस्य तस्य अङ्गात् मरीचिः अत्रिः अङ्गिराः क्रतुमुनिः पुलहः पुलस्त्यः भृगुः वसिष्ठदक्षौ च भवदङ्घ्रिदासः श्रीनारदः च अजायत । अथ रुद्रस्य तपश्चरणाय तपोवनप्रवेशानन्तरम् । तत्र तस्मिन्नवसरे । सर्गरसिकस्य सर्गे सृष्टिकर्मणि रसिकस्य साभिलाषस्य । कथं स्रक्ष्यामीत्येवं चिन्तयत इत्यर्थः । तस्य ब्रह्मणः । अङ्गाच्छरीरात् । भवदङ्घ्रिदासः भवतोऽङ्घ्रिदासः पादारविन्दशुश्रूषणपरः । श्रीनारायणस्य पादाब्जयोर्दासोऽहमित्यभिमन्यमान इत्यर्थः । अजायत जाताः । अयमत्र विवेकः—मरीचिर्ब्रह्मणो मनसोऽजायत ।

ब्रह्मन् । भ्रूमध्यतः भ्रुवोर्मध्यात् । भवदेकदेशः भवतः एकदेशः एकांशः । मृडः श्रीशङ्करः । अजनि जातः । श्रीशङ्करस्य रुद्रपदवाच्यत्वे कारणमाह— तेन स रुद्रनामा किल इति । तेन तस्मात् कारणात् । स श्रीशङ्करः । रुद्रनामा रुद्राख्यः । किलेति प्रसिद्धौ । तत्पदार्थमाह—इति आदौ रुरोद इति । इति अनेन प्रकारेण । आदौ प्रथमम् । रुरोद रोदनं कृतवान् । इतिशब्दार्थमाह—हा विरिञ्च ते नामानि पदानि च कुरु इति । विरिञ्च ब्रह्मन् । मे मम । नामानि नामधेयानि । पदानि स्थानानि । कुरु विधेहि ॥

एकादशाह्वयतया च विभिन्नरूपं
रुद्रं विधाय दयिता वनिताश्च दत्त्वा ।
तावन्त्यदत्त च पदानि भवत्प्रणुन्नः
प्राह प्रजाविरचनाय च सादरं तम् ॥ ५ ॥

एकादशेति ॥ अत्र मिथ्यामहेत्यतः स इत्यनुवृत्त्य योजनीयम् । स च भवत्प्रणुन्नः रुद्रम् एकादशाह्वयतया विभिन्नरूपं विधाय दयिताः वनिताः च दत्त्वा तावन्ति पदानि च अदत्त । तं सादरं प्रजाविरचनाय प्राह च । स ब्रह्मा । चस्त्वर्थे । भवत्प्रणुन्नः भवता प्रणुन्नः प्रेरितः । एकादश आह्वयानि नामानि यस्य स एकादशाह्वयः, तस्य भावः एकादशाह्वयता तया । रुद्रस्य आह्वयानि चैकादश । 'मन्युर्मनुर्महिनसो महान् शिव ऋतुध्वजः । उग्ररेता भवः कालो वामदेवो धृतव्रतः ॥' इति भागवतोक्तानि वेदितव्यानि । विभिन्नानि रूपाणि यस्य स विभिन्नरूपः तथाविधम् । विधाय कृत्वा । दयिताः प्रियतमाः । वनिताः स्त्रियः । 'धीर्वृत्तिरुशनोमा च नियुत्सर्पिरिलाम्बिका । इरावती सुधा दीक्षा ॥' इति भागवतोक्ता एकादश स्त्रियश्च दत्त्वेत्यर्थः । तावन्ति 'हृदिन्द्रियाण्यसुर्व्योमवायुरग्निर्जलं मही । सूर्यश्चन्द्रस्तपश्चैव' इत्येकादश भागवतोक्तानि । पदानि स्थानानि । अदत्त दत्तवान् । तं रुद्रम् । सादरं सम्मानसहितम् । एतच्च क्रियाविशेषणम् । तच्छब्दार्थविशेषणं वा । प्रजाविरचनाय प्रजानां विरचनाय निर्माणाय । स्वभार्यासु धीवृत्त्यादिषु सुतानुत्पादयितुमित्यर्थः । प्राह न्ययुङ्क्त । चकारस्समुच्चये ॥

रुद्राभिसृष्टभयदाकृतिरुद्रसङ्घ-
सम्पूर्यमाणभुवनत्रयभीतचेताः ।
मा मा प्रजाः सृज तपश्चर मङ्गलाये-
त्याचष्ट तं कमलभूर्भवदीरितात्मा ॥ ६ ॥

रुद्राभिसृष्टेति ॥ कमलभूः भवदीरितात्मा तम् इति आचष्ट । कमलभूः ब्रह्मा । भवता ईरित. प्रचोदित आत्मा मनो यस्य स. भवदीरितात्मा । तं रुद्रम् । इति अनेन प्रकारेण । आचष्ट आख्यातवान् । इतिशब्दार्थमाह— त्वं मा मा प्रजाः सृज, मङ्गलाय तपः चर इति । मा मेति द्विरुक्तिः सम्भ्रमात् । सृज सृष्टिं कुरु । मङ्गलाय शुभाय । अत्र हेतुमाह—रुद्राभिसृष्टभयदाकृतिरुद्रसङ्घसम्पूर्यमाणभुवनत्रयभीतचेताः इति । रुद्रेणाभिसृष्टैः स्वस्मीदुत्पादितैः भयदाकृतिभिर्भयङ्करस्वरूपै रुद्रसङ्घै रुद्राणां सङ्घैः समूहैः सम्पूर्यमाणां सम्यक् पूर्यमाणा यत् भुवनत्रयं तस्मात् भीतं भयाक्रान्तं चेतो मानसं यस्य स. ॥

एवं रुद्रस्य प्रादुर्भावमुपवर्ण्यानन्तरं मरीच्यादीनामुत्पत्तिमाह—

तस्याथ सर्गरसिकस्य मरीचिरत्रि-
स्तत्राङ्गिराः क्रतुमुनिः पुलहः पुलस्त्यः ।
अङ्गादजायत भृगुश्च वसिष्ठदक्षौ
श्रीनारदश्च भगवन् भवदङ्घ्रिदासः ॥ ७ ॥

तस्येति ॥ अथ तत्र सर्गरसिकस्य तस्य अङ्गात् मरीचिः अत्रि. अङ्गिराः क्रतुमुनिः पुलहः पुलस्त्य· भृगु· वसिष्ठदक्षौ च भवदङ्घ्रिदास. श्रीनारदः च अजायत । अथ रुद्रस्य तपश्चरणाय तपोवनप्रवेशानन्तरम् । तत्र तस्मिन्नवसरे । सर्गरसिकस्य सर्गे सृष्टिकर्मणि रसिकस्य साभिलाषस्य । कथं स्रक्ष्यामीत्येवं चिन्तयत इत्यर्थ. । तस्य ब्रह्मणः । अङ्गाच्छरीरात् । भवदङ्घ्रिदास भवतोऽङ्घ्रिदास पादारविन्दशुश्रूषणपरः । श्रीनारायणस्य पादाब्जयोर्दासोऽहमित्यभिमन्यमान इत्यर्थ· । अजायत जाता· । अयमत्र विवेक—मरीचिर्ब्रह्मणो मनसोऽजायत ।

अत्रिर्नेत्रात्, अङ्गिरा मुखतः, क्रतुमुनिः करात्, पुलहो नाभेः, पुलस्त्यः कर्णाभ्यां, भृगुस्त्वचः, वसिष्ठः प्राणात्, दक्षोऽङ्गुष्ठात्, नारद उत्सङ्गाच्चेति ॥

धर्मादिकानभिसृजन्नथ कर्दमञ्च
वाणीं विधाय विधिरङ्गजसङ्कुलोऽभूत् ।
त्वद्बोधितैस्सनकदक्षमुखैस्तनूजै-
रुद्बोधितश्च विरराम तमो विमुञ्चन् ॥ ८ ॥

**धर्मादिकानिति** ॥ अथ विधिः धर्मादिकान् कर्दमं च अभिसृजन् वाणीं विधाय अङ्गजसङ्कुलः अभूत् । अथ अनन्तरम् । विधिर्ब्रह्मा । धर्म आदिर्येषां ते धर्मादयस्तान् । अभिसृजन् सृष्टेत्यर्थः । अत्र धर्मो नारायणश्च दक्षिणतः स्तनात् जज्ञे, अधर्मो मृत्युश्च पृष्ठतः, कामो हृदः, क्रोधो भ्रुवः, लोभोऽधरोष्ठात्, कर्दमश्छायाया इत्यादिभागवतोक्तानि वेदितव्यानि । वाणीं सरस्वतीम् । विधाय निर्माय । मुखत इति भावः । अङ्गजसङ्कुलः कामपरवशः अभूत् सरस्वतीं चकमे इत्यर्थः । तमः विमुञ्चन् विरराम च । तमः अज्ञानम् । विमुञ्चन् परित्यजन् । विरराम निवृत्तो बभूव । वाण्यामनुरागं दूरीकृत्य स्वस्थचित्तोऽभूदित्यर्थः । अत्र हेतुमाह—सनकदक्षमुखैः, तनूजैः, उद्बोधितः इति । सनकदक्षमुखैः तनूजैः पुत्रैः । उद्बोधितः प्रतिबोधितः । सनकादीनामुद्बोधने कारणमाह—त्वद्बोधितैः इति । त्वयाऽन्तर्यामितया सर्वजनबुद्धिसाक्षिणा बोधितैः प्रबोधितैः ॥

अथ वेदादीनां सृष्टिमाह—

वेदान् पुराणनिवहानपि सर्वविद्याः
कुर्वन् निजाननगणाच्चतुराननोऽसौ ।
पुत्रेषु तेषु विनिधाय स सर्गवृद्धि-
मप्राप्नुवंस्तव पदाम्बुजमाश्रितोऽभूत् ॥ ९ ॥

**वेदानिति** ॥ सः असौ चतुराननः वेदान् पुराणनिवहान् सर्वविद्याः अपि निजाननगणात् कुर्वन् तेषु पुत्रेषु विनिधाय सर्गवृद्धिमप्राप्नुवन् तव पदाम्बुज

माश्रितः अभूत्। सः पाद्मकल्पारम्भे भगवन्नाभिकमलोत्पन्नतया प्रसिद्धः। असौ अत्र वराहकल्पे वर्तमानः। पाद्मकल्पे वर्तमानस्येदानीन्तनात् ब्रह्मणो भेदशङ्कानुदयार्थमेतद्विशेषणद्वयम्। चतुराननश्चतुर्मुखो ब्रह्मा। चतुर्मुख इति साभिप्रायम्, चतुर्भ्यो मुखेभ्य ऋग्यजुस्सामाथर्वणाख्यांश्चतुरो वेदानेकैकतया चकारेति। वेदान् ऋगादीन्। पुराणनिवहान् पुराणानां निवहान् संक्षेपरूपान् समूहान्। सर्वविद्याः सर्वा विद्याः। यद्यपि सर्वविद्यान्तर्गतत्वमस्त्येव वेदानां पुराणानां च, तथापि 'ब्राह्मणान् वसिष्ठमप्यामन्त्रय' इतीव प्राधान्यख्यापनाय पृथगुपादानमिति द्रष्टव्यम्। ऋगादयश्चत्वारो वेदाः, शिक्षादीनि षड् वेदाङ्गानि, आयुर्वेदादयश्चत्वार उपवेदाः, मीमांसा, न्यायविस्तरः, पुराणं, धर्मशास्त्रञ्चेत्यष्टादश विद्या इति केचित्। 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥' इत्यपरे। 'चतुर्दशाष्टादश वाऽत्र विद्या द्वेधाऽपि सन्तीति शशंस वेधाः' इति श्रीहर्षः। निजाननगणात् स्वस्य चतुर्भ्यो मुखेभ्यः। एतेषां विवेकः श्रीमद्भागवते द्रष्टव्यः। कुर्वन् विरचयन्। तेषु मरीच्यादिषु। विनिधाय सङ्क्रमय्य। सर्गवृद्धिं सर्गस्य सृष्टिकर्मणः वृद्धिं वर्धनम्। अप्राप्नुवन्नलभमानः। तव श्रीनारायणस्य। पदाम्बुजं पादपद्मम्। आश्रितः शरणं गतः अभूत्। चिन्तयामासेत्यर्थः ॥

भगवत्पादकमलस्मरणस्य फलमाह—

जानन्नुपायमथ देहमजो विभज्य
स्त्रीपुंसभावमभजन्मनुतद्वधूभ्याम्।
ताभ्यां च मानुषकुलानि विवर्धयंस्त्वं
गोविन्द मारुतपुरेश निरुन्धि रोगान् ॥ १० ॥

**जानन्निति ॥** अथ अजः उपायं जानन् देहं मनुतद्वधूभ्यां विभज्य स्त्रीपुंसभावम् अभजत्। अथ भगवत्स्मरणानन्तरम्। अजो ब्रह्मा। उपायं सर्गवृद्धिकौशलम्। जानन् अवगच्छन्। भगवत्प्रसादादिति भावः। देहं स्वशरीरम्। मनुतद्वधूभ्यां मनुः स्वायम्भुवः तस्य वधूः शतरूपा ताभ्याम्। विभज्य

एकमर्धं मनुरूपेण अन्यदर्धं शतरूपास्वरूपेण च विभज्येत्यर्थः। स्त्रीपुंसभावं स्त्री च पुमांश्च स्त्रीपुंसौ तयोर्भावम्। असजत् प्राप। अथ प्रकरणमुपसंहरन् प्रार्थयते— हे मारुतपुरेश गोविन्द ताभ्यां मानुषकुलानि च विवर्धयन् त्वं रोगान् निरुन्धि इति। मारुतपुरेश गुरुवायुपुरनाथ। गोविन्द विष्णो। ताभ्यां मनुतद्वधूभ्याम्। मानुषकुलानि मनुष्यवंशान्। विवर्धयन् मैथुनेन वर्धयन्नित्यर्थः। रोगान् बाह्यानाभ्यन्तरांश्चामयौघान्। निरुन्धि वारय॥

इति सृष्टिभेदवर्णनं
दशमं दशकम्।

---

## एकादशदशकम् ॥

एवं भगवतः प्रपञ्चसृष्टिमभिधायानन्तरं वराहावतारं वर्णयिष्यन्नादौ तद्बीजभूतं हिरण्याक्षोत्पत्तितदीयवृत्थचरितादिकं वर्णयितुमुपक्रमते—

क्रमेण सर्गे परिवर्धमाने कदापि दिव्याः सनकादयस्ते।
भवद्विलोकाय विकुण्ठलोकं प्रपेदिरे मारुतमन्दिरेश ॥ १ ॥

क्रमेणेति ॥ हे मारुतमन्दिरेश सर्गे क्रमेण परिवर्धमाने कदापि दिव्याः ते सनकादयः भवद्विलोकाय विकुण्ठलोकं प्रपेदिरे। मारुतमन्दिरेश गुरुवायुपुरनाथ। सर्गे सृष्टिकर्मणि। परिवर्धमाने परितो वृद्धिमुपगच्छति। कदापि कदाचित्। दिव्या अप्राकृताः। सात्त्विका इत्यर्थः। अनेन विशेषणेन तेषां विकुण्ठनिलयप्राप्त्यधिकारो ध्वन्यते। ते प्रसिद्धाः। सनकादयः सनकसनन्दसनातनसनत्कुमाराः। भवद्विलोकाय भवतो विलोकनार्थम्। विकुण्ठलोकं विकुण्ठनिलयम्। प्रपेदिरे प्राप्ताः॥

विकुण्ठनिलयं वर्णयति—

मनोज्ञनैश्रेयसकाननाद्यैरनेकवापीमणिमन्दिरैश्च।
अनोपमं तं भवतो निकेतं मुनीश्वराः प्रापुरतीतकक्ष्याः ॥ २ ॥

**मनोज्ञेति** ॥ मुनीश्वराः अतीतकक्ष्याः 'तं भवतः' निकेतं प्रापुः । मुनीश्वराः मुनीनामृषीणामीश्वराः श्रेष्ठाः सनकादयः । 'अतीता अतिक्रान्ताः कक्ष्या यैस्तेऽतीतकक्ष्याः । तं सर्वलोकाभिवन्द्यतया प्रसिद्धम् । भवतः श्रीनारायणस्य । निकेतं विकुण्ठनिलयम् । भगवन्निलयस्य सप्तमकक्ष्यामित्यर्थः । प्रापुः प्राप्ताः । विकुण्ठनिलयस्य विशेषमाह—मनोज्ञनैश्रेयसकाननाद्यैः अनेकवापीमणिमन्दिरैः च अनोपममिति । मनोज्ञं सर्वर्तुशोभाभिरतिमनोहरं नैश्रेयसकाननं निश्रेयसं कैवल्य मेव मूर्तिमत्त्वेन स्थितमिति नैश्रेयसाख्यं काननमुद्यानमाद्यं येषां तैः मनोज्ञनैश्रेयस काननाद्यैः । अनेकवापीमणिमन्दिरैः अनेकैरसंख्यैः वाप्यो दीर्घिका मणिमन्दि राणि रत्नमयानि भवनानि चेति वापीमणिमन्दिराणि तैः । उपलक्षितमिति शेषः । अनोपममनुपमम् ॥

जयविजयौ सनकादीन् रुरुधतुरित्याह—

**भवद्दिदृक्षून् भवनं विविक्षून् द्वाःस्थौ जयस्तान् विजयोऽप्यरुन्धाम् ।**
**तेषां च चित्ते पदमाप कोपः सर्वं भवत्प्रेरणयैव भूमन् ॥ ३ ॥**

**भवद्दिदृक्षूनिति** ॥ द्वाःस्थौ जयः विजयः अपि भवद्दिदृक्षून् भवनं विविक्षून् तान् अरुन्धाम् । द्वाःस्थौ भक्तियोगेन भगवन्तमाराध्य भगवत्सारूप्यं प्राप्य भगवन्निकेतनद्वारपालतां प्राप्तौ । जयो विजयश्चेति तयोर्नाम । अपिस्समुच्चये । भवद्दिदृक्षून् समाधिगम्यं भवन्तं चक्षुषा साक्षात्कर्तुमभिलषतः । अत एव भवनं भगवन्मणिमन्दिरम् । विविक्षून् प्रवेष्टुमारब्धवतः । तान् सनकादीन् । अरुन्धां वेत्रेण प्रत्यषेधताम् । तेषां चित्ते कोपः पदमाप च । तेषां सनकादीनाम् । चित्ते मनसि । कोपः क्रोधः । पदमवतारम् । आप प्राप । चकारः समुच्चये । हन्त रजस्तमोविकारविवर्जिते विकुण्ठनिलये भगवत्सारूप्यं प्राप्य वर्तमानयोर्जय विजययोः कथमहङ्कारस्समभवत्, कथं वा सात्त्विकानां मुनीश्वराणां सनकादीनां क्रोधश्च समभूदिरयत आह—हे भूमन् सर्वं भवत्प्रेरणया एव इति । भूमन् कालदेशा परिच्छिन्न । सर्वं सनकादीनां भवन्निकेतप्राप्तिर्जयविजययोस्तत्प्रतिकूलाचरणं मुनीनां

कोपोदयादिरित्यर्थ । भवतो भक्तानुग्रहाय श्रीवराहनरसिंहश्रीरामकृष्णाद्यवतारे क्रीडिष्यतस्तव। प्रेरणया प्रवर्तनेन। एवकार कारणान्तरव्यवच्छेदार्थक ॥

एव भगवद्दर्शनभङ्गे सति सञ्जातप्रकोपा मुनयस्तौ द्वा स्थौ शप्तवन्त इत्याह—

वैकुण्ठलोकानुचितप्रचेष्टौ कष्टौ युवां दैत्यगतिं भजेतम् ।
इति प्रशप्तौ भवदाश्रयौ तौ हरिस्मृतिर्नोऽस्त्विति नेमतुस्तान् ॥ ४ ॥

वैकुण्ठलोकेति ॥ भवदाश्रयौ तौ न हरिस्मृति अस्तु इति तान् नेमतु । भवानाश्रयो ययोस्तौ भवदाश्रयौ। एतच्च विशेषण हरिस्मृतिप्रार्थनाहेतुत्वेनोपात्तम्। तौ भगवत्पार्षदौ जयविजयौ। न अस्माकम्। हरिस्मृति या या योनिं व्रजाम, तत्र तत्र हरे श्रीनारायणस्य स्मृति स्मरणम्। अस्तु जायताम्। इति इत्युक्त्वा। नेमतु साष्टाङ्गपात प्रणाम चक्रतु । भुवि पतित्वा तेषा पादान् गृहीत्वा प्रार्थयामासतुरित्यर्थ । अत्र हेतुमाह—इति प्रशप्तौ इति। इति अनेन प्रकारेण। प्रशप्तौ प्रकर्षेण शप्तौ शापेनाभिहितौ। मुनिभिरिति भाव । इति शब्दार्थं शापप्रकारमाह—युवा दैत्यगतिं भजेतमिति। दैत्यगतिमासुरीं योनिम्। भजेत प्राप्नुतम्। एवंविधशापहेतुमाह—वैकुण्ठलोकानुचितप्रचेष्टौ कष्टौ इति। रजस्तमोविकारविवर्जितेऽस्मिन् वैकुण्ठलोकेऽनुचिता इत पूर्वं कस्याप्यनुत्पन्ना प्रारब्धा च या प्रचेष्टा सज्जनातिक्रमरूपो व्यापार ययोस्तौ वैकुण्ठलोकानुचित प्रचेष्टौ। कष्टौ अतिक्रूरौ ॥

मुनीना शापमधिगतवतो भगवत प्रवृत्तिमाह—

तदैतदाज्ञाय भवानवाप्तः सहैव लक्ष्म्या बहिरम्बुजाक्ष ।
खगेश्वरांसार्पितचारुबाहुरानन्दयंस्तानभिराममूर्त्या ॥ ५ ॥

तदैतदिति ॥ हे अम्बुजाक्ष भवान् तदा एतत् आज्ञाय लक्ष्म्या सह एव बहि अवाप्त खगेश्वरांसार्पितचारुबाहु अभिराममूर्त्या तान् आनन्दयन्। अम्बुजाक्ष अम्बुजे पद्मे इवाक्षिणी नेत्रे यस्य तादृश । तदा तस्मिन्नवसरे। एतत्

स्वकीयानां सज्जनातिक्रमणम् । आज्ञाय ज्ञात्वा । लक्ष्म्या श्रीभगवत्या । सह समम् । बहिर्बाह्याङ्गणे । अवाप्तः आगतः । खगानां पक्षिणामिश्वरो गरुडस्तस्यांसे स्कन्धदेशे अर्पितो न्यस्तः चारुर्मनोहरो बाहुर्भुजो येन सः खगेश्वरांसार्पितचारुबाहुः । किञ्चिद्वामपार्श्वावलम्बितमूर्तितया गरुडस्यांसदेशे दत्तकराम्बुजस्सन्नित्यर्थः । अभिराममूर्त्या अभिरामया अतिमनोहरया मूर्त्या विग्रहेण । तान् सनकादीन् । आनन्दयन् ब्रह्मानन्दपरितृप्तानामपि शरीरमनःक्षोभं जनयन्नित्यर्थः । अतिष्ठदिति शेषः ॥

भगवान् जयविजयावन्वग्रहीदित्याह—

**प्रसाद्य गीर्भिः स्तुवतो मुनीन्द्राननन्यनाथावथ पार्षदौ तौ ।**
**संरम्भयोगेन भवैस्त्रिभिर्मामुपेतमित्यात्तकृपं न्यगादीः ॥ ६ ॥**

**प्रसाद्येति** ॥ त्वं स्तुवतः मुनीन्द्रान् गीर्भिः प्रसाद्य अथ तौ पार्षदौ इति आत्तकृपं न्यगादीः । स्तुवतः स्तोत्रेणाराधयतः । मुनीन्द्रान् मुनिश्रेष्ठान् सनकादीन् । गीर्भिर्मधुरवाक्यैः । प्रसाद्य प्रसन्नान् कृत्वा । अथ अनन्तरम् । तौ पार्षदौ जयविजयौ । इति अनेन प्रकारेण । आत्तकृपम् आत्ता अङ्गीकृता कृपा दया यस्मिन्निति क्रियाविशेषणम् । न्यगादीः उक्तवान् । इतिशब्दार्थमाह— युवां संरम्भयोगेन त्रिभिः भवैः मामुपेतमिति । संरम्भयोगेन संरम्भो विरोधः तत्कर्तृकेण योगेन समाधिनैरन्तर्येण । भवैः जन्मभिः । उपेतं मत्समीपमागच्छतम् । एवमुक्त्वा तावनुगृहीतवानित्यर्थः । एवमनुग्रहे हेतुमाह—अनन्यनाथौ इति । न विद्यतेऽन्यो नाथो रक्षिता ययोस्तौ । आत्मैकशरणावित्यर्थः ॥

अथ जयविजययोश्शापस्य परिणतिमाह—

**त्वदीयभृत्यावथ काश्यपात्तौ सुरारिवीरावुदितौ दितौ द्वौ ।**
**सन्ध्यासमुत्पादनकष्टचेष्टौ यमौ च लोकस्य यमाविवान्यौ ॥ ७ ॥**

**त्वदीयभृत्याविति** । अथ तौ त्वदीयभृत्यौ काश्यपात् दितौ द्वौ सुरारिवीरौ उदितौ । अथ भगवति स्वपार्षदावेवमुक्त्वा तिरोहिते । त्वदीयभृत्यौ

भवत्पार्षदौ । काश्यपात् तदाख्यान्मुने । दितौ दित्याख्याया तद्भार्यायाम् । सुरारिवीरावसुरश्रेष्ठौ । भवत्पार्षदतया तयो श्रेष्ठत्वमिति भाव । वक्ष्यति च— 'त्वद्भक्ताना कुत्र नोत्कर्षलाभ' इति। उदितौ उत्पन्नौ। किञ्च, यमौ च लोकस्य अन्यौ यमौ इव। यमौ युगपदेकगर्भधृतौ दितेस्सुतौ। लोकस्य जनस्य। अन्यौ वैवस्वतादपरौ। यमावन्तकौ। इवेति सम्भावनायाम्। अभवता मिति शेष । अत्र हेतु —सन्ध्यासमुत्पादनकष्टचेष्टौ इति। सन्ध्यायां समुत्पादनेन बीजनिषेकेण कष्टा क्रूरा चेष्टा व्यापारो ययोस्तौ। दिति किल सपत्नीपुत्रसमृद्ध्या सन्तप्तहृदया सती काश्यप समर्तार सन्ध्यायामग्निमिष्ट्वा अभ्यगार आसीन कामा तुरा मयि पुत्रमुत्पादयेति प्रार्थितवती, तेन च सन्ध्येय क्षण प्रतिपाल्यतामित्युक्ताऽपि मन्मथोन्मथितचित्ता बलात्पर्वाससो जग्राह। स च तया सहोपविवेश इति भाग वताक्तकथाऽत्रानुसन्धेया ॥

एतयोरसुरयोर्नामनी चेष्टितानि चाह—

हिरण्यपूर्व कशिपु किलैक परो हिरण्याक्ष इति प्रतीत ।
उभौ भवन्नाथमशेषलोक रुषा न्यरुन्धां निजवासनान्धौ ॥ ८ ॥

हिरण्यपूर्व इति॥ एक हिरण्यपूर्व कशिपु किल। एक तयोर्ज्येष्ठ हिर ण्यपूर्व कशिपु हिरण्यकशिपु । किल प्रसिद्ध इत्यर्थ । पर हिरण्याक्ष इति प्रतीत । पर अनुज । प्रतीत प्रसिद्ध । उभौ भवन्नाथम् अशेषलोक रुषा न्य रुन्धाम्। उभौ हिरण्यकशिपुर्हिरण्याक्षश्च। भवान् नाथो रक्षिता यस्य ■ भवन्नाथम्। अशेषलोक समस्तलोकवासिनो जनान्। रुषा कोपेन। न्यरुन्धां पीडयामासतु । अत्र हेतु —निजवासनान्धौ इति। निजवासनया आसुरेण स्वभावेन अन्धौ विभ्र शितपरमार्थदर्शनौ ॥

अथ हिरण्याक्षस्य प्रवृत्तिं वर्णयति—

तयोर्हिरण्याक्षमहासुरेन्द्रो रणाय धावन्ननवाप्तवैरी ।
भवत्प्रियां क्ष्मां सलिले निमज्य चचार गर्वाद्विनदन् गदावान् ॥ ९ ॥

तयोरिति ॥ तयोः हिरण्याक्षमहासुरेन्द्रः रणाय धावन् अनवाप्तवैरी भवतः प्रियां क्ष्मां सलिले निमज्य गदावान् गर्वात् विनदन् चचार । तयोः असुरयोर्मध्ये हिरण्याक्षमहासुरेन्द्रः हिरण्याक्षनामा महानसुरेन्द्रोऽसुरश्रेष्ठः । रणाय युद्धाय । धावन् त्रिलोक्यामितस्ततः पलायमानः । अनवाप्तः अप्राप्तो वैरी प्रतिद्वन्द्वी येन सः अनवाप्तवैरी । देवानपि प्रतिद्वन्द्वितया अलभमान इत्यर्थः । भवत्प्रियां भवतः प्रियतमाम् । अनेन भगवतो महान् परिभवः कृत इति ध्वन्यते । क्ष्मां भूमिम् । सलिले जले । निमज्य सलिलान्तर्विन्यस्येत्यर्थः । गदावान् अंसन्यस्तमहागदः विनदन् गर्जन् चचार बभ्राम ॥

हिरण्याक्षो भगवन्तं श्रीनारायणं योद्धुकामो गवेषयंश्चचारेत्याह—

ततो जलेशात् सदृशं भवन्तं निशम्य बभ्राम गवेषयंस्त्वाम् ।
भक्तैकदृश्यः स कृपानिधे त्वं निरुन्धि रोगान् मरुदालयेश ॥ १० ॥

तत इति ॥ ततः जलेशात् भवन्तं सदृशं निशम्य त्वां गवेषयन् बभ्राम । ततः अनन्तरम् । हिरण्याक्ष इति पूर्वस्मादनुवृत्त्य योजनीयम् । जलेशात् रणायाहूताद्वरुणात् । सदृशं तुल्यपराक्रमम् । निशम्य श्रुत्वा । त्वां समाधिगम्यं भवन्तम् । गवेषयन् युद्धायान्वेषयन् । अहो तस्य मौर्ख्यमिति भावः । बभ्राम इतस्ततश्चचार । अथ प्रार्थयते—हे कृपानिधे मरुदालयेश भक्तैकदृश्यः सः त्वं रोगान् निरुन्धि इति । कृपानिधे करुणाम्बुधे । मरुदालयेश गुरुवायुपुरनाथ । भक्तैकदृश्यः केवलं भक्तैः प्रह्लादनारदादिभिरेव द्रष्टुं शक्यः । न तु विद्वेषिभिरित्यर्थः । ननु 'भवन्तं सम्प्रापद्धरणिधरमुद्यन्तमुदकात्' इत्युपरिष्टाद्वक्ष्यमाणेन सह विरोध इति चेन्न, हिरण्याक्षोऽपि विद्वेषेणापि भगवति मनसो निवेशनात् भक्त एव । येन केनाप्युपायेन भगवति मनसः स्थिरीकरणमपि भक्तिरित्युच्यते । तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्, 'गोप्यः कामात् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः' इत्याद्युक्तेः । सः जगद्रक्षकत्वेन प्रसिद्धः । रोगान् ममानन्यशरणस्य बाह्यानाभ्यन्तरांश्चामयोघान् । निरुन्धि निवारय ॥

इति सनकादिवैकुण्ठप्रवेश-जयविजयशाप-हिरण्यकशिपुहिरण्याक्षोत्पत्तिवर्णनम्

एकादशं दशकम्

भवत्पार्षदौ । काश्यपात् तदाख्यान्मुने । दितौ दित्याख्यायां तद्भार्यायाम् । सुरारिवीरावसुरश्रेष्ठौ । भवत्पार्षदतया तयोः श्रेष्ठत्वमिति भावः । वक्ष्यति च— 'त्वद्भक्तानां कुत्र नोत्कर्षलाभः' इति । उदितौ उत्पन्नौ । किञ्च, यमौ च लोकस्य अन्यौ यमौ इव । यमौ युगपदेकगर्भधृतौ दितेस्सुतौ । लोकस्य जनस्य । अन्यौ वैवस्वतादपरौ । यमावन्तकौ । इवेति सम्भावनायाम् । अभवतामिति शेषः । अत्र हेतुः—सन्ध्यासमुत्पादनकष्टचेष्टौ इति । सन्ध्यायां समुत्पादनेन बीजनिषेकेण कष्टा क्रूरा चेष्टा व्यापारो ययोस्तौ । दितिः किल सपत्नीपुत्रसमृद्ध्या सन्तप्तहृदया सती काश्यपं स्वभर्तारं सन्ध्यायामग्निमिष्ट्वा अग्न्यगारे आसीनं कामातुरा मयि पुत्रमुत्पादयेति प्रार्थितवती, तेन च सन्ध्येयं क्षणं प्रतिपाल्यतामित्युक्ताऽपि मन्मथोन्मथितचित्ता बलात्तद्वासो जग्राह । स च तया सहोपविवेश इति भागवताक्तकथाऽत्रानुसन्धेया ॥

एतयोरसुरयोर्नामनी चेष्टितानि चाह—

हिरण्यपूर्वः कशिपुः किलैकः परो हिरण्याक्ष इति प्रतीतः ।
उभौ भवन्नाथमशेषलोकं रुषा न्यरुन्धां निजवासनान्धौ ॥ ८ ॥

हिरण्यपूर्व इति ॥ एकः हिरण्यपूर्वः कशिपुः किल । एकः तयोर्ज्येष्ठः हिरण्यपूर्वः कशिपुः हिरण्यकशिपुः । किल प्रसिद्ध इत्यर्थः । परः हिरण्याक्ष इति प्रतीतः । परः अनुजः । प्रतीतः प्रसिद्धः । उभौ भवन्नाथम् अशेषलोकं रुषा न्यरुन्धाम् । उभौ हिरण्यकशिपुर्हिरण्याक्षश्च । भवान् नाथो रक्षिता यस्य तं भवन्नाथम् । अशेषलोकं समस्तलोकवासिनो जनान् । रुषा कोपेन । न्यरुन्धां पीडयामासतुः । अत्र हेतुः—निजवासनान्धौ इति । निजवासनया आसुरेण स्वभावेन अन्धौ विभ्रंशितपरमार्थज्ञानौ ॥

अथ हिरण्याक्षस्य प्रवृत्तिं वर्णयति—

तयोर्हिरण्याक्षमहासुरेन्द्रो रणाय धावन्ननवाप्तवैरी ।
भवत्प्रियां क्ष्मां सलिले निमज्य चचार गर्वाद्विनदन् गदावान् ॥ ९ ॥

तयोरिति ॥ तयोः हिरण्याक्षमहासुरेन्द्रः रणाय धावन् अनवाप्तवैरी भवतः प्रियां क्ष्मां सलिले निमज्य गदावान् गर्वात् विनदन् चचार। तयोः असुरयोर्मध्ये हिरण्याक्षमहासुरेन्द्रः हिरण्याक्षनामा महानसुरेन्द्रोऽसुरश्रेष्ठः। रणाय युद्धाय। धावन् त्रिलोक्यामितस्ततः पलायमानः। अनवाप्तः अप्राप्तो वैरी प्रतिद्वन्द्वी येन सः अनवाप्तवैरी। देवानपि प्रतिद्वन्द्वितया अलभमान इत्यर्थः। भवत्प्रियां भवतः प्रियतमाम्। अनेन भगवतो महान् परिभवः कृत इति ध्वन्यते। क्ष्मां भूमिम्। सलिले जले। निमज्य सलिलान्तर्विन्यस्येत्यर्थः। गदावान् अंसन्यस्तमहागदः विनदन् गर्जन् चचार बभ्राम ॥

हिरण्याक्षो भगवन्तं श्रीनारायणं योद्धुकामो गवेषयंश्चचारेत्याह—

**ततो जलेशात् सदृशं भवन्तं निशम्य बभ्राम गवेषयंस्त्वाम् ।**
**भक्तैकदृश्यः स कृपानिधे त्वं निरुन्धि रोगान् मरुदालयेश ॥ १० ॥**

तत इति ॥ ततः जलेशात् भवन्तं सदृशं निशम्य त्वां गवेषयन् बभ्राम। ततः अनन्तरम्। हिरण्याक्ष इति पूर्वस्मादनुवृत्त्य योजनीयम्। जलेशात् रणायाहूताद्वरुणात्। सदृशं तुल्यपराक्रमम्। निशम्य श्रुत्वा। त्वां समाधिगम्यं भवन्तम्। गवेषयन् युद्धायान्वेषयन्। अहो तस्य मौर्ख्यमिति भावः। बभ्राम इतस्ततश्चचार। अथ प्रार्थयते—हे कृपानिधे मरुदालयेश भक्तैकदृश्यः सः त्वं रोगान् निरुन्धि इति। कृपानिधे करुणाम्बुधे। मरुदालयेश गुरुवायुपुरनाथ। भक्तैकदृश्यः केवलं भक्तैः प्रह्लादनारदादिभिरेव द्रष्टुं शक्यः। न तु विद्वेषिभिरित्यर्थः। ननु 'भवन्तं सम्प्रापद्धरणिधरमुद्यन्तमुदकात्' इत्युपरिष्टाद्वक्ष्यमाणेन सह विरोध इति चेन्न, हिरण्याक्षोऽपि विद्वेषेणापि भगवति मनसो निवेशनात् भक्त एव। येन केनाप्युपायेन भगवति मनसः स्थिरीकरणमपि भक्तिरित्युच्यते। तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्, 'गोप्यः कामात् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः' इत्याद्युक्तेः। सः जगद्रक्षकत्वेन प्रसिद्धः। रोगान् ममानन्यशरणस्य बाह्यानाभ्यन्तरांश्चामयौघान्। निरुन्धि निवारय ॥

इति सनकादिवैकुण्ठप्रवेश-जयविजयशाप-हिरण्यकशिपुहिरण्याक्षोत्पत्तिवर्णनम्

एकादशं दशकम्

## द्वादशदशकम् ॥

अथ भगवतः श्रीवराहावतारं वर्णयितुं प्रथमं तत्प्रान्तरीयकतया स्थितां मनोः प्रवृत्तिमाह—

स्वायम्भुवो मनुरथो जनसर्गशीलो
दृष्ट्वा महीमसमये सलिले निमग्नाम् ।
स्रष्टारमाप शरणं भवदङ्घ्रिसेवा-
तुष्टाशयं मुनिजनैः सह सत्यलोके ॥ १ ॥

स्वायम्भुव इति ॥ अथो जनसर्गशीलः स्वायम्भुवः मनुः महीम् असमये सलिले निमग्नां दृष्ट्वा मुनिजनैः सह सत्यलोके भवदङ्घ्रिसेवातुष्टाशयं स्रष्टारं शरणमाप । अथो अनन्तरम् । हिरण्याक्षे पृथिवीं कर्णाभरणीकृत्य जले निमज्जति सतीत्यर्थः । जनानां प्रजानां सर्गः उत्पादनं शीलं स्वभावो यस्य सः जनसर्गशीलः । स्वायम्भुवस्तदाख्यः । महीं भूमिम् । असमये अनासन्नेऽपि प्रलयकाले । सलिले जले । निमग्नां नितरां मग्नाम् । दृष्ट्वा विलोक्य । मुनिजनैः महर्षिसङ्घैः । सह समम् । सत्यलोके । स्थितमिति शेषः । भवतः अङ्घ्रिसेवया पादारविन्दभजनेन तुष्टस्सन्तुष्टः आशयो हृदयं यस्य तं भवदङ्घ्रिसेवातुष्टाशयम् । स्रष्टारं स्वपितरं ब्रह्माणम् । आप प्राप ॥

मनोर्विज्ञापनां ब्रह्मणः कृत्यञ्चाह—

कष्टं प्रजाः सृजति मय्यवनिर्निमग्ना
स्थानं सरोजभव कल्पय तत् प्रजानाम् ।
इत्येवमेष कथितो मनुना स्वयम्भू-
रम्भोरुहाक्ष तव पादयुगं व्यचिन्तीत् ॥ २ ॥

कष्टमिति ॥ हे अम्भोरुहाक्ष इत्येवं मनुना कथितः एषः स्वयम्भूः तव पादयुगं व्यचिन्तीत् । अम्भोरुहाक्ष पङ्कजाक्ष । इत्येवम् अनेन प्रकारेण ।

कथितो विज्ञापितः । एषः भगवन्नाभिकमले जातः । स्वयम्भूर्ब्रह्मा । तव श्रीनारायणस्य । पादयुगं चरणकमलद्वन्द्वम् । व्यचिन्तीत् चिन्तयामास । मनोविज्ञापनप्रकारमाह—हे सरोजभव मयि प्रजाः सृजति अवनिः निमग्ना कष्टम् । तत् प्रजानां स्थानं कल्पय इति । सरोजभव ब्रह्मन् । सृजति सृष्टवति सति । अवनिर्भूमिः । निमग्ना प्रलयाम्भसि नितरां मग्ना । तत् तस्मात् । स्थानं वासस्थानम् । कल्पय विधेहि । अन्यथाऽहं भवन्निदेशं कर्तुमसमर्थ इति भावः ॥

अनन्तरं भगवतः श्रीवराहावतारमाह—

> हा हा विभो जलमहं न्यपिबं पुरस्ता-
> 　द्यापि मज्जति मही किमहं करोमि ।
> इत्थं त्वदङ्घ्रियुगलं शरणं यतोऽस्य
> 　नासापुटात् समभवः शिशुकोलरूपी　　　　॥ ३ ॥

**हा हेति ॥** त्वम् इत्थं त्वदङ्घ्रियुगलं शरणं यतः अस्य नासापुटात् शिशुकोलरूपी समभवः । इत्थमनेन प्रकारेण । त्वदङ्घ्रियुगलं तव चिन्तनानन्तरमेव हृदये प्रादुर्भवतः श्रीहरेः अङ्घ्रियुगलं पादारविन्दद्वन्द्वम् । यतः प्राप्तवतः । अस्य ब्रह्मणः । नासापुटात् नासिकारन्ध्रात् । शिशोः कोलस्य वराहस्य रूपम् आकृतिरस्यास्तीति शिशुकोलरूपी । वराहशावकाकारस्सन्नित्यर्थः । समभवः सञ्जातः । इत्थमित्यनेनोक्तं प्रकारमाह—हा हा विभो अहं पुरस्तात् जलमपिबम्, अद्य अपि मही मज्जति, अहं किं करोमि इति । हा हेति द्विरुक्तिः खेदातिशये । विभो शक्तिसम्पन्न । पुरस्तात् सृष्टेः पूर्वम् । अपिबं पृथिवीनिवेशनाय पीतवानस्मि । अद्यापि इदानीमपि । तुच्छीकृतेऽपि जल इत्यर्थः । मही भूमिः । अहं सर्गे नियुक्तः सन्नपि । किं करोमि । अस्मिन् कर्मण्यस्माकं त्वमेव शरणमिति भावः ॥

अथ क्रमाद्भगवान् वराहमूर्तिर्ववृध इत्याह द्वाभ्याम्—

> अङ्गुष्ठमात्रवपुरुत्पतितः पुरस्तात्
> 　भूयोऽथ कुम्भिसदृशः समजृम्भथास्त्वम् ।

अग्रे तथाविधमुदीक्ष्य भवन्तमुच्चै-
　　र्विस्मेरतां विधिरगात् सह सूनुभिः स्वैः ॥　　　॥ ४ ॥

अङ्गुष्ठमात्रवपुरिति ॥ त्व पुरस्तात् अङ्गुष्ठमात्रवपु उत्पतित । अथ भूय कुम्भिसदृश समजृम्भथा । पुरस्तात् पूर्वम् । अङ्गुष्ठमात्रमङ्गुष्ठ परिमाण वपु शरीर यस्य सोऽङ्गुष्ठमात्रवपु । उत्पतित ब्रह्मणो नासापुटात् । अथ अनन्तरम् । भूय पुनरपि । कुम्भिसदृश गजतुल्य । समजृम्भथा वृद्धिषे । विधि अग्रे तथाविधम् उच्चै भवन्तमुदीक्ष्य स्वै सूनुभि सह विस्मेरतामगात् । विधिर्ब्रह्मा । अग्रे नभसि । तथाविध तादृग्रूपम् । उच्चैरुन्नतम् । भवन्त श्रीवराहमूर्तिम् । उदीक्ष्य मुखान्युन्नमय्य दृष्ट्वा । स्वैरात्मीयै । सूनुभि पुत्रैर्मरीच्यादिभि । सह समम् । विस्मेरता विस्मितत्वम् । विस्मयमित्यर्थ । विशिष्टाद्भावप्रत्ययो विशेषणमभिधत्त इति न्यायात् । अगात् प्राप ॥

कोऽसावचिन्त्यमहिमा किटिरुत्थितो मे
　　घोणापुटात् किमु भवेदजितस्य माया ।
इत्थं विचिन्तयति धातरि शैलमात्रः
　　सद्यो भवन् किल जगर्जिथ घोरघोरम्　　　॥ ५ ॥

कोसाविति ॥ त्व धातरि इत्थ विचिन्तयति सद्य शैलमात्र भवन् घोरघोर जगर्जिथ किल । धातरि ब्रह्मणि । इत्थमनेन प्रकारेण । विचिन्तयति विशेषेण चिन्तयति सति । सद्यो झटिति । शैलमात्र शैलद्वयसवपु । भवन् परिणत । घोरघोरमतिशयेन घोरम् । जगर्जिथ गर्जन कृतवान् । किलेति वार्तायाम् । धातुश्चिन्तनप्रकारमाह—मे घोणापुटात् उत्थित अचिन्त्यमहिमा असौ किटि क, अजितस्य माया भवेत् किमु इति । मे मम । घोणापुटात् नासारन्ध्रात् । उत्थित उत्पन्न । अचिन्त्य अपरिच्छेद्यो महिमा शरीरमहत्त्व यस्य सोऽचिन्त्यमहिमा । अप्रमेयप्रभाव इति वा । असौ पुरो दृश्यमान । किटि वराह । अजितस्य विष्णो । किमिति वितर्के । विष्णुर्भगवानेव मायावराह रूपेणावतीर्ण किमित्यर्थ ॥

अथ भगवतः श्रीवराहमूर्तेः पृथिव्युद्धरणोपक्रममाह–

तं ते निनादमुपकर्ण्य जनस्तपःस्थाः
सत्यस्थिताश्च मुनयो नुनुवुर्भवन्तम् ।
तत्स्तोत्रहर्षुलमनाः परिणद्य भूय-
स्तोयाशयं विपुलमूर्तिरवातरस्त्वम्       ॥ ६ ॥

तमिति ॥ जनस्तपःस्थाः सत्यस्थिताः च मुनयः ते तं निनादमुपकर्ण्य भवन्तं नुनुवुः । जनस्तपःस्थाः जनलोकतपोलोकवासिनः । सत्यस्थिता सत्यलोकवासिनः । चकारस्समुच्चये । मुनयः ऋषयः । ते तव । तं तथा घोरघोरम् । निनादं गर्जितम् । उपकर्ण्य श्रुत्वा । भवन्तं श्रीवराहमूर्तिम् । नुनुवुस्तुष्टुवुः । त्वं तत्स्तोत्रहर्षुलमनाः भूयः परिणद्य विपुलमूर्तिः तोयाशयम् अवातरः । तेषामृषीणां स्तोत्रेण स्तुत्या हर्षुलं प्रसन्नं मनश्चेतो यस्य सः तत्स्तोत्रहर्षुलमनाः सन् । भूयः पुनरपि । परिणद्य तेषां प्रसादाय गर्जन्नित्यर्थः । विपुला विस्तृता मूर्तिश्शरीरं यस्य स. विपुलमूर्तिः । तोयाशयं प्रलयाब्धिम् । अवातरः अवतीर्णोऽभूः ॥

प्रलयाब्धिमवतरतः श्रीवराहमूर्तेः स्वरूपं वर्णयति—

ऊर्ध्वप्रसारिपरिधूम्रविधूतरोमा
प्रोत्क्षिप्तवालधिरवाङ्मुखघोरघोणः ।
तूर्णप्रदीर्णजलदः परिघूर्णदक्ष्णा
स्तोतॄन् मुनीन् शिशिरयन्नवतेरिथ त्वम्       ॥ ७ ॥

ऊर्ध्वप्रसारीति ॥ त्वम् ऊर्ध्वप्रसारिपरिधूम्रविधूतरोमा प्रोत्क्षिप्तवालधिः अवाङ्मुखघोरघोणः तूर्णप्रदीर्णजलदः परिघूर्णदक्ष्णा स्तोतॄन् मुनीन् शिशिरयन् अवतेरिथ । ऊर्ध्वं प्रसारीणि प्रसरणशीलानि परिधूम्राणि कृष्णलोहितानि विधूतानि कम्पितानि रोमाणि यस्य सः ऊर्ध्वप्रसारिपरिधूम्रविधूतरोमा । प्रोत्क्षिप्तवालधिः उन्नीतपुच्छः । अवाङ्मुखा अधःकृता घोरा भयङ्करा घोणा नासिका यस्य

स अवाङ्मुखघोरघाण । तूर्णम् अतिलघु प्रदीर्णा शकलीकृता जलदा मेघा येन स तूर्णप्रदीर्णजलद । एतद्विशेषणचतुष्टयमवतरत श्रीवराहमूर्ते स्वरूपकीर्तनपरम् । परिपूर्णदक्ष्णा परिपूर्णता मुनीनामवलोकनार्थं भ्रमता अक्ष्णा विलोचनेन । स्तोतॄन् स्तुवत । मुनीनृषीन् । शिशिरयन्नानन्दयन् । अवतेरिथ अवातर ॥

मत्स्याब्धिमवतीर्णस्य श्रीवराहस्य प्रवृत्तिमाह—

अन्तर्जलं तदनु सङ्कुलनक्रचक्रं
भ्राम्यत्तिमिङ्गिलकुलं कलुषोर्मिमालम् ।
आविश्य भीषणरवेण रसातलस्था-
नाकम्पयन् वसुमतीमगवेषयस्त्वम् ॥ ८ ॥

अन्तर्जलमिति ॥ त्व तदनु सङ्कुलनक्रचक्र भ्राम्यत्तिमिङ्गिलकुल कलुषोर्मिमालम् अन्तर्जलमाविश्य भीषणरवेण रसातलस्थान् आकम्पयन् वसुमतीमगवेषय । तदनु जलप्रवेशानन्तरम् । सङ्कुलानि वराहमूर्तिमवलोक्य भयेनेतस्ततो भ्रमन्ति नक्राणा ग्राहाणा चक्राणि समूहा यस्मिंस्तत् भ्राम्यत्तिमिङ्गिलकुलम् । कलुषा आविला ऊर्मिमाला वीचिमाला यस्मिंस्तत् कलुषोर्मिमालम् । अन्तर्जलं जलमध्यम् । पूर्वकाय इत्यादिवदेकदेशिसमास । आविश्य प्रविश्य । भीषणरवेण भीषणेन भयङ्करेण रवेण शब्देन । रसातले पाताले तिष्ठन्तीति रसातलस्था तान् । आकम्पयन् । आ समन्तात् कम्पयन् । वसुमती निजप्रिया भूमिम् । अगवेषय अन्वेषणमकरो ॥

अथ श्रीवराहमूर्तेर्भगवतो वसुधोद्धारमाह—

दृष्ट्वाऽथ दैत्यहतकेन रसातलान्ते
संवेशिता झटिति कूटकिटिर्विभो त्वम् ।
आपातुकानविगणय्य सुरारिखेटान्
दंष्ट्राङ्कुरेण वसुधामदधा सलीलम् ॥ ९ ॥

**दृष्ट्वेति** ॥ हे विभो कूटकिटिः त्वम् अथ दैत्यहतकेन रसातलान्ते संवेशितां वसुधां दृष्ट्वा आपातुकान् सुरारिखेटान् अविगणय्य सलीलं दंष्ट्राङ्कुरेण अदधाः। विभो शक्तिसम्पन्न। कूटकिटिर्मायावराहः। अथ अन्वेषणानन्तरम्। दैत्यहतकेन असुराधमेन हिरण्याक्षेण। रसातलान्ते पातालतले। संवेशितां विन्यस्ताम्। वसुधां भूमिम्। दृष्ट्वा विलोक्य। आपातुकानागच्छतः। सुरारिखेटान् असुरापसदान्। अविगणय्य तृणवदगणयित्वा। लीलया सह वर्तत इति सलीलम्। एतच्च क्रियाविशेषणम्। दंष्ट्राङ्कुरेण दशनाग्रेण। अदधाः उद्धृतवानसि॥

अथ प्रकृतमुपसंहरन् भगवन्तं प्रार्थयते—

अभ्युद्धरन्नथ धरां दशनाग्रलग्न-
मुस्ताङ्कुराङ्कित इवाधिकपीवरात्मा।
उद्धूतघोरसलिलाज्जलधेरुदञ्चन्
क्रीडावराहवपुरीश्वर पाहि रोगात् ॥ १० ॥

**अभ्युद्धरन्निति** ॥ हे क्रीडावराहवपुः ईश्वर अथ धरामभ्युद्धरन् उद्धूतघोरसलिलात् जलधेः उदञ्चन् त्वं रोगात् पाहि। क्रीडावराहवपुः क्रीडार्थमङ्गीकृतवराहशरीर। अथ धरणीधारणानन्तरम्। धरां भूमिम्। अभ्युद्धरन् जलादूर्ध्वमुत्क्षिपन्। उद्धूतं क्षुब्धं घोरं भयङ्करं सलिलं जलं यस्मिंस्तस्मादुद्धूतघोरसलिलात्। जलधेः प्रलयाब्धेः। उदञ्चन् उत्थितः। रोगात् बाह्यादाभ्यन्तराच्च। पाहि मामनन्यशरणं त्रायस्वेत्यर्थः। पृथिवीमभ्युद्धरन्तं श्रीवराहमूर्तिमुत्प्रेक्षते—दशनाग्रलग्नमुस्ताङ्कुराङ्कितः इव इति। दशनाग्रे दंष्ट्राग्रे लग्नेन सक्तेन मुस्ताङ्कुरेण अङ्कितः चिह्नितः। उत्प्रेक्षाहेतुमाह—अधिकपीवरात्मा इति। अधिकमत्यर्थं पीवरः पीनः आत्मा शरीरं यस्य सोऽधिकपीवरात्मा। अनयोत्प्रेक्षया श्रीवराहस्य पृथिव्युद्धरणे श्रमाभावो ध्वन्यते॥

इति वराहावतार-भूम्युद्धरणवर्णनं

द्वादशं दशकम्

## त्रयोदशदशकम् ॥

एवं भगवतो धरण्युद्धरणमुपवर्ण्यानन्तरं नारदस्य हिरण्याक्षवधसाहाय्यं वर्णयति—

हिरण्याक्षं तावद्वरद भवदन्वेषणपरं
चरन्तं सांवर्ते पयसि निजजङ्घापरिमिते ।
भवद्भक्तो गत्वा कपटपटुधीर्नारदमुनिः
शनैरूचे नन्दन् दनुजमपि निन्दंस्तव बलम् ॥ १ ॥

हिरण्याक्षमिति ॥ हे वरद भवद्भक्तः कपटपटुधी· नारदमुनिः तावत् भवदन्वेषणपरं निजजङ्घापरिमिते सांवर्ते पयसि चरन्तं हिरण्याक्षं गत्वा शनैः दनुजं नन्दन् तव बलं निन्दन् अपि ऊचे। वरद भक्ताभीष्टवरद। भवति भक्तो भवद्भक्त.। एतेन भवन्निन्दां कुर्वन्नपि भवद्धितकारितया न तस्यामङ्गलस्पर्श इति सूचितम्। कपटे जगदनुग्रहायाङ्गीकृते कापट्ये पटुः अतिनिपुणा धीर्बुद्धि· यस्य सः कपटपटुधीः। तावत् तव धरण्युद्धरणसमकालमेव। भवदन्वेषणपरं भवतोऽन्वेषणपरं मार्गणपरम्। त्वां गवेषयन्तमित्यर्थः। निजजङ्घापरिमिते निजया स्वीयया जङ्घया परिमिते जङ्घाप्रमाणे। सांवर्ते संवर्तसम्बन्धिनि। संवर्त. प्रलय·। पयस्युदके। चरन्तं सञ्चरन्तम्। गत्वा प्राप्य। शनैर्मन्दम्। दनुजमसुरम्। नन्दन् स्तुवन्। बलं पराक्रमम्। ऊचे उक्तवान् ॥

वचनप्रकारमसुरचेष्टितं चाह—

स मायावी विष्णुर्हरति भवदीयां वसुमतीं
प्रभो कष्टं कष्टं किमिदमिति तेनाभिगदितः ।
नदन् क्वासौ क्वासाविति स मुनिना दर्शितपथो
भवन्तं सम्प्रापद्धरणिधरमुद्यन्तमुदकात् ॥ २ ॥

स इति ॥ स. धरणिधरम् उदकादुद्यन्तं भवन्तं सम्प्रापत्। स. हिरण्याक्ष.। धरणिधरं पृथिवीं वहन्तम्। उदकात् प्रलयाब्धेः। उद्यन्तमुद्गच्छन्तम्।

भवन्तं श्रीवराहम्। सम्प्रापत् प्राप्तवान्। ननु कथं स भवन्तं तथाविधं ज्ञातवानिति चेत्तत्राह—मुनिना दर्शितपथः इति। मुनिना श्रीनारदेन। दर्शितः इत इतो भवानिति प्रदर्शितः पन्था मार्गो यस्य सः दर्शितपथः सन् । मुनेर्मार्गप्रदर्शने हेतुमाह—नदन् क्व असौ क्व असौ इतीति। नदन् सिंहनादं कुर्वन्। असौ विष्णुः। क्व कुत्र वर्तते। रोषावेशसम्भ्रमाद्विरुक्तिः। इति अनेन प्रकारेण। पृष्टेनेति शेषः। प्रश्नहेतुं प्रदर्शयति—इति तेन अभिगदितः इति। इति अनेन प्रकारेण। तेन मुनिना। अभिगदितः उक्तः। वचनेन प्रोत्साहित इत्यर्थः। इतिशब्दार्थमाह—हे प्रभो विष्णुः भवदीयां वसुमतीं हरति कष्टं कष्टम्। इदं किमिति। प्रभो शक्तिसम्पन्न। भवदीयां भवता ब्रह्मणोऽपहृत्य रसातले निवेशिताम्। वसुमतीमित्यन्वर्थम्। समस्तसम्पत्समृद्धिमतीं भूमिमित्यर्थः। अनेनोपेक्षानौचित्यं व्यज्यते। हरति रक्षकानप्यगणयित्वाऽपहरति। कष्टं कष्टम्। अशक्ता अपि शक्तिमन्तं तिरस्कुर्वन्तीत्येतदति कष्टमित्यर्थः। इदम् एतदुपेक्षणं किम्। शक्तानामिदमयुक्तमिति भावः। ननु कुतो न दृश्यते पृथिवीं हरन् विष्णुरिति चेत्तत्राह—मायावी इति। मायया वराहरूपं दधान इत्यर्थः॥

अथ भगवतो युद्धं वर्णयति—

अहो आरण्योऽयं मृग इति हसन्तं बहुतरै-
र्दुरुक्तैर्विध्यन्तं दितिसुतमवज्ञाय भगवन्।
महीं दृष्ट्वा दंष्ट्राशिरसि चकितां स्वेन महसा
पयोधावाधाय प्रसभमुदयुङ्क्था मृधविधौ ॥ ३ ॥

अहो इति॥ हे भगवन् त्वं दितिसुतमवज्ञाय स्वेन महसा महीं पयोधौ आधाय प्रसभं मृधविधौ उदयुङ्क्थाः। भगवन् ऐश्वर्यादिसम्पन्न। दितिसुतं दितेः प्रियं पुत्रं हिरण्याक्षम्। न तु काश्यपस्य प्रियपुत्रम्। अवज्ञाय अधिक्षिप्य। स्वेन आत्मीयेन। महसा योगैश्वर्येण। महीं भूमिम्। पयोधौ समुद्रे। आधाय विन्यस्य। प्रसभं बलात्। मृधविधौ युद्धकर्मणि। उदयुङ्क्थाः सन्नाहं चकृषे।

दितिसुताधिक्षेपप्रकारं प्रदर्शयति—इति हसन्तं बहुतरैः दुरुक्तैः विध्यन्तमिति। इति अनेन प्रकारेण। हसन्तं परिहसन्तम्। बहुतरैः बहुविधैः। दुरुक्तैः अनया गदया तव शिरस्यभिहत्य हनिष्यामीत्यादिभिर्वाग्भिः। विध्यन्तं प्रहरन्तम्। हसनप्रकारमाह—अहो अयमारण्यः मृगः इति। अहो कष्टमेतत्। अयम् अनेन मुनिना मम प्रतिद्वन्द्वितया दर्शितः। आरण्यः अरण्यवासी। मृगः सूकर इत्यर्थः। मह्याः पयोधावाधाने हेतुमाह—दंष्ट्राशिरसि चकितां दृष्ट्वा इति। दंष्ट्राशिरसि दंष्ट्राग्रे। चकितां मत्प्रियस्यानेन सह सङ्गरे सत्यहमितो निपत्य प्रलयाम्भसि निमज्जेयमिति विचिन्त्य भीताम्। दृष्ट्वा विलोक्य॥

गदापाणौ दैत्ये त्वमपि हि गृहीतोन्नतगदो
नियुद्धेन क्रीडन् घटघटरवोद्घुष्टवियता।
रणालोकौत्सुक्यान्मिलति सुरसङ्घे द्रुतममुं
निरुन्ध्याः सन्ध्यातः प्रथममिति धात्रा जगदिषे ॥ ४ ॥

गदापाणाविति॥ दैत्ये हि गदापाणौ त्वमपि गृहीतोन्नतगदः घटघट रवोद्घुष्टवियता नियुद्धेन क्रीडन् रणालोकौत्सुक्यात् सुरसङ्घे मिलति सति धात्रा जगदिषे। दैत्ये हिरण्याक्षे। हीति त्वर्थे। गदापाणौ गदां गृहीतवति। यतो गदां गृहीतवांस्तत इत्यर्थः। गृहीता स्मृतमात्र एव कराम्बुजं प्राप्ता धृता उन्नता महती गदा कौमोदकी येन स गृहीतोन्नतगदः। घटघटरवेण परस्परगदा घातोत्थेन शब्दविशेषेण। घटघटेति शब्दानुकरणम्। उद्घुष्टमुच्चैः शब्दाय मानं वियदम्बरं यस्य तेन घटघटरवोद्घुष्टवियता। नियुद्धेन द्वन्द्वयुद्धेन। क्रीडन् खेलन्। अनेन भगवतोऽनायासो ध्वन्यते। रणालोकौत्सुक्यात् रणा लोको युद्धदर्शनं तदौत्सुक्यात् कौतुकातिशयेन। भगवतः श्रीवराहस्य पराक्रम दर्शनकौतुकातिशयेनेत्यर्थः। सुरसङ्घे देवसङ्घे। मिलति अहमहमिकया ससम्मर्दं मिलति। इति अनेन प्रकारेण। धात्रा ब्रह्मणा। जगदिषे विज्ञापित। विज्ञापनप्रकारमाह—सन्ध्यातः प्रथमं द्रुतममुं निरुन्ध्याः इति। सन्ध्यातः सन्ध्या कालात्। प्रथमं पूर्वम्। द्रुतं झटिति। अमुमसुराधमम्। निरुन्ध्याः निगृहाण। अन्यथाऽयं सन्ध्यायामन्तर्हितो भविष्यतीति भाव॥

गदोन्मर्दे तस्मिंस्तव खलु गदायां दितिभुवो
गदाघाताद्भूमौ झटिति पतितायामहह भोः ।
मृदुस्मेरास्यस्त्वं दनुजकुलनिर्मूलनचणं
महाचक्रं स्मृत्वा करभुवि दधानो रुरुचिषे ॥ ५ ॥

**गदोन्मर्द इति ॥** भोः त्वं तस्मिन् गदोन्मर्दे तव खलु गदायां दितिभुवः गदाघातात् झटिति भूमौ पतितायाम् अहह मृदुस्मेरास्यः दनुजकुलनिर्मूलनचणं महाचक्रं स्मृत्वा करभुवि दधानः रुरुचिषे । भो इति सम्बोधने । त्वं श्रीवराहमूर्तिः । तस्मिन् पूर्वोक्ते । गदोन्मर्दे गदायुद्धे । खल्विति त्वर्थे । दितिभुवो हिरण्याक्षस्य । गदाघातात् गदाप्रहरात् । झटिति शीघ्रम् । पतितायां सत्याम् । अहहेत्यद्भुते । मयि संरम्भयोगेनापि समाधिनैरन्तर्यं कुर्वतो मद्दासस्य सकृदपि समीहितं साधयिष्यामीति भगवता स्वयमेव पातिता गदा । अहो भगवतो भक्तवात्सल्यमिति भाव. । अत एवोक्तं मृदुस्मेरास्य इति । न गदापातात् खिन्नोऽभूः, किन्तु मृदुमन्दस्मितविकसितमुखाम्बुजस्सन्नित्यर्थः । दनुजकुलनिर्मूलनचणं दनुजकुलानां दानववंशाना निर्मूलनेन मूलच्छेदेन प्रसिद्धम् । महाचक्रं भगवतो वरायुधं सुदर्शनम् । स्मृत्वा विचिन्त्य । करभुवि करकमले । दधानः स्मृतमात्र एव सम्प्राप्तं वहन् । रुरुचिषे, शत्रोः कण्ठदेशं लक्षीकृत्योन्नमितं सुदर्शनं दक्षिणकरेण गृह्णंस्त्वं जाज्वल्यमानमहाचक्रतेजसा वैष्णवेन च तेजसा सञ्जातोत्कर्षं रूपं धृत्वा सकलजनचक्षुरिन्द्रियगोचरतामगम इत्यर्थः ॥

ततः शूलं कालप्रतिमरुषि दैत्ये विसृजति
त्वयि छिन्दत्येनत् करकलितचक्रप्रहरणात् ।
समारुष्टो मुष्ट्या स खलु वितुदंस्त्वां समतनोत्
गलन्माये मायास्त्वयि किल जगन्मोहनकरीः ॥ ६ ॥

**तत इति ॥** ततः कालप्रतिमरुषि दैत्ये शूलं विसृजति त्वयि करकलितचक्रप्रहरणात् एनत् छिन्दति सः खलु समारुष्टः मुष्ट्या त्वां वितुदन् गल

न्माये त्वयि जगन्मोहनकरी माया समतनोत् किल। तत यस्मात्तव करात् गदापातेऽप्यव्याकुलहृदयता वैष्णवतेज प्रादुर्भावश्च, तस्मादित्यर्थ। कालप्रतिम रुषि जगत्संहारकारिरुद्रवदत्यन्तकोपाकुले। अथवा अन्तकवदतिकुपिते। दैत्ये हिरण्याक्षे। विसृजति क्षिपवति सति। त्वयि श्रीवराहमूर्तौ। करकलितचक्रप्रहरणात् करेण कलितस्य धृतस्य चक्रस्य सुदर्शनस्य प्रहरणात् प्रहारेण। एनत् असुरेण क्षिप्त शूलम्। छिन्दति द्विधा कृतवति। समारुष्ट पूर्वस्मादप्यतिकुपित। मुष्ट्या मुष्टीकृताभ्यामुभाभ्या कराभ्याम्। वितुदन् दृढ वक्षसि प्रहरन्। ततोऽपीष्टा सिद्धया गलन्ती माया यस्मात् स गलन्माय तस्मिन्। यस्य माया ईश्वरस्य स्वरूपभूताऽपि पृथगिवात्मान प्रकाशयन्ती जगत्सृष्ट्यादि करोति, तादृशा इत्यर्थ। अनेन मायाप्रदर्शनस्य त्वयि निष्फलत्व सूचितम्। जगन्मोहनकरी त्वदितर जनसम्मोहसम्पादयित्री। समतनोत् प्रायुङ्क्त। किलेति वार्तायाम्॥

अथ हिरण्याक्षवधमाह द्वाभ्याम् —

भवच्चक्रज्योतिष्कणलवनिपातेन विधुते
ततो मायाचक्रे विततघनरोषान्धमनसम्।
गरिष्ठाभिर्मुष्टिप्रहृतिभिरभिघ्नन्तमसुर
स्वपादाङ्गुष्ठेन श्रवणपदमूले निरवधीः ॥ ७ ॥

भवच्चक्रेति॥ त्व भवच्चक्रज्योतिष्कणलवनिपातेन मायाचक्रे विधुते तत विततघनरोषान्धमनस गरिष्ठाभि मुष्टिप्रहृतिभि अभिघ्नन्तमसुर स्वपा दाङ्गुष्ठेन श्रवणपदमूले निरवधी। त्व श्रीवराहमूर्ति। भवच्चक्रज्योतिष्कण लवनिपातेन भवतश्चक्रस्य सुदर्शनस्य ज्योतिषस्तेजस-कण स्फुलिङ्गस्तस्य लवा लेशास्तस्य निपातेन प्रसरणेन। मायाचक्रे माया नामासुरीणा चक्रे समूहे। विधुते चलिते। यथा रवे प्रकाशलेशस्य पाते नैश तम, तद्वददर्शन गते सतीत्यर्थ। तत स्वारम्भवैफल्यानन्तरम्। विततो व्याप्तो घनो निविडस्तादृशेन रोषेणान्ध विवेकविहीन मनो यस्य त विततघनरोषान्धमनसम्। करकलितसुद र्शनमनन्यसाधारण प्रभाव च दृष्ट्वाऽपि प्राग्जन्मशापप्रभावेन स्वस्वामिनमजानन्त

मिति भावः । अत एव गरिष्ठाभिः गुरुतराभिः मुष्टिप्रहृतिभिर्मुष्टिप्रहारैः । अभि घ्नन्तं विजिगीषया पुनः पुनः प्रयुञ्जानम् । असुरं हिरण्याक्षम् । स्वपादाङ्गु ष्ठेन स्वस्य पादाङ्गुष्ठेन । श्रवणपदमूले श्रवणपदस्य कर्णस्थानस्य मूले । निर वधीः दृढं प्रहृतवानसि । भगवता स्वपादाङ्गुष्ठेन कर्णकपोलसन्धौ ताडित इत्यर्थः । इदञ्च व्याख्यानं स्वपादाङ्गुष्ठेन श्रवणपदमूले निरवधीरिति पाठानुरोधेन । भक्तप्रियाकृतां सम्मतः पाठस्तु 'कराग्रेण स्वेन श्रवणपदमूले' इति । एत त्पक्षे स्वपादाङ्गुष्ठेनेत्येतस्य स्थाने स्वेन कराग्रेणेति योजनीयम् ॥

महाकायः सोऽयं तव चरणपातप्रमथितो
गलद्रक्तो वक्त्रादपतदृषिभिः श्लाघितहतिः ।
तदा त्वामुद्दामप्रमदभरविद्योतिहृदया
मुनीन्द्राः सान्द्राभिः स्तुतिभिरनुवन्नध्वरतनुम् ॥ ८ ॥

**महाकाय इति ॥** महाकायः सः अयं तव चरणपातप्रमथितः वक्त्रात् गलद्रक्तः ऋषिभिः श्लाघितहतिः अपतत् । महान् कायो देहो यस्य स महाकायः । अयं हिरण्याक्षः । तव श्रीवराहस्य । चरणपातेन पादप्रहारेण प्रमथितः प्रकर्षेण मथितः । अत एव वक्त्रात् मुखात् गलत् स्रवत् रक्तं रुधिरं यस्य स गलद्रक्तः । ऋषिभिर्मुनिभिः । श्लाघिता अहो भाग्यम्, को नु भगवतो मुखं पश्यन्नेवान्तिमां गतिं लभेतेति प्रशंसिता हतिर्हननं यस्य सः श्लाघितहतिः । अपतत् पतितः । भक्तप्रियाकृतां पाठस्तु 'तव करसरोजप्रम थित.' इति । करसरोजेन करारविन्देन प्रमथित इत्यर्थः । तदा मुनीन्द्राः उद्दामप्रमदभरविद्योतिहृदयाः सान्द्राभिः स्तुतिभिः त्वाम् अध्वरतनुम् अनुवन् । तदा तस्मिन्नवसरे । मुनीन्द्राः मुनिश्रेष्ठाः । उद्दामेनान्तर्दुर्वहेण प्रमदभरेण सन्तोषातिशयेन विद्योति विकसनशीलं हृदयं येषां ते उद्दामप्रमदभरविद्योति हृदयाः । सान्द्राभिः सम्भूय कृतत्वाद्घनीभूतशब्दविशिष्टाभिः । स्तुतिभिः स्तोत्रैः । त्वां श्रीवराहम् । अध्वरतनुं यज्ञाङ्गम् । अनुवन् यज्ञाङ्गत्वेन तुष्टु वुरित्यर्थः ॥

स्तुतिप्रकारमाह—

त्वचि छन्दो रोमस्वपि कुशगणश्चक्षुषि घृतं
चतुर्होतारोऽङ्घ्रौ स्रुगपि वदने चोदर इडा।
ग्रहा जिह्वायां ते परपुरुष कर्णे च चमसा
विभो सोमो वीर्यं वरद गलदेशेऽप्युपसदः ॥ ९ ॥

त्वचीति ॥ हे परपुरुष विभो वरद ते त्वचि छन्दः रोमसु कुशगणः अपि चक्षुषि घृतम् अङ्घ्रौ चतुर्होतारः वदने स्रुक् अपि उदरे इडा च जिह्वायां ग्रहाः कर्णे चमसाः च वीर्ये सोमः गलदेशे उपसदः अपि। परपुरुष परः सर्वोत्कृष्टस्स चासौ पुरुषश्चेति तादृश। विभो सर्वव्यापिन्। वरद भक्ताभीष्ट वरप्रद। त्वचि चर्मणि। छन्दः गायत्र्यादि। छन्दांस्येव त्वगित्यर्थः। एवं रीत्योत्तरत्रापि बोध्यम्। कुशानां दर्भाणां गणस्समूहः। चक्षुषि नयने। अङ्घ्रौ चरणेष्वित्यर्थः। चतुर्होतारः चत्वारो होतारः अध्वर्य्वादयः। वदने मुखे। स्रुक् जुहूः। उदरे जठरे। इडा पुरोडाशद्रव्यनिधानपात्रम्। ग्रहाः सोम संग्रहणपात्रविशेषाः। जिह्वाया रसनायाम्। कर्णे कर्णरन्ध्रे। चमसा भक्षण साधनपात्रभेदाः। वीर्ये रेत। सोम सोमलतारसः। गलदेशे कण्ठदेशे। उपसद. इष्टिविशेषा.। सर्वत्रापिश्चकारश्च समुच्चये। श्लोकेऽत्र मया वेदानधिकारादध्वर विधिमजानता केवलं वाक्ययोजना कृता भक्तप्रियोक्तया रीत्या। अयं श्लोको मुनीन्द्रैरित्यादिस्तवनमुखरैरित्युत्तरत्र स्थितस्येतिशब्दस्यार्थप्रदर्शनपर इति द्रष्टव्यम्॥

एवं भगवतो वराहावतारं तत्फलं हिरण्याक्षवधं चोपवर्ण्यानन्तरं प्रक रणमुपसंहरन् भगवन्तं प्रार्थयते—

मुनीन्द्रैरित्यादिस्तवनमुखरैर्मोदितमना
महीयस्या मूर्त्या विमलतरकीर्त्या च विलसन्।
स्वधिष्ण्यं सम्प्राप्तस्सुखरसविहारी मधुरिपो
निरुन्ध्या रोगं मे सकलमपि वातालयपते ॥ १० ॥

मुनीन्द्रैरिति ॥ हे मधुरिपो वातालयपते इत्यादिस्तवनमुखरैः मुनीन्द्रैः मोदितमनाः महीयस्या मूर्त्या विमलतरकीर्त्या च विलसन् सुखरस विहारी स्वधिष्ण्यं सम्प्राप्तः त्वं मे सकलमपि रोगं निरुन्ध्याः । मधुरिपो मधु मर्दन । वातालयपते श्रीगुरुवायुपुरनाथ । इत्यादिस्तवनमुखरैः इत्यादिना त्वचि छन्द इत्याद्युक्तप्रकारेण स्तवनेन स्तोत्रेण मुखरैर्वाचालैः । मुनीन्द्रैर्मुनिश्रेष्ठैः । मोदितं प्रसादितं मनो यस्य स मोदितमनाः । महीयस्या अतिशयेन पूज नीयया । मूर्त्या स्वविग्रहेण । विमलतरकीर्त्या विमलतरया अत्यन्तनिर्मलया । वक्तृश्रोतॄणां सकलपापहरयेत्यर्थः । कीर्त्या यशसा । चकारस्समुच्चये । विलसन् द्योतमान । सुखरसविहारी स्वैरं क्रीडमानः । स्वधिष्ण्यं स्वस्य धिष्ण्यं स्थानं वैकुण्ठनिलयम् । मे ममानन्यशरणस्य । सकलमपि समस्तमपि । बाह्यमाभ्य न्तरञ्चेत्यर्थः । निरुन्ध्याः अपाकुरु ॥

इति हिरण्याक्षयुद्ध-तद्वध-यज्ञवराहस्तुतिवर्णनं
त्रयोदशं दशकम् ॥

---

## चतुर्दशदशकम् ॥

एवं वराहावतारेण भुवि कृतप्रतिष्ठायां स्वायम्भुवमनोः प्रजापालनं संक्षे पेणाह—

समनुस्मृततावकाङ्घ्रियुग्मः स मनुः पङ्कजसम्भवाङ्गजन्मा ।
निजमन्तरमन्तरायहीनं चरितं ते कथयन् सुखं निनाय ॥ १ ॥

समनुस्मृतेति ॥ पङ्कजसम्भवाङ्गजन्मा स मनुः निजमन्तरम् अन्त रायहीनं सुखं निनाय । पङ्कजसम्भवाङ्गजन्मा पङ्कजसम्भवस्य ब्रह्मणोऽङ्गजन्मा पुत्र । स मनु स्वायम्भुवो मनुरित्यर्थः । निजं स्वीयम् । अन्तरं चतुर्युगाणा

मेकसप्ततिम्, 'मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः' इत्यमरसिंहवचनात्। अन्तरायहीनम् अन्तरायाः शारीरमानसदैविकभौतिकाः क्लेशाः प्रजापालनप्रतिबन्धकारिणः तैर्विना। सुखमिति क्रियाविशेषणम्। निनाय नीतवान्। अत्र हेतुमाह—समनुस्मृततावकाङ्घ्रियुग्मः ते चरितं कथयन्निति। समनुस्मृतं सम्यग्यमनियमादियुक्तमनुस्मृतं लयविक्षेपादिराहित्येन चिन्तितं तावकं त्वदीयमङ्घ्रियुग्मं चरणकमलद्वन्द्वं येन सः समनुस्मृततावकाङ्घ्रियुग्मः। ते तव श्रीनारायणस्य। चरितं लीलावतारादिचेष्टितानि। कथयन् कीर्तयन्। त्वदङ्घ्रियुगलध्यानेन त्वच्चरितकीर्तनेन च स्वस्मिन्नन्तरे तस्य प्रजापालनप्रतिबन्धकाः शारीरमानसादयश्च क्लेशा न समभवन्नित्यर्थः॥

अथ भगवतः कपिलावतारं वर्णयिष्यन्नादौ तत्प्रसङ्गाय कर्दमकथां प्रस्तौति—

समये खलु तत्र कर्दमाख्यो द्रुहिणच्छायभवस्तदीयवाचा।
धृतसर्गरसो निसर्गरम्यं भगवंस्त्वामयुतं समाः सिषेवे ॥ २ ॥

**समय इति** ॥ तत्र समये खलु द्रुहिणच्छायभवः कर्दमाख्यः तदीयवाचा धृतसर्गरसः हे भगवन् निसर्गरम्यं त्वामयुतं समाः सिषेवे। तत्र समये तस्मिन् स्वायम्भुवमन्वन्तरे। खल्विति त्वथ। द्रुहिणच्छायभवः ब्रह्मणश्छायायाः उत्पन्नः, 'छायायाः कर्दमो जज्ञे इत्युक्तेः। कर्दम इत्याख्या नाम यस्य सः कर्दमाख्यः। कर्दमप्रजापतिरित्यर्थः। तदीयवाचा ब्रह्मणो नियोगात्। धृतः सर्गरसः सृष्टिकामो येन सः धृतसर्गरसः। भगवन्नैश्वर्यादिसम्पन्न। निसर्गरम्यं निसर्गेण स्वभावेन रम्यं सच्चिन्तकहृदयरञ्जकम्। त्वां श्रीनारायणम्। अयुतं दशसहस्रपरिमिताः। समाः संवत्सरान्। अत्यन्तसंयोगे द्वितीया। सिषेवे तपसाऽऽराधेत्यर्थः॥

तपश्चरतः कर्दमस्य पुरस्ताद्भगवान् श्रीहरिः प्रादुरासीदित्याह—

गरुडोपरि कालमेघकम्रं विलसत्केलिसरोजपाणिपद्मम्।
हसितोल्लसिताननं विभो त्वं वपुराविष्कुरुषे स्म कर्दमाय ॥ ३ ॥

**गरुडोपरीति** ॥ हे विभो त्वं कर्दमाय वपुः आविष्कुरुषे स्म । विभो सर्वव्यापिन् । वपुः स्वकीयं दिव्यमङ्गलविग्रहम् । आविष्कुरुषे स्म सन्दर्शितवानसि । भगवता कर्दमाय सन्दर्शितस्य वपुषः स्वरूपमाह--गरुडोपरि कालमेघकम्रं विलसत्केलिसरोजपाणिपद्मं हसितोल्लसिताननमिति । गरुडोपरि गरुडस्यांसदेशे । स्थितमिति शेषः । कालमेघकम्रं कालमेघवत् नूतनजलधरवत् कम्रं कमनीयम् । अनयोपमया भगवद्वपुषः शीघ्रमेव भक्ताभीष्टवरप्रदत्वं व्यज्यते । विलसत् शोभमानं केलिसरोजं लीलारविन्दं यस्मिंस्तद्विलसत्केलिसरोजं तादृशं पाणिपद्मं करपङ्कजं यस्य तद्विलसत्केलिसरोजपाणिपद्मम् । हसितेन मृदुमन्दहासेनोल्लसितम् उच्चैर्लसितमाननं मुखं यस्य तद्धसितोल्लसिताननम् ॥

कर्दमप्रजापतेर्भगवदनुग्रहप्रकारमाह--

**स्तुवते पुलकावृताय तस्मै मनुपुत्रीं दयितां नवापि पुत्रीः**
**कपिलं च सुतं स्वमेव पश्चात् स्वगतिं चाप्यनुगृह्य निर्गतोऽभूः ॥ ४ ॥**

**स्तुवत इति** ॥ त्वं स्तुवते पुलकावृताय तस्मै मनुपुत्रीं दयितां नव पुत्रीः अपि स्वमेव कपिलं सुतं च पश्चात् स्वगतिं चाप्यनुगृह्य निर्गतः अभूः । स्तुवते स्तुतिं कुर्वते । पुलकावृताय पुलकेन भगवद्दर्शनजातप्रमोदभरादुत्पन्नेन रोमाञ्चेण आवृताय व्याप्तशरीराय । तस्मै कर्दमाय । मनुपुत्रीं मनोः स्वायम्भुवस्य पुत्रीं दुहितरं देवहूतिम् । दयितां भार्याम् । नव पुत्रीः देवहूत्यां नव कन्याः । स्वमेव आत्मनोऽशभूतमेव । कपिलं कपिलाख्यम् । सुतं पुत्रम् । पश्चादन्ते । स्वगतिं मोक्षं च । चकारावपिशब्दौ च समुच्चये । अनुगृह्य अनुग्रहतया दत्वा । निर्गतः प्रस्थितवान् । स्वायम्भुवो मनुर्ब्रह्मावर्ते नाम देशमधिवसति, स मनुः शतरूपया महिष्या सुतया देवहूत्या च सह त्वां दिदृक्षू रथेनागत्य गुणवतीं स्वदुहितरं तुभ्यं दास्यति, त्वं च तस्यां नव कन्या जनयिष्यसि, अहं च स्वांशेन तस्यां तव पुत्रत्वेनावतरिष्यामीत्यनुगृह्य तिरोहित इत्यर्थः ॥

अथ भगवदनुग्रहस्य फलमाह—

स मनुः शतरूपया महिष्या गुणवत्या सुतया च देवहूत्या ।
भवदीरितनारदोपदिष्टः समगात् कर्दममागतिप्रतीक्षम् ॥ ५ ॥

**स इति ॥** स मनु शतरूपया महिष्या गुणवत्या सुतया देवहूत्या च आगतिप्रतीक्ष कर्दम समगात् । स स्वायम्भुव । शतरूपया शतरूपाख्यया । महिष्या स्वभार्यया । गुणा सौन्दर्यसौशील्याद्योऽस्यामस्न्तीति गुणवती तया । सुतया पुत्र्या । देवहूतिरिति नाम । चकारस्समुच्चये । आगतिं पुत्र्या सह मनोरागमन प्रतीक्षते प्रतिपाल्यतीत्यागतिप्रतीक्षम्तम् । अपि नाम मनुरिदानीं पुत्र्या सहागच्छतीति मार्गे एव दत्तदृष्टिमित्यर्थ । कर्दम कर्दमप्रजापतिम् । समगात् प्राप । ननु कथ मनुना कर्दम एव स्वदुहितुरनुरूप इति ज्ञातमिति चेत्त्राह—भवदीरितनारदोपदिष्ट इति । भवतेरितेन प्रेरितेन नारदेन उपदिष्ट देवहूत्यै कर्दमस्य शीलगुणवर्णनपूर्वक कर्दमाय स्वात्मजा प्रयच्छेति मनुरुपदिष्ट इत्यर्थ ॥

कर्दमस्य देवहूतिपरिग्रहमाह—

मनुनोपहृता च देवहूतिं तरुणीरत्नमवाप्य कर्दमोऽसौ ।
भवदर्चननिर्वृतोऽपि तस्यां दृढशुश्रूषणया दधौ प्रसादम् ॥ ६ ॥

**मनुनेति ॥** असौ कर्दम च भवदर्चननिर्वृत अपि मनुना उपहृता तरुणीरत्न देवहूतिमवाप्य दृढशुश्रूषणया तस्या प्रसाद दधौ । चकारस्त्वर्थे । भवदर्चननिर्वृत भवदर्चनेन निर्वृतस्तुष्ट । निवृत्तिधर्मनिरत इत्यर्थ । अपिर्विरोधे । मनुना स्वायम्भुवेन । उपहृता सपरिबर्हं सत्कृत्य दत्ताम् । तरुणीरत्न युवतिश्रेष्ठाम् । रत्नशब्दोऽत्र श्रेष्ठवाची, 'रत्न स्वजातिश्रेष्ठे स्यात्' इत्युक्ते । अवाप्य प्राप्य । दृढशुश्रूषणया दृढया अनपायिन्या शुश्रूषणया शुश्रूषया । तस्या देवहूत्याम् । दधौ धृतवान् । तस्या प्रसन्नोऽभूदित्यर्थ ॥

प्रसादस्य फलमाह द्वाभ्याम्—

स पुनस्त्वदुपासनप्रभावाद्दयिताकामकृते कृते विमाने ।
वनिताकुलसङ्कुले नवात्मा व्यहरद्देवपथेषु देवहूत्या ॥ ७ ॥

स इति ॥ सः पुनः दयिताकामकृते त्वदुपासनप्रभावात् कृते वनिताकुलसङ्कुले विमाने नवात्मा देवहूत्या सह देवपथेषु व्यहरत् । सः कर्दमः । पुनरनन्तरम् । दयिताकामकृते दयितया देवहूत्या अभ्यर्थितस्तदिच्छानुसरणार्थम् । त्वदुपासनप्रभावात् त्वदुपासनस्य भवद्भजनस्य प्रभावान्माहात्म्येन । स्वयोगानुभावेनेत्यर्थः । कृते निर्मिते । वनिताकुलसङ्कुले वनितानां परिचारिकाणां विद्याधरस्त्रीणां कुलेन समूहेन सङ्कुले मिलिते । विमाने व्योमयाने । वनिताकुलसङ्कुलो नवात्मा इति पाठे वनिताकुलसङ्कुल इति कर्दमविशेषणत्वेन योजनीयम् । नवात्मा देवहूतिं प्रीणयितुं नवधा विभक्त आत्मा शरीरं यस्य सः । उक्तञ्च श्रीमद्भागवते—'विभज्य नवधाऽऽत्मानं मानवीं सुरतोत्सुकाम् । रामां निरमयन् रेमे वर्षपूगान् मुहूर्तवत् ॥' इति । देवपथेषु नन्दनपुष्पभद्रचैत्ररथादि देवोद्यानेषु । व्यहरत् क्रीडां चकार ॥

शतवर्षमथ व्यतीत्य सोऽयं नव कन्याः समवाप्य धन्यरूपाः ।
वनयानसमुद्यतोऽपि कान्ताहितकृत्त्वज्जननोत्सुको न्यवात्सीत् ॥ ८ ॥

शतवर्षमिति ॥ सः अयं शतवर्षं व्यतीत्य धन्यरूपाः नव कन्याः समवाप्य अथ वनयानसमुद्यतः अपि कान्ताहितकृत् त्वज्जननोत्सुकः न्यवात्सीत् । स. अयं कर्दमप्रजापतिः । शतवर्षं वत्सराणां शतम् । अत्यन्तसंयोगे द्वितीया । व्यतीत्य अतिक्रम्य । धन्यं रम्यं रूपमाकृतिर्यासां ता धन्यरूपा. । अङ्गप्रत्यङ्गविन्याससौष्ठवशालिन्यः सामुद्रिकाशास्त्रोक्तसमस्तशुभलक्षणवर्णसौष्ठवादिसम्पन्ना इत्यर्थः । कन्याः दुहितॄः । समवाप्य लब्ध्वा । अथ अनन्तरम् । वनयानसमुद्यतः वनयाने तपसे वनं गन्तुं समुद्यत. उद्युक्तः । कान्तायाः वनं गन्तुमुद्यतमात्मानं दृष्ट्वा विषण्णायाः देवहूत्याः हितं दुहितृवरप्रदानपुत्रोत्पादनादिकमिष्टं करोतीति कान्ताहितकृत् । त्वज्जननोत्सुकः त्वज्जनने तव देवहूत्यामवतारे उत्सुकः औत्सुक्यवान् । न्यवात्सीत् त्वज्जननं प्रतिपालयन्नवर्ततेत्यर्थः ॥

अथ कपिलावतारमाह—

निजमर्तृगिरा भवन्निषेवानिरतायामथ देव देवहूत्याम् ।
कपिलस्त्वमजायथा जनानां प्रथयिष्यन् परमात्मतत्त्वविद्याम् ॥ ९ ॥

निजभर्तृगिरेति ॥ हे देव अथ त्वं देवहूत्यां कपिलः अजायथाः । देव प्रकाशमान । कपिलः कपिलनामा । अजायथाः अवतीर्णोऽसि । देवहूत्या भगवदवतारयोग्यतामाह—निजभर्तृगिरा भवन्निषेवानिरतायामिति । निजभर्तृगिरा स्वभर्तुपदेशेन । भवन्निषेवानिरतायां भवन्निषेवायां त्वदाराधने निरतायां तत्परायाम् । भगवतः कपिलावतारस्य फलमाह—जनानां परमात्मतत्त्वविद्यां प्रथयिष्यन्निति । जनानां लोकानाम् । परमात्मतत्त्वविद्यां परमात्मनः पुरुषापरनाम्नः तत्त्वानां प्रकृत्यादिचतुर्विंशतितत्त्वाना च विद्यां ज्ञानम् । प्रथयिष्यन् आचार्यपरम्परया प्रकाशयितुमुद्यत इत्यर्थः ॥

अथ प्रकरणमुपसंहरन् भगवन्तं प्रार्थयते—

वनमेयुषि कर्दमे प्रसन्ने मतसर्वस्वमुपादिशन् जनन्यै ।
कपिलात्मक वायुमन्दिरेश त्वरितं त्वं परिपाहि मां गदौघात् ॥ १० ॥

वनमिति ॥ हे कपिलात्मक वायुमन्दिरेश कर्दमे प्रसन्ने वनमेयुषि जनन्यै मतसर्वस्वमुपादिशन् त्वं त्वरितं मां गदौघात् परिपाहि । कपिलात्मक कपिलरूप । वायुमन्दिरेश श्रीगुरुवायुपुरनाथ । प्रसन्ने स्वदुहितॄर्मरीच्यादिभ्यो ब्रह्मपुत्रेभ्यो दत्वा कृतार्थतां प्राप्य सन्तुष्टचेतसि सतीत्यर्थः । वनं तपोवनम् । एयुषि गतवति । जनन्यै मात्रे देवहूत्यै । मतसर्वस्वं मतस्य स्वसिद्धान्तस्य सर्वस्वं सर्वाण्यप्यङ्गानीत्यर्थः । उपादिशन् उप समीपे स्थित्वा आदिशन् ग्राहयन् । त्वरितम् अतिशीघ्रम् । मामनन्यशरणम् । गदौघात् गदानामाभ्यन्तराणां बाह्यानां च ओघात् समूहात् । परिपाहि त्रायस्व ॥

इति कपिलोपाख्यानं
चतुर्दशदशकम् ॥

अथ मतसर्वस्वमुपादिशन्नित्यनेनोक्तमुपदेशप्रकारमाह—

मतिरिह गुणसक्ता बन्धकृत्तेष्वसक्ता
त्वमृतकृदुपरुन्धे भक्तियोगस्तु सक्तिम् ।
महदनुगमलभ्या भक्तिरेवात्र साध्या
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ १ ॥

**मतिरिति** ॥ इति कपिलतनुः त्वं देवहूत्यै न्यगादीः । इति अनेन प्रकारेण । कपिलतनुः कपिलरूपेणावतीर्णः । देवहूत्यै स्वमात्रे । न्यगादीः उपदिष्टवानसि । उपदेशप्रकारमाह—मतिरिहेत्यादिना । इह गुणसक्ता मतिः बन्धकृत् । इह लिपु लोकेपु । गुणसक्ता गुणाः स्रक्चन्दनवनितादय. तेषु सक्ता आसक्ता । मतिर्बुद्धि । बन्धकृत् पुरुषस्य संसारहेतु । ननु किमिह बन्धमोक्षकारणमिति चेत्तत्राह —तेषु असक्ता चेत् अमृतकृत् इति । तेषु गुणेषु । सक्ता न भवतीत्यसक्ता । तुर्विशेषे । विशेषमाह—अमृतकृदिति । अमृतं मोक्षं करोतीत्यमृतकृत् । ननु कथं संसारहेतुभूता सक्तिर्निवर्तयितुं शक्यत इति चेत्तत्राह—भक्तियोगः तु सक्तिमुपरुन्धे इति । तुरवधारणे । सक्तिं गुणसक्तिम् । उपरुन्धे प्रतिबध्नाति । ननु भक्ति. केनोपायेन साध्येत्यत आह—अत्र महदनुगमलभ्या भक्तिः एव साध्या इति । अत्र लोके । महदनुगमलभ्या महतां भागवतानामनुगमनेन शुश्रूषादिना लभ्या प्राप्या । एवकारेणान्येषां व्यवच्छेदः । साध्या साधयितुं सम्पादयितुं योग्या । मुमुक्षुभिरिति शेषः ॥

एवं भक्तियोगस्य बन्धमोक्षहेतुतामुतत्स्युपायश्चोपपाद्य अनन्तरं प्रकृतिपुरुषविवेकस्यापवर्गहेतुतामाह—

प्रकृतिमहदहङ्काराश्च मात्राश्च भूता-
न्यपि हृदपि दशाक्षी पूरुषः पञ्चविंशः ।

इति विदितविभागो मुच्यतेऽसौ प्रकृत्या
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ २ ॥

प्रकृतीति ॥ कपिलतनुरित्यादि पूर्ववत्। एवमुत्तरत्रापि द्रष्टव्यम्। इति विदितविभागः असौ प्रकृत्या मुच्यते। इति अनेन प्रकारेण। विदिता. ज्ञाताः विभागाः प्रकृत्यादीनां विशेषरूपाणि येन सः विदितविभागः। प्रकृत्यादीनां विशेषरूपेणाधिगमात् पुरुषं प्रकृत्यादिभिन्नत्वेनाधिगच्छन्नित्यर्थः। असौ मुमुक्षुः। प्रकृत्या मायया। तत्कार्यभूतशरीरादिबन्धैरिति यावत्। मुच्यते त्यज्यते। इतीत्यनेनोक्तं विभागप्रकारमाह—प्रकृतिमहदहङ्काराः च मात्राः च भूतानि अपि हृत् अपि दशाक्षी पञ्चविंशः पूरुषः इति। प्रकृतिर्मूलप्रकृतिः, मूलकारणत्वात्। या प्रधानमव्यक्तमविद्या मायेत्यादिभिश्शब्दैर्व्यवह्रियते। महत् महत्तत्त्वं मूलप्रकृतेः कार्यम्। अहङ्कारा महत्तत्त्वादुत्पन्नाः सात्त्विकराजसतामसाः। प्रकृतिः महत् अहङ्काराश्चेति प्रकृतिमहदहङ्काराः। मात्रास्तामसाहङ्कारकार्याणि शब्दस्पर्शरूपरस गन्धाख्यानि पञ्चतन्मात्राणि। भूतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि पञ्चभूत पदवाच्यानि। हृत् मनः। दशानामक्षाणामिन्द्रियाणां समाहारो दशाक्षी। घ्राण रसनचक्षुस्त्वक्छ्रोत्राख्यानि पञ्च ज्ञानेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि चेति दशेन्द्रियाणीत्यर्थः। प्रकृतिर्महदहङ्काराविति त्रीणि, पञ्च तन्मात्राणि, पञ्च भूतानि, मन इत्येकं दशेन्द्रियाणि चेति चतुर्विंशतिस्तत्त्वानि। पूरुषः पुरुषः। स च जीवेश्वरभेदात् द्विधेति ध्येयम्। अपिशब्दौ चकारौ च समुच्चये॥

ननु शरीरादिबन्धस्य वास्तवत्वे कथं जीवस्य तस्मान्मोक्षः स्यादित्याशङ्क्य तस्याऽविद्याविलसितत्वेन ज्ञाननिवृत्तित्वमाह—

प्रकृतिगतगुणौघैर्नाज्यते पूरुषोऽयं
यदि तु सजति तस्यां तद्गुणास्तं भजेरन्।
मदनुभजनतत्त्वालोचनैः साऽप्यपेयात्
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ ३ ॥

प्रकृतिगतगुणौघैरिति ॥ अयं पूरुषः प्रकृतिगतगुणौघैः न आज्यते । अयमनुपदमुक्तः । पूरुष. पुरुष. । प्रकृतिगतगुणौघैः । अत्र प्रकृतिशब्देन प्रकृति कार्यभूतचतुर्विंशतितत्त्वमयानि जरायुजाण्डजस्वेदजोद्भिज्जरूपाणि चतुर्विधानि शरीराण्युच्यन्ते। तद्गतैर्गुणौघैर्गुणसञ्चयै कर्तृत्वभोक्तृत्वादिभिः । न आज्यते नोपरज्यते । शरीरस्थोऽप्ययं जीवः परमार्थतः शरीरधर्मैः कर्तृत्वभोक्तृत्वजनन मरणादिभिर्न लिप्यत इत्यर्थः । ननु यदि प्रकृतिगुणलेपो जीवस्य नास्ति, तर्हि संसाराभावप्रसङ्ग इत्यत आह—यदि तु तस्यां सजति तद्गुणाः तं भजेरन् इति। पूरुष इत्यत्राप्यनुवर्तते। तस्यां प्रकृतौ । शरीरादिष्विति यावत् । सजति अहम्ममेत्यभिमन्यते। तद्गुणाः प्रकृतिगुणाः । तं पुरुषम् । भजेरन् जननमरणादिदुःखमनुभावयन्तीत्यर्थः। यथा शुद्धस्फटिकस्य लोहितस्फटिकसमव धाने लौहित्याभावेऽपि लौहित्यप्रतीतिः, तद्वत् प्रकृतिगुणलेपाभावेऽपि पुरुषस्य प्रकृतिसङ्गात्तद्गुणवत्ताप्रतीत्या संसारित्वोपपत्तिरिति भावः। ननु प्रकृतिरपि कथ मपगमिष्यतीति चेत्तत्राह—सा अपि मदनुभजनतत्त्वालोचनैः अपेयादिति। सा प्रकृतिः। मदनुभजनतत्त्वालोचनैः ममेश्वरस्य अनुभजनं प्रणिधानं तत्त्वालो चनानि तत्त्वस्य सद्वस्तुनः। पुरुषस्येति यावत्। आलोचनानि श्रवणमनन निदिध्यासनानि। तज्जन्यमहमस्मि पुरुष इत्यनुभवात्मकं ज्ञानमित्यर्थः। अपेयात् अपगमिष्यति ॥

अथ मदनुभजनतत्त्वालोचनैरित्यत्रोक्तस्येश्वरप्रणिधानस्याष्टाङ्गत्वमाह—

विमलमतिरुपात्तैरासनाद्यैर्मदङ्गं
गरुडसमधिरूढं दिव्यभूषायुधाङ्कम् ।
रुचितुलिततमालं शीलयेतानुवेलं
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ ४ ॥

विमलमतिरिति ॥ विमलमतिः उपात्तैः आसनाद्यैः अनुवेलं. मदङ्गं शीलयेत । विमला ब्रह्मचर्यादिरूपैर्यमैर्नित्यस्नानादिरूपैर्नियमैश्च निर्मला मतिर्बुद्धिः यस्य सः विमलमतिः । उक्तञ्चैतत्—'ब्रह्मचर्यदृढतादिभिर्यमैराप्लवादिनियमैश्च

पाविता:' इति । उपात्तैः स्वीकृतैः अभ्यसनेन वशीकृतैरित्यर्थः । आसनाद्यैः आसनप्राणायामप्रत्याहारैः। उपलक्षित इति शेष.। अनुवेलं सर्वदा। मदङ्गं ममाङ्गं विग्रहम्। शीलयेत धारणां ध्यानं समाधिं च शीलयेतेत्यर्थः। ननु जगन्मयस्य भवतः कीदृशमङ्गं शीलयेयमित्यत आह—गरुडसमधिरूढं दिव्यभूषायुधाङ्कं रुचितुलिततमालमिति। गरुडसमधिरूढं गरुडोपरि स्थितम्। दिव्या अप्राकृताः भूषाः किरीटकटकाद्याभरणानि आयुधानि सुदर्शनादीन्येवाङ्कश्चिह्नं यस्य तद्दिव्यभूषायुधाङ्कम्। रुच्या कान्त्या तुलितस्सदृशीकृत. तमालस्तापिच्छवृक्षो येन तत् रुचितुलिततमालम् ॥

सम्प्रति ज्ञानयोगादष्टाङ्गयोगाच्च भक्तियोगस्य सुगमतामाह—

मम गुणगणलीलाकर्णनैः कीर्तनाद्यै-
र्मयि सुरसरिदोघप्रख्यचित्तानुवृत्तिः ।
भवति परमभक्तिः सा हि मृत्योर्विजेत्री
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ ५ ॥

ममेति ॥ मम गुणगणलीलाकर्णनैः कीर्तनाद्यैः मयि परमभक्तिः भवति। मम श्रीनारायणस्य। गुणगणलीलाकर्णनै. गुणानां भक्तवात्सल्यादीनां गणस्समूहः लीला लीलावतारादिचरित्राणि तेषामाकर्णनैः श्रवणैः। कीर्तनं कथाप्रसङ्गः आद्यं येषां तै. कीर्तनाद्यैः। आद्यपदेन स्मरणादि गृह्यते। कथाश्रवणकथाप्रसङ्गस्मरणनमस्कारार्चनवन्दनदास्यसख्यात्मनिवेदनरूपया नवलक्षणया साधनभक्त्येत्यर्थ·। परमभक्ति. परमा उत्कृष्टा भक्तिः साध्यभक्तिः। भवति जायते। साध्यभक्ते. स्वरूपमाह—सुरसरिदोघप्रख्यचित्तानुवृत्तिः इति। सुरसरिदोघप्रख्या गङ्गाप्रवाहवदविच्छिन्ना। चित्तानुवृत्तिः प्रेमात्मिका मनोवृत्ति·। सा हि मृत्योः विजेत्री। सा साध्यभक्ति.। हिरवधारणे। मृत्योः संसारस्य। विजेत्री विशेषेण अनायासेनैव समूलोन्मूलनकारिणीत्यर्थ ॥

अथ भक्तिदार्ढ्यार्थं केवलपापकर्मणा नरकपातप्रकारमाह—

अहह बहुलहिंसासञ्चितार्थैः कुटुम्बं
प्रतिदिनमनुपुष्णंस्त्रीजितो बाललाळी ।
विशति हि गृहसक्तो यातनां मय्यभक्तः
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ ६ ॥

अहहेति ॥ मयि अभक्त. हि गृहसक्तः यातनां विशति अहह । मयि ईश्वरे । भक्तो न भवतीत्यभक्तः । हिस्त्वर्थो विशेषे । विशेषमाह— गृहसक्तो यातनां विशतीति । गृहसक्त गृहेषु दारादिषु सक्तः आसक्तः । अत्र गृहपदं पुत्रादीनामप्युपलक्षणम् । यातना रौरवादिनरकम् । विशति प्रविशति । जीवितावसाने यमशासनात् पाशहस्ता यमकिङ्करा आगत्य तस्य देहात्प्राणान् यातनाशरीरं नीत्वा पाशेन गले बध्वाऽऽकृष्य त्रिभिर्द्वाभ्या वा मुहूर्तैः नवनवतिसहस्रयोजनदूरे स्थितं यमसदनं नीत्वा स्वकर्मतारतम्येन तामिस्रादिषु नरकेषु पातयन्तीत्यर्थः । अहहेति खेदे । ननु केवलं गृहसक्त्या कथं नरकपातः स्यात्, नरकस्य पापफलत्वात्, गृहसक्तेः पापकर्मत्वाभावाच्चेत्यत आह—बहुलहिंसा सञ्चितार्थैः कुटुम्बं प्रतिदिनमनुपुष्णन्निति । बहुलहिंसासञ्चितार्थैः बहुलाभिर्नाना विधाभिः हिंसाभिः प्राणिपीडनप्राणिवधचौर्यासत्यादिभिः सञ्चितैरार्जितैरर्थैर्धनधान्या दिभिः । कुटुम्बं पुत्रदारादीन् । दिने दिने प्रतिदिनम् । अनुपुष्णन् पुनः पुनः पुष्णन् । कुटुम्बपोषणे हेतुमाह—स्त्रीजितः बाललाळी इति । स्त्रीजित· स्त्रिया भार्यया जितः स्वाधीनीकृतः । बाललाळी बालकानां लाळनैकनिरतः । मय्यभक्तः कुटुम्बपोषणार्थं हिंसादीनि नानाविधानि पापकर्माणि कुर्वाणस्तत्फलानि भोक्तुं रौरवादीन् नरकभेदान् विशति, मद्भक्तश्चेत्र तथा यातना विशतीर्थः ॥

सम्प्रति गर्भस्थस्य जन्तोर्विवेकोदये सत्यपि तस्य निष्फलत्वमाह—

युवतिजठरखिन्नो जातबोधोऽप्यकाण्डे
प्रसवगळितबोधः पीडयोल्लङ्घ्य बाल्यम् ।
पुनरपि बत मुह्यत्येव तारुण्यकाले
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ ७ ॥

युवतिजठरेति ॥ युवतिजठरखिन्न अकाण्डे जातबोध अपि पीडया बाल्यमुल्लङ्घ्य पुनरपि तारुण्यकाले मुह्यति एव बत । युवतिजठरखिन्न युवत्या मातुर्जठरे गर्भाशये खिन्न कटुम्लल्वणक्षारतीक्ष्णोष्णरूक्षैर्मातृभुक्तै कृमिभिर्मैथुनैश्चातीवोपद्रुत । अकाण्डे दु खप्रनीकारकरणसामर्थ्यरहिते काले। जात गर्भस्थस्य सप्तमे मासि दैवाल्लब्धो बोधो जन्मशतसञ्चितकर्मसञ्चयस्मृतिर्यस्य स जातबोध । अपिर्विरोधे । जन्तुरिति शेष । पीडया इष्टानिष्टप्राप्तिपरिहारासामर्थ्यसञ्जातेन दु खेन सहित । बाल्य शैशवम्। उल्लङ्घ्य अतिक्रम्य । पुनरपि यथा पूर्वस्मिन् जन्मनि तथेहापीत्यर्थ । तारुण्यकाले यौवनकाले । मुह्यनि, कामक्रोधादिपराधीनतया काम्य निषिद्धमपि कर्म समाचरन् पूर्ववत्तमो विशतीत्यर्थ । एवकारोऽयोगव्यवच्छेदार्थ । बतेति खेदे । ननु कथ जातबोधस्य जन्तो कामक्रोधादिपराधीनतेत्यत आह—प्रसवगलितबोध इति। प्रसवे सूतिमारुतनोदनेन योनियन्त्रनिष्पीडनेन च गलितो नष्टो बोधो जन्मशतसञ्चितकर्मसञ्चयस्मृतिर्यस्य स ॥

नन्वधर्मकारिणो गृहस्थस्य नरकप्राप्तिसम्भवेऽपि धार्मिकस्य गृहस्थस्य तथा नरकप्राप्त्यभावान्न दोष इत्याशङ्का परिहर्तुं पुनरावृत्तिसम्भवाद्गार्हस्थ्यस्य स्वर्गप्रापकत्वेऽप्यनादेयतामाह—

पितृसुरगणयाजी धार्मिको यो गृहस्थः
म च निपतति काले दक्षिणाध्वोपगामी।
मयि निहितमकाम कर्म तु्द्भवपथार्थं
कपिलतनुरिति त्व देवहूत्यै न्यगादीः ॥ ८ ॥

पितृसुरगणयाजीति ॥ य पितृसुरगणयाजी धार्मिक गृहस्थ स च दक्षिणाध्वोपगामी काले निपतति। पितॄन् सुरगणान् देवसमूहाश्च यष्टु शीलम स्यास्तीति पितृसुरगणयाजी। फलकामनया यागादिविहितकर्मकृदित्यर्थ । मद्भिमुखतयेति भाव । धार्मिक निषिद्धकर्मपरित्यागेन विहितकर्मानुष्ठाता। गृहस्थ गृहमेधी । चकारोऽप्यर्थे । दक्षिणाध्वोपगामी दक्षिणाध्वा धूमादिमार्ग

तद्गामी तद्गमनशीलः । काले पुण्यक्षये सति । निपतति पुनरावर्तत इत्यर्थः । धूमादिमार्गगमनप्रकारश्चेत्थम्—केवलकाम्यकर्मकृत् जीवः प्रारब्धावसाने चक्षुरादीन्द्रियद्वारा सूक्ष्मशरीरेण सह निर्गच्छति । तं च धूमाभिमानिदेवता राज्यभिमानिदेवताहस्ते प्रयच्छति । सा च कृष्णपक्षाभिमानिदेवतायै, सा च दक्षिणायनषण्मासाभिमानिन्यै, सा च पितृलोकमार्गेणाकाशे चन्द्रमसं सन्निधापयति । तत्र यावत् सुकृतावसानं स्वर्गमनुभूय भूमौ पतिष्यन् प्रथममाकाशमार्गे पतित्वा ततो वायुधूमाभ्रमेघवृष्टिक्रमेणौषधीषु पतति । अभ्रं जलं बिभर्ति वर्षति मेघ इति भेदः । ओषधीभ्यः पुरुषभुक्तेभ्यो रसादिक्रमेण रेतो भूत्वा स्त्रिया गर्भाशयं प्रविश्य शरीरी भवति । यदि पुण्यशेषः, तर्हि ब्राह्मणादियोनौ, यदि पापशेषः, तर्हि चण्डालादियोनौ जायत इति भेदः । ननु किं कुर्वन्नुत्तरायणमार्गेण यातीत्यत आह—मयि निहितमकामं कर्म तु उदक्पथार्थमिति । मयीश्वरे । निहितमर्पितम् । अकामं काम्यकर्मनिषिद्धकर्मव्यतिरिक्तम् । कर्म नित्यनैमित्तिकप्रायश्चित्तोपवासादिरूपम् । उदक्पथार्थम् अर्चिरादिगतिप्रापकमित्यर्थः । सर्वत्र कपिलतनुरित्याद्यावृत्तिः सर्वेषामपि श्लोकानां स्तोत्रत्वसिद्धये, अन्यथा भगवद्वाक्यमात्रस्य स्तोत्रत्वाभावात् । प्रकरणस्य स्तोत्ररूपत्वेऽपि प्रतिश्लोकं स्तोत्रत्वं न सिद्ध्येदिति द्रष्टव्यम् । ननु मास्तु प्रतिश्लोकं स्तोत्रत्वमिति चेन्न, 'स्तोत्रञ्चैतत् सहस्रोत्तरमधिकतरम् ।' इति वक्ष्यमाणत्वात् ॥

अथ भगवतः कपिलाचार्यस्योपदेशप्रकारमुपवर्ण्यानन्तरं भगवत्प्रयाणं देवहूत्या मोक्षप्राप्तिश्चाह—

इति सुविदितवेद्यां देव हे देवहूतिं
कृतनुतिमनुगृह्य त्वं गतो योगिसङ्घैः ।
विमलमतिरथासौ भक्तियोगेन मुक्ता
त्वमपि जनहितार्थं वर्तसे प्रागुदीच्याम् ॥ ९ ॥

इतीति ॥ हे देव त्वम् इति सुविदितवेद्यां कृतनुतिं देवहूतिमनुगृह्य योगिसङ्घैः गतः । देव प्रकाशमान । इति अनेन प्रकारेण । सुष्ठु विदितं ज्ञातं

वेद्यं ब्रह्म तत्प्राप्त्युपायश्च यया तां सुविदितवेद्याम्। कृता नुतिः स्तुतिर्यया तां कृतनुतिम्। योगिसङ्घैर्योगिनामृषीणां सङ्घैः समूहैः। सहेति शेषः। गतः प्रययौ। अथ विमलमतिः असौ भक्तियोगेन मुक्ता। अथ भगवद्गमनानन्तरम्। विमला ज्ञानप्रदीपोदयेनाज्ञानतिमिरनिवृत्त्या निर्मला मतिरन्तःकरणं यस्याः सा विमलमतिः। असौ देवहूतिः। भक्तियोगेन भक्त्याख्येन योगेन मोक्षोपायेन मुक्ता मोक्षं गता। त्वमपि जनहितार्थं प्रागुदीच्यां वर्तसे। त्वं कपिलमूर्तिः जनहितार्थं त्रैलोक्यरक्षार्थं। प्रागुदीच्यां दिशि॥

एवं कपिलोपाख्यानेन भक्तियोगस्य सर्वोत्कर्षमुपपाद्यानन्तरं भक्तिं प्रार्थयते—

परम किमु बहूक्त्या त्वत्पदाम्भोजभक्तिं
सकलभयविनेत्रीं सर्वकामोपनेत्रीम्।
वदसि खलु दृढं त्वं तद्विधूयामयान् मे
गुरुपवनपुरेश त्वय्युपाधत्स्व भक्तिम् ॥ १० ॥

**परमेति॥** परम बहूक्त्या किमु। त्वं त्वत्पदाम्भोजभक्तिं सकलभयविनेत्रीं सर्वकामोपनेत्रीं दृढं वदसि खलु। तत् हे गुरुपवनपुरेश मे आमयान् विधूय त्वयि भक्तिम् उपाधत्स्व। परम सर्वोत्कृष्ट। अनेन सम्बोधनेन भवदुक्तेः सर्वेभ्योऽपि प्रामाण्यं सूचितम्। बहूक्त्या बहुविधेन भाषितेन। अथवा बहूनामृषीणामुक्त्या वचनेन। किमु किं प्रयोजनम्। न किञ्चित् प्रयोजनमित्यर्थः। त्वत्पदाम्भोजभक्तिं त्वत्पदाम्भोजयोस्त्वत्पादारविन्दयोर्भक्तिम्। सकलभयविनेत्रीं सकलानां सर्वेषां भयानाम्। संसारदुःखस्यापीत्यर्थः। विनेत्रीं समूलोन्मूलनकर्त्रीम्। किञ्च, सर्वकामोपनेत्रीं सर्वेषामैहिकानां पारलौकिकानाञ्च कामानामभिलाषाणामुपनेत्रीं पूरयित्रीम्। दृढं निश्चितम्। एतत् क्रियाविशेषणम्। वदसि कथयसि। खल्विति प्रसिद्धौ। तत् तस्मात्। सकलभयनिवर्तकत्वात् सर्वाभिलाषपूरकत्वाच्चेत्यर्थः। गुरुपवनपुरेश गुरुवायुपुरनाथ। मे ममानन्यशरणस्य। आमयौघान् आमयानां बाह्यानामाभ्यन्तराणां च ओघान् सञ्चयान्। विधूय दूरीकृत्य। अन्यथा

अहं त्वद्भजनं कर्तुमसमर्थः स्यामिति भावः। त्वयि श्रीनारायणे। भक्तिं प्रेम लक्षणाम्। उपाधत्स्व सङ्क्रामय॥

इति कपिलोपाख्यानं पञ्चदशदशकम्॥

इति श्रीनारायणीयस्तोत्रव्याख्यायां बालबोधिन्यां

तृतीयस्कन्धपरिच्छेदः॥

---

आदितः श्लोकसंख्या १५८

## चतुर्थस्कन्धपरिच्छेदः

### षोडशदशकम् ।

अथ भगवतो नरनारायणावतारप्रस्तावाय दक्षप्रजापतेर्विवाहादिकमाह—

दक्षो विरिञ्चतनयोऽथ मनोस्तनूजां
लब्ध्वा प्रसूतिमिह षोडश चाप कन्याः ।
धर्मे त्रयोदश ददौ पितृषु स्वधाञ्च
स्वाहां हविर्भुजि सतीं गिरिशे त्वदंशे ॥ १ ॥

दक्ष इति ॥ अथ विरिञ्चतनय दक्ष मनो तनूजां प्रसूतिं लब्ध्वा इह षोडश कन्या आप च । अथशब्द कथारम्भे । विरिञ्चतनयो विरिञ्चस्य ब्रह्मणस्तनय पुत्र । दक्ष तन्नामा प्रजापति । मनो स्वायम्भुवस्य । तनूजां पुत्रीम् । प्रसूतिरिति नाम । लब्ध्वा परिणीय । इह प्रसूतयाम् । कन्या दुहितृ । आप लब्धवान् । चकार उक्तसमुच्चये । वाक्यालङ्कारे वा । धर्मे त्रयोदश पितृषु स्वधा हविर्भुजि स्वाहा त्वदंशे गिरिशे सतीं च ददौ । धर्मे धर्मदेवे । त्रयोदश । कन्या इत्यनुषज्यते । पितृषु स्वधा तदाख्या पुत्रीम् । हविर्भुजि अग्नौ । स्वाहा स्वाहाभिधाना कन्याम् । त्वदंशे तवैव मूर्त्यन्तरे । गिरिशे शिवे । सतीं तन्नामधेया दुहितरम् । ददौ धर्मदेवादिभ्यो दत्तवानित्यर्थ ॥

सम्प्रति भगवतो नरनारायणावतारमाह—

मूर्तिर्हि धर्मगृहिणी सुषुवे भवन्त
नारायणं नरसखं महितानुभावम् ।
यज्जन्मनि प्रमुदिताः कृततूर्यघोषाः
पुष्पोत्करान् प्रववृषुर्नुनुवुः सुरौघाः ॥ २ ॥

मूर्तिरिति ॥ धर्मगृहिणी मूर्ति हि महितानुभाव भवन्त नरसख नारायण सुषुवे । धर्मगृहिणी धर्मस्य धर्मदेवस्य गृहिणी पत्नी । मूर्तिरिति

नाम। हिस्त्वर्थो विशेषे। विशेषमाह—भवन्तं सुषुव इति। महितः पूजितः अनुभावस्तेजो यस्य तं महितानुभावम्। भवन्तं भवन्तमेव। नरस्य सखा नर सखस्ताहशम्। भवदंशभूतौ महानुभावौ नरनारायणावित्यर्थः। सुषुवे जनयामास। यज्जन्मनि सुरौघाः प्रमुदिताः कृततूर्यघोषाः पुष्पोत्करान् प्रववृषुः नुनुवुः। यज्जन्मनि ययोर्नरनारायणयोर्जन्मनि जननसमये। सुरौघा देवसमूहाः। प्रमुदिताः प्रकर्षेण मुदिताः सन्तुष्टाः। अत एव कृतस्तूर्यघोषो मङ्गलवाद्यघोषो यैस्ते कृततूर्यघोषाः। पुष्पोत्करान् श्रेष्ठानि देवतरुकुसुमानि। प्रववृषुः प्रकर्षेण ववृषुः। नुनुवुस्तुष्टुवुः। चकारोऽत्राध्याहर्तव्यः॥

एवं नरनारायणावतारमुक्त्वा सम्प्रति तस्य प्रयोजनमाह—

**दैत्यं सहस्रकवचं कवचैः परीतं**
**साहस्रवत्सरतपस्समराभिलव्यैः।**
**पर्यायनिर्मिततपस्समरौ भवन्तौ**
**शिष्टैककङ्कटममुं न्यहतां सलीलम् ॥ ३ ॥**

**दैत्यमिति॥** भवन्तौ साहस्रवत्सरतपस्समराभिलव्यैः कवचैः परीतं सहस्रकवचं दैत्यं पर्यायनिर्मिततपस्समरौ शिष्टैककङ्कटम् अमुं सलीलं न्यहताम्। भवन्तौ श्रीनरनारायणौ। साहस्रवत्सरतपस्समराभिलव्यैः साहस्रवत्सरतपस्समराभ्यां सहस्रवत्सरं चीर्णेन तपसा तावत्काले कृतेन युद्धेन चाभिलव्यैः छेद्यैः। कवचैः सहस्रसंख्यैर्वर्मभिः। परीतं सन्नद्धशरीरम्। अत एव नाम्ना सहस्रकवचम्। दैत्यम् असुरम्। पर्यायेण एकस्मिंस्तपश्चरत्यन्यो युध्यतीति क्रमेण निर्मितौ कृतौ तपश्च समरो युद्धश्चेति तपस्समरौ याभ्यां तौ पर्यायनिर्मिततपस्समरौ। शिष्टोऽवशिष्टः एकः कङ्कटः कवचो यस्य तं शिष्टैककङ्कटम्। कृत्वेति शेषः। अमुं सहस्रकवचम्। लीलया सह वर्तत इति सलीलम्। क्रियाविशेषणमेतत्। अनायासेनेत्यर्थः। न्यहतामवधिष्टाम्॥

इत्थं भगवतो नरनारायणावतारस्य सहस्रकवचवधरूपमेकं प्रयोजनमभिधायानन्तरं प्रयोजनान्तरमप्याह—

कादे। मन्मानसं मम मानसं मनः। जुषध्वम् अनुवर्तध्वम्। मम मानससङ्कल्पितं सत्कारं स्वर्गे दुर्लभं स्त्रीरत्नाख्यं किञ्चिद्वस्तु गृह्णीध्वमित्यर्थः॥

भगवत्परिचारिका दृष्टवतां मदनादीनां प्रवृत्तिमाह—

सम्मोहनाय मिलिता मदनादयस्ते
त्वद्दासिकापरिमलैः किल मोहमापन्।
दत्तां त्वया च जगृहुस्त्रपयैव सर्व-
स्वर्वासिगर्वशमनीं पुनरुर्वशीं ताम् ॥ ७ ॥

सम्मोहनायेति॥ ते सम्मोहनाय मिलिताः मदनादयः त्वद्दासिकापरिमलैः मोहम् आपन् किल। ते तव नरसखस्य श्रीनारायणस्य सम्मोहनाय त्वां मोहयितुमित्यर्थः। मिलिताः मिलित्वा आगताः। मदनः कामः, आदिर्येषां ते मदनादयः। त्वद्दासिकापरिमलैः त्वद्दासिकानां तव परिचारिकाणां परिमलैर्जनमनोहरैर्गन्धैः। आपन् मापुः। किलेति वार्तायाम्। त्वां मोहयितुमागता मदनादयो न केवलं तत्रासमर्था बभूवुः, किन्तु प्रत्युत त्वत्परिचारिकासौन्दर्यादिभिः मोहमप्यापुरित्यर्थः। पुनः त्वया दत्तां तामुर्वशीं त्रपया एव जगृहुः। पुनः अनन्तरम्। दत्तां वितीर्णाम्। तां प्रसिद्धाम्। उर्वशीं त्वत्सृष्टास्वन्यतमामुर्वशीं नाम परिचारिकाम्। त्रपया लज्जया। जगृहुः वीकृतवन्तः। चकारः क्रिययोः समुच्चयार्थः। त्रपाहेतुमुर्वश्याः सौन्दर्यातिशयमाह—सर्वस्वर्वासिगर्वशमनीमिति। सर्वासां स्वर्वासिनीनां स्वर्गस्त्रीणां गर्वशमनीं सौन्दर्यातिशयेन कमनीयतामदविनाशिनीम्॥

भगवन्मोहनाय गतान्मनोभवादवृत्तान्तं श्रुतवतः शक्रस्य दशामाह—

दृष्ट्वोर्वशीं तव कथां च निशम्य शक्रः
पर्याकुलोऽजनि भवन्महिमावमर्शात्।
एवं प्रशान्तरमणीयतरावतारा-
त्त्वत्तोऽधिको वरद कृष्णतनुस्त्वमेव ॥ ८ ॥

दृष्ट्वेति ॥ शक्रः उर्वशीं दृष्ट्वा तव कथां निशम्य च भवन्महिमाव मर्शात् पर्याकुलः अजनि। शक्र. देवेन्द्रः। उर्वशीं श्रीनारायणेन दत्ताम्। तव श्रीनारायणमूर्तेः। कथां समाधेरचलचित्ततां प्रशान्ततरत्वञ्च। निशम्य मनो भवादिभ्यः श्रुत्वा। भवन्महिमावमर्शात् भवतो महिम्नः माहात्म्यस्य अवमर्शा दनुसन्धानात्। पर्याकुलः पर्याकुलचेताः। अजनि जातः। अथ कविर्भग वतो नारायणस्य प्रशान्त्याद्यतिशयमनुसन्धायातिमात्रं विस्मितमनाः प्राह— हे वरद एवं प्रशान्तरमणीयतरावतारात् त्वत्तः अधिकः कृष्णतनुः त्वमेव इति। वरद अपकारिणामपि वरप्रद। एवमुक्तप्रकारेण। प्रशान्तः अतिशयेन सौम्यो रमणीयतरो विचित्रकर्मतया अतिरमणीयश्चावतारो यस्य तस्मात् प्रशान्तरम णीयतरावतारात्। त्वत्तः श्रीनारायणात्। अधिकः प्रशान्त्यादिभिरधिकः। कृष्णतनु' श्रीकृष्णात्मा। एवकारेणान्येषां व्यवच्छेदः॥

अथ दक्षाध्वरवर्णनेनाशान्तानां प्रशान्तिकृत्त्वं भगवतो वर्णयति द्वाभ्याम्—

दक्षस्तु धातुरतिलाळनया रजोन्धो
नात्यादृतस्त्वयि च कष्टमशान्तिरासीत्।
येन व्यरुन्ध स भवत्तनुमेव शर्वं
यज्ञे च वैरपिशुने स्वसुतां व्यमानीत् ॥ ९ ॥

दक्ष इति ॥ दक्षः तु कष्टं त्वयि च अशान्तिः आसीत्। दक्षो दक्ष प्रजापतिः। तुर्विशेषे। विशेषमाह—त्वयि चाशान्तिरासीदिति। कष्टमिति खेदे। जगत्पतौ भगवति दक्षस्याक्षमत्वानुसन्धानात् कवेः खेदः। त्वयि जगत्पतौ। चकारोप्यर्थकः। अविद्यमाना शान्तिः क्षमा यस्य सोऽशान्तिरक्षमः। त्वय्यपि प्रश्रयरहित आसीदित्यर्थः। अत्र हेतुमाह—धातुः अतिलाळनया रजोन्धः इति। धातुर्ब्रह्मणः। अतिलाळनया प्रजापतीनामाधिपत्ये स्थाप्य अभिषेकादिरूपया लाळनया। रजोन्धः रजसा रजोगुणकार्येण क्रोधमत्सरादिना। यदाह वाग्भटः— 'राजसं बहुभाषित्वं मानक्रुद्दम्भमत्सराः' इति। अन्धः विवेकशून्यः। अत एवाह— नात्यादृतः इति। अत्यादृतो न भवतीति नात्यादृतः। ब्रह्मणा परित्यक्त

इत्यर्थः। ननु दक्षः किं भगवन्तमनादृत्य कृतवानिति चेत्तत्राह—येन सः भवत्तनुमेव शर्वं व्यरुन्ध इति। येन त्वय्यक्षमतया। सः दक्षः। भवत्तनुं त्वदंश भूतम्। शर्वमीश्वरम्। व्यरुन्ध द्वेष्टि स्म। सभां प्रविशन्तमात्मानं विलोक्येश्वरः प्रत्युत्थानाद्युपचारं न कृतवानिति बहुविधं तमधिक्षिप्य तेन सह बद्धवैरो बभूवे त्यर्थः। च वैरपिशुने यज्ञे स्वसुतां व्यमानीत्। च किञ्च। वैरपिशुने स्वस्य शर्वस्य च परस्परविरोधद्योतके। यज्ञे अध्वरे। स्वसुतां स्वस्य सुतां दुहितरं शर्वपत्नीं सतीम्। व्यमानीदवमानितवान् ॥

क्रुद्धेशमर्दितमखः स तु कृत्तशीर्षो
देवप्रसादितहरादथ लब्धजीवः।
त्वत्पूरितक्रतुवरः पुनराप शान्तिं
स त्वं प्रशान्तिकर पाहि मरुत्पुरेश ॥ १० ॥

क्रुद्धेशमर्दितमख इति ॥ सः क्रुद्धेशमर्दितमखः कृत्तशीर्षः अथ देवप्रसादितहरात् लब्धजीवः पुनः त्वत्पूरितक्रतुवरः शान्तिमाप। सः दक्षः। क्रुद्धेन स्वपत्नीं पितुरवमानेन योगविसृष्टदेहां निशम्य कुपितेनेशेन शर्वेण। तत्प्रयुक्तेन महातेजसा वीरभद्रेणेत्यर्थः। मर्दितः चूर्णितो मखः तदुपकरणयज्ञपात्रयूपशालादिः यस्य सः क्रुद्धेशमर्दितमखः। कृत्तं वीरभद्रेण छिन्नं शीर्षं शिरो यस्य सः कृत्तशीर्षः। अथ अनन्तरम्। देवप्रसादितहरात् देवैः प्रसादितात्तोषितात् हरात् शर्वात्। लब्धः प्राप्तो जीवो यस्य सः लब्धजीवः। स्वशीर्षस्य वह्नौ दग्धतया अजस्य शीर्षं स्वस्य गले निधाय जीवितत्वेन अजशीर्षश्च भूत्वेत्यर्थः। पुनः अनन्तरम्। त्वया पूरितः समापितः क्रतुवरः श्रेष्ठो यागो यस्य सः त्वत्पूरितक्रतुवरः। शान्तिं शमम्। आप प्राप। एवं भगवतः प्रशान्तिकृत्त्वं वर्णयित्वाऽनन्तरं प्रार्थयते— हे प्रशान्तिकर मरुत्पुरेश स त्वं पाहि इति। प्रशान्तिं शमं करोतीति प्रशान्तिकरः। शान्तेः प्रकर्षश्च तस्याः कदाऽप्यप्रच्युतिः। मरुत्पुरेश गुरुवायुपुरनाथ। पाहि मामनन्यशरणं सर्वामयात् त्रायस्वेत्यर्थः ॥

इति नारायणचरितवर्णने दक्षयागवर्णनं च
षोडशदशकम् ॥

अथ भगवतो भक्तवात्सल्यातिशयं ध्रुवचरितवर्णनेनोदाहरिष्यन्नाह—

उत्तानपादनृपतेर्मनुनन्दनस्य
जाया बभूव सुरुचिर्नितरामभीष्टा ।
अन्या सुनीतिरिति भर्तुरनादृता सा
त्वामेव नित्यमगतिः शरणं गताऽभूत् ॥ १ ॥

उत्तानपादनृपतेरिति ॥ मनुनन्दनस्य उत्तानपादनृपतेः सुरुचिः जाया नितरामभीष्टा बभूव । मनुनन्दनस्य मनोः स्वायम्भुवस्य नन्दनस्य पुत्रस्य प्रियव्रतावरजस्य । उत्तानपादनृपतेः उत्तानपादाख्यस्य राज्ञः । सुरुचिः सुरुच्याख्या । जाया भार्या । नितरामत्यर्थम् । अभीष्टा प्रेमभाजनम् । बभूव जाता । सुनीतिः इति अन्या भर्तुः अनादृता । अन्या अपरा भार्या । अनादृता नात्यभीष्टा । बभूवे त्यनुषज्यते । अगतिः सा नित्यं त्वामेव शरणं गता अभूत् । अगतिः भर्त्रा नात्यादृतत्वादशरणा । सा सुनीतिः । नित्यं सर्वदा । त्वामीश्वरम् । शरणं गता अभूत् । निजदौर्भाग्यहेतुभूतदुरितशमनाय भक्तवत्सलं त्वामेवोपासाञ्चक्र इत्यर्थः । अनेनास्या भगवत्कृपया सुतेन सह ध्रुवपदप्राप्त्यादिर्ध्वन्यते ॥

सुनीतिसुतस्य ध्रुवस्य तपश्चरणे हेतुमाह—

अङ्के पितुः सुरुचिपुत्रकमुत्तमं तं
दृष्ट्वा ध्रुवः किल सुनीतिसुतोऽधिरोक्ष्यन् ।
आचिक्षिपे किल शिशुः सुतरां सुरुच्या
दुस्सन्त्यजा खलु भवद्विमुखैरसूया ॥ २ ॥

अङ्क इति ॥ शिशुः सुनीतिसुतः ध्रुवः किल सुतरां सुरुच्या आचिक्षिपे किल । सुनीतिसुतः सुनीतेः सुतः पुत्रः । ध्रुव इति नाम । किलेति त्वर्थे । सुतरामत्यर्थम् । आचिक्षिपे अधिक्षिप्तः । किलेति वार्तायाम् । अधिक्षेप

कारणमाह—सुरुचिपुत्रकं तम् उत्तमं पितुः अङ्के दृष्ट्वा अधिरोक्ष्यन्निति । सुरुचिपुत्रकं सुरुच्याः पुत्रम् । तं सुरुचिपुत्रतया पिता लालितत्वेन प्रसिद्धम् । उत्तम इति नाम । अङ्के उत्सङ्गे । अधिरोक्ष्यन् आरोढुमुद्यतः सन् । सुरुच्या किलाति गर्वितया सुनीतिसुतो ध्रुवः पितुरुत्तानपादस्य सिंहासनारूढस्याङ्क उपविष्टमुत्तमं दृष्ट्वा तस्याङ्कमधिरोक्ष्यन् पितुः पश्यत एव 'वत्स त्वं नृपतेर्धिष्ण्यं नारोढुमर्हसि, यन्नृपात्मजोऽपि मया कुक्षौ न गृहीतः । यदि त्वमिच्छसि नृपासनम्, तर्हि तपसा आराध्य हरिं तदनुग्रहेण मत्तो जन्म लभस्व' इत्यधिक्षिप्तोऽभूदित्यर्थः । अत्रार्थान्तरं न्यस्यति—भवद्विमुखैः असूया दुस्सन्त्यजा खलु इति । भवद्विमुखैः त्वय्यभक्तैः । दुस्सन्त्यजा त्यक्तुमशक्या । खल्विति प्रसिद्धौ । अनेन सुरुच्या ईश्वरविमुखतया पुत्रनाशादिर्ध्वन्यते ॥

सुरुच्या अधिक्षिप्तस्य ध्रुवस्य प्रवृत्तिमाह—

त्वन्मोहिते पितरि पश्यति दारवश्ये
दूरं दुरुक्तिनिहतः स गतो निजाम्बाम् ।
साऽपि स्वकर्मगतिसन्तरणाय पुंसां
त्वत्पादमेव शरणं शिशवे शशंस ॥ २ ॥

त्वन्मोहित इति ॥ स पितरि पश्यति दूरं दुरुक्तिनिहतः निजाम्बां गतः । सः ध्रुवः । पितरि पश्यति पश्यन्तं पितरमनादृत्येत्यर्थः । दूरमत्यर्थम् । दुरुक्तिनिहतः सुरुच्या दुरुक्तिभिर्दुर्वाग्विशिखैर्निहतः विद्धः । निजाम्बां स्वमातरं सुनीतिम् । गतः प्राप्तः । सुरुच्या भर्तुरनादरणे हेतुमाह—दारवश्ये इति । दाराणां स्वभार्यायास्सुरुच्या वश्ये वशंवदे । नैव च स्त्रियः प्रायेणात्मवश्यं पतिमाद्रियन्त इति भावः । एतेन स्वाङ्कमारुरुक्षन्तमात्मजं पश्यन्नपि सुरुचिभयेन राजा नाङ्कमारोपयत्, न वा स्वपुत्रमधिक्षिपन्तीं सुरुचिं निवारितवांश्चेति ध्वन्यते । ननु वशिनो नृपस्य कथं दारवश्यता समभवदिति चेत्तत्राह—त्वन्मोहिते इति । त्वया मोहिते इत्यर्थः । ईश्वरशक्त्या भवितव्यतया च मूढचित्त इत्यर्थः । सा अपि शिशवे पुंसां स्वकर्मगतिसन्तरणाय त्वत्पादमेव शरणं शशंस । सा सुनीतिः

अपिस्समुच्चये। शिशवे स्वपुत्राय ध्रुवाय। पुसा प्राणिनाम्। स्वकर्मगतिसन्तरणाय स्वस्य कर्मगते कर्मानुसारिण्या गते सुखदु खानुभवानुकूलतत्तच्छरीरप्राप्ते सन्तरणाय अतिक्रमणाय। तव पाद त्वत्पादम्। एवकारेणान्येषा व्यवच्छेद। शरण गतिम्। शशस उक्तवती। अत्र शिशवे इत्यनेन शिशुं स्वपुत्रमङ्कमारोप्य मा रौदीरित्याद्यनुनयपूर्वकमुक्तवतीति व्यज्यते ॥

मातुर्गिरमाकर्णयतो ध्रुवस्य प्रवृत्तिमाह—

आकर्ण्य सोपि भवदर्चननिश्चितात्मा
मानी निरेत्य नगरात् किल पञ्चवर्षः।
सन्दृष्टनारदनिवेदितमन्त्रमार्ग-
स्त्वामारराध तपसा मधुकाननान्ते ॥ ४ ॥

**आकर्ण्येति ॥** पञ्चवर्ष अपि मानी स आकर्ण्य भवदर्चननिश्चितात्मा नगरात् निरेत्य मधुकाननान्ते तपसा त्वामारराध किल। मानी मानशाली। मानश्चित्तसमुन्नति। सुरुच्या अधिक्षेपमसहमान इति भाव। एतद्विशेषण भगवदर्चननिश्चयहेतुत्वेनोपन्यस्तम्। स ध्रुव। आकर्ण्य श्रुत्वा। मातुर्गिरमिति शेष। भवत श्रीवैकुण्ठस्यार्चने तपसाऽऽराधने निश्चित आत्मा मनो यस्य स भवदर्चननिश्चितात्मा। निरेत्य जिगमिषुमात्मान दृष्ट्वा विषण्णा स्वमातर कथञ्चिदनुज्ञाप्यैकाकी स्वय निर्गत्येत्यर्थ। मधुकाननान्ते मधुवनमिति प्रसिद्धे देशे। त्वा श्रीवैकुण्ठम्। आरराध आराधितवान्। ननु बालत्वेन तपश्चर्यामजानन् ध्रुव कथ तपश्चचारेत्याशङ्कायामाह—सन्दृष्टनारदनिवेदितमन्त्रमार्ग इति। सन्दृष्टेन पथि दृष्टेन नारदेन निवेदित उपदिष्टो मन्त्रमार्ग भगवदाराधनक्रमो यस्य स ॥

आत्मदोषेण स्वसुत नगरान्निर्गतमुपश्रुत्य पश्चात्तपत उत्तानपादस्य श्रीनारदेन परिसान्त्वन ध्रुवस्य तपश्चर्याञ्चाह—

ताते विषण्णहृदये नगरीं गतेन
श्रीनारदेन परिसान्त्वितचित्तवृत्तौ।

बालस्त्वदर्पितमनाः क्रमवर्धितेन
निन्ये कठोरतपसा किल पञ्च मासान् ॥ ५ ॥

**तात इति** ॥ विषण्णहृदये ताते नगरीं गतेन श्रीनारदेन परिसान्त्वित चित्तवृत्तिः बालः त्वदर्पितमनाः क्रमवर्धितेन कठोरतपसा पञ्च मासान् निन्ये किल। विषण्णम् आत्मदोषेण बालकस्य नगरान्निर्गमनमुपश्रुत्य तस्यापायशङ्कया सोत्कण्ठं हृदयं मनो यस्य तस्मिन् विषण्णहृदये ताते पितर्युत्तानपादे। नगरीं पुरीम्। गतेन ध्रुवस्य तपश्चर्येतिकर्तव्यतोपदेशानन्तरमेव तस्य पितुर्दर्शनाय गतेन। परिसान्त्विता ध्रुवस्य भाविश्रेयःप्राप्तिकथनादिना मन्दीकृतशोकावेगा चित्तवृत्तिर्मनोवृत्तिर्यस्य तस्मिन् परिसान्त्वितचित्तवृत्तौ सति। त्वयीश्वरेऽर्पितं समर्पितं मनो यस्य सः त्वदर्पितमनाः। त्वय्यवहितमना इति यावत्। क्रमवर्धितेन क्रमेण वर्धितेन वृद्धिं नीतेन। फलपर्णजलादिक्रमेण शनैः परिहृतेनाहारेणाभिव्यक्तक्रमोत्कर्षेणेत्यर्थः। कठोरतपसा कठोरेण उग्रेण तपसा। निन्ये नीतवान्। किलेति वार्तायाम् ॥

एवमुग्रे तपसि वर्तमानस्य ध्रुवस्य पुरस्ताद्भगवान् हरिः प्रादुरासीदित्याह—

तावत्तपोबलनिरुच्छ्वसिते दिगन्ते
देवार्थितस्त्वमुदयत्करुणार्द्रचेताः।
त्वद्रूपचिद्रसनिलीनमतेः पुरस्ता-
दाविर्बभूविथ विभो गरुडाधिरूढः ॥ ६ ॥

**तावदिति** ॥ हे विभो त्वं देवार्थितः उदयत्करुणार्द्रचेताः त्वद्रूपचिद्रसनिलीनमतेः पुरस्तात् गरुडाधिरूढः आविर्बभूविथ। विभो परिपूर्ण। देवार्थितः देवैरर्थितो याचितः। उदयन्त्या देवेषु तपस्यति ध्रुवे वा सञ्जातया करुणया कृपारसेनार्द्रं सिक्तं चेतो हृदयं यस्य स उदयत्करुणार्द्रचेताः। त्वद्रूपचिद्रसे त्वद्रूपेण त्वदाकारेण चतुर्भुजत्वादिविशिष्टतया घनीभूय स्थिते चिद्रसे परब्रह्मणि निलीना तदाकाराकारिता मतिश्चित्तवृत्तिर्यस्य तस्य

त्वद्रूपचिद्रसनिलीनमतेः। ध्रुवस्येति शेषः। पुरस्तात् पुरोभागे। गरुडाधिरूढः गरुडोपरि स्थितः। आविर्बभूविथ प्रत्यक्षोऽभूः। अथवा त्वद्रूपचिद्रसनिलीनाया मतेरिति कर्मधारयः। ध्रुवस्य पुरस्तात् प्रादुरासीदिति योजना। अनेन च विद्युत्प्रभं भगवद्रूपं हृदि सहसा तिरोहितमुपलक्ष्योन्मीलितनयनो ध्रुवस्तदवस्थया बहिःस्थितमेव भगवन्तं ददर्शेति ध्वन्यते। देवानामर्थने हेतुमाह—तावत् दिगन्ते तपोबलनिरुच्छ्वसिते इति। तावत् ध्रुव उग्रे तपसि वर्तमाने। दिगन्ते। अत्र दिगन्तशब्देन दिगन्तवासिनो जना लक्ष्यन्ते। तिरश्चामपि श्वासरोध प्रतीतिः फलम्। तपसो बलेन निर्गतमुच्छ्वसितं यस्मात्तस्मिंस्तपोबलनिरुच्छ्वसिते सति। उक्तञ्चैतत् श्रीमद्भागवते—'तस्मिन्नभिध्यायति विश्वमात्मनो द्वारं निरुध्यासुमनन्यया धिया। लोका निरुच्छ्वासनिपीडिता भृशम्' इति॥

*अथालौकिकं भगवतो दिव्यमङ्गलविग्रहं चक्षुषा विलोक्य स्तोतुमिच्छतः स्तुतिप्रकारमजानतो ध्रुवस्य तत्सामर्थ्यं प्रायच्छद्भगवानित्याह—*

त्वद्दर्शनप्रमदभारतरङ्गितं तं
दृग्भ्यां निमग्नमिव रूपरसायने ते।
तुष्टूषमाणमवगम्य कपोलदेशे
संस्पृष्टवानसि दरेण तथाऽऽदरेण ॥ ७ ॥

त्वद्दर्शनेति॥ त्वं त्वद्दर्शनप्रमदभारतरङ्गितं ते रूपरसायने दृग्भ्यां निमग्नमिव तं तुष्टूषमाणमवगम्य आदरेण कपोलदेशे दरेण तथा संस्पृष्टवानसि। त्वद्दर्शनप्रमदभारतरङ्गितं त्वद्दर्शनेन तव दर्शनेन सञ्जातो यः प्रमदभरः वोढुमशक्यो हर्षस्तेन तरङ्गितमितिकर्तव्यतामूढतया किञ्चिदिव सम्भ्रान्तम्। ते तव श्रीहरेः। रूपरसायने रूपं सौन्दर्यमेव रसायनं रसस्य परमानन्दस्यायनं मार्गः तस्मिन्। परमानन्दप्राप्त्युपाये इत्यर्थः। भगवद्रूपदर्शनस्य परमानन्द प्राप्तिहेतुत्वादिति भावः। अथवा रूपरसायने रूपामृते। दृग्भ्यां चक्षुर्भ्याम्। निमग्नं नितरां मग्नम्। इवेति सम्भावनायाम्। स्थितमिति शेषः। तं ध्रुवम् तुष्टूषमाणं स्तोतुमिच्छन्तं तदसमर्थञ्च। अवगम्य ज्ञात्वा। उपगम्येति पाठे

शुश्रूषमाणं तमुपगम्येति योजना। उपगम्य तत्समीपं प्राप्येत्यर्थः। आदरेण लालनपूर्वकम्। कपोलदेशे गण्डप्रदेशे। दरेण शब्दब्रह्मात्मकेन पाञ्चजन्याख्येन शङ्खेन। तथा यथा स ध्रुवो भगवन्तं निर्गुणब्रह्मनिष्ठेन स्तोत्रेण स्तोतुं समर्थोऽभूत्तथा इत्यर्थः। संस्पृष्टवान् सम्यक् स्पृष्टवान् ॥

भगवतो ध्रुवाय वरप्रदानमाह—

तावद्विबोधविमलं प्रणुवन्तमेन-
माभाषथास्त्वमवगम्य तदीयभावम् ।
राज्यं चिरं समनुभूय भजस्व भूयः
सर्वोत्तरं ध्रुव पदं विनिवृत्तिहीनम् ॥ ८ ॥

इतीति ॥ त्वयि इति ऊचिषि गते असौ नृपनन्दनः आनन्दिताखिल जनः नगरीमुपेतः ताते वनं गते च आदृतराज्यभारः भवदनुग्रहपूर्णकामः चिरं रेमे । इति राज्यं चिरं समनुगृह्येत्याद्युक्तप्रकारेण । ऊचिषि उक्तवति । गते तिरोहिते । असौ नृपनन्दनः राजपुत्रो ध्रुवः । आनन्दिता अखिलजनाः समस्त जना येन स आनन्दिताखिलजनः । तपश्चरितुं वनं गतमात्मानमुपश्रुत्य अपाय शङ्कया पर्युत्सुकान् जनान् तपसाऽऽराध्य हरिमिष्टान् वरान् प्राप्यात्यन्तप्रेण प्रत्यागम नेनानन्दयन्नित्यर्थः । नगरीं स्वपुरीम् । उपेतः प्राप्तः । ताते पितर्युत्तानपादे । वनं तपोवनं गते याते । पश्चिमे वयसि तपश्चरितुमिति भावः । चकारस्त्वर्थे । आदृतः आदरेणार्पितो राज्यभारो यस्मिन् स आदृतराज्यभारः । न तु बलात्स्वा यत्तीकृत इति भावः । भवतोऽनुग्रहेण पूर्णास्सम्पूर्णाः कामा अभिलाषा यस्य सः भवदनुग्रहपूर्णकामः । चिरं चिराय । रेमे अरमत ॥

अथ ध्रुवस्य भगवद्भक्तिलाभं दर्शयति—

यक्षेण देव निहते पुनरुत्तमेऽस्मिन्
　यक्षैः स युद्धनिरतो विरतो मनूक्त्या ।
शान्त्या प्रसन्नहृदयाद्धनदादुपेता-
　त्त्वद्भक्तिमेव सुदृढामवृणोन्महात्मा　　॥ १० ॥

यक्षेणेति ॥ हे देव सः पुनः अस्मिन् उत्तमे यक्षेण निहते यक्षैः युद्धनिरतः मनूक्त्या विरतः उपेतात् धनदात् सुदृढां त्वद्भक्तिमेव अवृणोत् । देव प्रकाशमान । सः ध्रुवः । पुनरनन्तरम् । अस्मिन्नुत्तमे सुरुच्याः सुते । केनचिद्यक्षेण । निहते युद्धे हते । युद्धनिरतो युद्धे निरतः आसक्तः । भ्रात्राहं युद्धयन्नित्यर्थः । भ्रातृवधामर्षेणेति भावः । मनूक्त्या मनोः स्वपितामहस्योक्त्या वाचा । विरतः युद्धान्निवृत्तः । उपेतात् स्वसमीपं प्राप्तात् । धनदाद्वैश्रवणात् । वरं वृणीष्वेत्युक्तवत इति भावः । सुदृढामनपायिनीम् । त्वयि भक्तिं त्वद्भक्तिम् । एवकारेणान्येषां व्यवच्छेदः । अवृणोत् प्रार्थितवान् । वैश्रवणस्य ध्रुवसमीपप्राप्तौ हेतुमाह—शान्त्या प्रसन्नहृदयादिति । शान्त्या युद्धान्निवृत्त्या । प्रसन्नं सन्तुष्टं

हृदय मनो यस्य तस्मात् प्रसन्नहृदयात्। ध्रुवस्य भगवद्भक्तिप्रार्थने हेतुमाह— महात्मा इति। महात्मतयेत्यर्थ ॥

एव ध्रुवस्य भगवद्वरफलस्यैकाशभूत राज्यलाभमुपवर्ण्यानन्तरमपराशभूता ध्रुवपदप्राप्तिमाह—

अन्ते भवत्पुरुपनीतविमानयातो
मात्रा सम ध्रुवपदे मुदितोऽयमास्ते।
एव स्वभृत्यजनपालनलोलधीस्त्व
वातालयाधिप निरुन्धि ममामयौघान् ॥ ११ ॥

अन्त इति॥ अयम् अन्ते मात्रा सम भगवत्पुरुपनीतविमानयात ध्रुवपदे मुदित आस्ते। अय ध्रुव। मात्रा स्वस्य जनन्या सुनीत्या। सम सह। अन्ते अवसाने। भवत्पुरुपनीतविमानयात भवत्पुरुषैर्भवत्पार्षदैर्नीतेनानीतेन विमानेन यातो गत। मुदित प्रीत। आस्ते अधुनाऽपि वर्तते। एव ध्रुवचरित वर्णनेन भगवतो भक्तवात्सल्यातिशयमुदाहृत्यानन्तर प्रार्थयते—हे वातालयाधिप एव स्वभृत्यजनपालनलोलधी स मम आमयौघान् निरुन्धि इति। वातालयाधिप गुरुपवनपुराधिप। एवमुक्तप्रकारेण। स्वभृत्यजनाना स्वभक्ताना पालने रक्षणे लोला सतृष्णा धीर्बुद्धिर्यस्य स स्वभृत्यजनपालनलोलधी। अनेन विशेषणेन भगवद्भृत्यजनकोटिप्रविष्टस्य कवे पालनमनुपेक्षणीयमिति द्योत्यते। मम त्वद्दासस्य। आमयौघानामयाना बाह्यानामाभ्यन्तराणाञ्चौघान् समूहान्। निरुन्धि निवारय॥

इति ध्रुवचरितवर्णनं

सप्तदशदशकम् ॥

अथ भगवतः पृथ्व्यवतारचरितमवतारयितुं वेनस्य चरितं प्रस्तौति—

जातस्य ध्रुवकुल एव तुङ्गकीर्ते-
रङ्गस्य व्यजनि सुतः स वेननामा।
यद्दोषव्यथितमतिः स राजवर्य-
स्त्वत्पादे निहितमना वनं गतोऽभूत् ॥ १ ॥

जातस्येति ॥ ध्रुवकुले एव जातस्य तुङ्गकीर्तेः अङ्गस्य वेननामा सः सुतः व्यजनि। ध्रुवकुले ध्रुवस्य कुले वंशे। जातस्य उत्पन्नस्य। तुङ्गकीर्तेर्महायशसः। अङ्गस्य अङ्गनाम्नो राज्ञः। वेननाम वेनाख्यः। सः तादृशः। सुतः पुत्रः। व्यजनि जातः। तत्पदार्थमाह—सः राजवर्यः यद्दोषव्यथितमतिः त्वत्पादे निहितमनाः वनं गतः अभूदिति। सः अङ्गनामा। राजवर्यः राजश्रेष्ठः। यस्य वेनस्य दोषेण अधर्मकारितया व्यथिता दुःखिता मतिर्यस्य सः यद्दोषव्यथितमतिः। यस्य दोषेण दुःखान्निर्विण्ण इत्यर्थः। त्वत्पादे तव पादे चरणपङ्कजे। निहितमर्पितं मनो यस्य सः निहितमनाः। वनं तपोवनम्। गतः प्राप्तः। निशीथसमये जनैरलक्षितो गत इति द्रष्टव्यम्॥

वेनस्याधर्मकारितां प्रपञ्चयति—

पापोऽपि क्षितितलपालनाय वेनः
पौराद्यैरुपनिहितः कठोरवीर्यः।
सर्वेभ्यो निजबलमेव संप्रशंसन्
भूचक्रे तव यजनान्ययं न्यरौत्सीत् ॥ २ ॥

पाप इति ॥ अयं वेनः पापः अपि पौराद्यैः क्षितितलपालनाय उपनिहितः सर्वेभ्यः निजबलमेव संप्रशंसन् भूचक्रे तव यजनानि न्यरौत्सीत्। पापः अधर्मकारी। अपिर्विरोधे। पौराद्यैः पुरवासिप्रभृतिभिः। क्षितितलपालनाय क्षिति

तलस्य भूतलस्य पालनाय रक्षणाय। उपनिहितः सिंहासने स्थाप्याभिषिक्त.। अनन्यगतिकत्वादिति भावः। सर्वेभ्यः सर्वजनेभ्यः। निजबलमात्मनो बलम्। एव कारेणान्येषां व्यवच्छेदः। संप्रशंसन् स्तुवन्। भूचक्रे भूमण्डले। तव श्रीनारायणस्य। यजनानि यागादीनीत्यर्थः। न्यरौत्सीत् निररुधे। ननु कुतो नायमधर्मकारी वेनः केनापि प्रतिषिद्ध इति चेत्तत्राह—कठोरवीर्यः इति। कठोरं दुस्सहं वीर्यं पराक्रमो यस्य स.। केनापि प्रतिषेद्धुमशक्य इति भावः॥

अथेश्वरनिन्दया वेनो विनष्टोऽभूदित्याह—

सम्प्राप्ते हितकथनाय तापसौघे
मत्तोऽन्यो भुवनपतिर्न कश्चनेति।
त्वन्निन्दावचनपरो मुनीश्वरैस्तैः
शापाग्नौ शलभदशामनायि वेनः ॥ ३ ॥

**सम्प्राप्त इति** ॥ वेनः तापसौघे हितकथनाय सम्प्राप्ते तैः मुनीश्वरै. शापाग्नौ शलभदशामनायि। तापसौघे तापसानां मुनीनामोघे समूहे। हितकथनाय हितस्य पथ्यस्य कथनाय। वेनाय हितं कथयितुमित्यर्थः। सम्प्राप्ते आगते सति। तैर्हितकथनार्थमागतै.। मुनीश्वरैर्मुनीनामीश्वरैरधिपैः। शाप एवाग्निश्शापाग्निस्तस्मिन्। शलभदशां शलभस्य पतङ्गस्य दशामवस्थाम्। अनायि नीतः। मुनीन्द्रा वेनं शापेन पञ्चतामनयन्नित्यर्थः। अत्र हेतुमाह—इति त्वन्निन्दावचनपरः इति। इति अनेन प्रकारेण। त्वन्निन्दावचनपरः तवेश्वरस्य निन्दारूपे वचने तत्परः। इतीत्यनेनोक्तं निन्दावचनमाह—मत्त. अन्यः कश्चन भुवनपति न इति। मत्तोऽन्यो मदन्य.। भुवनपतिर्लोकनाथः। न नास्ति॥

अथ पृथ्ववतारमाह—

तन्नाशात् खलजनभीरुकैर्मुनीन्द्रै-
स्तन्मात्रा चिरपरिरक्षिते तदङ्गे।
त्यक्ताघे परिमथितादथोरुदण्डा-
द्दोर्दण्डे परिमथिते त्वमाविरासीः ॥ ४ ॥

**तन्नाशादिति** ॥ मुनीन्द्रैः अथ दोर्दण्डे परिमथिते त्वमाविरासीः । मुनीन्द्रैः मुनिश्रेष्ठैः । अथ अनन्तरम् । दोर्दण्डे भुजदण्डे । परिमथिते परितो मथिते । त्वं पृथुरूपः । आविरासीः प्रादुर्भूतः । ननु किमर्थं मुनीन्द्रा वेनस्य दोर्दण्डं निर्मेथुरिति चेत्तत्राह—तन्नाशात् खलजनभीरुकैरिति । तन्नाशात् तस्य वेनस्य नाशात् । खलजनभीरुकैः अराजकत्वात् खलजनेभ्यो दस्युभ्यो भीरुकैः भयशीलैः । ननु कथमतिदुर्वृत्तस्य वेनस्य शरीरात् भगवान् श्रीहरिः प्रादुरासी दिति चेत्तत्राह—तदङ्गे परिमथिताद् ऊरुदण्डात् त्यक्ताघे इति । तदङ्गे तस्य वेनस्याङ्गे । त्यक्तमघं कल्मषं येन तस्मिंस्त्यक्ताघे सति । अत्रायमर्थः—ऋषिभिर्मथिताद्वेनस्योरुदण्डान्निषादो नाम कश्चित् पुरुषो जातः । स वेनकल्मषां शत्वात् कृष्णवर्णः । तद्वंश्या नैषादा गिरिकाननचराश्चाभूवन्निति । ननु मथनस्य कालान्तरोऽत्पन्नत्वेन तावत्पर्यन्तं कथं प्राणैर्वियुक्तं वेनस्य शरीरमक्लिन्नमवस्थित मिति चेत्तत्राह—तन्मात्रा चिरपरिरक्षिते इति । तन्मात्रा तस्य वेनस्य मात्रा सुनीथाख्यया । चिरपरिरक्षिते स्वस्य योगबलेन चिराय परिरक्षिते ॥

पृथ्ववतारस्य प्रयोजनमाह—

> विख्यातः पृथुरिति तापसोपदिष्टैः
> सूताद्यैः परिणुतभाविभूरिवीर्यः ।
> वेनार्त्या कबलितसम्पदं धरित्री-
> माक्रान्तां निजधनुषा समामकार्षीः ॥ ५ ॥

**विख्यात इति** ॥ पृथुः इति विख्यात. सूताद्यैः परिणुतभाविभूरिवीर्यः त्वम् आक्रान्तां धरित्रीं निजधनुषा समामकार्षी. । विख्यातः प्रसिद्धः । सूताद्यैः सूतमागधवन्दिभिः । परिणुतानि परितो नुतानि स्तुतानि भावीन्यागा मीनि भूरीणि प्रभूतानि वीर्याणि महीदोहनैकोनशतक्रतुत्वादीनि यस्य स. परिणुतभाविभूरिवीर्यः । आक्रान्तां क्रुद्धेन त्वयाऽऽत्तशरासनेन धावताऽभिभूताम् । धरीत्रीं भूमिम् । निजधनुषा आत्मधनुष्कोट्या । समां समतलाम् । अकार्षीः . कृतवानसि । गिरिकूटानि चूर्णयन् पुरग्रामादिविभागेन प्रायस्समतरां कृतवानिति

भावः। धरित्र्या आक्रमणे हेतुमाह—वेनार्त्या कवलितसम्पदमिति। वेनार्त्या वेनकृतया पीडया। कवलिताः ग्रस्ताः सम्पदः ओषधयो यया तां कवलितसम्पदम्। तां मोचयितुमिति भावः। ननु कथं सूतायैर्भावीनि पृथोर्वीर्याणि ज्ञातानीति चेत्तत्राह—तापसोपदिष्टैरिति। तापसैर्मुनिभिरुपदिष्टैः। अयं साक्षाद्धरेरंश इत्यादितापसोपदेशेन तव प्रभावज्ञैरित्यर्थः॥

अथ प्रजाः पृथिव्या कवलितां सम्पदं यथेष्टं दुदुहुरित्याह—

भूयस्तां निजकुलमुख्यवत्सयुक्तै-
देवाद्यैः समुचितचारुभाजनेषु।
अन्नादीन्यभिलषितानि तानि तानि
स्वच्छन्दं सुरभितनूमदूदुहस्त्वम् ॥ ६ ॥

**भूय इति॥** भूयः त्वं निजकुलमुख्यवत्सयुक्तैः देवाद्यैः समुचितचारुभाजनेषु ताम् अन्नादीनि तानि तानि अभिलषितानि स्वच्छन्दं अदूदुहः। भूयः अनन्तरम्। त्वं पृथुरूपः। निजकुलमुख्यवत्सयुक्तैः निजकुलानामात्मकुलानां मुख्यैः अधिपैरेव वत्सैर्वत्सरूपेणावस्थितैर्युक्तैरन्वितैः। देवाद्यैः देवासुरप्रभृतिभिः। समुचितचारुभाजनेषु समुचितेषु तत्तद्दोहनयोग्येषु चारुषु मनोहरेषु भाजनेषु पात्रेषु। तां पृथिवीम्। अन्नादीनि अन्नप्रभृतीनि। अभिलषितानि इष्टवस्तूनि। स्वच्छन्दं यथेष्टम्। अदूदुहः दोहयामासिथ। पृथिव्या दोहनयोग्यतामाह—सुरभितनूमिति। सुरभितनूं पशुरूपधारिणीम्। अयमर्थः—पृथुः स्वकुलमुख्यं मनुं वत्सं कृत्वा पाणिपात्रे ओषधीरदुहत्। ऋषयो बृहस्पतिं वत्सं कृत्वेन्द्रियेषु पात्रेषु छन्दोमयं क्षीरं दुदुहुः। असुराः प्रह्लादं वत्सं कृत्वाऽय.पात्रे सुरां दुदुहुः। गन्धर्वा मधु, पितरः कव्यमेवंरीत्या सर्वेऽपि स्वमुख्यं वत्सं कृत्वा गोरूपधारिणीं वसुन्धरा तत्तत्समुचितेषु पात्रेषु पयोरूपाणि स्वाभिलषितानि वस्तूनि पृथ्वाज्ञया दुदुहुरिति॥

एवं पृथोरलौकिकं महिमानमुपवर्ण्यानन्तरमेकोनशतं क्रतूनाहृत्यान्ते भगवन्तं श्रीहरिमद्राक्षीदित्याह द्वाभ्याम्—

आत्मानं यजति मखैस्त्वयि त्रिधाम-
आरब्धे शततमवाजिमेधयागे।
स्पर्धालुः शतमख एत्य नीचवेषो
हृत्वाऽश्वं तव तनयात् पराजितोऽभूत् ॥ ७ ॥

आत्मानमिति ॥ हे त्रिधामन् त्वयि मखैः आत्मानं यजति शततम वाजिमेधयागे आरब्धे स्पर्धालुः शतमखः नीचवेषः एत्य अश्वं हृत्वा तव तनयात् पराजितः अभूत्। त्रिधामन् विष्णो। त्वयि पृथुरूपे। मखैरश्वमेधैः। आत्मानं सर्वदेवमयं स्वमेव। यजति सति। शततमवाजिमेधयागे शततमे शतसंख्याया अन्तिमे वाजिमेधयागे अश्वमेधयागे। आरब्धे सति। स्पर्धालुरसूयावान्। शतमखो देवेन्द्रः। अत्र शतमखपदेन अहमेव लोके शतमखसंज्ञ इत्यभि मानीति व्यज्यते। अत एव देवेन्द्रस्य पृथुना सह शततमेऽश्वमेधयागे प्रारब्धे स्पर्धा जातेति द्रष्टव्यम्। नीचवेषः पाषण्डरूपधारी। एत्य आगत्य। अश्वं मेध्या श्वम्। हृत्वा अपहृत्य। तनयात् पुत्रात्। पराजितः अपजयं प्राप्तः। इन्द्रं विजित्याश्वस्य प्रत्यानयनात् पृथुपुत्रस्य विजिताश्व इति संज्ञा चाभवदिति वेदितव्यम् ॥

देवेन्द्रं मुहुरिति वाजिनं हरन्तं
वह्नौ तं मुनिवरमण्डले जुहूर्षौ।
रुन्धाने कमलभवे क्रतोः समाप्तौ
साक्षात्त्वं मधुरिपुमैक्षथाः स्वयं स्वम् ॥ ८ ॥

देवेन्द्रमिति ॥ मुनिवरमण्डले इति मुहुः वाजिनं हरन्तं तं देवेन्द्रं वह्नौ जुहूर्षौ कमलभवे रुन्धाने त्वं क्रतोः समाप्तौ स्वयं स्वं मधुरिपुं साक्षात् ऐक्षथाः। मुनिवरमण्डले मुनिवराणां मुनिश्रेष्ठानां मण्डले समूहे। इति अनेन प्रकारेण। नीच वेषं धृत्वेत्यर्थः। मुहुः पुनः पुनः। अनेन यदा यदाऽश्वमपहरति, तदा तदा विजि ताश्वो युद्ध्यति, तस्मात् पराजितोऽश्वं मुञ्चतीति च ध्वन्यते। वाजिनं मेध्याश्वम्। हरन्तमपहरन्तम्। वह्नौ दक्षिणाग्नौ। जुहूर्षौ यथार्थमाभिचारविभिन्न होतु

मिच्छति सति । कमलभवे जगत्स्रष्टरि ब्रह्मणि । रुन्धाने हे पृथो तवैकोनशतक्रतु त्वेनाल्पम्, इन्द्रश्च प्रीतो भवत्वित्यागत्य प्रतिषेध कुर्वति सति । त्व पृथुवपु । क्रतोर्यागस्य। समाप्तौ अवसाने। क्रतौ समापितायामित्यर्थ । स्वमात्मानमेव । मधुरिपु विष्णुम्। साक्षात् चाक्षुपतया । ऐक्षथा दृष्टवानसि ॥

अथ पृथोर्भगवतो वरप्राप्ति सनकादिदर्शनञ्चाह—

तद्दत्त वरमुपलभ्य भक्तिमेकां
गङ्गान्ते विहितपदः कदापि देव ।
सत्रस्थ मुनिनिवह हितानि शस
न्नैक्षिष्ठाः सनकमुखान् मुनीन् पुरस्तात् ॥ ९ ॥

तद्दत्तमिति ॥ हे देव त्व तद्दत्त वरम् एका भक्तिमुपलभ्य गङ्गान्ते विहित पद कदापि सत्रस्थ मुनिनिवह हितानि शसन् सनकमुखान् मुनीन् पुरस्तात् ऐक्षिष्ठा । देव प्रकाशमान । त्व पृथुवपु । तद्दत्त तेन विष्णुना दत्तम् । वर मनुग्रहम् । एका भक्तिम् अनपायिनीं भक्तिमेकामित्यर्थ । उपलभ्य प्राप्य । गङ्गान्ते गङ्गायमुनयोर्मध्ये । विहित रचित पद स्थान येन ॥ विहितपद । कदापि कदाचित् । सत्रस्थ सत्रे यागे प्राप्तम् । मुनिनिवह मुनीना ब्रह्मर्षीणा देवर्षीणाञ्च निवह समूहम् । हितानि प्रवृत्तिनिवृत्तिलक्षण धर्मद्वयमित्यर्थ । शसन् उपदिशन् । तदन्ते सनकमुखान् सनकसनन्दसनातनसनत्कुमारान् मुनीन् पुरस्तात् पुरोभागे ऐक्षिष्ठा दृष्टवानसि ॥

पृथोर्भगवत्प्राप्तिमाह—

विज्ञान सनकमुखोदित दधानः
स्वात्मान स्वयमगमो वनान्तसेवी ।
तत्तादृक् पृथुवपुरीश सत्वर मे
रोगौघ प्रशमय वातगेहवासिन् ॥ १० ॥

**विज्ञानमिति** ॥ त्वं सनकमुखोदितं विज्ञानं दधानः वनान्तसेवी स्वयं स्वात्मानमगमः। त्वं पृथुवपुः। सनकमुखोदितं सनकमुखैः सनकादिभिरुदित मुपदिष्टम्। विज्ञानं ब्रह्मज्ञानम्। दधानः सम्यगवधारयन्। वनान्तसेवी पुत्रे राज्यं विन्यस्य वनं प्राप्य तपश्चरन्नित्यर्थः। स्वयं जगदनुग्रहायाङ्गीकृतलीला विग्रहस्त्वम्। स्वात्मानं स्वस्वरूपं ब्रह्म। अगमः प्राप्त.। एवं पृथ्ववतारचरित्र मुपसंगृह्यानन्तरं प्रार्थयते—हे ईश वातगेहवासिन् तत्तादृक् पृथुवपुः त्वं सत्वरं मे रोगौघं प्रशमय इति। ईश जगद्रक्षक। वातगेहवासिन् श्रीगुरुवायुपुरनाथ। स एव तादृक् सदृशो यस्य स. तत्तादृक्। अनुपम इत्यर्थः। पृथुवपु. पृथु रूपः। सत्वरं झटिति। मे ममानन्यशरणस्य। रोगौघं रोगाणां बाह्यानामाभ्य न्तराणाञ्च ओघं समूहम्। प्रशमय प्रकर्षेण शमय नाशय। पुनरनुत्पादाय समूलमुन्मूलयेत्यर्थः॥

इति पृथुचरितवर्णनम्

अष्टादशदशकम् ॥

---

## एकोनविंशदशकम् ॥

पूर्वं ध्रुवचरितवर्णनेनोदाहृतस्यापि भगवतो भक्तवात्सल्यातिशयस्य सम्प्र त्युदाहरणान्तरमाह दशभिः—

**पृथोस्तु नप्ता पृथुधर्मकर्मठः प्राचीनबर्हिर्युवतौ शतद्रुतौ।**
**प्रचेतसो नाम सुचेतसः सुतानजीजनत्त्वत्करुणाङ्कुरानिव ॥ १ ॥**

**पृथोरिति** ॥ पृथोः नप्ता प्राचीनबर्हिः तु शतद्रुतौ युवतौ प्रचेतसः नाम सुतान् अजीजनत्। नप्ता पौत्रस्य पुत्रः। पृथोः पुत्रो विजिताश्वस्तत्पुत्रो हवि र्धानस्तत्सुतो बर्हिषदापराख्योऽयमिति भाव.। प्राचीनबर्हिः प्राचीनबर्हिरिति

प्रसिद्धः। शतद्रुतौ तदाख्यायाम्। युवतौ भार्यायाम्। प्रचेतसो नाम प्रचेतस इति तुल्यनाम्नः। सुतान् पुत्रान्। अजीजनज्जनयामास। प्राचीनबर्हिरिति संज्ञायां हेतुमाह—पृथुधर्मकर्मठः इति। पृथुर्विस्तृतो धर्मो यस्य सः पृथुधर्मा स चासौ कर्मठः कर्मशूरश्चेति विशेषणयोरपि विशेषणसमास.। धर्मार्थं प्राचीनाग्रैः कुशैरास्तृतमिदं भूमण्डलमनेनेति प्राचीनबर्हिरिति प्रसिद्ध इति भावः। एतच्च विशेषणं वक्ष्यमाणगुणविशिष्टपुत्रोत्पादनयोग्यतां व्यनक्ति। प्रचेतस उत्प्रेक्षते—त्वत्करुणाङ्कुरानिव इति। त्वत्करुणायास्तव प्राचीनबर्हिर्विषयायाः करुणायाः कृपाया अङ्कुरान् प्ररोहान्। इवेति सम्भावनायाम्। उत्प्रेक्षाहेतुमाह—सुचेतस इति। शोभनं रागद्वेषादिरूपदोषराहित्येन भगवद्भक्त्यादिरूपगुणगणवत्तया चात्यन्तरमणीयं चेतो मनो येषां ते सुचेतसः। भगवत्कृपाङ्कुरव्यतिरिक्तेष्वेवंविधानां गुणानामसम्भाव्यत्वादिति भाव.। उत्प्रेक्षया च पितुस्सर्वार्थसाधकत्वं व्यज्यते। उक्तञ्चैतत्—'कृपा ते जाता चेत् किमिव न हि लभ्यं तनुभृताम्' इति॥

अथ प्रचेतसां भगवदाराधनोपक्रमं वर्णयति—

**पितुः सिसृक्षारसिकस्य शासनात् भवत्तपस्याभिरता दशापि ते।**
**पयोनिधिं पश्चिममेत्य तत्तटे सरोवरं सन्ददृशुर्मनोहरम्॥ २॥**

**पितुरिति॥** ते दश अपि पश्चिमं पयोनिधिमेत्य तत्तटे सरोवरं सन्ददृशु.। ते प्रचेतसः। पश्चिमं प्रतीचीं दिशमाश्रितम्। पयोनिधिं समुद्रम्। एत्य प्राप्य। तत्तटे तस्य पश्चिमसमुद्रस्य तटे तीरप्रदेशे। सरोवरं श्रेष्ठं सरः। सन्ददृशुर्दृष्टवन्तः। सरसः श्रेष्ठतापादकं विशेषमाह—मनोहरमिति। मनो हरति निर्मलेन सलिलेन विकसत्कमलकैरवकल्हारादिभिर्जलचरविहङ्गमकरकूजितैश्चेति मनोहरम्। प्रचेतसां पश्चिमसमुद्रतीरप्राप्तिकारणमाह—सिसृक्षारसिकस्य पितु. शासनात् भवत्तपस्याभिरताः इति। सिसृक्षारसिकस्य सिसृक्षा स्रष्टुमिच्छा तत्र रसिकस्य प्रीतिभाजः। प्रजासर्गकामस्येत्यर्थः। पितुर्जनकस्य प्राचीनबर्हिषः। शासनात् प्रजा. सृजतेति नियोगात्। भवत्तपस्याभिरताः भवतस्तपस्यायां सृष्टि

नैपुण्यलाभार्थं तपसाऽऽराधने अभिरता उद्युक्ताः। तपश्चर्यासमुचितं देशमन्वेषयन्त इति भावः॥

सम्प्रति भगवान् रुद्रः प्रचेतसां भगवत्स्तोत्रमुपदिदेशेत्याह—

**तदाऽभवत्तीर्थमिदं समागतो भवो, भवत्सेवकदर्शनादृतः।**
**प्रकाशमासाद्य पुरः प्रचेतसामुपादिशत् भक्ततमस्तव स्तवम्॥ ३॥**

**तदेति॥** तदा भवः इदं तीर्थं समागतः अभवत्। तदा यदा प्रचेतसः सरोवरं प्रापुस्तदेत्यर्थः। भवः भगवान् श्रीरुद्रः। इदं पूर्वोक्तम्। तीर्थं सरः। सरोजलस्य पापशोधकत्वात्तीर्थपदेन निर्देशः। समागतः प्राप्तः। प्रचेतसामागमनात् पूर्वमेव तटाकस्य वर्तमान आसीदित्यर्थः। प्रचेतसां पुरः प्रकाशमासाद्य तव स्तवमुपादिशत्। अत्र स इत्यध्याहृत्य योज्यम्। सः भवः। पुरः पुरस्तात्। प्रकाशं प्रत्यक्षताम्। आसाद्य प्राप्य। तव श्रीवैकुण्ठस्य। स्तवं स्तोत्रम्। उपादिशदुपदिष्टवान्। उपदेशे हेतुः—भवत्सेवकदर्शनादृतः इति। भवत्सेवकानां भवदुपासकानां दर्शनेनावलोकनेनादृतः सादरः। अत्र हेतुं प्रदर्शयति—भक्ततमः इति। त्वय्यतिशयेन भक्त इत्यर्थः। भगवद्भक्ता भगवद्भक्तेषु सादरा भवन्तीति भावः॥

**स्तवं जपन्तस्तममी जलान्तरे भवन्तमासेविषतायुतं समाः।**
**भवत्सुखास्वादरसादमीष्वियान् बभूव कालो ध्रुववन्न शीघ्रता॥ ४॥**

**स्तवमिति॥** अमी तं स्तवं जपन्तः अयुतं समाः जलान्तरे भवन्तं आसेविषत। अमी प्रचेतसः। तं रुद्रोपदिष्टं स्तवं स्तोत्रम्। जपन्तः पठन्तः। अयुतं दशसहस्रपरिमिताः। समाः संवत्सरान्। अत्यन्तसंयोगे द्वितीया। जलान्तरे जलाभ्यन्तरे। भवन्तं श्रीहरिम्। आसेविषत आसेवन्त। ननु ध्रुव इव तेष्वपि कुतो न भगवान् शीघ्रं प्रसन्नोऽभूदिति चेत्तत्राह—भवत्सुखास्वादरसात् अमीषु इयान् कालः बभूव। ध्रुववत् शीघ्रता न इति। भवत्सुखास्वादरसात् भवानेव सुखं भवत्सुखं ब्रह्मानन्दः तस्यास्वादे आस्वादने रसादाग्रहात्। अमीषु प्रचेतस्सु। इयान् अयुत

संवत्सरपरिमितः। कालः समयः। बभूव समभवत्। न तु भगवत्प्रसादविलम्बात्, किन्तु ब्रह्मानन्दानुभवतत्पराणां स्वभक्तानां मनोरथं पूरयितुमेवायं कालविलम्ब इति भावः। ध्रुववत् ध्रुवस्येव। शीघ्रता शीघ्रमेव वरप्रदानम्॥

प्रचेतसां भगवदाराधनप्रकारमाह—

**तपोभिरेषामतिमात्रवर्धिभिः स यज्ञहिंसानिरतोऽपि पावितः।**
**पितापि तेषां गृहयातनारदप्रदर्शितात्मा भवदात्मतां ययौ ॥ ५ ॥**

**तपोभिरिति॥** यज्ञहिंसानिरतः सः अपि एषां तपोभिः पावितः। यज्ञहिंसानिरतः यज्ञहिंसायां भगवद्यजननिरोधने निरतः आसक्तः। सः येन। अपिर्विरोधे। पावितः भगवद्यजननिरोधजनितदुरितनिवृत्तिद्वारा नरकादुद्धारित इत्यर्थः। ननु कथमीदृङ्महापापनिवर्तकत्वं तपसामिति चेत्तत्राह—अतिमात्र वर्धिभिः इति। अतिमात्रमतिशयेन वर्धिष्णुभि.। एवं प्रचेतसां तपश्चर्यामभिधाय तस्मिन्नवसरे निर्वृत्तां तत्पितुः प्राचीनबर्हिषः सायुज्यप्राप्तिमाह—तेषां पिता अपि भवदात्मतां ययौ इति। तेषां प्रचेतसाम्। पिता जनकः प्राचीनबर्हिः। अपिस्त्वर्थो विरोधे। विशेषमाह—भवदात्मतां ययाविति। भवदात्मतां भवत्स्व रूपताम्। भवत्सायुज्यमित्यर्थः। ययौ प्राप। सायुज्यप्राप्तौ हेतुमाह—गृह यातनारदप्रदर्शितात्मा इति। गृहयातेन गृहागतेन श्रीनारदेन प्रदर्शितः उपदिष्ट आत्मा श्रीहरिर्यस्य तादृशः सन्। 'आप्तत्वाच्च प्रमातृत्वादात्मा हि परमो हरि.' इत्युक्तत्वादात्मशब्देनात्मन. करतलामलकवदुपलब्धत्वं द्योत्यते॥

अथ भगवान् श्रीहरिः प्रचेतसां पुरस्तात् प्रादुरासीदित्याह—

**कृपाबलेनैव पुरः प्रचेतसां प्रकाशमागाः पतगेन्द्रवाहनः।**
**विराजिचक्रादिवरायुधांशुभिर्भुजाभिरष्टाभिरुदञ्चितद्युतिः ॥ ६ ॥**

**कृपाबलेनेति॥** त्वं कृपाबलेन एव प्रचेतसां पुरः प्रकाशमागाः। कृपा बलेन कृपाया भक्तवात्सल्यस्य बलेन। एवकारेण प्रचेतसां प्रार्थनाया व्यवच्छेदः। तेषां प्रार्थनाविरहे कारणं ब्रह्मानन्दास्वादरस इत्यवगन्तव्यम्। पुरः पुरस्तात्।

प्रकाशं प्रत्यक्षताम्। आगाः गतवानसि। प्रचेतसां पुरस्तादाविर्भूतस्य भगवतः स्वरूपमाह—पतगेन्द्रवाहनः विराजिचक्रादिवरायुधांशुभिः अष्टाभिः भुजाभिः उदञ्चितद्युतिः इति। पतगेन्द्रवाहनः गरुडसमधिरूढः। विराजिचक्रादिवरायुधांशुभिः विराजिभिः शोभमानैश्चक्रादीनां सुदर्शनप्रभृतीनां वरायुधानां श्रेष्ठानामायुधानामंशुभिः रश्मिभिः। उपलक्षिताभिरिति शेषः। अथवा, विराजिनः अतिशयेन दीपनशीलाश्चक्रादिवरायुधानामंशवो यासु ताभिः। भुजाभिर्बाहुभिः। उदञ्चितः ऊर्ध्वं प्रसृता द्युतिः शोभा यस्य सः उदञ्चितद्युतिः॥

भगवतो वरप्रदानमाह द्वाभ्याम्—

**प्रचेतसां तावदयाचतामपि त्वमेव कारुण्यभराद्वरानदाः।**
**भवद्विचिन्ताऽपि शिवाय देहिनां भवत्यसौ रुद्रनुतिश्च कामदा ॥ ७॥**

**प्रचेतसामिति ॥** त्वमेव तावत् अयाचतामपि प्रचेतसां कारुण्यभरात् वरान् अदाः। तावत् प्रथमम्। अयाचतां वरप्रार्थनामकुर्वताम्। कारुण्यभरात् भक्तवात्सल्यातिशयेन। अदाः दत्तवानसि। वरदानप्रकारमाह—भवद्विचिन्तेत्यारभ्योत्तरश्लोकस्थेन मयास्यथेत्यन्तेन। भवद्विचिन्ता अपि देहिनां शिवाय भवति। असौ रुद्रनुतिः च कामदा। भवद्विचिन्ता भवतां प्रचेतसां विचिन्ता स्मरणम्। देहिनां मनुष्याणाम्। शिवाय मङ्गलाय। असौ युष्मादिभिर्गीता। रुद्रनुतिः रुद्रोपदिष्टा नुतिः स्तुतिः। कामानभिलाषान् ददातीति कामदा। भवतीत्यत्रापि सम्बध्यते। अनयोर्वाक्ययोरुत्तरश्लोकस्थेनेतीत्यनेन सम्बन्धः॥

**अवाप्य कान्तां तनयां महीरुहां तया रमध्वं दशलक्षवत्सरीम्।**
**सुतोऽस्तु दक्षो ननु तत्क्षणाच्च मां प्रयास्यथेति न्यगदो मुदैव तान् ॥ ८॥**

**अवाप्येति ॥** महीरुहां तनयां कान्तामवाप्य तया दशलक्षवत्सरीं रमध्वम्। महीरुहां द्रुमाणाम्। तनयां पुत्रीम्। अत्र श्रीमद्भागवतम्—'कण्डोः प्रम्लोचया लब्धा कन्या कमललोचना। तां चाविद्धां जगृहुर्भूरुहान्नृपनन्दनाः॥' इति। कान्तां भार्याम्। अवाप्य युष्माभिर्दशभिः सहोद्वाह्य। तया सह। दश

लक्षवत्सराणां समाहारो दशलक्षवत्सरी तावत्कालम्। रमध्वं भौमान् भोगाननु भवत। दक्षः सुतः अस्तु। युष्माकं दक्षो नाम पुत्रो जायताम्। तत्क्षणात् ननु मां प्रयास्यथ च। तत्क्षणात् दशलक्षवत्सरानन्तरम्। नन्वित्यवधारणे। तत्क्षणादेवेत्यर्थः। मां प्रयास्यथ मुक्ता भविष्यथ। चकारः क्रियाणां समुच्चयार्थः। एतेषां वाक्यानामितीत्यनेन सम्बन्धः। त्वं मुदा एव तान् इति न्यगदः। मुदा सन्तोषेण। एवकारेण तत्प्रार्थनाया व्यवच्छेदः। तान् प्रचेतसः। इति उक्तप्रकारेण। न्यगदः उक्तवानसि ॥

एवं प्रचेतसां भगवतो वरप्राप्तिमभिधाय सम्प्रति तेषां तत्फलप्राप्तिमाह द्वाभ्याम्—

**ततश्च ते भूतलरोधिनस्तरून् क्रुधा दहन्तो द्रुहिणेन वारिताः।**
**द्रुमैश्च दत्तां तनयामवाप्य तां त्वदुक्तकालं सुखिनोऽभिरेमिरे ॥ ९ ॥**

**तत इति ॥** ततः ते च क्रुधा तरून् दहन्तः द्रुहिणेन वारिताः। ततः भगवतस्तिरोधानानन्तरम्। ते सलिलादुत्थिताः प्रचेतसः। चकारस्त्वर्थे। क्रुधा क्रोधोद्भूताभ्यामनलानिलाभ्याम्। तरून् द्रुमान्। दहन्तः भस्मीकुर्वन्तः। द्रुहिणेन ब्रह्मणा। वारिताः निवारिताः। प्रचेतसां द्रुमेषु क्रोधोदये हेतुमाह— भूतलरोधिनः इति। भूतलं रोद्धुं शीलमेषामिति भूतलरोधिनः। द्रुमः दत्तां तां तनयामवाप्य त्वदुक्तकालं सुखिनः अभिरेमिरे च। द्रुमैः वृक्षैः। दत्तां ब्रह्मण उपदेशाद्वितीर्णाम्। तां तनयां पुत्रीम्। अवाप्य प्राप्य। त्वदुक्तकालं त्वदुक्तं कालं दशलक्षवत्सरीम्। अत्यन्तसंयोगे द्वितीया। सुखिनः भगवद्वरप्रभावात् दुःखसंस्पर्शं विना। अभिरेमिरे भौमान् भोगानन्वभूवन्। चकारः क्रियासमुच्चये।

अथ प्रचेतसां मोक्षप्राप्तिमाह—

**अवाप्य दक्षश्च सुतं कृताध्वराः प्रचेतसो नारदलब्धया धिया।**
**अवापुरानन्दपदं तथाविधस्त्वमीश वातालयनाथ पाहि माम् ॥ १० ॥**

**अवाप्येति ॥** प्रचेतसः दक्षं सुतमवाप्य कृताध्वराः नारदलब्धया धिया आनन्दपदं च अवापुः। दक्षं दक्षनामानम्। सुतं पुत्रम्। अवाप्य लब्ध्वा।

कृतोऽध्वरो यागो यैस्ते कृताध्वराः। नारदलब्धया श्रीनारदाल्लब्धया। धिया ब्रह्मज्ञानेन। आनन्दपदमानन्दरूपं पदम्। पद्यते प्राप्यत इति व्युत्पत्त्या पद शब्देनात्र परं ब्रह्मोच्यते। चकारः समुच्चये। अवापुः प्राप्ताः। मुक्ता बभूवुरित्यर्थः। एवं भगवतो भक्तवात्सल्यातिशयमुदाहृत्यानन्तरं प्रार्थयते—हे ईश वातालयनाथ तथाविधः त्वं मां पाहि इति। ईश जगद्रक्षक। वातालयनाथ गुरुवायुपुरनाथ। तथाविधः तादृशभक्तवात्सल्ययुक्तः। मा त्वद्भक्तम्। पहि सर्वामयात्त्रायस्वेत्यर्थः ॥

इति दक्षोत्पत्तिप्रसङ्गवर्णनं दक्षोत्पत्तिवर्णनं च एकोनविंशदशकम् ॥

इति श्रीनारायणीयस्तोत्रव्याख्यायां सुबोधिन्यां

चतुर्थस्कन्धपरिच्छेदः ॥

आदित श्लोकसंख्या १९९

पञ्चमस्कन्धपरिच्छेदः

त्रिंशदशकम् ।

अथ भगवत ऋषभदेवावतारचरितं वर्णयितुमवतारयति—

प्रियव्रतस्य प्रियपुत्रभूतादाग्नीध्रराजादुदितो हि नाभिः ।
त्वां दृष्टवानिष्टदमिष्टिमध्ये तवैव तुष्ट्यै कृतयज्ञकर्मा ॥ १ ॥

प्रियव्रतस्येति ॥ प्रियव्रतस्य प्रियपुत्रभूतात् आग्नीध्रराजात् उदितः नाभिः हि इष्टिमध्ये त्वां दृष्टवान् । प्रियव्रतस्य स्वायम्भुवमनोः प्रथमपुत्रस्य प्रियव्रताभिधानस्य । प्रियपुत्रभूतात् प्रियपुत्रात् । प्रियव्रतस्य दश पुत्रा आसन्, तेषु ज्येष्ठः स्वसमानशीलतया पितुरतीव प्रियो जात इत्यभिप्रायेणैतदुक्तम् । आग्नीध्रराजात् आग्नीध्रनाम्नो राज्ञः । उदितः उत्पन्नः । नाभिः तन्नामा राजर्षिः । हिस्त्वर्थो विशेषे । विशेषमाह—त्वां दृष्टवानिति । इष्टिमध्ये यागमध्ये । त्वां श्रीहरिम् । दृष्टवान् ददर्श । ननु देवान् प्रीणयितुमाचरितस्य यागस्य मध्ये कथं भगवन्तं श्रीहरिमद्राक्षीदिति चेत्तत्राह—तव एव तुष्ट्यै कृतयज्ञकर्मा इति । तव श्रीहरेः । एवकारेणान्येषां व्यवच्छेदः । तुष्ट्यै प्रीत्यै । त्वामेव प्रीणयितुमित्यर्थः । कृतं यज्ञकर्म यागकर्म येन सः कृतयज्ञकर्मा । भगवद्दर्शनस्य फलवत्तां दर्शयति—इष्टदमिति । इष्टमभिलषितं ददातीतीष्टदस्तम् । इष्टावाप्तिर्भगवद्दर्शनस्य फलमिति भावः ॥

भगवतो वरप्रदानमाह—

अभिष्टुतस्तत्र मुनीश्वरैस्त्वं राज्ञः स्वतुल्यं सुतमर्थ्यमानः ।
स्वयं जनिष्येऽहमिति ब्रुवाणस्तिरोदधा बर्हिषि विश्वमूर्ते ॥ २ ॥

अभिष्टुत इति ॥ हे विश्वमूर्ते तत्र मुनीश्वरैः अभिष्टुतः त्वम् इति ब्रुवाणः बर्हिषि तिरोदधाः । विश्वमूर्ते जगन्मय । यत्र यत्राग्निरपश्यति भगवांस्तत्र तत्र

त्मानं प्रदर्शयितुमन्तर्धातुमपि समर्थ इत्यभिप्रायेणैतत्सम्बोधनमिष्टिमध्ये आत्मनः प्रदर्शनस्याप्यन्तर्धानस्य चोपपादकमित्यवगन्तव्यम् । तत्र इष्टिमध्ये । मुनीश्वरैः मुनिप्रवरैः । अभिष्टुतः अभितः स्थित्वा स्तुतः । इति अनेन प्रकारेण । ब्रुवाणः कथयन् । वर्हिष्यग्नौ । तिरोदधाः तिरोहितोऽभूः । भगवद्वचनप्रकारमाह—अहं स्वयं जनिष्ये इति । जनिष्ये नाभिपत्न्यां मेरुदेव्यामवतरिष्यामि । एवमुक्तौ हेतुमाह—राज्ञः स्वतुल्यं सुतमर्थ्यमानः इति । राज्ञः नाभेः । स्वतुल्यमीश्वर तुल्यम् । सुतं पुत्रम् । अर्थ्यमानः मुनीश्वरैः प्रार्थ्यमानः ॥

अथ भगवत ऋषभदेवावतारमाह—

**नाभिप्रियायामथ मेरुदेव्यां त्वमंशतोऽभूरृषभाभिधानः ।**
**अलोकसामान्यगुणप्रभावप्रभाविताशेषजनप्रमोदः　　॥ ३ ॥**

**नाभिप्रियायामिति** ॥ अथ त्वं नाभिप्रियायां मेरुदेव्यामंशतः ऋषभाभिधानः अभूः । अथ अनन्तरम् । नाभिप्रियायां नाभेः प्रियायां भार्यायाम् । मेरुदेव्यां मेरुदेव्याख्यायां मेरुसुतायाम् । अंशतः अंशेन । ऋषभाभिधानः ऋषभनामा । अभूः अवतीर्ण इत्यर्थः । ऋषभदेवस्यालौकिकानुभावादीनाह—अलोकसामान्यगुणप्रभावप्रभाविताशेषजनप्रमोदः इति । अलोकसामान्यैः अमानुषैर्गुणैः प्रभावैश्च प्रभावितः उत्पादितः अशेषजनानां समस्तजनानां प्रमोदः प्रीतिर्येन स तादृशः ॥

नाभेर्वैकुण्ठलोकप्राप्तिमाह—

**त्वयि त्रिलोकीभृति राज्यभारं निधाय नाभिस्सह मेरुदेव्या ।**
**तपोवनं प्राप्य भवन्निषेवी गतः किलानन्दपदं पदं ते　॥ ४ ॥**

**त्वयीति** ॥ नाभिः ते पदं गतः किल । ते तव श्रीनारायणस्य । पदं स्थानं वैकुण्ठलोकम् । गतः प्राप्तः । किलेति वार्तायाम् । वैकुण्टपदप्राप्तेः प्रयोजनमाह—आनन्दपदमिति । आनन्दस्य निरतिशयसुखस्य । पदं स्थानम् । निरतिशयानन्दप्राप्तिः प्रयोजनमिति भावः । वैकुण्टपदप्राप्तौ हेतुमाह—त्वयि राज्यभारं निधाय मेरुदेव्या सह तपोवनं प्राप्य भवन्निषेवी इति ।

त्वयि ऋषभदेवे। राज्यभारं निधाय विन्यस्य। त्वां राज्येऽभिषिच्येत्यर्थः। भवन्निषेवी भवत्सेवानिरतः सन्। ऋषभदेवस्य राज्यभारविन्यसनयोग्यतामाह— त्रिलोकीभृति इति। त्रयाणां लोकानां समाहारस्त्रिलोकी तां बिभर्तीति त्रिलोकीभृत् तथाविधे। त्रिलोकीभर्तुः राज्यभारः कियानिति भावः॥

भगवतः ऋषभदेवस्यालोकसामान्यं प्रभावं वर्णयति—

इन्द्रस्त्वदुत्कर्षकृतादमर्षाद्ववर्ष नास्मिन्नजनाभवर्षे।
यदा तदा त्वं निजयोगशक्त्या स्ववर्षमेनद्व्यदधाः सुवर्षम्॥ ५॥

इन्द्र इति॥ तदा त्वं निजयोगशक्त्या एनत् स्ववर्षं सुवर्षं व्यदधाः। तदा तस्मिन्नवसरे। त्वम् ऋषभदेव। निजयोगशक्त्या निजया स्वीयया योगशक्त्या योगबलेन। एनत् अजनाभाख्यम्। स्वस्य वर्षं स्ववर्षम्। शोभनं वर्षं वृष्टिर्यस्मिंस्तत् सुवर्षम्। व्यदधाः कृतवानसि। तदेत्यस्यार्थमाह—यदा इन्द्रः त्वदुत्कर्षकृतात् अमर्षात् अस्मिन् अजनाभवर्षे न ववर्ष इति। इन्द्रः देवेन्द्रः। त्वदुत्कर्षकृतात् तवोत्कर्षेण कृतात्। अमर्षात् कोपात्। स्पर्धयेति यावत्। अस्मिन् ऋषभदेवाधिष्ठिते। अजनाभवर्षे अजनामाख्ये वर्षे। अत्र श्रीमद्भागवतम्—'तस्य हीन्द्रः स्पर्धमानो भगवान् वर्षे न ववर्ष' तदवधार्य भगवानृषभदेवो योगेश्वरः प्रहस्यात्मयोगमायया स्ववर्षमजनाभं नामाभ्यवर्षत्' इति।

ऋषभदेवस्य दारपरिग्रहं पुत्रोत्पत्तिंचाह—

जितेन्द्रदत्तां कमनीं जयन्तीमथोद्वहन्नात्मरताशयोऽपि।
अजीजनस्तत्र शतं तनूजानेषां क्षितीशो भरतोऽग्रजन्मा॥ ६॥

जितेन्द्रदत्तामिति॥ अथ त्वमात्मरताशयः अपि जितेन्द्रदत्तां कमनीं जयन्तीमुद्वहन् तत्र शतं तनूजान् अजीजनः। अथ अनन्तरम्। त्वमृषभदेव। आत्मनि परब्रह्मणि रतः आसक्तः आशयोऽन्तःकरणं यस्य स आत्मरताशयः। आत्मारामस्सन्नित्यर्थः। अपिर्विरोधे। जितेन्द्रदत्तां स्वयोगशक्त्या जितेनेन्द्रेण दत्ताम्। कमनीं सुन्दरीम्। एतच्च गुणान्तराणामप्युपलक्षणम्। जयन्तीं तदाख्यां

कन्याम्। उद्वहन् परिणीयेत्यर्थः। गृहमेधिनां धर्मान् स्वयमधिष्ठाय जनान् बोधयितुमिति भावः। अत्र जयन्त्याम्। तनूजान् पुत्रान्। अजीजनः जनितवानसि। क्षितीशः भरतः एषामग्रजन्मा। क्षितीशः राजा। भरतः तन्नामा पुत्रः। एषां तनूजानाम्। अग्रजन्मा अग्रजः। आसीदिति शेषः॥

अथ ऋषभदेवसुतानां चरित्रमाह—

**नवाभवन् योगिवरा नवान्ये त्वपालयन् भारतवर्षखण्डान् ।**
**सैका त्वशीतिस्तव शेषपुत्रास्तपोबलात् भूसुरभूयमीयुः ॥ ७ ॥**

**नवेति॥** नव योगिवराः अभवन्। अत्र एषामिति पूर्वस्मात् श्लोकादनुवर्तते। एषामृषभदेवसुतानां मध्ये। नव पुत्राः। योगिवराः योगिश्रेष्ठाः। अन्ये नव तु भारतवर्षखण्डान् अपालयन्। अन्ये अपरे। तुर्विशेषे। तमाह—भारतवर्षखण्डानपालयन्निति। भारतवर्षखण्डान् भारतवर्षस्य खण्डान् विभागान् कुशावर्तेळावर्तब्रह्मावर्तादीन्। अपालयन् प्रत्येकमेकैकमरक्षन्नित्यर्थः। सैका अशीतिः तव शेषपुत्राः तु तपोबलात् भूसुरभूयमीयुः। एकेन सहिता सैका। अशीतिः अष्टगुणिता दश। एकाशीतिपरिमिता इत्यर्थः। तव ऋषभदेवस्य। शेषपुत्राः शेषाः अवशिष्टाः पुत्राः। अत्रापि तुर्विशेषे। तमाह—भूसुरभूयमीयुरिति। तपोबलात् तपःप्रभावात्। भूसुरभूयं ब्राह्मणत्वम्। ईयुः प्राप्ताः॥

एवमृषभदेवसुतानां चरित्रमुक्त्वाऽनन्तरं तस्यैव प्रवृत्तिमाह—

**उक्त्वा सुतेभ्योऽथ मुनीन्द्रमध्ये विरक्तिभक्त्यन्वितमुक्तिमार्गम् ।**
**स्वयं गतः पारमहंस्यवृत्तिमधा जडोन्मत्तपिशाचचर्याम् ॥ ८ ॥**

**उक्त्वेति ॥** अथ त्वं मुनीन्द्रमध्ये सुतेभ्यः विरक्तिभक्त्यन्वितमुक्तिमार्गमुक्त्वा स्वयं पारमहंस्यवृत्तिं गतः जडोन्मत्तपिशाचचर्यामधाः। अथ अनन्तरम्। त्वमृषभदेवः। मुनीन्द्रमध्ये मुनीन्द्राणां मुनिश्रेष्ठानां मध्ये। सुतेभ्यः पुत्रेभ्यः। विरक्तिभक्त्यन्वितमुक्तिमार्गं विरक्तिर्वैराग्यं भक्तिश्चेति विरक्तिभक्ती ताभ्यामन्वितं सहितं मुक्तिमार्गं मोक्षमार्गम्। उक्त्वा उपदिश्य। स्वयमात्मैव। पारमहंस्य

वृत्तिं परमहंसानां वृत्तिम्। गतः प्राप्तः। जडोन्मत्तपिशाचचर्यां जडानामज्ञाना मुन्मत्तानामुन्मादवतां पिशाचानां च चर्यां वृत्तिम्। अधाः कृतवानसि। जना नामुपदेशायेति भावः॥

ननु ब्रह्मभूयं गतो भगवानृषभदेवः किमर्थं परमहंसानां वृत्तिं गत इति चेत्तत्राह—

परात्मभूतोऽपि परोपदेशं कुर्वन् भवान् सर्वनिरस्यमानः।
विकारहीनो विचचार कृत्स्नां महीमहीनात्मरसाभिलीनः ॥ ९ ॥

परात्मभूत इति॥ भवान् परात्मभूतः अपि परोपदेशं कुर्वन् कृत्स्नां महीं विचचार। भवानृषभदेव। परात्मभूतो ब्रह्मभूत। अपिर्विरोधे। परोपदेशं परेभ्योऽन्येभ्य उपदेशम्। ब्रह्मोपदेशमिति यावत्। कृत्स्नां समस्ताम्। महीं पृथिवीम्। विचचार अचरत्। लोकानुग्रहाय पारमहंस्यवृत्तिं गत इति भाव। ननु किं मुखतो ब्रह्मोपदेशं कृतवानुत प्रकारान्तरेणेति चेत्तत्राह—सर्वनिरस्यमानः विकारहीन इति। सर्वैर्निरस्यमानस्त्यज्यमान। अवधूत इत्यर्थः। विकार हीन विकारैश्शरीराभिमानजनितै कर्तृत्वभोक्तृत्वसुखदुःखादिभिर्हीनो रहित सन्। तथाच स्वस्य परमहंसवृत्त्यैव परोपदेश, न मुखत इति भाव। विकारहीनताया हेतुमाह—अहीनात्मरसाभिलीन इति। अहीनात्मरसे परमानन्दानुभवेऽभिलीन तदैक्यं प्राप्त। जीवन्मुक्त इति यावत्॥

अथ भगवत ऋषभदेवस्य चरितमुपसंहरन् प्रार्थयते—

शयुव्रतं गोमृगकाकचर्यां चिरं चरन्नाप्य परं स्वरूपम्।
दवाहृताङ्गः कुटकाचले त्वं तापान् ममापाकुरु वातनाथ ॥ १० ॥

शयुव्रतमिति॥ हे वातनाथ चिरं शयुव्रतं गोमृगकाकचर्यां चरन् परं स्वरूपमाप्य कुटकाचले दवाहृताङ्गः त्वं मम तापान् अपाकुरु। वातनाथ गुरु वायुपुरनाथ। चिरं चिराय। शयुव्रतमजगरव्रतम्। गोमृगकाकचर्यां गवा मृगाणां काकानां च चर्यां वृत्तिम्। चरन्नाचरन्। अजगरवदनुद्यमो गोमृगा

दिवच्छुद्धयशुद्धिविधिनिषेधादेर्निवृत्तश्चेत्यर्थः। परोपदेशायेति भावः। परं सर्वो त्कृष्टम्। स्वस्य रूपं स्वरूपं ब्रह्म। आप्य प्राप्य। कुटकाचले कुटकाद्रौ। दवेन वनहुताशनेनाहतं दग्धमङ्गं शरीरं यस्य स दवाहताङ्गः। ममानन्यशरणस्य। तापान् बाह्यानाभ्यन्तरांश्च सन्तापान्। अपाकुरु निवर्तय॥

इति ऋषभयोगिचरितवर्णनं

विंशदशकम्॥

एकविंशदशकम्॥

अथ लोकरक्षार्थं तत्तद्भूखण्डेषु तत्तद्रूपेण सन्निदधानं भगवन्तं स्तौति—

मध्योद्भवे भुव इलावृतनाम्नि वर्षे
गौरीप्रधानवनिताजनमात्रभाजि।
शर्वेण मन्त्रनुतिभिः समुपास्यमानं
सङ्कर्षणात्मकमधीश्वर संश्रये त्वाम् ॥ १ ॥

मध्योद्भव इति॥ अहम् इलावृतनाम्नि वर्षे शर्वेण मन्त्रनुतिभिः समु पास्यमानं त्वां संश्रये। वर्षे खण्डे। शर्वेण भगवता भवानीपतिना। मन्त्र नुतिभिर्मन्त्रैः नुतिभिः स्तोत्रैश्च। समुपास्यमानं सम्यगाराध्यमानम्। संश्रये आश्रये। ननु सर्वैरुपास्यो भगवान् भवानीपतिः कथमन्यमुपास्त इत्याशङ्कां परिहर्तुं भगवन्तं सम्बोधयति—हे अधीश्वर इति। अधीश्वर ईश्वराणामधीश्वर। उक्तञ्चैतत्—'ऐश्वर्यं शङ्करादीश्वरविनियमनम्' इति। शर्वेणोपास्यमानस्य भग वतः स्वरूपमाह—सङ्कर्षणात्मकमिति। सङ्कर्षणस्वरूपमित्यर्थः। ननु भुवः कस्मिन् प्रदेशे इलावृतं वर्षमिति चेत्तत्राह—भुवः मध्योद्भवे इति। भुवः भूमेः। मध्योद्भवे मध्यवर्तिनि। इलावृतवर्षस्य विशेषमाह—गौरीप्रधानवनिताजनमात्रभाजि

भक्तैकवत्सलममत्सरहृत्सु भान्त
मत्स्याकृतिं भुवननाथ भजे भवन्तम् ॥ ५ ॥

रम्य इति ॥ हे भुवननाथ अहं रम्ये उदीचि रम्यकनाम्नि वर्षे खलु तद्वर्षनाथमनुवर्यसपर्यमाण भवन्त भजे। भुवननाथ लोकनाथ। रम्ये मनोहरे। उदीचि उत्तरदिशि। इळावृतवर्षस्योत्तरस्या दिशीत्यर्थ। रम्यकनाम्नि रम्यकाभिधाने। खल्विति त्वर्थे, वाक्यालङ्कारे वा। तद्वर्षनाथमनुवर्यसपर्यमाण तद्वर्षनाथेन रम्यकवर्षनाथेन मनुवर्येण मनुश्रेष्ठेन सपर्यमाणं पूज्यमानम्। भजे आराधयामि। रम्यकवर्षे सन्निहितस्य भगवत स्वरूपमाह—मत्स्याकृतिमिति। मत्स्यस्याकृतिरिवाकृतिर्यस्य तथाविधम्। मत्स्यमूर्तेर्विशेषमाह—भक्तैकवत्सलम् अमत्सरहृत्सु भान्तमिति। भक्तैकवत्सल भक्तमात्रप्रियम्। अमत्सरहृत्सु अमत्सराणा रागद्वेषादिरहितानामित्यर्थ। हृत्सु हृदयेषु। भान्तं प्रकाशमानम् ॥

हिरण्मयवर्षे सन्निहित भगवन्त स्तौति—

वर्षं हिरण्मयसमाह्वयमौत्तराह-
मासीनमद्रिधृतिकर्मठकामठाङ्गम्।
संसेवते पितृगणप्रवरोऽर्यमा य
त त्वां भजामि भगवन् परचिन्मयात्मन् ॥ ६ ॥

वर्षमिति ॥ हे भगवन् परचिन्मयात्मन् अह हिरण्मयसमाह्वयम् औत्तराह वर्षमासीन त त्वा भजामि। भगवन्नैश्वर्यादिसम्पन्न। परचिन्मयात्मन् विशुद्धज्ञानस्वरूप। हिरण्मयसमाह्वय हिरण्मयाभिधानम्। औत्तराहमुत्तरदिग्भवम्। इळावृतवर्षस्येत्यर्थ। आसीनमधितिष्ठन्तम्। भजामि आराधये। हिरण्मयवर्षे सन्निहितस्य भगवत स्वरूपमाह—अद्रिधृतिकर्मठकामठाङ्गमिति। अद्रेर्मन्दरस्य धृतौ वहने कर्मठ कर्मशूर कामठ कौर्ममङ्ग शरीर यस्य त तथोक्तम्। अमृतमथनवेलाया क्षीराम्बुधौ निमज्जतो मन्दराद्रेरुद्धरणायाङ्गीकृतकमठस्वरूपमित्यर्थ। तत्पदार्थमाह—पितृगणप्रवर. अर्यमा य ससेवते इति। पितृगणप्रवर पितृगणाना प्रवर श्रेष्ठ। ससेवते सम्यक् सेवते आराधयति ॥

उत्तरकुरुषु सन्निदधानं भगवन्तं प्रार्थयते—

किञ्चोत्तरेषु कुरुषु प्रियया धरण्या
संसेवितो महितमन्त्रनुतिप्रभेदैः।
दंष्ट्राग्रघृष्टघनपृष्ठगरिष्ठवर्ष्मा
त्वं पाहि विज्ञनुतयज्ञवराहमूर्ते ॥ ७॥

किञ्चेति॥ किञ्च हे विज्ञनुतयज्ञवराहमूर्ते उत्तरेषु कुरुषु प्रियया धरण्या महितमन्त्रनुतिप्रभेदैः संसेवितः त्वं पाहि। किञ्च अपिच। विज्ञैर्ज्ञानिभिर्नुता स्तुता यज्ञवराहमूर्तिर्यस्य सः विज्ञनुतयज्ञवराहमूर्तिस्तादृश। अनेनोत्तरकुरुषु सन्निदधानस्य भगवतः स्वरूपमुक्तमिति वेदितव्यम्। उत्तरेषु कुरुषूत्तरकुरुषु। प्रियया वल्लभया। धरण्या भूमिदेव्या। महितमन्त्रनुतिप्रभेदैः महितैः पूजितैर्मन्त्रैः नुतिप्रभेदैः स्तोत्रभेदैश्च। संसेवितः सम्यक् सेवितः आराधितः। पाहि त्रायस्व। मामिति शेषः। यज्ञवराहमूर्तेः स्वरूपमाह—दंष्ट्राग्रघृष्टघनपृष्ठगरिष्ठवर्ष्मा इति। दंष्ट्राया अग्रेण घृष्टः निष्पीडितः घनो मेघो येन तच्च विततं पृष्ठं यस्य तच्च गरिष्ठमत्युन्नतं च वर्ष्म देहो यस्य तादृश इत्यर्थः॥

किम्पुरुषवर्षे सन्निहितं भगवन्तं प्रार्थयते—

याम्यां दिशं भजति किम्पुरुषाख्यवर्षे
संसेवितो हनुमता दृढभक्तिभाजा।
सीताभिरामपरमाद्भुतरूपशाली
रामात्मकः परिलसन् परिपाहि विष्णो ॥ ८॥

याम्यामिति॥ हे विष्णो याम्यां दिशं भजति किम्पुरुषाख्यवर्षे दृढभक्तिभाजा हनुमता संसेवितः त्वं परिपाहि। याम्यां दक्षिणां दिशं भजति इळावृतवर्षस्य दक्षिणदिग्गतहरिवर्षवर्षस्यापि दक्षिणदिग्भवे इत्यर्थः। किंपुरुषाख्यवर्षे किम्पुरुषवर्षे। दृढभक्तिभाजा दृढामनपायिनीं भक्तिं भजतीति तथोक्तेन। हनुमता वायुपुत्रेण कपिप्रवरेण। संसेवितः सम्यक् सेवितः आराधितः। परिपाहि त्रायस्व। मामिति शेषः। किम्पुरुषवर्षे सन्निहितस्य

भगवतः स्वरूपमाह—सीताभिरामपरमाद्भुतरूपशाली रामात्मकः परिलसन् इति। सीताया अभिरामेण मनोहरेण परमाद्भुतेन अत्यद्भुतेन रूपेण सौन्दर्येण शालते प्रकाशत इति सीताभिरामपरमाद्भुतरूपशाली। रामात्मकः श्रीरामभद्रस्वरूपः। परिलसन् विराजमानः॥

अस्मिन् भारतवर्षे सन्निहितं भगवन्तं प्रार्थयते—

श्रीनारदेन सह भारतवर्षमुख्यै-
स्त्वं सांख्ययोगनुतिभिः समुपास्यमानः।
आकल्पकालमिह साधुजनाभिरक्षी
नारायणो नरसखः परिपाहि भूमन् ॥ ९ ॥

**श्रीनारदेनेति**॥ श्रीनारदेन सह भारतवर्षमुख्यैः सांख्ययोगनुतिभिः समुपास्यमानः इह आकल्पकालं साधुजनाभिरक्षी त्वं परिपाहि। भारतवर्षमुख्यैः भारतवर्षे मुख्यैः प्रधानभूतैः। सांख्ययोगनुतिभिः सांख्येन प्रकृतिपुरुषविवेकज्ञानेन योगेनाष्टाङ्गयोगचर्यया नुतिभिः स्तोत्रैश्च समुपास्यमानः सम्यगुपास्यमानः सेव्यमानः। इह भारतवर्षे। आकल्पकालं कल्पागमनकालपर्यन्तम्। साधुजनाभिरक्षी सज्जनान् रक्षन्। परिपाहि त्रायस्व। मामिति शेषः। भारतवर्षे सन्निहितस्य भगवतः स्वरूपमाह—नरसखः नारायणः इति। नरस्य सखा नरसखः। नन्वेकस्य भगवतः कथं सर्वेष्वपि वर्षेषु युगपत् सान्निध्यमित्याशङ्कां परिहरन् भगवन्तं सम्बोधयति—भूमन्निति। भूमन् परिपूर्ण॥

अमुं जम्बूद्वीपं परितः प्लक्षादिसंज्ञिताः षट् द्वीपाः सन्ति। तेषु तत्र तत्र सन्निदधानस्य भगवतः स्वरूपमाह—

प्लक्षेऽर्करूपमयि शाल्मल इन्दुरूपं
द्वीपे भजन्ति कुशनामनि वह्निरूपम्।
क्रौञ्चेऽम्बुरूपमथ वायुमयञ्च शाके
त्वां ब्रह्मरूपमयि पुष्करनाम्नि लोकाः ॥ १० ॥

**प्लाक्ष इति** ॥ अयि लोकाः त्वां प्लाक्षे द्वीपे अर्करूपं शाल्मले इन्दुरूपं कुशनामनि वह्निरूपं क्रौञ्चे अम्बुरूपम् अथ शाके वायुमयं च अयि पुष्करनाम्नि ब्रह्मरूपं भजन्ति । अयीत्यनन्तरं भगवन्निति पूरणीयमत्रोत्तरत्रापि । लोकाः जनाः । त्वामीश्वरम् । प्लाक्षे प्लक्षसंज्ञिते । द्वीप इति सर्वत्र सम्बध्यते । अर्करूपं सूर्यस्वरूपम् । शाल्मले शाल्मलसंज्ञिते । इन्दुरूपं चन्द्रस्वरूपम् । वह्निरूपमग्निस्वरूपम् । क्रौञ्चे क्रौञ्चाख्ये । अम्बुरूपं जलस्वरूपम् । शाके तन्नामनि । वायुमयं वायुस्वरूपम् । चकारः समुच्चये । ब्रह्मरूपं ब्रह्मस्वरूपम् ॥

अथ शिंशुमारवपुषं भगवन्तं प्रार्थयते—

सर्वैर्ध्रुवादिभिरुडुप्रकरैर्ग्रहैश्च
पुच्छादिकेष्ववयवेष्वभिकल्प्यमानैः ।
त्वं शिंशुमारवपुषा महतामुपास्यः
सन्ध्यासु रुन्धि नरकं मम सिन्धुशायिन् ॥ ११ ॥

**सर्वैरिति** ॥ हे सिन्धुशायिन् महतां सन्ध्यासु शिंशुमारवपुषा उपास्यः त्वं मम नरकं रुन्धि । सिन्धौ क्षीरसमुद्रे शेत इति सिन्धुशायी तादृश । महता महद्भिः । सन्ध्यासु त्रिषु सन्ध्याकालेषु । शिंशुमारस्यार्वाक्शिरसः कुण्डलीभूतस्य शिंशुमारसंज्ञितस्य जलजन्तुविशेषस्य वपुः शरीरमिव वपुर्यस्य सः शिंशुमारवपुस्तद्रूपेण । उपास्यः आराध्यः । ममानन्यशरणस्य । नरकं दुर्गतिम् । रुन्धि निवारय । शिंशुमारशरीरस्य भगवतो ज्योतिरनीकात्मकत्वं दर्शयति—पुच्छादिकेषु अवयवेषु अभिकल्प्यमानैः ध्रुवादिभिः सर्वैः उडुप्रकरैः ग्रहैः च इति । पुच्छादिकेषु लाङ्गूलप्रभृतिषु । अवयवेषु प्रतीकेषु । अभिकल्प्यमानैः उपासकैरभितः कल्प्यमानैः । ध्रुवादिभिर्ध्रुवप्रभृतिभिः । सर्वैस्समस्तैः । उडुप्रकरैरश्विन्यादिनक्षत्रसमूहैः । ग्रहैः सूर्यादिभिः । चकारस्समुच्चये । उपलक्षित इति शेषः ॥

अथ शेषमूर्तिं भगवन्तं स्तौति—

पातालमूलभुवि शेषतनुं भवन्तं
लोलैककुण्डलविराजिसहस्रशीर्षम् ।

नीलाम्बरं धृतहलं भुजगाङ्गनाभि-
जुष्टं भजे हर गदान् गुरुगेहनाथ ॥ १२ ॥

**पातालमूलभुवीति** ॥ अहं पातालमूलभुवि शेषतनुं भवन्तं, भजे। पातालमूलभुवि पातालमूलप्रदेशे। स्थितमिति शेषः। शेषतनुं शेषमूर्तिम्। भजे आराधयामि। शेषमूर्तेस्स्वरूपमाह—लोलैककुण्डलविराजिसहस्रशीर्षं नीलाम्बरं धृतहलं भुजगाङ्गनाभि. जुष्टमिति। लोलेन चञ्चलेनैककुण्डलेन विराजीनि शोभनशीलानि सहस्रं शीर्षाणि शिरांसि यस्य तं लोलैककुण्डलविराजिसहस्रशीर्षम्। नीलमम्बरं वस्त्रं यस्य तं नीलाम्बरम्। धृतहलं हलधरम्। भुजगाङ्गनाभिर्नागवधूभिः। जुष्टं सेवितम्। अथ प्रार्थयते—हे गुरुगेहनाथ त्वं गदान् हर इति। गुरुगेहनाथ गुरुवायुपुरनाथ। गदान् ममानन्यशरणस्य बाह्यानाभ्यन्तरांश्चामयान्। हर संहर ॥

इति जम्बूद्वीपादिषु भगवदुपासनाप्रकारवर्णनम् एकविंशदशकं सटिकम् ॥

इति श्रीनारायणीयस्तोत्रव्याख्यायां सुबोधिन्यां

पञ्चमस्कन्धपरिच्छेदः ॥

---

आदित श्लोकसंख्या २२१

## द्वाविंशदशकम् ।

अथ भगवन्नाम सङ्कीर्तयतां कृतेऽपि पापे नैव नारकी यातनेति दर्शयितु मजामिलवृत्तान्तं प्रस्तौति—

**अजामिलो नाम महीसुरः पुरा चरन् विभो धर्मपथान् गृहाश्रमी ।**
**गुरोर्गिरा काननमेत्य दृष्टवान् सुधृष्टशीलां कुलटां मदाकुलाम् ॥ १ ॥**

**अजामिल इति ॥** हे विभो पुरा गृहाश्रमी धर्मपथान् चरन् अजा मिलः नाम महीसुरः गुरोः गिरा काननमेत्य ,कुलटां दृष्टवान् । विभो शक्ति सम्पन्न । अनेन सम्बोधनेन वक्ष्यमाणं स्वतः प्रशान्तस्याप्यजामिलस्य कुलटा कृष्टहृदयतया स्वधर्मोत्सर्जनादिकमन्ते भगवन्नामोच्चारणं च भगवतः स्वनामसङ्कीर्ते नस्य प्रभावं दर्शयिष्यतः प्रभावादेवेति सूचितम् । गृहाश्रमी गृहमेधी । धर्म पथान् गृहस्थोचितान् प्रवृत्तिनिवृत्तिमार्गान् । चरन्नाचरन् । नामेति प्रसिद्धौ । महीसुरो ब्राह्मणः । गुरोः पितुः । गिरा नियोगेन । काननमरण्यम् । एत्य प्राप्य । समित्कुशानाहर्तुमिति भावः । कुलटामसतीं स्त्रियम् । दृष्टवान् ददर्श । तस्याः परगुणप्रतारणनैपुण्यं दर्शयति—सुधृष्टशीलां मदाकुलामिति । सुतरां धृष्टं मिथ्याविलासादिभिः परजनहृदयवञ्चननिपुणं शीलं स्वभावो यस्यास्तां सुधृष्टशी लाम् । मदाकुलां मदेन मधुपानजनितेनाकुलामलसाम् ॥

कुलटां दृष्टवतोऽजामिलस्य प्रवृत्तिमाह—

**स्वतः प्रशान्तोऽपि तदाहृताशयः स्वधर्ममुत्सृज्य तया समारमन् ।**
**अधर्मकारी दशमी भवन् पुनर्दधौ भवन्नामयुते सुते रतिम् ॥ २ ॥**

**स्वत इति ॥** अत्र पूर्वस्माच्छ्लोकादजामिल इत्यनुवर्तते । अजामिलः स्वधर्ममुत्सृज्य तया समारमन् अधर्मकारी पुनः दशमी भवन् भवन्नामयुते सुते

रतिं दधौ। स्वधर्मं स्वस्य धर्मं स्वकुलोचितं धर्मम्। उत्सृज्य त्यक्त्वा। स्वस्य धर्मपत्नीं त्यक्त्वा गृहस्थधर्ममुत्सृज्येत्यर्थः। तया कुलटया सह। समारमन् सर्वदा रममाणः। अधर्मकारी तस्याः कुटुम्बभरणार्थं बहुविधानि पापकर्माणि कुर्वाणः। पुनरनन्तरम्। दशमी वृद्धः। भवन् परिणतः सन्। भवन्नामयुते नारायणनामके। सुते पुत्रे। रतिमतिस्नेहम्। दधौ धृतवान्। ननु कथं धर्मपथांध्वरन्नजामिलः स्वधर्म -मुत्सृष्टवानिति चेत्तत्राह—स्वतः प्रशान्तः अपि तदाहृताशयः इति। स्वतः प्रशान्तः स्वभावेन नितरां शान्तः। अपिर्विरोधे। तदाहृताशयः तया कुलटया मिथ्याविलासादिभिराहृतो वशीकृतः आशयो मानसं यस्य तादृशः। कामस्य दुर्वारत्वादिति भावः॥

अथ तस्य गलितवयसश्चरमावस्थामाह—

**स मृत्युकाले यमराजकिङ्करान् भयङ्करांस्त्रीनभिलक्षयन् भिया।**
**पुरा मनाक् त्वत्स्मृतिवासनाबलाज्जुहाव नारायणनामकं सुतम्॥ ३॥**

**स इति॥** सः मृत्युकाले भिया नारायणनामकं सुतं जुहाव। सः अजामिलः। मृत्युकाले मरणसमये। भिया भयेन। हेतौ तृतीया। नारायणनामकं नारायणनामानम्। सुतं पुत्रम्। जुहाव आहूतवान्। भयहेतुमाह—भयङ्करान् त्रीन् यमराजकिङ्करान् अभिलक्षयन्निति। भयङ्करान् भीषणाकारान्। यमराजकिङ्करान् यमराजस्य किङ्करान् भृत्यान्। अभिलक्षयन् अभिमुखं पश्यन्। ननु स्वधर्मान् परित्यज्याधर्मकारिणः कथमजामिलस्य मुखान्नारायणनाम मरणावसरे निर्गतमभूदित्याशङ्कायामाह—पुरा मनाक् त्वत्स्मृतिवासनाबलादिति। पुरा कुलटापरिग्रहात् पूर्वम्। मनागीषत्। त्वत्स्मृतिवासनाबलात् त्वत्स्मृतेर्भगवदुपासनस्य वासना संस्कारस्तस्या बलात् प्रभावात्॥

नारायणनामवर्णोच्चारणस्य प्रभावमाह—

**दुराशयस्यापि तदात्वनिर्गतत्वदीयनामाक्षरमात्रवैभवात्।**
**पुरोऽभिपेतुर्भवदीयपार्षदाश्चतुर्भुजाः पीतपटा मनोरमाः॥ ४॥**

**दुराशयस्येति** ॥ अत्र पूर्वस्माच्छ्लोकात् स इत्यनुवृत्त्य षष्ठ्यन्ततया विपरिणम्य योजनीयम् । दुराशयस्य अपि तस्य पुरः, भवदीयपार्षदाः अभिपेतुः । दुराशयस्य स्वधर्मपरित्यागेनाधर्मकारितया च दुरात्मनः । अपिर्विरोधे । तस्य अजामिलस्य । पुरः पुरस्तात् । भवदीयपार्षदाः भवदीयाः पार्षदाः । विष्णुदूता इत्यर्थः । अभिपेतुः प्रादुर्भूताः । अपिशब्देन दर्शितं विरोधं परिहरति—तदात्वनिर्गतत्वदीयनामाक्षरमात्रवैभवादिति । तदात्वे मरणसमये निर्गतस्य त्वदीयनामाक्षरमात्रस्य नारायणेति वर्णचतुष्टयमात्रस्य वैभवात् प्रभावात् । मात्रपदेन भक्तिश्रद्धादीनां व्यवच्छेदः । अत्र निर्गतपदेन नारायणनामोच्चारणस्य अबुद्धिपूर्वकत्वं व्यज्यते । भगवत्पार्षदानां स्वरूपमाह—चतुर्भुजाः पीतपटाः मनोरमाः इति । चत्वारो भुजाः कराः येषां ते चतुर्भुजाः । पीतपटाः पीताम्बराः । मनोरमाः मनोहराकृतयः ॥

भगवत्पार्षदानां प्रवृत्तिमाह—

**अमुञ्च सम्पाश्य विकर्षतो भटान् विमुञ्चतेत्यारुरुधुर्बलादमी ।**
**निवारितास्ते च भवज्जनैस्तदा तदीयपापं निखिलं न्यवेदयन् ॥ ५ ॥**

**अमुमिति** ॥ अमी अमुं सम्पाश्य विकर्षतः भटान् विमुञ्चत इति बलात् आरुरुधुः च । अमी भगवत्पार्षदाः । अमुमजामिलम् । सम्पाश्य पाशेन गले बध्वा । विकर्षतः आकर्षतः । भटान् यमकिङ्करान् । इति इत्युक्त्वा । बलात् ओजसा । आरुरुधुः निवारितवन्तः । अभिपतननिवारणक्रिययोः समुच्चयार्थकेन चशब्देन पूर्वक्रियानन्तरं द्वितीयक्रियायाः कालविलम्बाभावो द्योत्यते । भवज्जनैः निवारिताः ते च तदा निखिलं तदीयपापं न्यवेदयन् । भवज्जनैः भवत्पार्षदैः । अत्र भवज्जनैरित्युक्त्या तेषां दुर्वारत्वं द्योत्यते । निवारिताः निरुद्धाः । ते यमकिङ्कराः । चकारस्त्वर्थे । तदा तस्मिन्नवसरे । निखिलं समस्तम् । तदीयपापं तदीयमजामिलसम्बन्धि पापं पापकर्म । न्यवेदयन् निवेदितवन्तः ॥

भगवत्पार्षदानां प्रतिवचनप्रकारमाह चतुर्भिः—

भवन्तु पापानि कथन्तु निष्कृते कृतेऽपि भो दण्डनमस्ति पण्डिताः।
न निष्कृतिः किं विदिता भवादृशामिति प्रभो त्वत्पुरुषा बभाषिरे॥ ६ ॥

भवन्त्विति॥ हे प्रभो त्वत्पुरुषाः इति बभाषिरे। प्रभो सर्वेश्वर। त्वत्पुरुषाः त्वत्पार्षदाः। इति अनेन प्रकारेण। बभाषिरे उक्तवन्तः। इतीत्यनेनोक्तं प्रकारमाह—हे पण्डिताः पापानि भवन्तु, कथं तु निष्कृते कृते अपि दण्डनमस्ति। भवादृशां निष्कृतिः न विदिता किम्। पण्डिताः। पण्डितशब्दोऽत्र विपरीतलक्षणया मूर्खवाची। वृथा पण्डितम्मन्या इत्यर्थः। नारायणनामोच्चारणरूपमायश्चित्ते कृतेऽप्यजामिले दण्डनोद्यमादिति भाव.। निष्कृते प्रायश्चित्ते। कृते अनुष्ठिते। दण्डनं दण्डः। भवादृशां धर्मराजकिङ्करैः। कर्तरि षष्ठी। भवादृशामिति सोपालम्भवचनम्। दण्डनेऽधिकृतानां दण्ड्यादण्ड्यविवेकशून्यत्वादुपालम्भः। निष्कृति. प्रायश्चित्तम्। विदिता ज्ञाता॥

ननु श्रुतिस्मृतिविहितकृच्छ्रचान्द्रायणादिप्रायश्चित्तानुष्ठानादयं दण्ड्य एवेत्याशङ्कां परिहर्तुं भगवन्नामोच्चारणरूपं प्रायश्चित्तमनेन कृतमिति विवक्षवः प्रथमं कृच्छ्रचान्द्रायणादिभ्योऽपि भगवत्सेवाया उत्कर्षमाहु —

श्रुतिस्मृतिभ्यां विहिता व्रतादयः पुनन्ति पापं न लुनन्ति वासनाम्।
अनन्तसेवा तु निकृन्तति द्वयीमिति प्रभो त्वत्पुरुषा बभाषिरे॥ ७ ॥

श्रुतिस्मृतिभ्यामिति॥ इति प्रभो इत्यादि पूर्ववत्। एवमुत्तरत्रापि द्रष्टव्यम्। श्रुतिस्मृतिभ्या विहिता. व्रतादय· पापं पुनन्ति वासना न लुनन्ति। अनन्तसेवा तु द्वयीं निकृन्तति। श्रुतिर्वेद· स्मृतिश्चेति श्रुतिस्मृती ताभ्या विहिताः प्रदर्शिता.। व्रतादयः व्रतप्रभृतय। व्रतानि चान्द्रायणादीनि। आदिग्रहणात्तीर्थस्नानादि गृह्यते। पापं पापकर्माणम्। पुनन्ति पावयन्ति। अथवा, पापं दुरितम्। पुनन्ति शोधयन्ति। वासना सजातीयकर्मोत्पादकं संस्कारम्। लुनन्ति छिन्दन्ति। अनन्तसेवा भगवद्भजनम्। तुर्विशेषे। विशेषमाह—द्वयीं निकृन्ततीति। द्वयीं पापं वासनां च। निकृन्तति छिनत्ति॥

अजामिलेन नारायणनामोच्चारणरूपं प्रायश्चित्तं कृतमित्याहु —

**अनेन भो जन्मसहस्रकोटिभिः कृतेषु पापेष्वपि निष्कृतिः कृता ।**
**यदग्रहीन्नाम भयाकुलो हरेरिति प्रभो त्वत्पुरुषा बभाषिरे ॥ ८ ॥**

**अनेनेति ॥** भोः अनेन जन्मसहस्रकोटिभिः कृतेषु पापेषु अपि निष्कृतिः कृता । भो इत्यनन्तरं यमराजकिङ्करा इत्यध्याहर्तव्यम् । भो इति सम्बोधने । अनेन अजामिलेन । जन्मसहस्रकोटिभिः कोटिसंख्यैर्जन्मसहस्रैरित्यर्थः । कृतेषु आचरितेषु । पापेषु पापकर्मसु । किं पुनस्त्वदुक्तेषु पापेष्वित्यपिशब्दार्थः । निष्कृतिः प्रायश्चित्तम् । कृता अनुष्ठिता । ननु कीदृशी सा निष्कृतिरिति चेत्तत्राहुः—यत् भयाकुलः हरेः नाम अग्रहीदिति । अत्र वाक्ये पूर्ववाक्यादनेनेत्य नुवृत्त्य प्रथमान्ततया विपरिणम्य योजनीयम् । अयमजामिलः । भयाकुलः युष्मान् दृष्ट्वा भयाक्रान्तः । हरेर्भगवतः श्रीवासुदेवस्य । नाम नारायणेति वर्णचतुष्टयम् । अग्रहीदुक्तवानित्यर्थः ॥

नन्वसौ म्रियमाणो न हरिनामोच्चारितवान्, किन्तु पुत्रं तन्नामानमाजुहाव, अतो न पापक्षय इत्याशङ्कायामाहुः—

**नृणामबुद्ध्याऽपि मुकुन्दकीर्तनं दहत्यघौघान् महिमाऽस्य तादृशः ।**
**यथाऽग्निरेधांसि यथौषधं गदानिति प्रभो त्वत्पुरुषा बभाषिरे ॥ ९ ॥**

**नृणामिति ॥** नृणाम् अबुद्ध्या मुकुन्दकीर्तनमपि अघौघान् दहति । नृणां मर्त्यानाम् । अबुद्ध्या इदं भगवन्नाम, इदं कीर्तितं सदशेषाघौघहरं भवतीति बुद्धिं विनेत्यर्थः । अघौघान् पापसञ्चयान् । दहति वारयति । अत्र नाशयतीति वक्तव्ये दहतीत्युक्तिः, यथा दहनस्तूलराशिमनायासेनैव शीघ्रं भस्मीकरोति, तद्वत् भगवन्नामसङ्कीर्तनं पापसञ्चयान् शीघ्रं नाशयतीति द्योतयति । ननु कथमस्य तादृशं सामर्थ्यमिति नानुयोजनीयम्, नाम्नो महिम्नः श्रूयमाणत्वात् दृष्टत्वाच्चेत्याहुः—अस्य तादृशः महिमा इति । अस्य नामसङ्कीर्तनस्य । तादृशः अपरिच्छेद्य इत्यर्थः । महिमा माहात्म्यम् । विद्यत इति शेषः । उक्तार्थ सन्देहनिवृत्तये दृष्टान्तद्वयमाहुः—यथा अग्निः एधांसि यथा औषधं गदानिति ।

एधांसि इन्धनानि। गदानामयान्। यथा अबुद्धिपूर्वकं क्षिप्तोऽप्यग्निरिन्धनानि भस्मीकरोति, यथा चौषधमबुद्धिपूर्वकमुपयुक्तमप्यामयान् निवारयति, तद्वत् श्री गोविन्दनामसङ्कीर्तनमबुद्धिपूर्वकमपि दुरितसञ्चयान् निवारयति। तादृशं तस्य माहात्म्यमित्यर्थः। अतो नायं दण्डनमर्हतीत्यपसरत यूयमिति भावः। सर्वत्र 'इति प्रभो' इत्याद्यावृत्तिः प्रतिश्लोकं स्तोत्रत्वसिद्ध्यर्थेति द्रष्टव्यम्॥

अजामिलस्य भगवत्पदप्राप्तिमाह—

इतीरितैर्याम्यभटैरपासृते भवद्भटानाञ्च गणे तिरोहिते।
भवत्स्मृतिं कञ्चन कालमाचरन् भवत्पदं प्रापि भवद्भटैरसौ॥ १०॥

इतीति॥ इति ईरितैः याम्यभटैः अपासृते भवद्भटानां गणे च तिरोहिते असौ कञ्चन कालं भवत्स्मृतिमाचरन् भवद्भटैः भवत्पदं प्रापि। इति भवन्तु पापानि इत्यादिनोक्तप्रकारेण। ईरितैरुक्तैः। याम्यभटैः यमकिङ्करैः। अपासृते अपसरणे कृते सति। भवद्भटानां भवत्पार्षदानाम्। गणे समूहे। चकारस्समुच्चये। तिरोहिते अन्तर्हिते सति। असावजामिलः। कञ्चन कालम् अल्पकालम्। भवत्स्मृतिं भवतः स्मरणम्। आचरन् कुर्वाणः। भवद्भटैर्भवत्पार्षदैः। भवत्पदं भवतः पदं विकुण्ठनिलयम्। प्रापि नीतः। यमदूतेष्वपासृतेषु भगवत्पार्षदेष्वपि तिरोहितेष्वसावजामिलस्तद्वचनमाकर्ण्य समुपजातविवेकः पश्चात्तपन् गङ्गाद्वारं प्राप्य कस्मिंश्चिदेव सदने स्थित्वा कमपि कालं भगवत्स्मरणं कृत्वा विजितसमाधिस्तदा पुरस्तात् प्रादुर्भूतैस्तैरेव भगवत्पार्षदैर्विमानेन विकुण्ठ निलयं नीत इत्यर्थः॥

अथ भगवद्भक्तेषु न कदाचिदपि यमदूताः प्रविशन्तीत्याह—

स्वकिङ्करावेदनशङ्कितो यमस्त्वदङ्घ्रिभक्तेषु न गम्यतामिति।
स्वकीयभृत्यानशिशिक्षदुच्चकैः स देव वातालयनाथ पाहि माम्॥ ११॥

स्वकिङ्करेति॥ यमः स्वकीयभृत्यान् उच्चकैः अशिशिक्षत्। यमः धर्म राजः। स्वकीयभृत्यान् स्वकीयानात्मीयान् भृत्यान् भटान्। इति अनेन प्रका

रेण। उच्चैरतिनिर्बन्धेन। अशिशिक्षत् शिक्षितवान्। शिक्षाप्रकारमाह—त्वदङ्घ्रिभक्तेषु न गम्यतामिति। त्वदङ्घ्रिभक्तेषु त्वदङ्घ्र्योस्त्वच्चरणाम्भोरुहयोर्भक्तेषु। न गम्यताम्। युष्माभिरिति शेषः। भगवद्भक्ताः परिहरणीया इत्यर्थः। यमस्यैवंशिक्षणे हेतुमाह—स्वकिङ्करावेदनशङ्कितः इति। स्वस्य किङ्कराणां भृत्यानामावेदनात् भगवत्पार्षदकृत्यनिवेदनात् शङ्कितः स्वभृत्यापराधः स्वस्मिन्नपि स्यादिति भीतः सन्। इत्थञ्च न कदाचिदपि भगवद्भक्तानां यमात्तत्किङ्करेभ्यो वा भयमिति पर्यवसितम्। यदुक्तं श्रीमद्भागवते—'सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह। न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः॥' इति। अथ प्रार्थयते— हे देव वातालय नाथ सः त्वं मां पाहि इति। देव प्रकाशमान। वातालयनाथ गुरुवायुपुरनाथ। सः तादृग्भक्तवात्सल्ययुक्तः। मामनन्यशरणम्। पाहि त्रायस्व॥

अजामिलोपाख्यानं

द्वाविंशदशकं सैकम्॥

## त्रयोविंशदशकम्॥

एवमजामिलवृत्तान्तप्रदर्शनेन पापकृतामपि भगवद्भक्तानां न कदाचिदपि यमात्तत्किङ्करेभ्यो वा भयमित्युपदिश्यानन्तरं भगवतो भक्तवात्सल्यमेव पुनरप्युदाहर्तुं दक्षादीनां चरित्राणि प्रस्तौति—

प्राचेतसस्तु भगवन्नपरोहि दक्ष-
स्त्वत्सेवनं व्यधित सर्गविवृद्धिकामः।
आविर्बभूविथ तदा लसदष्टबाहु-
स्तस्मै वरं ददिथ तां च वधूमसिक्नीम्॥ ॥ १ ॥

प्राचेतस इति ॥ हे भगवन् प्राचेतसः अपरः दक्षः तु त्वत्सेवनं व्यधित। भगवन्नैश्वर्यादिसम्पन्न। अपरः ब्रह्मणः पुत्रादन्यः। दक्षः दक्षनामा। तुर्विशेषे। विशेषमाह—त्वत्सेवनं व्यधितेति। त्वत्सेवनं तव सेवनमाराधनम्। व्यधित कृतवान्। अत्र हीति प्रसिद्धौ। न तु ब्रह्मणः सुतो दक्ष इव रजसाऽन्धो भगवति वासुदेवेऽक्ष मोऽभूदिति भावः। भगवत्सेवने हेतुमाह—सर्गविवृद्धिकामः इति। सर्गस्य सृष्टेः विवृद्धिमभिवृद्धिं कामयतीति तथोक्तः सन्। भगवान् दक्षस्य पुरस्तात् प्रादुरासी दित्याह—तदा त्वमाविर्बभूविथ इति। तदा दक्षे भगवत्सेवनं कुर्वति। आवि र्बभूविथ प्रादुरासीः। दक्षस्य पुरस्तादिति भावः। दक्षस्य पुरस्तात् प्रादुर्भूतस्य भगवतः स्वरूपमाह—लसदष्टबाहुः इति। लसन्तो दीप्यमाना अष्टौ बाहवो भुजा यस्य तादृशः सन्। अथ वरमदानमाह—तस्मै वरं तामसिक्नीं वधूं च ददिथ इति। तस्मै दक्षाय। वरं त्वत्त. प्रभृति व्यवायधर्मेण प्रजासर्गो भवि ष्यतीत्येवंरूपम्। तां प्रसिद्धां पञ्चजनदुहितरम्। असिक्नीं असिक्नीनामधेयाम्। वधूं भार्याम्। चकारस्समुच्चये। ददिथ दत्तवान्॥

दक्षस्य पुत्रोत्पत्त्यादिकमाह—

तस्यात्मजास्त्वयुतमीश पुनः सहस्रं
श्रीनारदस्य वचसा तव मार्गमापुः।
नैकत्र वासमृषये स मुमोच शापं
भक्तोत्तमस्त्वृषिरनुग्रहमेव मेने ॥ २ ॥

तस्येति ॥ हे ईश अयुतं पुन सहस्रं तस्य आत्मजा तु श्रीनारदस्य वचसा तव मार्गमापु। ईश जगद्रक्षक। अयुतं दशसहस्राणि। पुन· अनन्तरम्। तस्य दक्षस्य। आत्मजाः पुत्राः। हर्यश्वसंज्ञा अयुतमात्मजाः, शबलाश्व संज्ञाः सहस्रं सूनवश्चेत्येकादशसहस्राणि पुत्राणामित्यर्थः। पितुरादेशात् सर्गवृद्धये तपः कुर्वाणा इति भावः। तुर्विशेषे। तमाह—तव मार्गमापुरिति। वचसा निवृत्तिमार्गोपदेशेन। तव मार्गं मोक्षम्। आपु. प्राप्ता.। स. ऋषये शापं मुमोच। सः दक्ष.। ऋषये श्रीनारदाय। मुमोच मुक्तवान्। शापप्रकारमाह—

नैकत्र वासमिति । सदा सञ्चाररूपमित्यर्थः । पुत्राणां स्वाभिलषितविरुद्धमार्गे प्रवर्तनेन सञ्जातकोपतयेति भावः । ऋषिः तु अनुग्रहमेव मेने । तुर्विशेषे । तमाह——अनुग्रहमेव मेन इति । मेने निश्चितवान् । शापोऽत्र कर्म । अत्र हेतुः——भक्तोत्तमः इति । भक्तानामुत्तमः श्रेष्ठः । भगवद्भक्ताः सङ्गभयान्नैकत्र वस्तुमभिलषन्ति, किन्तु गृहाद्यनपेक्षयेतस्ततश्चरन्तो भगवति वासुदेव एव रमन्त इति भावः । उक्तञ्चैतत्——'पठन्तो नामानि प्रमदभरसिन्धौ निपतिताः स्मरन्तो रूपं ते वरद कथयन्तो गुणकथाः । चरन्तो ये भक्तास्त्वयि खलु रमन्ते' इति ॥

अथ दक्षस्य सृष्टिक्रमं नारायणकवचस्य प्रभावञ्चाह——

षष्ट्या ततो दुहितृभिः सृजतः कुलौघान्
दौहित्रसूनुरथ तस्य स विश्वरूपः ।
त्वत्स्तोत्रवर्मितमजापयदिन्द्रमाजौ
देव त्वदीयमहिमा खलु सर्वजैत्रः ॥ ३ ॥

षष्ट्येति ॥ ततः षष्ट्या दुहितृभिः कुलौघान् सृजतः तस्य दौहित्रसूनुः सः विश्वरूपः अथ इन्द्रम् आजौ अजापयत् । ततः अनन्तरम् । दुहितृभिः अदितिदितीत्यादिभिः पुत्रीभिः । कुलौघान् स्थिरचरभेदसमूहान् । सृजतः सृष्टवतः । तस्य दक्षस्य । दौहित्रसूनुः दुहितुः पुत्रो दौहित्रस्तस्य सूनुः पुत्रः । अदितेः पुत्रस्त्वष्टा, तस्यात्मज इत्यर्थः । सः तपोबलात्मवत्तादिना प्रसिद्धः । विश्वरूपः विश्वरूपनामा । अथ अनन्तरम् । इन्द्रं देवेन्द्रम् । आजौ दैवासुरे सङ्गरे । अजापयत् विजयिनं चकार । जयोपायमाह——त्वत्स्तोत्रवर्मितमिति । त्वत्स्तोत्रेण नारायणाख्येन वर्मणा वर्मितं कृतरक्षम् । अत्रार्थान्तरं न्यस्यति——हे देव त्वदीयमहिमा सर्वजैत्रः खलु इति । त्वदीयमहिमा तव सर्वेश्वरस्य महिमा । सर्वजैत्रः सर्वेषां जैत्रो जयशीलः । खल्विति प्रसिद्धौ ॥

एवं दक्षवृत्तान्तवर्णनेन भगवतो भक्तवात्सल्यमुदाहृत्यानन्तरं चित्रकेतुचरित्रवर्णनेनाप्युदाहरति——

प्राक् शूरसेनविषये किल चित्रकेतुः
पुत्राग्रही नृपतिरङ्गिरसः प्रभावात् ।
लब्ध्वैकपुत्रमथ तत्र हते सपत्नी
सङ्घैरमुह्यदवशस्तव माययाऽसौ ॥ ४ ॥

प्रागिति ॥ प्राक् शूरसेनविषये पुत्राग्रही चित्रकेतुः नृपतिः अङ्गिरसः प्रभावात् एकपुत्रं लब्ध्वा अथ तत्र सपत्नीसङ्घैः हते अमुह्यत् किल। प्राक् पुरा। शूरसेनविषये शूरसेनाख्ये जनपदे। पुत्राग्रही पुत्राभिलाषी। चित्रकेतुः चित्रकेतु नामा। नृपतिः राजा। अङ्गिरसः तन्नाम्नो मुनेः। प्रभावात् तत्कृत यज्ञोच्छिष्टप्राशनेनेत्यर्थः। एकपुत्रम् एकमद्वितीयं पुत्रम्। लब्ध्वा प्राप्य। ज्येष्ठ भार्यायामित्यर्थः। अथ अनन्तरम्। तत्र तस्मिन् पुत्रे। सपत्नीसङ्घैः सपत्नीनां समानः पतिर्यासां तासां सङ्घैः समूहैः। हते व्यापादिते। ज्येष्ठपत्न्यां पुत्रोत्पत्त्या तस्यां राज्ञः प्रेमातिरेकः स्यादित्यसूययेति भावः। अमुह्यत् मोहमुपगतः। किलेति वार्तायाम्। मोहकारणमाह—तव मायया अवश इति। अवशः मोहित इत्यर्थः॥

चित्रकेतौ मोहमुपगते भगवान् श्रीनारदः प्रादुर्भूय नृपतेर्मोहमपनीय तस्मै कर्तव्यमुपादिशदित्याह—

तं नारदस्तु सममङ्गिरसा दयालुः
सम्प्राप्य तावदुपदर्श्य सुतस्य जीवम्।
कस्यास्मि पुत्र इति तस्य गिरा विमोहं
त्यक्त्वा त्वदर्चनविधौ नृपतिं न्ययुङ्क्त ॥ ५ ॥

तमिति ॥ नारदः तु अङ्गिरसा समं सम्प्राप्य तावत् सुतस्य जीवमुपदर्श्य इति तस्य गिरा विमोहं त्यक्त्वा नृपतिं त्वदर्चनविधौ न्ययुङ्क्त। समं सह। तं चित्रकेतुम्। सम्प्राप्य उपगम्य। तावत् प्रथमम्। सुतस्य पुत्रस्य। उपदर्श्य प्रदर्श्य। इति अनेन प्रकारेण। तस्य पुत्रस्य। गिरा उक्त्या। विमोहं नृपतेर्मोहान्धकारम्। त्यक्त्वा अपनीय। त्वदर्चनविधौ त्वदर्चनस्य तवार्चनस्य विधावनुष्ठाने। नृपतिं राजानम्। न्ययुङ्क्त आदिदेश। इतीदृयनेनोक्तं प्रकार

माह—अहं कस्य पुत्रः अस्मि इति। बहूनां जन्मनामतिक्रान्तत्वादिति भावः। ननु किमर्थमेवं कृतवान् नारद इति चेत्तत्राह—दयालुः इति। दयालुः दयाशीलः। मोहमुपगतं नृपतिं दृष्ट्वा करुणयेति भावः॥

चित्रकेतोस्तपश्चर्यामाह—

स्तोत्रं च मन्त्रमपि नारदतोऽथ लब्ध्वा
तोषाय शेषवपुषो ननु ते तपस्यन्।
विद्याधराधिपतितां स हि सप्तरात्रे
लब्ध्वाऽप्यकुण्ठमतिरन्वभजद्भवन्तम्　　॥ ६ ॥

**स्तोत्रमिति ॥** सः हि सप्तरात्रे विद्याधराधिपतितां लब्ध्वा अपि अकुण्ठमतिः अनु भवन्तमभजत्। सः चित्रकेतुः। हिस्त्वर्थे। सप्तरात्रे सप्तरात्रान्ते। विद्याधराधिपतितां विद्याधराणां देवयोनिविशेषाणामाधिपत्यं लब्ध्वा प्राप्य। अपि विरोधे। अकुण्ठमतिः अप्रतिहतोत्साहः। अनु पश्चादपि। भवन्तं शेषमूर्तिम्। अभजत् आरराध। विद्याधराधिपत्यप्राप्तौ हेतुमाह—अथ स्तोत्रं च मन्त्रमपि नारदतः लब्ध्वा ननु शेषवपुषः ते तोषाय तपस्यन्निति। अथ अनन्तरम्। चकारोऽपिशब्दश्च समुच्चये। लब्ध्वा अधिगम्य। नन्वित्यामन्त्रणे। विष्णो इति शेषः। शेषवपुषः शेषमूर्तेः। ते तवेश्वरस्य। तोषाय प्रीत्यै। तपस्यन् तपश्चरन्॥

अथ भगवान् हरिः प्रादुर्भूय तस्मै वरं दत्तवानित्याह—

तस्मै मृणालधवलेन सहस्रशीर्ष्णा
रूपेण बद्धनुतिसिद्धगणावृतेन।
प्रादुर्भवन्नचिरतो नुतिभिः प्रसन्नो
दत्वाऽऽत्मतत्त्वमनुगृह्य तिरोदधाथ　　॥ ७ ॥

**तस्मायिति ॥** त्वम् अचिरतः प्रादुर्भवन् नुतिभिः प्रसन्नः तस्मै आत्मतत्त्वं दत्वा अनुगृह्य तिरोदधाथ। अचिरतः अचिरेण कालेन। प्रादुर्भवन् तस्य पुरस्तात् प्रादुर्भूय। नुतिभिः स्तुतिभिः। प्रसन्नः प्रहृष्टमनाः। तस्मै

चित्रकेतवे । आत्मतत्त्वम् आत्मनस्तत्त्वं याथार्थ्यम् । दत्वा उपदिश्य । अनुगृह्य अनुग्रहांश्च दत्वा । तिरोदधाथ तिरोहितोऽभूः । चित्रकेतवे दर्शितं भगवतः स्वरूपमाह—मृणालधवलेन सहस्रशीर्ष्णा बद्धनुतिसिद्धगणावृतेन रूपेण इति । मृणालधवलेन मृणालवत् बिसवद्धवलेन शुभ्रेण । सहस्रशीर्ष्णा सहस्रं शीर्षाणि शिरांसि यस्य तादृशेन । बद्धनुतिसिद्धगणावृतेन बद्धनुतिभिः स्तुवद्भिः सिद्धगणैः सिद्धानां देवयोनिविशेषाणां गणैः समूहैरावृतेन परिवृतेन । रूपेण आकारेण । उपलक्षित इति शेषः ॥

अथ प्राप्तवरस्य तस्य सुखानुभवप्रकारमाह—

त्वद्भक्तमौलिरथ सोऽपि च लक्षलक्षं
वर्षाणि हर्षुलमना भुवनेषु कामम् ।
सङ्गापयन् गुणगणं तव सुन्दरीभिः
सङ्गातिरेकरहितो ललितं चचार ॥ ८ ॥

त्वद्भक्तमौलिरिति ॥ अपि च अथ त्वद्भक्तमौलिः स लक्षलक्षं वर्षाणि सुन्दरीभिः तव गुणगणं सङ्गापयन् हर्षुलमनाः सङ्गातिरेकरहितः कामं भुवनेषु ललितं चचार । अपि च किञ्च । अथ वरप्राप्त्यनन्तरम् । त्वद्भक्तमौलिः भगवद्भक्तोत्तंसः । एतच्च विशेषणं भगवद्गुणसङ्गापनहेतुतयोपन्यस्तम् । सः चित्रकेतुः । वर्षाणि वत्सरान् । अत्यन्तसंयोगे द्वितीया । सुन्दरीभिः विद्याधरस्त्रीभिः । तव श्रीहरे । गुणगणं गुणानां भक्तवात्सल्यादीनां गणं समूहम् । सङ्गापयन् सम्यग्गापयन् । हर्षुलं सन्तोषातिरेकयुक्तं मनो यस्य सः हर्षुलमनाः । सङ्गातिरेकरहितः सङ्गस्य विषयासक्तेरतिरेकेण अतिशयेन रहितो वियुक्तः । कामं यथेष्टम् । भगवद्बलात् परैरनभिभूत इति भावः । भुवनेष्वभिमतेषु लोकेषु । ललितं द्रष्टृणामपि मनोहरं यथा भवति, तथा । चचार अचरत् ॥

एवं सुखेन चरतश्चित्रकेतोरसुरस्वभावहेतुभूतं पार्वतीशापमाह—

अत्यन्तसङ्गविलयाय भवत्प्रणुन्नो
नूनं स रूप्यगिरिमाप्य महत्समाजे ।

निश्शङ्कमङ्ककृतवल्लभमङ्गजारिं
तं शङ्करं परिहसन्नुमयाऽभिशेपे ॥ ९ ॥

अत्यन्तसङ्गविलयायेति ॥ सः रूप्यगिरिमाप्य उमया अभिशेपे । सः चित्रकेतुः । रूप्यगिरिं कैलासाचलम् । आप्य प्राप्य । उमया पार्वत्या । अभिशेपे आसुरीं योनिं याहीति शप्तोऽभूत् । शापहेतुमाह—तं शङ्करं परिहसन्निति । तं सर्वलोकाभिवन्द्यतया प्रसिद्धं भगवदंशभूतम् । शङ्करं महेश्वरम् । परिहसन्नुपहसन् । परिहासहेतुमाह—महत्समाजे निश्शङ्कम् अङ्ककृतवल्लभमङ्गजारिमिति । महत्समाजे महतां समाजे सदसि । निर्गता शङ्का यस्मात्तं निश्शङ्कम् । एतच्चाङ्कारोपणक्रियाविशेषणम् । अङ्के उत्सङ्गे कृता निहिता वल्लभा येन तमङ्ककृतवल्लभम् । अङ्गजारिमङ्गजस्य कामस्यारिं शत्रुम् । एकान्तोचितमङ्कारोपणं प्रियाया महत्समाजे लज्जां विहायानेन कृतमहो कामातुरत्वमस्येति धीः परिहासहेतुः । वस्तुतस्त्वङ्गजारिमिति विशेषणेनात्मना पार्वतीं घटयितुमुद्यतं मनोभवं निषूदयन्नपि भगवान् श्रीशङ्करः पार्वत्यास्तपसाऽतीव तुष्टः तदिष्टानुवर्तनाय तामङ्कमारोपितवान्, न कामातुरतयेति द्योत्यते । ननु कथं भगवद्भक्तोत्तंसश्चित्रकेतुरीश्वरावहेलनं कृतवानिति चेत्तत्र हेतुं सम्भावयन्नाह—अत्यन्तसङ्गविलयाय भवत्प्रणुन्नः नूनमिति । अत्यन्तसङ्गविलयाय सङ्गस्यात्यन्तिकनिवृत्तये । भवत्प्रणुन्न भवता प्रणुन्नः प्रेरितः । नूनं तर्कयामि । सङ्गातिरेकरहितस्यापि तस्यात्यन्तिकसङ्गनिवृत्तये भवता प्रेरितस्सन्नेवमीश्वरावहेलनं कृतवानिति तर्कयामीत्यर्थः । तत्फलस्य जन्मान्तरेऽप्यन्तसङ्गनिवृत्त्यात्मना परिणतत्वादिति भावः ॥

पार्वतीशापस्य परिणतिमाह—

निस्सम्भ्रमस्त्वयमयाचितशापमोक्षो
वृत्रासुरत्वमुपगम्य सुरेन्द्रयोधी ।
भक्त्याऽऽत्मतत्त्वकथनैः समरे विचित्रं
शत्रोरपि भ्रममपास्य गतः पदं ते ॥ १० ॥

निस्सम्भ्रम इति ॥ अथ तु अयाचितशापमोक्ष वृत्रासुरत्वमुपगम्य सुरेन्द्र याधी ते पद गत चित्रम्। अथ चित्रकेतु । अयाचित अप्रार्थित शापमोक्षो येन स अयाचितशापमोक्ष । वृत्रासुर वृत्रनामा असुरस्तस्य भावो वृत्रासुरत्वम्। उपगम्य प्राप्य। सुरेन्द्रयोधी देवेन्द्रेण सह युद्धयन्। ते तव श्रीविकुण्ठनिलयस्य। पद स्थान विकुण्ठलोकम्। गत प्राप्त। चित्रमद्भुतम्। शापमोक्षस्यायाचने हेतु माह—निस्सम्भ्रम इति। निर्गत सम्भ्रमो यस्मात् स तादृश। शापोक्तिमाक र्ण्यापि सम्भ्रमरहित इत्यर्थ। विस्मयहेतुमाह—समरे अपि भक्त्या आत्मतत्त्व कथनै शक्रो अपि भ्रममपास्य इति। समरे युद्धे। किं पुनरन्यदेत्यपिशब्दार्थ। भक्त्या भगवद्विषयिण्या। आत्मतत्त्वकथनै आत्मतत्त्वस्य आत्मनस्तत्त्वस्य याथा र्थ्यस्य कथनैरुपदेशै। शक्रोरिन्द्रस्य। किं पुन परेषामित्यपिशब्दार्थ। भ्रम देहात्मबुद्धिम्। अपास्य अपनीय। एवविधस्यादृष्टपूर्वत्वादश्रुतपूर्वत्वाचाद्भुत मेतदित्यर्थ। अत्र गुरुहेलनेनासुरेभ्य पराजितैर्देवै पौरोहित्याय वृतो विश्वरूप। स तु दितिसुतापत्यतया मातृपक्षपातेन रहसि दैत्येभ्यो हविर्भाग दत्तवान्। इन्द्रस्तु तदालक्ष्यास्य शिरास्यच्छिनत्। ततश्च त्वष्टृहतपुत्रस्याभिचारकुण्डादुत्थितो वृत्रस्समर भुवीन्द्रेण हत इति कथाऽनुसन्धेया ॥

अथ घोरसङ्कल्पानामपि भगवत्सेवया श्रेय प्राप्तिमुदाहरति—

त्वत्सेवनेन दितिरिन्द्रवधोद्यताऽपि
तान् प्रत्युतेन्द्रसुहृदो मरुतोऽभिलेभे।
दुष्टाशयेऽपि शुभदैव भवन्निषेवा
तत्तादृशस्त्वमव मा पवनालयेश ॥ ११ ॥

त्वत्सेवनेनेति ॥ दिति इन्द्रवधोद्यता अपि त्वत्सेवनेन प्रत्युत तान् इन्द्रसुहृद मरुत अभिलेभे। दितिरसुरजननी। इन्द्रवधोद्यता इन्द्रवधे इन्द्रस्य देवेन्द्रस्य वधे हनने उद्यता काश्यप प्रसाद्येन्द्रहण पुत्र वृतवती। अपिर्विरोधे। त्वत्सेवनेन काश्यपोपदिष्टपुसवनव्रतानुष्ठानेन। प्रत्युत वैपरीत्य जातम्। तान् इन्द्रेणाकाले दितेरुदर प्रविश्य ये सप्तसप्तधा वृक्णा इति प्रसिद्धास्तानित्यर्थ।

इन्द्रसुहृदः इन्द्रस्य सुहृदो मित्राणि। मरुतः मरुत इति प्रसिद्धान् सुतान्। अभिलेभे लब्धवती। अत्रार्थान्तरं न्यस्यति—भवन्निषेवा दुष्टाशये अपि शुभदा एव इति। भवन्निषेवा भवदाराधनम्। दुष्टाशये दुर्मतौ। किं पुनरदुष्टाशय इत्यपिशब्दार्थः। शुभं मङ्गलं ददातीति शुभदा। एवकारोऽयोगव्यवच्छेदार्थः। अथ प्रार्थयते—हे पवनालयेश तत्तादृशः त्वं मामव इति। पवनालयेश गुरुवायुपुरनाथ। स एव तादृशो यस्य सः तत्तादृशः अनन्यसदृशः। मामनन्यशरणम्। अव पाहि॥

इति चित्रकेतूपाख्यानं मरुदुत्पत्तिवर्णनं च त्रयोविंशदशकं सैकम्॥

इति श्रीनारायणीयस्तोत्रव्याख्यायां सुबोधिन्यां

षष्ठस्कन्धपरिच्छेदः॥

---

आदितः श्लोकसंख्या २४३

## सप्तमस्कन्धपरिच्छेदः

### चतुर्विंशदशकम्।

अथ भगवतो नृसिंहावतारं वर्णयितुं तत्कारणभूतं हिरण्यकशिपोर्वृत्तान्तमादौ वर्णयति—

हिरण्याक्षे पोत्रिप्रवरवपुषा देव भवता
हते शोकक्रोधग्लपितधृतिरेतस्य सहजः।
हिरण्यप्रारम्भः कशिपुरमरारातिसदसि
प्रतिज्ञामातेने तव किल वधार्थं मुररिपो ॥ १ ॥

हिरण्याक्ष इति॥ हे देव मुररिपो हिरण्यप्रारम्भः कशिपुः अमरारातिसदसि तव वधार्थं प्रतिज्ञामातेने किल। देव प्रकाशमान। मुररिपो मुरासुरमर्दन। हिरण्यप्रारम्भः हिरण्यपूर्वः कशिपुः। हिरण्यकशिपुरित्यर्थः। अमरारातिसदसि अमरारातीनामसुराणां सदसि सभायाम्। तव वधार्थं त्वां श्रीवासुदेवं हन्तुम्। आतेने कृतवान्। किलेति वार्तायाम्। प्रतिज्ञाकरणे हेतुमाह—पोत्रिप्रवरवपुषा भवता हिरण्याक्षे हते शोकक्रोधग्लपितधृतिः इति। पोत्रिप्रवरवपुषा श्रीवराहरूपेण। हिरण्याक्षे हिरण्याक्षनाम्न्यसुरे। हते व्यापादिते। शोकेन दुःखेन क्रोधेनामर्षेण च ग्लपिता ग्लानिं नीता धृतिः सन्तोषो यस्य सः शोकक्रोधग्लपितधृतिः। ननु हिरण्याक्षे हते किमिति हिरण्यकशिपुः शुशोचेति चेत्तत्राह—एतस्य सहज इति। एतस्य हिरण्याक्षस्य। सहजः सोदरः। सहजवधस्य शोकहेतुत्वादिति भावः।

एवं कृतप्रतिज्ञस्य हिरण्यकशिपोर्लोकपीडनादिकमाह द्वाभ्याम्—

विधातारं घोरं स खलु तपसित्वा नचिरतः
पुरः साक्षात्कुर्वन् सुरनरमृगाद्यैरनिधनम्।

वरं लब्ध्वा दृप्तो जगदिह भवन्नायकमिदं
परिक्षुन्दन्निन्द्रादहरत दिवं त्वामगणयन् ॥ २ ॥

विधातारमिति ॥ सः खलु इह त्वामगणयन् भवन्नायकम् इदं जगत् परिक्षुन्दन् इन्द्रात् दिवमहरत । सः हिरण्यकशिपुः । खल्विति त्वर्थे । इह जगति । त्वां जगद्रक्षकमीश्वरम् । अगणयन् अगणयित्वेत्यर्थः । भवान् नायको रक्षिता यस्य तत् भवन्नायकम् । जगत् भुवनम् । परिक्षुन्दन् चूर्णीकुर्वन् । इन्द्रात् देवेन्द्रात् । दिवं स्वर्गम् । अहरत हृतवान् । ननु कथमेवं विधातुं स समर्थोऽभूदिति चेत्तत्राह—घोरं तपसित्वा नचिरतः विधातारं पुरः साक्षात्कुर्वन् सुरनरमृगाद्यैः अनिधनं वरं लब्ध्वा दृप्तः इति । घोरमुग्रम् । तपसित्वा तपसाऽऽराध्य । नचिरतः अचिरेणैव कालेन । तपसोऽत्यन्तघोरतयेति भावः । विधातारं ब्रह्माणम् । पुरः पुरस्तात् । साक्षात्कुर्वन् प्रत्यक्षीकुर्वन् । तस्मात् सुरनरमृगाद्यैः देवमानवतिर्यक्प्रभृतिभिः । अनिधनमवध्यत्वरूपम् । वरमनुग्रहम् । लब्ध्वा प्राप्य । दृप्तः अतीव गर्वितः । एवञ्च वरप्रभावाल्लोकपीडने स्वर्गापहरणे च शक्तोऽभूदिति भावः ॥

निहन्तुं त्वां भूयस्तव पदमवाप्तस्य च रिपो-
र्बहिर्दृष्टेरन्तर्दधिथ हृदये सूक्ष्मवपुषा ।
नदन्नुच्चैस्तत्राप्यखिलभुवनान्ते च मृगयन्
भिया यातं मत्वा स खलु जितकाशी निववृते ॥ ३ ॥

निहन्तुमिति ॥ भूयः त्वां निहन्तुं तव पदमवाप्तस्य रिपोः हृदये बहिर्दृष्टेः त्वं सूक्ष्मवपुषा अन्तर्दधिथ च । भूयः अनन्तरम् । त्वामीश्वरम् । निहन्तुं व्यापादयितुम् । तव पदं विकुण्ठलोकम् । अवाप्तस्य प्राप्तस्य । रिपोः शत्रोर्हिरण्यकशिपोः । हृदये चेतसि । बहिर्दृष्टेः मांसचक्षुषः सकाशात् । सूक्ष्मवपुषा मांसचक्षुषा द्रष्टुमशक्येन शरीरेण । उपलक्षित इति शेषः । अन्तर्दधिथ तिरोहितोऽभूः । चकारस्समुच्चये । ज्ञानदृष्टिरहिततया हिरण्यकशिपुर्न भवन्तं द्रष्टुं शक्तोऽभूदिति भावः । सः खलु भिया यातं मत्वा उच्चैः नदन् तत्र

अपि अखिलभुवनान्ते च मृगयन् जितकाशी निववृते । सः हिरण्यकशिपुः । खल्विति त्वर्थे । अत्र त्वामिति पूर्वस्मादनुवर्तते । भिया भयेन । यातं पलायितम् । मत्वा निश्चित्य । उच्चैरतिघोरम् । नदन् गर्जन् । तत्र विकुण्ठनिलये । अखिलभुवनान्ते चतुर्दशभुवनान्तराले । अपिशब्दश्चकारश्च समुच्चये । मृगयन् गवेषयन् । जितकाशी जितम्मन्यः । निववृते निवृत्तोऽभूत् ॥

अथ हिरण्यकशिपोर्विनाशस्य पूर्वरङ्गभूतं पुत्रोत्पत्त्यादिकमाह—

ततोऽस्य प्रह्लादः समजनि सुतो गर्भवसतौ
मुनेर्वीणापाणेरधिगतभवद्भक्तिमहिमा ।
स वै जात्या दैत्यः शिशुरपि समेत्य त्वयि रतिं
गतस्त्वद्भक्तानां वरद परमोदाहरणताम् ॥ ४ ॥

तत इति ॥ ततः अस्य प्रह्लादः सुतः समजनि । ततः अनन्तरम् । अस्य हिरण्यकशिपोः । प्रह्लादः प्रह्लादनामा । सुतः पुत्रः । समजनि जातः । हे वरद सः वै जात्या दैत्यः शिशुः अपि त्वयि रतिं समेत्य त्वद्भक्तानां परमोदाहरणतां गतः । वरद भक्ताभीष्टवरप्रद । सः प्रह्लादः । वै इति त्वर्थो विशेषे । विशेषमाह—त्वद्भक्तानां परमोदाहरणतां गत इति । दैत्यः असुरः । शिशुर्बालः । अपिर्विरोधे । त्वयि श्रीवासुदेवे । रतिं प्रेमलक्षणां भक्तिम् । समेत्य प्राप्य । त्वद्भक्तानां तव भक्तानाम् । परमोदाहरणतां प्रधानदृष्टान्तताम् । गतः प्राप्तः । प्रह्लादस्य भगवद्भक्तिलाभे हेतुमाह—गर्भवसतौ वीणापाणेः मुनेः अधिगतभवद्भक्तिमहिमा इति । गर्भवसतौ गर्भनिवासवेलायाम् । वीणा पाणौ करे यस्य तस्माद्वीणापाणेः मुनेः । श्रीनारदादित्यर्थः । अधिगतः सम्यक् ज्ञातो भवद्भक्तेर्महिमा माहात्म्यं येन सोऽधिगतभवद्भक्तिमहिमा । हिरण्यकशिपौ तपसे मन्दराद्रिं गतवति देवेष्वसुरान् निर्जित्यान्तर्वर्त्नीं प्रह्लादमातरं नेतुमारब्धेषु नारदवचसा विसृज्य प्रतिनिवृत्तेषु देवर्षिस्तस्यै प्रह्लादमुद्दिश्य भक्तिज्ञानमार्गानुपदिदेश, तेन प्रह्लादो गर्भस्थ एव भगवद्भक्तेर्माहात्म्यमधिगतवानित्यर्थः ॥

स्वसुतं भगवद्भक्तमाकलयतो हिरण्यकशिपोः प्रवृत्तिमाह—

सुरारीणां हास्यं तव चरणदास्यं निजसुते
स दृष्ट्वा दुष्टात्मा गुरुभिरशिशिक्षच्चिरममुम् ।
गुरुप्रोक्तं चासाविदमिदमभद्राय दृढमि-
त्यपाकुर्वन् सर्वं तव चरणभक्त्यैव ववृधे　　॥ ५ ॥

सुरारीणामिति ॥ सः निजसुते सुरारीणां हास्यं तव चरणदास्यं दृष्ट्वा अमुं चिरं गुरुभिः अशिशिक्षत् । सः हिरण्यकशिपुः । निजसुते स्वपुत्रे । सुरारीणामसुराणाम् । हास्यं परिहसनम् । तव श्रीवासुदेवस्य । चरण दास्यं चरणयोः पादारविन्दयोर्दास्यं दास इति मतिम् । अत्र चकारोऽध्याहर्तव्यः । दृष्ट्वा अधिगम्य । गुरुभिरुपाध्यायैः । चिरं दीर्घं कालम् । अशिशिक्षत् शिक्ष यामास । असुरेषु हास्यं भवच्चरणयोर्दास्यं चास्य निवर्तयितुं त्रिवर्गोपायं दण्ड नीत्यादि गुरुभिरशिक्षयामासेत्यर्थः । अत्र हेतुमाह—दुष्टात्मा इति । दुष्टात्मा दुष्टाशयः । कोऽन्यो दुष्टाशयात् स्वपुत्रं भगवद्भक्तेर्निवर्तयितुमीहेत इति भावः । गुरूपदिष्टानि तस्मिन् निष्फलान्यभूवन्नित्याह—असौ च गुरुप्रोक्तं सर्वम् इति अपाकुर्वन् तव चरणभक्त्या एव ववृधे इति । असौ प्रह्लादः । चकारस्त्वर्थे । गुरुप्रोक्तं गुरुभिरुपदिष्टम् । सर्वं समस्तमपि । इति इत्युक्त्वा । अपाकुर्वन् परित्यजन् । तव श्रीवासुदेवस्य । चरणभक्त्या चरणयोः पादारविन्दयोर्भक्त्या प्रेमलक्षणया सह । एवकारोऽयोगव्यवच्छेदार्थः । ववृधे वृद्धिं प्राप्तः । उक्ति प्रकारमाह—इदमिदमभद्राय दृढमिति । इदमिदं यद्यदुपदिशति तत्तदित्यर्थः । अभद्रायामङ्गलाय । दृढं निश्चितम् । भेददृष्ट्याश्रितत्वादिति भावः ॥

अथ स्वसुतं भगवद्भक्तेश्चालयितुमशक्यमाकलयतो हिरण्यकशिपोः क्रूर चेष्टितान्याह । अत्र पूर्वस्माच्छ्लोकात् स इत्यनुवर्तते—

अधीतेषु श्रेष्ठं किमिति परिपृष्टेऽथ तनये
भवद्भक्तिं वर्यामभिगदति पर्याकुलधृतिः ।

गुरुभ्यो रोषित्वा सहजमतिरस्येत्यभिविदन्
वधोपायानस्मिन् व्यतनुत भवत्पादशरणे ॥ ६ ॥

अधीतेष्विति ॥ अत्र पूर्वस्मात् श्लोकात् स इत्यनुवर्तते। भवत्पादशरणे अस्मिन् वधोपायान् व्यतनुत। सः हिरण्यकशिपुः। भवत्पादशरणे भवतः पाद एव शरणं रक्षिता यस्य तस्मिन्। अनेन विशेषणेन वधोपायानां निष्फलत्वं द्योत्यते। अस्मिन् प्रह्लादे वधोपायान् वधस्योपायान्। व्यतनुत कृतवान्। अत्र हेतुमाह—गुरुभ्यः रोषित्वा अस्य सहजमतिः इति अभिविदन्निति। गुरुभ्यः ये पुत्रस्य शिक्षणे नियुक्तास्तेभ्य इत्यर्थः। रोषित्वा प्रकुप्य। अस्य प्रह्लादस्य। सहजमतिः सहजा स्वाभाविकी मतिर्बुद्धिः। मुरारीणां हास्यं भगवच्चरणदास्यं चेति शेषः। इति अनेन प्रकारेण। अभिविदन् गुरुवचसा अवगच्छन्। असुरेषु हास्यं भगवच्चरण दास्यं चास्य स्वाभाविकम्, अस्माभिरुपदिष्टं सर्वमपि इदमिदमभद्राय इदमित्युक्त्वा प्रतिषेधतीति गुरुमुखात् श्रुत्वेत्यर्थः। ममाविधेयोऽयं पुत्रोऽपि वध्य एवेति निश्चित्येति भावः। गुरुभ्यो रोषे हेतुमाह—अथ तनये भवद्भक्तिं वर्यामभिगदति पर्याकुलधृतिः इति। अथ अनन्तरं कदाचित्। तनये पुत्रे। भवद्भक्तिं भवति भक्तिं प्रेमलक्षणाम्। वर्यां श्रेष्ठाम्। अभिगदति उक्तवति। पर्याकुला चलिता धृतिः सन्तोषो यस्मात् स पर्याकुलधृतिः। पुत्रस्यैवमुक्तौ हेतुमाह—इति परिपृष्टे इति। इति अनेन प्रकारेण। परिपृष्टे सादरं पृष्टे। प्रश्नप्रकारमाह—अधीतेषु किं श्रेष्ठमिति। अधीतेषु अभ्यस्तेषु। किमिति प्रश्ने। श्रेष्ठमुत्तमम्। आत्मजेऽधीतेषु किमुत्तममिति पृष्टे भगवद्भक्तिरेव श्रेष्ठेत्युक्तवत्युपाध्यायैर्विष्णुभक्तिरुपदिष्टेति मत्वेति भाव. ॥

वधोपायानेव विवृण्वन् भगवद्भक्तेर्महिमानं दर्शयति—

स शूलैराविद्धः सुबहु मथितो दिग्गजगणै-
र्महासर्पैर्दष्टोऽप्यनशनगराहारविधुतः।
गिरीन्द्रावक्षिप्तोऽप्यहह परमात्मन्नयि विभो
त्वयि न्यस्तात्मत्वात् किमपि न निपीडामभजत ॥ ७ ॥

स इति ॥ शूलैः आविद्धः दिग्गजगणैः सुबहु मथितः महासर्पैः दष्टः अपि अनशनगराहारविदुतः गिरीन्द्रावक्षिप्तः अपि अहह अयि परमात्मन् विभो त्वयि न्यस्तात्मत्वात् किमपि निपीडां न अभजत । सः प्रह्लादः । आविद्धः आ समन्ताद्विद्धः । अपिः सर्वत्र सम्बध्यते । सर्वत्रापिर्विरोधे । दिग्गजगणैः दिग्गजानामैरावतादीनां गणैः समूहैः । सुबहु बहुवारम् । मथितः भूमौ निधाय पादैर्मर्दितः । महासर्पैः महाविषैस्सर्पैः । दष्टः दंशितः । अनशनगराहारविदुतः अनशनेनाशनाभावेन गराहारेण सविषेणाहारेण च विदुतः सुतरां पीडितः । गिरीन्द्रावक्षिप्तः गिरीन्द्रादुत्तुङ्गादवक्षिप्तः अधो बलात् प्रक्षिप्तः । अहहेत्यद्भुते । अयीति सम्बोधने । परमात्मन् परब्रह्मस्वरूप । विभो शक्तिसम्पन्न । त्वयि श्रीवासुदेवे । न्यस्तात्मत्वात् न्यस्तः अर्पितः आत्मा जीवो येन स न्यस्तात्मा, तस्य भावस्तत्त्वम्, तस्माद्धेतोः । अत्रात्मपदं हृदयादीनामप्युपलक्षणम् । मनोजीवेन्द्रियादीनां भगवति वासुदेवे समर्पितत्वादित्यर्थः । किमपि किञ्चिदपि । निपीडां व्यथाम् । न अभजत न प्राप । अहो भगवद्भक्तेः प्रभाव इति भावः ॥

एवं वधोपायेषु निष्फलेषु शङ्काविष्टस्य हिरण्यकशिपोः प्रवृत्तिमाह—

ततः शङ्काविष्टः स पुनरतिदुष्टोऽस्य जनको
गुरूक्त्या तद्गेहे किल वरुणपाशैस्तमरुणत् ।
गुरोश्चासान्निध्ये स पुनरनुगान् दैत्यतनयान्
भवद्भक्तेस्तत्त्वं परममपि विज्ञानमशिषत् ॥ ८ ॥

तत इति ॥ सः अस्य जनकः ततः शङ्काविष्टः पुनः गुरूक्त्या तद्गेहे वरुणपाशैः तमरुणत् किल । सः विफलवधप्रयत्नः । अस्य प्रह्लादस्य । जनकः पिता हिरण्यकशिपुः । ततः तस्मात् । वधोपायानां निष्फलत्वदर्शनादित्यर्थः । शङ्काविष्टः शङ्कया भयेनाविष्टः आक्रान्तहृदयः । पुनः पश्चात् । गुरूक्त्या गुरोरुक्त्या वचनेन । तद्गेहे तस्य गेहे गृहे । वरुणपाशैर्वरुणस्य पाशैः । तं प्रह्लादम् । अरुणत् बबन्ध । पुनरपि शिक्षयितुं पलायननिरोधार्थमिति भावः । किलेति वार्तायाम् । नन्वस्य कथमेवंविधं प्रकटितभगवत्सेवाप्रभावं परमभागवतमात्मज

मेवं निरोद्धुं मतिर्जातेत्याशङ्कायामाह—अतिदुष्टः इति। अतीव दुष्टाशय इत्यर्थः। किमकार्यं दुष्टाशयानामिति भावः। वरुणपाशैर्बद्धस्य प्रह्लादस्य प्रवृत्तिमाह—सः च पुनः गुरोः असान्निध्ये अनुगान् दैत्यतनयान् भवद्भक्तेः तत्त्वं परमं विज्ञानमपि अशिषत् इति। सः प्रह्लादः। चकारस्त्वर्थे। पुनः अनन्तरम्। असान्निध्ये सान्निध्याभावसमये। अनुगान् अनुगामिनः। दैत्यतनयानसुरपुत्रान्। भवद्भक्तेः भगवति भक्तेः। तत्त्वं कारणं माहात्म्यञ्चेत्यर्थः। परमं सर्वोत्कृष्टम्। विज्ञानं मोक्षोपयुक्तमात्मज्ञानम्। अपिः समुच्चये। अशिषदुपदिष्टवान्॥

अथैतदाकर्ण्य कर्तव्यमजानन् कोपाक्रान्तहृदयो हिरण्यकशिपुः पुत्रं पृष्ट्वा निराह—

पिता शृण्वन् बालप्रकरमखिलं त्वत्स्तुतिपरं
रुषाऽन्धः प्राहैनं कुलहतक कस्ते बलमिति।
बलं मे वैकुण्ठस्तव च जगतां चापि स बलं
स एव त्रैलोक्यं सकलमिति धीरोऽयमगदीत् ॥ ९ ॥

पितेति॥ पिता रुषा अन्धः एनम् इति प्राह। पिता हिरण्यकशिपुः। रुषा कोपेन। अन्धः कृत्याकृत्यविवेकरहितः। एनं प्रह्लादम्। इति अनेन प्रकारेण। प्राह उक्तवान्। कोपहेतुमाह—त्वत्स्तुतिपरम् अखिलं बालप्रकरं शृण्वन्निति। त्वत्स्तुतिस्तव स्तुतिः प्रशंसा परं प्रधानं यस्य तं त्वत्स्तुतिपरम्। बालप्रकरं बालस्य प्रह्लादस्य प्रकरं परेषामपि भक्तिमार्गप्रवर्तनादिरूपमतिशयम्। यद्वा, बालानां समूहम्। शृण्वन् गुरुमुखात् शृण्वन्नित्यर्थः। वचनप्रकारमाह—रे कुलहतक ते बलं कः इति। कुलहतक असुरवंशाधम। ते तव। बलम् अस्मदाज्ञालङ्घने शक्तिः। प्रह्लादः प्रत्युवाचेत्याह—धीरः अयम् इति अगदीदिति। धीरः निर्भयो विद्वांश्च। अन्यथैवमभिधातुं न समर्थ इति भावः। अयं प्रह्लादः। इति अनेन प्रकारेण। अगदीत् व्यक्तमुक्तवान्। वचनप्रकारमाह—मे बलं वैकुण्ठः विकुण्ठनिलयो हरिः। न केवलं ममेत्याह—तव च जगतामपि च स बलमिति। किन्तु तव च। तव त्रिभुवनविजयादाविति

## पञ्चविंशदशकम् ॥

अथ भगवतः श्रीनृसिंहावतारमाह द्वाभ्याम्—

स्तम्भे घट्टयतो हिरण्यकशिपोः कर्णौ समाचूर्णय-
न्नाघूर्णज्जगदण्डकुण्डकुहरो घोरस्तवाभूद्रवः।
श्रुत्वा यं किल दैत्यराजहृदये पूर्वं कदाऽप्यश्रुतं
कम्पः कश्चन सम्पपात चलितोऽप्यम्भोजभूर्विष्टपात् ॥ १ ॥

स्तम्भ इति॥ तव घोरः रवः अभूत्। तव श्रीनृसिंहरूपस्य। घोरः भयङ्करः। रवः सिंहनादः। अभूदुत्थितः। स्तम्भताडनानन्तरमिति भावः। घोरत्वमेवोपपादयन्नाह—स्तम्भे घट्टयतः हिरण्यकशिपोः कर्णौ समाचूर्णयन् आघूर्णज्जगदण्डकुण्डकुहरः इति। स्तम्भे स्थूणायाम्। घट्टयतः ताडयतः। कर्णौ श्रोत्रे। समाचूर्णयन् चूर्णीकुर्वन्। आघूर्णत् आ समन्तात् घूर्णत् कम्पमानं जगदण्डं ब्रह्माण्डमेव कुण्डं कटाहस्तस्य कुहरमन्तर्भागो यस्मिन् स आघूर्णज्जगदण्डकुण्डकुहरः। अत्र कुहरपदेन तद्वासिनो जना लक्ष्यन्ते। तिरश्चामपि कम्पमानत्वं व्यङ्ग्यम्। यं श्रुत्वा दैत्यराजहृदये कश्चन कम्पः सम्पपात। यं सिंहनादम्। श्रुत्वा आकर्ण्य। दैत्यराजहृदये दैत्यराजस्य असुराधिपस्य हिरण्यकशिपोः हृदये चेतसि। कश्चन अयमित्थमिति निर्देष्टुमशक्यः। कम्पः वेपथुः। सम्पपात आपतितः। कम्पहेतुमाह—पूर्वं कदापि अश्रुतमिति। श्रुतं न भवतीत्यश्रुतम्। एवंविधस्य शब्दस्याश्रुतपूर्वत्वादिति भावः। अपि अम्भोजभूः विष्टपात् चलितः। अपि अपिच। अम्भोजभूर्ब्रह्मा। विष्टपात् सत्यलोकात्। चलितः किमकाण्डे कल्पापाय इति सम्भ्रान्तोऽभूदित्यर्थः॥

अथ भगवान् नृसिंहरूपः प्रादुरासीदित्याह—

दैत्ये दिक्षु विसृष्टचक्षुषि महासंरम्भिणि स्तम्भतः
सम्भूतं न मृगात्मकं न मनुजाकारं वपुस्ते विभो।

किं किं भीषणमेतदद्भुतमिति व्युद्भ्रान्तचित्तेऽसुरे
विस्फूर्जद्धवलोग्ररोमविकसद्वर्ष्मा समाजृम्भथाः ॥ २ ॥

दैत्य इति ॥ हे विभो ! दैत्ये महासंरम्भिणि दिक्षु विसृष्टचक्षुषि ते वपुः स्तम्भतः सम्भूतम् । विभो परिपूर्ण । अनेन सम्बोधनेन भगवतः सर्वत्रात्मानं प्रदर्शयितुं सामर्थ्यं द्योत्यते । दैत्ये हिरण्यकशिपौ । महासंरम्भिणि अत्यन्त कुपिते । भगवतः सिंहनादश्रवणात् को नु मां त्रिलोकीश्वरमवगणयित्वा गर्जतीति विचिन्त्येति भाव । दिक्षु आशासु । विसृष्टे गर्जन्तं द्रष्टुं सर्वत. सञ्चारिते चक्षुषी नयने येन तस्मिन् विसृष्टचक्षुषि सति । ते तव । वपु. शरीरम् । स्तम्भतः स्तम्भात् । सम्भूतं प्रादुर्भूतम् । तस्य वपुषः स्वरूपमाह—न मृगात्मकं न मनुजाकारमिति । उत्तमाङ्गस्य सिंहाकारतया इतरभागस्य मनुजाकारतया च मृगाकारमिति वा मनुजाकारमिति वा वक्तुमशक्यम् । किन्तु नृसिंहाकारमित्यर्थ. । अथ ववृधे तद्रूपो भगवानित्याह—त्वम् असुरे इति व्युद्भ्रान्तचित्ते विस्फूर्जद्धवलोग्र रोमविकसद्वर्ष्मा समाजृम्भथाः इति । त्वं नरहरिरूप. । असुरे हिरण्यकशिपौ । इति एवं विचिन्त्य । व्युद्भ्रान्तचित्ते सम्भ्रान्तचेतसि सति । विस्फूर्जद्धवलोग्ररोमविकसद्वर्ष्मा विस्फूर्जद्भिर्विकस्वरैर्धवलैः शुभ्रैरुग्रैर्भयानकै रोमभिः सटाभिर्विकसत् प्रकाशमानं वर्ष्म विग्रहो यस्य तादृश । समाजृम्भथाः प्रवृद्धोऽभूः । असुरस्य चिन्ताप्रकारमाह—किं किमेतत् भीषणमद्भुतमिति । किं किमिति जिज्ञासायाम् । द्विरुक्तिस्सम्भ्रमं द्योतयति । भीषण भयङ्करम् । अद्भुतम् इतः पूर्वं कुत्राप्यदृष्टचरतयाऽश्चर्यभूतमित्यर्थ. ॥

भगवतो नृसिंहरूपमेव वर्णयंस्तौति द्वाभ्याम्—

तप्तस्वर्णसवर्णघूर्णदतिरूक्षाक्षं सटाकेसर-
प्रोत्कम्पप्रनिकुम्पिताम्बरमहो जीयात्तवेदं वपुः ।
व्यात्तव्याप्तमहादरीसखमुखं खड्गोग्रवल्गन्महा-
जिह्वानिर्गमदृश्यमानसुमहादंष्ट्रायुगोड्डामरम् ॥ ३ ॥

तप्तस्वर्णेति ॥ तप्तस्वर्णसवर्णघूर्णदतिरूक्षाक्षं सटाकेसरप्रोत्कम्पप्रनिकुम्पिताम्बरं व्यात्तव्याप्तमहादरीसखमुखं खड्गोग्रवल्गन्महाजिह्वानिर्गमदृश्यमानसुमहादंष्ट्रायुगोड्डामरम् अहो इदं तव वपुः जीयात् । तप्तस्वर्णसवर्णघूर्णदतिरूक्षाक्षं तप्तस्य विलीनस्य स्वर्णस्य सवर्णे समानवर्णे घूर्णती भ्रमिते अतिरूक्षे अतिशयेन रूक्षे अक्षिणी नेत्रे यस्मिंस्तत्तथोक्तम् । सटाकेसरप्रोत्कम्पप्रनिकुम्पिताम्बरं सटाकेसराणां स्कन्धरोमावलानां प्रोत्कम्पेन प्रचलनेन । प्रचलितैः स्कन्धरोमावलैरित्यर्थः । प्रनिकुम्पितमाच्छादितमम्बरं गगनतलं येन तत् । व्यात्तव्याप्तमहादरीसखमुखं व्यात्तं विवृतं व्याप्तमहादरीसखं व्याप्ता विस्तृता या महादरी महती गुहा तत्सखं तत्सदृशं मुखं वदनं यस्मिंस्तत् । खड्गोग्रवल्गन्महाजिह्वानिर्गमदृश्यमानसुमहादंष्ट्रायुगोड्डामरं खड्गवन्निस्त्रिंशवदुग्राया भीषणाया वल्गन्त्याश्चलिताया महत्या विस्तृताया जिह्वाया रसनाया निर्गमेन बहिर्निस्सरणेन दृश्यमानेन सुमहत्योः सुतरां विस्तृतयोर्दंष्ट्रयोर्युगेन युगलेन उड्डामरमतिभीषणम् । अहो आश्चर्यभूतमित्यर्थः । इदं नृसिंहाकारम् । वपुः शरीरम् । जीयात् सर्वोत्कर्षेण प्रकाशताम् ॥

उत्सर्पद्वलिभङ्गभीषणहनुह्रस्वस्थवीय स्तर-
ग्रीवं पीवरदोश्शतोद्गतनखक्रूरांशुदूरोल्बणम् ।
व्योमोल्लङ्घिघनाघनोपमघनप्रध्याननिर्धावित-
स्पर्धालुप्रकरं नमामि भवतस्तन्नारसिंहं वपुः ॥ ४ ॥

उत्सर्पद्वलिभङ्गभीषणहन्विति ॥ उत्सर्पद्वलिभङ्गभीषणहनुह्रस्वस्थवीयस्तरग्रीवं पीवरदोश्शतोद्गतनखक्रूरांशुदूरोल्बणं व्योमोल्लङ्घिघनाघनोपमघनप्रध्याननिर्धावितस्पर्धालुप्रकरं तत् भवतः नारसिंहं वपुः नमामि । उत्सर्पद्वलिभङ्गभीषणहनु उत्सर्पद्भिरट्टहासविजृम्भणादिषु उपरिगच्छद्भिर्वलिभङ्गैर्वलीनां भङ्गैर्भीषणो भयङ्करो हनुः हनुप्रदेशो यस्य तत् । ह्रस्वस्थवीयस्तरग्रीवं ह्रस्वा अदीर्घा स्थवीयस्तरा अतिस्थूला ग्रीवा कन्धरा यस्य तत् । पीवरदोश्शतोद्गतनखक्रूरांशुदूरोल्बणं पीवराणां पृथूनां दोष्णां कराणां शतादुद्गतानामुद्गच्छतां नखानां

क्रूरैरसह्यैरंशुभिः रश्मिभिर्दूरोल्बणमतीव भयजनकम् । व्योम आकाश मुल्लङ्घते अतिक्रम्य वर्तते इति व्योमोलङ्घि । घनाघनोपमघनप्रध्वाननिर्धावित स्पर्धालुप्रकरं घनाघनोपमैः सजलजलधरगर्जितसदृक्षैरित्यर्थः। घनैर्भीषणैः प्रध्वानैः सिंहनादैर्निर्धावितानां विद्रावितानां स्पर्धालूनां वैरिणां प्रकरः समूहो येन तत् । तत् अत्याश्चर्यभूतम् । नारसिंहं नृसिंहाकारम् । वपुः शरीरम् । नमामि प्रणमामि ॥

अथैवंविधं भगवतो नारसिंहं रूपमवलोकयतो हिरण्यकशिपोः प्रवृत्ति माह—

नूनं विष्णुरयं निहन्म्यमुमिति भ्राम्यद्गदाभीषणं
दैत्येन्द्रं समुपाद्रवन्तमधृथा दोर्भ्यां पृथुभ्याममुम् ।
वीरो निर्गलितोऽथ खड्गफलकौ गृह्णन् विचित्रश्रमान्
व्यावृण्वन् पुनरापपात भुवनग्रासोद्यतं त्वामहो ॥ ५ ॥

**नूनमिति** ॥ त्वम् इति भ्राम्यद्गदाभीषणं समुपाद्रवन्तम् अमुं दैत्येन्द्रं पृथुभ्यां दोर्भ्यामधृथाः । त्वं नृसिंहवपुः । इति एवं विचिन्त्य । भ्राम्यद्गदाभीषणं भ्राम्यन्त्या मण्डलाकारेण चालयन्त्या गदया भीषणं भयानकम् । समुपाद्रवन्तं सत्वरमभिमुखमागच्छन्तम् । अमुं दैत्येन्द्रमसुरश्रेष्ठं हिरण्यकशिपुम् । पृथुभ्यां पीवराभ्याम् । दोर्भ्यां कराभ्याम् । अधृथाः धृतवानसि । चिन्ताप्रकार माह—अयं विष्णुः नूनम् । अमुं निहन्मि इति । अयं पुरस्तात् दृश्यमानः । विष्णुः कपटरूपधारी । नूनं निश्चितम् । निहन्मि शीघ्रं हनिष्यामि । अथ वीरः निर्गलितः खड्गफलकौ गृह्णन् विचित्रश्रमान् व्यावृण्वन् पुनः भुवनग्रासो द्यतं त्वामापपात अहो । अथ अनन्तरम् । वीरः वीरम्मन्यो हिरण्यकशिपुः । निर्गलितः भगवत्कराभ्यां परिभ्रष्टः । खड्गफलकौ असिचर्मणी । गृह्णन् दधानः । विचित्रश्रमान् विचित्रान् नानाप्रकारान् श्रमान् सव्यापसव्यसञ्चरणभेदरूपान् व्यायाममार्गान् । व्यावृण्वन् प्रदर्शयन् । पुनः पश्चात् । भुवनग्रासोद्यतं भुवनानां ग्रासे कबलीकरणे उद्यतमुद्युक्तम् । समर्थमित्यर्थः । अनेनाजय्यत्वं भगवतो

द्योत्यते। त्वां श्रीनृसिंहमूर्तिम्। आपपात आससाद। अहो विचित्रम्। अह हास्य मूर्खतेति भावः॥

हिरण्यकशिपोर्वधमाह—

भ्राम्यन्तं दितिजाधमं पुनरपि प्रोद्गृह्य दोर्भ्यां जवात्
द्वारेऽथोरुयुगे निपात्य नखरान् व्युत्खाय वक्षोभुवि।
निर्भिन्दन्नधिगर्भनिर्भरगलद्रक्ताम्बु बद्धोत्सवं
पायं पायमुदैरयो बहुजगत्संहारिसिंहारवान् ॥ ६ ॥

भ्राम्यन्तमिति ॥ त्वं भ्राम्यन्तं दितिजाधमं पुनः अपि जवात् दोर्भ्यां प्रोद्गृह्य अथ द्वारे ऊरुयुगे निपात्य वक्षोभुवि नखरान् व्युत्खाय निर्भिन्दन् अधिगर्भनिर्भरगलद्रक्ताम्बु बद्धोत्सवं पायं पायं बहुजगत्संहारिसिंहारवान् उदैरयः। त्वं नरहरिरूपः। भ्राम्यन्तमितस्ततो भ्रमन्तम्। दितिजाधमम् असुरापसदं हिरण्यकशिपुम्। पुनरपि पश्चादपि। जवात् त्वरितम्। दोर्भ्यां कराभ्याम्। प्रोद्गृह्य बलात् गृहीत्वा। अथ अनन्तरम्। द्वारे द्वारदेशे। ऊरुयुगे ऊर्वोर्युगे युग्मे। निपात्य पातयित्वा। वक्षोभुवि उरःप्रदेशे। नखरान् नखान्। व्युत्खाय निखाय। निर्भिन्दन् नितरां भिन्दन् विदारयन्। अन्तर्बहिर्वा जले स्थले वा निधायायुधैर्वा हन्तुमशक्यत्वात् द्वार्यूरुयुगे निधाय नखैर्विदारितवानित्यर्थः। अधिगर्भनिर्भरगलद्रक्ताम्बु अधिगर्भमन्तर्भागे वक्षसः निर्भरं पूर्णं गलद्धारया सिरामुखेभ्यो निष्पन्दमानं रक्तं रुधिरमेवाम्बु जलम्। अत्र रुधिरस्य जलत्वेन रूपणाद्यथा तृषार्तः पिपासां शमयितुं जलं पिबति, तद्वदसुरालम्बनं क्रोधं शमयितुमिति द्योत्यते। बद्धोत्सवं बद्धः उत्सवो यस्मिन् तद्यथा भवति तथा। पायं पायं पुनः पुनः पीत्वा। पौनःपुन्ये द्विरुक्तिः। बहुजगत्संहारिसिंहारवान् बहूनसंख्येयान् जगत्संहारिणः ब्रह्माण्डभाण्डभेदनसमर्थान्। सिंहारवान् सिंहनादान्। उदैरयः प्रायुङ्क्थाः॥

इदानीं भगवतोऽत्यन्तभीषणेन कृत्येन चराचरमिदं जगच्चकम्पेत्याह—

त्यक्त्वा तं हतमाशु रक्तलहरीसिक्तोन्नमद्वर्ष्मणि
प्रत्युत्पत्य समस्तदैत्यपटलीं चाखाद्यमाने त्वयि।

भ्राम्यद्भूमि विकम्पिताम्बुधिकुलं व्यालोलशैलोत्करं
प्रोत्सर्पत्खचरं चराचरमहो दुस्थामवस्थां दधौ ॥ ७ ॥

**त्यक्त्वेति** ॥ हतं तं त्यक्त्वा रक्तलहरीसिक्तोन्नमद्वर्ष्मणि त्वयि आशु प्रत्युत्पत्य समस्तदैत्यपटली च आस्वाद्यमाने चराचरं दुःस्थामवस्थां दधौ अहो । हतं विहिंसितम् । तं हिरण्यकशिपुम् । त्यक्त्वा परित्यज्य । रक्तलहरीसिक्तोन्नमद्वर्ष्मणि रक्तलहर्या रुधिरप्रवाहेण सिक्तमक्तमुन्नमदुन्नतं वर्ष्म विग्रहो यस्य तस्मिन् । त्वयि श्रीनृसिंहरूपे । आशु सत्वरम् । प्रत्युत्पत्य तत्तदसुराभिमुखमुत्पत्य । समस्तदैत्यपटली समस्तानां सकलानां दैत्यानां हिरण्यकशिपोरनुचराणामसुराणां पटलीं समूहम् । चकारः समुच्चये । आस्वाद्यमाने भक्षयति सति । चराचरं स्थावरजङ्गमात्मकमिदं विश्वम् । दुस्थाम् अनवस्थितस्वस्थाननिवेशाम् । अवस्थां स्थितिम् । दधौ प्राप । अहो इत्यद्भुते । दुरवस्थामेव विवृणोति— भ्राम्यद्भूमि विकम्पिताम्बुधिकुलं व्यालोलशैलोत्करं प्रोत्सर्पत्खचरमिति । भ्राम्यद्भूमि भ्राम्यन्ती कम्पमाना भूमिर्यस्मिंस्तत् । विकम्पिताम्बुधिकुलं विकम्पितं क्षुब्धमम्बुधिकुलं समुद्रनिवहो यस्मिंस्तत् । व्यालोलशैलोत्करं व्यालोलाः कम्पमानाः शैलोत्कराः कुलाचलनिवहा यस्मिंस्तत् । प्रोत्सर्पत्खचरं प्रोत्सर्पन्तः केसरोत्क्षिप्ताः खचराः ज्योतिर्गणा यस्मिंस्तथाविधम् ॥

हिरण्यकशिपुप्रमुखानसुरान् निहत्य सभायामुपविष्टस्य भगवतः श्रीनृसिंहरूपस्य पुरस्तान्न कोपि गन्तुं शक्तोऽभूदित्याह—

तावन्मांसवपाकरालवपुषं घोरान्त्रमालाधरं
त्वां मध्येसभमिद्धकोपमुषितं दुर्वारगुर्वारवम् ।
अभ्येतुं न शशाक कोपि भुवने दूरे स्थिता भीरवः
सर्वे शर्वविरिञ्चवासवमुखाः प्रत्येकमस्तौषत ॥ ८ ॥

**तावदिति** ॥ तावत् भुवने कोपि मध्येसभमुषितं त्वामभ्येतुं न शशाक । तावत् तस्मिन्नवसरे । भुवने त्रिलोक्याम् । कोपि कश्चित् । ब्रह्माऽपीत्यर्थः । मध्येसभं सभाया मध्ये । उषितमुपविष्टम् । त्वां श्रीनृसिंहमूर्तिम् । अभ्येतुम्

अभिमुखमागन्तुम्। न शशाक न शक्तोऽभूत्। अत्र हेतुमाह—मांसवपाकराल वपुषं घोरान्त्रमालाधरम् इद्धकोपं दुर्वारगुर्वारवमिति। मांसवपाकरालवपुषं मांसेन वपया वसया च करालं भयङ्करं वपुः शरीरं यस्य तम्। घोरान्त्रमालाधरं घोराया दारुणाया आन्त्रमालाया धरं वोढारम्। इद्धकोपं इद्धो दीप्तः कोपः क्रोधो यस्य तम्। दुर्वारगुर्वारवं दुर्वारा दुस्सहा गुरवो गभीरा आरवाः सिंहनादा यस्य तम्। भीरवः दूरे स्थिताः। भीरवः भयवन्तः। दूरे दूरदेशे। स्थिताः अवस्थिताः। शर्वविरिञ्चवासवमुखाः सर्वे प्रत्येकमस्तौषत। शर्वविरिञ्चवासवमुखाः गिरीशब्रह्म सुरेन्द्रप्रभृतयः। सर्वे अखिलाः। प्रत्येकमेकैकशः। न तु समुदिताः। अस्तौषत तुष्टुवुः। भगवन्तं प्रसादयितुमिति भावः॥

अथ भगवतः कोपशान्तिमाह—

भूयोऽप्यक्षतरोषधाम्नि भवति ब्रह्माज्ञया बालके
प्रह्लादे पदयोर्नमत्यपभये कारुण्यभाराकुलः।
शान्तस्त्वं करमस्य मूर्ध्नि समधाः स्तोत्रैरथोद्गायत-
स्तस्याकामधियोऽपि तेनिथ वरं लोकाय चानुग्रहम् ॥ ९॥

**भूय इति**॥ भवति भूयः अपि अक्षतरोषधाम्नि त्वं बालके प्रह्लादे पदयोः नमति शान्तः अस्य मूर्ध्नि करं समधाः। भवति श्रीनृसिंहे। भूयः अपि ब्रह्मादिभिः स्तूयमानोऽपीत्यर्थः। अक्षतरोषधाम्नि अन्यूनरोषास्पदे सति। पदयोः पादार विन्दयोः। नमति निपतिते सति। शान्तः त्यक्तरोषः। अस्य प्रह्लादस्य। मूर्ध्नि शिरसि। करं पाणिपङ्कजम्। समधाः अर्पितवानसि। ननु कथं सर्वेषामपि भयावहस्य भगवतः श्रीनरहरेः पुरस्तात् बालः प्रह्लादः प्रणिपतितुं धीरोऽभूदिति चेत्तत्राह—ब्रह्माज्ञया अपभये इति। ब्रह्माज्ञया ब्रह्मणो निदेशेन। अपगतं भयं यस्मात्तस्मिन्नपभये। भगवतो रोषशान्तौ हेतुमाह— कारुण्यभाराकुलः इति। कारुण्यभारेण प्रह्लादविषयकेन कृपाभरेण आकुलो वशं वदः। अर्थात् प्रह्लादस्य। अथ प्रह्लादस्य वरं प्रादादित्याह—अथ त्वं स्तोत्रैः उद्गायतः अकामधियः अपि तस्य वरं लोकाय अनुग्रहं तेनिथ च। अथ अत

न्तरम्। स्तोत्रैः स्तुतिभिः। उद्गायतः उच्चैस्स्वरं स्तुवतः। भगवत्करार्पणात् समुपजातविवेकतयेति भावः। अकामधियः निस्पृहस्य। वरं दैत्याधिपत्यम्। लोकायानुग्रहं लोकानुग्रहरूपमित्यर्थः। तेनिथ कृतवान्। दत्तवानसीति यावत्। प्रह्लादस्य दैत्याधिपत्ये स्थापनाल्लोके दैत्यभयस्य शान्ततया प्रह्लादाय प्रदत्तं दैत्याधिपत्यरूपं वरं लोकानुग्रहरूपेण परिणतमिति भावः॥

ननु शुद्धसत्त्वमये भगवति कथमेवंविधः कोपावेशः समभूदित्याशङ्क्य, न वास्तवः कोपावेशोऽभूत्, किन्तु कोपाभिनयमात्रमेतदित्याह—

एवं नाटितरौद्रचेष्टित विभो श्रीतापनीयाभिध-
　श्रुत्यन्तस्फुटगीतसर्वमहिमन्नत्यन्तशुद्धाकृते।
तत्तादृङ्निखिलोत्तरं पुनरहो कस्त्वां परो लङ्घयेत्
　प्रह्लादप्रिय हे मरुत्पुरपते सर्वामयात् पाहि माम् ॥ १० ॥

एवमिति। हे विभो एवं नाटितरौद्रचेष्टितः अहो परः कः तत्तादृङ्निखिलोत्तरं त्वां लङ्घयेत्। विभो शक्तिसम्पन्न। एवमुक्तप्रकारेण। नाटितरौद्रचेष्टित नाटितमभिनीतं रौद्रचेष्टितं क्रूरकर्म येन स तादृश। अहो इत्यद्भुते। परः भवत्पार्षदादन्यः। कः कः पुमान्। तत्तादृङ्निखिलोत्तरं तत्तादृशमनुपमं निखिलोत्तरं सर्वोत्कृष्टम्। त्वामीश्वरम्। लङ्घयेत् अतिक्रमेत। तवाप्रियमाचरेदित्यर्थः। ननु भगवतैतद्रौद्रचेष्टितमभिनीतमेव, न तु वास्तवमित्यत्र किं प्रमाणमिति चेत्तत्राह—श्रीतापनीयाभिधश्रुत्यन्तस्फुटगीतसर्वमहिमन् श्रीतापनीयाभिधेन श्रीतापनीयाख्येन श्रुत्यन्तेन उपनिषदा स्फुटं स्पष्टं गीतः प्रतिपादितः सर्वः समस्तो महिमा माहात्म्यं यस्य तादृश। अत्यन्तशुद्धाकृते अत्यन्तमतिमात्रं शुद्धा निर्मला आकृतिः स्वरूपं यस्य तादृश। सच्चिदानन्दस्वरूप इति यावत्। तथाच कोपावेशस्यासम्भाव्यत्वादिति भावः। एवं नृसिंहावतारचरितमुपवर्ण्यानन्तरं प्रार्थयते—हे प्रह्लादप्रिय मरुत्पुरपते त्वं मां सर्वामयात् पाहि इति। प्रह्लादप्रिय भक्तप्रिय। अत्र प्रह्लादपदं भक्तोपलक्षणम्

उदाहरणार्थमिति वेदितव्यम्। मरुत्पुरपते श्रीगुरुवायुपुरनाथ। मामनन्यशरणम्। सर्वभयात् बाह्यादाभ्यन्तराच सर्वस्माद्रोगसञ्चयात्। त्रायस्व परिपाहि॥

इति प्रह्लादचरितवर्णनं पञ्चविंशदशकम्॥

इति श्रीनारायणीयस्तोत्रव्याख्यायां सुबोधिन्यां

सप्तमस्कन्धपरिच्छेदः॥

## षड्विंशदशकम् ।

अथापदि हरौ मनसो निवेशनं धर्मसारांशभूतमिति गजेन्द्रदृष्टान्तेन दर्शयिष्यन्नादौ तस्य प्राग्जन्मकथामाह द्वाभ्याम्—

इन्द्रद्युम्नः पाण्ड्यखण्डाधिराज-
स्त्वद्भक्तात्मा चन्दनाद्रौ कदाचित् ।
त्वत्सेवायां मग्नधीरालुलोके
नैवागस्त्यं प्राप्तमातिथ्यकामम् ॥ १ ॥

इन्द्रद्युम्न इति ॥ पाण्ड्यखण्डाधिराजः इन्द्रद्युम्नः कदाचित् चन्दनाद्रौ प्राप्तम् अगस्त्यं न आलुलोके एव । पाण्ड्यखण्डाधिराजः पाण्ड्यखण्डस्य भारतखण्डदक्षिणभागस्याधिराजोऽधिपतिः । इन्द्रद्युम्नः इन्द्रद्युम्ननामा । प्राप्तम् आगतम् । कदाचिदेकदा । चन्दनाद्रौ मलयाचले । अगस्त्यं महामुनिं कुम्भसम्भवम् । न आलुलोके न दृष्टवान् । का कथा पुनः प्रत्युद्गमनादेरित्येवकारार्थः । अगस्त्यागमनहेतुमाह— आतिथ्यकाममिति । आतिथ्यकाममतिथिसत्काराभिलाषिणम् । अनालोकनहेतुमाह—त्वत्सेवायां मग्नधीरिति । *त्वत्सेवायां त्वदाराधने । मग्नधीः मग्ना एकाग्रा धीर्यस्य सः । अत्र मग्नपदेन यथा जले मग्नो बहिर्वर्तमानं न किञ्चिदपि पश्यति, तद्वत् भगवत्सेवनैकाग्र*चित्ततया न महामुनिमपश्यदिति द्योत्यते । भगवत्सेवनैकाग्रचित्ततायां हेतुमाह— त्वद्भक्तात्मा इति । भगवद्भक्त इत्यर्थः ॥

मुनिस्तं शशापेत्याह—

कुम्भोद्भूतिः सम्भृतक्रोधभारः
स्तब्धात्मा त्वं हस्तिभूयं भजेति ।

शप्त्वाऽथैनं प्रत्यगात् सोऽपि लेभे
हस्तीन्द्रत्वं त्वत्स्मृतिव्यक्तिधन्यम् ॥ २ ॥

कुम्भोद्भूतिरिति ॥ अथ कुम्भोद्भूतिः एनं शप्त्वा प्रत्यगात् । अथ अनन्तरम् । कुम्भोद्भूतिः भगवानगस्त्यः । एनमिन्द्रद्युम्नम् । इति अनेन प्रकारेण । प्रत्यगात् प्रतिजगाम । शापहेतुमाह—सम्भृतक्रोधभारः इति । सम्भृतः सम्भरितः क्रोधभारः कोपभारो येन तथोक्तः सन् । आत्मनोऽनादरणादिति भावः । शापप्रकारमाह—त्वं हस्तिभूयं भज इति । हस्तिभूयं गजत्वम् । भज माप्नुहि एवंविधशापहेतुं दर्शयति—स्तब्धात्मा इति । स्तब्धो निष्क्रियः आत्मा मनो यस्य तादृशः । यतस्त्वं गज इव स्तब्धचेताः तस्मात् गजो भवेत्यर्थः । शापस्य परिणतिमाह—सः अपि हस्तीन्द्रत्वं भेजे इति । सः इन्द्रद्युम्नः । अपिस्त्वर्थो विशेषे । हस्तीन्द्रत्वं गजश्रेष्ठत्वम् । भेजे प्राप । अपिशब्दार्थं विशेषमाह—त्वत्स्मृतिव्यक्तिधन्यमिति । त्वत्स्मृतेः प्राग्जन्मार्ज्यस्तस्य भगवत्स्मरणस्य व्यक्तिरुद्बोधस्तया धन्यं पुरुषार्थप्रदम् ॥

गजेन्द्रस्य स्वैरविहारमाह—

दुग्धाम्भोधेर्मध्यभाजि त्रिकूटे
क्रीडञ्छैले यूथपोऽयं वशाभिः ।
सर्वान् जन्तूनत्यवर्तिष्ट शक्त्या
त्वद्भक्तानां कुत्र नोत्कर्षलाभः ॥ ३ ॥

दुग्धाम्भोधेरिति ॥ अयं दुग्धाम्भोधेः मध्यभाजि त्रिकूटे शैले वशाभिः क्रीडन् शक्त्या सर्वान् जन्तून् अत्यवर्तिष्ट । अयं गजेन्द्रः । दुग्धाम्भोधेः क्षीरार्णवस्य । मध्यभाजि मध्यवर्तिनि । त्रिकूटे त्रिकूटनाम्नि । शैले पर्वते । वशाभिः करेणुभिः सह । क्रीडन् समारमन् । शक्त्या बलेन । सर्वान् समस्तान् । जन्तून् प्राणिनः । अत्यवर्तिष्ट अतिक्रम्यावर्तत । अस्य गजाधिपत्यमाह—यूथपः इति । यूथं पाति रक्षतीति यूथपः । यूथाधिप इत्यर्थः । अत्रार्थान्तरं न्यस्यति—त्वद्भक्तानां कुत्र उत्कर्षलाभः न इति । त्वद्भक्तानां

त्वयि भक्तानाम् । कुल केषु केषु योनिषु । उत्कर्षलाभः उत्कर्षस्य लाभः अवाप्तिः । न न भवति । भगवद्भक्तानां न केषु केषु योनिषूत्कर्षावाप्तिः, यत् गजत्वेऽप्ययमिन्द्रद्युम्नः सर्वान् जन्तूनतिशयितवानित्यर्थः ॥

अथ गजेन्द्रस्य ग्राहग्रहणहेतुभूतं सरस्यां विहारमाह—

स्वेन स्थेम्ना दिव्यदेशत्वशक्त्या
　सोऽयं खेदानप्रजानन् कदाचित् ।
शैलप्रान्ते घर्मतान्तः सरस्यां
　यूथैः सार्धं त्वत्प्रणुन्नोऽभिरेमे　　॥ ४ ॥

स्वेनेति ॥ स्वेन स्थेम्ना दिव्यदेशत्वशक्त्या खेदान् अप्रजानन् सः अयं कदाचित् घर्मतान्तः शैलप्रान्ते सरस्यां यूथैः सार्धमभिरेमे। स्वेन आत्मीयेन। स्थेम्ना बलेन । अनन्यसाधारणेनात्मबलेनेत्यर्थः । दिव्यदेशत्वशक्त्या दिव्यदेशत्वस्य दिव्यदेशवर्तितायाः शक्त्या प्रभावेन । खेदान् बलाधिकेतरकृतानुपद्रवान्, अशनोपायाद्यभावकृताः पीडाश्च । अप्रजानन् अजानन् । कदाचिदप्येवंविधानां पीडानामनुत्पन्नतयेति भावः । सः पूर्वोक्तः । अयं गजेन्द्रः । कदाचिदेकदा । घर्मतान्तः घर्मेण निदाघेन तान्तः श्रान्तः । शैलप्रान्ते पर्वतनितम्बे । सरस्यां सरसि । यूथैः स्वस्यानुचराणां गजानां समूहैः । सार्धं सह । अभिरेमे अरमत । नन्वयं भगवदाश्रयः कथं ग्राहग्रहणहेतुभूते सरोवरावगाहने प्रवृत्त इति चेत्तत्राह—त्वत्प्रणुन्नः इति । त्वया निजपदं प्रापयिष्यता ईश्वरेण । प्रणुन्नः प्रेरितः । भगवत्प्रेरणयेत्यर्थः ॥

ग्राहो गजेन्द्रं जग्राहेत्याह—

हूहूस्तावद्देवलस्यापि शापात्
　ग्राहीभूतस्तज्जले वर्तमानः ।
जग्राहैनं हस्तिनं पाददेशे
　शान्त्यर्थं हि श्रान्तिदोऽसि स्वकानाम्　　॥ ५ ॥

हूहूरिति ॥ तावत् हूहूः अपि तज्जले वर्तमानः। तावत् तदानीम्। हूहूर्नाम कश्चिद्गन्धर्वः। अपिस्समुच्चये। तज्जले तस्य सरसो जले। वर्तमानः वसन्। आसीदिति शेषः। तस्य जले वर्तने हेतुमाह—देवलस्य शापात् ग्राहीभूतः इति। देवलस्य देवलनाम्नो मुनेः। ग्राहीभूतः नक्रतामुपगतः। एनं हस्तिनं पाददेशे जग्राह। हूहूरित्यत्रानुवर्तते। एनं हस्तिनं गजेन्द्रम्। पाददेशे चरणप्रदेशे। जग्राह गृहीतवान्। ननु किमर्थं भगवानेनं ग्राहग्रहणेनापीडयदित्याशङ्कायामाह—त्वं स्वकानां शान्त्यर्थं श्रान्तिदः असि हि इति। स्वकानां स्वभक्तानाम्। शान्त्यर्थं विषयविरक्तये। श्रान्तिं पीडां ददातीति श्रान्तिदः। हीति प्रसिद्धौ। तथाच तस्य विषयविरक्तये पीडां कृतवानिति भाव.॥

अथ भगवान् नक्रगृहीतमप्यनाकुलं तं गजेन्द्रं नक्राक्रमणेन पीडितमकरोदित्याह—

त्वत्सेवाया वैभवात् दुर्निरोधं
युद्ध्यन्तं तं वत्सराणां सहस्रम्।
प्राप्ते काले त्वत्पदैकाग्र्यसिद्ध्यै
नक्राक्रान्तं हस्तिवर्यं व्यधास्त्वम् ॥ ६ ॥

त्वत्सेवाया इति ॥ त्वं त्वत्सेवायाः वैभवात् दुर्निरोधं वत्सराणां सहस्रं युद्ध्यन्तं तं हस्तिवर्यं काले प्राप्ते त्वत्पदैकाग्र्यसिद्ध्यै नक्राक्रान्तं व्यधाः। त्वत्सेवायाः प्राग्जन्मानुष्ठितस्य त्वदाराधनस्य। वैभवात् प्रभावात्। दुर्निरोधम् अपर्याकुलं यथाभवति तथा। वत्सराणां सहस्रं सहस्रं वत्सरान्। अत्यन्तसंयोगे द्वितीया। युद्ध्यन्तं ग्राहेण सह युद्धं कुर्वाणम्। तं पूर्वोक्तम्। हस्तिवर्यं गजेन्द्रम्। काले प्रारब्धकर्मावसानकाले। प्राप्ते आगते। त्वत्पदैकाग्र्यसिद्ध्यै त्वत्पदयोरैकाग्र्यस्य मनसः स्थिरीकरणस्य प्राग्जन्माभ्यस्तस्य सिद्ध्यै फलप्राप्तये। फलमत्र मोक्षः। नक्राक्रान्तं नक्रेण ग्राहेणाक्रान्तमतिमात्रं पीडितम्। व्यधाः कृतवानसि। शान्तानामेव मोक्षेऽधिकारितया आर्तिं विना शान्तेरनुदयाच्चेति भाव.॥

नक्राक्रमणस्य फलमाह—

आर्तिव्यक्तप्राक्तनज्ञानभक्तिः
शुण्डोत्क्षिप्तैः पुण्डरीकैः समर्चन् ।
पूर्वाभ्यस्तं निर्विशेषात्मनिष्ठं
स्तोत्रं श्रेष्ठं सोऽन्वगादीत् परात्मन् ॥ ७ ॥

आर्तिव्यक्तेति ॥ हे परात्मन् सः शुण्डोत्क्षिप्तैः पुण्डरीकैः समर्चन् श्रेष्ठं स्तोत्रमन्वगादीत् । परात्मन् परब्रह्मस्वरूप । सः गजेन्द्रः । शुण्डोत्क्षिप्तैः शुण्डया हस्तेनोत्क्षिप्तैरूर्ध्वं प्रक्षिप्तैः । गजानां हस्तो हि शुण्डेत्युच्यते । पुण्डरीकैः सिताम्भोजैः । समर्चन् सम्यगर्चनं कुर्वाणः । त्वामिति शेषः । श्रेष्ठमुत्तमम् । स्तोत्रं स्तुतिम् । अन्वगादीत् पुनः पुनः पपाठ । श्रेष्ठताहेतुमाह—निर्विशेषात्मनिष्ठमिति । निर्गुणब्रह्मविषयमित्यर्थः । ननु कुतोऽस्यैवंविधस्य स्तोत्रस्यावगम इत्याशङ्कायामाह—पूर्वाभ्यस्तमिति । पूर्वस्मिन्नभ्यस्तम् । ननु कथं जन्मान्तरानुभूतस्य स्मरणमित्यत आह—आर्तिव्यक्तप्राक्तनज्ञानभक्तिः इति । आर्त्या नक्राक्रमणजनितया पीडया व्यक्ते अभिव्यक्ते प्राक्तने जन्मान्तरीये ज्ञानं च भक्तिश्चेति ज्ञानभक्ती यस्य तादृशः ॥

गजेन्द्रस्य पुरस्ताद्भगवान् श्रीहरिः प्रादुरासीदित्याह—

श्रुत्वा स्तोत्रं निर्गुणस्थं समस्तं
ब्रह्मेशाद्यैर्नाहमित्यप्रयाते ।
सर्वात्मा त्वं भूरिकारुण्यवेगात्
तार्क्ष्यारूढः प्रेक्षितोऽभूः पुरस्तात् ॥ ८ ॥

श्रुत्वेति ॥ त्वं समस्तं स्तोत्रं श्रुत्वा भूरिकारुण्यवेगात् पुरस्तात् प्रेक्षितः अभूः । त्वं श्रीवैकुण्ठः । समस्तं सकलम् । स्तोत्रं स्तुतिम् । श्रुत्वा आकर्ण्य । भूरिकारुण्यवेगात् निरवधिकृपाभरेण । पुरस्तात् पुरोभागे । प्रेक्षितः दृष्टः । गजेन्द्रेणेति शेषः । स्वभक्ते गजेन्द्रे कृपाभरेण तस्य पुरस्तात् प्रादुरासीरित्यर्थः ।

गजेन्द्रस्य पुरस्तात् प्रादुर्भूतस्य भगवत. स्वरूपमाह—तार्क्ष्यारूढ· इति। तार्क्ष्यारूढ गरुडसमधिरूढ। एतच्च दिव्यभूषायुधादीनामप्युपलक्षणम्। ननु स्तोत्रमाकर्ण्य ब्रह्मादय कुतो न तस्य पुरस्तात् प्रादुरासन्निति चेत्तत्राह—ब्रह्मेशाद्यै इति अप्रयाते इति। ब्रह्मेशाद्यै विधिशङ्करादिभि। इति एवं मत्वा। अप्रयाते तस्य पुरस्तादनागते सति। मननप्रकारमाह—अहं न इति। स्तुत इति शेष.। एवं मनने हेतुं प्रकटयन् स्तोत्र विशिनष्टि—निर्गुणस्थमिति। निर्गुणस्थ निर्गुण ब्रह्मविषयम्। ब्रह्माऽहमीशोऽहमित्यभिमानिनो ब्रह्मादयो नाहमनेन स्तुत, यतो निर्गुणब्रह्मविषयमिदं स्तोत्रमिति मत्वा न तस्य पुरस्तात् प्रादुरासन्नित्यर्थ। ननु विष्णुरपि विष्णुरहमित्यभिमान्येवेति चेत्तत्राह—सर्वात्मा इति। सर्वेषा ब्रह्मादीना मात्मा अन्तर्यामी। सर्वान्तर्यामितया भगवतो विष्णोर्न शरीराद्यवलम्बनोऽभिमान इति भाव॥

अथ गजेन्द्रमोक्षमाह—

हस्तीन्द्रं त हस्तपद्मेन धृत्वा
चक्रेण त्वं नक्रवर्यं व्यदारीः।
गन्धर्वेऽस्मिन् मुक्तशापे स हस्ती
त्वत्सारूप्यं प्राप्य देदीप्यते स्म ॥ ९ ॥

हस्तीन्द्रमिति॥ तं हस्तीन्द्रं हस्तपद्मेन धृत्वा चक्रेण नक्रवर्यं व्यदारी.। हस्तीन्द्र गजेन्द्रम्। हस्तपद्मेन पाणिपङ्कजेन। धृत्वा गृहीत्वा। चक्रेण सुदर्शनेन। नक्रवर्यं ग्राहश्रेष्ठम्। व्यदारी दारितवानसि। अथ अस्मिन् गन्धर्वे मुक्तशापे स हस्ती त्वत्सारूप्यं प्राप्य देदीप्यते स्म। अथ विदारणानन्तरम्। अस्मिन् पूर्वोक्ते। मुक्तशापे मुक्त शापो येन तस्मिन्। शापान्मुक्ते सतीत्यर्थ।॥ हस्ती गजेन्द्र। त्वत्सारूप्य तव विष्णो सारूप्य सरूपताम्। प्राप्य लब्ध्वा। देदीप्यते स्म अतिशयेन दीप्तोऽभूत्॥

भगवदनुगृहीतस्यास्य वृत्तान्तस्य फलश्रुतिमाह—

एतद्वृत्तं त्वाञ्च माञ्च प्रगे यो
गायेत् सोऽयं भूयसे श्रेयसे स्यात् ।
इत्युक्त्वैनं तेन सार्धं गतस्त्वं
धिष्ण्यं विष्णो पाहि वातालयेश ॥ १० ॥

एतदिति ॥ हे विष्णो वातालयेश इति एनमुक्त्वा तेन सार्धं धिष्ण्यं गतः त्वं पाहि। वातालयेश गुरुवायुपुरनाथ। इति अनेन प्रकारेण। उक्त्वा अभिधाय। तेन गजेन्द्रेण। सार्धं सह। धिष्ण्यं स्वस्थानं विकुण्ठलोकम्। गतः प्राप्तः। पाहि मां रक्ष। उक्तिप्रकारमाह—सः अयं भूयसे श्रेयसे स्यादिति। अयं पुरुषः। भूयसे महते। श्रेयसे मङ्गलाय। मोक्षायेत्यर्थः। स्यात् भवेत्। तत्पदार्थमाह—यः प्रगे एतत् वृत्तं त्वां च मां च गायेदिति। प्रगे प्रातः। वृत्तं चरितम्। गायेत् कीर्तयेत् ॥

इति गजेन्द्रमोक्षवर्णनं
षड्विंशदशकम् ॥

---

## सप्तविंशदशकम् ॥

अथ भगवतः कूर्मावताराद्या विविधा लीला वर्णयितुममृतमथनं प्रस्तौति—

दुर्वासाः सुरवनिताप्तदिव्यमाल्यं
शक्राय स्वयमुपदाय तत्र भूयः ।
नागेन्द्रप्रतिमृदिते शशाप शक्रं
का क्षान्तिस्त्वदितरदेवतांशजानाम् ॥ १ ॥

दुर्वासा इति ॥ दुर्वासाः शक्रं शशाप। दुर्वासाः तन्नामा मुनिर्गिरिशांशसम्भूतः। शक्रं देवेन्द्रम्। शशाप जरसाऽऽक्रान्ता भवत यूयमिति शप्तवान्। शापहेतुमाह—सुरवनितासदिव्यमाल्यं स्वयं शक्राय उपदाय भूयः तत्र नागेन्द्रप्रतिमृदिते इति। सुरवनितासदिव्यमाल्यं सुरवनितायाः देवाङ्गनाया आप्तं दिव्यं पारिजातकुसुमरचितं माल्यं मालाम्। शक्राय वासवाय। उपदाय दत्वा। भूयः पुनः। तत्र तस्मिन् दिव्यमाल्ये। नागेन्द्रप्रतिमृदिते नागेन्द्रेण ऐरावतेन प्रतिमृदिते पादेन निष्पिष्टे सति। अत्रार्थान्तरं न्यस्यति—त्वदितरदेवतांशजानां का क्षान्तिः इति। त्वदितरदेवतानां त्वद्भिन्नदेवतानामंशेन भागेन जायन्त इति तथाविधानाम्। का कीदृशी। क्षान्तिः क्षमा। अस्तीति शेषः। त्वद्भिन्नगिरिशांशसम्भूतत्वात् दुर्वाससो न क्षान्तिलेशोऽपि। अतो महेन्द्रं शप्तवान्। त्वदंशभूतश्चेत्नैवंविधः स्यात्। यथात्मनन्तपोविघ्नमाचरत्स्वपि मनोभवादिषु प्रसन्नो भगवान् नरसख श्रीनारायणमुनिरिति भावः॥

शापेन दुरवस्थां प्राप्ता देवा भगवन्तं शरणं प्रापुरित्याह—

शापेन प्रथितजरेऽथ निर्जरेन्द्रे
देवेष्वप्यसुरजितेषु निष्प्रभेषु।
शर्वाद्याः कमलजमेत्य सर्वदेवा
निर्वाणप्रभव समं भवन्तमापुः ॥ २ ॥

शापेनेति ॥ हे निर्वाणप्रभव शर्वाद्याः सर्वदेवाः कमलजमेत्य समं भवन्तमापुः। निर्वाणप्रभव मोक्षप्राप्तिस्थानभूत। शर्वाद्याः गिरिशप्रभृतयः। सर्वदेवाः सर्वे सुरगणाः। कमलजं ब्रह्माणम्। एत्य प्राप्य। तेन सह समं मिलित्वेत्यर्थः। भवन्तं श्रीविकुण्ठनिलयम्। आपुः प्राप्ताः। अत्र हेतुमाह—शापेन निर्जरेन्द्रे प्रथितजरे देवेषु अपि निष्प्रभेषु असुरजितेषु इति। शापेन दुर्वासस इत्यर्थः। निर्जरेन्द्रे। प्रथितजरे जरामुपगतवति सति। निष्प्रभेषु निर्गता प्रभा श्रीर्येभ्यस्तेषु। असुरजितेषु असुरैर्जितेषु सत्सु॥

ब्रह्माद्यैः स्तुतमहिमा चिरं तदानीं
प्रादुष्षन् वरद पुरः परेण धाम्ना ।
हे देवा दितिजकुलैर्विधाय सन्धिं
पीयूषं परिमथतेति पर्यशास्त्वम् ॥ ३ ॥

ब्रह्माद्यैरिति ॥ हे वरद त्वं परेण धाम्ना प्रादुष्षन् इति पर्यशाः । वरद वरप्रद । परेण सर्वोत्कृष्टेन । धाम्ना तेजसोपलक्षितः । प्रादुष्षन् प्रादुर्भूयेत्यर्थः । इति अनेन प्रकारेण । पर्यशाः आदिष्टवानसि । आदेशप्रकारमाह—हे देवाः दितिजकुलैः सन्धिं विधाय पीयूषं परिमथत इति । दितिजकुलैरसुरौघैः । सन्धिं सन्धानम् । विधाय कृत्वा । पीयूषममृतम् । मन्दराचलं मन्थं, वासुकिं वरत्रां च विधाय क्षीराम्बुधिममृतार्थं परिमथतेत्यर्थः । भगवतः प्रादुर्भावे हेतुमाह—तदानीं ब्रह्माद्यैः चिरं स्तुतमहिमा इति । तदानीं तस्मिन्नवसरे । ब्रह्माद्यैर्ब्रह्मशङ्करमुखैः । चिरं चिराय । स्तुतमहिमा स्तुतो महिमा माहात्म्यं यस्य ॥

अथ मन्दरानयनमाह—

सन्धानं कृतवति दानवैः सुरौघे
मन्थानं नयति मदेन मन्दराद्रिम् ।
भ्रष्टेऽस्मिन् बदरमिवोद्वहन् खगेन्द्रे
सद्यस्त्वं विनिहितवान् पयःपयोधौ ॥ ४ ॥

सन्धानमिति ॥ सुरौघे दानवैः सन्धानं कृतवति मदेन मन्दराद्रिं नयति अस्मिन् भ्रष्टे सद्यः त्वं बदरमिव खगेन्द्रे उद्वहन् पयःपयोधौ विनिहितवान् सुरौघे देवसञ्चये । दानवैरसुरैः सह । सन्धानं सन्धिम् । कृतवति सति । मदेन अहङ्कारेण । मन्थानं मथनसाधनम् । मन्दराद्रिं मन्दराचलम् । नयति सति । अस्मिन् मन्दराद्रौ । भ्रष्टे श्रान्तशक्रवैरोचनादिहस्तेभ्यो निपतिते सति । सद्यः द्रुतम् । बदरं कोलफलम् । खगेन्द्रे गरुडे उद्वहन् । सद्य एव

तेषां पुरस्तात् प्रादुर्भूय त गिरिवर कोलफलमिवैकहस्तेनोद्धृत्य गरुडे समारोप्य नीत्वेत्यर्थ । पय पयोधौ क्षीरार्णवे। विनिहितवान् क्षिप्तवानसि ॥

भगवानुपायेनात्माश्रिताना सुराणा विषाग्निपीडा परिहृतवानित्याह—

आधाय द्रुतमथ वासुकिं वरत्रां
पाथोधौ विनिहितसर्वबीजजाले ।
प्रारब्धे मथनविधौ सुरासुरैस्तै-
र्व्याजात्त्व भुजगमुखेऽकरोः सुरारीन् ॥ ५ ॥

आधायेति ॥ अथ त्वं द्रुत वासुकिं वरत्रामाधाय विनिहितसर्वबीज जाले पाथोधौ तै सुरासुरै मथनविधौ प्रारब्धे सुरारीन् व्याजात् भुजगमुखे अकरो । द्रुतं सत्वरम्। वासुकिं भगवत पार्वतीवल्लभस्याभरणभूत नागराजम् । वरत्रा नेत्रम् । मन्थदण्डस्य वामतो दक्षिणतश्च भ्रमणार्थं केनचित् पाशेन वेष्टयित्वा तस्यैकैकमग्रमेकैकेन गृहीत्वा एक कर्षत्यपर मुञ्चति, पुनरपर कर्षतीतरं मुञ्चति । तादृशरज्जुस्थानीयमित्यर्थ । आधाय विधाय। विनिहितसर्वबीज जाले विनिहितानि निक्षिप्तानि सर्वाणि समस्तानि बीजजालानि वीरत्तृणौषधि समूहा यस्मिन्। पाथोधौ क्षीरार्णवे। तै सन्भितै । सुरासुरै सुरैरसुरैश्च । मथनविधौ मथनकर्मणि । प्रारब्धे प्रारब्धमुपक्रान्ते सति। सुरारीनसुरान् । व्याजात् कपटेन। भुजगमुखे भुजगस्य वासुकेर्मुखे विषाग्न्युद्गमे। अकरो कृतवानसि । अयमर्थ —भगवानहिपुच्छममङ्गलमित्युच्चैर्वदन् सुरैस्सार्धं पूर्वमहे पूर्वकाय जग्राह, तदा अश्लाघ्यावयव पुच्छ न गृह्णीम इति तूष्णीमवस्थितानसुरानवलोक्य श्लाघ्या यूय गृह्णीत पूर्वकायमित्युक्त्वा देवैस्सार्धमपसृत्य पुच्छ जग्राहेति॥

अथ भगवत कूर्मावतारमाह—

क्षुब्धाद्रौ क्षुभितजलोदरे तदानीं
दुग्धाब्धौ गुरुतरभारतो निमग्ने।
देवेषु व्यथिततमेषु तत्प्रियैषी
प्राणैषीः कमठतनुं कठोरपृष्ठाम् ॥ ६ ॥

क्षुब्धाद्राविति ॥ त्वं कमठतनुं प्राणैषीः। कमठतनुं कूर्मशरीरम्। प्राणैषीः प्रणीतवानसि। अत्र हेतुमाह—देवेषु व्यथिततमेषु तत्प्रियैषी इति। व्यथिततमेषु अतीव दुःखितेषु। तत्प्रियैषी तेषां देवानां प्रियं चिकीर्षुः। देवानां व्यथाहेतुं दर्शयन्नाह—तदानीं क्षुब्धाद्रौ क्षुभितजलोदरे दुग्धाब्धौ गुरुतरभारतः निमग्ने इति। तदानीं सुरासुरेषु विमथत्सु। क्षुब्धाद्रौ क्षुब्धे भ्रमिते अद्रौ मन्थपर्वते। क्षुभितजलोदरे क्षुभितं क्षोभमुपगतं जलोदरं क्षीरार्णवजलान्तर्भागो येन तथाविधे सति। अथवा, क्षुभितं जलं यस्मिंस्तत् क्षुभितजलम्, तादृशमुदरं यस्य तथाविधे इति क्षीरार्णवविशेषणमिदम्। दुग्धाब्धौ क्षीरार्णवे। गुरुतरभारतः गुरुतरेण अतीव दुर्वहेण भारतः भारेण गुरुत्वेन। निमग्ने नितरां मग्ने सति। तमुद्धर्तुमिति भावः। भगवतः कूर्मतनोरद्रिवहन योग्यतामाह—कठोरपृष्ठामिति। कठोरमतिकर्कशं पृष्ठं यस्यास्ताम्॥

भगवान् निमग्नं मन्दराद्रिमुन्नीतवानित्याह—

वज्रातिस्थिरतरकर्परेण विष्णो
विस्तारात् परिगतलक्षयोजनेन।
अम्भोधेः कुहरगतेन वर्ष्मणा त्वं
निर्मग्नं क्षितिधरनाथमुन्निनेथ ॥ ७ ॥

वज्रेति॥ हे विष्णो त्वम् अम्भोधेः कुहरगतेन वर्ष्मणा निर्मग्नं क्षितिधरनाथम् उन्निनेथ। त्वं कूर्मतनुः। अम्भोधेः समुद्रस्य। कुहरगतेन अभ्यन्तरवर्तिना। इदञ्च विशेषणं समुद्रे निमग्नस्याद्रेरुद्धरणसौकर्यद्योतनाय। वर्ष्मणा विग्रहेण। निर्मग्नं नितरां समुद्रे मग्नम्। क्षितिधरनाथमचलेन्द्रं मन्दरम्। उन्निनेथ उन्नीतवानसि। भगवतः कूर्मतनोः पर्वतोन्नयने सामर्थ्यं दर्शयन् स्वरूपमाह—वज्रातिस्थिरतरकर्परेण विस्तारात् परिगतलक्षयोजनेन इति। वज्रातिस्थिरतरकर्परेण वज्रादशनेरप्यतिस्थिरमतिकठिनं कर्परं पृष्ठभागो यस्य तेन। अनेन पृष्ठेनोढस्य पर्वतस्य मूलशिलानां सङ्घर्षणेऽपि पीडाभावो ध्वन्यते।

विस्ताराद्विस्तृते.। परिगतलक्षयोजनेन परिगतान्युपगतानि लक्षं योजनानि यस्य तेन। योजनलक्षविस्तृतेनेत्यर्थः॥

भगवतोन्नीते गिरीन्द्रे सुरासुरा निर्मेथुरित्याह—

उन्मग्ने झटिति तदा धराधरेन्द्रे
निर्मेथुर्दृढमिह सम्मदेन सर्वे।
आविश्य द्वितयगणेऽपि सर्पराजे
वैवश्यं परिशमयन्नवीवृधस्तान् ॥ ८ ॥

उन्मग्न इति॥ तदा धराधरेन्द्रे झटिति उन्मग्ने सर्वे सम्मदेन इह दृढं निर्मेथु.। तदा भगवता गिरीन्द्रे पृष्ठेनोढे। धराधरेन्द्रे पर्वतेन्द्रे। झटिति शीघ्रम्। उन्मग्ने समुद्रादुत्थिते सति। सर्वे सुरासुरगणा.। सम्मदेन प्रमोदेन। प्रमुदिता. सन्त इत्यर्थ.। इह समुन्द्रे। निर्मेथु मथनं चक्रु.। अथ भगवांस्तेषा निरन्तरमथनजनितं वैवश्यं शमितवानित्याह—त्वं द्वितयगणे सर्पराजे अपि आविश्य वैवश्यं परिशमयन् तान् अवीवृध. इति। द्वितयगणे सुरासुरगणे। सर्पराजे वासुकौ। अपिस्समुच्चये। आविश्य सुरासुरगणे तदन्यतमरूपेण वासुकौ सूक्ष्मरूपेण च प्रविश्येत्यर्थ। वैवश्यं विवशताम्। परिशमयन् परित. शमयन्। तान् सुरासुरगणान् वासुकिं च। अवीवृध· वर्धितवानसि। बल वीर्यसम्पन्नान् कृतवानित्यर्थ॥

अथ भ्रमणजवेनोत्पतन्तं गिरीन्द्रं भगवान् यथास्थानं प्रतिष्ठापितवानित्याह—

उद्दामभ्रमणजवोन्नमद्गिरीन्द्र-
न्यस्तैकस्थिरतरहस्तपङ्कजं त्वाम्।
अभ्रान्ते विधिगिरिशादयः प्रमोदा-
दुद्भ्रान्ता नुनुवुरुपात्तपुष्पवर्षाः ॥ ९ ॥

उद्दामभ्रमणेति॥ विधिगिरिशादय. अभ्रान्ते उपात्तपुष्पवर्षा. त्वां नुनुवु। विधिगिरिशादय. विधिशङ्करादय.। अभ्रान्ते मेघमार्गे। उपात्तपुष्प

वर्षाः । उपात्तं स्वीकृतम् । कृतमिति यावत् । पुष्पवर्षं यैस्ते । नुनुवुः तुष्टुवुः । अत्र हेतुमाह—प्रमोदादुद्भ्रान्ताः इति । प्रमोदात् सन्तोषातिशयात् । उद्भ्रान्ताः विवशाः । प्रमोदकारणं दर्शयन् भगवन्तं विशिनष्टि—उद्दामभ्रमणजवोन्नमद्गिरीन्द्रन्यस्तैकस्थिरतरहस्तपङ्कजमिति । उद्दाम्ना सातिशयेन भ्रमणजवेन भ्रमणवेगेनोन्नमत्युत्पतति गिरीन्द्रे पर्वतोत्तमे न्यस्तमर्पितमेकं स्थिरतरमतीव दृढं हस्तपङ्कजं करसरोरुहं येन तम् । पर्वतस्याधिकतरोन्मज्जननिवारणार्थमिति भावः ॥

भगवान् हरिर्देवानां भुजङ्गमुखमारुतजनितं सन्तापं शमितवानित्याह—

दैत्यौघे भुजगमुखानिलेन तप्ते
तेनैव त्रिदशगणेऽपि किञ्चिदार्ते ।
कारुण्यात्तव किल देव वारिवाहाः
प्रावर्षन्नमरगणान् न दैत्यसङ्घान् ॥ १० ॥

दैत्यौघ इति ॥ हे देव दैत्यौघे भुजगमुखानिलेन तप्ते त्रिदशगणे अपि तेन एव किञ्चिदार्ते तव कारुण्यात् वारिवाहाः अमरगणान् प्रावर्षन्, दैत्यसङ्घान् न । देव प्रकाशमान । दैत्यौघे असुरसञ्चये । भुजगमुखानिलेन भुजगस्य वासुकेर्मुखानिलेन मुखमारुतेन । तप्ते सन्तप्ते । तेन भुजगमुखानिलेन । त्रिदशगणे सुरसञ्चये । अपिस्समुच्चये । किञ्चित् गृहीतपुच्छतया नात्यर्थमित्यर्थः । आर्ते पीडिते । कारुण्यात् कृपया । वारिवाहा मेघाः । अमरगणान् देवसञ्चयान् । प्रावर्षन् प्रकर्षेणाभ्यवर्षन् । तेषां सन्तापशान्त्यर्थमिति भावः । दैत्यसङ्घान् असुरौघान् । न प्रावर्षन् । तेषामीश्वरविमुखत्वादिति भावः ॥

अथ स्वयं भगवान् जलनिधिं ममन्थेत्याह—

उद्भ्राम्यद्बहुतिमिनक्रचक्रवाले
तत्राब्धौ चिरमथितेऽपि निर्विकारे ।
एकस्त्वं करयुगकृष्टसर्पराजः
संराजन् पवनपुरेश पाहि रोगात् ॥ ११ ॥

उद्भ्राम्यदिति ॥ हे पवनपुरेश एक करयुगकृष्टसर्पराज सराजन् त्व रोगात् पाहि। पवनपुरेश गुरुवायुपुरनाथ। एक अद्वितीय सन्। करयुगकृष्टसर्पराज करयुगेन करयोर्बाह्वोर्युगेन युगलेन कृष्ट आकृष्ट सर्पराज नागराजो येन स। सराजन् सुतरा राजमान। रोगात् बाह्यादाभ्यन्तराच्च आमयौघात्। पाहि मामनन्यशरण त्रायस्वेत्यर्थ। भगवत स्वय कर्षणे हेतु दर्शयति—उद्भ्राम्यद्बहुतिमिनक्रचक्रवाले तत्र अब्धौ चिरमथिते अपि निर्विकारे इति। उद्भ्राम्यन्ति उत्पतन्ति बहूनामसख्याना तिमीना मत्स्याना नक्राणा ग्राहाणा च चक्रवालानि समूहा यस्मिंस्तस्मिन् उद्भ्राम्यद्बहुतिमिनक्रचक्रवाले। तत्र तस्मिन्। अब्धौ समुद्रे। चिरमथिते चिराय मथिते। अपिर्विरोधे। निर्विकारे विकाररहिते सति। विकारोऽत्र मथनलभ्यानामाविर्भावस्तद्रहिते सतीत्यर्थ॥

अमृतमथने देवासुराणामशक्तौ भगवत्कृतमथनवर्णन
सप्तविंशदशक समाप्तम् ॥

## अष्टाविंशदशकम् ॥

अथ भगवति वासुदेवे स्वय मथन कुर्वति प्रथममम्बुधे कालकूटाख्य विषमुद्गलितमभूदित्याह—

गरल तरलानल पुरस्ताज्जलधेरुद्विजगाल कालकूटम्।
अमरस्तुतिवादमोदनिघ्नो गिरिशस्तन्निपपौ भवत्प्रियार्थम् ॥ १ ॥

गरलमिति ॥ पुरस्तात् जलधे कालकूट विषम् उद्विजगाल। पुरस्तात् सुरभ्यादीनामाविर्भावात् पूर्वमेव। जलधे भगवता मथ्यमानात् क्षीराम्बुधे। कालकूट कालकूटाख्यम्। गरल विषम्। उद्विजगाल उद्गलितमभूत्। कालकूटस्यातिभीषणत्वमाह—तरलानलमिति। तरल उज्ज्वलन्नलोऽग्निर्यस्मिंस्तत्।

गिरिशस्तत् पीतवानित्याह—गिरिशः तत् भवत्प्रियार्थं निपपौ इति। गिरिशः भगवान् भवानीपतिः। तत् गरलम्। भवत्प्रियार्थं भवतः प्रीत्यै। निपपौ पीतवान्। अत्र हेतुमाह—अमरस्तुतिवादमोदनिघ्नः इति। अमराणां देवानां यः स्तुतिवादः स्तोत्रालापस्तेन यो मोदः प्रमोदस्तेन निघ्नोऽधीनः। अर्थाद्देवानाम्॥

इदानीं सुरभ्यादीनां प्रादुर्भावमाह—

**विमथत्सु सुरासुरेषु जाता सुरभिस्तामृषिषु न्यधास्त्रिधामन्।**
**हयरत्नमभूदथेभरत्नं द्युतरुश्चाप्सरसः सुरेषु तानि ॥ २ ॥**

**विमथत्स्विति ॥** सुरासुरेषु विमथत्सु सुरभिः जाता। सुरासुरेषु सुरेष्वसुरेषु च। विमथत्सु विशेषेण मथनं कुर्वाणेषु। सुरभिः कामधेनुः। जाता समुद्रादुद्गता। हे त्रिधामन् त्वं ताम् ऋषिषु न्यधाः। त्रिधामन् विष्णो। तां सुरभिम्। ऋषिषु मुनिगणेषु। न्यधाः अर्पितवानसि। अथ हयरत्नमभूत् इभरत्नं द्युतरुः अप्सरसः च। अथ अनन्तरम्। हयरत्नमश्वश्रेष्ठः उच्चैःश्रवाः। रत्नशब्दोऽत्र स्वजातिश्रेष्ठवाची। एवमुत्तरत्रापि। अभूत् जातम्। इभरत्नं गजश्रेष्ठ ऐरावतः। द्युतरुः स्वर्द्रुमः। अप्सरसः अप्सरःस्त्रियः। अभूदिति इभरत्नं द्युतरुरित्यत्रापि योजनीयम्। अप्सरस इत्यत्र बहुवचनान्ततया विपरिणम्यापि योजनीयम्। अथेति सर्वत्र सम्बध्यते। तानि सुरेषु। तानि हयरत्नादीनि। सुरेषु देवेषु। न्यधा इत्यत्रानुवर्तते॥

अथ भगवत्प्रियाया लोकमातुः प्रादुर्भावमाह—

**जगदीश भवत्परा तदानीं कमनीया कमला बभूव देवी।**
**अमलामवलोक्य यां विलोलः सकलोऽपि स्पृहयाम्बभूव लोकः ॥ ३ ॥**

**जगदीशेति ॥** हे *जगदीश तदानीं भवत्परा देवी कमला बभूव।* जगदीश जगतां लोकानामीश रक्षक। तदानीं तस्मिन्नवसरे। भवत्परा भवान् परः प्रधानभूतो यस्याः सा। भगवत्यनुरक्तेत्यर्थः। कमला श्रीः। बभूव समुद्रादाविरभूत्। कमलादेव्याः सकलसीमन्तिनीजनेभ्योऽप्यतिशयमाह—

सकलः अपि लोकः यां विलोक्य विलोलः स्पृहयाम्बभूव इति। सकलः सर्वः। लोको जनः। यां कमलाम्। विलोक्य दृष्ट्वा। विलोलस्तरलमतिः। स्पृहयाम्बभूव सम्पृहोऽभूत्। अत्र हेतु.—कमनीया इति, अमलामिति च। कमनीया अतीव रम्या। कमलेत्यस्य विशेषणमेतत्। अमलां निर्मलाम्। सर्वावयवसौष्ठवयुक्तामित्यर्थः। अस्य तु यामित्यनेन सम्बन्धः॥

इन्द्रः कमलायै पीठमदादित्याह—

त्वयि दत्तहृदे तदैव देव्यै त्रिदशेन्द्रो मणिपीठिकां व्यतारीत्।
सकलोपहृताभिषेचनीयैर्ऋषयस्तां श्रुतिगीर्भिरभ्यषिञ्चन् ॥ ४ ॥

त्वयीति॥ त्रिदशेन्द्र तदा एव देव्यै मणिपीठिकां व्यतारीत्। त्रिदशेन्द्रः देवेन्द्रः। तदा तस्मिन्नवसरे। एवकारेण कालविलम्बाभावो दर्शित.। देव्यै कमलायै। मणिपीठिकां रत्नमयं सिंहासनम्। व्यतारीत् दत्तवान्। पीठप्रदाने हेतुमाह—त्वयि दत्तहृदे इति। त्वयि श्रीवैकुण्ठे। दत्तहृदे दत्तमर्पितं हृन्मनो यया तस्यै। देवीं भगवत्यनुरक्तहृदयामवबुध्येत्यर्थः। अथ देव्या अभिषेकमाह—ऋषय. तां सकलोपहृताभिषेचनीयैः श्रुतिगीर्भि. अभ्यषिञ्चन्निति। ऋषयः तापसाः। तां कमलाम्। सकलोपहृताभिषेचनीयैः सकलैः सरिद्भूम्यादिभि. उपहृतैराहृतैः आभिषेचनीयैः अभिषेकसाधनैरौषधकुम्भपवित्रादिभि.। श्रुतिगीर्भि. मन्त्रै.। अभ्यषिञ्चन् अभिषेकं विदधु॥

देव्या अलङ्करणमाह—

अभिषेकजलानुपातिमुग्धत्वदपाङ्गैरवभूषिताङ्गवल्लीम्।
मणिकुण्डलपीतचेलहारप्रमुखैस्ताममरादयोऽन्वभूषन् ॥ ५ ॥

अभिषेकजलेति॥ अमरादयः अभिषेकजलानुपातिमुग्धत्वदपाङ्गैः अवभूषिताङ्गवल्लीं तां मणिकुण्डलपीतचेलहारप्रमुखैः अन्वभूषन्। अमरादय. देवादयः। अभिषेकजलानुपातिमुग्धत्वदपाङ्गैः अभिषेकजलस्य अभिषेकसलिलस्य अनु समन

न्तरमेव पतितुं शीलमेषामित्यभिषेकजलानुपातीनि तैः मुग्धैस्सुन्दरैः तव अपाङ्गैः कटाक्षवीक्षणैः। एभिरेव अवभूषिताङ्गवल्लीं अवभूषिता अलङ्कृता अङ्गवल्ली गात्रलता यस्यास्ताम्। मणिकुण्डलपीतचेलहारप्रमुखैः मणिकुण्डले मणिखचिते कुण्डले पीतचेलं पीताम्बरं हारा मुक्तादामानि तत्प्रभृतिभिः। अन्वभूषन् पश्चादलञ्चक्रुः॥

अथ कमलाया भगवद्वरणोपक्रममाह—

**वरणस्रजमात्तभृङ्गनादं दधती सा कुचकुम्भमन्दयाना।**
**पदशिञ्जितमञ्जुनूपुरा त्वां कलितव्रीलविलासमाससाद ॥ ६ ॥**

**वरणस्रजमिति॥** सा त्वां कलितव्रीलविलासम् आससाद। सा कमला देवी। त्वां श्रीनारायणम्। कलितव्रीलविलासं कलिता धृता व्रीला लज्जा विलासाश्च यस्मिन् कर्मणि तद्यथा भवति तथा। आससाद प्राप। भगवन्तं वरयितुमागच्छन्त्या देव्या स्वरूपमाह—आत्तभृङ्गनादा वरणस्रजं दधती कुचकुम्भमन्दयाना पदशिञ्जितमञ्जुनूपुरा इति। आत्तभृङ्गनादाम् आत्तः स्वीकृतो भृङ्गनादः भ्रमरध्वनिर्यया ताम्। स्वसौरभाकृष्टकूजद्द्विरेफसङ्कुलामित्यर्थः। दधती वहन्ती। कुचकुम्भमन्दयाना कुचकुम्भाभ्यां कुचकलशाभ्याम्। तद्द्वारेणेति यावत्। मन्दं वेगविवर्जितं यानं गमनं यस्याः सा। पदशिञ्जितमञ्जुनूपुरा पदयोः चरणकमलयोः शिञ्जिते कूजती मञ्जुनी मनोज्ञे नूपुरे मञ्जीरौ यस्याः सा॥

इदानीं भगवति देव्या वरणमालार्पणमाह—

**गिरिशद्रुहिणादिसर्वदेवान् गुणभाजोऽप्यविमुक्तदोषलेशान्।**
**अयमृश्य सदैव सर्वरम्ये निहिता त्वय्यनयाऽपि दिव्यमाला ॥ ७ ॥**

**गिरिशेति॥** अनया त्वयि अपि दिव्यमाला निहिता। अनया देव्या कमलया। त्वय्यपि त्वय्येव। दिव्यमाला दिव्या दिव्यकुसुमरचिता माला वरणस्रक्। निहिता अर्पिता। भगवति मालार्पणे हेतुमाह—सदा एव सर्वरम्ये इति। सदा सर्वदा। सर्वरम्ये सर्वैः समस्तैर्गुणैः रम्ये रमणीये। नैव च यदा कदाचिदपि भगवति रमणीय

ताया हानिरित्येवकारेण दर्शितम्। अवधारणार्थकेनापिशब्देन व्यवच्छेद्यानाह—गिरिशद्रुहिणादिसर्वदेवान् गुणभाज अपि अविमुक्तदोषलेशान् अवमृश्य इति। गिरिशद्रुहिणादिसर्वदेवान् गिरिशद्रुहिणादीन् महेश्वरपद्मासनप्रभृतीन् सर्वान् सकलान् देवान्। गुणान् भक्तवात्सल्यादीन् भजन्तीति गुणभाज। अनेन वरण योग्यता दर्शिता। अपिर्विरोधे। अविमुक्तदोषलेशान् अविमुक्ता अपरित्यक्ता दोषाणा लेशा लवा यैस्तान्। कामक्रोधादिषड्दोषयुक्तानित्यर्थ। अवमृश्य विचार्य। एतच्च तत्परित्यागे हेतु ॥

भगवान् लक्ष्मीदेवीं परिगृहीतवानित्याह—

उरसा तरसा ममानिथैना भुवनाना जननीमनन्यभावाम्।<br>त्वदुरोविलसत्तदीक्षणश्रीपरिवृष्टया परिपुष्टमास विश्वम् ॥ ८ ॥

उरसेति ॥ त्वम् एना भुवनाना जननीं तरसा उरसा ममानिथ। एना पूर्वोक्ताम्। भुवनाना लोकानाम्। जननीं मातर लक्ष्मीभगवतीम्। तरसा वरणमालार्पणानुपदमेव। उरसा वक्षसा। ममानिथ मानितवान्। भगवान् निज वक्षसि तस्या निवासमकरोदित्यर्थ। अत्र हेतु —अनन्यभावामिति। नान्यस्मिन् भावोऽनुरागो यस्यास्ताम्। लक्ष्मीदेव्या माहात्म्यमाह—विश्व त्वदुरोविलस त्तदीक्षणश्रीपरिवृष्टया परिपुष्टमास इति। विश्व भुवनम्। त्वदुरोविलसत्तदीक्षणश्री परिवृष्टया त्वदुरसि तवोरसि वक्षसि विलसन्त्या राजमानायास्तस्या श्रीदेव्या ईक्षणश्रिय कटाक्षशोभाया परिवृष्टया परितो वृष्टया वर्षेण। पातेनेत्यर्थ। परिपुष्ट सर्वसम्पत्समृद्धिमत्। आस भाव ॥

अथ वारुणी देव्युदभूदित्याह—

अतिमोहनविभ्रमा तदानीं मदयन्ती खलु वारुणी निरागात्।<br>तमसः पदवीमदास्त्वमेनामतिसम्माननया महासुरेभ्य. ॥ ९ ॥

अतिमोहनविभ्रमेति ॥ तदानीं वारुणी निरागात् खलु। तदानीं तस्मिन्नवसरे। वारुणी वारुणीदेवी। निरागान्निर्गताऽभूत्। खल्विति प्रसिद्धौ

वारुणीदेव्याः स्वरूपमाह—अतिमोहनविभ्रमा मदयन्ती इति। अतिमोहन विभ्रमा अतीव मोहना मोहजनका विभ्रमा विलासा यस्याः सा। मदयन्ती मद कारिणी। भगवांस्तामसुरेभ्यो दत्तवानित्याह—त्वम् एनामतिसम्माननया महा सुरेभ्यः अदाः इति। एनां वारुणीम्। अतिसम्माननया। अतीव सम्मानयन्नि त्यर्थः। महासुरेभ्यः महद्भ्योऽसुरेभ्यः। अदाः दत्तवानसि। नन्वेवंविधविभ्रम शालिनीं वारुणी कुतो न भगवान् स्वभक्तेभ्यो देवेभ्यो दत्तवानिति चेत्तत्राह— तमसः पदवीमिति। तमसः अज्ञानस्य पदवीं हेतुभूताम् ॥

अथ भगवतो धन्वन्तर्यवतारममृताविर्भावश्चाह—

**तरुणाम्बुदसुन्दरस्तदा त्वं ननु धन्वन्तरिरुत्थितोऽम्बुराशेः।**
**अमृतं कलशे वहन् कराभ्यामखिलार्तिं हर मारुतालयेश ॥ १० ॥**

तरुणाम्बुदसुन्दर इति॥ तदा त्वं ननु धन्वन्तरिः अम्बुराशेः उत्थितः। तदा तस्मिन्नवसरे। नन्वित्यवधारणे। त्वमेवेत्यर्थः। धन्वन्तरिः धन्वन्तरिस्वरूपः। उत्थितः उद्गतः। धन्वन्तरेः स्वरूपमाह—तरुणाम्बुदसुन्दरः कराभ्यां कलशे अमृतं वहन्निति। तरुणाम्बुदसुन्दरः तरुणाम्बुदवन्नूतनजल धरवत् सुन्दरो रम्यः। अनेन भगवतो धन्वन्तरेः सकलसन्तापनिवर्तकत्वं ध्वन्यते। कराभ्यां बाहुभ्याम्। कलशे कुम्भे। अमृतं पीयूषम्। वहन् दधानः। अथ प्रार्थयते—हे मारुतालयेश अखिलार्तिं हर इति। मारुतालयेश श्रीगुरुवायुपुरनाथ धन्वन्तरिस्वरूप। अखिलार्तिं ममानन्यशरणस्याखिलां सम स्तामार्तिं बाह्यामाभ्यन्तरां च पीडाम्। हर विनाशय॥

इत्यमृतमथनवर्णनम्

अष्टाविंशदशकम्॥

**श्यामामिति** ॥ त्वं तदानीं तनुं प्राप्तः असि। तदानीं तस्मिन्नव सरे। तनुं शरीरम्। कामिनीरूपमित्यर्थाल्लभ्यते। प्राप्तः अङ्गीकृतवान्। कामिनीतनोः स्वरूपमाह—रुचा अपि वयसा अपि श्यामां तुङ्गकुचमण्डलभङ्गुरामिति। *रुचा कान्त्या। श्यामां श्यामलाम्। यौवनमध्यस्थाञ्च।* कान्त्या श्यामलाम्, वयसा यौवनमध्यस्थाञ्चेत्यर्थः। तुङ्गकुचमण्डलभङ्गुरां तुङ्गेनात्युन्नतेन कुचमण्डलेन स्तनमण्डलेन भङ्गुरामीषन्नम्राम्। एतच्च तनुमध्यमत्वादीनामप्युपलक्षणम्। अनेन भगवतः कामिनीरूपस्य जगन्मोहनत्वमुक्तम्। कामिनीरूपं भगवन्तं दृष्टवतामसुराणां चेष्टितमाह—सर्वे पीयूषकुम्भकलहं परिमुच्य प्रतिययुः इति। सर्वे। असुरा इति शेषः। पीयूषकुम्भकलहं पीयूषकुम्भम् अमृतकुम्भमधिकृत्य क्रियमाणं कलहम्। परिमुच्य परितस्त्यक्त्वा। प्रतिययुः त्वत्समीपं प्राप्ताः। अत्र हेतुं दर्शयति—त्वदुरोजकुम्भे तृष्णाकुलाः इति। त्वदुरोजकुम्भे तव कामिनीरूपस्य उरोजे उरसिजाते कुम्भे कलशे। कुम्भसदृशे पयोधर इत्यर्थः। तृष्णाकुलाः तृष्णया अभिलाषातिशयेन आकुलाः परवशाः। भगवदुरोजकुम्भस्य पीयूषकुम्भापेक्षया माधुर्यातिशयादिति भावः॥

कामिनीरूपो भगवान् हरिरुक्तिभङ्ग्या दैत्यानतीवात्मनि विस्रब्धानकरोदित्याह—

> का त्वं मृगाक्षि विभजस्व सुधामिमामि-
> त्यारूढरागविवशानभियाचतोऽमून्।
> विश्वस्यते मयि कथं कुलटाऽस्मि दैत्या
> इत्यालपन्नपि सुविश्वसितानतानीः ॥ ३ ॥

**का त्वमिति** ॥ त्वम् अमून् इति आलपन् अपि सुविश्वसितान् *अतानीः। त्वं कामिनीरूपः। अमून् असुरान्। इति अनेन प्रकारेण।* आलपन् कथयन्। अपिर्विरोधे। सुविश्वसितान् तदानीन्तनसप्रेमनिरीक्षणमन्दहासादिभिः सुतरां सञ्जातविश्वासान्। अतानीः कृतवानसि। आलापप्रकारमाह—हे दैत्याः कथं मयि विश्वस्यते इति। दैत्याः असुराः। कथं

केन प्रकारेण। विश्वस्यते। युष्माभिरिति शेष । ननु का क्षतिस्त्वयि विश्वासे कृत इत्याशङ्कायामाह—अहं कुलटा अस्मि इति। कुलटा पुंश्चली। प्रायेण स्त्रीणा सर्वासामपि प्रेम्ण क्षणभङ्गुरत्वेन तासु विश्वासस्यायुक्ततया सुतरां पुंश्चलीषु विश्वासोऽनुपपन्न इति भाव । भगवत एवमालापे हेतु माह—इति अभियाचत इति। इति अनेन प्रकारेण। अभियाचत आभि क्ष्ण्येन याचमानान्। याचनप्रकारमाह—हे मृगाक्षि त्व का, इमा सुधा विभजस्व इति। मृगाक्षि कुरङ्गनयने। का कस्यासि। सुधाममृत विभजस्व विभज्यास्मभ्य देहि। एव याचने हेतुमाह—आरूढरागविवशानिति। आरू ढेन परा कोटिमुपगतेन रागेण अनुरागेण विवशान् अवशचेतस ॥

भगवान् हरिर्देवेभ्योऽमृत प्रादादित्याह—

मोदात् सुधाकलशमेषु ददस्व सा त्व
दुश्चेष्टित मम सहध्वमिति ब्रुवाणा।
पङ्क्तिप्रभेदविनिवेशितदेवदैत्या
लीलाविलासगतिभि. समदा· सुधा ताम् ॥ ४ ॥

**मोदादिति** ॥ सा त्वम् एषु मोदात् सुधाकलश ददस्व इति ब्रुवाणा पङ्क्तिप्रभेदविनिवेशितदेवदैत्या लीलाविलासगतिभि ता सुधा समदा। सा कपटकामिनीरूपा। एषु असुरेषु। मोदात् प्रमोदात्। सुधा कलशम् अमृतकुम्भम्। ददस्व दत्तवत्सु सत्सु। इति अनेन प्रकारेण। ब्रुवाणा कथयन्ती। पङ्क्तिप्रभेदविनिवेशितदेवदैत्या पङ्क्ते प्रभेदेन देवाना मेका पङ्क्तिरपरा असुराणामिति द्विधा विभज्य विनिवेशिता विशेषेण निवे शिता देवा दैत्या असुराश्च यया सा। लीलाविलासगतिभि दैत्यान् वञ्च यितु रचितया तद्विषयया लीलया विलासैर्विलासचेष्टितै गतिभि असुराणा समीपे सञ्चरणैश्च उपलक्षिता सती। ता जरामरणहारिणीम्। सुधाममृतम्। समदा सम्यग्युक्तरूप यथा भवति तथा अदा दत्तवानसि। असुरेभ्योऽ मृतदानस्य सर्वेभ्य पयोदानवदयुक्ततया अर्थाद्देवेभ्यो दत्तवानिति लभ्यते।

इतीत्यनेन दर्शितमुक्तिप्रकारमाह—यूयं मम दुश्चेष्टितं सहध्वमिति। दुश्चेष्टितं यत् क्रियमाणं साध्वसाधु वेत्यर्थः। सहध्वं क्षन्तुमर्हथ। इयमुक्तिः प्रथमं देवेभ्यः अमृतपरिवेषणेऽपि स्वस्मिन्नसुराणां माभूदविश्वास इति मत्वेत्यवगन्तव्यम् ॥

भगवान् वञ्चनायोद्यतस्य स्वर्भानोः शीर्षं चक्रेणाच्छिनदित्याह—

अस्मास्वियं प्रणयिनीत्यसुरेषु तेषु
जोषं स्थितेष्वथ समाप्य सुधां सुरेषु।
त्वं भक्तलोकवशगो निजरूपमेत्य
स्वर्भानुमर्धपरिपीतसुधं व्यलावीः　　॥ ५ ॥

**अस्मास्विति ॥** त्वम् अथ सुधां सुरेषु समाप्य भक्तलोकवशगः निजरूपम् एत्य स्वर्भानुं व्यलावीः। त्वं कामिनीरूपः। अथ अनन्तरम्। सुधाम् अमृतम्। सुरेषु देवेषु। समाप्य अवसाय्य। भक्तलोकवशगः भक्तलोकानां भक्तजनानाम्। देवानामिति यावत्। वशगः वशंगतः। निज रूपम् आत्मनो रूपम्। एत्य प्राप्य। स्वर्भानुं स्वर्भानुसंज्ञितमसुरम्। व्यलावीः चक्रेण शिरोऽच्छिनः। शिरश्छेदने हेतुमाह—अर्धपरिपीतसुधमिति। अर्धं यथा भवति तथा परिपीता सुधा अमृतं येन तम्। देवलिङ्गं धृत्वा देवानां पङ्क्तिं प्रविश्येति भावः। ननु कथमसुराः कामिनीविग्रहे भगवति स्वान् विहाय देवेभ्यः सुधापरिवेषणं कुर्वाणे न क्षुब्धा बभूवुरित्याशङ्कायामाह—तेषु असुरेषु इति जोषं स्थितेष्विति। तेषु भगवतः कृत्रिमविलासवञ्चितेषु। इति इति मत्वा। जोषं तूष्णीम्। स्थितेषु अवस्थितेषु सत्सु। मननप्रकारमाह—इयमस्मासु प्रणयिनी इति। इयम् एवंविधलावण्यातिशयशालिनी। प्रणयिनी सानुरागा। अहो भाग्यमस्माकमिति मत्वेत्यर्थः ॥

अथ देवैः सह असुरा अयुद्ध्यन्तेत्याह—

त्वत्तः सुधाहरणयोग्यफलं परेषु
दत्वा गते त्वयि सुरैः खलु ते व्यगृह्णन्।

घोरेऽथ मूर्छति रणे बलिदैत्यमाया-
व्यामोहिते सुरगणे त्वमिहाविरासीः ॥ ६ ॥

त्वत्त इति ॥ ते खलु त्वयि परेषु त्वत्. सुधाहरणयोग्यफलं दत्वा गते सुरैः व्यगृह्णन्। ते असुरा.। खल्विति त्वर्थे। परेषु असुरेषु। त्वत्तः भगवतः। सुधाहरणयोग्यफलं सुधाहरणस्य पीयूषापहरणस्य योग्यमुचितम्। फलं परिश्रमवैयर्थ्यरूपम्। दत्वा प्रदाय। गते तिरोहिते सति। सुरैः देवैः। व्यगृह्णन् कलहं चक्रुः तदा भगवान् हरिर्भक्तानां परित्राणाय प्रादुरासीदित्याह—इह त्वमाविरासी. इति। इह सुरगणे। आविरासीः प्रादुरासीः। अत्र हेतुमाह—अथ घोरे रणे मूर्छति सुरगणे बलिदैत्यमायाव्यामोहिते इति। अथ अनन्तरम्। घोरे भयानके। रणे युद्धे। मूर्छति परां कोटिमुपगत वति सति। सुरगणे देवसञ्चये। बलिदैत्यमायाव्यामोहिते बलिदैत्यस्य बलि नाम्नो दैत्यस्यासुरस्य मायया व्यामोहिते विशेषेणासमन्तान्मोहिते सति। तानात्माश्रयान् परित्रातुमिति भाव.॥

इदानीमसुराणां वधमाह—

त्वं कालनेमिमथ मालिमुखान् जघन्थ
शक्रो जघान बलिजम्भवलान् सपाकान्।
शुष्कार्द्रदुष्करवधे नमुचौ च लूने
फेनेन नारदगिरा न्यरुणो रणं तम् ॥ ७ ॥

त्वमिति ॥ अथ त्वं कालनेमिं मालिमुखान् जघन्थ। कालनेमिं तन्नामानम्। मालिमुखान् मालिप्रभृतीन्। जघन्थ हतवानसि। शक्र सपाकान् बलिजम्भवलान् जघान। सपाकान् पाकेन तन्नाम्ना असुरेण सहितान्। बलिजम्भवलान् बलिनामानं जम्भाभिधानं वलाख्यं चासुरम्। जघान हतवान्। त्वं नमुचौ च फेनेन लूने नारदगिरा तं रणं न्यरुणः। त्वम् अन्तर्यामी भगवान्। नमुचौ तन्नाम्न्यसुरे। लूने कृत्तशीर्षे सति। इन्द्रेण

इत्यर्थाल्लभ्यते। नारदगिरा भगवत्प्रेरितेन ब्रह्मणा प्रेषितस्य श्रीनारदस्य गिरा वाचा। तं प्रस्तुतम्। रणं युद्धम्। न्यरुगः निरुद्धवानसि। ननु कुतो न शस्त्रेण हतो नमुचिरिति चेत्तत्राह—शुष्कार्द्रदुष्करवधे इति। शुष्केणार्द्रेण च दुष्करः कर्तुमशक्यो वधो यस्य तस्मिन्। फेनस्यानुभयात्मकत्वादिति भावः॥

अथ भगवान् भवानीपतिर्भगवतो वैकुण्ठस्य कामिनीरूपं दिदृक्षुराजगामेत्याह—

योषावपुर्दनुजमोहनमाहितं ते
श्रुत्वा विलोकनकुतूहलवान् महेशः।
भूतैस्समं गिरिजया च गतः पदं ते
स्तुत्वाऽब्रवीदभिमतं त्वमथो तिरोधाः ॥ ८ ॥

**योषावपुरिति**॥ महेशः भूतैः गिरिजया च समं ते पदं गतः स्तुत्वा अभिमतमब्रवीत्। महेश. भगवान् भवानीपतिः। भूतैः प्रमथैः। गिरिजया भवान्या। चकारः समुच्चये। समं सह। ते तव। पदं स्थानम्। गत' प्राप्तः। स्तुत्वा स्तुतिभिस्त्वां प्रसाद्य। अभिमतमभिलषितम्। आगमनप्रयोजनमित्यर्थ.। अब्रवीत् कथयामास। गिरीशस्य भगवत्पदप्राप्तिहेतुमाह—आहितं ते योषावपुः श्रुत्वा विलोकनकुतूहलवान् इति। आहितं धृतम्। योषावपुः कामिनीरूपम्। श्रुत्वा आकर्ण्य। विलोकनकुतूहलवान् विलोकने तस्य दर्शने कुतूहलवान् सकौतुक.। विलोकनकुतूहले कारणमाह—दनुजमोहनमिति। दनुजाना दानवानां मोहनं मोहजनकम्। अथो त्वं तिरोधाः। अथो अनन्तरम्। तिरोधा. तिरोहितोऽभूः। महेश्वराभिलषितपूरणायेति भावः॥

भगवाननङ्गरिपुरपि भगवतो हरेः कामिनीरूपं दृष्ट्वा विमोहमापेत्याह—

आरामसीमनि च कन्दुकघातलीला-
लोलायमाननयनां कमनीं मनोज्ञाम्।

त्वामेष वीक्ष्य विगलद्वसनां मनोभू-
वेगादनङ्गरिपुरङ्ग समालिलिङ्ग ॥ ९ ॥

आरामसीमनीति ॥ अङ्ग अनङ्गरिपु एष कमनी त्वामारामसीमनि वीक्ष्य मनोभूवेगात् समालिलिङ्ग । अङ्गेति सम्बोधने। भगवन्निति शेष । अनङ्गस्य कामस्य रिपुरन्तक । कामान्तकोऽपीत्यर्थ । एष गिरीश । कमनीं कामिनीरूपधरम्। आरामसीमनि उद्यानैकदेशे वीक्ष्य दृष्ट्वा। मनोभूवेगात् कामवेगात् । समालिलिङ्ग आलिङ्गितवान् । भगवन्मायामोहित सन्निति भाव । एतद्वक्ष्यति—'भवन्माया नैव त्रिभुवनपते मोहयति कम्' इति। भगवत कामिनीरूपस्यातीव कामोद्दीपकत्व दर्शयन् स्वरूपमाह—कन्दुकघातलीलालोलायमाननयना मनोज्ञा विगलद्वसना च इति । कन्दुकघातलीलालोलायमाननयनां कन्दुकघातलीलया कन्दुकघातरूपया लीलया विहारेण लोलायमाने अतीव चञ्चले नयने नेत्राम्बुजे यस्यास्ताम् । मनोज्ञा रूपलावण्यनवयौवनादिभिरतीव हृदयहारिणीम् । विगलद्वसना विगलत् मारुतापहृतं वसनं दुकूलं यस्यास्ताम् । दृष्टिविभ्रमणरूपलावण्यादिभिर्विवस्त्रतया च अतीव कामोद्दीपनकारिणीमित्यर्थ । दृष्टिविभ्रमादिष्वेकैकमपि मन्मथोन्माद कारणं भवति किं पुनस्तेषु सङ्घातेनैकत्रावस्थितेष्विति भाव ॥

भगवन्मायामोहितस्य गिरीशस्य परमार्थबोधोदयप्रकारमाह —

भूयोऽपि विद्रुतवतीमुपधाव्य देवो
वीर्यप्रमोक्षविकसत्परमार्थबोधः ।
त्वन्मानितस्तव महत्त्वमुवाच देव्यै
तत्तादृशस्त्वमव वातनिकेतनाथ ॥ १० ॥

भूयोपीति ॥ देव विद्रुतवतीं भूय अपि उपधाव्य वीर्यप्रमोक्षविकसत्परमार्थबोध त्वन्मानित देव्यै तव महत्त्वमुवाच । देव गिरीश । विद्रुतवतीं भगवतो गिरीशस्य भुजान्तरादात्मानं मोचयित्वा धावमानाम् । त्वामिति

शेष । उपधाव्य अनुधावन कृत्वा। वीर्यप्रमोक्षविकसत्परमार्थबोध वीर्यस्य रेतस प्रमोक्षेण स्खलनेन विकसन् प्रकाशमान परमार्थबोध परमार्थस्य वस्तुतत्त्वस्य बोधो ज्ञान यस्य स । त्वन्मानित त्वया मानित । निखिल प्रपञ्चसम्मोहननिपुणया मायया मोहितोऽपि तस्या विमुक्त इति बहुमत इत्यर्थ । देव्यै भवान्यै । तव श्रीवैकुण्ठस्य । महत्त्व माहात्म्यम् । उवाच कथया मास । अथ प्रार्थयते—हे वातनिकेतनाथ तत्तादृश त्वम् अव इति । वातनिकेतनाथ गुरुवायुपुरनाथ । तत्तादृश तत्तादृङ्माहात्म्यातिशययुक्त इत्यर्थ । अव मामनन्यशरण त्रायस्व ॥

इति देवानाममृतोपलब्धिप्रकारवर्णन मोहिनीदर्शनेन शिवस्य धैर्यच्युतिवर्णन च

एकोनत्रिंशद्दशकम् ॥

---

## त्रिंशदशकम् ।

अथ भगवतो वामनावतार वर्णयिष्यन्नादौ तत्पूर्वरङ्गभूत महाबलिचरित्र प्रस्तौति—

शक्रेण सयति हतोऽपि बलिर्महात्मा
शुक्रेण जीविततनुः क्रतुवर्धितोष्मा।
विक्रान्तिमान् भयनिलीनसुरा त्रिलोकीं
चक्रे वशे स तव चक्रमुखादभीतः ॥ १ ॥

शक्रेणेति ॥ बलि त्रिलोकीं भयनिलीनसुरा चक्रे। त्रयाणा लोकाना समाहारस्त्रिलोकी ताम्। भयनिलीनसुरा भयेन निलीनास्तिरोहिता सुरा यस्या ताम्। चक्रे कृतवान्। ननु कथमिन्द्रेण हतो बलिरेवमकरोदित्याशङ्काया माह—सयति शक्रेण हत अपि शुक्रेण जीविततनु इति। सयति युद्धे।

शक्रेण इन्द्रेण। हतः विहिंसितः। अपिर्विरोधे। शुक्रेण असुराचार्येण उशनसा। जीविततनुः जीविता अमृतसञ्जीविन्या सजीवा कृता तनुश्शरीरं यस्य सः। ननु किमर्थं सुरद्रोहकारी बलिश्शुक्रेण प्रत्युज्जीवितः, नचासुर पक्षपातादिति वक्तुं शक्यम्, जम्भादीनामप्रत्युज्जीवनादित्याशङ्कायामाह— महात्मा इति। महामनस्कतयेत्यर्थः। ननु कथमिन्द्रात् पराजितो बलिर्देवान् पीडयितुं समर्थोऽभूदिति चेत्तत्राह—विक्रान्तिमानिति। विक्रान्तिः पराक्रमोऽ स्यास्तीति विक्रान्तिमान्। ननु कथमयं विक्रान्तिमानभूदिति चेत्तत्राह— क्रतुवर्धितोष्मा इति। क्रतुना विश्वजिदाख्येन वर्धितः ऊष्मा तेजो यस्य सः। ननु कथं भगवतः स्वभक्तजनभयनिवर्तके सत्यपि सुदर्शने देवान् बलिरपीडयदित्याशङ्कायामाह—सः तव चक्रमुखात् अभीतः इति। सः बलिः। चक्रमुखात् चक्रस्य सुदर्शनस्य मुखात्। धाराया इत्यर्थः। अभीतः अत्रस्तः। प्रह्लादवंश्यत्वादिति भावः॥

अदितिरार्तान् स्वसुतानवलोक्य काश्यपोपदेशात् भगवन्तं विष्णुमारराधे त्याह—

पुत्रार्तिदर्शनवशाददितिर्विषण्णा
तं काश्यपं निजपतिं शरणं प्रपन्ना।
त्वत्पूजनं तदुदितं हि पयोव्रताख्यं
सा द्वादशाहमचरत्त्वयि भक्तिपूर्णा ॥ २ ॥

पुत्रार्तीति॥ अदितिः निजपतिं तं काश्यपं शरणं प्रपन्ना। अदितिर्देवजननी। निजपतिम् आत्मनो भर्तारम्। तं प्रसिद्धम्। काश्यपं काश्यपनामानं प्रजापतिम्। शरणं रक्षितारम्। प्रपन्ना प्राप्ता। अत्र हेतुमाह—पुत्रार्तिदर्शनवशात् विषण्णा इति। पुत्रार्तिदर्शनवशात् पुत्रस्येन्द्रस्यार्तिः पीडा तस्या दर्शनवशादवलोकनेन। विषण्णा दुःखिता सती। सा त्वयि भक्तिपूर्णा तदुदितं पयोव्रताख्यं त्वत्पूजनं द्वादशाहम् अचरत्। सा अदितिः। भक्तिपूर्णा भक्त्या प्रेमलक्षणया पूर्णा परिपूर्णहृदया। तदुदितं तेन काश्यपेन

उदितमुपदिष्टम्। पयोव्रताख्यं पयोव्रतमित्याख्या नाम यस्य तत्। हीति प्रसिद्धौ। पयोव्रतमिति प्रसिद्धमित्यर्थः। अस्य स्वरूपं श्रीमद्भागवते द्रष्टव्यम्। त्वत्पूजनं तव पूजनमाराधनम्। द्वादशाहमित्यत्यन्तसंयोगे द्वितीया। अचरत् अन्वतिष्ठत्॥

अदितेः पुरस्तात् भगवान् हरिः प्रादुरासीदित्याह—

तस्यावधौ त्वयि निलीनमतेरमुष्याः
श्यामश्चतुर्भुजवपुः स्वयमाविरासीः।
नम्रां च तामिह भवत्तनयो भवेयं
गोप्यं मदीक्षणमिति प्रलपन्नयासीः ॥ ३ ॥

**तस्येति** ॥ त्वं स्वयं तस्य अवधौ अमुष्याः आविरासीः। स्वयमात्मनैव। तस्य पयोव्रतस्य। अवधौ अवसाने। अमुष्याः अदितेः। पुरस्तादिति शेषः। आविरासीः प्रादुरासीः। भगवत आविर्भावे हेतुं दर्शयति—त्वयि निलीनमतेः इति। निलीनमतेः निलीना नितरां लीना मतिर्बुद्धिर्यस्यास्तस्याः। भगवत्येकाग्रचित्ततायाः प्रभावादित्यर्थः। अदितेः पुरस्तात् प्रादुर्भूतस्य भगवतः स्वरूपमाह—श्यामः चतुर्भुजवपुः इति। श्यामः सजलजलधरश्यामलः। चतुर्भुजवपुः चत्वारो भुजा बाहवो यस्य तच्चतुर्भुजम्, तादृशं वपुः शरीरं यस्य सः। एतच्च शङ्खचक्रादीनामप्युपलक्षणम्। भगवतो वरप्रदानमाह—त्वं नम्रां ताम् इति प्रलपन् अयासीः च इति। नम्रां पादयोः पतिताम्। तामदितिम्। इति अनेन प्रकारेण। प्रलपन् कथयन्। अयासीः तिरोहितोऽभूः। चकारः समुच्चये। कथनप्रकारमाह—अहम् इह भवत्तनयः भवेयम्, मदीक्षणं गोप्यमिति। इह अत्र। भवत्तनयः भवत्यास्तनयः पुत्रः। मदीक्षणं मद्दर्शनम्। गोप्यं गूहनीयम्॥

अथ भगवतो वामनावतारमाह—

त्वं काश्यपे तपसि सन्निदधत्तदानीं
प्राप्तोऽसि गर्भमदितेः प्रणुतो विधात्रा।

प्रासूत च प्रकटवैष्णवदिव्यरूपं
सा द्वादशीश्रवणपुण्यदिने भवन्तम् ॥ ४ ॥

त्वमिति ॥ त्वं तदानीम् अदिते गर्भं प्राप्त असि। तदानीम् अदितये वरं प्रदाय तिरोधानादनन्तरम्। अदिते देवमातुः। गर्भम् उदरम्। प्राप्त प्रविष्टः। अदितेर्गर्भप्रवेशप्रकारमाह—काश्यपे तपसि सन्निदधत् इति। काश्यपे कश्यपसम्बन्धिनि। तपसि तपःसम्भृते वीर्ये। सन्निदधत् स्वांशेन प्रविष्टः। कश्यपेनादितौ वीर्यस्य निषेकादिति भावः। भगवन्तमदितेर्गर्भस्थं विज्ञाय ब्रह्मा तुष्टावेत्याह— विधात्रा प्रणुत इति। विधात्रा ब्रह्मणा। प्रणुत स्तुत। असीति त्वमिति चात्रापि सम्बध्यते। भगवतो वामनमूर्तेर्जन्मकालमाह—सा द्वादशीश्रवणपुण्यदिने भवन्तं प्रासूत च इति। सा अदितिः। द्वादशीश्रवणपुण्यदिने द्वादशीश्रवणाख्या श्रवणद्वादश्या पुण्ये शुभे दिने अहनि। प्रासूत प्रसूतवती। चकारः समुच्चये। अदित्या प्रसूतस्य भगवतः स्वरूपमाह—प्रकटवैष्णवदिव्यरूपमिति। प्रकटं स्फुटप्रकाशमानं वैष्णवं विष्णुसम्बन्धि दिव्यमलौकिकं रूपं शङ्खचक्रगदापद्मकिरीटमकरकुण्डलश्रीवत्सकौस्तुभवनमालापीताम्बरकाञ्चीनूपुरादिकं यस्य तम्॥

इदानीं भगवानात्मनो रूपमुपसंहृत्य बटुरूपं धृतवानित्याह—

पुण्याश्रमं तमभिवर्षति पुष्पवर्षै-
र्हर्षाकुले सुरगणे कृततूर्यघोषे।
बध्वाऽञ्जलिं जय जयेति नुतः पितृभ्यां
त्वं तत्क्षणे पटुतमं बटुरूपमाधाः ॥ ५ ॥

पुण्याश्रममिति॥ त्वं तत्क्षणे सुरगणे कृततूर्यघोषे तं पुण्याश्रमं पुष्पवर्षैः अभिवर्षति पितृभ्यामञ्जलिं बध्वा इति नुतः पटुतमं बटुरूपमाधाः। तत्क्षणे जातमात्र एव। सुरगणे देवसञ्चये। कृततूर्यघोषे कृतस्तूर्यघोषो वाद्यघोषो येन तस्मिन्। पुण्याश्रमं पुण्यमाश्रमम्। पुष्पवर्षैः पुष्पवृष्टिभिः। अभिवर्षति अभितो वर्षति। पितृभ्याम् मात्रा पित्रा च। इति अनेन

प्रकारेण । नुतः स्तुतः । पटुतममतिशयेन निपुणम् । वटुरूपं वटोः रूपमाकारम् । आधाः प्राप्तोऽसीत्यर्थः । स्तुतिप्रकारमाह—जय जय इति । देवानां पुष्पवर्षविधानादिहेतुमाह—हर्षाकुले इति । हर्षेण भगवदवतारजनित सन्तोषातिशयेन आकुले परवशे ॥

अथ भगवानवतारकार्यसम्पादनाय बलिगृहं प्रति प्रतस्थ इत्याह—

तावत् प्रजापतिमुखैरुपनीय मौञ्जी-
दण्डाजिनाक्षवलयादिभिरर्च्यमानः ।
देदीप्यमानवपुरीश कृताग्निकार्य-
स्त्वं प्रास्थिथा बलिगृहं प्रकृताश्वमेधम् ॥ ६ ॥

**तावदिति ॥** हे ईश त्वं प्रकृताश्वमेधं बलिगृहं प्रास्थिथाः । ईश जगद्रक्षक । त्वं श्रीवामनरूपः । प्रकृताश्वमेधं प्रारब्धाश्वमेधयागम् । बलि गृहं बलेर्महाबलेर्गृहं भवनम् । अश्वमेधशालामित्यर्थः । प्रास्थिथाः प्रस्थि तवानसि । भगवतो याचकावस्थानुरूपमाश्रमपरिग्रहमाह—तावत् प्रजापति मुखैः उपनीय मौञ्जीदण्डाजिनाक्षवलयादिभिः अर्च्यमानः इति । तावत् वटुरूप प्राप्त्यनन्तरम् । प्रजापतिमुखैः काश्यपप्रभृतिभिः । अथवा ब्रह्मादिभिः । उप नीय उपनयनकृत्यं परिसमाप्य । मौञ्जीदण्डाजिनाक्षवलयादिभिः । मौञ्जी मेखला दण्डः आषाढः अजिनं कृष्णाजिनम् अक्षवलयः अक्षमाला एव मादिभिः । अर्च्यमानः आराध्यमानः । अत्र सविता तस्य गायत्रीमुपदिदेश, बृहस्पतिर्यज्ञोपवीतं, पिता मौञ्जीं, भूमिः कृष्णाजिनं, सोमो दण्डम्, अदितिः कौपीनं, द्यौः छत्रं, ब्रह्मा कमण्डलुं, सप्तर्षयो दर्भान्, सरस्वत्यक्षमालां, यक्षराजो भिक्षापात्रं, भवानी भिक्षां च ददावित्यनुसन्धेयम् । भगवतो वामनस्य बलिप्रभृ तीनां बहुमानकारणं तेजोविशेषमाह—देदीप्यमानवपु इति । देदीप्य मानमति शयेन दीप्यमानं वपुः शरीरं यस्य सः । भगवत उपनीतस्यावश्य कर्तव्यानुष्ठान माह—कृताग्निकार्य इति । कृतमनुष्ठितम् अग्निकार्यं समिदाधानकर्म येन सः ॥

भगवतो वामनस्य गमनप्रकारमाह—

गात्रेण भाविमहिमोचितगौरवं प्रा
ग्व्यावृण्वतेव धरणीं चलयन्नयासीः ।
छत्रं परोष्मतिरणार्थमिवादधानो
दण्डं च दानवजनेष्विव संनिधातुम् ॥ ७ ॥

गात्रेणेति ॥ त्वं गात्रेण धरणीं चलयन् छत्रं दण्डं च आदधान अयासीः । त्वं श्रीवामनरूप । गात्रेण शरीरेण । धरणीं भूमिम् । चलयन् कम्पयन् । आदधान वहन् । अयासीः गतवानसि । गात्रमुत्प्रेक्षते—प्राग् भाविमहिमोचितगौरवं व्यावृण्वता इव इति । प्राक् पूर्वम् । भाविन भविष्यत महिम्न त्रिविक्रमरूपस्य उचितमनुरूपं गौरवं गुरुत्वम् । व्यावृण्वता प्रकाशयता । इवेति सर्वत्र सम्भावनायाम् । धरणीचालनमत्रोत्प्रेक्षानिमित्तमित्यनुसन्धेयम् । छत्रधारणप्रयोजनमुत्प्रेक्षते—परोष्मतिरणार्थमिव इति । परेषां दैत्यानामूष्मण पराक्रमरूपस्य तिरणार्थं वारणार्थम् । दण्डधारणोपयोगमुत्प्रेक्षते—दानवजनेषु सन्निधातुमिव इति । दानवजनेषु असुरेषु । सन्निधातुं संयोजयितुम् । अत्र दण्डशब्दोपात्तयोरातपत्रदण्डनयोरभेदाध्यवसायः ॥

बलिगृहं प्राप्तस्य भगवतो वामनस्य तेजसा शुक्रादयो मुनयः पराभूता बभूवुरित्याह—

तां नर्मदोत्तरतटे हयमेधशाला
मासेदुषि त्वयि रुचा तव रुद्धनेत्रैः ।
भास्वान् किमेष दहनो नु सनत्कुमारो
योगी नु कोऽयमिति शुक्रमुखैश्शशङ्के ॥ ८ ॥

तामिति ॥ त्वयि नर्मदोत्तरतटे तां हयमेधशालामासेदुषि शुक्रमुखैः इति शशङ्के । त्वयि श्रीवामने । नर्मदोत्तरतटे नर्मदाया नर्मदानद्या उत्तरतटे उदीच्ये तीरे । तां प्रसिद्धाम् । समस्तसामग्रीपरिपूर्णामित्यर्थः । हयमेधशालामश्वमेधशालाम् । आसेदुषि प्राप्तवति । शुक्रमुखैः शुक्रमुनिप्रभृतिभिः । इति अनेन प्रकारेण । शशङ्के शङ्कितम् । शङ्काप्रकारमाह—एष भास्वान्

किं दहनः नु योगी सनत्कुमारः नु, अयं कः इति। एषः आगच्छन्। भास्वान् सूर्यः। किमिति वितर्के। दहनः भगवानग्निः। न्विति वितर्के। एवमुत्तरत्रापि। योगी महामुनिः। सनत्कुमारः तदाख्यया प्रसिद्धः। अयं पुरस्तात् दृश्यमानः। कः कीदृशः। शङ्काहेतुमाह—तव रुचा रुद्धनेत्रैः इति। रुचा तेजसा। रुद्धनेत्रैः प्रतिहतचक्षुर्भिः। अत्रायमर्थः—शुक्रादयो मुनयः प्रथमं कमपि तेजसो राशिं दृष्ट्वा किमयमागच्छति, सूर्यः इति शशङ्किरे। पश्चात् पुरुषाकृतिं पश्यन्तः किमयं हव्यवाहनो मूर्तिमानिति च। अनन्तरं मौञ्जी दण्डाजिनाक्षवलयादिकमालोक्य अपि नामाऽयं भगवान् सनत्कुमारः इति च तर्कयामासुरिति ॥

अथ बलिर्भगवते वामनायातिथ्यमकरोदित्याह—

आनीतमाशु भृगुभिर्महसाऽभिभूतै-
स्त्वां रम्यरूपमसुरः पुलकावृताङ्गः।
भक्त्या समेत्य सुकृती परिणिज्य पादौ
तत्तोयमन्वधृत मूर्धनि तीर्थतीर्थम् ॥ ९ ॥

आनीतमिति ॥ असुरः भृगुभिः आशु आनीतं त्वां समेत्य भक्त्या पुलकावृताङ्गः पादौ परिणिज्य तत् तोयं अनु मूर्धनि अधृत। असुरः बलिः। भृगुभिः भार्गवैः। आशु झटिति। आनीतम् प्रत्युद्गम्य सादर मित इतो भगवानित्युक्त्वा बलिनिकटं नीतमित्यर्थः। त्वां श्रीवामनम्। समेत्य उपगम्य। पुलकावृताङ्गः पुलकैः रोमाञ्चैरावृतं व्याप्तमङ्गं शरीरं यस्य सः। एतच्च विशेषणं भक्त्यनुभावप्रदर्शनपरम्। अनेन चैवंविधातिथिलाभ जनितहर्षातिशयोऽपि ध्वन्यते। पादौ भगवतश्चरणपङ्कजे। परिणिज्य प्रक्षाल्य। तत् तोयं भगवतः पादतीर्थम्। अनु पश्चात्। मूर्धनि शिरसि। अधृत धृतवानभूत्। भगवत्पादतीर्थस्य मूर्ध्नि वहने हेतुः—तीर्थतीर्थमिति। तीर्थानां शोधकानामपि तीर्थं शोधकम्। सर्वशोधकमित्यर्थः। भगवतस्तेजो विशेषेण तथाऽवगमादिति भावः। भृगुभिः सादरमानयने हेतुमाह—महसा

अभिभूतैः इति। महसः श्रीवामनस्य तेजसा। अभिभूतैः भ्रष्टतेजस्कैः। असुरस्य भक्तिहेतुमाह—रम्यरूपमिति। रम्यं रमणीयं रूपमाकृतिर्यस्य तम्। रूपदर्शनेनासामान्योऽयं वटुरित्यवगमादिति भावः। बलेर्भगवत्पादप्रक्षालनार्हतामाह—सुकृती इति। सुकृती कृतपुण्यसञ्चयः॥

ननु कथमसुरोऽयमकृतपुण्यैर्दुरापं भगवत्पादोदकस्य मूर्ध्नि वहनं लेभे इत्याशङ्कायामाह—

प्रह्लादवंशजतया क्रतुभिर्द्विजेषु
विश्वासतो नु तदिदं दितिजोपि लेभे।
यत्ते पदाम्बु गिरिशस्य शिरोभिलाल्यं
स त्वं विभो गुरुपुरालय पालयेथाः ॥ १० ॥

**प्रह्लादवंशजतयेति॥** अत्र बलिरित्यध्याहर्तव्यम्। दितिजः अपि बलिः प्रह्लादवंशजतया क्रतुभिः द्विजेषु विश्वासतः नु तत् इदं लेभे। दितिजः असुरः। अपिर्विरोधे। प्रह्लादवंशजतया भगवद्भक्तोत्तंसप्रह्लादान्वयोत्पन्नत्वात्। क्रतुभिः यज्ञैः। द्विजेषु ब्राह्मणेषु। विश्वासतः विश्वासात्। सत्सङ्गादिति यावत्। न्विति वितर्के। अस्य सर्वत्र सम्बन्धः। अथवा निश्चये। एभिस्त्रिभिः समुदितैर्हेतुभिरिति निश्चितमित्यर्थः। तत् अकृतसुकृतैर्दुरापम्। इदं भगवत्पादोदकस्य मूर्ध्नि वहनम्। लेभे लब्धवान्। तथाविधं तस्य माहात्म्यमित्याह—यत् ते पदाम्बु गिरिशस्य शिरोभिलाल्यम् इति। यत् यस्मात्। ते तव श्रीनारायणस्य। पदाम्बु पादतीर्थम्। गिरिशस्य भगवतो भवानीपतेः। शिरोभिलाल्यं सर्वदा मूर्ध्ना लालनीयम्। अयमाशयः—भगवान् भवानीपतिः सर्वदा भगवतीं गङ्गां मूर्ध्ना लालयति, सा च भगवतो हरेः पादोदकमेवेति। अथ प्रार्थयते—हे विभो गुरुपुरालय स त्वं पालयेथाः इति। विभो परिपूर्ण। गुरुपुरालय गुरुवायुपुरनाथ। सः भक्तानुग्रहार्थमङ्गीकृतवामनविग्रहः। पालयेथाः मामनन्यशरणं संरक्ष॥

इति वामनचरिते महाबलेरातिथ्यवर्णनं

त्रिंशद्दशकम्॥

## एकत्रिंशदशकम्

अथ बलिर्भगवते वामनायाभिलषितं प्रदातुं प्रतिजज्ञ इत्याह—

प्रीत्या दैत्यस्तव तनुमहःप्रेक्षणात् सर्वथाऽपि
त्वामाराध्यन्नजित रचयन्नञ्जलिं सञ्जगाद ।
मत्तः किं ते समभिलषितं विप्रसूनो वद त्वं
वित्तं भक्तं भवनमवनीं वाऽपि सर्वं प्रदास्ये ॥ १ ॥

प्रीत्येति ॥ हे अजित दैत्य तव तनुमहःप्रेक्षणात् सर्वथा अपि त्वामाराध्यन् अञ्जलिं रचयन् सञ्जगाद । अजित विष्णो । दैत्यः बलिः । तव श्रीवामनरूपस्य । तनुमहःप्रेक्षणात् तनोर्दिव्यमङ्गलविग्रहस्य महसस्तेजसश्च प्रेक्षणादवलोकनाद्धेतोः । प्रीत्या सन्तोषेण । सर्वथा सर्वप्रकारेण । स्वागतवचनादिनेत्यर्थः । अपिस्समुच्चये । त्वामाराध्यन् त्वदाराधनं कुर्वन् । अञ्जलिं प्रणामाञ्जलिम् । रचयन् विरचयन् । सञ्जगाद सम्यक् भक्तिविनयादिपुरस्सरं जगाद अकथयत् । कथनप्रकारमाह—हे विप्रसूनो ते मत्तः समभिलषितं किम्, त्वं वद इति । विप्रसूनो ब्राह्मणपुत्र । बटुलिङ्गदर्शनात् सूनुमहणम् । ते तव समभिलषितं अभीष्टं वस्तु । किं कीदृशम् । वद कथय । अथ अभिलषितं स्वयमुत्प्रेक्ष्याह—वित्तं भक्तं भवनम् अवनीं वा सर्वमपि प्रदास्ये इति । वित्तं धनम् । भक्तं मृष्टान्नम् । भवनं गृहम् । अवनीं भूमिम् । वा इति सर्वत्र सम्बध्यते । सर्वं वित्तादिसमस्तम् । वा इत्यत्रापि सम्बध्यते । अपिशब्दः समुच्चये । यदि सर्वमप्यभिलषितं तर्हि तत् समस्तमपीत्यर्थः । प्रदास्ये दास्यामि ॥

भगवतो याचनप्रकारमाह—

तामक्षीणां बलिगिरमुपाकर्ण्य कारुण्यपूर्णोऽ
प्यस्योत्सेकं शमयितुमना दैत्यवंशं प्रशंसन् ।

भूमिं पादत्रयपरिमितां प्रार्थयामासिथ त्वं
मर्वं देहीति तु निगदिते कस्य हास्यं न वा स्यात् ॥ २ ॥

तामिति ॥ त्वम् अक्षीणा ता बलिगिरम् उपाकर्ण्य कारुण्यपूर्णः अपि दैत्यवशं प्रशसन् पादत्रयपरिमिता भूमि प्रार्थयामासिथ। त्व श्रीवामन। क्षीणा न भवतीत्यक्षीणा ताम्। जगदीश्वरत्वस्यापयित्रीमित्यर्थः। बलिगिर बलेर्गिर वाचम्। उपाकर्ण्य श्रुत्वा। कारुण्यपूर्णः कारुण्येन दयया पूर्णः। बलेर्भक्त्यतिशयावगमादिति भाव। अपिर्विरोधे। दैत्यवशं दैत्यानामसुराणा वश कुलम्। प्रशसन् स्तुवन्। पादत्रयपरिमिता पादत्रयेण परिमिताम्। भूमिं पृथिवीम्। प्रार्थयामासिथ प्रार्थितवानसि। ननु भगवान् स्वभक्त बलिमधिगम्य तस्मिन् कारुण्यपूर्णश्चेत्तर्हि किमिति त्रैलोक्यमपहर्तुं भूमिं प्रार्थितवानित्याशङ्कायामाह—तस्य उत्सेकं शमयितुमना इति। तस्य बले। उत्सेक जगदीश्वरत्वाभिमाननिबन्धन गर्वम्। शमयितुमना शमयितु नाशयितु मभिलषन्। एश्वर्यभ्रंशेन तस्योत्सेकं नाशयितुमभिसन्धायेत्यर्थ। ननु यथेव तर्हि सर्वं प्रदास्ये इति तेन प्रतिज्ञातेऽपि कुत केवलं पादत्रयपरिमिता भूमिं प्रार्थितवानिति चेत्तत्राह—सर्वं देहि इति निगदिते तु कस्य वा हास्य न स्यादिति। सर्वं समस्तम्। देहि प्रयच्छ। इति अनेन प्रकारेण। निगदिते उक्ते। तुर्विशेषे। विशेषमाह—कस्य वा हास्य न स्यादिति। हास्य परिहासयोग्यम्। अयमर्थ —यदि भगवान् वामनो बले प्रतिज्ञानु रोधेन सर्वं देहीति कथयति, तर्हि हन्त वटोरस्य दुराशेति भगवद्वच सर्वेषा हास्य स्यात्, अत केवल पादत्रयपरिमिता भूमिं प्रार्थितवानिति॥

पादत्रयपरिमितां भूमिं प्रार्थयति भगवति वामने बलिर्भगवन्तमाचि क्षिप इत्याह—

विश्वेश मां त्रिपदमिह किं याचसे बालिशस्त्वं
सर्वां भूमिं वृणु किममुनेत्यालपत्त्वां स दृप्यन्।
यस्माद्दर्पात्त्रिपदपरिपूर्त्यक्षमः क्षेपवादान्
बन्धञ्चासावगमदतदर्होऽपि गाढोपशान्त्यै ॥ ३ ॥

विश्वेशमिति ॥ सः त्वाम् इति आलपत् । सः बलिः । त्वां श्रीवामनम् । इति अनेन प्रकारेण । आलपत् उक्तवान् । आलपप्रकारमाह— त्वं बालिशः सर्वां भूमिं वृणु, अमुना किमिति । बालिशः मूर्खः । ज्ञानरहित इत्यर्थः । असीत्यत्राध्याहर्तव्यम् । सर्वां निखिलाम् । वृणु प्रार्थय । अमुना पादत्रयमात्रपरिमितेन भूखण्डेन । किम् किं प्रयोजनमित्यर्थः । बालिशोऽसीत्युक्तौ हेतुं दर्शयन्नाह—त्वं किं मामिह त्रिपदं याचसे इति । किं किमिति । मामतिवदान्यं माम् । इह भूमौ त्रिपदं केवलं पादत्रयपरिमितं भूप्रदेशम् । याचसे प्रार्थयसे । नन्वधिकप्रार्थनायां प्रार्थितस्यार्पणे त्वमशक्त इत्याकाङ्क्षायामाह—विश्वेशमिति । विश्वानां लोकानामीशमधिपतिम् । यतस्त्वं विश्वेश्वरमतिवदान्यं मां केवलं पादत्रयपरिमितं भूखण्डं याचसे अतो बालिश इति निश्चिनोमीत्यर्थः । बलेरेवं भगवदाक्षेपे हेतुमाह—दृप्यन्निति । दृप्यन् सदर्पः । दृप्ताः खल्वात्मानं निरुपमं मन्यमानाः सर्वानप्याक्षिपन्तीति भावः । अस्य दर्पस्य फलमाह—असौ यस्मात् दर्पात् त्रिपदपरिपूर्त्यक्षमः क्षेपवादान् बन्धं च अतदर्हः अपि अगमदिति । असौ बलिः । त्रिपदपरिपूर्त्यक्षमः त्रिपदस्य पादत्रयपरिमितस्य भूखण्डस्य परिपूर्तौ परिपूर्णार्पणे अक्षमः अशक्तः सन् । क्षेपवादान् 'तार्तीयीकं दिश मम पदं किं न विश्वेश्वरोऽसि' इति वक्ष्यमाणप्रकारानाक्षेपान् । बन्धं पाशबन्धनं 'पाशैर्बन्धं पतगपतिना' इति वक्ष्यमाणप्रकारम् । चकारः समुच्चये । अतदर्हः तयोः क्षेपवादबन्धनयोरर्हो योग्यो न भवतीत्यतदर्हः । अपिर्विरोधे । विरोधं परिहरन्नाह—गाढोपशान्त्यै इति । गाढमुपशान्तिर्विषयविरक्तिस्तदर्थम् । सम्यग्विषयविरक्तिमापाद्य स्वस्मिन् मनः समाधानायेत्यर्थः । एवञ्चास्य बन्धनादिकमनुग्रहरूपेण परिणतमिति मन्तव्यम् ॥

अथ भगवदभिलषितार्पणायोद्यतं बलिमुशनाः प्रतिषिद्धवानित्याह—

पादत्रय्या यदि न मुदितो विष्टपैर्नापि तुष्ये-
दित्युक्तेऽस्मिन् वरद भवते दातुकामेऽथ तोयम् ।

दैत्याचार्यस्तव खलु परीक्षार्थिनः प्रेरणाद्
मा मा देय हरिरयमिति व्यक्तमेवाबभाषे ॥ ४ ॥

पादत्रय्येति ॥ दैत्याचार्य, तम् इति व्यक्तमेव आबभाषे। दैत्याचार्य उशना। त बलिम्। इति अनेन प्रकारेण। व्यक्तमेव स्फुटमेव। आबभाषे आख्यातवान्। आभाषणप्रकारमाह—मा मा देयमिति। सम्भ्रमान्मामेति द्विरुक्ति। सर्वस्वनाशशङ्कया च सम्भ्रम। अत्र हेतु—अय हरि इति। अय हरिर्द्विदुरूप धृत्वा त्वचत्त्रैलोक्यमाच्छिद्येन्द्राय दातुमुद्यत, तस्मात्तस्याभिलषितस्यार्पण युक्तमित्यर्थ। ननु कथ मुनेरुशनसो भगवत्प्रतिकूलाचरणमित्याशङ्कायामाह—तव प्रेरणात् खलु इति। तदन्तर्यामिरूपेण त्वया प्रेरित इत्यर्थ। खल्वित्यवधारणे। ननु किमर्थमेतत् प्रेरणमिति चेत्तत्राह—परीक्षार्थिन इति। बलेर्धर्मस्थैर्यं परीक्षितुमित्यर्थ। उशनस एवमाभाषणहेतुमाह—हे वरद अथ तस्मिन् भवते तोय दातुकामे इति। वरद भक्ताभीष्टवरप्रद। अनेन सम्बोधनेन 'दर्पोच्छित्त्यै विहितमखिल दैत्य सिद्धोऽसि' इत्यादिना वक्ष्यमाण वरप्रदान सूचितम्। अथ अनन्तरम्। अस्मिन् बलौ। भवते श्रीवामनरूपाय। तोय दानवारि। दातुकामे दातुमभिलषति सति। ननु 'सर्वां भुमि वृणु किममुना' इत्युपदिशन्नपि बलि कुत केवल पादत्रयपरिमिता भुव दातुकामोऽभूदिति चेत्तत्राह—इति उक्ते इति। इति अनेन प्रकारेण। उक्त कथिते श्रीवामनेनेति शेष। उक्तिप्रकारमाह—यदि पादत्रय्या न मुदित विष्टपै अपि न तुष्येत् इति। पादत्रय्या पादत्रयपरिमितया भुवा। मुदित सन्तुष्ट। तर्हीति शेष। विष्टपैर्भुवनै। न तुष्येत् न तुष्टो भविष्यति। उक्तश्चैतत् श्रीमद्भागवते—'असन्तुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वर। अकिञ्चनोऽपि सन्तुष्ट शेते सर्वाङ्गविज्वर ॥' इति। एवञ्चान्यस्याप्रार्थितत्वेनाप्रदानमिति द्रष्टव्यम् ॥

बलिरुशनस प्रतिषेधवचनमनङ्गीकुर्वन्नेव भगवते वामनाय प्रार्थितमर्पितवानित्याह—

याचत्येवं यदि स भगवान् पूर्णकामोऽस्मि सोऽहं
दास्याम्येव स्थिरमिति वदन् काव्यशप्तोऽपि दैत्यः।
विन्ध्यावल्या निजदयितया दत्तपाद्याय तुभ्यं
चित्रं चित्रं सकलमपि स प्रार्पयत्तोयपूर्वम् ॥ ५ ॥

याचतीति ॥ सः दैत्यः काव्यशप्तः अपि निजदयितया विन्ध्यावल्या दत्तपाद्याय तुभ्यं सकलमपि तोयपूर्वं प्रार्पयत् चित्रं चित्रम्। सः दैत्यः बलिः। काव्यशप्तः काव्येन उशनसा शप्तः भ्रष्टैश्वर्यो भवेति शप्तः। अपिर्विरोधे। शापमगणयित्वेति भावः। निजदयितया स्वप्रियतमया। विन्ध्यावल्या तदाख्यया। दत्तपाद्याय दत्तं वितीर्णं पाद्यं पादोदकं यस्मै तस्मै। तुभ्यं श्रीवामनरूपाय। सकलमपि गुरुवचनाद्विदिततत्त्वतया सकलमपि त्रैलोक्यमित्यर्थः। प्रार्पयत् प्रकर्षेण भक्तिप्रीत्यादिपुरस्सरमार्पयत् दत्तवान्। चित्रमाश्चर्यम्। द्विरुक्तिरतिशयं द्योतयति। बलेः स्वायत्तस्य विश्वाधिराज्यस्य तृणवत् परित्यागमनुसन्धाय कवेर्विस्मयः। काव्यशापे हेतुं दर्शयति—इति वदन् इति। इति अनेन प्रकारेण। वदन् कथयन्। कथनप्रकारमाह—यदि सः भगवान् एवं याचति स अहं पूर्णकामः अस्मि, दास्यामि एव स्थिरमिति। सः सकललोकनियन्ता सर्वाभीष्टसाधकश्च। भगवान् श्रीहरिः। एवम् अनेन प्रकारेण। याचति प्रार्थयते। सः तथाविधेन हरिणा प्रार्थितः। अत एव पूर्णकामः पूर्णाः सिद्धाः कामाः अभिलाषा यस्य सः। एवकारोऽयोगव्यवच्छेदार्थकः। स्थिरं निश्चितम् ॥

बलेर्धर्मस्थैर्यं दृष्ट्वा देवाः सर्षिगणा जातहर्षाः कुसुमानि ववृषुरित्याह—

निस्सन्देहं दितिकुलपतौ त्वय्यशेषार्पणं त-
द्व्यातन्वाने मुमुचुर्ऋषयः सामराः पुष्पवर्षम्।
दिव्यं रूपं तव च तदिदं पश्यतां विश्वभाजा-
मुच्चैरुच्चैरवृधदवधीकृत्य विश्वाण्डभाण्डम् ॥ ६ ॥

दैत्याचार्यस्तव खलु परीक्षार्थिनः प्रेरणात्
मा मा देयं हरिरयमिति व्यक्तमेवाबभाषे ॥ ४ ॥

पादत्रय्येति ॥ दैत्याचार्य.. तम् इति व्यक्तमेव आबभाषे। दैत्याचार्यः उशना। तं बलिम्। इति अनेन प्रकारेण। व्यक्तमेव स्फुटमेव। आबभाषे आख्यातवान्। आभाषणप्रकारमाह—मा मा देयमिति। सम्भ्रमान्मा मेति द्विरुक्ति। सर्वस्वनाशशङ्कया च सम्भ्रमः। अत्र हेतु —अयं हरिः इति। अयं हरिर्वटुरूपं धृत्वा त्वत्तस्त्रैलोक्यमाच्छिद्येन्द्राय दातुमुद्यत., तस्मा न्नास्याभिलषितस्यार्पणं युक्तमित्यर्थ। ननु कथं मुनेरुशनसो भगवत्प्रतिकूला चरणमित्याशङ्कायामाह—तव प्रेरणात् खलु इति। तदन्तर्यामिरूपेण त्वया प्रेरित इत्यर्थः। खल्वित्यवधारणे। ननु किमर्थमेतत् प्रेरणमिति चेत्तत्राह— परीक्षार्थिन. इति। बलेर्धर्मस्थैर्यं परीक्षितुमित्यर्थ.। उशनसः एवमाभाषण हेतुमाह—हे वरद अथ तस्मिन् भवते तोयं दातुकामे इति। वरद भक्ताभीष्टवरप्रद। अनेन सम्बोधनेन 'दर्पोच्छित्त्यै विहितमखिलं दैत्य सिद्धोऽसि' इत्यादिना वक्ष्यमाणं वरमदान सूचितम्। अथ अनन्तरम्। अस्मिन् बलौ। भवते श्रीवामनरूपाय। तोय दानवारि। दातुकामे दातुमभिलषति सति। ननु 'सर्वां भूमिं वृणु किममुना' इत्युपदिशन्नपि बलि. कुत· केवल पाद त्रयपरिमितां भुवं दातुकामोऽभूदिति चेत्तत्राह—इति उक्ते इति। इति अनेन प्रकारेण। उक्ते कथिते श्रीवामनेनेति शेष। उक्तिप्रकारमाह— यदि पादत्रय्या न मुदित विष्टपै अपि न तुष्येत् इति। पादत्रय्या पादत्रयपरिमितया भुवा। मुदित सन्तुष्ट। तर्हीति शेष। विष्टपैर्भुवनै। न तुष्येत् न तुष्टो भविष्यति। उक्तञ्चैतत् श्रीमद्भागवते— 'असन्तुष्टोऽसकृल्लोका नाप्नोत्यपि सुरेश्वर। अकिञ्चनोऽपि सन्तुष्ट शेते सर्वाङ्गविज्वर.॥' इति। एवञ्चान्यस्याप्रार्थितत्वेनाप्रदानमिति द्रष्टव्यम्॥

बलिरुशनस प्रतिषेधवचनमनङ्गीकुर्वन्नेव भगवते वामनाय प्रार्थितमर्पित वानित्याह—

याचत्येवं यदि स भगवान् पूर्णकामोऽस्मि सोऽहं
दास्याम्येव स्थिरमिति वदन् काव्यशप्तोऽपि दैत्यः।
विन्ध्यावल्या निजदयितया दत्तपाद्याय तुभ्यं
चित्रं चित्रं सकलमपि स प्रार्पयत्तोयपूर्वम् ॥ ५ ॥

**याचतीति** ॥ सः दैत्यः काव्यशप्तः अपि निजदयितया विन्ध्यावल्या दत्तपाद्याय तुभ्यं सकलमपि तोयपूर्वं प्रार्पयत् चित्रं चित्रम्। सः दैत्यः बलिः। काव्यशप्तः काव्येन उशनसा शप्तः भ्रष्टैश्वर्यो भवेति शप्तः। अपिर्विरोधे। शापमगणयित्वेति भावः। निजदयितया स्वप्रियतमया। विन्ध्यावल्या तदाख्यया। दत्तपाद्याय दत्तं वितीर्णं पाद्यं पादोदकं यस्मै तस्मै। तुभ्यं श्रीवामनरूपाय। सकलमपि गुरुवचनाद्विदिततत्त्वतया सकलमपि त्रैलोक्यमित्यर्थः। प्रार्पयत् प्रकर्षेण भक्तिप्रीत्यादिपुरस्सरमार्पयत् दत्तवान्। चित्रमाश्चर्यम्। द्विरुक्तिरतिशयं द्योतयति। बलेः स्वायत्तस्य विश्वाधिराज्यस्य तृणवत् परित्यागमनुसन्धाय कवेर्विस्मयः। काव्यशापे हेतुं दर्शयति—इति वदन् इति। इति अनेन प्रकारेण। वदन् कथयन्। कथनप्रकारमाह—यदि सः भगवान् एवं याचति स अहं पूर्णकामः अस्मि, दास्यामि एव स्थिरमिति। सः सकललोकनियन्ता सर्वाभीष्टसाधकश्च। भगवान् श्रीहरिः। एवम् अनेन प्रकारेण। याचति प्रार्थयते। सः तथाविधेन हरिणा प्रार्थितः। अत एव पूर्णकामः पूर्णाः सिद्धाः कामाः अभिलाषा यस्य सः। एवकारोऽयोगव्यवच्छेदार्थकः। स्थिरं निश्चितम् ॥

बलेर्धर्मस्थैर्यं दृष्ट्वा देवाः सर्षिगणा जातहर्षाः कुसुमानि ववृषुरित्याह—

निस्सन्देहं दितिकुलपतौ त्वय्यशेषार्पणं त-
द्व्यातन्वाने मुमुचुरृषयः सामराः पुष्पवर्षम्।
दिव्यं रूपं तव च तदिदं पश्यतां विश्वभाजा-
मुच्चैरुच्चैरवृधदवधीकृत्य विश्वाण्डभाण्डम् ॥ ६ ॥

निस्सन्देहमिति ॥ ऋषयः सामराः दितिकुलपतौ त्वयि तत् अशेषार्पणं व्यातन्वाने पुष्पवर्षं मुमुचुः। ऋषयः मुनयः। सामराः अमरैर्देवैस्सहिताः सन्तः। दितिकुलपतौ दैत्याधिपे बलौ। निस्सन्देहं निर्गतः सन्देहः संशयो यस्मात्तद्यथा भवति तथा। त्वयि श्रीवामने। तत् तथाविधम्। अशेषार्पणम् अशेषाणां समस्तानामर्पणं समर्पणम्। व्यातन्वाने कुर्वाणे सति। पुष्पवर्षं पुष्पाणां कुसुमानां वर्षं वृष्टिम्। मुमुचुः कृतवन्त इत्यर्थः। अथ भगवतो वामनरूपं ववृध इत्याह—तव तत् दिव्यं रूपं च विश्वभाजा पश्यताम् उच्चैः उच्चैः अवृधदिति। तव श्रीहरेः। तदिदं वामनम्। दिव्यमलौकिकम्। वर्धमानसामर्थ्यप्रदर्शनपरमिदं विशेषणमिति द्रष्टव्यम्। रूपं स्वरूपम्। चकारस्त्वर्थो विशेषे। तमाह—अवृधदिति। विश्वभाजा लोकवासिना सर्वेषाम्। पश्यताम् अवलोकयताम्। सर्वेष्वपि लोकवासिषु पश्यत्सु सत्स्वित्यर्थः। उच्चैरुच्चैः क्रमेणोन्नततया। अवृधत् अवर्धत। ननु कियत्पर्यन्तमवर्धतेत्याकाङ्क्षायामाह—विश्वाण्डभाण्डम् अवधीकृत्य इति। विश्वाण्डभाण्डं ब्रह्माण्डकटाहम्। अवधीकृत्य अवधिं वर्धनस्यावधि कृत्वा ॥

प्रवृद्धतनोर्भगवतः पादकमलं सत्यलोकमगादित्याह—

त्वत्पादाग्रं निजपदगतं पुण्डरीकोद्भवोऽसौ
कुण्डीतोयैरसिचदपुनाद्यज्जलं विश्वलोकान्।
हर्षोत्कर्षात् सुबहु ननृते खेचरैरुत्सवेऽस्मिन्
भेरीं निघ्नन् भुवनमचरज्जाम्बवान् भक्तिशाली ॥ ७ ॥

त्वत्पादाग्रमिति ॥ असौ पुण्डरीकोद्भवः निजपदगतं त्वत्पादाग्रं कुण्डीतोयैः असिचत्। पुण्डरीकोद्भवो ब्रह्मा। निजपदगतं सत्यलोकप्राप्तम्। त्वत्पादाग्रं तव श्रीवामनस्य पादाग्रम्। कुण्डीतोयैः कमण्डलूदकैः। असिचत् प्रक्षालितवान्। तादृशभगवत्पादोदकस्य माहात्म्यमाह—यज्जलं विश्वलोकान् अपुनादिति। यज्जलं यस्य भगवत्पादकमलप्रक्षालनस्य जलमुदकम्। विश्वलोकान् विश्वान् समस्तान् लोकान्। अपुनात् पवित्रयामास। तथाविधं भगवद्रूपं दृष्ट्वा देवा हर्षातिरेकविधुरा बभूवुरित्याह—खेचरैः अस्मिन् उत्सवे हर्षोत्कर्षात् सुबहु

ननृते इति। खेचरैः देवैः। अस्मिन्नुत्सवे हर्षजनके भगवद्व्यापारे। उत्सूते हर्षमित्युत्सवः। हर्षोत्कर्षात् सन्तोषातिशयात्। सुबहु अतिमात्रम्। ननृते नर्तनं कृतम्। तथाविधं भगवन्तं जाम्बवान् प्रदक्षिणीचकारेत्याह—जाम्बवान् भेरीं निघ्नन् भुवनमचरदिति। जाम्बवांस्तन्नामा ब्रह्मात्मजो वानरेन्द्रः। निघ्नन् वादयन्। भुवनं लोकम्। अचरत् सञ्चचार। तथाविधं भगवन्तं प्रदक्षिणीकृत्य भुवनं चचारेत्यर्थः। अत्र हेतुः—भक्तिशाली इति। भक्तिशाली भगवद्भक्तोत्तंसः॥

अथ बलेरनुचरा दानवा युद्धे देवेभ्यः पराजिता बभूवुरित्याह—

**तावद्दैत्यास्त्वनुमतिमृते भर्तुरारब्धयुद्धा**
**देवोपेतैर्भवदनुचरैः सङ्गता भङ्गमापन् ।**
**कालात्माऽयं वसति पुरतो यद्वशात् प्राग्जिताः स्मः**
**किं वो युद्धैरिति बलिगिरा तेऽथ पातालमापुः ॥ ८ ॥**

**तावदिति ॥** तावत् दैत्याः आरब्धयुद्धाः देवोपेतैः भवदनुचरैः सङ्गताः भङ्गमापन्। तावत् तस्मिन्नवसरे। दैत्याः बलेरनुचरा असुराः। आरब्धयुद्धाः आरब्धं युद्धं यैस्ते। देवोपेतैः देवान्वितैः। भङ्गं पराजयम्। आपन् प्रापुः। बलेरनुचरा दैत्या बलिं प्रतारितमभिवीक्ष्य प्रारब्धयुद्धाः सन्तो देवान्वितेभ्यो भगवदनुचरेभ्यः पराजिता बभूवुरित्यर्थः। ननु परमधार्मिको बलिर्भगवदनुचरैस्सह योद्धुमात्मनोऽनुचरान् कथमन्वमंस्तेत्याशङ्कायामाह—भर्तुः अनुमतिमृते इति। भर्तुः स्वामिनो बलेः। अनुमतिमनुज्ञाम्। ऋते विना। अथ ते पातालं विविशुरित्याह—अथ ते इति बलिगिरा पातालमापुः इति। अथ अनन्तरम्। ते दैत्याः। इति एवंप्रकारया। बलिगिरा बलेः गिरा वाचा। पातालं रसातलम्। आपुः प्रापुः। बलेरुक्तिप्रकारमाह—वः युद्धैः किमिति। किं किं प्रयोजनम्। न किञ्चिदपि प्रयोजनमित्यर्थः। अत्र हेतुमाह—यद्वशात् प्राक् जिताः स्मः, अयं कालात्मा पुरतः वसति इति। यद्वशात् कालवशात्। प्राक् पूर्वम्। जिताः विजयिनः। स्मः भवामः। कालात्मा

कालस्वरूपो भगवान्। पुरत पुरस्तात्। वसति अस्मत्प्रतिकूलो वर्तत इत्यर्थ। योऽयं कालस्वरूपो भगवान् पूर्वमस्माक विजयाय देवाना पराजयाय चाभवत्, स एवाधुना तद्विपरीतो वर्तत इति विरमतास्माद्युद्धादिति भाव॥

भगवान् वामनो हरि पदद्वयमात्रेण विश्व समस्तमप्याक्रम्य तृतीय पदस्यावकाशमलभमानो बलिमाचिक्षिप इत्याह—

पाशैर्बद्ध पतगपतिना दैत्यमुच्चैरवादी
स्तार्तीयीक दिश मम पद किं न विश्वेश्वरोऽसि।
पाद मूर्ध्नि प्रणय भगवन्नित्यकम्प वदन्त
प्रह्लादस्त स्वयमुपगतो मानयन्नस्तवीत्त्वाम्॥ ९॥

पाशैरिति॥ त्व पतगपतिना पाशै बद्ध दैत्यम् उच्चै अवादी। त्व श्रीवामनरूप। पतगपतिना गरुडेन। पाशै रज्जुभि। बद्ध सयतम्। दैत्य बलिम्। उच्चै उच्चैस्स्वरम्। अवादी उक्तवानसि। उक्तिप्रकारमाह— त्व मम तार्तीयीक पद दिश विश्वेश्वर असि किमिति। तार्तीयीक तृतीयम्। दिश देहि। विश्वेश्वर विश्वाना लोकानामीश्वरोऽधिप। अथ बलि भगवते स्वस्य मूर्धान प्रार्थयदित्याह—प्रह्लाद इति अकम्प वदन्त त स्वयमुपगत मानयन् त्वामस्तवीदिति। इति अनेन प्रकारेण। अकम्प निश्शङ्कम्। एतद्वोक्तिक्रियाविशेषणम्। वदन्त कथयन्तम्। त बलिम्। उपगत प्राप्त। मानयन् बहुमानयन्। त्वा श्रीवामनम्। अस्तवीत् तुष्टाव। बलेरुक्तिप्रकारमाह—हे भगवन् त्व पाद मूर्ध्नि प्रणय इति। भगवन्नैश्वर्यादिसम्पन्न। मूर्ध्नि मम शिरसि। प्रणय अर्पय। मम मूर्ध्नि पाद विन्यस्य कृपया मदीय सत्य रक्षेत्यर्थ॥

अथ बलावतीव परितुष्टो भगवास्तमन्वग्रहीदित्याह—

दर्पोच्छित्त्यै विहितमखिल दैत्य सिद्धोऽसि पुण्यै
र्लोकस्तेऽस्तु त्रिदिवविजयी वासवत्व च पश्चात्।

मत्सायुज्यं भज च पुनरित्यन्वगृह्णा बलिं तं
　　विप्रैः सन्तानितमखवरः पाहि वातालयेश ॥ १० ॥

दर्पोच्छित्त्यै इति ॥ त्वं तं बलिम् इति अन्वगृह्णाः । त्वं श्रीवामनः । इति अनेन प्रकारेण । अन्वगृह्णाः अनुगृहीतवानसि । अनुग्रहप्रकारमाह—हे दैत्य अखिलं दर्पोच्छित्त्यै विहितम् । त्वं पुण्यैः सिद्धः असि । ते त्रिदिवविजयी लोकः अस्तु । पश्चात् वासवत्वं च । पुनः मत्सायुज्यं च भज इति । दैत्य असुर । मयेत्यर्थाल्लभ्यते । अखिलं पाशबन्धनमाक्षेपः, अपवादः, त्रैलोक्यापहरणमित्येतत् समस्तम् । दर्पोच्छित्त्यै तव दर्पस्योच्छित्त्यै उन्मूलनाय । मम न कोपि समान इति चित्तवृत्तिर्दर्पः । विहितं कृतम् । अन्यथा तवाधःपतनं स्यादिति भावः । 'अशमिनां प्रशान्ति कृत्वैव प्रदिशसि सतः काममखिलम्' इति वक्ष्यति च । पुण्यैः सुकृतैः । सिद्धः सिद्धिमान् । अत एव ते तव । त्रिदिवविजयी स्वर्गातिशायी । समस्तभोग्यवस्तुसामग्रीसद्भावेन कदाचिदपि क्लेशासम्भवात्, सर्वदा मम गदापाणेस्सान्निध्याच्चेति भावः । लोकः सुतलाख्यः । अस्तु भवतु । पश्चादनन्तरम् । वासवत्वं देवेश्वरत्वम् । चकारः समुच्चये । एवमुत्तरत्रापि । अस्त्वित्यस्यात्रापि सम्बन्धः । पुनः अनन्तरम् । मत्सायुज्यं मम सायुज्यमैक्यरूपं मोक्षम् । भज प्राप्नुहि । अथ प्रार्थयते—हे वातालयेश विप्रैः सन्तानितमखवरः त्वं पाहि इति । वातालयेश गुरुवायुपुरनाथ । विप्रैः काव्यप्रभृतिभिः । सन्तानितः अच्छिद्रतां नीतो मखवरः श्रेष्ठो यागो येन सः सन्तानितमखवरः । पाहि मामनन्यशरणं त्रायस्वेत्यर्थः ॥

इति वामनचरितवर्णनम्

एकत्रिंशद्दशकम् ॥

अथ भगवतो मत्स्यावतारचरित्रं वर्णयितुं तद्बीजमाह—

पुरा हयग्रीवमहासुरेण षष्ठान्तरान्तोद्यदकाण्डकल्पे ।
निद्रोन्मुखब्रह्ममुखाद्धृतेषु वेदेष्वधित्सः किल मत्स्यरूपम् ॥ १ ॥

पुरेति ॥ पुरा हयग्रीवमहासुरेण षष्ठान्तरान्तोद्यदकाण्डकल्पे निद्रोन्मुख ब्रह्ममुखात् वेदेषु हृतेषु मत्स्यरूपम् अधित्सः किल। हयग्रीवमहासुरेण हयग्रीवाख्येन महताऽसुरेण । षष्ठान्तरान्तोद्यदकाण्डकल्पे षष्ठान्तरस्य चाक्षुष मन्वन्तरस्यान्ते अवसाने उद्यत्युद्भूते अत एवाकाण्डकल्पे नैमित्तिकप्रलये । निद्रोन्मुखब्रह्ममुखात् निद्राया स्वपनस्योन्मुखस्य अभिमुखस्य ब्रह्मणः विरिञ्चस्य मुखान्मुखकमलेभ्यः । वेदेषु ऋगादिषु । हृतेषु अपहृतेषु । त्वं श्रीवैकुण्ठ निलय । मत्स्यरूपं मत्स्याकृतिम् । अधित्सः विधातुमैच्छः । किलेति वार्तायाम् ॥

अथ भगवतो मत्स्यावतारमाह—

सत्यव्रतस्य द्रमिलाधिभर्तुर्नदीजले तर्पयतस्तदानीम् ।
कराञ्जलौ सञ्ज्वलिताकृतिस्त्वमदृश्यथाः कश्चन बालमीनः ॥ २ ॥

सत्यव्रतस्येति ॥ त्वं तदानीं नदीजले तर्पयतः द्रमिलाधिभर्तुः सत्यव्रतस्य कराञ्जलौ कश्चन बालमीनः अदृश्यथाः । त्वं श्रीवैकुण्ठ । तदानीं तस्मिन्नवसरे । नदीजले नद्या धृतमालाया जले। तर्पयतः तर्पणं कुर्वतः । द्रमिलाधिभर्तुः द्रमिलदेशाधिपस्य । सत्यव्रतस्य तन्नाम्नो राजर्षेः । कराञ्जलौ तर्पणार्थं गृहीते करसम्पुटगते जले । बालमीनः बालो मीनो मत्स्यः । अदृश्यथाः दृष्टोऽभूः । अर्थात् सत्यव्रतोऽत्र कर्ता । भगवतो मीनविग्रहस्य मीनसामान्याद्व्यतिरेकमाह—सञ्ज्वलिताकृतिः इति। सञ्ज्वलिता जाज्वल्यमाना आकृतिर्यस्य सः ॥

मुनिस्तं मीनं स्वगृहं निनायेत्याह—

**क्षिप्तं जले त्वां चकितं विलोक्य निन्येऽम्बुपात्रेण मुनिः स्वगेहम्।
स्वल्पैरहोभिः कलशीं च कूपं वापीं सरश्चानशिषे विभो त्वम्॥ ३॥**

**क्षिप्तमिति॥** मुनिः त्वाम् अम्बुपात्रेण स्वगेहं निन्ये। मुनिः राजर्षिः। त्वां मत्स्याकृतिं भगवन्तम्। अम्बुपात्रेण जलपात्रेण। स्वगेहं स्वगृहम्। निन्ये नीतवान्। अत्र हेतुमाह—जले क्षिप्तं चकितं विलोक्य इति। जले नदीजले। क्षिप्तं त्यक्तम्। चकितं भीतम्। विलोक्य दृष्ट्वा। परमकारुणिकतयेति भावः। अथ मत्स्यरूपो भगवान् क्रमेण ववृध इत्याह—हे विभो त्वं स्वल्पैः अहोभिः कलशीं कूपं च वापीं सरः च आनशिषे इति। विभो परिपूर्ण। अनेन सम्बोधनेन भगवतो मत्स्याकृतेस्तादृशवर्धनस्यौचित्यमुपदर्शितम्। त्वं मत्स्यमूर्तिः। स्वल्पैः कतिपयैः। अहोभिर्दिवसैः। कलशीं घटम्। कूपमुदपानम्। वापीं दीर्घिकाम्। सरः कासारम्। चकारौ समुच्चये। आनशिषे व्याप्तोऽभूः। अयमर्थः—प्रथमं मुनिर्मीनं कलशोदके आस्थापयत्, अनन्तरं तत्रावकाशमलभमानं दृष्ट्वा कूपे प्राक्षिपत्, ततस्तत्राप्यवकाशाभावाद्वापीम्, अनन्तरं तत्राप्यलब्धावकाशं सरश्च निनायेति॥

अथ मुनिः सरस्यप्यलब्धावकाशं तं मीनमम्बुधिं निनायेत्याह—

**योगप्रभावात् भवदाज्ञयैव नीतस्ततस्त्वं मुनिनापयोधिम्।
पृष्टोऽमुना कल्पदिदृक्षुमेनं सप्ताहमास्वेति वदन्नयासीः॥ ४॥**

**योगप्रभावादिति॥** ततः भवदाज्ञया एव मुनिना पयोधिं नीतः त्वम् अमुना पृष्टः एनम् इति वदन् अयासीः। ततः अनन्तरम् भवदाज्ञया भवतः आज्ञया नियोगेन। मुनिना सत्यव्रतेन। पयोधिमर्णवम्। नीतः प्रापितः। त्वं मत्स्यमूर्तिः। अमुना सत्यव्रतेन। पृष्टः प्रार्थितः। एनं सत्यव्रतम्। इति अनेन प्रकारेण। वदन् कथयन्। अयासीः गतवानसि। उक्तिप्रकारमाह—सप्ताहमास्व इति। सप्ताहमित्यत्यन्तसंयोगे द्वितीया। आस्व प्रतिपालय। एवमुक्तो

हेतुमाह---कल्पदिदृक्षुमिति । कल्पदिदृक्षु कल्पदर्शनोत्सुकम्। ननु तथा महत्प रिमाण मत्स्यमूर्ति कथमम्बुधि नेतु सत्यव्रत समर्थोऽभूदित्याशङ्का परिहरति—योगप्रभावादिति। योगस्य तपस प्रभावाच्छक्त्या। न किञ्चिदपि तपसा दुष्कर मस्तीति भाव ॥

अथ सत्यव्रत प्रलयाम्बुधौ निमग्ना मही दृष्ट्वा चकितो भगवन्त शरण गतोऽभूदित्याह—

प्राप्ते त्वदुक्तेऽहनि वारिधारापरिप्लुते भूमितले मुनीन्द्रः।
सप्तर्षिभिः सार्धमपारवारिण्युद्घूर्णमानश्शरण ययौ त्वाम् ॥ ५ ॥

**प्राप्त इति॥** त्वदुक्ते अहनि प्राप्ते भूमितले वारिधारापरिप्लुते मुनीन्द्र सप्तर्षिभि सार्धं त्वा शरण ययौ। त्वदुक्ते त्वया मत्स्यरूपेणोक्ते कथिते। अहनि दिवसे। प्राप्ते सति। भूमितले भूमेस्तले। वारिधारा परिप्लुते वारिधारया जलधारया परिप्लुते परित आप्लुते सति। मुनीन्द्र सत्यव्रत। सप्तर्षिभिर्मरीच्यादिभि। सार्धं समम्। शरण रक्षितारम्। ययौ प्राप। शरणागमने हेतुमाह—अपारवारिणि उद्घूर्णमान इति। अपारवारिणि अपारे अपगततीरप्रदेशे वारिण्युदके। प्रलयाब्धावित्यर्थ। उद्घूर्णमान सम्भ्रान्त ॥

ततो मुनिर्भगवत्कृपया प्रलयाब्धौ काञ्चिन्नावमद्राक्षीदित्याह—

धरां त्वदादेशकरीमवाप्ता नौरूपिणीमारुरुहुस्तदा ते
तत्कम्पकम्प्रेषु च तेषु भूयस्त्वमम्बुधेराविरभूर्महीयान् ॥ ६ ॥

**धरामिति॥** तदा ते नौरूपिणीमवाप्ता धरामारुरुहु। तदा तस्मि न्नवसरे। ते सत्यव्रतादय। नौरूपिणीम् नावस्तरण्या रूपमस्या अस्तीति ताद शीम्। अवाप्तामागताम्। धरा भूमिम्। धरित्र्या नौरूपग्रहणे हेतु दर्शयति—त्वदादेशकरीमिति। तवादेशकरी नियोगकर्त्रीम्। भगवन्नियोगान्नौरूपधरा मित्यर्थ। अथ तेषा भगवान् मत्स्यमूर्तिराविरासीदित्याह—भूय त्वम्

अम्बुधेः आविरभूः इति । भूयः अनन्तरम् । त्वं मत्स्यमूर्तिः । अम्बुधेः समुद्रात् । आविरभूः प्रादुरासीः । आविर्भावे हेतुमाह—तेषु च तत्कम्पकम्रेषु इति । तेषु सत्यव्रतादिषु । चकारस्त्वर्थे । तत्कम्पकम्रेषु तस्या नावः कम्पेन वाताहतप्रलयपयःपूरचलनजनितेन प्रचलनेन कम्रेषु चकितेष्वित्यर्थः । प्रादुर्भूतस्य मत्स्यमूर्तेः पूर्वावस्थाया विशेषमाह—महीयानिति । अतिशयेन महत्परिमाणः सन् ॥

मुनीनां भयापगममाह—

**झषाकृतिं योजनलक्षदीर्घां दधानमुच्चैस्तरतेजसं त्वाम् ।**
**निरीक्ष्य तुष्टा मुनयस्त्वदुक्त्या त्वत्तुङ्गशृङ्गे तरणिं बबन्धुः ॥ ७ ॥**

झषाकृतिमिति ॥ मुनयः तुष्टाः त्वदुक्त्या त्वत्तुङ्गशृङ्गे तरणिं बबन्धुः । मुनयः सत्यव्रतादयः । तुष्टाः सन्तुष्टाः । त्वदुक्त्या तव मत्स्यमूर्तेरुक्त्या नियोगेन । तरणिं नावम् । मुनीनां तोषहेतुमाह—त्वां निरीक्ष्य इति । निरीक्ष्य दृष्ट्वा । तदानीन्तनं भगवतः स्वरूपमाह—योजनलक्षदीर्घां झषाकृतिं दधानम् उच्चैस्तरतेजसमिति । योजनलक्षदीर्घां लक्षयोजनायामाम् । झषाकृतिं मत्स्याकृतिम् । दधानं धारयन्तम् । उच्चैस्तरतेजसम् उच्चैस्तरमत्युच्चं तेजो यस्य तम् ॥

भगवान् सत्यव्रताय ब्रह्मज्ञानमुपदिदेशेत्याह—

**आकृष्टनौको मुनिमण्डलाय प्रदर्शयन् विश्वजगद्विभागान् ।**
**संस्तूयमानो नृवरेण तेन ज्ञानं परं चोपदिशन्नचारीः ॥ ८ ॥**

आकृष्टनौक इति ॥ त्वम् आकृष्टनौकः मुनिमण्डलाय विश्वजगद्विभागान् प्रदर्शयन् तेन नृवरेण संस्तूयमानः ज्ञानं परं च उपदिशन् अचारीः । त्वं मत्स्यमूर्तिः । आकृष्टनौकः आकृष्टा नौस्तरणिर्येन सः । मुनिमण्डलाय मुनीनां नावमधिरूढानामृषीणां मण्डलाय समूहाय । विश्वजगद्विभागान् विश्वान् निखिलान् जगतो लोकस्य विभागान् प्रदेशान् । प्रदर्शयन् सन्दर्शयन् तेन नृवरेण सत्यव्रतेन । संस्तूयमानः सम्यक् स्तूयमानः । ज्ञानं शास्त्र

ज्ञानम्। पर ब्रह्मज्ञानम्। चकार समुच्चये। अचारी प्रलयाम्बुधावित तल्पसञ्चारत्ववतेथा ॥

अथ मत्स्यावतारप्रयोजनमाह द्वाभ्याम्—

कल्पावधौ सप्त मुनीन् पुरोवत् प्रस्थाप्य सत्यव्रतभूमिप तम् ।
वैवस्वताख्य मनुमादधानः क्रोधाद्धयग्रीवमभिद्रुतोऽभूः ॥ ९ ॥

कल्पावधाविति ॥ त्व कल्पावधौ सप्त मुनीन् पुरोवत् प्रस्थाप्य त सत्यव्रतभूमिप वैवस्वताख्य मनुमादधान । क्रोधात् हयग्रीवमभिद्रुत अभू । त्वं मत्स्यमूर्ति । कल्पावधौ कल्पस्य प्रलयस्य अवधाववसाने। सप्त मुनीन् सप्तर्षीन्। पुरोवत् पुरा इव। प्रस्थाप्य तत्तत्स्थान प्रापयित्वेत्यर्थ । वैवस्वताख्य वैवस्वत इत्याख्या नाम यस्य तम्। मनुमिदानीन्तनम्। आदधान विरचयन्। क्रोधाद्वेदापहरणजनितेन कोपन। हयग्रीव तन्नामानमसुरम्। अभिद्रुत अभियात ॥

अथ प्रकरणमुपसहरन् प्रार्थयते—

स्वतुङ्गशृङ्गक्षतवक्षस त निपात्य दैत्य निगमान् गृहीत्वा ।
विरिञ्चये प्रीतहृदे ददानः प्रभञ्जनागारपते प्रपायाः ॥ १० ॥

स्वतुङ्गशृङ्गेति ॥ हे प्रभञ्जनागारपते स्वतुङ्गशृङ्गक्षतवक्षस त दैत्य निपात्य निगमान् गृहीत्वा प्रीतहृदे विरिञ्चये ददान त्व प्रपाया । प्रभञ्जनागारपते गुरुव युपुरनाथ । स्वतुङ्गशृङ्गक्षतवक्षस स्वस्य तुङ्गेनोन्नतेन शृङ्गेण क्षत विद्ध वक्ष उरा यस्य तम्। त दैत्य हयग्रीवम्। निपात्य पातयित्वा। निगमान् वेदान्। गृहीत्वा आदाय। अत एव प्रीतहृदे प्रीत सन्तुष्ट हृत् अन्तरङ्ग यस्य तस्मै। विरिञ्चये ब्रह्मणे। ददान दत्तवान्। त्व मत्स्य मूर्ति । प्रपाया बाह्यादाभ्यन्तराच्च रोगसञ्चयान्मामनन्यशरण त्रायस्वेत्यर्थ ॥

इति मत्स्यावतारवर्णनं द्वात्रिंशदशकम् ॥

इति श्रीनारायणीयस्तोत्रव्याख्यायां बालबोधिन्याम्

अष्टमस्कन्धपरिच्छेदः ॥

आदित श्लोकसख्या ३३४

## नवमस्कन्धपरिच्छेदः

### त्रयस्त्रिंशदशकम् ।

अथैकादशीव्रतानुष्ठानस्य भगवत्प्रीत्यतिशयजननद्वारा मुक्तिहेतुतामुदाहर्तुमम्बरीषचरितं प्रस्तौति—

वैवस्वताख्यमनुपुत्रनभागजात-
नाभागनामकनरेन्द्रसुतोऽम्बरीषः ।
सप्तार्णवावृतमहीदयितोऽपि रेमे
त्वत्सङ्गिषु त्वयि च मग्नमनाः सदैव ॥ १ ॥

वैवस्वताख्येति ॥ अम्बरीषः सदा त्वत्सङ्गिषु त्वयि च मग्नमनाः रेमे । अम्बरीषः तन्नामा राजर्षिः । सदा सर्वदा । त्वत्सङ्गिषु त्वद्भक्तेषु । त्वयि श्रीवासुदेवे । चकारः समुच्चये । मग्नमनाः मग्नमतिशयेनासक्तं मनो यस्य सः । अत्र जलोदरमविष्टवाचिनो मग्नपदस्योपादानाद्यथा जलोदरं प्रविष्टः पुमान् न बहिष्ठं किमपि चक्षुरादिभिर्गृह्णाति, तद्वत् भगवद्भक्तिरसनिमग्नहृदयतया न किञ्चिदप्यपरं जानातीति ध्वन्यते । भगवद्भक्तानामयं स्वभावः, यत् भक्तेष्वपि रज्यत इति । एवकारेण न तु विषयेष्वासक्त इति दर्शितम् । रेमे अरमत । भगवद्भक्तिरसास्वादानन्दमनुभवन् कालं निनायेत्यर्थः । ननु किमयं भोग्यवस्तुविरहेण मन्दवैराग्यात् भगवद्भक्तोऽभूदिति चेन्नेत्याह—सप्तार्णवावृतमहीदयितः इति । सप्तभिरर्णवैः समुद्रैरावृताया वलयिताया मह्या भूमेः दयितः पतिः । सार्वभौम इत्यर्थः । अपिर्विरोधे । सत्स्वपि भोगसाधनेषु भोगतृष्णाया अनुदयाद्विरोधः । भोग्यवस्तुविरहप्रयुक्ता मन्दा विरक्तिर्भोगसामग्रीसद्भावे विनश्यति, इतरा तु न तथेति भावः । अनेनाम्बरीषस्य भक्तिदार्ढ्यं द्योत्यते । ननु कतमस्मिन् वंशे जातोऽयमम्बरीष इत्याकाङ्क्षायामाह—वैवस्वताख्यमनुपुत्रनभागजातनाभागनामकनरेन्द्रसुतः इति । वैवस्वत इत्याख्या नाम यस्य स वैवस्वताख्यः, स चासौ मनुः ब्रह्मणः पुत्रो मरीचिः, तत्पुत्रः कश्यपः,

तत्पुत्रो विवस्वान्, तत्पुत्र श्राद्धदेव, अथ वैवस्वताख्यो मनु, तत्पुत्रो नभाग तन्नामा पार्थिव, तस्माज्जातो नाभाग, तन्नामकस्य तदाख्यस्य नरेन्द्रस्य राज्ञ सुत पुत्र ॥

भगवान् हरिस्तस्मिन् भक्त्या प्रसन्नोऽभूदित्याह—

त्वत्प्रीतये सकलमेव वितन्वतोऽस्य
भक्त्यैव देव नचिरादभृथा प्रसादम् ।
येनास्य याचनमृतेऽप्यभिरक्षणार्थं
चक्रं भवान् प्रवितताार सहस्रधारम् ॥ २ ॥

त्वत्प्रीतय इति ॥ हे देव त्वम् अस्य भक्त्या एव नचिरात् प्रसादम् अभृथा । देव प्रकाशमान । अस्य अम्बरीषस्य । भक्त्यैवेत्येवकारेण कारणान्तरस्य व्यवच्छेद । नचिरात् अल्पेन कालेन । अभृथा धृतवा नसि । भक्तस्याम्बरीषस्य भगवदुपासनप्रकारमाह—सकलं त्वत्प्रीतये एव वितन्वत इति । सकलं लौकिकं वैदिकं च समस्तं कर्म । त्वत्प्रीतये भगवत्प्रीत्यर्थम् । एवकारेण स्वर्गादिकामनाव्यवच्छेद । वितन्वत कुर्वाणस्य । भगवत्प्रसादस्य किञ्चित् फलमाह—येन भवान् याचनम् ऋते अपि अस्य अभिरक्षणार्थं सहस्रधारं चक्रं प्रवितताार इति । येन प्रसादेन । भवान् श्रीहरि । याचनं प्रार्थनाम् । ऋते विना । अपिर्विरोधे । अस्याम्बरीषस्य । अभिरक्षणार्थम् अभितो रिपुभ्यो रक्षणार्थं पालनाय । अनेन कृत्यानलाद्रक्षणं सूचितम् । सहस्रधारं सहस्रारम् । अनेन शत्रूणां भयावहत्वं दर्शितम् । चक्रं सुदर्शनम् । प्रवितताार दत्तवान् ॥

अथाम्बरीषस्य द्वादशीव्रतानुष्ठानमाह—

स द्वादशीव्रतमथो भवदर्चनार्थं
वर्षं दधौ मधुवने यमुनोपकण्ठे ।
पत्न्या समं सुमनसा महतीं वितन्वन्
पूजां द्विजेषु विसृजन् पशुषष्टिकोटिम् ॥ ३ ॥

स इति ॥ अथो स यमुनोपकण्ठे मधुवने पत्न्या सम वर्षं द्वादशी व्रत दधौ। अथो अनन्तरम्। स अम्बरीष। यमुनोपकण्ठे यमुनाया कालिन्दीनद्या उपकण्ठे समीपे। मधुवने मधुवनमिति प्रसिद्धे देशे। पत्न्या भार्यया। सम सह। वर्षं सवत्सरम्। अत्यन्तसयोगे द्वितीया। दधौ धृतवान्। पत्न्या व्रतानुष्ठाने श्रद्धावत्त्व दर्शयति—सुमनसा इति। शोभन भगवद्भक्तिमत्तया रमणीय मनो यस्यास्तया। द्वादशीव्रतानुष्ठानप्रयोजनमाह—भवदर्चनार्थमिति। भवन्तमाराधयितुमित्यर्थ। द्वादशीव्रतानुष्ठानप्रकारमाह—महती पूजा वितन्वन् द्विजेषु पशुषष्टिकोटि विसृजन्निति। महतीं सर्वोपहारमहाभिषेकयुक्ताम्। पूजा भगवत्सपर्याम्। वितन्वन् कुर्वन्। द्विजेषु ब्राह्मणेषु। पशुषष्टिकोटिं पशूना गवा षष्टिकोटिं षष्टिपरिमिता कोटिम्। विसृजन् ददत् ॥

भगवद्भक्तास्तपस्विनामप्यधृष्या इति प्रदर्शयितु श्रीदुर्वासस प्रवृत्तिं वर्णयितुमुपक्रमते—

तत्राथ पारणदिने भवदर्चनान्ते
दुर्वाससाऽस्य मुनिना भवन प्रपेदे।
भोक्तु वृतश्च स नृपेण परार्तिशीलो
मन्द जगाम यमुनां नियमान् विधास्यन् ॥ ४ ॥

तत्रेति ॥ अथ तत्र पारणदिने भवदर्चनान्ते मुनिना दुर्वाससा अस्य भवन प्रपेदे। अथ अनन्तरम्। तत्र यमुनोपकण्ठे। पारणदिने पारणोचिते दिवसे। भवदर्चनान्ते भवतोऽर्चनस्य पूजाया अन्ते अवसानसमये। व्रतावसानदिवसे भगवत्पूजानन्तर विप्रान् भोजयित्वा स्वय भोक्तुकामे सतीत्यर्थ। मुनिना तपस्विना। अनेनास्य पूज्यत्व सूचितम्। दुर्वासा इति नाम। अस्य अम्बरीषस्य। भवन गृहम्। प्रपेदे प्रापद्यत। कर्मणि लिट्। मुनि नृपेण भोक्तुमामन्त्रित इत्याह—स च नृपेण भोक्तु वृत नियमान् विधास्यन् मन्द यमुना जगाम इति। स दुर्वासा। चकारस्त्वर्थे। नृपेण अम्बरीषेण। वृत निमन्त्रित। नियमान् नित्यकर्माणि। विधास्यन् विधातु

मिच्छन्। मन्दमिति गमनक्रियाविशेषणम्। यमुना कालिन्दीम्। जगाम गतवान्। पारणकालातिक्रम एव नियमान् विधायागमिष्यामीति मत्वा मन्दं जगामेत्यर्थ। मन्दगमने कारणं दर्शयति—परार्तिशील इति। परार्तिशील परपीडानिरत ॥

राजन्तरसङ्कटमाह—

राज्ञाऽथ पारणमुहूर्तसमाप्तिखेदा
द्वारैव पारणमकारि भवत्परेण।
प्राप्तो मुनिस्तदथ दिव्यदृशा विजानन्
क्षिप्यन् क्रुधोद्धृतजटो विततान कृत्याम् ॥ ५ ॥

राज्ञेति ॥ अथ भवत्परेण राज्ञा पारणमुहूर्तसमाप्तिखेदात् वारा एव पारणमकारि। अथ अनन्तरम्। भवत्परेण भगवदर्पितात्मना। अनेन मुनिकोपेऽप्यनर्थापत्त्यभाव सूच्यते। पारणमुहूर्तसमाप्तिखेदात् पारणमुहूर्तस्य पारणोचितसमयस्य समाप्तिरवसान तत्कृतात् खेदात्। प्रतिपालने पारणमुहूर्तसमाप्ति, अप्रतिपालने मुनिशापश्च स्यादिति सङ्कटादित्यर्थ। वारा जलेन। एवकारेणान्येषा व्यवच्छेद। 'प्राहुरभक्षण विप्रा अशित नाशित च तत्' इति न्यायादभक्षणे व्रतसमाप्तिसम्भवादशनकृतप्रत्यवायासम्भवाच्चेति भाव। अकारि कृतम्। एतदवेत्य राज्ञे भृश मुनिश्चुकोपेत्याह—अथ मुनि प्राप्त तत् दिव्यदृशा विजानन् क्रुधा क्षिप्यन् उद्धृतजट कृत्या विततान इति। अथ नियमसमाप्त्यनन्तरम्। मुनि दुर्वासा। प्राप्त आगत। तत् जलेन पारणम्। दिव्यदृशा दिव्यचक्षुषा। विजानन् अवगच्छन्। क्रुधा कोपेन। क्षिप्यन् बह्वाक्षेपवादान् कुर्वन्। उद्धृतजट उद्धृता उन्मूलिता जटा येन स। मस्तकाज्जटा उन्मूल्य ताभिरित्यर्थ। विततान निर्ममे ॥

कृत्यामापतन्तीमवलोक्यापि राजा न बिभायेत्याह—

कृत्या च तामसिधरा भुवन दहन्ती
मग्रेऽभिवीक्ष्य नृपतिर्न पदाच्चकम्पे।

त्वद्भक्तबाधमभिवीक्ष्य सुदर्शनं ते
कृत्यानलं शलभयन् मुनिमन्वधावीत् ॥ ६ ॥

**कृत्यामिति ॥** नृपतिः च कृत्याम् अग्रे अभिवीक्ष्य पदात् न चकम्पे। नृपतिः अम्बरीषः। चकारस्त्वर्थो विशेषे। तमाह—न चकम्प इति। अग्रे पुरस्तात्। अभिवीक्ष्य अभिमुखमापतन्तीं दृष्ट्वेत्यर्थः। पदात् स्वस्थानात्। न चकम्पे न चलितः। कृत्याया भयावहत्वमाह—असिधरां भुवनं दहन्तीमिति। असिधरां खड्गवाहिनीम्। भुवनं लोकम्। भगवतः सुदर्शनं नृपं ररक्षेत्याह—ते सुदर्शनं कृत्यानलं शलभयन् मुनिम् अन्वधावीदिति। ते तव श्रीवैकुण्ठस्य। सुदर्शनं सहस्रारं चक्रम्। ते इत्यनेन सुदर्शनस्य दुर्वारत्वमुक्तम्। कृत्यानलं कृत्यारूपमग्निम्। शलभयन् अग्निश्शलभमिवाना यासेन झटिति भस्मसात्कुर्वन्नित्यर्थः। मुनिं दुर्वाससं प्राणत्राणार्थं शीघ्रं धावन्तम्। अन्वधावीत् पृष्ठतो धावनमकरोत्। अत्र हेतुं दर्शयति—त्वद्भक्तबाधमभि वीक्ष्य इति। त्वद्भक्तबाधं त्वद्भक्तस्य बाधं पीडामभिवीक्ष्य दृष्ट्वा ॥

चक्रेणानुगम्यमानस्य मुनेः प्रवृत्तिमाह—

धावन्नशेषभुवनेषु भिया स पश्यन्
विश्वत्र चक्रमपि ते गतवान् विरिञ्चम् ।
कः कालचक्रमतिलङ्घयतीत्यपास्तः
शर्वं ययौ स च भवन्तमवन्दतैव ॥ ७ ॥

**धावन्निति ॥** *सः विरिञ्चं गतवान्। सः दुर्वासाः। विरिञ्चं पद्मासनम्।* गतवान् शरणं गतोऽभूत्। अत्र हेतुमाह—भिया अशेषभुवनेषु धावन् विश्वत्र अपि ते चक्रं पश्यन्निति। भिया भयेन। अशेषभुवनेषु अशेषेषु समस्तेषु भुवनेषु लोकेषु। धावन् पृष्ठतोऽनुधावत् सुदर्शनं दृष्ट्वा प्राणत्राणार्थं पलायमानः। विश्वत्र सर्वत्र। चक्रस्यादर्शनं न कुत्रचिदपि सञ्जातमित्यपिशब्दार्थः। ते तव श्रीवैकु ण्ठस्य। चक्रं सुदर्शनम्। पश्यन् विलोकयन्। अथ मुनिर्गिरीशं शरणं गतवानि त्याह—शर्वं ययौ इति। शर्वं गिरीशम्। ययौ शरणं गतवान्। अत्र हेतुः—

इति अपास्त इति। इति अनेन प्रकारेण। उक्त्वेति शेषः। अपास्त त्यक्त। अर्थाद्गिरिशोऽत्र कर्ता। उक्तिप्रकारमाह—क कालचक्रम् अतिलङ्घयति इति। कालचक्र कालस्वरूप चक्रम्। अतिलङ्घयति अतिक्रम्य गच्छति। मुनौ शरणागते गिरिशस्य प्रवृत्तिमाह—स च भवन्तम् अवन्दत एव इति। स शर्व। चकारस्त्वर्थे। भवन्त श्रीविकुण्ठनिलयम्। अवन्दत यस्येद चक्रम्, तमेव हरिं शरण भजेत्यभिप्रायेणावन्दत। एवकारोऽयोगव्यवच्छेदे॥

शर्वेणापि परित्यक्तो मुनिर्भगवन्तं श्रीहरिं शरण गतोऽभूदित्याह—

भूयो भवन्निलयमेत्य मुनिं नमन्त
प्रोचे भवानहमृषे ननु भक्तदासः।
ज्ञान तपश्च विनयान्वितमेव मान्य
याह्यम्बरीषपदमेव भजेति भूमन् ॥ ८ ॥

भूय इति॥ हे भूमन् भवान् भूय भवन्निलयम् एत्य नमन्त मुनिं प्रोचे। भूमन् परिपूर्ण। भूय अनन्तरम्। भवन्निलय भवतो निलय विकुण्ठलोकम्। एत्य प्राप्य। मुनि दुर्वाससम्। प्रोचे उक्तवान्। उक्तिप्रकार माह—ननु ऋषे अह भक्तदास इति। नन्वित्यामन्त्रणे। भक्तदास भक्ताना दास इव। तदधीनोऽस्मीत्यर्थ। नन्वहमपि ज्ञानतपोनिष्ठत्वात् भक्त एवेत्याशङ्कायामाह—ज्ञान तप च विनयान्वितम् एव मान्यमिति। विनयान्वित विनयेनोपशमेनान्वित युक्तमेव सत्। मान्य निश्रेयसकारणम्। एवकारेण दुर्विनीतस्यैतद्द्वयमपि न सुखाय भवतीति दर्शितम्। ननु किमधुना मया विधेयमिति चेत्तत्राह—त्व याहि अम्बरीषपदमेव भज इति। याहि गच्छ। अम्बरीषपदम् अम्बरीषस्य पद पादद्वन्द्वम्। एवकारेण नान्यस्तव त्राता वर्तत इति सूचितम्। भज शरण व्रज॥

मुनिरम्बरीष शरण प्राप्तवानित्याह—

तावत् समेत्य मुनिना स गृहीतपादो
राजाऽपसृत्य भवदस्त्रमसावनौषीत्।

चक्रे गते मुनिरदादखिलाशिषोऽस्मै
त्वद्भक्तिमागसि कृतेऽपि कृपां च शंसन् ॥ ९ ॥

तावदिति ॥ स. असौ राजा भवदस्त्रम् अनौषीत् । सः मुनिनाऽधिक्षेपादिना पीडितः । असौ राजाऽम्बरीषः । भवदस्त्रं भवतोऽस्त्रं सुदर्शनम् । अनौषीत् तुष्टाव । अत्र हेतुमाह—तावत् मुनिना समेत्य गृहीतपादः इति । तावत् तस्मिन्नवसरे । मुनिना दुर्वाससा । समेत्य समागम्य । गृहीतपादः शरणागतं मां सुदर्शनात्त्राहीत्यभिधाय गृहीतौ पादौ यस्य सः । ननु मुनिना गृहीतचरणो नृपः किं न लज्जित इति चेत्तेत्याह—अपसृत्य इति । पादस्पर्शपरिहाराय किञ्चित् पृष्ठतो गत्वेत्यर्थः । राज्ञः प्रार्थनात् सुदर्शनं गतमभूदित्याह—चक्रे गते मुनिः त्वद्भक्तिम् आगसि कृते अपि कृपां च शंसन् अस्मै अखिलाशिषः अदादिति । चक्रे सुदर्शने । गते निर्गते सति । मुनिः दुर्वासाः । त्वद्भक्तिं त्वयि भक्तिम् । आगसि कृत्योत्पादनादिरूपे अपराधे । अपिर्विरोधे । कृपां स्वविषयां करुणाम् । चकारः समुच्चये । शंसन् प्रशंसन् । अस्मै अम्बरीषाय । अखिलाशिषः अखिलाः समस्ताः आशिषः वरान् अदात् दत्तवान् ॥

राजा मुनये आतिथ्यं विदधे इत्याह—

राजा प्रतीक्ष्य मुनिमेकसमामनाश्वान्
सम्भोज्य साधु तमृषिं विसृजन् प्रसन्नम् ।
भुक्त्वा स्वयं त्वयि ततोपि दृढं रतोऽभूत्
सायुज्यमाप च स मां पवनेश पायाः ॥ १० ॥

राजेति ॥ राजा अनाश्वान् एकसमां मुनिं प्रतीक्ष्य साधु सम्भोज्य स्वयं भुक्त्वा प्रसन्नं तमृषिं विसृजन् त्वयि ततः अपि दृढं रतः अभूत् । राजा अम्बरीषः । अनाश्वान् अनश्नन् । अभक्षो भूत्वेत्यर्थः । एकसमाम् एकसंवत्सरम् । अत्यन्तसंयोगे द्वितीया । मुनिं दुर्वाससम् । प्रतीक्ष्य प्रतिपाल्य । साधु यथाविधि । सम्भोज्य सम्यक् भोजयित्वा । भुक्त्वा

श्रमाल्य मुनिवनम् अगम । मुनिकथितमनुद्वन्द्वशान्ताध्वखेद मुनिकथितेन मुनिना विश्वामित्रेण कथितेन उपदिष्टेन मनुद्वन्द्वेन बलातिबलाभिधानयोर्मन्त्रयोर्द्वन्द्वेन शान्त शम गत अध्वखेद मार्गश्रमो यस्य स । नृणा नराणाम् । त्राणाय रक्षणाय। बाणै अस्त्रै । ताटका ताटकानामधेयां राक्षसीम्। पाटयित्वा हत्वा। अस्माताटकावधेन तुष्टाद्विश्वामित्रात्। अस्त्रजाल दिव्यास्त्रसञ्चयम्। लब्ध्वा प्राप्य। सिद्धाश्रमाख्य सिद्धाश्रमसञ्ज्ञितम्। मुनिवन तपोवनम् अगम गतवानसि। ननु कथ भगवता रामेण जुगुप्सित स्त्रीवधरूप कर्माचरितमिति चेत्तत्राह—मुनिवचनबलादिति। मुनेर्विश्वामित्रस्य वचनमुक्तिस्तस्य बलात् प्रामाण्यात्। उग्रतपसो मुनय एव हि प्रणेतारो धर्मशास्त्राणाम्, तस्मान्महामुनेर्विश्वामित्रस्य वचनमपि धर्मशास्त्रमेवेति भाव ॥

भगवतो रामस्य विश्वामित्रयज्ञपरिपालनादिकमाह—

मारीच द्रावयित्वा मखशिरसि शरैरन्यरक्षासि निघ्नन्
कल्यां कुर्वन्नहल्यां पथि पदरजसा प्राप्य वैदेहगेहम् ।
भिन्दानश्चान्द्रचूड धनुरवनिसुतामिन्दिरामेव लब्ध्वा
राज्य प्रातिष्ठथास्त्व त्रिभिरपि च मम भ्रातृवीरैः सदारै ॥ ३ ॥

**मारीचमिति** ॥ त्व मखशिरसि शर मारीच द्रावयित्वा अन्यरक्षासि निघ्नन् पथि पदरजसा अहल्या कल्या कुर्वन् वैदेहगेह प्राप्य चान्द्रचूड धनु भिन्दान इन्दिरामेव अवनिसुता लब्ध्वा सदारै त्रिभि भ्रातृवीरै अपि च राज्य प्रातिष्ठथा । त्व श्रीराममूर्ते । मखशिरसि यागमध्ये । शरैरस्त्रै । मारीच तन्नामान यज्ञविघातक राक्षसम्। द्रावयित्वा विद्राव्य । अन्यरक्षासि अन्यान्यपराणि सुबाहुप्रभृतीनि रक्षासि राक्षसान्। निघ्नन् मारयन्। पथि विदेहनगरीगमनमार्गे। पदरजसा पादरेणुना। अहल्या तन्नाम्नीं गौतमपत्नीं भर्तुश्शापाच्छिलारूपधराम्। कल्या मुक्तशापाम्। कुर्वन् विरचयन्। वैदेहगेह वैदेहस्य विदेहराजस्य गेह पुरीम्। प्राप्य सम्प्राप्य। चान्द्रचूड चन्द्रचूडसम्बन्धि। धनुश्चापम्। भिन्दान निर्भिन्दन्। अत एव इन्दिरामेव साक्षात्

श्रियमेव। अवनिसुतां भूमेः सुतां सीताम्। लब्ध्वा प्राप्य। य ऐश्वरं धनुरारोपयति, तस्मै सीता प्रदेयेति राज्ञा विदेहेन प्रतिज्ञातत्वादिति भावः। सदारैः सभार्यैः। लक्ष्मणः सीताया अनुजामूर्मिलां, भरतः सीरध्वजस्य भ्रातुः कुशध्वजस्य दुहितरं माण्डवीं, शत्रुघ्नस्तदनुजां श्रुतकीर्तिं चोदवहदिति द्रष्टव्यम्। भ्रातृवीरैः वीरैर्भ्रातृभिर्भरतलक्ष्मणशत्रुघ्नैः। अपिचेति समुच्चये। समं सह। राज्यं स्वनगरीमयोध्याम्। प्रातिष्ठथाः प्रस्थितवानसि॥

भगवतो रामस्य भार्गवजयमाह—

आरुन्धाने रुषान्धे किल भृगुतिलके संक्रमय्य स्वतेजो
याते यातोऽस्ययोध्यां सुखमिह निवसन् कान्तया कान्तमूर्ते।
शत्रुघ्नेनैकदाऽथो गतवति भरते मातुलस्याधिवासं
तातारब्धोऽभिषेकस्तव किल विहतः केकयाधीशपुत्र्या ॥ ४ ॥

**आरुन्धान इति** ॥ त्वं रुषा अन्धे किल भृगुतिलके आरुन्धाने स्वतेजः संक्रमय्य याते अयोध्यां यातः असि। त्वं श्रीराममूर्तिः रुषा ईश्वरधनुर्भञ्जनजनितेन कोपेन। अन्धे विवेकरहिते। किलेत्यलीके। वस्तुतो न कोपान्धत्वम्। कोपान्धतया भार्गवो रामं न श्रीहरिं ज्ञातवानिति जनान् बोधयितुमिति भावः। भृगुतिलके श्रीभार्गवरामे भगवदंशरूपे। आरुन्धाने मध्येमार्गं भगवतो रामस्य गतिनिरोधं कृतवति। स्वतेजः स्वस्य तेजो वैष्णवं धाम। संक्रमय्य हे राम दाशरथे भगवतो विष्णोः प्रभावादपगतवीर्यस्य शैवचापस्य भञ्जनेन दुर्वारं गर्वमुद्वहंस्त्वं यदि समर्थोऽसि, तर्हि मदीयमिदं वैष्णवं धनुरारोप्यास्मिन् शरसन्धानं कुरुष्व। अन्यथाऽनेन मम कुठारेण तव शीर्षं कण्ठनालात् 'पातयिष्यामीत्यादिभिर्बहुविधैर्दुरुक्तैर्विध्यन् वैष्णवधनुस्समर्पणव्याजेनात्मगतं वैष्णवं तेजो भगवति दाशरथौ समर्प्येत्यर्थः। याते निर्गते सति। अयोध्यां तन्नाम्नीं स्वनगरीम्। यातः गतः। हे कान्तमूर्ते त्वम् इह कान्तया सुखं निवसन्। कान्तमूर्ते रम्यरूप। त्वं श्रीराम। इह अयोध्यायाम्। कान्तया प्रियया सीतया सह। सुखं यथा भवति तथा। निवसन् वसन्।

आसीरित्यत्राध्याहर्तव्यम्। अथ भगवत कानननयात्रामवतारयति —अथो एकदा भरते शत्रुघ्नेन मातुलस्य अधिवास गतवति तातारब्ध तव अभिषेक केकयाधीशपुत्र्या विहत किल। अथो अनन्तरम्। एकदा कदाचित्। शत्रुघ्नेन सह। मातुलस्य युधाजित। अधिवास मन्दिरम्। गतवति सति। तातारब्ध तेन पित्रा दशरथेन आरब्ध प्रारब्ध। तव श्रीरामस्य। अभिषेक यौवराज्याभिषेक। केकयाधीशपुत्र्या कैकेय्या। विहत विघ्नित। किलेति वार्तायाम्। अथवा किलेत्यलीके। वस्तुतो भवत्प्रेरणयेति भाव ॥

भगवतो रामस्य काननयात्रामाह—

तातोक्त्या यातुकामो वनमनुजवधूसयुतश्चापधार
पौरानारुध्य मार्गे गुहनिलयगतस्त्व जटाचीरधारी।
नावा सन्तीर्य गङ्गामधिपदवि पुनरत भरद्वाजमारा
न्नत्वा तद्वाक्यहेतोरतिसुखमवसश्चित्रकूटे गिरीन्द्रे ॥ ५ ॥

**तातोक्त्येति** ॥ त्व तातोक्त्या वन यातुकाम अनुजवधूसयुत चापधार मार्गे पौरान् आरुध्य गुहनिलयगत जटाचीरधारी नावा गङ्गा सन्तीर्य पुन अधिपदवि आरात् भरद्वाज नत्वा तद्वाक्यहेतो चित्रकूटे गिरीन्द्रे अतिसुखम् अवस। त्व श्रीराम। तातोक्त्या तातस्य कैकेय्यै प्रतिश्रुत वरद्वयमवितथ कर्तुमिच्छत पितुरुक्त्या नियोगेन। वनम् अरण्यम्। यातुकाम गन्तुमभिलषन्। अनुजवधूसयुत अनुजेन लक्ष्मणेन वध्वा सीतया च सयुत सहित। चापधार धनुष्पाणि। मार्गे पथि। पौरान् आत्मना सह वनाय प्रस्थितान् पुरवासिन। आरुध्य निरुध्य। गुहनिलयगत गुहस्य तन्नाम्नो निषादाधिपस्य निलय गृह गत प्राप्त। जटाचीरधारी वनवासोचितजटावल्कलधर। नावा तरण्या। सतीर्य तीर्त्वा। पुन अनन्तरम्। अधिपदवि मार्गे। आरात् समीप। वसन्तमिति शेष। त प्रसिद्धम्। भरद्वाज तन्नामान महामुनि नत्वा प्रणम्य। तद्वाक्यहेतो तस्य भरद्वाजस्य निदेशात्। चित्रकूटे चित्रकूटनाम्नि। गिरीन्द्रे पर्वतोत्तमे। अतिसुख यथाभवति तथा। अवस वास कृतवानसि ॥

राज्ञो दशरथस्य स्वर्गारोहणं भगवतो रामस्य तस्मै जलाञ्जलिदानादिकं चाह—

श्रुत्वा पुत्रार्तिखिन्नं खलु भरतमुखात् स्वर्गयातं स्वतातं
तप्तो दत्त्वाऽम्बु तस्मै निदधिथ भरते पादुकां मेदिनीं च।
अत्रिं नत्वाऽथ गत्वा वनमतिविपुलं दण्डकं चण्डकायं
हत्वा दैत्यं विराधं सुगतिमकलयश्चारु भोः शारभङ्गीम् ॥ ६ ॥

श्रुत्वेति ॥ त्वं खलु भरतमुखात् स्वतातं स्वर्गयातं श्रुत्वा तप्त तस्मै अम्बु दत्त्वा भरते पादुका मेदिनीं च निदधिथ। त्वं श्रीराम। खल्विति स्वर्थे। भरतमुखात् भरतस्य मुखात्। स्वतातं स्वस्य तातं पितरं दशरथम्। स्वर्गयातं मृतम्। श्रुत्वा आकर्ण्य। अत एव तप्त अतीव दुःखित। तस्मै पित्रे। अम्बु जलाञ्जलिम्। दत्त्वा प्रदाय। मेदिनीं भूमिम्। चकार समुच्चये। निदधिथ निहितवानसि। दशरथस्य मरणहेतुमाह—पुत्रार्तिखिन्नमिति। पुत्रार्तिर्वनवासप्रयुक्ता पीडा तया खिन्नमतीव दुःखितम्। अत्रायमर्थः—राम सीतालक्ष्मणाभ्यां सह गङ्गातीरपर्यन्तं नीत्वा सुमन्त्र प्रतिनिवृत्य रामस्य जटाचीरधारणादिकं राज्ञे दशरथाय न्यवेदयत्। तदा राजा दुःखितोऽपि तच्छ्रवणजनितेन शोकावेगेनातीव पीडितो रामरामेति क्रोशन् देहं परित्यज्य त्रिदिवमगमत्। तदा मन्त्रिणस्तु वसिष्ठवचसा राज्ञो मृतशरीरं संरक्ष्य जनपदमराजकं चाकलय्य त्वरितमागतैर्दूतैर्मातुलालयाद्भरतमानाययन्। भरतोऽप्ययोध्यां प्राप्य मातुर्गिरा पितरं पुत्रशोकेन स्वर्गयातमवगम्यातीव दीनमानसो रामं प्रत्यानेतुं वनं जगाम। प्राप्य च चित्रकूटं रामं दृष्ट्वा समस्तमप्ययोध्यावृत्तान्तं न्यवेदयत्। भगवान् रामस्त्वेतदाकर्ण्य तप्त पित्रे जलाञ्जलिं दत्त्वा राज्यं प्रशासितुं बहुशो याचमानायापि भरताय पितुस्सत्यमेवावश्यं रक्षणीयमतश्चतुर्दशसमा नीत्वाऽनन्तरमयोध्यामेष्यामीत्युक्त्वाऽऽत्मनः पादुके राज्यं च प्रादादिति। भोः त्वम् अत्रिं नत्वा अथ अतिविपुलं दण्डकं गत्वा चण्डकायं विराधं दैत्यं हत्वा शारभङ्गीं सुगतिं चारु अकलय। भो इति सम्बोधने। त्वं श्रीराम। अत्रिं तन्नामानं मुनिवर्यम्। नत्वा प्रणम्य। अथ अनन्तरम्। अतिविपुलमति

विस्तृतम्। दण्डक तन्नामधेयम्। वनमरण्यम्। गत्वा प्राप्य। चण्डकाय भीषणशरीरम्। विराध तन्नामानम्। दैत्य राक्षसमात्मान हरन्तम्। हत्वा मारयित्वा। शारभङ्गीं शरभङ्गनाम्नो मुने सम्बन्धिनीम्। सुगतिं मोक्षम्। चारु मनोहर यथा भवति तथा। अकलय दृष्टवानसि॥

भगवतो रामस्य राक्षसवधप्रतिज्ञादिकमाह—

नत्वाऽगस्त्यं समस्ताशरनिकरसपत्नाकृतिं तापसेभ्यः
प्रत्यश्रौषीः प्रियैषी तदनु च मुनिना वैष्णवे दिव्यचापे।
ब्रह्मास्त्रे चापि दत्ते पथि पितृसुहृदं प्रेक्ष्य भूयो जटायुं
मोदाद्गोदातटान्ते परिरमसि पुरा पञ्चवट्यां वधूट्या ॥ ७ ॥

नत्वेति॥ त्वम् अगस्त्य नत्वा तापसेभ्य समस्ताशरनिकरसपत्नाकृतिं प्रत्यश्रौषी। त्व श्रीराम। अगस्त्य भगवन्तं कुम्भसम्भवम्। नत्वा प्रणम्य। तापसेभ्य मुनिभ्य। समस्ताशरनिकरसपत्नाकृतिं सर्वराक्षसवधम्। प्रत्यश्रौषी प्रतिज्ञातवान्। अत्र हेतु —प्रियैषी इति। मुनीना प्रिय कर्तुमिच्छ न्नित्यर्थ। तदनु च मुनिना वैष्णवे दिव्यचापे ब्रह्मास्त्रे च अपि दत्ते भूय स्त्व पथि पितृसुहृद जटायु प्रेक्ष्य मोदात् गोदातटान्ते पञ्चवट्या वधूट्या पुरा परिरमसि। तदनु तदानीम्। चकारस्त्वर्थे। मुनिना भगवता अगस्त्येन। वैष्णवे विष्णुसम्बन्धिनि। दिव्यचापे दिव्ये धनुषि। चकार अपिशब्दश्च समुच्चये। दत्ते वितीर्ण सति। भूय अनन्तरम्। त्व श्रीराम। पथि मार्गे। पितृसुहृद पितुर्दशरथस्य सुहृद वल्लभम्। जटायु जटायुरिति प्रसिद्ध पक्षिराजम्। प्रेक्ष्य दृष्ट्वा। मोदात् सन्तोषात् गोदातटान्ते गोदावरीनदीतीरे। पञ्चवट्या पञ्चवटीति प्रसिद्धे देशविशेषे। वधूट्या प्रियया सह। पुरा परिरमसि स्वैर न्यवस। पुराशब्दयोगात् भूते लट्॥

अथ रावणवधबीजभूत शूर्पणखावृत्तान्तमाह—

प्राप्ताया शूर्पणख्या मदनचलधृतेरर्थनैर्निस्सहात्मा
ता सौमित्रौ विसृज्य प्रबलतमरुषा तेन निर्लूननासाम्।

दृष्ट्वैनां रुष्टचित्तं खरमभिपतितं दूषणं च त्रिमूर्धं
व्याहिंसीराशरानप्ययुतसमधिकांस्तत्क्षणादक्षतोष्मा ॥ ८ ॥

**प्रासाया इति ॥** त्वं मदनचलधृतेः प्रासायाः शूर्पणख्याः अर्थनैः निस्सहात्मा तां सौमित्रौ विसृज्य प्रबलतमरुषा तेन निर्लूननासाम् एनां दृष्ट्वा रुष्टचित्तम् अभिपतितं खरं दूषणं त्रिमूर्धं च अयुतसमधिकान् आशरान् अपि तत्क्षणात् व्याहिंसीः। त्वं श्रीराममूर्तिः। मदनचलधृतेः मदनेन कामेन चला चञ्चला धृतिर्धैर्यं यस्यास्तस्याः। प्रासायाः स्वसमीपमागतायाः। शूर्पणख्याः शूर्पणखाभिधानाया रावणस्य स्वसुः। अर्थनैः पतिर्मे भवेति पुनः पुनः प्रार्थनैः। निस्सहात्मा निस्सहचेताः। ता शूर्पणखाम्। सौमित्रौ लक्ष्मणे। विसृज्य। ममेयं भार्या सीता सर्वदा समीपवर्तिनी, तस्मान्न तव स्वीकारो युक्तः, मम भ्राता लक्ष्मणोऽत्र समीपे वर्तते, स च भार्याविहीनस्तं वरयस्वे त्युक्त्वा परित्यज्येत्यर्थः। प्रबलतमरुषा सीतां पीडयितुमुद्यतां शूर्पणखां दृष्ट्वा अधिकतरं जातकोपेन। तेन लक्ष्मणेन। निर्लूननासां निकृत्तनासिकाम्। एनां शूर्पणखाम्। दृष्ट्वा विलोक्य। रुष्टचित्तं प्रकुपितम्। अभिपतितम् अभिमुखं योद्धुमागतम्। खरो दूषण इति च नाम। त्रिमूर्धं त्रिशिर.संज्ञितम्। चकारस्समुच्चये। अयुतसमधिकान् चतुर्दशसहस्राणीत्यर्थ। आशरान् खरानु यायिनो राक्षसान्। अपिस्समुच्चये। तत्क्षणात् तस्मिन्नेव क्षणे। यामार्धे नेति यावत्। व्याहिंसीर्विहिंसितवानसि। ननु कथमेकेन राक्षसानां चतुर्दश सहस्राणि यामार्धेन विहिंसितुं शक्यत इत्याशङ्कायामाह—अक्षतोष्मा इति। अक्षतः अप्रतिहतः ऊष्मा तेजो यस्य सः॥

मारीचवधमाह—

सोदर्याप्रोक्तवार्ताविवशदशमुखादिष्टमारीचमाया-
सारङ्गं सारसाक्ष्या स्पृहितमनुगतः प्रावधीर्बाणघातम्।
तन्मायाक्रन्दनिर्यापितभवदनुजां रावणस्तामहार्षी-
त्तेनार्तोऽपि त्वमन्तः किमपि मुदमधास्तद्वधोपायलाभात् ॥ ९ ॥

सोदर्येति॥ त्व सोदर्याप्रोक्तवार्ताविवशदशमुखादिष्टमारीचमायासारङ्गम् अनुगत बाणघात प्रावधी । त्व श्रीरामदेव । सोदर्याप्रोक्तवार्ताविवशदशमुखादिष्टमारीचमायासारङ्ग सोदर्यया स्वस्रा प्रोक्ता कथिता या सीताया सौन्दर्यातिशयस्य रामस्यातिमानुषानुभावस्य च वार्ता वृत्तान्त तया । तच्छ्रवणेनेत्यर्थ । विवश मनसिजशरप्रहारेण रामातिमानुषानुभावचिन्तया च विधुर स चासौ दशमुखस्तेनादिष्ट नियुक्त मारीचमेव मायासारङ्ग मायामृगम् । अनुगत अनुयात । बाणघात यथा भवति तथा प्रावधी बाणेन व्याहिंसीरित्यर्थ । भगवतो मायामृगानुधावने हेतुमाह—सारसाक्ष्या स्पृहितमिति । सारसाक्ष्या सीतया स्पृहित प्रहीतुमभिरुचितम् । अथ सीतापहरणमाह—रावण तामहार्षीत् इति । ता सीताम् । अहार्षीत् धृतवान् । ननु मृगमनुगन्तुमुद्यतेन रामेण सीताया सरक्षणाय नियुक्ते लक्ष्मणे जाग्रति कथ रावण सीतामपहर्तुं शशाकेत्याशङ्कायामाह—तन्मायाक्रन्दनिर्यापितभवदनुजामिति । तस्य मारीचस्य यो मायाक्रन्द मायया व्याजेनाक्रन्दो रोदन हा वत्स लक्ष्मण राक्षसैर्हन्यमान मा त्रायस्वेत्येव रूप तेन हेतुना निर्यापित रामस्य समीप प्रति प्रेषितो भवता रामस्यानुजो लक्ष्मणो यया ताम् । लक्ष्मणस्य तत्सांनिध्यानादिति भाव । त्व तेन आर्त अपि तद्वधापायलाभात् अन्त किमपि मुदम् अधा । त्व श्रीराम । तेन सीतापहरणेन आर्त अतीव दु खित । अविविराधे । तद्वधापायलाभात् तस्य रावणस्य यो वधापायस्तस्य लाभात् । अन्त हृदये । किमपि किंचित् । मुद हर्षम् । अधा धृतवानसि ॥

अथ जटायुष सीतावृत्तान्तावगममाह—

भूयस्तन्वीं विचिन्वन्नहृत दशमुखस्त्वद्वधू मद्वधेनेत्युक्त्वा याते जटायौ दिवमथ सुहृदः प्रातनो प्रेतकार्यम् ।
गृह्णान त कबन्ध जघनिथ शबरीं प्रेक्ष्य पम्पातटे त्व सम्प्राप्तो वातसूनु भृशमुदितमना पाहि वातालयेश ॥ १० ॥

भूय इति॥ भूय तन्वीं विचिन्वन् त्वम् इति उक्त्वा जटायौ दिव याते अथ सुहृद प्रेतकार्य मातना । भूय अनन्तरम् । तन्वीं सीताम् ।

विचिन्वन् अन्वेषयन् । त्वं श्रीरामः । इति अनेन प्रकारेण । उक्त्वा निगद्य । जटायौ तन्नाम्नि पक्षिराजे । दिवं स्वर्गम् । याते गते । मृते सतीत्यर्थः । अथ अनन्तरम् । सुहृदः मित्रस्य जटायोः । प्रेतकार्यं शवदहनजलाञ्जलि दानादिकम् । प्रातनोः प्रकर्षेण शास्त्रोक्तेन विधिना कृतवानसि । जटायो रुक्तिप्रकारमाह—दशमुखः मद्वधेन त्वद्वधूमहृत इति । दशमुखः रावणः । मद्वधेन मम वधेन हेतुना । अन्यथा रावणः सीतामपहर्तुं न शक्नुयादिति भावः । त्वद्वधूं तव वधूं सीताम् । अहृत हृतवान् । सीतां हृत्वा विहायसा गच्छन् रावणो मध्येमार्गं निरुध्य युध्यतो मम पक्षौ छित्वा मां भूमौ निपात्य सीतां नीतवानित्यर्थः । अथ कबन्धवधमाह—त्वं तं कबन्धं जघनिथ इति । तं प्रसिद्धम् । कबन्धं तन्नामानं राक्षसम् । जघनिथ हिंसितवानसि । कबन्धवधे हेतुमाह—गृह्णानमिति । योजनायताभ्यां बाहुभ्यामात्मानं गृहीत्वा कुक्षौ प्रक्षेप्तुमुद्यतमित्यर्थः । भगवतो रामस्य शबरीदर्शनं हनुमत्सङ्गमं चाह—हे वातालयेश शबरीं प्रेक्ष्य पम्पातटे वातसूनुं सम्प्राप्तः भृशमुदित मनाः त्वं पाहि इति । वातालयेश गुरुवायुपुरनाथ । शबरीं तन्नामधेयां कामपि धर्मचारिणीम् । प्रेक्ष्य दृष्ट्वा । पम्पातटे पम्पायाः पम्पाभिधानस्य सर सस्तटे तीरे । वातसूनुं वातात्मजं श्रीहनुमन्तम् । सम्प्राप्तः प्राप्तवान् । अत एव भृशमुदितमनाः भृशमत्यर्थं मुदितं सन्तुष्टं मनो यस्य सः । त्वं श्रीरामः । पाहि मामनन्यशरणं त्रायस्वेत्यर्थः ॥

इति श्रीरामचरिते पम्पासरसि हनूमत्समागमवर्णनं

चतुस्त्रिंशद्दशकम् ॥

## अथ पञ्चत्रिंशदशकम् ॥

अथ भगवता रामस्य सुग्रीवसख्यादिकमाह—

नीतः सुग्रीवमैत्रीं तदनु हनुमता दुन्दुभेः कायमुच्चैः
  क्षिप्त्वाऽङ्गुष्ठेन भूयो लुलुविथ युगपत् पत्रिणा सप्त सालान् ।
हत्वा सुग्रीवघातोद्यतमतुलबलं वालिनं व्याजवृत्त्या
  वर्षावेलामनैषीर्विरहतरलितस्त्वं मतङ्गाश्रमान्ते ॥ १ ॥

नीत इति ॥ त्वं तदनु हनुमता सुग्रीवमैत्रीं नीतः उच्चैः दुन्दुभेः कायम् अङ्गुष्ठेन क्षिप्त्वा भूयः पत्रिणा युगपत् सप्त सालान् लुलुविथ । हे श्रीराम । तदनु तस्मिन्नवसरे । सुग्रीवमैत्रीं सुग्रीवस्य तन्नाम्नः वानरेश्वरस्य । मैत्रीं सख्यम् । नीतः प्रापितः । उच्चैः उन्नतम् । दुन्दुभेः तन्नाम्नः असुरस्य । कायं शरीरम् । अस्थिकूटमिति यावत् । अङ्गुष्ठेन पादाङ्गुष्ठेन क्षिप्त्वा सुदूरं प्रक्षिप्य । भूयः अनन्तरम् । पत्रिणा शरेण । युगपत् समम् । सालान् वृक्षविशेषान् । लुलुविथ न्यकृन्तः । दुन्दुभिकायक्षेपः सप्तसालयुगपद्भेदनञ्च सुग्रीवस्य विश्वासं जनयितुमिति ज्ञेयम् । अथ वालिवधादिकमाह—त्वं वालिनं व्याजवृत्त्या हत्वा मतङ्गाश्रमान्ते विरहतरलितः वर्षावेलाम् अनैषीः इति । वालिनं तन्नामानं वानरेश्वरं सुग्रीवस्य ज्येष्ठभ्रातरम् । व्याजवृत्त्या वृक्षगात्मानं पिधायेत्यर्थः । हत्वा निहत्य । मतङ्गाश्रमान्ते मतङ्गस्य तन्नाम्नः महामुनेराश्रमस्य आश्रमभूमेरन्ते मध्ये । विरहतरलितः विरहेण सीतावियोगेन तरलितः दीनमानसः । वर्षावेलां वर्षासमयम् । अनैषीः नीतवानसि । वालिवधकारणमाह —सुग्रीवघातोद्यतमिति । सुग्रीवस्य घातं हिंसनं तत्रोद्यतं कृतोद्यमम् । व्याजेन वालिनिग्रहे हेतुं दर्शयति—अतुलबलमिति । न विद्यते तुला यस्य तदतुलं बलं पराक्रमो यस्य तथाविधम् । अभिमुखं स्थित्वा वालिनं हन्तुं केनाप्यशक्यत्वादिति भावः ॥

अथ सीतान्वेषणमाह—

सुग्रीवेणानुजोक्त्या सभयमभियता व्यूहितां वाहिनीं ता-
मृक्षाणां वीक्ष्य दिक्षु द्रुतमथ दयितामार्गणायावनम्राम् ।
सन्देशं चाङ्गुलीयं पवनसुतकरे प्रादिशो मोदशाली
मार्गे मार्गे ममार्गे कपिभिरपि तदा त्वत्प्रिया सप्रयासैः ॥ २ ॥

सुग्रीवेणेति ॥ अथ त्वम् अनुजोक्त्या सभयम् अभियता सुग्रीवेण व्यूहितां द्रुतं दिक्षु दयितामार्गणाय अवनम्रां ताम् ऋक्षाणां वाहिनीं वीक्ष्य मोदशाली सन्देशम् अङ्गुलीयं च पवनसुतकरे प्रादिशः । अथ अनन्तरम् । त्वं श्रीरामः । अनुजोक्त्या अनुजस्य लक्ष्मणस्य उक्त्या कुतो भवान् सीतान्वेषणं करिष्यामीति प्रतिश्रुत्य अधुना तद्विस्मृत्य भोगान् भुञ्जानो वर्तते । यदि न बालिनः पदवीं गन्तुमिच्छति, तर्हि सत्वरमेव सीतामन्वेष्टुमुद्युक्तो भवतु इत्येवंप्रकारेण वचनेन । भयेन सह वर्तत इति सभयं यथा भवति तथा । अभियता आगच्छता । व्यूहितां तस्मात्तस्मात् प्रदेशादानीयैकत्रावस्थापिताम् । द्रुतं झटिति । दयितामार्गणाय दयितायाः सीताया मार्गणाय अन्वेषणाय । अवनम्राम् अवनताम् । सन्नद्धामिति यावत् । तां प्रसिद्धाम् । ऋक्षाणां कपीनाम् । वाहिनीं सेनाम् । वीक्ष्य दृष्ट्वा । अत एव मोदशाली प्रमुदितमनाः । सन्देशं सीतासमीपेवक्तव्यमर्थम् । अङ्गुलीयं मुद्रिकाम् । चकारस्समुच्चये । सीतायाः प्रत्ययार्थमिति भाव । पवनसुतकरे पवनसुतस्य श्रीहनुमत. करे हस्ते । प्रादिश. दत्तवानसि । तदा कपिभिः अपि सप्रयासैः त्वत्प्रिया मार्गे मार्गे ममार्गे । तदा तस्मिन्नवसरे । कपिभिः वानरैः । अपिस्त्वर्थे । सप्रयासैः सयत्नै । त्वत्प्रिया तव प्रिया सीता । मार्गे पथि । द्विरुक्त्या सर्वेष्वपि मार्गेष्विति दर्शितम् । ममार्गे अन्विष्टा ॥

हनुमान् लङ्कायां सीतामद्राक्षीदित्याह—

तद्वार्ताकर्णनोद्यद्गरुदुरुजवसम्पातिसम्पातिवाक्य-
प्रोत्तीर्णार्णोधिरन्तर्नगरि जनकजां वीक्ष्य दत्त्वाङ्गुलीयम् ।

प्रक्षुद्योद्यानमक्षक्षपणचणरणः सोढबन्धो दशास्यं
दृष्ट्वा प्लुष्ट्वा च लङ्कां झटिति स हनुमान् मौलिरत्नं ददौ ते ॥ २ ॥

त्वद्वार्तेति ॥ सः हनुमान् अन्तर्नगरि जनकजां वीक्ष्य अङ्गुलीयं दत्वा उद्यानं प्रक्षुद्य अक्षक्षपणचणरणः सोढबन्धः दशास्यं दृष्ट्वा लङ्कां प्लुष्ट्वा च झटिति ते मौलिरत्नं ददौ। सः प्रसिद्धवीर्यः। अथवा यस्मै भगवान् रामः सन्देशमङ्गुलीयं च प्रायच्छत्, स इत्यर्थः। अन्तर्नगरि लङ्कानगर्या अभ्यन्तरवर्तिन्यामशोकवनिकायाम्। जनकजां सीताम्। वीक्ष्य दृष्ट्वा। अङ्गुलीयं श्रीरामदेवेन दत्तां मुद्रिकाम्। दत्वा प्रदाय। उद्यानमशोकवनिकाम्। प्रक्षुद्य चूर्णयित्वा। अक्षक्षपणचणरण. अक्षक्षपणेन अक्षस्य अक्षनाम्नो रावणात्मजस्योद्यानभञ्जनजनितेनामर्षेणात्मना सह युद्ध्यतः क्षपणेन वधेन प्रसिद्धो रणो युद्ध यस्य स। अक्षं निहत्येत्यर्थः। सोढबन्ध. सोढः शापस्मरणात्मर्षितो बन्धः सोदरवधप्रकुपितेन शक्रजिता प्रयुक्तेन ब्रह्मास्त्रेण कृतं बन्धनं येन स.। दशास्यं रावणम्। दृष्ट्वा विलोक्य। लङ्का लङ्कानगरीम्। प्लुष्ट्वा रावणप्रेरितनिशाचरोद्दीपितलाङ्गूलोज्ज्वलत्पावकेन दग्ध्वा। झटिति सत्वरम्। ते तुभ्यम् श्रीरामाय। मौलिरत्नं प्रत्ययार्थं सीतया दत्तं चूडामणिम्। ददौ दत्तवान्। ननु कथं सीता लङ्कापुरीमध्यवर्तिनीत्यवागच्छन्मारुतिरित्यत्राह—त्वद्वार्ताकर्णनोद्यद्गुरुजवसम्पातिसम्पातिवाक्यप्रोत्तीर्णार्णोधि. इति। तव वार्ता त्वद्वार्ता श्रीरामवृत्तान्तस्तस्या आकर्णनेन श्रवणेन उद्यन्तौ उद्गतौ गरुतौ पक्षौ यस्य सः त्वद्वार्ताकर्णनोद्यद्गरुत्, उरुजवसम्पाती उरुजवेन महावेगेन सम्पदनशीलश्च य सम्पातिः तन्नामा पक्षिराजस्तस्य उपर्युड्डीय सीतां दृष्टवतो वाक्येन लङ्कायां वर्तते सीतेत्येवं रूपेण प्रोत्तीर्णः प्रकर्षेणोत्प्लुत्य तीर्णः अतिक्रान्तः अर्णोधिस्समुद्रो येन तथाभूत. सन्॥

अथ भगवतो रामस्य जैत्रयात्रामाह—

त्वं सुग्रीवाङ्गदादिप्रबलकपिचमूचक्रविक्रान्तभूमी-
चक्रोऽभिक्रम्य पारेजलधि निशिचरेन्द्रानुजाश्रीयमाणः।

तत्प्रोक्तां शत्रुवार्तां रहसि निशमयन् प्रार्थनापार्थ्यरोष-
प्रास्ताग्नेयास्त्रतेजस्त्रसदुदधिगिरा लब्धवान् मध्यमार्गम् ॥ ४ ॥

त्वमिति ॥ त्वं सुग्रीवाङ्गदादिप्रबलकपिचमूचक्रविक्रान्तभूमीचक्रः अभिक्रम्य पारेजलधि निशिचरेन्द्रानुजाश्रीयमाणः रहसि तत्प्रोक्तां शत्रुवार्तां निशमयन् प्रार्थनापार्थ्यरोषप्रास्ताग्नेयास्त्रतेजस्त्रसदुदधिगिरा मध्यमार्गं लब्धवान् । त्वं श्रीरामः । सुग्रीवाङ्गदादिप्रबलकपिचमूचक्रविक्रान्तभूमीचक्रः सुग्रीवाङ्गदादीनां सुग्रीवाङ्गदप्रभृतीनां प्रबलानां प्रकृष्टबलशालिनां कपीनां वानराणां यच्चमूचक्रं सेनामण्डलं तेन विक्रान्तमाक्रान्तं भूमिचक्रं भूमण्डलं येन सः । अभिक्रम्य गत्वा । पारेजलधि जलधेः पारे । समुद्रतीर इत्यर्थः । निशिचरेन्द्रानुजाश्रीयमाणः निशिचरेन्द्रस्य राक्षसेन्द्रस्य रावणस्य अनुजेन सोदरेण विभीषणेन आश्रीयमाणः शरणार्थमभ्यर्थितः । रहसि एकान्ते । तत्प्रोक्तां तेन विभीषणेन प्रोक्तां प्रकर्षेण सविस्तरमुक्तां कथिताम् । शत्रुवार्तां शत्रोः रावणस्य वार्तां वृत्तान्तम् । निशमयन् शृण्वन् । प्रार्थनापार्थ्यरोषप्रास्ताग्नेयास्त्रतेजस्त्रसदुदधिगिरा प्रार्थनाया याच्ञाया आपार्थ्येन वैफल्येन हेतुना यो रोषस्तेन निमित्तेन प्रास्तस्य क्षिप्तस्य आग्नेयास्त्रस्य तेजसा त्रसतः भीतस्य उदधेः समुद्रभर्तुर्वरुणस्य गिरा वाचा । मध्यमार्गं समुद्रमध्यगतं मार्गम् । लब्धवान् अलभथाः ॥

समुद्रे सेतुबन्धनादिकमाह—

कीशैराशान्तरोपाहृतगिरिनिकरैः सेतुमाधाप्य यातो
यातून्यामर्द्य दंष्ट्रानखशिखरिशिलासालशस्त्रैः स्वसैन्यैः ।
व्याकुर्वन् सानुजस्त्वं समरभुवि परं विक्रमं शक्रजेत्रा
वेगान्नागास्त्रबद्धः पतगपतिगरुन्मारुतैर्मोचितोऽभूः ॥ ५ ॥

कीशैरिति ॥ त्वम् आशान्तरोपाहृतगिरिनिकरैः सेतुम् आधाप्य यातः दंष्ट्रानखशिखरिशिलासालशस्त्रैः स्वसैन्यैः यातूनि आमर्द्य सानुजः समरभुवि परं विक्रमं व्याकुर्वन् वेगात् शक्रजेत्रा नागास्त्रबद्धः पतगपतिगरुन्मारुतैः मोचितः अभूः । त्वं श्रीरामः । आशान्तरोपाहृतगिरिनिकरैः आशान्तरेभ्यो दिगन्तरेभ्यः

उपाहृता आनीता गिरिनिकरा पर्वतसमूहा यैस्तै । कीशै वानरै आधाप्य कारयित्वा । वारिधावित्यर्थाल्लभ्यते । यात गत । दंष्ट्रानखशिखरिशिलासाल शस्त्रै दंष्ट्राश्च नखाश्च शिखरिणश्च शिलाश्च सालाश्च शस्त्राण्यायुधानि येषा तै । दंष्ट्रा दन्तविशेषा । नखा नखरा शिखरिण पर्वता । शिला दृषद । साला वृक्षविशेषा । स्वसैन्यै स्वस्य सैन्यै । यातूनि रक्षासि । आमर्द्य आ समन्तान्मर्दयित्वा । अनुजेन सह वर्तत इति सानुज । समरभुवि रणाङ्गणे । परमतिशयितम् । विक्रमं पराक्रमम् । व्याकुर्वन् प्रकाशयन् । वेगात् झटिति । शक्रजेत्रा इन्द्रजिता । नागास्त्रबद्ध नागास्त्रेण बद्ध । पतगपतिगरुन्मारुतै पतगपतेर्गरुडस्य गरुत पक्षस्य मारुतैर्वातै । मोचित नागास्त्रबन्धनाद्विमोचीत ॥

इन्द्रजिद्वधमाह—

सौमित्रिस्त्वत्र शक्तिप्रहृतिगलदसुर्वातजानीतशैल
घ्राणात् प्राणानुपेतो व्यकृणुत कुसृतिश्लाघिन मेघनादम् ॥
मायाक्षोभेषु वैभीषणवचनहृतस्तम्भनः कुम्भकर्णं
सम्प्राप्तं कम्पितोर्वीतलमखिलचमूभक्षिण व्यक्षिणोस्त्वम् ॥ ६ ॥

सौमित्रिरिति ॥ सौमित्रि तु अत्र शक्तिप्रहृतिगलदसु वातजानीतशैलघ्राणात् प्राणान् उपेत मायाक्षोभेषु वैभीषणवचनहृतस्तम्भन कुसृतिश्लाघिन मेघनाद व्यकृणुत। सौमित्रि सुमित्रात्मजा लक्ष्मण । तुर्विशेषे। अत्र रणमध्ये। शक्तिप्रहृतिगलदसु शक्तिप्रहृत्या शक्तिप्रहारेण गलन्तो निर्गता असव प्राणा यस्य स । वातजानीतशैलघ्राणात् वातजेन हनुमता आनीतस्य शैलस्य औषधिपर्वतस्य घ्राणात् घ्राणनात् प्राणानसून् । उपेत प्राप्त । मायाक्षोभेषु मायाविकारेषु। वैभीषणवचनहृतस्तम्भन वैभीषणवचनेन विभीषणवचसा हृत निवारित स्तम्भनम् अचलता मायानिरासदर्शनेन युद्धव्यापारानिवृत्तिर्यस्य स । कुसृतिश्लाघिन कुसृती शाठ्यानि श्लाघितु शीलमस्येति तथोक्तम् । मर्यादामतिक्रम्य शाठ्येन युद्धकर्त्तारमित्यर्थ । एतेनास्य

दुर्जयत्वमुक्तम्। 'मेघनादमिन्द्रजितम्। व्यकृणुत जघान। अथ कुम्भकर्णवधमाह—त्वं कम्पितोर्वीतलं सम्प्राप्तम् अखिलचमूभक्षिणं कुम्भकर्णं 'व्यक्षिणोः इति। त्वं श्रीरामः। कम्पितोर्वीतलं कम्पितं चालितमुर्वीतलं भूतलं येन तम्। अखिलचमूभक्षिणं समस्तसैन्यादिनम्। कुम्भकर्णं तन्नामानं रावणानुजम्। व्यक्षिणोः व्याहिंसीः॥

अथ रावणवधमाह—

गृह्णन् जम्भारिसम्प्रेषितरथकवचौ रावणेनाभियुद्ध्यन्
ब्रह्मास्त्रेणास्य भिन्दन् गलततिमबलामग्निशुद्धां प्रगृह्णन्।
देवश्रेणीवरोज्जीवितसमरमृतैरक्षतैरृक्षसङ्घै-
र्लङ्काभर्त्रा च साकं निजनगरमगाः सप्रियः पुष्पकेण ॥ ७ ॥

गृह्णन्निति॥ त्वं जम्भारिसम्प्रेषितरथकवचौ गृह्णन् रावणेन अभियुद्ध्यन् अस्य गलततिं ब्रह्मास्त्रेण भिन्दन् अग्निशुद्धामबलां प्रगृह्णन् अक्षतैः ऋक्षसङ्घैः लङ्काभर्त्रा च साकं सप्रियः पुष्पकेण निजनगरम् अगाः। त्वं श्रीरामाभिधानो हरिः। जम्भारिसम्प्रेषितरथकवचौ जम्भारिणा देवेन्द्रेण सम्प्रेषितौ अनुप्रेषितौ रथकवचौ रथं स्यन्दनं कवचं वर्म च। गृह्णन् स्वीकुर्वन्। अभियुद्ध्यन् अभिमुखं युद्ध्यन्। अस्य रावणस्य। गलततिं कण्ठसमूहम्। दशकन्धरत्वादिति भावः। भिन्दन् निकृन्तन्। रावणं हत्वेत्यर्थः। अग्निशुद्धाम् अग्नौ शुद्धाम्। अबलां सीताम्। प्रगृह्णन् प्रकर्षेण सादरं गृह्णन्नाददानः। अक्षतैः अपगतानि क्षतानि शस्त्रप्रहारजनिता व्रणा येभ्यस्तैः। अन्यूनसंख्यैरिति वा। ऋक्षसङ्घैर्वानरसमूहैः। लङ्काभर्त्रा विभीषणेन। चकारस्समुच्चये। साकं सह। सप्रियः प्रियया सीतया सहितः। पुष्पकेण पुष्पकाख्येन विमानेन। निजनगरं स्वनगरीमयोद्ध्याम्। अगाः गतवानसि। ननु बहूनां वानराणां युद्धमध्ये राक्षसैर्विहिंसितनया कथं वानरसङ्घानामन्यूनसंख्यतेत्याशङ्कायामाह—देवश्रेणीवरोज्जीवितसमरमृतैः इति। देवश्रेणीनां सुरसङ्घानां वरेण अनुग्रहेण उज्जीविताः सजीवाः कृतास्तादृशैः समरे

युद्धे मृतैर्गतप्राणै । लोकत्रयकण्टकस्य रावणस्य वधेनातीव तुष्टैर्देवसङ्घै रुज्जीवितैरित्यर्थः ॥

एव रावणनिग्रह वर्णयित्वाऽनन्तर भगवतो रामस्य राज्याभिषेक माह—

प्रीतो दिव्याभिषेकैरयुतसमधिकान् वत्सरान् पर्यरंसी
मैथिल्या पापवाचा शिव शिव किल ता गर्भिणीमभ्यहासीः ।
शत्रुघ्नेनार्दयित्वा लवणनिशिचर प्रार्दयः शूद्रपाश
तावद्वाल्मीकिगेहे कृतवसतिरुपासूत सीता सुतौ ते ॥ ८ ॥

**प्रीत इति** ॥ त्व दिव्याभिषेकै प्रीत अयुतसमधिकान् वत्सरान् पर्यरंसी । त्व श्रीराम । दिव्याभिषेकै दिव्यैर्दिव्योदककल्पितैरभिषेकैरभिषेचनै । राक्षसेन्द्रै कपीन्द्रैश्च सरित्समुद्रेभ्य सरसीभ्यश्चानीतैर्दिव्योदकैरभिषेक।दित्यर्थ । प्रीत सन्तुष्ट । अयुतसमधिकान् अयुताभ्यधिकान् । वत्सरान् सवत्सरान् । अत्यन्तसयोगे द्वितीया । पर्यरंसी अरमथा । भगवत सीतापरित्यागमाह— त्व मैथिल्या पापवाचा शिव शिव गर्भिणीं तामभ्यहासी किल इति । मैथिल्या विदेहराजदुहितरि । अनेन सीताया अत्यन्तशुद्धत्व ध्वन्यते । पाप वाचा अनभिज्ञजनकृतेन परगृहवासदूषणेन हेतुना । शिव शिवेति खेदातिशये । *गर्भिणीं ससत्त्वाम्* । अभ्यहासी त्यक्तवानसि । किलेति वार्तायाम् । त्व शत्रुघ्नेन लवणनिशिचरम् अर्दयित्वा शूद्रपाश प्रार्दय । लवणनिशिचर लवणाभिधान राक्षसम् । अर्दयित्वा घातयित्वा । स्वय शूद्रपाश कुत्सित शूद्रमुनिं शम्बूकाभिधानम् । तपस्यनधिकारित्वात्तस्य कुत्सितत्वम् । प्रार्दय विहिंसितवानसि । मृतस्य ब्राह्मणशिशो प्रत्युज्जीवनार्थमिति भाव । श्रीरामस्य पुत्रोत्पत्ति माह—तावत् वाल्मीकिगेहे कृतवसति सीता ते सुतौ उपासूत इति । तावत् तस्मिन्नवसरे । वाल्मीकिगेहे महामुनेर्वाल्मीकेराश्रमे । कृतवसति कृता वसतिर्वासो यया सा । ते तव । सुतौ पुत्रौ कुशलवाभिधानौ । उपासूत सुषुवे ॥

अथ भगवतो रामस्य स्वर्गारोहणमाह—

वाल्मीकेस्त्वत्सुतोद्गापितमधुरकृतेराज्ञया यज्ञवाटे
सीतां त्वय्याप्तुकामे क्षितिमविशदसौ त्वं च कालार्थितोऽभूः।
हेतोः सौमित्रिघाती स्वयमथ सरयूमग्ननिश्शेषभृत्यैः
साकं नाकं प्रयातो निजपदमगमो देव वैकुण्ठमाद्यम् ॥ ९ ॥

वाल्मीकेरिति ॥ त्वयि यज्ञवाटे त्वत्सुतोद्गापितमधुरकृतेः वाल्मीकेः आज्ञया सीतामाप्तुकामे असौ क्षितिमविशत् त्वयि श्रीरामे। यज्ञवाटे याग शालायाम्। त्वत्सुतोद्गापितमधुरकृतेः त्वत्सुताभ्यां तव पुत्राभ्यां कुशलवाभ्या मुद्गापिता उच्चैर्गापिता मधुरा मनोहरा कृतिः रामायणं येन तस्य। वाल्मीकेः तन्नाम्नो महामुनेः। आज्ञया नियोगेन। हेतौ तृतीया। आप्तुकामे प्राप्तुमि च्छति सति। असौ सीता। क्षितिं भूमिम्। अविशत् प्रविवेश। प्रार्थितया वसु न्धरया दत्तं विवरं प्राविशदित्यर्थः। त्वं च कालार्थितः अभूः। चकारः त्वर्थे। कालार्थितः कालेन यमेन अर्थितः स्वर्गारोहणाय प्रार्थितः। हे देव त्वं हेतोः सौमित्रिघाती अथ स्वयं सरयूमग्ननिश्शेषभृत्यैः साकं नाकं प्रयातः आद्यं निजपदं वैकुण्ठमगमः। देव प्रकाशमान। त्वं श्रीरामरूपेणावतीर्णो भगवान् हरिः। हेतोः स्वर्गारोहणबीजस्य। लाभायेति शेषः। सौमित्रिघाती लक्ष्मणं परित्यजन्। परित्यागस्य हिंसासदृशतया सौमित्रिघातीत्युक्तम्। अत्रायमर्थः—रहस्संवादिनोरावयोर्द्रष्टारं त्यक्ष्य इति धर्मराजस्य पुरस्तात् प्रति ज्ञाय रामस्तदनन्तरं प्राप्तं लक्ष्मणं प्रतिज्ञाभङ्गभयात्त्याजेति। अथ अनन्तरम्। सरयूमग्ननिश्शेषभृत्यैः सरय्वा तदाख्यायां नद्यां मग्नैः कृतनिमज्जनैः निश्शेषैः अखिलैर्भृत्यैश्च। साकं सह। नाकं स्वर्गम्। प्रयातः गत। आद्यं ब्रह्माण्डोत्पत्तेः पूर्वमपि विद्यमानम्। निजपदम् आत्मनो धाम। वैकुण्ठं वैकुण्ठलोकम्। अगमः गतवानसि ॥

ननु कथं भगवान् रामाभिधानो हरिरात्मारामः सीतावियोगेनार्तोऽभूत्, किमर्थं वा पापरहितां सीतामत्यजदित्याशङ्क्य परिहरति—

सोऽयं मर्त्यावतारस्तव खलु नियतं मर्त्यशिक्षार्थमेवं
विश्लेषार्तिर्निरागस्त्यजनमपि भवेत् कामधर्मातिसक्त्या ।
नो चेत् स्वात्मानुभूतेः क्व नु तव मनसो विक्रिया चक्रपाणे
स त्वं सत्त्वैकमूर्ते पवनपुरपते व्याधुनु व्याधितापान् ॥ १० ॥

सोऽयमिति ॥ स अयं मर्त्यावतारः खलु नियतं मर्त्यशिक्षार्थम्। सः प्रसिद्धः। अयं प्रदर्शितः। तव स्वतन्त्रेच्छस्य भगवतः। मर्त्यावतारः लीलया मनुष्यविग्रहपरिग्रहः। अनेन मायापरतन्त्राणां जीवानामिवानन्यपरतन्त्रस्य भगवतो लीलाविग्रहपरिग्रहेऽपि न संसारित्वप्रसक्तिरिति सूचितम्। खल्विति त्वर्थे। नियतं निश्चितम्। मर्त्यशिक्षार्थं मर्त्यान् बोधयितुम्। अत्रोपपत्तिमाह—एवं कामधर्मातिसक्त्या विश्लेषार्तिः निरागस्त्यजनमपि भवेदिति। एवम् एवं सति। कामधर्मातिसक्त्या कामश्च धर्मश्च कामधर्मौ तयोरतिसक्त्या अत्यासक्त्या। विश्लेषार्तिः विरहपीडा। निरागस्त्यजनं निरागसः निरपराधस्य त्यजनं त्यागः। कामातिसक्त्या विश्लेषार्तिः धर्मातिसक्त्या निरागसः अपि त्याग इत्यर्थः। अपिस्समुच्चये। यदि भगवताऽयं मनुष्यावतारो मानुषान् बोधयितुमेवाङ्गीकृतः, तर्हि कामातिसक्त्या विरहपीडा जायते, धर्मातिसक्त्या निरागसोऽपि त्यागः कर्तव्यः स्यादिति मनुष्यान् बोधयितुमेव प्रियावियोगेनार्तप्रलापादिकमपापायाः सीतायाः परित्यागश्च भगवतो रामस्योपपद्यत इत्यर्थः। अत्र विपक्षे बाधकमाह—हे चक्रपाणे नो चेत् तव मनसः विक्रिया क्व नु इति। चक्रपाणे चक्रं सुदर्शनम् अथवा कालरूपं चक्रं 'दुर्वारं द्वादशारम्' इत्यादिना वक्ष्यमाणं पाणौ करे यस्य स इति व्यधिकरणो बहुव्रीहिः। तथाविध। स्वाधीनकालेत्यर्थः। अनेन भगवतः संसारापादने कालोऽपि न प्रभुरिति सूचितम्। नो चेत् यदि नायमवतारो भगवता मर्त्यशिक्षार्थमङ्गीकृतः, तर्हीत्यर्थः। विक्रिया विकारः। क्व नु कुत्र वर्तते। न कुत्रापीत्यर्थः। अत्र हेतुमाह—स्वात्मानुभूतेः इति। स्वस्यात्मा स्वरूपमेवानुभूतिरनुभवो यस्य। स्वप्रकाशसंविद्रूपस्येति यावत्। अथ

प्रार्थयते—हे सत्त्वैकमूर्ते पवनपुरपते सः त्वं व्याधितापान् व्याधुनु इति। सत्त्वैकमूर्ते शुद्धसत्त्वस्वरूप। पवनपुरपते गुरुवायुपुरनाथ। सः श्रीरामरूपः। त्वं श्रीहरिः। व्याधितापान् रोगपीडाः। व्याधुनु अपाकुरु ॥

इति श्रीरामचरितवर्णनं
पञ्चत्रिंशद्दशकम् ॥

## षट्त्रिंशदशकम् ॥

*अथ भगवतो हरेरात्रेयावतारमाह—*

अत्रेः पुत्रतया पुरा त्वमनसूयायां हि दत्ताभिधो
जातः शिष्यनिबन्धतन्द्रितमनाः स्वस्थश्चरन् कान्तया ।
दृष्टो भक्ततमेन हेहयमहीपालेन तस्मै वरा-
नष्टैश्वर्यमुखान् प्रदाय ददिथ स्वेनैव चान्ते वधम् ॥ १ ॥

अत्रेरिति ॥ त्वं पुरा अत्रेः पुत्रतया अनसूयायां दत्ताभिधः जातः हि। त्वं श्रीवैकुण्ठः। पुरा पूर्वम्। अत्रेस्तन्नाम्नो मुनीश्वरस्य। पुत्रतया पुत्रत्वेन। अनसूयायाम् अनसूयाभिधानायामत्रेर्धर्मपत्न्याम्। दत्ताभिधः दत्तो मयाऽहमिति भगवतोक्तत्वाद्दत्त इत्यभिधा नाम यस्य सः। जातः अवतीर्णः। हीति प्रसिद्धौ। स्वस्थः कान्तया चरन् त्वं भक्ततमेन हेहयमहीपालेन दृष्टः तस्मै अष्टैश्वर्यमुखान् वरान् प्रदाय अन्ते स्वेन एव वधं च ददिथ। स्वस्थः निरुद्यमः। कान्तया प्रियया सह। चरन् सञ्चरन्। मधुमदविवशभावं प्रदर्श्य आत्मारामश्चरन्नित्यर्थः। अत्र हेतुः—शिष्यनिबन्धतन्द्रितमनाः इति। शिष्याणां धेननिबन्धः अनुवर्तनेन तन्द्रितं निरुत्साहं कृतं मनो यस्य सः। शिष्यनिबन्धेन

समाधिभङ्गभयादिति भाव । त्व दत्तात्रेय । भक्ततमेन अतीवात्मनि भक्तेन। हैहयमहीपालेन श्रीकार्तवीर्यार्जुनेन । दृष्ट अवलोकित । तस्मै हैहयमहीपालाय। अष्टैश्वर्यमुखान् अष्टैश्वर्यप्रभृतीन्। वरान् अनुग्रहान्। प्रदाय दत्वा। अन्ते अवसाने। आत्मना। एवकारेणान्यस्य व्यवच्छेद। वध निग्रहम्। चकार समुच्चये। इत्थि दत्तवान् ॥

अथ भगवत परशुरामावतारमाह—

मर्त्यं कर्तुमथार्जुनस्य च वर तच्छक्तिमात्रानत
ब्रह्मद्वेषि तदाऽखिल नृपकुल हन्तु च भूमेर्भरम्।
सञ्जातो जमदग्नितो भृगुकुले त्व रेणुकाया हरे
रामो नाम तदात्मजेष्ववरज पित्रोरधा सम्मदम् ॥ २ ॥

मर्त्यमिति ॥ हे हरे अथ त्व भृगुकुले जमदग्नित रेणुकाया राम नाम तदात्मजेषु अवरज सञ्जात पित्रो सम्मदम् अधा। हरे विष्णो। अथ अनन्तरम्। भृगुकुले मुनीश्वरस्य भृगोर्वंशे। जमदग्नित जमदग्निनाम्ना महामुने। रेणुकाया तन्नामधेयाया जमदग्नेर्धर्मपत्न्याम्। नामेति प्रसिद्धौ। तदात्मजेषु तस्य जमदग्नेरात्मजेषु पुत्रेषु। अवरज कनिष्ठ। सञ्जात अव तीर्ण। पित्रो मातु पितुश्च। सम्मद सन्तोषम्। अधा धृतवानसि। भग वता भार्गवावतारस्य प्रयोजनमाह—अर्जुनस्य वर मर्त्य कर्तुं च, अखिल नृपकुल हन्तु च इति। अर्जुनस्य कार्तवीर्यस्य। वरम् आत्मनैवान्ते वधम्। अखिल समस्तम्। नृपकुल राजवशम्। हन्तुम् उन्मूलयितुम्। चकारौ समुच्चये। राजवशनिग्रहे हेतुमाह—भूमे भरमिति। भूमे पृथिव्या। भर भाराय माणम्। अत्र हेतु—ब्रह्मद्वेषि इति। ब्रह्म वेदराशि, ब्राह्मणसमूह इति वा, तत् द्वेष्टि पीडयतीति ब्रह्मद्वेषि। अर्जुने पृथिवीं प्रशासति नृपा नातीव ब्रह्म द्रोह चक्रुरित्याह—तदा तच्छक्तिमात्रानतमिति। तदा अर्जुने महीं प्रशा सति। तच्छक्तिमात्रानत तच्छक्तिमात्रेण तस्यार्जुनस्य शक्ति पराक्रम तन्मा त्रेण आनतमीषच्छमितब्रह्मापद्रवम् ॥

भगवतो भार्गवस्याशङ्कितं पितृनियोगानुष्ठानादिकमाह—

लब्धाम्नायगणश्चतुर्दशवया गन्धर्वराजे मना-
　गासक्तां किल मातरं प्रति पितुः क्रोधाकुलस्याज्ञया ।
ताताज्ञातिगसोदरैः सममिमां छित्त्वाऽथ शान्तात् पितु-
　स्तेषां जीवनयोगमापिथ वरं माताथ तेऽदाद्वरान् ॥ ३ ॥

**लब्धाम्नायगण इति ॥** लब्धाम्नायगणः चतुर्दशवयाः त्वं पितुः आज्ञया ताताज्ञातिगसोदरैः समम् इमां छित्वा अथ शान्तात् पितुः तेषां जीवनयोगं वरम् आपिथ। लब्धाम्नायगणः शब्दतोऽर्थतश्च गृहीतसमस्तवेद राशिः। चतुर्दशवयाः चतुर्दश वयांसि यस्य सः। त्वं श्रीभार्गवरामः। पितुः तातस्य जमदग्नेः। आज्ञया नियोगेन। ताताज्ञातिगसोदरैः तातस्याज्ञां मातृवधनियोगमतिक्रम्य गच्छन्तीति ताताज्ञातिगाः। इदं च विशेषणं पितु र्वधाज्ञायां हेतुतयोपात्तम्। सोदराः ज्येष्ठभ्रातरस्तैः। समं सह। इमां मातरम्। छित्वा खड्गेन शीर्षाण्युत्कृत्य। अथ अनन्तरम्। शान्तात् प्रशान्तकोपात्। पितुः जमदग्नेः। तेषां मातुर्भ्रातॄणां च। जीवनयोगं जीवनेन जीवितेन योगं सम्बन्धम्। वरमनुग्रहम्। आपिथ प्राप्तवान्। ननु भगवान् जमदग्निः कुतो रेणुकां हन्तुं नियुक्तवानिति चेत्तत्राह—मातरं प्रति क्रोधाकुलस्य इति। मातरं जननीं रेणुकाम्। प्रति उद्दिश्य। क्रोधा कुलस्य क्रोधविवशस्य। कोपहेतुमाह—गन्धर्वराजे मनाक् आसक्तां किल इति। गन्धर्वराजे चित्ररथे। मनाक् ईषत्। आसक्ताम् अनुरक्तहृदयाम्। किलेति वार्तायाम्। नद्यां विहरन्तं गन्धर्वराजं चित्ररथं सकौतुकं वीक्षमाणामाकलय्य रेणुकां तस्मिन्ननुरक्तामवगम्येत्यर्थः। माताऽपि भगवति श्रीभार्गवे परितुष्टाऽभू दित्याह—माता च ते वरान् अदात् इति। माता जननी। चकारः समुच्चये। ते तुभ्यं श्रीभार्गवाय। वरान् अनुग्रहान्। अदाद्दत्तवती ॥

अथ श्रीभार्गवरामस्य तपश्चर्यां भगवतो महेश्वराद्वरप्राप्तिं चाह—

पित्रा मातृमुदे स्तवाहृतवियद्धेनोर्निजादाश्रमात्
प्रस्थायाथ भृगोर्गिरा हिमगिरावाराध्य गौरीपतिम् ।
लब्ध्वा तत्परशुं तदुक्तदनुजच्छेदी महास्त्रादिकं
प्राप्तो मित्रमथाकृतव्रणमुनिं प्राप्यागमः स्वाश्रमम् ॥ ४ ॥

पित्रेति ॥ अथ त्वं भृगो गिरा पित्रा मातृमुदे स्तवाहृतवियद्धेनो निजात् आश्रमात् प्रस्थाय हिमगिरौ गौरीपतिम् आराध्य तत्परशुं लब्ध्वा तदुक्तदनुजच्छेदी महास्त्रादिकं प्राप्त । अथ अकृतव्रणमुनिं मित्रं प्राप्य स्वाश्रमम् अगम । अथ अनन्तरम् । त्वं श्रीभार्गव । भृगो तन्नाम्न स्ववश कूटस्थस्य महामुने । गिरा नियोगेन । पित्रा जनकेन । मातृमुदे मातु प्रीत्यै । स्तवाहृतवियद्धेनो स्तवेन स्तोत्रेण आहृता आनीता वियद्धेनु स्वर्धेनुर्यस्मिंस्तस्मात् । अनेन आश्रमस्य दुर्न्यजत्वमुक्तम् । निजादात्मीयात् । प्रस्थाय गत्वा । हिमगिरौ हिमाद्रौ । गौरीपतिं भवानीपतिं महेश्वरम् । आराध्य तपसा तोषयित्वा । तत्परशुं तस्य गौरीपते परशुं कुठारम् । लब्ध्वा प्राप्य । तदुक्तदनुजच्छेदी तदुक्तस्य तेन महेश्वरेणोक्तस्य निर्दिष्टस्य दनुजस्य असुरस्य हन्ता सन् । महास्त्रादिकं दिव्यास्त्रादिकम् । प्राप्त लब्धवान् । अथ अनन्तरम् । अकृतव्रणमुनिम् अकृतव्रणनामानं मुनिम् । मित्रं सुहृदम् । प्राप्य लब्ध्वा । स्वाश्रमं स्वस्याश्रमम् । अगम गतवानसि ॥

अथ कार्तवीर्यवधस्य बीजमुपक्षिपति—

आखेटोपगतोऽर्जुनः सुरगवीसम्प्राप्तसम्पद्गणै
स्त्वत्पित्रा परिपूजितः पुरगतो दुर्मन्त्रिवाचा पुनः ।
गां क्रेतुं सचिवं न्ययुङ्क्त कुधिया तेनापि रुन्धन्मुनि
प्राणक्षेपसरोषगोहतचमूचक्रेण वत्सो हृतः ॥ ५ ॥

आखेटोपगत इति ॥ अर्जुन त्वत्पित्रा परिपूजित । अर्जुन कार्तवीर्य । त्वत्पित्रा जमदग्निना । परिपूजित परित पूजित । परिवारै सह पूजित इत्यर्थ । ननु कथं मुनिर्महाराजं सपरिवारमातिथ्येन पूजयितुं समर्थोऽभूत्

दिति चेत्तत्राह—सुरगवीसम्प्राप्तसम्पद्गणैरिति । सुरगवी कामधेनुस्तस्याः सकाशात् सम्प्राप्तैर्लब्धैः सम्पद्गणैरुपकरणसञ्चयैः । अर्जुनस्याश्रमप्रवेशकारणमाह—आखेटोपगतः इति । आखेटो मृगया तत्प्रसङ्गेन उपगतः आश्रमं प्राप्तः । पुनः पुरगतः गां क्रेतुं सचिवं न्ययुङ्क्त । पुनः अनन्तरम् । पुरगतः पुरं स्वनगरं गतः प्राप्तः । गां कामधेनुम् । क्रेतुं मूल्यं प्रदाय स्वीकर्तुम् । सचिवं मन्त्रिणम् । न्ययुङ्क्त नियुक्तवान् । ननु कथमेतत् परमधार्मिकेणार्जुनेनाचरितमिति चेत्तत्राह—दुर्मन्त्रिवाचा इति । दुष्टस्य मन्त्रिणः अमात्यस्य वाचा उपदेशेन । न तु स्वमेधया । विधेरन्यथा कर्तुमशक्यत्वादिति भावः । अथ मन्त्रिणः प्रवृत्तिमाह—तेन अपि रुन्धन्मुनिप्राणक्षेपसरोषगोहतचमूचक्रेण वत्सः हृतः इति । तेन मन्त्रिणा । अपिस्त्वर्थो विशेषे । तमाह—रुन्धन्नित्यादि । रुन्धन्मुनिप्राणक्षेपसरोषगोहतचमूचक्रेण रुन्धतः गवाहरणमारुन्धानस्य मुनेर्जमदग्नेः प्राणक्षेपेण वधेन हेतुना सरोषया कुपितया गवा वियद्धेन्वा हतानि आत्मनो देहान्निस्सृतैरनीकैर्विहिंसितानि चमूचक्राणि सेनामण्डलानि यस्य तेन सता । वत्सः सुरगव्या वत्सः । हृतः माहिष्मती नीतः । ननु कथं मन्त्रिणो मुनिवधे मतिरुदितेत्याशङ्कायामाह—कुधिया इति । कुत्सिता धीर्बुद्धिर्यस्य तेन । किमकार्यं कदर्याणामिति भावः ॥

वत्साहरणमाकर्णयतो भार्गवस्य प्रवृत्तिमाह—

शुक्रोज्जीवितताततवाक्यचलितक्रोधोऽथ सख्या समं
　बिभ्रद्ध्यातमहोदरोपनिहितं चापं कुठारं शरान् ।
आरूढः सहवाहयन्तृकरथं माहिष्मतीमाविशन्
　वाग्भिर्वत्समदाशुषि क्षितिपतौ सम्प्रास्तुथाः सङ्गरम् ॥ ६ ॥

**शुक्रोज्जीवितेति** ॥ त्वं शुक्रोज्जीवितताततवाक्यचलितक्रोधः सख्या समं ध्यातमहोदरोपनिहितं चापं कुठारं शरान् बिभ्रत् सहवाहयन्तृकरथम् आरूढः माहिष्मतीम् आविशन् क्षितिपतौ वाग्भिः वत्सम् अदाशुषि सङ्गरं सम्प्रास्तुथाः । त्वं श्रीभार्गवरामः । शुक्रोज्जीवितताततवाक्यचलितक्रोधः शुक्रेण उशनसा उज्जी

वितः मृतसञ्जीविन्या विद्यया सजीवः कृतो यस्तातः पिता जमदग्निस्तस्य वाक्येन चलितः प्रस्फुरन् क्रोधः कोपो यस्य सः। अथ अनन्तरम्। सख्या अकृतव्रणमुनिना। समं सह। ध्यातमहोदरोपनिहितं ध्यातेन महोदरेण तन्नाम्ना शिवपार्षदेन उपनिहितम् आनीतम्। चापं धनुः। कुठारम् ईश्वरेण दत्तं परशुम्। शरानस्त्राणि। बिभ्रत् दधानः। सहवाहयन्तृकरथं वाहा अश्वाः यन्तृकः सूतश्चेति वाहयन्तृकास्तैस्सह वर्तत इति सहवाहयन्तृकः स चासौ रथः स्यन्दनस्तम्। आरूढः अधिरूढः। माहिष्मतीम् अर्जुनस्य पुरीम्। आविशन् प्रविष्टः। क्षितिपतौ अर्जुने। वाग्भिर्वचनैः। अदाशुषि अदत्तवति सति। सङ्गरं युद्धम्। सम्प्राप्तुथाः प्रारब्धवानसि॥

अथ पुत्रनाशे सत्यर्जुनः स्वयमेव श्रीपरशुराममापपातेत्याह——

**पुत्राणामयुतेन सप्तदशभिश्चाक्षौहिणीभिर्महा-**
**सेनानीभिरनेकमित्रनिवहैर्व्याजृम्भितायोधनः।**
**सद्यस्त्वत्ककुठारबाणविदलन्निश्शेषसैन्योत्करो**
**भीतिप्रद्रुतनष्टशिष्टतनयस्त्वामापतद्धैहयः ॥ ७ ॥**

**पुत्राणामिति॥** हैहयः त्वामापतत्। हैहयः अर्जुनः। त्वां श्रीपरशुरामम्। आपतत् आपपात। अत्र हेतुमाह——पुत्राणामयुतेन सप्तदशभिः अक्षौहिणीभिः महासेनानीभिः अनेकमित्रनिवहैः व्याजृम्भितायोधनः सद्यः त्वत्क कुठारबाणविदलन्निश्शेषसैन्योत्करः भीतिप्रद्रुतनष्टशिष्टतनयः इति। पुत्राणामात्मजानाम्। अयुतेन दशसहस्राण्ययुतमित्युच्यते, तेन। अक्षौहिणीति सेनासञ्चय विशेषसंज्ञा। महासेनानीभिः महद्भिर्महापराक्रमैः सेनानीभिः सेनाप्रयायिभिः। अनेकमित्रनिवहैः अनेकैर्बहुभिर्मित्राणां सुहृदां निवहैः समूहैः। व्याजृम्भितम् अतिप्रवर्धितमायोधनं युद्धं येन सः। सद्यः झटिति। त्वत्ककुठारबाणविदलन्निश्शेषसैन्योत्करः त्वत्ककुठारबाणैः त्वत्प्रेरितैः कुठारबाणैः कुठारेण परशुना बाणैः अस्त्रैश्च विदलन् नश्यन् निश्शेषः समस्तः सैन्योत्करः सैन्यसञ्चयो यस्य सः। भीतिप्रद्रुतनष्टशिष्टतनयः भीत्या भयेन प्रद्रुताः पलायिताः नष्टशिष्टाः नष्टेभ्यः

हतेभ्यः शिष्टाः अवशिष्टाः तनयाः पुत्रा यस्य तथाविधः सन् । इतरेषामभावात् स्वयमेव कार्तवीर्यो भगवन्तं परशुराममापपातेत्यर्थः ॥

अर्जुनवधमाह—

लीलावारितनर्मदाजलवलल्लङ्केशगर्वापह-
श्रीमद्बाहुसहस्रमुक्तबहुशस्त्रास्त्रं निरुन्धन्नमुम् ।
चक्रे त्वय्यथ वैष्णवेऽपि विफले बुध्वा हरिं त्वां मुदा
ध्यायन्तं शितसर्वदोषमवधीस्सोऽगात् परं ते पदम् ॥ ८ ॥

लीलावारितेति ॥ त्वम् अमुं निरुन्धन् मुदा त्वां ध्यायन्तम् अवधीः । त्वं श्रीपरशुरामः । अमुम् अर्जुनम् । निरुन्धन् निवारयन् । मुदा सन्तोषेण । ध्यायन्तं चिन्तयन्तम् । अमुमित्यत्रापि सम्बध्यते । अवधीः जगन्थ । भगवतो वधप्रकारमाह—शितसर्वदोषमिति । वृक्णबाहुसहस्रमित्यर्थः । भगवद्ध्यानान्निरस्तसमस्तकिल्बिषमिति च गम्यते । अर्जुनस्य भगवद्ध्याने हेतुं दर्शयति—त्वां हरिं बुध्वा इति । त्वां श्रीभार्गवम् । हरिं श्रीवैकुण्ठम् । बुध्वा ज्ञात्वा । अत्र हेतुः—अथ त्वयि वैष्णवे चक्रे अपि विफले इति । अथ अनन्तरम् । त्वयि श्रीभार्गवे । वैष्णवे विष्णुसम्बन्धिनि । चक्रे सुदर्शननाम्नि तेन प्रयुक्ते । अपिशब्देन तस्य वरायुधान्तरं न प्रयोक्तुमुचितमवशिष्टमिति दर्शितम् । विफले निष्फले सति । कार्तवीर्यस्य दुर्निवारत्वमाह—लीलावारितनर्मदाजलवलल्लङ्केशगर्वापहश्रीमद्बाहुसहस्रमुक्तबहुशस्त्रास्त्रमिति । लीलया अनायासेन वारितं बाहुसहस्रेण सेतुं निर्माय तेन निवारितं यन्नर्मदाया नर्मदाख्याया नद्या जलं तत्र वलतः निमज्जनोन्मज्जनादि कुर्वतो लङ्केशस्य रावणस्य गर्वमपहन्तीति तथाविधं यत् श्रीमत् शोभनं बाहुसहस्रं बाहूनां कराणां सहस्रं तेन मुक्तानि अस्तानि बहूनि नानाविधानि शस्त्राण्यायुधानि अस्त्राणि दिव्यानीतराणि च येन तम् । अर्जुनस्य मुक्तिमाह—सः परं ते पदम् अगादिति । सः अर्जुनः । परं सर्वोत्कृष्टम् । ते तव श्रीहरेः । पदं श्रीविकुण्ठनिलयम् । अगात् प्राप । मुक्तोऽभूदित्यर्थः ॥

वितः मृतसञ्जीविन्या विद्यया सजीवः कृतो यस्तातः पिता जमदग्निस्तस्य वाक्येन चलितः प्रस्फुरन् क्रोधः कोपो यस्य सः। अथ अनन्तरम्। सख्या अकृतव्रणमुनिना। समं सह। ध्यातमहोदरोपनिहितं ध्यातेन महोदरेण तन्नाम्ना शिवपार्षदेन उपनिहितम् आनीतम्। चापं धनुः। कुठारम् ईश्वरेण दत्तं परशुम्। शरानस्त्राणि। बिभ्रत् दधानः। सद्वाहयन्तृकरथं वाहा अश्वाः यन्तृकः सूतश्चेति वाहयन्तृकास्तैस्सह वर्तत इति सद्वाहयन्तृकः स चासौ रथः स्यन्दनस्तम्। आरूढः अधिरूढः। माहिष्मतीम् अर्जुनस्य पुरीम्। आविशन् प्रविष्टः। क्षितिपतौ अर्जुने। वाग्भिर्वचनैः। अदाशुषि अदत्तवति सति। सङ्गरं युद्धम्। समाहुथाः प्रारब्धवानसि ॥

अथ पुत्रनाशे सत्यर्जुनः स्वयमेव श्रीपरशुराममापपतेत्याह—

**पुत्राणामयुतेन सप्तदशभिश्चाक्षौहिणीभिर्महा-**
**सेनानीभिरनेकमित्रनिवहैर्व्याजृम्भितायोधनः ।**
**सद्यस्त्वत्ककुठारबाणविदलन्निश्शेषसैन्योत्करो**
**भीतिप्रद्रुतनष्टशिष्टतनयस्त्वामापतद्धैहयः ॥ ७ ॥**

**पुत्राणामिति** ॥ हैहयः त्वामापतत्। हैहय अर्जुनः। त्वां श्रीपरशुरामम्। आपतत् आपपात। अत्र हेतुमाह—पुत्राणामयुतेन सप्तदशभिः अक्षौहिणीभिः महासेनानीभिः अनेकमित्रनिवहैः व्याजृम्भितायोधनः सद्यः त्वत्क कुठारबाणविदलन्निश्शेषसैन्योत्करः भीतिप्रद्रुतनष्टशिष्टतनयः इति। पुत्राणामात्मजानाम्। अयुतेन दशसहस्राण्ययुतमित्युच्यते, तेन। अक्षौहिणीति सेनासञ्चयविशेषसंज्ञा। महासेनानीभिः महद्भिर्महापराक्रमैः सेनानीभिः सेनाग्रयायिभिः। अनेकमित्रनिवहैः अनेकैर्बहुभिर्मित्राणां सुहृदां निवहैः समूहैः। व्याजृम्भितम् अतिप्रवर्धितमायोधनं युद्धं येन सः। सद्यः झटिति। त्वत्ककुठारबाणविदलन्निश्शेषसैन्योत्करः त्वत्ककुठारबाणैः त्वत्कैस्त्वदीयैः कुठारबाणैः कुठारेण परशुना बाणैः अस्त्रैश्च विदलन् नश्यन् निश्शेषः समस्तः सैन्योत्करः सैन्यसञ्चयो यस्य सः। भीतिप्रद्रुतनष्टशिष्टतनयः भीत्या भयेन प्रद्रुताः पलायिताः नष्टशिष्टाः नष्टेभ्यः

हतेभ्यः शिष्टाः अवशिष्टाः तनयाः पुत्रा यस्य तथाविधः सन्। इतरेषामभावात् स्वयमेव कार्तवीर्यो भगवन्तं परशुराममापपातेत्यर्थः॥

अर्जुनवधमाह—

लीलावारितनर्मदाजलवलल्लङ्केशगर्वापह-
श्रीमद्बाहुसहस्रमुक्तबहुशस्त्रास्त्रं निरुन्धन्नमुम्।
चक्रे त्वय्यथ वैष्णवेऽपि विफले बुध्वा हरिं त्वां मुदा
ध्यायन्तं शितसर्वदोषमवधीस्सोऽगात् परं ते पदम्॥ ८॥

*लीलावारितेति॥* त्वम् अमुं निरुन्धन् मुदा त्वां ध्यायन्तम् अवधीः। त्वं श्रीपरशुरामः। अमुम् अर्जुनम्। निरुन्धन् निवारयन्। मुदा सन्तोषेण। ध्यायन्तं चिन्तयन्तम्। अमुमित्यत्रापि सम्बध्यते। अवधीः जगन्थ। भगवतो वधप्रकारमाह—शितसर्वदोषमिति। वृक्णबाहुसहस्रमित्यर्थः। भगवद्ध्यानान्निरस्तसमस्तकिल्बिषमिति च गम्यते। अर्जुनस्य भगवद्ध्याने हेतुं दर्शयति—त्वां हरिं बुध्वा इति। त्वां श्रीभार्गवम्। हरिं श्रीवैकुण्ठम्। बुध्वा ज्ञात्वा। अत्र हेतुः—अथ त्वयि वैष्णवे चक्रे अपि विफले इति। अथ अनन्तरम्। त्वयि श्रीभार्गवे। वैष्णवे विष्णुसम्बन्धिनि। चक्रे सुदर्शननाम्नि तेन प्रयुक्ते। अपिशब्देन तस्य वरायुधान्तरं न प्रयोक्तुमुचितमवशिष्टमिति दर्शितम्। विफले निष्फले सति। कार्तवीर्यस्य दुर्निवारत्वमाह—*लीलावारितनर्मदाजलवलल्लङ्केशगर्वापहश्रीमद्बाहुसहस्रमुक्तबहुशस्त्रास्त्रमिति। लील*या अनायासेन वारितं बाहुसहस्रेण सेतुं निर्माय तेन निवारितं यन्नर्मदाया नर्मदाख्याया नद्या जलं तत्र वलत निमज्जनोन्मज्जनादि कुर्वतो लङ्केशस्य रावणस्य गर्वमपहन्तीति तथाविधं यत् श्रीमत् शोभनं बाहुसहस्रं बाहूनां कराणां सहस्रं तेन मुक्तानि अस्तानि बहूनि नानाविधानि शस्त्राण्यायुधानि अस्त्राणि दिव्यानीतराणि च येन तम्। अर्जुनस्य मुक्तिमाह—सः परं ते पदम् अगादिति। सः अर्जुनः। परं सर्वोत्कृष्टम्। ते तव श्रीहरेः। पदं श्रीविकुण्ठनिलयम्। अगात् प्राप। मुक्तोऽभूदित्यर्थः॥

अथ भगवतो भार्गवस्य क्षत्रियवंशोन्मूलनमाह—

भूयोऽमर्षितहैहयात्मजगणैस्ताते हते रेणुका
माघ्नानां हृदयं निरीक्ष्य बहुशो घोरां प्रतिज्ञां वहन् ।
ध्यानानीतरथायुधस्त्वमकृथा विप्रद्रुहः क्षत्रियान्
दिक्चक्रेषु कुठारयन् विशिखयन् निःक्षत्रियां मेदिनीम् ॥ ९ ॥

भूय इति ॥ त्वं ध्यानानीतरथायुध क्षत्रियान् दिक्चक्रेषु कुठारयन् विशिखयन् मेदिनीं निःक्षत्रियाम् अकृथा । त्वं श्रीपरशुराम । ध्याना नीतरथायुध ध्यानेनानीतानि रथायुधानि यस्य सः । दिक्चक्रेषु दिङ्मण्डलेषु । कुठारयन् कुठारेण परशुना निघ्नन् । विशिखयन् विशिखैरस्त्रैश्च निघ्नन् । मेदिनीं भूमिम् । निःक्षत्रियां निरस्ता क्षत्रिया यस्यास्ताम् । अकृथा कृतवानसि । क्षत्रियाणां वध्यतां दर्शयति—विप्रद्रुह इति । विप्रेभ्यो ब्राह्मणेभ्यो द्रुह्यन्तीति विप्रद्रुहः तान् । भगवतो भार्गवस्य क्षत्रक्षयोद्यमे हेतुमाह— घोरां प्रतिज्ञां वहन्निति । घोरां क्षत्रियवंशोन्मूलनविषयत्वेनातीव भयावहाम् । वहन् दधानः । प्रतिज्ञाहेतुमाह—बहुश हृदयम् आघ्नाना रेणुका निरीक्ष्य इति । बहुश त्रिस्सप्तकृत्वः । हृदयमुरः । आघ्नाना ताडयन्तीम् । घोर स्ताडनं विदधतीमित्यर्थः । रेणुका स्वमातरम् । निरीक्ष्य दृष्ट्वा । रेणुकाया उरस्ताडने हेतुमाह—भूय अमर्षितहैहयात्मजगणै ताते हते इति । भूय अनन्तरम् । अमर्षितहैहयात्मजगणै अमर्षितै पितृवधमसहमानैरित्यर्थः । हैहयात्मजगणै हैहयस्यार्जुनस्यात्मजानां नष्टशिष्टानां पुत्राणां गणै समूहै । ताते पितरि जमदग्नौ । हते विहिंसिते सति । भगवतो भार्गवस्य तत्रासन्निधानादित्यर्थः ॥

भगवतो भार्गवरामस्य प्रशान्तिमाह—

तातोज्जीवनकृन्नृपालककुलं त्रिस्सप्तकृत्वो जयन्
सन्तर्प्याथ समन्तपञ्चकमहारक्तह्रदौघे पितॄन् ।

यज्ञे क्ष्मामपि काश्यपादिषु दिशन् साल्वेन युद्ध्यन् पुनः
कृष्णोऽमुं निहनिष्यतीति शमितो युद्धात् कुमारैर्भवान् ॥ १० ॥

तातोज्जीवनकृदिति ॥ भवान् तातोज्जीवनकृत् नृपालककुलं त्रिस्सप्तकृत्वः जयन् अथ समन्तपञ्चकमहारक्तह्रदौघे पितॄन् सन्तर्प्य यज्ञे क्ष्मामपि काश्यपादिषु दिशन् पुनः साल्वेन युद्ध्यन् इति कुमारैः युद्धात् शमितः । भवान् परशुरामः । तातोज्जीवनकृत् । तातस्य हैहयात्मजैर्हतस्य पितुः उज्जीवनं प्रत्युज्जीवनं करोतीति तथोक्तः । पितुः शिरः कायेन सन्धाय मखैर्जीवयन्नित्यर्थः । नृपालककुलं राजवंशम् । त्रिस्सप्तकृत्वः एकविंशतिवारम् । जयन् उन्मूलयन् । अथ अनन्तरम् । समन्तपञ्चकमहारक्तह्रदौघे समन्तपञ्चकाख्ये महति रक्तह्रदौघे रुधिरह्रदप्रवाहे । सन्तर्प्य तर्पयित्वा । यज्ञे अध्वरे क्ष्मां भूमिम् । अपिशब्देनान्येषां समस्तानामपि संग्रहः । काश्यपादिषु काश्यपप्रभृतिषु । दिशन् अर्पयन् । पुनः अनन्तरम् । साल्वेन तन्नाम्ना नृपेण । इति अनेन प्रकारेण कथयित्वा । कुमारैः सनकादिभिः । शमितः प्रशमितः । कथनप्रकारमाह—अमुं कृष्णः निहनिष्यति इति । अमुं साल्वम् । कृष्णः यदुकुलेऽवतीर्णो भगवान् हरिः । निहनिष्यति हनिष्यति ॥

अथ भगवतो भार्गवरामस्य केरलोद्धारमाह—

न्यस्यास्त्राणि महेन्द्रभूभृति तपस्तन्वन् पुनर्मज्जितां
गोकर्णावधि सागरेण धरणीं दृष्ट्वाऽर्थितस्तापसैः ।
ध्यातेष्वासधृतानलास्त्रचकितं सिन्धुं स्रुवक्षेपणा-
दुत्सार्योद्धृतकेरलो भृगुपते वातेश संरक्ष माम् ॥ ११ ॥

न्यस्येति ॥ हे भृगुपते वातेश अस्त्राणि न्यस्य महेन्द्रभूभृति तपः तन्वन् पुनः उद्धृतकेरलः त्वं मां संरक्ष । भृगुपते भार्गव । वातेश श्रीगुरुपवनपुरनाथ । अस्त्राणि आयुधानि । न्यस्य विन्यस्य । सन्यस्तशस्त्रस्सन्नित्यर्थः । महेन्द्रभूभृति महेन्द्रपर्वते । तपः तन्वन् । तपश्चरन् । पुनः अनन्तरम् । उद्धृतकेरलः उत्क्षिप्तकेरलभूप्रदेशः । मामनन्यशरणम् । संरक्ष

पाहि। भगवत केरलोद्धारप्रकारमाह—सिन्धु सुवक्षेपणात् उत्सार्य इति। सिन्धु समुद्रम्। सुवक्षेपणात् सुवस्य क्षेपणात् प्रक्षेपात्। येन द्रव्य घृतादि गृही त्वाऽग्नौ प्रक्षिपति, तत् सुवमित्युच्यते। उत्सार्य दूरीकृत्य। ननु कथ सिन्धु र्भगवता वशवदोऽभूदिति चेत्तत्राह—ध्यातेष्वासधृतानलास्त्रचकितमिति। ध्याते ध्यानेनानीते इष्वासे शरासने धृतेन सहितेन अनलास्त्रेण आग्नेयास्त्रेण चकित भीतम्। भगवत केरलोद्धारे हेतुमाह—तापसै अर्थित इति। तापसैर्मुनि भि। अर्थित प्रार्थित। प्रार्थनाहेतुमाह—गोकर्णावधि धरणीं सागरेण मज्जि ता दृष्ट्वा इति। गोकर्णावधि गोकर्णाख्यमहाक्षेत्रपर्यन्तम्। धरणीं भूमिम् सागरेण समुद्रेण। मज्जिता प्लाविताम्। दृष्ट्वा विलोक्य॥

इति दत्तात्रेयपरशुरामयोरवतारवर्णन परशुरामचरितवर्णन च

षट्त्रिंशद्दशकम् सैकम्॥

इति श्रीनारायणीयस्तोत्रव्याख्याया बालबोधिन्याम्

नवमस्कन्धपरिच्छेद॥

आदित श्लोकसंख्या ३७८

## दशमस्कन्धपरिच्छेदः

### सप्तत्रिंशदशकम् ॥

श्रीकृष्णचरणद्वन्द्वमरुणाम्भोजसुन्दरम् ।
मञ्जुमञ्जीरवाचालं मम स्फुरतु मानसे ॥ १ ॥

क्रमेण पृथुले रम्ये वर्तुले नरकद्विषः ।
नात्यायते शुभे जङ्घे स्फुरेतां हृदये मम ॥ २ ॥

स्वभक्तजनसर्वार्थसमुद्गद्वन्द्वसन्निभम् ।
जानुद्वन्द्वं मुकुन्दस्य मम स्फुरतु मानसे ॥ ३ ॥

ऊरू चारू मुरारातेः करीन्द्रकरसन्निभौ ।
पीतचेलप्रतिच्छन्नौ स्फुरेतां हृदये मम ॥ ४ ॥

अन्तर्विलीनत्रैलोक्यसञ्चयोपि परं कृशः ।
मध्यः श्रीवासुदेवस्य मम स्फुरतु मानसे ॥ ५ ॥

विरिञ्चावासराजीवजन्मभूर्मधुविद्विषः ।
यमुनावर्तसङ्काशो नाभिः स्फुरतु मे हृदि ॥ ६ ॥

गोपिकास्तनविन्यस्तपत्ररेखाङ्कितं हरेः ।
वक्षः श्रीवत्सहाराढ्यं स्फुरतु मे हृदि ॥ ७ ॥

श्रीमद्वलयकेयूरमुद्रिकाङ्गदभूषितौ ।
करौ मुररिपोश्चारू स्फुरेतां हृदये मम ॥ ८ ॥

नवार्कसदृशश्रीमत्कौस्तुभद्युतिमण्डितः ।
कण्ठः कंसद्विषो नित्यं मम स्फुरतु मानसे ॥ ९ ॥

गोपिकापीतपीयूषः पक्वबिम्बसमद्युतिः ।
अधरः करुणामूर्तेः सदा स्फुरतु मे हृदि ॥ १० ॥

मनोहरतराकारा मल्लिकामुकुलोपमाः ।
दशना दानवारातेः स्फुरन्तु हृदये मम ॥ ११ ॥

शरत्पूर्णनिशाकान्तकौमुदीविशदममम् ।
मन्दस्मितं मुकुन्दस्य मम स्फुरतु मानसे ॥ १२ ॥

हरेः श्वासानिलामोदभ्रमद्भृङ्गसमाकुला ।
तिलपुष्पसमाकारा नासा स्फुरतु मे हृदि ॥ १३ ॥

शक्रादमनिर्मितश्रीमद्दर्पणोदरसप्रभौ ।
कपोलौ वासुदेवस्य स्फुरेतां हृदये मम ॥ १४ ॥

विलसन्मकराकारमणिकुण्डलमण्डितौ ।
कर्णौ कमलनेत्रस्य स्फुरेतां हृदये मम ॥ १५ ॥

शोणाम्बुजदलाकारे करुणामृतवर्षिणी ।
नयने नरकाराते स्फुरेतां हृदये मम ॥ १६ ॥

लसत्प्रसूननाराचशरासनसमद्युती ।
भ्रुवौ भुवननाथस्य स्फुरेतां हृदये मम ॥ १७ ॥

श्वेतोर्ध्वपुण्ड्रशोभाढ्यं पञ्चमीचन्द्रसन्निभम् ।
ललाटफलकं शौरेः सदा स्फुरतु मे हृदि ॥ १८ ॥

कुटिलाग्रा घना नीला विमला पिञ्छभूषिता
केशाः कमलनेत्रस्य स्फुरन्तु हृदये मम ॥ १९ ।

साचीकृतमुखन्यस्तवेणुनालं मधुद्विषः ।
व्यत्यस्तपादपाथोजं स्थितं स्फुरतु मे हृदि ॥ २० ॥

नीलजीमूतसङ्काशः पूरयन् वेणुनालिकाम् ।
मनोहरतराकारो हरिः स्फुरतु मे हृदि ॥ २१ ॥

अथ भगवतो हरेः श्रीकृष्णावतारचरित्रं वर्णयितुमुपक्रममाणः प्रथममव तारबीजं प्रस्तौति—

सान्द्रानन्दतनो हरे ननु पुरा दैवासुरे सङ्गरे
त्वत्कृत्ता अपि कर्मशेषवशतो ये ते न याता गतिम् ।

तेषां भूतलजन्मनां दितिभुवां भारेण दूरार्दिता
भूमिः प्राप विरिञ्चमाश्रितपदं देवैः पुरैवागतैः ॥ १ ॥

सान्द्रानन्दतनो इति॥ ननु सान्द्रानन्दतनो हरे भूमिः विरिञ्चं प्राप। नन्वित्यामन्त्रणे। सान्द्रः स्रक्चन्दनाद्युपाध्यनवच्छिन्नः आनन्दस्तनुः स्वरूपं यस्य तादृश। अत्रत्यानन्दपदं सतश्चितश्चोपलक्षणम्। स्तोत्रस्यास्य समस्तस्य च मङ्गलत्वेऽप्यादौ ब्रह्मबोधकस्य 'सान्द्रानन्दावबोधात्मकम्' इत्यस्य, अत्रापि 'सान्द्रानन्दतनो' इत्यस्य, अन्ते 'परमानन्दसन्दोहलक्ष्मीम्' इत्यस्य प्रयुक्तत्वादादिमध्यावसानेषु प्रकृष्टं मङ्गलं कृतवानत्र कविरित्यनुसन्धेयम्। हरे विष्णो। भूमिः पृथिवी। गौर्भूत्वेति भावः। उक्तञ्च श्रीमद्भागवते—'गौर्भूत्वाऽश्रुमुखी खिन्ना' इति। विरिञ्चं ब्रह्माणम्। प्राप शरणं ययौ। अत्र हेतुमाह—दितिभुवां भारेण दूरार्दिता इति। दितिभुवामसुराणाम्। भारेण बोढुमशक्येन भरेण। दूरार्दिता दूरमत्यर्थमर्दिता पीडिता सती। नन्वसुर लोकवर्तिनां तेषां भारः कथं पृथिव्याः समभूदित्याशङ्कायामाह—भूतलजन्मनामिति। भूतले पृथिव्यां जन्म कंसादिरूपेण जननं येषां तेषाम्। ननु के ते असुरा इति चेत्तत्राह—पुरा देवासुरे सङ्गरे त्वत्कृत्ताः अपि ये ते गतिं न याताः, तेषामिति। पुरा पूर्वम्। देवासुरे देवासुरसम्बन्धिनि। सङ्गरे युद्धे। त्वत्कृत्ताः त्वया श्रीहरिणा कृत्ताः हताः। अपिर्विरोधे। भगवता हतानां सद्योमुक्तेर्दृष्टत्वादत्र विरोधः। ये कालनेमिप्रभृतयः। ते असुराः। गतिं मोक्षम्। याताः गताः। ननु भगवता हताः कुतो न सद्योमुक्ता बभूवुरिति चेत्तत्राह—कर्मशेषवशतः इति। मनुष्यत्वापादकपुण्य पापशेषपरतन्त्रतयेत्यर्थः। 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति न्याया दिति भावः। पृथिव्या आगमनात् पूर्वमेव देवा ब्रह्माणं शरणं जग्मुरित्याह—पुरा एव आगतैः देवैः आश्रितपदमिति। पुरा एव पृथिव्यागमनात् पूर्वमेव। आगतैः प्राप्तैः। देवैरमरैः। आश्रितपदम्। आश्रितं पदं चरणकमलं यस्य तम्॥

भगवान् विरिञ्चः शरणार्थमागतां भूमिं विलोक्य भगवन्तं श्रीहरिमेव चिन्तयामासेत्याह---

हा हा दुर्जनभूरिभारमथितां पाथोनिधौ पातुका-
मेतां पालय हन्त मे विवशतां सम्पृच्छ देवानिमान् ।
इत्यादिप्रचुरप्रलापविवशामालोक्य धाता महीं
देवानां वदनानि वीक्ष्य परितो दध्यौ भवन्तं हरे ॥ २ ॥

हा हेति ॥ हे हरे धाता भवन्तं दध्यौ । हरे विष्णो । धाता ब्रह्मा । भवन्तं श्रीहरिमेव । दध्यौ मनसा चिन्तयामास । अत्र हेतुं दर्शयति -- इत्यादिप्रचुरप्रलापविवशां महीमालोक्य परितः देवानां वदनानि वीक्ष्य इति । इत्यादिप्रचुरप्रलापविवशाम् इत्यादिभिः एवं प्रकारैः प्रचुरैः प्रभूतैः प्रलापैः परिदेवितैर्विवशामस्वस्थाम् । महीं भूमिम् । आलोक्य निरीक्ष्य । परितः समन्ततः । वर्तमानानामिति शेषः । देवानाममर्त्यानाम् । वदनानि सत्यमनयोक्तमिति वचनगर्भाणि मुखानि वीक्ष्य दृष्ट्वा । भूम्याः प्रलापप्रकारमाह---हा हा पाथोनिधौ पातुकामेतां पालय इति । हा हेति खेदातिशये । सलिलनिमज्जनस्यासन्नत्वमत्र हेतुरिति द्रष्टव्यम् । पाथोनिधौ आवरणोदके । पातुकाम् आसन्ननिमज्जनाम् । अनेन पालने मा भूत् कालविलम्ब इति द्योत्यते । एतां माम् । अत्र मामित्यस्य स्थाने एतामित्युक्त्या आत्मनि निराशता ध्वन्यते । पालय रक्ष । भूम्याःसमुद्रमज्जने हेतुमाह---दुर्जनभूरिभारमथितामिति । दुर्जना दुष्टाः कंसादयः त एव भूरिभारा बन्धा भारास्तैर्मथितामाक्रान्ताम् । भाराक्रान्ततया आत्मानं विस्मृत्य विधातुरुपेक्षामाशङ्कमाना पुनरप्याह---हन्त त्वं मे विवशताम् इमान् देवान् सम्पृच्छ इति । हन्तेत्यपि खेदातिशये । मे मम । विवशता वैवश्यम् । इमान् अत्र समीपे वर्तमानान् । देवान् अमरान् । सम्पृच्छ सम्यक् पृच्छ । ते मम वैवश्यं सुष्ठु जानन्तीति भावः ॥

पृथिव्या वैवश्यं दृष्ट्वा ब्रह्मोवाचेत्याह---

ऊचे चाम्बुजभूरमूनयि सुराः सत्यं धरित्र्या वचो
नन्वस्या भवतां च रक्षणविधौ दक्षो हि लक्ष्मीपतिः ।
सर्वे शर्वपुरस्सरा वयमितो गत्वा पयोवारिधिं
नत्वा तं स्तुमहे जवादिति ययुः साकं तवाकेतनम् ॥ २ ॥

ऊचे चेति ॥ अम्बुजभूः अमून् ऊचे च । अम्बुजभूर्ब्रह्मा । अमून् सुरान् । ऊचे अवदत् । भगवद्ध्यानवचनयोस्समुच्चयार्थकेन चशब्देन वच नस्य कालविलम्बाभावो द्योत्यते । वचनप्रकारमाह—अयि सुराः धरित्र्या वचः सत्यमिति । अयीति सम्बोधने । सुराः देवाः । धरित्र्याः भूमेः । वचः वचनम् । सत्यं तथ्यम् । मया दिव्येन चक्षुषा ज्ञातमिति भावः । अत्र यत् कर्तव्यम्, तदाह—शर्वपुरःसराः सर्वे वयम् इतः पयोवारिधिं गत्वा तं नत्वा स्तुमहे इति । शर्वपुरस्सराः श्रीगिरीशप्रभृतयः । सर्वे अखिलाः । जवात् झटिति । इतः अस्मात् प्रदेशात् । निष्क्रम्येति शेषः । पयोवारिधिं क्षीरार्णवम् । गत्वा प्राप्य । तं जगतामेकं शरण्यं श्रीवासुदेवम् । नत्वा प्रणम्य । स्तुमहे स्तोत्रैर्यावदाराधयामः । ननु कुतो भवान् स्वयमिमां महीमस्मांश्च न रक्षतीत्याशङ्कायामाह—अस्याः भवतां च रक्षणविधौ लक्ष्मीपतिः ननु दक्षः हि इति । अस्याः भूमेः । भवतां देवानाम् । चकारस्समुच्चये । रक्षणविधौ रक्षणस्य पालनस्य विधौ विधाने । लक्ष्मीपतिः रमावल्लभः । नन्वित्यवधारणे । नान्यः कोपीत्यर्थः । दक्षः शक्तः । हीति प्रसिद्धौ । न मया शक्यमस्या युष्माकमपि रक्षणमिति भावः । अथ ते मिलित्वा भगवन्निकेतनं प्रति जग्मुरित्याह—इति साकं तव आकेतनं ययुरिति । इति इत्युक्त्वा । इतीत्यनन्तरं त इति शेषः । ते ब्रह्मादयः । साकं समम् । ते सर्वे मिलित्वेत्यर्थः । तव श्रीवासुदेवस्य । आकेतनं क्षीराब्धिम् । ययुः जग्मुः ॥

भगवान् हरिः शरणागतांस्तान् सुरानन्वग्रहीदित्याह—

ते मुग्धानिलशालिदुग्धजलधेस्तीरं गताः सङ्गता
यावत्त्वत्पदचिन्तनैकमनसस्तावत् स पाथोजभूः ।

त्वद्वाचं हृदये निशम्य सकलानानन्दयन्नूचिवा-
नाख्यातः परमात्मना स्वयमहं वाक्यं तदाकर्ण्यताम् ॥ ४ ॥

त इति ॥ तावत् स पाथोजभूः त्वद्वाचं हृदये निशम्य सकलान् आनन्दयन् ऊचिवान्। तावत् तदा। स च सुराश्शरणं जग्मुस्स इत्यर्थः। एतेन ब्रह्मण एव भगवद्वाक्यश्रवणौचित्यमिति ध्वन्यते। पाथोजभूः ब्रह्मा। त्वद्वाचं तव शेषशायिनो वाचम्। हृदये चेतसि। समाधाविति यावत्। निशम्य श्रुत्वा। समाधौ गगने समीरितं भगवतो हरेर्वाक्यमाकर्ण्येत्यर्थः। यदुक्तं श्रीमद्भागवते—'गिरं समाधौ गगने समीरितां निशम्य वेधा' इति। सकलान् सर्वान् सुरगणान्। आनन्दयन् प्रमोदभरतुन्दिलान्तःकरणान् विरचयन्। ऊचिवान् उक्तवान्। तावत्पदार्थं दर्शयति—ते मुग्धानिलशालिदुग्धजलधेः तीरं गताः सङ्गताः यावत् त्वत्पदचिन्तनैकमनसः इति। ते ब्रह्मादयः सुराः। मुग्धानिलशालिदुग्धजलधेः मुग्धः शैत्यमान्द्यसौरभ्यैर्मनोहरो योऽनिलस्तेन शालते शोभत इति मुग्धानिलशाली, स चासौ दुग्धजलधिः क्षीरार्णवस्तस्य। तीरं वेलाम्। गताः प्राप्ताः। सङ्गताः सम्मिलिताः। यावत् यदा। त्वत्पदचिन्तनैकमनसः तव पदयोश्चरणकमलयोश्चिन्तने एवैकस्मिन् मनो येषां ते। अथवा त्वत्पदचिन्तने एकं मनो येषां ते। भगवत्पदचिन्तनेतरव्यापृतमनस इत्यर्थः। ब्रह्म उक्तिप्रकारमाह—अहं परमात्मना स्वयम् आख्यातः, तत् वाक्यमाकर्ण्यतामिति। परमात्मना परब्रह्मस्वरूपेण हरिणा। स्वयमात्मनैव। आख्यातः उक्तः। तत् परमात्मनोक्तम्। वाक्यं वचनम्। आकर्ण्यतां श्रूयताम्। युष्माभिरिति शेषः॥

भगवतो हरेरुक्तिप्रकारमाह—

जाने दीनदशामहं दिविषदां भूमेश्च भीमैर्नृपै-
स्तत्क्षेपाय भवामि यादवकुले सोऽहं समग्रात्मना।
देवा वृष्णिकुले भवन्तु कलया देवाङ्गनाश्चावनौ
मत्सेवार्थमिति त्वदीयवचनं पाथोजभूरूचिवान् ॥ ५ ॥

जान इति ॥ पाथोजमू इति त्वदीयवचनम् ऊचिवान्। पाथोजभूः ब्रह्मा। इति एवंप्रकारम्। त्वदीयवचनं त्वदीयं भवत्सम्बन्धि वचनं वाक्यम्। ऊचिवान् उक्तवान्। इतिशब्दार्थं प्रकारमाह—अहं भीमैः नृपैः दिविषदां भूमेः च दीनदशां जाने, सः अहं तत्क्षेपाय यादवकुले समग्रात्मना भवामि, देवाः देवाङ्गनाः च मत्सेवार्थं कलया अवनौ वृष्णिकुले भवन्तु इति। भीमैः भयानकैः। नृपैः कंसजरासन्धप्रभृतिभी राजभिः। दिविषदां देवानाम्। भूमेः पृथिव्याः। चकारस्समुच्चये। दीनदशां पराधीनवृत्तिताम्। जाने अवगच्छामि। सः दुष्टनिग्रहशिष्टपरिपालनैकनिरतः। तत्क्षेपाय तेषां कंसादीनां क्षेपाय वधाय। यादवकुले यादवानां कुले वंशे। समग्रात्मना समग्रेण परिपूर्णेनात्मना स्वरूपेण। नत्वंशेन। भवामि जनिष्यामि। वर्तमानसामीप्ये वर्तमानेन लटा भगवदवतारस्य कालविलम्बाभावो द्योत्यते। देवाः सुराः। देवाङ्गना देवस्त्रियः। चकार समुच्चये। मत्सेवार्थं बहुधा मत्परिचर्यां कर्तुम्। कलया अंशेन। अवनौ भूमौ। वृष्णिकुले यदुवंशे। भवन्तु जायेरन् ॥

एवं प्रस्तुतमवतारबीजमुपसंहरन् भगवदवतारस्य पूर्वरङ्गभूतं देवकीवसुदेवयोर्विवाहादिकं प्रस्तौति—

श्रुत्वा कर्णरसायनं तव वचः सर्वेषु निर्वापित-
-स्वान्तेष्वीश गतेषु तावककृपापीयूषतृप्तात्मसु।
विख्याते मधुरापुरे किल भवत्सान्निध्यपुण्योत्तरे
धन्यां देवकनन्दनामुदवहद्राजा स शूरात्मजः ॥ ६ ॥

श्रुत्वेति ॥ हे ईश सर्वेषु निर्वापितस्वान्तेषु गतेषु सः शूरात्मजः राजा विख्याते मधुरापुरे देवकनन्दनामुदवहत् किल। ईश जगद्रक्षक। सर्वेषु अखिलेषु सुरगणेषु। निर्वापितस्वान्तेषु निर्वापितं प्रशमितशोकं स्वान्तं मनो यैस्तेषु। अत्र निर्वापितत्वस्य ज्वलदिन्धनादिगतस्य मनस्युपचरितत्वाच्छोकस्य ज्वलनसाम्यं स्वान्तस्येन्धनादिसाम्यं तेन शोकस्य दुःसहत्वं च व्यज्यते।

गतेषु स्वस्वाधिष्ठानं प्राप्तेषु सत्सु। स प्रसिद्धगुणः। अनेन भगवदुत्पादन योग्यताऽस्य ध्वन्यते। शूरात्मजः शूरस्य शूरसेननाम्नो नृपस्य आत्मजः पुत्रः। विख्याते प्रसिद्धे। मधुरापुरे मधुराख्यायां पुरि। देवकनन्दनां देवकेश्वर दुहितरं देवकीं नाम कन्यकाम्। उदवहत् परिणीतवान्। किलेति वार्तायाम्। देवक्या भगवज्जननयोग्यतामाह—धन्यामिति। धन्यां सुकृतिनीम्। तस्या भगवज्जननस्य दृष्टतया तथात्वेनानुमितामित्यर्थः। देवानां हृदयनिर्वापणे हेतुमाह—तव वचः श्रुत्वा इति। तव श्रीवैकुण्ठस्य। वचः वचनम्। श्रुत्वा आकर्ण्य। भगवद्वाक्यस्य माधुर्यातिशयमाह—कर्णरसायनमिति। कर्णयोः श्रवणयोः रसायनं रसायनाख्यं भैषज्यमिव सन्तापहरम्। अथवा रसस्यानन्दस्यायनं वर्त्म। कारणमिति यावत्। देवानां शोकशान्तिमभिधायानन्दावाप्तिमप्याह—तावककृपापीयूषतृप्तात्मसु इति। तावककृपा भगवत्कारुण्यमेव पीयूषममृतं तेन तृप्तः आत्मा मनो येषां तेषु। अत्र कृपायाः पीयूषत्वेन रूपणाद्यथेच्छमापीते पीयूषे तृप्त्या यादृश आनन्दो मनसि जायते, तादृश आनन्दो भगवत्कृपया सुराणां जात इति द्योत्यते। मधुरापुरस्य प्रसिद्धिहेतुमाह—भवत्सान्निध्यपुण्योत्तरे इति। भवतो भगवतो हरेः सान्निध्येन सन्निधानेन यत् पुण्यम्, अस्मिन् श्रीगुरुपवनपुर इव जनानां निश्रेयसकरं सुकृतम्, तेनोत्तरे उत्कृष्टे। उक्तञ्च श्रीमद्भागवते—'मधुरा भगवान् यत्र नित्यं सन्निहितो हरिः' इति॥

कंसो देवकीं हन्तुं प्रचक्रम इत्याह—

उद्वाहावसितौ तदीयसहजः कंसोऽथ सम्मानयन्
एतौ सूततया गतः पथि रथे व्योमोत्थया त्वद्गिरा।
अस्यास्त्वामतिदुष्टमष्टमसुतो हन्तेति हन्तेरितः
सन्त्रासात् स तु हन्तुमन्तिकगतां तन्वीं कृपाणीमधात्॥ ७॥

उद्वाहावसिताविति॥ अथ उद्वाहावसितौ तदीयसहजः कंसः रथे सूततया गतः पथि व्योमोत्थया त्वद्गिरा इति ईरितः। अथ अनन्तरम्

उद्वाहावसितौ उद्वाहस्य विवाहमङ्गलविधानस्य अवसितौ अवसाने। तदीय सहजः देवक्याः भ्राता कंसः तन्नामा नृपरूपं प्राप्तः कालनेमिर्नामा असुरः। रथे स्यन्दने। सूततया स्नेहाद्देवकीवसुदेवयोः सूतकृत्यमङ्गीकृत्य प्रग्रही सन्नित्यर्थः। गतः अनुयातः। पथि मार्गे। व्योमोत्थया व्योम्न. आकाशात् उत्थितया। त्वद्गिरा तव गिरा वचनेन। यद्यपि 'पथि प्रग्रहिणं कंसमाभाष्याहाशरीरवाक्' इत्युक्तं श्रीमद्भागवते, न तु भगवतोक्तमिति, तथापि 'दैवमप्यनृतं वक्ति' इत्युत्तरत्र कंसवचनस्य दर्शनात् भगवतैवोक्तमित्यवगम्यते। इति अनेन प्रकारेण। ईरितः उक्तः। उक्तिप्रकारमाह—अस्याः अष्टमसुतः त्वां हन्ता हन्त इति। अस्याः यां वहसे अस्या देवक्याः। अष्टमसुतः अष्टमः सुत. पुत्रः। हन्ता हनिष्यति। हन्त अहो ते मौढ्यमिति भावः। अनेन 'यां वहसेऽबुध' इति श्रीमद्भागवतोक्तस्यार्थः क्रोडीकृत इति द्रष्टव्यम्। हन्तेत्यस्येरित इत्यनन्तरं योजने हन्तेति खेदे। देवकीवसुदेवयोर्दुस्सहपुत्रशोकबन्धनस्थित्यादिहेतुतयाऽस्य भगवद्वाक्यस्य किमिति स्वभक्तेष्वप्येवमाचरितं भगवतेति कवेः खेदः। कंसस्य हन्तव्यतामाह—अतिदुष्टमिति। अतिशयेन दुष्टं पापकर्माणम्। अतो हन्तव्यमिति भावः। कंसस्य सूतकृत्याङ्गीकारे हेतुमाह--एनौ सम्मानयन्निति। एतौ देवकीवसुदेवौ। सम्मानयन् सम्यङ्मानयन् सम्भावयन्। अशरीरिणी गिरमाकर्णयतः कंसस्य प्रवृत्तिमाह—स तु सन्त्रासात् अन्तिकगतां तन्वीं हन्तुं कृपाणीमधादिति। सः कंसः। तुर्विशेषे। तमाह—अन्तिकगतामित्यादि। सन्त्रासात् भयेन। अन्तिकगतां समीपवर्तिनीम्। तन्वीं देवकीम्। हन्तुं शिरः छेत्तुम्। कृपाणीं खड्गम्। अधात् धृतवान् ॥

वसुदेवगिरा कंस. स्वसुर्वधान्निवृत्त इत्याह—

**गृह्णानश्चिकुरेषु तां खलमतिः शौरेश्चिरं सान्त्वनै-**
**र्नो मुञ्चन् पुनरात्मजार्पणगिरा प्रीतोऽथ यातो गृहान्।**
**आद्यं त्वत्सहजं तथार्पितमपि स्नेहेन नाहन्नसौ**
**दुष्टानामपि देव पुष्टकरुणा दृष्टा हि धीरेकदा ॥ ८ ॥**

गृह्णन् इति ॥ खलमति ता चिकुरेषु गृह्णान शौरे चिर सान्त्वनै नो मुञ्चन्। खलमति पापनिश्चय । अनेन स्वसुश्चिकुरग्रहणा दावस्य लज्जाभावो ध्वन्यते। कस इति पूर्वस्मात् पद्यादत्रानुवर्तते। ता देवकीम्। चिकुरेषु केशेषु। गृह्णान गृह्णन्। शौरेर्वसुदेवस्य। चिर चिराय। सान्त्वनै सान्त्ववचनै। नो मुञ्चन् न त्यजन्। आसीदिति शेष। अथ मुक्त वानित्याह—पुन आत्मजार्पणगिरा प्रीत गृहान् यात इति। पुन अन न्तरम्। आत्मजार्पणगिरा अस्या सर्वानप्यात्मजास्त्वय्यर्पयिष्यामीति शौरेर्वच नेन। प्रीत सन्तुष्ट। गृहान् आत्मन सद्म। 'गृहा पुंसि च भूम्न्येव' इत्यमरसिंहवचनाद्बहुवचनम्। यात देवकीं मुक्त्वा गत। वसुदेवस्य सत्यपरिपालनमाह—असौ आद्य त्वत्सहज तथा अर्पितमपि स्नेहेन न अहन्निति। असौ कस। आद्य प्रथमम्। त्वत्सहज तव श्रीकृष्णस्य सहजम्। तथा उक्तानतिक्रमेण। अर्पित वसुदेवेन सत्यभङ्गभयाद्दत्तम्। 'कि दु सह न साधूना विदुषा किमपेक्षितम्। किमकार्यं कदर्याणा दुस्त्यज कि धृता त्मनाम् ॥' इति न्यायादिति भाव। अपिर्विरोधे। स्नेहेन भागिनेयप्रेम्णा न अहन् न जघान। ननु दुष्टोऽयं कस कुतो न त हिंसितवानिति चेत्तत्राह—हे देव दुष्टानामपि पुष्टकरुणा धी एकदा दृष्टा हि इति। देव प्रकाशमान। दुष्टाना पापकर्मणाम्। अपिरपापाना समुच्चये। अपापाना मिवेत्यर्थ। पुष्टकरुणा पुष्टा प्रवृद्धा करुणा दया यस्या सा। धीर्मति। एकदा एकवारम्। न तु सर्वदा। दृष्टा प्रत्यक्षीकृता। हीति प्रसिद्धौ ॥

अथ कसो यदूना कदन चक्र इत्याह—

तावत्त्वन्मनसैव नारदमुनिः प्रोचे स भोजेश्वरं
यूयं नन्वसुराः सुराश्च यदवो जानासि किं न प्रभो।
मायावी स हरिर्भवद्वधकृते भावी सुरप्रार्थना-
दित्याकर्ण्य यदूनदूधुनदसौ शौरेश्च सूनुनहन् ॥ ९ ॥

तावदिति ॥ असौ यदून् अदूधुनत् शौरेः सूनून् अहन् च । असौ कंसः यदून् यादवान् । अदूधुनत् स्थानाच्च्यावयामास । शौरेः श्रीवसुदेवस्य । सूनून् पुत्रान् । अहन् जघान । चकारः समुच्चये । किमकार्यं कदर्याणामिति भावः । अत्र हेतुः—इति आकर्ण्य इति । इति एवंविधां गिरम् । आकर्ण्य श्रुत्वा । ननु कस्येयं कीदृशी च गीरिति चेत्तत्राह—तावदित्यादिना । तावत् सः नारदमुनिः भोजेश्वरं प्रोचे । तावत् तस्मिन्नवसरे । सः भवच्चरणकमलयोर्दासमात्मानं मन्यमानः । उक्तञ्चैतत्—'श्रीनारदश्च भगवन् भवदङ्घ्रिदासः' इति । नारदमुनिः महामुनिः श्रीनारदः । भोजेश्वरं कंसम् । प्रोचे कथयामास । कथनप्रकारमाह—ननु प्रभो यूयम् असुराः यदवः च सुराः किं न जानासि । मायावी सः हरिः सुरप्रार्थनात् भवद्वधकृते भावी इति । नन्वित्यामन्त्रणे । यूयं कंसप्रभृतयः । असुराः दैवासुरे सङ्ग्रामे हरिणा देवैश्च हता दैतेयाः । यदवः यादवाः । चकारस्त्वर्थे । सुराः देवांशसम्भवाः । किमिति प्रश्ने । जानासि अवगच्छसि । भवद्भिरवगन्तव्यमेतदिति भावः । मायावी कपटशाली । सः क्षीराम्बुधिनिर्मथने न युष्माभिः प्राप्तममृतकलशं कपटकामिनीरूपधारी भवत्सकाशादपहृत्य देवेभ्यो दत्तवानित्यर्थः । हरिर्विष्णुः । सुरप्रार्थनात् देवप्रार्थनया । भवद्वधकृते भवन्तं हन्तुम् । भावी अवतरिष्यति । अतो यथाशक्ति प्रतीकारश्चिन्तनीयो भवद्भिरिति भावः । ननु कथं भगवान् श्रीनारदः साधुजनविगर्हितं नरकद्वारं पैशुन्यमाचरितवानिति चेत्तत्राह—त्वन्मनसा एव इति । तत्र श्रीहरेर्मनसा प्रेरणया । न स्वाभिप्रायेणैतदाचरितवानित्येवकारार्थः । सः नारदमुनिस्त्वन्मनसैवेत्युक्त्या भगवद्दासस्य सतोऽनुचितस्यापि भगवन्नियोगस्यानुष्ठानं युक्तमेवेति दर्शितम् ॥

अथ भगवतो बलभद्रावतारं देवकीगर्भप्रवेशञ्चाह—

प्राप्ते सप्तमगर्भतामहिपतौ त्वत्प्रेरणान्मायया
नीते माधव रोहिणीं त्वमपि भोः मच्चित्सुखैकात्मकः ।
देवक्या जठरं विवेशिथ विभो संस्तूयमानः सुरैः
स त्वं कृष्ण विधूय रोगपटलीं भक्तिं परां देहि मे ॥ १० ॥

प्राप्त इति ॥ भो माधव सप्तमगर्भता प्राप्ते अहिपतौ मायया त्वत्प्रेरणात् रोहिणीं नीते सच्चित्सुखैकात्मक त्वम् अपि देवक्या जठरं विवेशिथ। माधव रमावल्लभ। सप्तमगर्भता देवक्या सप्तमगर्भत्वम्। प्राप्ते प्रपन्ने। अहिपतौ श्रीशेषवपुषि भगवति हरौ। मायया भगवतो हरेर्योगनिद्रया। त्वत्प्रेरणात् तव विष्णो प्रेरणात् प्रवर्तनात्। रोहिणीं देवक्या सपत्नीं कंसभयान्नन्दगृहे प्रवासिताम्। नीते प्रापिते सति। सच्चित्सुखैकात्मक सच्चिदानन्दस्वरूप। श्रीवैकुण्ठ। अपिस्समुच्चये। जठरं गर्भम्। विवेशिथ प्रविष्टाऽभूः। भगवान् हरिः परिपूर्णांशेन देवकीगर्भं प्रविष्टवानित्यर्थः। अथ प्रार्थयते— हे विभो कृष्ण सुरैः संस्तूयमान स त्वं मे रोगपटलीं विधूय परां भक्तिं देहि इति। विभो परिपूर्ण। कृष्ण श्रीकृष्णतनो। सुरैः ब्रह्मादिभिः। संस्तूयमान सम्यक् स्तूयमान। स भक्तानुग्रहाय देवकीगर्भं प्रविष्टः। मे ममानन्यशरणस्य। रोगपटलीं बाह्यानामाभ्यन्तराणां च रोगाणां पटलीं समूहम्। विधूय दूरीकृत्य। परां मुक्तिप्रदाम्। भक्तिं प्रेमलक्षणाम्। देहि मह्यं प्रयच्छ ॥

इति कृष्णावतारप्रसङ्गवर्णनं
सप्तत्रिंशद्दशकम् ॥

## अष्टत्रिंशद्दशकम् ॥

अथ भगवतः श्रीकृष्णावतारे आसन्ने वर्षोदयं समभूदित्याह—

आनन्दरूप भगवन्नयि तेऽवतारे
प्राप्ते प्रदीप्तभवदङ्गनिरीयमाणैः।
कान्तिव्रजैरिव घनाघनमण्डलैर्द्या-
मावृण्वती विरुरुचे किल वर्षवेला ॥ १ ॥

आनन्दरूपेति ॥ अयि आनन्दरूप भगवन् ते अवतारे प्राप्ते वर्षवेला घनाघनमण्डलैः द्यामावृण्वती विरुरुचे किल। अयीति सम्बोधने। आनन्द रूप सच्चिदानन्दस्वरूप। अत्रानन्दपदं सतश्चितश्चोपलक्षणम्। भगवन् ऐश्व र्यादिसम्पन्न। ते तव। अवतारे श्रीकृष्णावतारे। प्राप्ते आसन्ने सति। वर्षवेला वर्षाणां वेला समयः। घनाघनमण्डलैः घनाघनानां प्रावृषेण्यानां मेघानां मण्डलैः समूहैः। द्यां दिवम्। आवृण्वती आच्छादयन्ती। विरु रुचे शुशुभे। किलेति वार्तायाम्। घनाघनमण्डलान्युत्प्रेक्षते—प्रदीप्तभवदङ्ग निरीयमाणैः कान्तिव्रजैः इव इति। प्रदीप्तात् प्रकर्षेण दीप्तात् भास्वरात् भवदङ्गात् भवच्छरीरात् निरीयमाणैः निर्गच्छद्भिः। कान्तिव्रजैः शोभापटलैः। इवेति सम्भावनायाम्। मेघानां नैल्यमत्रोत्प्रेक्षाहेतुः। फलञ्च सन्तापनिवर्त कत्वप्रतीतिः॥

*भगवतो हरेः श्रीकृष्णावतारमाह—*

आशासु शीतलतरासु पयोदतोयै-
राशासिताशिविशेषु च सज्जनेषु।
नैशाकरोदयविधौ निशि मध्यमायां
क्लेशापहस्त्रिजगतां त्वमिहाविरासीः ॥ २ ॥

आशास्विति ॥ त्रिजगतां क्लेशापहः त्वम् इह आविरासीः। त्रिज गतां त्रयाणां लोकानाम्। क्लेशानपहन्तीति क्लेशापहः। अनेन लोकपीडा निवर्तनं भगवदवतारस्य प्रयोजनमिति ध्वन्यते। त्वं भगवान् श्रीवासुदेवः। इह पृथिव्याम्। आविरासीः प्रादुरासीः। न तु जात इति भावः। अनेन साक्षात् भगवान् श्रीवैकुण्ठ एव श्रीकृष्ण इति द्योत्यते। यदुक्तं हरिवंशे— 'एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः। भोगपर्यङ्कमुत्सृज्य ह्यागतो द्वारकां प्रति ॥' इति। जयदेवेनाप्युक्तम्—'वेदानुद्धरते जगन्ति वहते भूगोलमुद्बिभ्रते दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते। पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते म्लेच्छान् मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः॥' इति।

भगवत्प्रादुर्भावकालं दर्शयति—पयोदतोये आशासु शीतलतरासु सज्जनेषु च आशामितासितविवशेषु मध्यमायां निशि नैशाकरोदयविधौ इति। पयोदतोये मेघाम्बुभिः। आशासु दिक्षु। शीतलतरासु अतिशयेन शीतासु सतीषु। सज्जनेषु सत्सु। चकारस्समुच्चये। आशामितासितविवशेषु आशासितस्य अभिलषितस्य वर्षस्य, अथवा श्रीकृष्णावतारस्य आप्त्या प्राप्त्या विवशेषु प्रीतिविवशतयेतिकर्तव्यतामूढेषु सत्सु। मध्यमायां निशि अर्धरात्रे। नैशाकरोदयविधौ चन्द्रोदयसमये ॥

देवकीदेव्याः सूतिगेहे प्रादुर्भूतस्य श्रीहरेः स्वरूपमाह द्वाभ्याम्—

बाल्यस्पृशाऽपि वपुषा दधुषा विभूतीः
उद्यत्किरीटकटकाङ्गदहारभासा।
शङ्खारिवारिजगदापरिभासितेन
मेघासितेन परिलेसिथ सूतिगेहे ॥ ३ ॥

**बाल्यस्पृशेति** ॥ त्वं सूतिगेहे बाल्यस्पृशा अपि विभूतीः दधुषा वपुषा परिलेसिथ। त्वं श्रीकृष्ण। सूतिगेहे सूतिगृहे। बाल्यं स्पृशति तेन सम्बध्यत इति बाल्यस्पृक् तेन। अपिर्विरोधे। विभूतीः ईश्वरत्वद्योतकानि चिह्नानि। दधुषा धृतवता। वपुषा शरीरेण। परिलेसिथ शुशुभिषे। विभूतीरेव दर्शयन् वपुर्विशिनष्टि— उद्यत्किरीटकटकाङ्गदहारभासा शङ्खारिवारिजगदापरिभासितेन मेघासितेन इति। उद्यत्किरीटकटकाङ्गदहारभासा उद्यन्त्यः किरीटकटकाङ्गदहाराणां भासो दीप्तयो यस्मिंस्तेन। किरीटं मकुटम्। कटकाः वलयाः। अङ्गदानि अंसावसक्ता आभरणविशेषाः। हाराः मुक्ताकलापाः। एतच्च काञ्चिकुण्डलादीनामप्युपलक्षणम्। शङ्खारिवारिजगदापरिभासितेन शङ्खः पाञ्चजन्यः, अरिः सुदर्शनं, वारिजं पद्मं, गदा कौमोदकी तैः परितो भासितेन। मेघवन्नूतनजलधरवदसितेन नीलेन ॥

वक्षःस्थलीसुखनिलीनविलासिलक्ष्मी-
मन्दाक्षलक्षितकटाक्षविमोक्षभेदैः।

तन्मन्दिरस्य खलकंसकृतामलक्ष्मी-
मुन्मार्जयन्निव विरेजिथ वासुदेव　　॥ ४ ॥

वक्षःस्थलीति ॥ हे वासुदेव त्वं वक्षःस्थलीसुखनिलीनविलासिलक्ष्मीमन्दाक्षलक्षितकटाक्षविमोक्षभेदैः विरेजिथ। वासुदेव वसुदेवपुत्र वक्षःस्थलीसुखनिलीनविलासिलक्ष्मीमन्दाक्षलक्षितकटाक्षविमोक्षभेदैः वक्षःस्थल्यां वक्षोभुवि सुखं यथा भवति तथा निलीनायाः निवसन्त्याः विलासिन्याः निजकमितुर्मूर्त्यन्तरपरिग्रहेण प्रेमप्रकर्षद्योतकविलासचेष्टाशालिन्या लक्ष्म्याः श्रियः मन्दाक्षेण लज्जया लक्षितैः उपलक्षितैः। लज्जामन्थरैरित्यर्थः। कटाक्षविमोक्षाणाम् अपाङ्गदर्शनानां भेदैः नानाविधैः प्रकारैः। विरेजिथ शुशुभिषे। भगवन्तमुत्प्रेक्षते—तन्मन्दिरस्य खलकंसकृताम् अलक्ष्मीम् उन्मार्जयन्निवेति। तन्मन्दिरस्य तस्य मन्दिरस्य गृहस्य। सूतिगेहस्येत्यर्थः। खलकंसकृतां खलेन दुष्टेन कंसेन कृतां विरचिताम्। अलक्ष्मीमश्रियम्। उन्मार्जयन् प्रमार्जयन्। इवेति सम्भावनायाम्। भगवतो लक्ष्मीसाहित्यमत्रोत्प्रेक्षाहेतुः। फलञ्च भगवत्प्रादुर्भावानुपदमेवालक्ष्म्या अपगमप्रतीतिः ॥

वसुदेवो भगवन्तं तुष्टावेत्याह—

शौरिस्तु धीरमुनिमण्डलचेतसोऽपि
दूरस्थितं वपुरुदीक्ष्य निजेक्षणाभ्याम्।
आनन्दबाष्पपुलकोद्गमगद्गदार्द्र-
स्तुष्टाव दृष्टिमकरन्दरसं भवन्तम्　　॥ ५ ॥

शौरिरिति ॥ शौरिः तु आनन्दबाष्पपुलकोद्गमगद्गदार्द्रः भवन्तं तुष्टाव। शौरिः वसुदेवः। आनन्दबाष्पपुलकोद्गमगद्गदार्द्रः आनन्देन तत्प्रयुक्तेन बाष्पेण अश्रुणा पुलकोद्गमेन रोमाञ्चेन च गद्गदेन चार्द्रः। मिलित इत्यर्थः। भवन्तं श्रीकृष्णम्। तुष्टाव ईडितवान्। भगवतो नयनानन्दकरत्वमाह—दृष्टिमकरन्दरसमिति। दृष्ट्योर्नयनयोः मकरन्दस्य मधुनः रसं द्रवम्। नयनयोर्मधुद्रवात्मकमित्यर्थः। मधुनो नयनानन्दकरत्वं सुप्रसिद्धम्। वसुदेवस्यानन्दादि

हेतुमाह—वपुः निजेक्षणाभ्यामुदीक्ष्य इति। वपुः भगवत्स्वरूपम्। निजेक्षणाभ्याम् आत्मनो लोचनाभ्याम्। निरीक्ष्य दृष्ट्वा। भगवद्वपुर्दर्शनस्यात्यन्तदुर्लभत्वमाह—धीरमुनिमण्डलचेतसः अपि दूरस्थितमिति। धीरमुनिमण्डलचेतसः धीरस्य यमैर्नियमैश्च पावितस्य जितश्वासस्य प्रत्याहृतेन्द्रियग्रामस्य चेत्यर्थः। मुनिमण्डलस्य महर्षिसङ्घस्य। न तु यस्य कस्यचिन्मुनेः, किन्तु सर्वेषामपि। चेतसः मनसः। किं पुनरतथाविधानां चेतस इत्यपिशब्दार्थः। दूरस्थितं दूरे वर्तमानम्। धीरैर्महर्षिभिरपि मनसा दुर्ग्राह्यमित्यर्थः॥

स्तुतिप्रकारमाह—

देव प्रसीद परपूरुष तापवल्ली-
निर्लूनदात्रसमनेत्रकलाविलासिन्।
खेदानपाकुरु कृपागुरुभिः कटाक्षै-
रित्यादि तेन मुदितेन चिरं नुतोऽभूः ॥ ६ ॥

देवेति॥ त्वं मुदितेन तेन इत्यादि चिरं नुतः अभूः। त्वं श्रीकृष्णरूपः। मुदितेन सन्तुष्टेन। इत्यादि एवमादिप्रकारेण। चिरं बहुकालम्। नुतः स्तुतः। इत्यादीत्यनेन दर्शितं प्रकारमाह—हे देव परपूरुषतापवल्लीनिर्लूनदात्रसमनेत्रकलाविलासिन् त्वं प्रसीद। कृपागुरुभिः कटाक्षैः खेदान् अपाकुरु इति। देव प्रकाशमान। परपूरुष परमपुरुष। तापवल्लीनिर्लूनदात्रसमनेत्रकलाविलासिन् तापवल्ल्याः तापरूपायाः वल्ल्याः लतायाः निर्लूने मूलच्छेदने दात्रेण अतितीक्ष्णशस्त्रेण समः सदृशः नेत्रकलायाः कटाक्षस्य विलासोऽस्यास्तीति तादृश। प्रसीद मयि प्रसन्नो भव। कृपागुरुभिः करुणारसनिर्भरैः। कटाक्षैः अपाङ्गदर्शनैः। खेदान् मम समस्तसन्तापान्। अपाकुरु निवारय॥

देवकीदेव्या वचनेन भगवान् हरिर्दिव्यरूपमुपसंहृत्य मनुष्यबालकस्वरूपं धृतवानित्याह—

मात्रा च नेत्रसलिलास्तृतगात्रवल्ल्या
स्तोत्रैरभिष्टुतगुणः करुणालयस्त्वम्।

प्राचीनजन्मयुगलं प्रतिबोध्य ताभ्यां
　　मातुर्गिरा दधिथ मानुषबालवेषम्　　॥ ७ ॥

मातेति ॥ त्वं नेत्रसलिलास्तृतगात्रवल्या माता च स्तोत्रैः अभिष्टुत गुणः ताभ्यां प्राचीनजन्मयुगलं प्रतिबोध्य मानुषबालवेषं दधिथ। त्वं श्रीकृष्णः। नेत्रसलिलास्तृतगात्रवल्या नेत्रसलिलेन आनन्दाश्रुणा आस्तृता सिक्ता गात्रवल्ली तनुलता यस्यास्तया। माता जनन्या देवक्या। चकारः समुच्चये। स्तोत्रैः स्तुतिभिः। अभिष्टुतः आभिमुख्येन स्तुता गुणा यस्य सः। ताभ्यां पितृभ्याम्। प्राचीनजन्मयुगलं प्राचीनं प्राक्तनं जन्मनोर्युगलं युग्मम्। प्रतिबोध्य प्राग्युवयोः पृश्निसुतपसोः पुत्रतया पृश्निगर्भाख्योऽहं जातः, पुनश्च अदिति कश्यपयोर्वामनाख्ययेति तौ बोधयित्वेत्यर्थः। मानुषबालवेषं मनुष्यपोत स्वरूपम्। दधिथ धृतवानसि। मनुष्यपोतस्वरूपाङ्गीकारे हेतुमाह—मातुः गिरा इति। मातुः देवक्याः। गिरा 'उपसंहर विश्वात्मन्नदो रूपमलौकिकम्' इति वचसा। भगवतो मातृवाक्याङ्गीकारे हेतुमाह—करुणालयः इति। करुणायाः भक्तेषु कृपायाः आलयः आश्रयभूतः॥

शौरिर्मनुष्यपोतस्वरूपं भगवन्तं गोकुलं नेतुं कराभ्यां धृतवानित्याह—

त्वत्प्रेरितस्तदनु नन्दतनूजया ते
　　व्यत्यासमारचयितुं स हि शूरसूनुः।
त्वां हस्तयोरधृत चित्तविधार्यमार्यै-
　　रम्भोरुहस्थकलहंसकिशोररम्यम्　　॥ ८ ॥

त्वत्प्रेरित इति। सः शूरसूनुः हि तदनु नन्दतनूजया ते व्यत्यासम् आरचयितुं त्वां हस्तयोः अधृत। सः पुण्यकर्मणामग्रेसरत्वेन प्रसिद्धः। अनेन भगवद्वहनयोग्यत्वमुक्तम्। शूरसूनुर्वसुदेव। हीति त्वर्थे। तदनु तस्मिन्नवसरे। नन्दतनूजया नन्दगोपपुत्रीत्वं प्राप्तया भगवतो योगनिद्रया। ते तव श्रीकृष्णस्य। व्यत्यासं विनिमयम्। आरचयितुम् विधातुं। त्वां मनुष्यपोतस्वरूपं श्रीहरिम्। हस्तयोः करयोः। अधृत धृतवान्। अतो

हेतुमाह—वपु निजेक्षणाभ्यामुदीक्ष्य इति। वपु भगवत्स्वरूपम्। निजेक्ष णाभ्याम् आत्मनो लोचनाभ्याम्। निरीक्ष्य दृष्ट्वा। भगवद्वपुर्दर्शनस्यात्यन्तदुर्लभत्वमाह—धीरमुनिमण्डलचेतस अपि दूरस्थितमिति। धीरमुनिमण्डलचेतस धीरस्य यमैर्नियमैश्च पावितस्य नित्तश्वासस्य प्रत्याहृतेन्द्रियग्रामस्य चेत्यर्थ। मुनिमण्डलस्य महर्षिसङ्घस्य। न तु यस्य कस्यचिन्मुने, किन्तु सर्वेषामपि। चेतस मनस। किं पुनरतथाविधाना चेतस इत्यपिशब्दार्थ। दूरस्थित दूरे वर्तमानम्। धीरैर्महर्षिभिरपि मनसा दुर्ग्राह्यमित्यर्थ॥

स्तुतिप्रकारमाह—

देव प्रसीद परपूरुष तापवल्ली
निर्लूनदात्रसमनेत्रकलाविलासिन्।
खेदानपाकुरु कृपागुरुभि कटाक्षै
रित्यादि तेन मुदितेन चिर नुतोऽभू ॥ ६ ॥

देवेति॥ त्व मुदितेन तेन इत्यादि चिर नुत अभू। त्व श्रीकृष्णरूप। मुदितेन सन्तुष्टेन। इत्यादि एवमादिप्रकारेण। चिर बहुकालम्। नुत स्तुत। इत्यादीत्यनेन दर्शित प्रकारमाह हे देव परपूरुषतापवल्लीनिर्लूनदात्रसमनेत्रकलाविलासिन् त्व प्रसीद। कृपागुरुभि कटाक्षै खेदान् अपाकुरु इति। देव प्रकाशमान। परपूरुष परमपुरुष। तापवल्लीनिर्लूनदात्रसमनेत्रकलाविलासिन् तापवल्ल्या तापत्रयात्मिकाया वल्ल्या लताया निर्लूने मूलच्छेदने दात्रेण अतितीक्ष्णशस्त्रेण सम सदृश नेत्रकलाया कटाक्षस्य विलासोऽस्यास्तीति तादृश। प्रसीद मयि प्रसन्न भव। कृपागुरुभि करुणारसनिर्भरै। कटाक्षै अपाङ्गदर्शनै। खेदान् मम समस्तसन्तापान्। अपाकुरु निवारय॥

देवकीदेव्या वचनेन भगवान् हरिर्दिव्यरूपमुपसहृत्य मनुष्यबालकस्वरूप भूतवानित्याह—

माता च नेत्रसलिलास्तृतगात्रवल्ली
स्तोत्रैरभिष्टुतगुणः करुणालयस्त्वम्।

प्राचीनजन्मयुगलं प्रतिबोध्य ताभ्यां
मातुर्गिरा दधिथ मानुषबालवेषम् ॥ ७ ॥

मात्रेति॥ त्वं नेत्रसलिलास्तृतगात्रवल्या माता च स्तोत्रैः अभिष्टुत गुणः ताभ्यां प्राचीनजन्मयुगलं प्रतिबोध्य मानुषबालवेषं दधिथ। त्वं श्रीकृष्णः। नेत्रसलिलास्तृतगात्रवल्या नेत्रसलिलेन आनन्दाश्रुणा आस्तृता सिक्ता गात्रवल्ली तनुलता यस्यास्तया। माता जनन्या देवक्या। चकारः समुच्चये। स्तोत्रैः स्तुतिभिः। अभिष्टुतः आभिमुख्येन स्तुता गुणा यस्य सः। ताभ्यां पितृभ्याम्। प्राचीनजन्मयुगलं प्राचीनं प्राक्तनं जन्मनोर्युगलं युग्मम्। प्रतिबोध्य प्राग्भवयोः पृश्निसुतपसोः पुत्रतया पृश्निगर्भाख्योऽहं जातः, पुत्रश्च अदिति कश्यपयोर्वामनाख्ययेति तौ बोधयित्वेत्यर्थः। मानुषबालवेषं मनुष्यपोत स्वरूपम्। दधिथ धृतवानसि। मनुष्यपोतस्वरूपाङ्गीकारे हेतुमाह—मातुः गिरा इति। मातुः देवक्याः। गिरा 'उपसंहर विश्वात्मन्नदो रूपमलौकिकम्' इति वचसा। भगवतो मातृवाक्याङ्गीकारे हेतुमाह—करुणालयः इति। करुणाया भक्तेषु कृपाया आलयः आश्रयभूतः॥

शौरिर्मनुष्यपोतस्वरूपं भगवन्तं गोकुलं नेतुं कराभ्यां धृतवानित्याह—

त्वत्प्रेरितस्तदनु नन्दतनूजया ते
व्यत्यासमारचयितुं स हि शूरसूनुः।
त्वां हस्तयोरधृत चित्तविधार्यमार्य-
रम्भोरुहस्थकलहंसकिशोररम्यम् ॥ ८ ॥

त्वत्प्रेरित इति। सः शूरसूनुः हि तदनु नन्दतनूजया ते व्यत्यासम् आरचयितुं त्वां हस्तयोः अधृत। सः पुण्यकर्मणामग्रेसरत्वेन प्रसिद्धः। अनेन भगवद्वहनयोग्यत्वमुक्तम्। शूरसूनुर्वसुदेवः। हीति स्वार्थे। तदनु तस्मिन्नवसरे। नन्दतनूजया नन्दगोपपुत्रीत्वं प्राप्तया भगवतो योगनिद्रया। ते तव श्रीकृष्णस्य। व्यत्यासं विनिमयम्। आरचयितुम् विधातुं। त्वां मनुष्यपोतस्वरूपं श्रीहरिम्। हस्तयोः करयोः। अधृत धृतवान्। अतो

पमामाह्—अम्भोरुहस्थकलहंसकिशोररम्यमिति। अम्भोरुहस्थ पङ्कजमध्यवर्ती य/कलहंसकिशोर कलहंसशिशु तद्वद्रम्य चेतोहरम्। करेण भगवद्वहन मत्यन्तदुर्लभमित्याह—आर्य चित्तविधार्यमिति। आर्य जितश्वासैर्मुनिभि। चित्तविधार्य चित्तेन मनसा विधार्य ध्येयम्। ननु श्रीवसुदेवस्य कथमीदृशी मतिस्समभूदिति चेत्तत्राह—त्वत्प्रेरित इति। त्वया श्रीकृष्णेन प्रेरित यदि कसात् बिभेषि, तर्हि मामितो नीत्वा गोकुलं प्रापय्य तत्र यशोदाया प्रसूति शयने निधाय ततस्तत्सुतामादाय मन्मातु प्रसूतिशयने स्थापयेति नियुक्त सन्नित्यर्थ ॥

अथ भगवदादेशान्मायाऽपि नन्दपत्न्या जातेत्याह—

जाता तदा पशुपसद्मनि योगनिद्रा
निद्राविमुद्रितमथाकृत पौरलोकम्।
त्वत्प्रेरणात् किमिह चित्रमचेतनैर्यं
द्वारैः स्वयं व्यघटि सङ्घटितैः सुगाढम् ॥ ९ ॥

जातेति॥ तदा योगनिद्रा त्वत्प्रेरणात् पशुपसद्मनि जाता। तदा भगवत्प्रस्थानावसरे। योगनिद्रा भगवतो हरेर्माया। त्वत्प्रेरणात् तव श्री वैकुण्ठस्य प्रेरणात् प्रवर्तनात्। पशुपसद्मनि नन्दगोपगृहे यशोदायाम्। जाता अवतीर्णा। अथ पौरलोक निद्राविमुद्रितम् अकृत। अचेतनै सुगाढ सङ्घ टितै द्वारै स्वय व्यघटि यत् इह किं चित्रम्। अथ अनन्तरम्। पौर लोक मधुरापुरवासिजनम्। निद्राविमुद्रित निद्रया सुषुप्त्या विमुद्रितम् उप रतशरीरेन्द्रियव्यापारम्। अकृत कृतवती। योगनिद्राऽत्र कर्त्री। त्वत्प्रेरणा दितीहापि सम्बध्यते। अचेतनै चेतनारहितै। अनेन स्वय विघटनस्यासम्भा व्यत्वमुक्तम्। सुगाढम् आयसकीलशृङ्खलादिभिस्सुदृढम्। सङ्घटितै बद्ध कवाटै। व्यघटि विघटितम्। मायाप्रेरणयेति भाव। इति यत् इह द्वारविघटनादौ। किं कीदृश वस्तु। चित्रम् अद्भुतम्। न किञ्चिच्चित्र मित्यर्थ। अघटमानघटनपटीयस्या मायाया न किञ्चिदपि दुष्करमिति भाव ॥

अथ प्रतस्थे शौरिरित्याह—

शेषेण भूरिफणवारितवारिणाऽथ
स्वैरं प्रदर्शितपथो मणिदीपितेन।
त्वां धारयन् स खलु धन्यतमः प्रतस्थे
सोऽयं त्वमीश मम नाशय रोगवेगान् ॥ १० ॥

शेषेणेति ॥ अथ स. खलु त्वां धारयन् प्रतस्थे। अथ अनन्तरम्। स· शौरि.। खल्विति त्वर्थे। त्वां श्रीकृष्णम्। धारयन् वहन्। प्रतस्थे प्रस्थितवान्। शौरेर्भगवद्वहनयोग्यतामाह—धन्यतमः इति। अतिशयेन पुण्य वानित्यर्थ·। ननु कथं निशीथे तमसि मार्गदर्शनम्, कथं वा वर्षपीडा भावश्चेत्याकाङ्क्षायामाह—भूरिफणवारितवारिणा मणिदीपितेन शेषेण स्वैरं प्रद र्शितपथः इति। भूरिफणवारितवारिणा भूरिभिर्बहुभिः फणै. वारितं महता छत्रेणेव निवारितं वारि वर्षोदकं येन। मणिदीपितेन मणिभिः फणामणिभिः दीपितेन प्रकाशितेन। शेषेण अनन्तेन। स्वैरं सुखं यथा भवति तथा। प्रदर्शितपथः प्रदर्शितः प्रकर्षेण दर्शित प्रकाशित. पन्थाः मार्गो यस्य तथाभूतः सन्। अथ प्रार्थयते—हे ईश स. अयं त्वं मम रोगवेगान् नाशय इति। ईश जगद्रक्षक। सः तादृग्भक्तवात्सल्ययुक्तः। अयं मम मानसे प्रत्यक्षगोचरः। त्वं श्रीबालकृष्ण.। मम अनन्यशरणस्य। रोगवेगान् रोगाणां बाह्यानामाभ्यन्तराणाञ्चामयौघ.नां वेगान.क्रमणानि। नाशय निवारय ॥

इति कृष्णावतारवर्णनं कृष्णस्य गोकुलनयनवर्णनं च

अष्टत्रिंशद्दशकम् ॥

## एकोनचत्वारिंशदशकम् ॥

मध्येमार्गं वसुदेवस्य यमुनासन्तरणप्रकारमाह—

भवन्तमयमुद्वहन् यदुकुलोद्वहो निस्सरन्
दद्दर्श गगनोच्चलज्जलभरां कलिन्दात्मजाम् ।
अहो सलिलसञ्चयः स पुनरैन्द्रजालोदितो
जलौघ इव तत्क्षणात् प्रपदमेयतामाययौ ॥ १ ॥

भवन्तमिति ॥ भवन्तम् उद्वहन् निस्सरन् अयं यदुकुलोद्वहः कलिन्दात्मजां ददर्श। भवन्तं श्रीबालकृष्णम्। उद्वहन् करे दधानः। निस्सरन् *निर्गच्छन्*। *अयं यदुकुलोद्वहो वसुदेवः*। *कलिन्दात्मजां कालिन्दीं* नदीम्। ददर्श दृष्टवान्। कालिन्द्या दुस्तरत्वमाह—गगनोच्चलज्जलभरामिति। वर्षाकाले वीचीजालैर्गगनतलविलङ्घिसलिलसञ्चयपरिपूर्णामित्यर्थः। भगवतो हरेः प्रभावात् कालिन्दी दुस्तराऽपि तदानीं सुतरामभूदित्याह— स सलिलसञ्चयः पुनः तत्क्षणात् प्रपदमेयतामाययौ अहो इति। स गगनतलविलङ्घी। सलिलसञ्चयः यमुनाजलौघः। पुनश्शब्दो विशेषे। तमाह—तत्क्षणात् प्रपदमेयतामाययाविति। तत्क्षणात् वसुदेवप्राप्त्यनुपदमेव। प्रपदमेयता प्रपदेन पादाग्रेण मातुं योग्यताम्। आययौ प्राप। भगवतः श्रीकृष्णस्य प्रभावादिति भावः। अहो इत्याश्चर्ये। अत्रोपमामाह—ऐन्द्रजालोदितः जलौघ इव इति। ऐन्द्रजालोदितः जलौघः इन्द्रजालेन दर्शितः। जलौघः जलप्रवाहः ॥

वसुदेवो नन्दात्मजामादाय प्रतिनिवृत्त इत्याह—

प्रसुप्तपशुपालिकां निभृतमारुदद्बालिकां
मपावृतकवाटिकां पशुपवाटिकामाविशन् ।
भवन्तमयमर्पयन् प्रसवतल्पके तत्पदा
द्वहन् कपटकन्यकां स्वपुरमागतो वेगतः ॥ २ ॥

**भवन्तमिति** ॥ अयं पशुपवाटिकामाविशन् भवन्तं प्रसवतल्पके अर्पयन् तत्पदात् कपटकन्यकां वहन् वेगतः स्वपुरमागतः। अयं श्रीवसुदेवः। पशुप वाटिकां नन्दगोपगृहम्। आविशन् प्रविशन्। भवन्तं श्रीबालकृष्णम्। प्रसवतल्पके यशोदायाः प्रसूतिशयने। अर्पयन् विन्यस्येत्यर्थः। तत्पदात् तस्मात् पदात् स्थानात्। कपटकन्यकां कन्याविग्रहां भगवतो योगनिद्राम्। वहन् उद्वहन्। वेगतः झटिति। स्वपुरं स्वस्य पुरं राजधानीम्। आगतः प्रत्यागतः। ननु कथं गोपाङ्गनासु जाग्रतीष्वेतत् कर्तुं वसुदेवः शक्तोऽभूदित्याशङ्कायामाह—प्रसुप्तपशुपालिकामिति। प्रसुप्ता भगवन्मायाप्रेरणया प्रकर्षेण यथाऽकठोरेण शब्देन न प्रबोधयितुं शक्यते, तथा सुप्ताः प्राप्त निद्राः पशुपालिकाः गोपस्त्रियो यस्यां ताम्। अनेन किञ्चिद्रुदन्त्यामपि भगवन्मायायां गोपस्त्रियो न प्रबुद्धा इति ध्वन्यते। ननु कथं वसुदेवो नन्द प्रियासूतिगेहं ज्ञातवानिति चेत्तत्राह—निभृतम् आरुदद्बालिकामिति। निभृतं मन्दं यथा भवति तथा। आरुदद्बालिकाम् आरुदती किञ्चिद्रोदनं कुर्वाणा बालिका नन्दात्मजा यस्यां ताम्। ननु कथमन्तः प्रवेष्टुं शक्तोऽभूदिति चेत्तत्राह—अपावृतकवाटिकामिति। अपावृता विवृताः कवाटिकाः कवाटानि यस्याः ताम् ॥

देवक्याः प्रसववार्तामाकर्णयतः कंसस्य प्रवृत्तिमाह—

ततस्त्वदनुजारवक्षपितनिद्रवेगद्रव-
झटोल्करनिवेदितप्रसववार्तयैवार्तिमान् ।
विमुक्तचिकुरोत्करस्त्वरितमापतन् भोजरा-
डतुष्ट इव दृष्टवान् भगिनिकाकरे कन्यकाम् ॥ ३ ॥

**तत इति** ॥ ततः भोजराट् विमुक्तचिकुरोत्करः त्वरितमापतन् अतुष्ट इव भगिनिकाकरे कन्यकां दृष्टवान्। ततः नन्दात्मजाया देवकीप्रसूतिशयने समर्पणानन्तरम्। भोजराट् कंसः। विमुक्तचिकुरोत्करः शिथिलितकेशबन्धः। त्वरितापतनमत्र हेतुः। त्वरितं शीघ्रम्। आपतन् आगच्छन्। अतुष्टः कथमियं

कन्या जाता, किन्तु खलु दैवमप्यनृत वक्तीति चिन्ताकुलतया अप्रहृष्टमना। इवेत्यवधारणे। वाक्यालङ्कारे वा। भगिनिकाकरे भगिनिकाया देवक्या करे हस्ते। दृष्टवान् ददर्श। कसम्य त्वरितागमनहेतु दर्शयति—आर्तिमा नित। आर्तिर्मरणभीतिस्तद्वान्। आर्तिहेतुमाह— त्वदनुजारवक्षपितनिद्रवेग द्रवद्भटोत्करनिवेदितप्रसववार्तया एव इति। तव अनुजा त्वदनुजा नन्दात्मजा तस्या रवेण रोदनध्वनिना क्षपिता विनाशिता निद्रा स्वपन येषा ते त्वद नुजारवक्षपितनिद्रै। वेगेन झटिति द्रवद्भि धावद्भि भटोत्करै रक्षिपुरुषै निवेदितया आख्यातया प्रसववार्तया देवक्या प्रसूतिवृत्तान्तेन। स्वपकरिणा स्वेपा स्वपच्छेद। मम प्राणहरो हरि प्रादुर्भूत इति निश्चित्येति भाव॥

कस कन्यारूपिणीं भगवता हरेर्माया हस्तु प्रचक्रम इत्याह—

ध्रुव कपटशालिनो मधुहरस्य माया भवे
दमाविति किशोरिकां भगिनिकाकरालिङ्गिताम्।
द्विपो नलिनिकान्तरादिव मृणालिकामाक्षिप
न्नय त्वदनुजामजामुपलपट्टके पिष्टवान् ॥ ४ ॥

ध्रुवमिति॥ अयम् इति भगिनिकाकरालिङ्गिता त्वदनुजामजा किशोरिका माक्षिपन् उपलपट्टके पिष्टवान्। अय कस। इति एव निश्चित्य। भगिनिका करालिङ्गिता भगिनिकाया देवक्या कराभ्या हस्ताभ्या 'स्नुषेय तव कन्याणि स्त्रिय मा हन्तुमर्हसि' इत्याद्युक्त्वा विलप्यालिङ्गितामाश्लिष्टाम्। त्वदनुजा तवा नुजाम्। अजा मायाम्। आक्षिपन् आच्छिद्य गृह्णान। उपलपट्टके शिलापट्टे। पिष्टवान् अपोथयत्। आक्षिपन्नित्यत्रोपमामाह—द्विप नलिनिकान्तरात् मृणा लिकामिव इति। द्विप गज। नलिनिकान्तरात् नलिनिकाया नलिन्या अन्तरात् मध्यात्। मृणालिका बिसम्। उपमयाऽत्र कसस्य निर्भय त्वादि ध्वन्यते। कसस्य निश्चयप्रकारमाह—असौ मधुहरस्य माया भवेत् ध्रुवमिति। असौ इय कन्यका। मधुहरस्य विष्णो। ध्रुव निश्चितम्। ननु कथमेव विनिश्चेतु शक्यत इति चेत्तत्राह— कपटशालिन इति। यदय कपट शाली हरि तस्मादनया कन्ययाऽस्य मायया भवितव्यमित्यर्थ॥

अथ देवी कंसाय रूपान्तरं प्रादर्शयदित्याह—

ततो भवदुपासको झटिति मृत्युपाशादिव
　　प्रमुच्य तरसैव सा समधिरूढरूपान्तरा।
अधस्तलमजग्मुषी विकसदष्टबाहुस्फुर-
　　न्महायुधमहो गता किल विहायसा दिद्युते　　॥ ५ ॥

**तत इति ॥** सा ततः तरसा एव प्रमुच्य विहायसा गता समधिरूढरूपान्तरा अधस्तलमजग्मुषी विकसदष्टबाहुस्फुरन्महायुधं दिद्युते किल अहो। सा मायादेवी। ततः कंसहस्तात्। तरसा बलेन। प्रमुच्य समुत्पत्य। अथवा तरसैव सत्वरमेव विहायसा गतेति योजना। 'सा तद्धस्तात् समुत्पत्य सद्यो देव्यम्बरं गता' इति श्रीमद्भागवतोक्तेः। विहायसा नभोमार्गेण। समधिरूढरूपान्तरा समधिरूढं सम्यगधिरूढं प्राप्तं रूपान्तरम् अन्यद्रूपं यया सा। अधस्तलं भूतलम्। अजग्मुषी अनागता। विकसदष्टबाहुस्फुरन्महायुधं विकसत्सु प्रकाशमानेषु अष्टसु बाहुषु करेषु स्फुरन्ति प्रदीप्तानि महान्त्यायुधानि धनुःशूलेषुचर्मासिशङ्खचक्रगदारूपाणि प्रहरणानि यस्मिन्निति क्रियाविशेषणम्। दिद्युते शुशुभे। किलेति वार्तायाम्। अहो इत्याश्चर्ये। प्रमुच्येत्यत्रोपमामाह—भवदुपासकः झटिति मृत्युपाशादिवेति। भवदुपासकः भगवत्सेवानिरतः। झटिति शीघ्रम्। मृत्युपाशात् कालपाशात्। अनयोपमया देव्याः कंसेन परिभवितुमशक्यता ध्वन्यते॥

अथ भगवती हरेर्माया लोकानुग्रहाय पृथिव्यां तेषु तेषु स्थानेषु सन्निहिता बभूवेत्याह—

नृशंसतर कंस ते किमु मया विनिष्पिष्टया
　　बभूव भवदन्तकः क्वचन चिन्त्यतां ते हितम्।
इति त्वदनुजा विभो खलमुदीर्य तं जग्मुषी
　　मरुद्गणपणायिता भुवि च मन्दिराण्येयुषी　　॥ ६ ॥

नृशसतरेति ॥ हे विभो त्वदनुजा खलं तम् इति उदीर्य मरुद्गण पणायिता जगुषी भुवि मन्दिराणि एयुषी च। विभो परिपूर्ण। त्वदनुजा तवानुजा मायादेवी। खल पापकर्माणम्। त कसम्। इति अनेन प्रकारेण। उदीर्य ईरयित्वा। मरुद्गणपणायिता मरुद्गणैर्देवसङ्घै पणायिता स्तुता। जगुषी गता। भुवि भूमौ। मन्दिराणि तानि तानि स्थनानि। एयुषी गतवती। लोकानुग्रहायेति भाव। चकार समुच्चये। उक्तिप्रकारमह—

हे नृशसतर कस विनिष्पिष्टया मया ते किमु, भवदन्तक क्वचन बभूव, ते हित चिन्त्यनामिति। नृशसतर अतिक्रूरकर्मकारिन्। विनिष्पिष्टया हतया। ते तव। किमु कि प्रयोजनम्। नाह भवदन्तकृत्ता न किञ्चिदपि मया जनमित्यर्थ। ननु कोऽसौ मदन्तक इति चेत्तत्राह—बभूवेत्यादि। भवदन्तको भवतोऽन्तक प्राणहर। क्वचन कुत्रचित्। बभूव जात। ते तव। हित पथ्यम्। चिन्त्यता विचार्यताम्। यद्यपि जानाम्यह भवदन्तकम्, तथापि न ते नृशसाय कथयामि। यदत्र युक्त, तत्त्वयैव विचिन्त्य क्रियतामित्यर्थ ॥

अथ प्रलम्बादय कसभृत्या लोकपीडन चक्रुरित्याह—

प्रगे पुनरगात्मजावचनमीरिता भूभुजा
प्रलम्बबकपूतनाप्रमुखदानवा मानिन। ।
भवन्निधनकाम्यया जगति बभ्रमुर्निर्भयाः
कुमारकविमारकाः किमिव दुष्कर निष्कृपैः ॥ ७ ॥

प्रग इति ॥ पुन प्रलम्बबकपूतनाप्रमुखदानवा भवन्निधनकाम्यया कुमारकविमारका जगति बभ्रमु। पुनरनन्तरम्। प्रलम्बबकपूतनाप्रमुखदानवा प्रलम्बप्रभृतयो दानवा दैतेया। प्रमुखपदेनारिष्टकेशिप्रभृतीना परिग्रह। भवन्निधनकाम्यया भवत श्रीबालकृष्णस्य निधने विहिंसने वाञ्छया। कुमारकविमारका बालकान् मारयन्त। सर्वेष्वपि बालकेषु हतेषु भगवान् श्रीबालकृष्णोऽपि विहिंसितो भवेदिति मत्वेति भाव। जगति लोके। बभ्रमु चेरु। न किञ्चिदप्यत्र तान् निवारयितुं समर्थोऽभूदिति द्योतयितुमाह—

निर्भयाः इति। भयरहिताः सन्तः। प्रलम्बादीनां बालकवधोद्यमे हेतुं दर्शयति—भूभुजा प्रगे अगात्मजावचनम् ईरिताः इति। भूभुजा कंसेन। प्रगे प्रातः। अगात्मजावचनम् अगात्मजाया देव्या मायाया वचनं नृशंसतरेत्यादि वाक्यम्। ईरिताः उक्ताः। ननु कंसेन प्रलम्बादयो न बालकान् हन्तुं नियुक्ताः, पुनः किमिति ते तदर्थमुद्यता इत्याशङ्कायामाह—मानिनः इति। मानः चित्तसमुन्नतिः तद्वन्तः। मानादस्माभिरवश्यं स्वामिकार्यं सम्पादयितव्यमिति मत्वा बालकानां निषूदनमधुना कर्तव्यमिति कंसं विज्ञाप्य गतायुषस्तस्यानुज्ञयेति भावः। ननु कथं तेषामतिनृशंसेऽस्मिन् बालकविलोपने मतिरुदयासीदित्याशङ्कायामर्थान्तरं न्यस्यति—निष्कृपैः किमिव दुष्करमिति। निष्कृपैः निर्गता कृपा येभ्यस्तैः। किमिव किनाम। दुष्करं कर्तुमशक्यम्। निष्कृपैः खलु बालकानां विहिंसन मन्यद्वा तादृशमतिक्रूरं कर्म सुकरमेवेत्यर्थः॥

एवं सूचीकटाहन्यायेन नन्दात्मजावृत्तान्तमुपसंहृत्यानन्तरं भगवतः श्रीबालकृष्णस्यात्यन्तमनोहराणि चरित्राणि प्रस्तौति—

ततः पशुपमन्दिरे त्वयि मुकुन्द नन्दप्रिया-
प्रसूतिशयनेशये रुदति किञ्चिदञ्चत्पदे।
विबुध्य वनिताजनैस्तनयसम्भवे घोषिते
मुदा किमु वदाम्यहो सकलमाकुलं गोकुलम्　　॥ ८ ॥

**तत इति।** ततः मुदा आकुलं सकलं गोकुलम्, किमु वदामि अहो। ततः वसुदेवनिर्गमनानन्तरम्। मुदा सन्तोषेण। आकुलं पर्याकुलम्। गोकुलम्। अत्र गोकुलशब्देन तत्रस्था जना लक्ष्यन्ते। पश्वादीनामपि मोदाकुलत्वप्रतीतिः फलम्। किमु किं वा। वदामि कथयामि। इयती चेदृशी प्रमोदाकुलतेति वक्तुमशक्यमित्यर्थः। अहो इति हर्षे। मोदकारणमाह—वनिताजनैः विबुध्य तनयसम्भवे घोषिते इति। वनिताजनैः गोपीजनैः। विबुध्य प्रबुध्य। तनयसम्भवे नन्दगोपस्य पुत्रजन्मनि। घोषिते यशोदायाः पुत्रो जात इतीतस्ततः कथिते सति। विबोधनकारणमाह—हे

मुकुन्द त्वयि पशुपमन्दिरे नन्दप्रियाप्रसूतिशयनेशये किञ्चिदञ्चत्पदे रुवति इति। मुकुन्द श्रीबालकृष्ण। पशुपमन्दिरे नन्दगोपगृहे। नन्दप्रियाप्रसूतिशयनेशये नन्दप्रियायाः यशोदायाः प्रसूतिशयने प्रसवतल्पके शेत इति तथाविधे। किञ्चिदञ्चत्पदे ईषच्चालितपाद इति बालस्वभावोक्तिः। रुवति रुदति सति। रोदनध्वनिं श्रुत्वेति भावः॥

आत्मजं पश्यन्त्या यशोदाया प्रवृत्तिमाह—

अहो खलु यशोदया नवकलायचेतोहरं
भवन्तमलमन्तिके प्रथममापिबन्त्या दृशा।
पुनः स्तनभरं निजं सपदि पाययन्त्या मुदा
मनोहरतनुस्पृशा जगति पुण्यवन्तो जिताः ॥ ९ ॥

**अहो इति॥** अहो खलु यशोदया जगति पुण्यवन्तः जिताः। अहो खल्वित्याश्चर्ये। अथवा खल्वित्यस्य यशोदयेत्यस्यानन्तरं योजना। खल्विति त्वर्थो विशेषे। तमाह जगतीत्यादि। जगति लोके। पुण्यवन्तः पुण्यकर्माणः। जिताः अधःकृताः। अत्र हेतुमाह—नवकलायचेतोहरं भवन्तम् अलमन्तिके प्रथमं दृशा आपिबन्त्या पुनः निजं स्तनभरं मुदा सपदि पाययन्त्या मनोहरतनुस्पृशा इति। नवकलायचेतोहरं नवकलायवत् नूतनकलायपुष्पवत् चेतोहरं मनोहरम्। नवग्रहणेनाम्लानत्वं तेन शोभातिशयश्च प्रतीयते। उपमया भगवतः सौकुमार्यातिशयो ध्वन्यते। भवन्तं श्रीबालकृष्णम्। अलमत्यर्थम्। अन्तिके समीपे। प्रथमं पूर्वम्। दृशा नयनाभ्यामित्यर्थः। आपिबन्त्या आ समन्तादङ्गप्रत्यङ्गं पिबन्त्या। अत्र पाधातुनाऽवलोकनं लक्ष्यते। विलोकने तृष्णातिशयश्च ध्वन्यते। पुनः दर्शनानन्तरम्। निजं स्वीयम्। स्तनभरं कुचभारम्। मुदा सन्तोषेण। सपदि झटिति। पाययन्त्या निपाययन्त्या। मनोहरतनुस्पृशा मनोहरां चेतोहरां तनुं भगवच्छरीरं स्पृशतीति तथाविधया। योगिनामप्येतानि दुर्लभानीति भावः॥

पुत्रजन्महर्षितस्य नन्दस्य प्रवृत्तिमाह—

भवत्कुशलकाम्यया स खलु नन्दगोपस्तदा
प्रमोदभरसङ्कुलो द्विजकुलाय किन्नाददात् ।
तथैव पशुपालकाः किमु न मङ्गलं तेनिरे
जगत्त्रितयमङ्गल त्वमिह पाहि मामामयात् ॥ १० ॥

भवत्कुशलकाम्ययेति ॥ तदा सः नन्दगोपः खलु प्रमोदभरसङ्कुल भवत्कुशलकाम्यया द्विजकुलाय किं न अददात् । तदा तस्मिन्नवसरे । स. य. पुत्राभावात् पूर्वमतिसन्तप्त, सः । खल्विति स्वर्थे । प्रमोदभरसङ्कुलः प्रमोदभरेण सन्तोषभारेण सङ्कुल· विवश । भवत्कुशलकाम्यया भवतः श्रीबालकृष्णस्य कुशलमभिलषन् । द्विजकुलाय ब्राह्मणसमूहाय । किं कीदृशं वस्तु । न अददात् न अयच्छत् । सर्वमपि वस्तु ददाति स्मेत्यर्थः । गोपानामपि प्रहर्षमाह—तथा पशुपालका एव किमु मङ्गलं न तेनिरे इति । तथा यथा नन्दगोपस्तथा । पशुपालका· इतरे गोपा । एवकारोऽप्यर्थकः समुच्चये । किमु मङ्गलं कीदृशं मङ्गलकर्म । न तेनिरे न कृतवन्त. । समस्तमपि मङ्गलं कर्म चक्रुरित्यर्थ । अथ प्रार्थयते—हे जगत्त्रितयमङ्गल त्वं माम् इह आमयात् पाहि इति । जगत्त्रितयमङ्गल जगत्त्रितयस्य लोकत्रयस्य मङ्गल मङ्गलस्वरूप । त्वं श्रीबालकृष्णः । मामनन्यशरणम् । इह संसारे । आमयात् बाह्यादाभ्यन्तराच्च व्याधे. । पाहि रक्ष ॥

इति योगमायानयनादिवर्णनं
एकोनचत्वारिंशदशकम् ॥

अरमरे खलु तत्र च काचन
व्रजपदे मधुराकृतिरङ्गना ।
तरलषट्पदलालितकुन्तला
कपटपोतक ते निकटं गता ॥ ४ ॥

अरमर इति ॥ हे कपटपोतक तत्र अरमरे च व्रजपदे काचन अङ्गना ते निकटं गता खलु । कपटपोतक कपटबालकरूप । अनेन सम्बोधनेन पूतनाया उद्यमस्य निष्फलत्वं द्योत्यते । तत्र तस्मिन् अरमरे समये । नन्दस्य प्रत्यागमनात् पूर्वमेवेत्यर्थः । चकारस्तथ । व्रजपदे पशुरवाटिकायाम् । काचन अज्ञाता । अङ्गना युवतिः । ते श्रीबालकृष्णस्य । निकटमन्तिकम् । गता प्राप्ता । खल्विति प्रसिद्धौ । अङ्गनायाः स्वरूपमाह—मधुराकृति तरलषट्पदलालितकुन्तला इति । मधुराकृतिः रम्यस्वरूपा । तरलषट्पदलालितकुन्तला तरलैः चपलैः षट्पदैः भ्रमरैः लालिता । अत्र लालिता इत्यस्य लक्षणया व्याप्ता इत्यर्थः । सम्पृक्ता च प्रतीयते । कुन्तलाः केशा यस्याः सा । सौरभ्यलाभादिति भावः ॥

पूतना श्रीबालकृष्णं गृहीतवतीत्याह—

सपदि सा हृतबालकचेतना
निशिचरान्वयजा किल पूतना ।
व्रजवधूष्विह केयमिति क्षणं
विमृशतीषु भवन्तमुपाददे ॥ ५ ॥

सपदीति ॥ सा पूतना सपदि भवन्तम् उपाददे किल । सा रम्यरूपधारिणी । पूतना तदाख्या । सपदि झटिति । भवन्तं श्रीबालकृष्णम् । उपाददे गृहीतवती । किलेति वार्तायाम् । ननु व्रजाङ्गनाभिः किमिति निवारितेति चेत्तत्राह—व्रजवधूषु इति क्षणं विमृशतीषु इति । व्रजवधूषु गोपाङ्गनासु । इति एवं प्रकारेण । विमृशतीषु चिन्तयन्तीषु सतीषु । निवारणात् पूर्वमेवेति भावः ।

का इति । इयं दृश्यमाना तरुणी । इह व्रजे । का अदृष्टपूर्वतया का नाम भवेदित्यर्थः । पूतनायाः स्वभावमाह—हृतबालकचेतना इति । हृताः अपहृता बालकानां शिशूनां चेतना. चैतन्यानि । प्राणा इत्यर्थः । यया सा । कथमस्या ईदृश स्वभावः समभूदिति चेत्तत्राह—निशिचरान्वयजा इति । निशिचराणा राक्षसानामन्वये वंशे जाता यतस्तस्मादिति भाव. ॥

किञ्चेयं भगवते श्रीबालकृष्णाय स्तनमपि दत्तवतीत्याह—

ललितभावविलासहृतात्मभि-
र्युवतिभिः प्रतिरोद्धुमपारिता ।
स्तनमसौ भवनान्तनिषेदुषी
प्रददुषी भवते कपटात्मने ॥ ६ ॥

ललितभावेति ॥ असौ भवनान्तनिषेदुषी कपटात्मने भवते स्तनं प्रददुषी । असौ पूतना । भवनान्तनिषेदुषी भवनान्ते गृहाभ्यन्तरे निषेदुषी उपविष्टा सती । कपटात्मने कपटपोतकाय । अनेन पूतनाया नाशो ध्वन्यते । भवते श्रीबालकृष्णाय । स्तनं कुचम् । प्रददुषी दत्तवती । ननु गोपिकाभिः कुतो न प्रतिषिद्धेत्याशङ्कायामाह—युवतिभि. प्रतिरोद्धुमपारिता इति । युवतिभिः गोपीभि । प्रतिरोद्धुं निषेद्धुम् । अपारिता अशक्या । अत्र हेतु ललितभावविलासहृतात्मभि इति । ललितेन मनोहरेण भावेन विलासैश्च हृत. वशीकृत आत्मा मनो यासा ताभि ॥

श्रीबालकृष्ण पूतना हन्तुं तस्या स्तनमपिबदित्याह—

समधिरुह्य तदङ्कमशङ्कित-
स्त्वमथ बालकलोपनरोपितः ।
महदिवाम्रफल कुचमण्डल
प्रतिचुचूषिथ दुर्विषदूषितम् ॥ ७ ॥

समधिरुह्येति ॥ अथ त्वमपि अशङ्कित तदङ्क समधिरुह्य दुर्विष दूषितं कुचमण्डलं प्रतिचुचूषिथ । अथ अनन्तरम् । त्वं श्रीबालकृष्ण । .

अपिस्समुच्चये। अशङ्कित शङ्कारहित । तदङ्क तस्या पूतनाया अङ्कमुत्स ङ्गम्। समधिरुह्य आरुह्य। दुर्विषदूषित दुर्विषेण बालकाना मारणहेतुत्वात् दुष्टेन विषेण दूषितम्। कुचमण्डल स्तनमण्डलम्। प्रतिचुचूषिथ वक्त्रे निवेश्याङ्गुष्ठाभ्या निष्पीड्य चूषण कृतवान्। अत्रोपमामाह—महत् आम्र फलमिव इति। महत् पृथु। आम्रफलम् आम्रस्य चूतस्य फलम्। चूषणे हेतु —बालकलोपनरोषित इति। बालकाना शिशूना लोपनेन मार णेन रोषित कोपित। ता हन्तुमिति भाव ॥

अथ पूतनामोक्षमाह—

असुभिरेव सम धयति त्वयि
स्तनमसौ स्तनितोपमनिस्वना।
निरपतद्भयदायि निज वपुः
प्रतिगता प्रविसार्य भुजावुभौ ॥ ८ ॥

असुभिरिति॥ असौ निरपतत। असौ पूतना। निरपतत् प्राणान् त्यक्त्वा निपपात। अत्र हेतुमाह—त्वयि असुभि एव सम धयति इति। त्वयि श्रीबालकृष्णे। असुभि प्राणै। एवकारेण दुर्विषादिव्यवच्छेद। सम सह। धयति स्तन पिबति सति। पतन्त्या पूतनायास्तात्कालिक विशेषमाह—स्तनितोपमनिस्वना निज वपु प्रतिगता उभौ भुजौ प्रविसार्य इति। स्तनितोपमनिस्वना स्तनितोपम घनगर्जितसदृशो निस्वन शब्दो यस्या सा। निजमात्मीयम्। वपु शरीरम्। प्रतिगता प्राप्ता सती। भुजौ बाहू। प्रविसार्य प्रसार्य। पूतनाशरीरस्य स्वरूपमाह—भयदायि इति। 'ईषामात्रोग्रदंष्ट्रास्य गिरिकन्दरनासिकम्। गण्डशैलस्तन रौद्र प्रकीर्णारुण मूर्धजम्॥ अन्धकूपगभीराक्ष पुलिनारोहभीषणम्। बद्धसेतुभुजोर्वङ्घ्रिशून्यतोय ह्रदोदरम्' इति श्रीमद्भागवतोक्तस्वरूपमित्यर्थ ॥

गोप्य पूतनाशरीरात् भगवन्त श्रीबालकृष्ण जगृहुरित्याह—

भयदघोषणभीषणविग्रह-
　श्रवणदर्शनमोहितवल्लवे ।
व्रजपदे तदुरःस्थलखेलना-
　न्यनुभवन्तमगृह्णत गोपिकाः　　॥ ९ ॥

भयदेति ॥ गोपिकाः अगृह्णत । त्वामिति शेषः । गोपिकाः गोपस्त्रियः । त्वां भवन्तं श्रीबालकृष्णम् । अगृह्णत जगृहुः । तदानीन्तनं भगवतश्चेष्टितमाह—तदुरःस्थलखेलनानि अनुभवन्तमिति । तदुरःस्थलखेलनानि तस्याः पूतनायाः उरःस्थले वक्षःस्थले खेलनानि पादावधूननादिरूपा क्रीडाः । अनुभवन्तं कुर्वाणमित्यर्थः । पूतनायां पतितायां सञ्जातां व्रजपदस्य दशामाह—व्रजपदे भयदघोषणभीषणविग्रहश्रवणदर्शनमोहितवल्लवे इति । व्रजपदे पशुपवाटिकायाम् । भयदघोषणभीषणविग्रहश्रवणदर्शनमोहितवल्लवे भयदस्य भयदायिनः घोषणस्य शब्दस्य भीषणस्य भयानकस्य विग्रहस्य शरीरस्य श्रवणेन श्रुत्या दर्शनेनावलोकनेन च मोहिताः । जातसम्भ्रमा इत्यर्थः । वल्लवाः गोपा यस्मिंस्तथाविधे सति । अत्र यथासंख्यं घोषणस्य श्रवणेन विग्रहस्य दर्शनेनान्वयो बोध्यः । प्रथमं घोषं श्रुत्वा झटिति तत्रागत्य पश्चाद्विग्रहं दृष्ट्वा च मोहिता इति विभावनीयम् ॥

गोप्यः श्रीबालकृष्णस्य रक्षां चक्रुरित्याह—

भुवनमङ्गलनामभिरेव ते
　युवतिभिर्बहुधा कृतरक्षणः ।
त्वमयि वातनिकेतननाथ मा-
　मगदयन् कुरु तावकसेवकम्　　॥ १० ॥

भुवनमङ्गलेति ॥ त्वं युवतिभिः ते एव भुवनमङ्गलनामभिः बहुधा कृतरक्षणः । त्वं श्रीबालकृष्णः । युवतिभिः गोपीभिः । ते तव । एवकारेणान्येषां व्यवच्छेदः । भुवनमङ्गलनामभिः भुवनमङ्गलैः जगन्मङ्गलैः नामभिः ।

बहुभिर्बहुप्रकारैरित्यर्थः । कृतरक्षण कृत रक्षण यस्य । आसीरिति शेष । रक्षणप्रकारश्च श्रीमद्भागवतेऽनुसन्धेय । अथ प्रार्थयते—अयि वातनिकेतन नाथ त्व मामगदयन् तावकसेवक कुरु इति । अयीति सम्बोधने । वात निकेतननाथ श्रीगुरवायुपुरनाथ । त्व श्रीबालकृष्ण । मामनन्यशरणम् । अगदयन् नीरोग कुर्वन् । तावकसेवक त्वद्भक्तम् । कुरु विधेहि ॥

इति वार्षिककरदानाय नन्दस्य मथुराप्रयाणवर्णन पूतनामोक्षवर्णन च

चत्वारिंशद्दशकम् ॥

## एकचत्वारिंशदशकम् ॥

अथ वसुदेवगिरमाकर्ण्य प्रतिनिवृत्तस्य नन्दस्य वृत्तमाह—

व्रजेश्वर शौरिवचो निशम्य
समाव्रजन्नध्वनि भीतचेता ।
निष्पिष्टनिश्शेषतरु निरीक्ष्य
कञ्चित् पदार्थं शरण गतस्त्वाम् ॥ १ ॥

**व्रजेश्वर इति** ॥ व्रजेश्वर त्वा शरण गत । व्रजेश्वर नन्द । त्वा श्रीहरिम् । शरण रक्षितारम् । गत प्राप्त । श्रीबालकृष्णमदृष्ट्वा परवशस्त रक्षितुमिति भाव । अत्र हेतुमाह—कञ्चित् पदार्थं निरीक्ष्य इति । कञ्चित् अतिमहत्त्वाददृष्टपूर्वत्व च किमिदमिति ज्ञातुमशक्यम् । पदार्थं वस्तु । तदानीं नन्दस्य पूतनाशरीरमेतदित्यज्ञानात् पदार्थमित्युक्ति । नन्देन दृष्टस्य पदार्थस्यातिभीषणतामाह—निष्पिष्टनिश्शेषतरुमिति । निष्पिष्ट पतनजवन पातितादचूर्णीकृताश्च निश्शेषा निखिला त्रिगव्यूत्यन्तरस्थास्तरवो द्रुमा येन तम् । उक्तञ्च श्रीमद्भागवते—'पतमानोऽपि तद्देहस्त्रिगव्यूत्यन्तरद्रुमान् । चूर्णयामास

राजेन्द्र महदासीत्तदद्भुतम्' इति। ननु किमित्येवंविधं पदार्थं निरीक्ष्य नन्दस्तनयं रक्षितुं हरिं शरणं ययावित्याशङ्कायामाह—अध्वनि भीतचेताः समाव्रजन्निति। अध्वनि व्रजागमनमार्गे। भीतचेताः भीतं पुत्रापायशङ्कया भयाक्रान्तं चेतो मनो यस्य सः। समाव्रजन् आगच्छन्। पुत्रापायशङ्काहेतुमाह—शौरिवचः निशम्य इति। शौरिवचः शौरेः श्रीवसुदेवस्य वचः 'इह च सन्त्यनिमित्तशतानि' इत्यादिवचनम्। निशम्य श्रुत्वा॥

अथ गोपानां तात्कालिकीं प्रवृत्तिमाह—

**निशम्य गोपीवचनादुदन्तं सर्वेऽपि गोपा भयविस्मयान्धाः।**
**त्वत्पातितं घोरपिशाचदेहं देहुर्विदूरेऽथ कुठारकृत्तम्॥ २॥**

**निशम्येति॥** सर्वे गोपाः अपि भयविस्मयान्धाः। भयविस्मयान्धाः भयेन भीत्या विस्मयेनाद्भुतेन च अन्धाः कर्तव्यमजानन्त इत्यर्थः। बभूवुरिति शेषः। अत्र हेतुः—गोपीवचनात् उदन्तं निशम्य इति। गोपीवचनात् गोपीनां गोपस्त्रीणां वचनादुक्तेः। उदन्तं वृत्तान्तम्। निशम्य श्रुत्वा। अत्र भयं घोररूपदर्शनात्, श्रीबालकृष्णेनैतत् पातितमिति विस्मयश्चेत्यवगन्तव्यम्। अथ त्वत्पातितं घोरपिशाचदेहं विदूरे देहुः। अथ भयविस्मययोः किञ्चिदपगमावस्था गोपाः किञ्चिल्लब्धचेतना बभूवुः, तदेत्यर्थः। त्वत्पातितं त्वया श्रीबालकृष्णेन पातितं हतम्। घोरपिशाचदेहं घोरमति भीषणं पिशाचदेहं पिशाचशरीरम्। विदूरे दूरदेशं नीत्वा तत्रेत्यर्थः। देहुः भस्मीचक्रुः। ननु कथं तादृशमतिमहत् पूतनाशरीरं गोपा दूरं निन्युरिति चेत्तत्राह—कुठारकृत्तमिति। कुठारैः परशुभिः कृत्तं खण्डशः कृतम्। गोपा इत्यस्मिन् वाक्येऽप्यनुषज्यते॥

दह्यमानात् पूतनाशरीरात् सुरभिर्धूमराशिरुत्थितोऽभूदित्याह—

**त्वत्पीतपूतस्तनतच्छरीरात् समुच्चलन्नुच्चतरो हि धूमः।**
**शङ्कामधादागरवः किमेष किं चान्दनो गौल्गुलवोऽथवेति॥ ३॥**

न दूरे न जन्मान्तरे। भविष्यतीति शेषः। यदियं मां हन्तुमुद्यताऽपि पूतना अधुनैव मुक्ताऽभूत्, तत् झटित्येव मदङ्गसङ्गफलप्राप्तिरित्यर्थः। क्षणेन अनन्तरक्लेशं विना। तावदित्यवधारणे। अयोगव्यवच्छेदार्थकस्तावच्छब्दः। भवतां मदीययोगक्षेमैकनिरतानाम्। अपिस्समुच्चये। स्यात् भविष्यत्यसंशयम्। मम प्रतिकूलमाचरतामपि मदङ्गसङ्गात् झटिति फलप्राप्तिः सम्भवति, किं पुनः स्नेहान्मदायत्तचेतसां भवतामिति भावः॥

अथ गोपाः श्रीबालकृष्णवदनारविन्दं विलोक्यातीव जहृषुरित्याह—

**चित्रं पिशाच्या न हतः कुमारश्चित्रं पुरैवाकथि शौरिणेदम्।**
**इति प्रशंसन् किल गोपलोको भवन्मुखालोकरसे न्यमाङ्क्षीत्॥ ५॥**

**चित्रमिति॥** गोपलोकः इति प्रशंसन् भवन्मुखालोकरसे न्यमाङ्क्षीत् किल। गोपलोकः गोपसमूहः। इति अनेन प्रकारेण। प्रशंसन् स्तुवन्। भवन्मुखालोकरसे भवतः श्रीबालकृष्णस्य यन्मुखं वदनसरसिजं तस्यालोकः दर्शनं तत्र यो रस आनन्दस्तस्मिन्। न्यमाङ्क्षीत् निमग्नोऽभूत्। किलेति वार्तायाम्। श्रीबालकृष्णवदनारविन्ददर्शनेन विगलितवेद्यान्तरमानन्दमन्वभूवन्नित्यर्थः। प्रशंसाप्रकारमाह—कुमारः पिशाच्या न हतः चित्रम्। इदं शौरिणा पुरा एव अकथि चित्रम् इति। कुमारः नन्दात्मजः। पिशाच्या पूतनया। न हतः न व्यापादितः। चित्रमद्भुतम्। न हत इति यत्, तत् चित्रमित्यर्थः। इदं यदत्र समभवत्। शौरिणा श्रीवसुदेवेन। पुरैव पूर्वमेव अकथि 'इह च सन्त्यनिमित्तशतानि' इत्यादिनोक्तम्॥

भगवत्सान्निध्याद्व्रजौकसः सर्वेऽपि मुमुदिर इत्याह—

**दिने दिनेऽथ प्रतिवृद्धलक्ष्मीरक्षीणमङ्गल्यशतो व्रजोऽयम्।**
**भवन्निवासादयि वासुदेव प्रमोदसान्द्रः परितो विरेजे ॥ ६॥**

**दिने दिन इति॥** अयि वासुदेव अयं व्रजः भवन्निवासात् अथ दिने दिने प्रतिवृद्धलक्ष्मीः अक्षीणमङ्गल्यशतः परितः प्रमोदसान्द्रः विरेजे।

किं किं न कृतम्। ईश जगद्रक्षक श्रीबालकृष्णस्वरूप विष्णो। वधूभिः गोपीभिः। कुमारः बालकः। दत्तदृष्टिः दत्ता अर्पिता दृष्टिः दृक् येन सः। अहो इत्याश्चर्ये हर्षे वा। वत्सलेन वात्सल्यवता। अत्र कुमारेणेति विभक्तिविपरिणामेन योजनीयम्। मां प्रति मामुद्दिश्य। स्मितं हसितम्। एहि आगच्छ। इति उक्त्वा। पाणी करौ। उपसार्य प्रसार्य। त्वयि श्रीबालकृष्णे। किं किं न कृतं चुम्बनाश्लेषणाङ्कारोपणादि सर्वं कृतमित्यर्थः। अहो भाग्यवत्यो गोपिका इति भावः॥

भवद्वपुःस्पर्शनकौतुकेन करात् करं गोपवधूजनेन।
नीतस्त्वमाताम्रसरोजमालाव्यालम्बिलोलम्बतुलामलासीः ॥ ९ ॥

भवद्वपुरिति॥ त्वम् आताम्रसरोजमालाव्यालम्बिलोलम्बतुलाम् अलासीः। त्वं श्रीबालकृष्णः। आताम्रसरोजमालाव्यालम्बिलोलम्बतुलाम् आताम्रायाम् आ समन्तात् ताम्रायां ताम्रवर्णायां सरोजमालायां पङ्कजमालायां व्यालम्बी प्रति नवमधुलुब्धतया लम्बमानो यो लोलम्बो भ्रमरस्तस्य तुलां साम्यम्। अलासीः फलितवानसि। अत्र हेतुमाह—गोपवधूजनेन करात् करं नीतः इति। गोपवधूजनेन गोपस्त्रीजनेन। करात् हस्तात्। नीतः प्रापितः। अत्र हेतुः—भवद्वपुःस्पर्शनकौतुकेन इति। भवतः श्रीबालकृष्णस्य वपुषः स्पर्शने यत् कौतुकं तेन। वधूजनपाणिपरम्परायां अरुणसरोजमालायमानतया श्रीबालकृष्णस्य तद्व्यालम्बिप्रतिनवमधुलुब्धलोलम्बदेशीयतया तत्सादृश्यमिति द्रष्टव्यम्॥

यशोदाया भगवल्लालनप्रकारमाह—

निपाययन्ती स्तनमङ्कगं त्वां विलोकयन्ती वदनं हसन्ती।
दशां यशोदा कतमां न भेजे स तादृशः पाहि हरे गदान्माम् ॥ १० ॥

निपाययन्तीति॥ यशोदा अङ्कगं त्वां स्तनं निपाययन्ती वदनं विलोकयन्ती हसन्ती कतमां दशां न भेजे। अङ्कगमुत्सङ्गवर्तिनम्। त्वां श्रीबालकृष्णम्। स्तनं कुचम्। निपाययन्ती नितरां पाययन्ती। वदनं श्रीबाल

कृष्णमुखारविन्दम्। विलोकयन्ती पश्यन्ती। कतमां कीदृशीम्। दशां विस्मयौत्सुक्यापायशङ्कादैवप्रार्थनवैवश्यादिरूपामवस्थाम्। भेजे प्रासवती। सर्वा अपि दशाः प्रासवतीत्यर्थः। अथ प्रार्थयते—हे हरे तादृशः सः त्वं मां गदात् पाहि इति। हरे विष्णो। तादृशः श्रीबालकृष्णरूपः। सः तथा विधभक्तवात्सल्ययुक्तः। त्वं श्रीगुरुवायुपुरनाथः। माम् अनन्यशरणम्। गदात् सर्वामयात्। पाहि त्रायस्व ॥

इति पूतनाशरीरदाहवर्णनं बालकलालनेन यशोदादीनां निरतिशयानन्दवर्णनं च एकचत्वारिंशद्दशकम् ॥

## अथ द्विचत्वारिंशदशकम्।

अथ भगवतः शकटासुरमर्दनं प्रस्तौति—

**कदापि जन्मर्क्षदिने तव प्रभो निमन्त्रितज्ञातिवधूमहीसुरा।**
**महानसस्त्वां सविधे निधाय सा महानसादौ ववृते व्रजेश्वरी ॥ १ ॥**

कदापीति ॥ हे प्रभो कदापि तव जन्मर्क्षदिने निमन्त्रितज्ञातिवधूमहीसुरा सा व्रजेश्वरी त्वा महानसः सविधे निधाय महानसादौ ववृते। प्रभो अलङ्घनीयशासन। कदापि कस्मिंश्चित्। तव श्रीबालकृष्णस्य। जन्मर्क्षदिने जन्मनक्षत्रदिवसे। निमन्त्रितज्ञातिवधूमहीसुरा निमन्त्रिता आहूता ज्ञातीनां वध्वः स्त्रियो महीसुरा विप्रा यया सा। सा व्रजेश्वरी यशोदा। त्वां श्रीबालकृष्णम्। महानसः महतोऽनस शकटस्य। सविधे समीपे। अधस्तादित्यर्थः। निधाय शाययित्वा। महानसादौ महानसप्रभृतिषु देशेषु। ववृते अवर्तत। स्वकर्मव्यग्रतयेति भावः। ननु सत्स्वप्यपायरहितेषु बहुषु प्रदेशेषु किमिति यशोदया प्राणेभ्योऽपि प्रियः स्वात्मजः शकटस्याधस्ताच्छायित इति नाशङ्क

नीयम्, *शकटरूपच्छन्नमसुरं हन्तुमुद्यतस्यालङ्घनीयशासनस्य भगवतो हरेः प्रेरणा* देवं कृतवतीत्यनुसन्धेयम् । अयमेवार्थः प्रभो इत्यनेन सूचितः ॥

शकटभञ्जनं दर्शयति—

**ततो भवत्त्राणनियुक्तबालकप्रभीतिसङ्क्रन्दनसङ्कुलारवैः ।**
**विमिश्रमश्रावि भवत्समीपतः परिस्फुटद्दारुचटच्चटारवः ॥ २ ॥**

**तत इति ॥** ततः भवत्समीपतः परिस्फुटद्दारुचटच्चटारवः भवत्त्राण नियुक्तबालकप्रभीतिसङ्क्रन्दनसङ्कुलारवैः विमिश्रम् अश्रावि । ततः अनन्तरम् । *भवत्समीपतः भवतः श्रीबालकृष्णस्य समीपात् । परिस्फुटद्दारुचटच्चटारवः परिस्फु* टतां विघटितसन्धिबन्धनादीनां दारूणां शकटावयवानां चक्राक्षादीनां चटच्चटा रवः चटचटशब्दः । भवत्त्राणनियुक्तबालकप्रभीतिसङ्क्रन्दनसङ्कुलारवैः भवतः स्वात्मजस्य त्राणे रक्षणे नियुक्तानामादिष्टानां बालकानां गोपालबालानां प्रकृष्टा भीतिः शकटविदलनपतनादिदर्शनमहाशब्दश्रवणजनितं भयं तया यत् सङ्क्रन्दनम् उच्चैराक्रन्दनं तस्य सङ्कुलैः बहुभिः कृतत्वात् प्रवृद्धैरारवैश्शब्दैः । विमिश्रं सङ्कीर्णं यथा भवति तथा । अश्रावि श्रुतः । यशोदादिभिरिति शेषः ॥

शकटविदलनशब्दं श्रुत्वा गोप्यस्ससम्भ्रमं तत्राजग्मुरित्याह—

**ततस्तदाकर्णनसम्भ्रमश्रमप्रकम्पिवक्षोजभरा व्रजाङ्गनाः ।**
**भवन्तमन्तर्ददृशुस्समन्ततो विनिष्पतद्दारुणदारुमध्यगम् ॥ ३ ॥**

**तत इति ॥** ततः *व्रजाङ्गनाः भवन्तम् अन्तः ददृशुः । ततः अनन्तरम् ।* व्रजाङ्गनाः गोप्यः । भवन्तं श्रीबालकृष्णम् । अन्तः भवनान्तः । ददृशुः दृष्टवत्यः । गोपीनां तात्कालिकीमवस्थामाह—तदाकर्णनसम्भ्रमश्रमप्रकम्पिवक्षोजभराः इति । तस्य बालकसङ्क्रन्दनरवविमिश्रस्य शकटविदलनध्वनेराकर्णनेन श्रवणेन यः किमिद मापतितं पूर्ववन्नन्दसूनोरिति सम्भ्रमः स्वस्वगेहान्नन्दगेहं प्रति धावनेन यः श्रमश्च ताभ्यां प्रकम्पिनौ प्रकर्षेण कम्पमानौ वक्षोजभरौ स्तनभारौ यासां ताः । भगवतोऽपि तात्कालिकीमवस्थां दर्शयति—विनिष्पतद्दारुणदारुमध्यग

मिति। विनिष्पततां समन्तात् पतितानां दारुणानां गुरुतराणां दारूणामक्ष कूबरादिशकटावयवानां मध्यगं मध्यवर्तिनम् ॥

अथ नन्दादयोऽपि तत्राजग्मुरित्याह—

**शिशोरहो किं किमभूदिति द्रुतं प्रधाव्य नन्दः पशुपाश्च भूसुराः ।**
**भवन्तमालोक्य यशोदया धृतं समाश्वसन्नश्रुजलार्द्रलोचनाः ॥ ४ ॥**

**शिशोरिति ॥** नन्द पशुपा भूसुरा. च इति द्रुतं प्रधाव्य भवन्तं यशोदया धृतम् आलोक्य अश्रुजलार्द्रलोचना समाश्वसन्। पशुपाः गोपाः। भूसुराः ब्राह्मणाः। चकार. समुच्चये। इति एवमुक्त्वा। द्रुतं झटिति। प्रधाव्य प्रकर्षेण विद्राव्य। भवन्तं श्रीबालकृष्णम्। धृतं गृहीतम्। आलोक्य दृष्ट्वा। अश्रुजलार्द्रलोचना· अश्रुजलेन श्रीबालकृष्णस्य नीरुजस्य दर्शनात् जातेनानन्दाश्रुणा आर्द्रे सिक्ते लोचने नयने येषा ते। समाश्वसन् आश्वस्ता बभूवुः। इतिशब्दार्थमुक्तिप्रकारमाह—अहो शिशो किं किमभूदिति। अहो इति ससम्भ्रमाश्चर्ये। शिशो बालकस्य। किं किमिति सम्भ्रमा द्विरुक्तिः अभूत् आपतितम् ॥

गोपा. शकटभञ्जने हेतुमपश्यन्तो विस्मितास्तत्रातिष्ठन्नित्याह—

**कस्को नु कौतस्कुत एष विस्मयो विशङ्कटं यच्छकटं विपाटितम् ।**
**न कारणं किञ्चिदिहेति ते स्थिताः स्वनासिकादत्तकरास्त्वदीक्षकाः ॥ ५ ॥**

**कस्क इति ॥** त्वदीक्षका· ते इति स्वनासिकादत्तकराः स्थिता.। त्वदीक्षका. तव श्रीबालकृष्णस्य ईक्षका. द्रष्टार.। ते गोपाः। इति एव मुक्त्वा। स्वनासिकादत्तकरा. स्वस्य नासिकायां नासायां दत्त: अर्पित. करो यैस्ते। स्थिताः अतिष्ठन्। उक्तिप्रकारमाह—एष. कस्कः कौतस्कुत· नु विशङ्कटं शकटं विपाटितं यत् इह न किञ्चित् कारणम्, एषः विस्मयः इति। एष. दृश्यमानो विशेष.। कस्कः क· क. कीदृशः कीदृश.। सम्भ्रमात् द्विरुक्तिः। एवमुत्तरत्राऽपि। कौतस्कुतः कुत. कुतः कस्मात् कस्मात्

कारणादागतः। न्विति वितर्के। विशङ्कटं महत्। शकटम् अनः। विपाटितं विदलितम्। इह विदलने। कारणं हेतुः। दृश्यत इति शेषः। एषः शकटविदलनम्। विस्मयः आश्चर्यभूतः। एष इत्यस्य मध्यमणि न्यायेनात्रापि सम्बन्धः। स्वनासिकादत्तकरा इत्याश्चर्यानुभावप्रदर्शनपरम् ॥

श्रीबालकृष्णं रक्षितुं यशोदया नियुक्ताः बालकाः शकटभञ्जने हेतु मवदन्नित्याह—

कुमारकस्यास्य पयोधरार्थिनः
प्ररोदने लोलपदाम्बुजाहतम्।
मया मया दृष्टमनो विपर्यगा-
दितीश ते पालक बालका जगुः ॥ ६ ॥

कुमारकस्येति ॥ हे ईश ते पालकबालकाः इति जगुः। ईश जगद्रक्षक। ते तव श्रीबालकृष्णस्य। पालकबालकाः पालकाः रक्षिणो बालकाः गोपकुमाराः। इति एवम्। जगुः ऊचुः। उक्तिप्रकारमाह— अनः अस्य कुमारस्य लोलपदाम्बुजाहतं विपर्यगादिति। अनः शकटः। कुमारकस्य बालकस्य। लोलपदाम्बुजाहतं लोलेन चञ्चलेन पदाम्बुजेन पादार विन्देन आहतमभिहतं सत्। विपर्यगात् भग्नावयवमभूदित्यर्थः। कुमारकस्य पाद चालने हेतुमाह—प्ररोदने इति। प्रकृष्टं रोदनं प्ररोदनं तस्मिन् सति। उत्तानशया बालकाः पादौ चालयन्तो रुदन्तीति भावः। रोदने हेतुः—पयोधरार्थिन. इति। स्तनं पातुमभिलषत इत्यर्थः। नात्र सन्देहो युष्माभि कर्तव्यः, यदस्माभिरेतत् प्रत्यक्षीकृतमित्याहुः—मया मया दृष्टमिति। द्विरुक्तिस्तैः प्रत्येकमुक्तमिति दर्श यितुम्। दृष्टं प्रत्यक्षीकृतम् ॥

गोपा न बालानां भाषितं विश्वस्युरित्याह——

भिया तदा किञ्चिदजानतामिदं
कुमारकाणामतिदुर्घटं वचः।

भवत्प्रभावाविदुरैरितीरित
मनागिवाशङ्क्यत दृष्टपूतनैः ॥ ७ ॥

भियेति ॥ भवत्प्रभावाविदुरै इति ईरितम्। भवत्प्रभावाविदुरै भवतः श्रीबालकृष्णस्वरूपस्य श्रीहरेः प्रभावः शक्तिस्तदविदुरैः तदनभिज्ञैः। कैश्चित् गोपैरिति शेषः। इति इत्थम्। ईरितं कथितम्। कथनप्रकारमाह—इदं कुमारकाणां वचः अतिदुर्घटमिति। इदं कुमारकस्येत्यादि। कुमारकाणां गोपबालानाम्। वचः वचनम्। अतिदुर्घटम् अतीव दुर्घटमसङ्गतम्। अत्र हेतुं दर्शयति—तदा भिया किञ्चित् अजानतामिति। तदा शकटभञ्जनावसरे। भिया भयेन। किञ्चित् किमपि वस्तुवृत्तम्। अजानताम् अबुध्यताम्। कैश्चित् गोपकुमारोक्तं सत्यमिति तर्कितं स्यादपीति सम्भावयन्नाह—दृष्टपूतनैः मनाक् आशङ्क्यत इव इति। दृष्टपूतनैः दृष्टा प्रत्यक्षीकृता पूतना यैस्तैः। कैश्चिदिति शेषः। मनाक् ईषत्। आशङ्क्यत शङ्कितम्। इवेति सम्भावनायाम्। दूरे तिष्ठन्नयं देवदत्त इवाभातीत्यत्रेव सम्भावना नात्प्रेक्षायामिति द्रष्टव्यम्॥

अथ गोपीनां प्रवृत्तिमाह—

प्रवालताम्रं किमिदं पदं क्षतं
सरोजरम्यौ नु करौ विरोजितौ।
इति प्रसर्पत्करुणातरङ्गिता
स्त्वदङ्गमापस्पृशुरङ्गनाजनाः ॥ ८ ॥

प्रवालताम्रमिति ॥ अङ्गनाजना इति प्रसर्पत्करुणातरङ्गिताः त्वदङ्गम् आपस्पृशुः। अङ्गनाजना गोपीजना। इति एवमुक्त्वा। प्रसर्पत्करुणातरङ्गिता प्रसर्पन्त्या प्रसरन्त्या करुणया कृपया तरङ्गिता तरलमतयः। त्वदङ्गं तव श्रीबालकृष्णस्य अङ्गं शरीरम्। आ समन्तात्। पस्पृशुः स्पृशन्ति स्म। उक्तिप्रकारमाह—इदं प्रवालताम्रं पदं क्षतं किम्, सरोजरम्यौ करौ विरोजितौ नु इति। प्रवालताम्रं प्रवालवत् पल्लववत् ताम्रं ताम्रवर्णम्। पदं चरणकमलम्।

क्षतं व्रणितम् । किमिति वितर्के । सरोजरम्यौ सरोजवदरुणसरसीरुहवत् रम्यौ मनोज्ञौ । करौ बाहू । विरोजितौ भग्नौ । न्विति वितर्के । अत्र करचरणविशेषणाभ्यां तयोरत्यन्तमार्दवं दर्शनीयत्वं च ध्वन्यते ॥

अथ नन्दो निरामयं श्रीबालकृष्णमाश्लिष्यातीव जहर्षेत्याह—

अये सुतं देहि जगत्पतेः कृपा-
तरङ्गपातात् परिपातमद्य मे ।
इति स्म संगृह्य पिता त्वदङ्गकं
मुहुर्मुहुः श्लिष्यति जातकण्टकः ॥ ९ ॥

**अये इति** ॥ पिता इति संगृह्य त्वदङ्गकं जातकण्टकः मुहुर्मुहुः श्लिष्यति स्म । पिता नन्दः । इति इत्थमुक्त्वा । संगृह्य आदाय । त्वामिति शेषः । त्वदङ्गकं तव श्रीबालकृष्णस्य अङ्गकम् अनुकम्पनीयं शरीरम् । जातकण्टकः जाताः अङ्कुरिताः कण्टकाः रोमाञ्चा यस्य सः । मुहुर्मुहुः पुनः पुनः । श्लिष्यति स्म आश्लिष्टवान् । नन्दस्योक्तिप्रकारमाह—अये त्वं जगत्पतेः कृपा तरङ्गपातात् अद्य परिपातं मे सुतं देहि इति । अपायहेतौ सत्यपि तदनुदयादये इति हर्षे । यशोदायाः सम्बोधने वा । जगत्पतेः जगदीश्वरस्य हरेः । कृपा तरङ्गपातात् करुणालवप्राप्तेः । अत्र तरङ्गपदेन कृपायास्सागरत्वप्रतीतेस्तरङ्गस्य तदेकदेशलेशतया चायमर्थो लभ्यत इति द्रष्टव्यम् । अद्य अधुना । परिपातं रक्षितम् । मे ममैतावत्पर्यन्तमपुत्रतया अतीव दुःखमनुभूतवतः । सुतं दैवादिदानीं लब्धं पुत्रम् । देहि प्रयच्छ ॥

ननु किमर्थं भगवान् श्रीबालकृष्णरूपो हरिश्शकटं बभञ्जेत्याशङ्क्याह—

अनोनिलीनः किल हन्तुमागतः
सुरारिरेवं भवता विहिंसितः ।
रजोऽपि नो दृष्टममुष्य तत् कथं
स शुद्धसत्त्वे त्वयि लीनवान् ध्रुवम् ॥ १० ॥

अनोनिलीन इति ॥ अनोनिलीनः हन्तुमागतः सुरारिः एवं भवता विहिंसितः किल । अनोनिलीनः अनसि शकटे निलीनः । तद्रूपतामुपगत इत्यर्थः । हन्तुं मारयितुम् । त्वामिति शेषः । आगतः प्राप्तः । सुरारिः असुरः । एवमुक्तप्रकारेण । विहिंसितः हतः । किलेति वार्तायाम् । ननु विहिंसित इति यदुक्तम्, तदयुक्तमित्याशयेनाशङ्कते—अमुष्य रजः अपि न दृष्टम्, तत् कथमिति । अमुष्य शकटासुरस्य । रजः अपि रजोमात्रतयाऽपि शरीरम् । तत् अदर्शनम् । कथं केन प्रकारेणोपपद्यते । मृतशरीरादर्शनस्यासम्भाव्यत्वादिति भावः । समाधत्ते—सः शुद्धसत्त्वे त्वयि लीनवान् ध्रुवम् इति । सः शकटासुरः । शुद्धसत्त्वे रजस्तमःस्पर्शरहितकेवलसत्त्वविग्रहे । त्वयि श्रीहरौ । लीनवान् लीनोऽभूत् । ध्रुवं निश्चितम् । अत्र खल्वियं वाचोयुक्तिः यद्रजोऽपि नो दृष्टममुष्य, तत् का कथा तमस इति रजस्तमोविलयेऽस्य भगवत्सायुज्याख्यमुक्तिरुपपन्नैवेति ॥

अथ द्विजैर्भगवतः श्रीबालकृष्णस्य रक्षा चक्रुरित्याह—

प्रपूजितैस्तत्र ततो द्विजातिभिर्विशेषतो लम्भितमङ्गलाशिषः ।
व्रजं निजैर्बाल्यरसैर्विमोहयन् मरुत्पुराधीश रुजां जहीहि मे ॥ ११ ॥

प्रपूजितैरिति ॥ हे मरुत्पुराधीश तत्र तत्र प्रपूजितैः द्विजातिभिः विशेषतः लम्भितमङ्गलाशिषः निजैः बाल्यरसैः व्रजं विमोहयन् त्वं मे रुजां जहीहि । मरुत्पुराधीश श्रीगुरुवायुपुरनाथ । ततः अनन्तरम् । तत्र व्रजे । प्रपूजितैः प्रकर्षेण पूजितैः । द्विजातिभिः ब्राह्मणैः । विशेषतः भविष्यदपायशङ्कया विशिष्य । लम्भितमङ्गलाशिषः लम्भिताः प्रापिताः मङ्गलरूपा आशिषः अनुग्रहा यस्य सः । निजैः स्वीयैः । बाल्यरसैः बालकेलीरसैः । व्रजं व्रजौकसः सर्वानित्यर्थः । विमोहयन् विशेषेण मोहयन् आनन्दाम्भोधिमग्नहृदयान् विरचयन् । त्वं श्रीबालकृष्ण । मे ममानन्यशरणस्य । रुजां रोगम् । जहीहि । विनाशयेत्यर्थः ॥

इति शकटासुरवधवर्णनं
द्विचत्वारिंशद्दशकं समाप्तम् ॥

## त्रिचत्वारिंशदशकम् ॥

अथ तृणावर्तासुरवधं प्रस्तौति—

त्वामेकदा गुरुमरुत्पुरनाथ वोढुं
गाढाधिरूढगरिमाणमपारयन्ती ।
माता निधाय शयने किमिदं बतेति
ध्यायन्त्यचेष्टत गृहेषु निविष्टशङ्का ॥ १ ॥

त्वामिति ॥ हे गुरुमरुत्पुरनाथ एकदा माता त्वां वोढुम् अपारयन्ती शयने निधाय इति निविष्टशङ्का ध्यायन्ती गृहेषु अचेष्टत । गुरुमरुत्पुरनाथ श्रीगुरुवायुपुरनाथ । एकदा कदाचित् । माता जननी यशोदा । त्वां श्रीबालकृष्णम् । वोढुम् अङ्केन धर्तुम् । अपारयन्ती अशक्ता । शयने शय्यायाम् । निधाय शाययित्वा । इति अनेन प्रकारेण । निविष्टशङ्का निविष्टा प्रविष्टा शङ्का यस्याः सा । ध्यायन्ती चिन्तयन्ती । त्वामिति शेषः । गृहेषु भवने । पुल्लिङ्गत्वात् बहुवचनम् । अचेष्टत स्वकर्म कुर्वाणाऽवर्तत । भगवतो दुर्वहत्वे हेतुमाह—गाढाधिरूढगरिमाणमिति । गाढमत्यर्थमधिरूढः प्राप्तो गरिमा गुरुत्वं येन तम् । इतिशब्दार्थं शङ्काप्रकारमाह—इदं किं बत इति । इदम् आत्मजस्य दुर्वहत्वम् । किं किंनिबन्धनम् । बतेत्यद्भुते ॥

अथ तृणावर्तप्रवेशमाह—

तावद्विदूरमुपकर्णितघोरघोष
व्याजृम्भिपांसुपटलीपरिपूरिताशः ।
वात्यावपुस्स किल दैत्यवरस्तृणाव-
र्ताख्यो जहार जनमानसहारिणं त्वाम् ॥ २ ॥

तावदिति ॥ तावत् तृणावर्ताख्यः स दैत्यवरः जनमानसहारिणं त्वां जहार किल । तावत् तस्मिन्नवसरे । तृणावर्ताख्यः तृणावर्त इत्याख्या

यस्य सः। सः कंसभृत्यतया प्रसिद्धः। दैत्यवरः असुरश्रेष्ठः। जन मानसहारिणम् यो जनानां मानसं हरति तमेवेत्यर्थः। त्वां श्रीबालकृष्णम्। जहार हृतवान्। 'जनो हि यः कर्म करोति यादृशं स सर्वथा तादृश मश्नुते फलम्' इति नर्मोक्तिरियमिति द्रष्टव्यम्। तृणावर्तस्य स्वरूपमाह--- विदूरम् उपकर्णितघोरघोषव्याजृम्भिपांसुपटलीपरिपूरिताशः वात्यावपुः इति। विदूरं दूरादेव। उपकर्णितेन आकर्णितेन घोरेण भीमेन घोषेण शब्देन व्याजृम्भिन्या प्रवृद्धया पांसुपटल्या परागपूरेण च परिपूरिताः परितः पूरिताः आशा दिशो येन स। वात्यावपु चक्रवातस्वरूपधरः॥

यशोदा पुत्रमपश्यन्ती रुरोदेत्याह -

> उद्दामपांसुतिमिराहतदृष्टिपाते
> द्रष्टुं किमप्यकुशले पशुपाललोके।
> हा बालकस्य किमिति त्वदुपान्तमाप्ता
> माता भवन्तमविलोक्य भृशं रुरोद ॥ ३ ॥

उद्दामेति॥ पशुपाललोके किमपि द्रष्टुमकुशले माता इति त्वदुपा न्तमाप्ता भवन्तमविलोक्य भृशं रुरोद। पशुपाललोके गोपसमूहे। किमपि किञ्चिदपि वस्तु। द्रष्टुं वीक्षितुम्। अकुशले असमर्थे सति। अत्र हेतुः— उद्दामपांसुतिमिराहतदृष्टिपाते इति। उद्दामेन उत्कटेन पांसुतिमिरेण परागपूर प्रतिच्छन्नतया सूर्यबिम्बस्य सञ्जातं यत्तिमिरमन्धकारस्तेनाहतः प्रतिहतो दृष्टि पातः नेत्रपातो यस्य तस्मिन्। माता जननी यशोदा। इति एवं विचिन्त्य। त्वदुपान्तं भवत्सन्निधिम्। आप्ता प्राप्ता। भवन्तं श्रीबालकृष्णम्। अविलोक्य अदृष्ट्वा। भृशम् अत्यर्थम्। रुरोद अरुदत्। यशोदायाश्चिन्ताप्रकारमाह--- हा बालकस्य किमिति। हा इति खेदे। बालकस्य शिशोः। किं किमापतितम्॥

भगवन्तं श्रीबालकृष्णमुद्धृत्य तृणावर्तः सादमवापेत्याह—

> तावन्स दानवगणोऽपि च दीनमूर्ति-
> र्भावत्कभारपरिधारणलूनवेगः।

सङ्कोचमाप तदनु क्षतपांसुघोषे
घोषे व्यतायत भवज्जननीनिनादः ॥ ४ ॥

तावदिति ॥ तावत् सः दानववरः अपि दीनमूर्तिः सङ्कोचम् आप च । तावत् तदा । सः दानववरः वात्यावपुस्तृणावर्तः । अपिरत्वर्थे । दीनमूर्तिः अवशशरीरः । सङ्कोचं कृशताम् । आप प्राप । चकारः समुच्चये । अत्र हेतुः—भावत्कभारपरिधारणलूनवेगः इति । भावत्कः भवत्सम्बन्धी यो भारः तस्य परिधारणेन वहनेन लूनः नष्टो वेगो यस्य सः । अथ गोपा यशोदाया रुदितं शुश्रुवुरित्याह—तदनु घोषे क्षतपांसुघोषे भवज्जननी निनादः व्यतायत इति । तदनु दैत्ये सङ्कोचमुपगते सति । घोषे गोप वाटे । क्षतपांसुघोषे क्षतौ नष्टौ पांसुघोषौ यस्मिंस्तस्मिन् सति । भवज्जननी निनादः भवतः श्रीबालकृष्णस्य जनन्याः मातुर्यशोदाया निनादो रोदनध्वनिः । व्यतायत व्याप्तोऽभवत् ॥

अथ दानवो नभस्तः पपातेत्याह—

रोदोपकर्णनवशादुपगम्य गेहं
क्रन्दत्सु नन्दमुखगोपकुलेषु दीनम् ।
त्वां दानवस्त्वखिलमुक्तिकरं मुमुक्षु-
स्त्वय्यप्रमुञ्चति पपात वियत्प्रदेशात् ॥ ५ ॥

रोदोपकर्णनवशादिति ॥ दानवः तु दीनं त्वां मुमुक्षु त्वयि अप्रमुञ्चति वियत्प्रदेशात् पपात । दानवः तृणावर्तः । तुर्विशेषे । तमाह—पपातेति । दीनं सविषादम् । त्वां श्रीबालकृष्णम् । मुमुक्षु मोक्तुमभिल पन् । अप्रमुञ्चति अमुञ्चति सति । वियत्प्रदेशात् नभसः । पपात भूमौ पतितोऽभूत् । भगवतो भारं वोढुमक्षमः सन्निति भावः । नान्यस्मात् भगवतो मुक्तिरिति नर्मगर्भमाह—अखिलमुक्तिकरमिति । अखिलानां मुक्ति मोक्षं मोचनं च करोतीति तथोक्तम् । यः सर्वेभ्यो मुक्तिं प्रयच्छति, तस्मै भगवते मुक्तिं दातुमभिलषत्ययं दानव इत्यहो तस्य मौर्ख्यमिति नर्मोक्ति

रियम्। भगवतो दैन्यहेतुमाह—नन्दमुखगोपकुलेषु रोदोपकर्णनवशात् गेह मुपगम्य क्रन्दत्सु इति। नन्दमुखगोपगुलेषु नन्दप्रभृतिषु गोपसङ्घेषु। रोदो पकर्णनवशात्। यशोदाया रोदनध्वनि श्रुत्वेत्यर्थः। गेहं गृहम्। उपगम्य प्राप्य। क्रन्दत्सु उच्चैः रुदत्सु सत्सु। स्वभक्तजनपरिदेवनश्रवणमत्र भग वतो दैन्यहेतुरिति द्रष्टव्यम्। भक्तप्रियायां तु 'मुमुक्षुः दीनः क्षीणजीवितः' इति दर्शनात्तत्कर्तां सम्मतः पाठः 'दीनः त्वां दानवः' इतीति प्रतीयते। तत्पक्षे त्वांमुमुक्षुर्दीनः इति योजना। दीनः क्षीणजीवितः इति च व्याख्या॥

अथ ते गोपा भगवन्तमक्षतशरीरमपश्यन्नित्याह—

रोदाकुलास्तदनु गोपगणा बहिष्ठ-
पाषाणपृष्ठभुवि देहमतिस्थविष्ठम्।
प्रैक्षन्त हन्त निपतन्तममुष्य वक्ष-
स्यक्षीणमेव च भवन्तमलं हसन्तम् ॥ ६ ॥

**रोदाकुला इति॥** तदनु रोदाकुला गोपगणा बहिष्ठपाषाणपृष्ठभुवि निपतन्तम् अतिस्थविष्ठं देहम् अमुष्य वक्षसि अलं हसन्तं भवन्तं च अक्षी णमेव प्रैक्षन्त हन्त। तदनु तस्मिन्नवसरे। रोदाकुला अतिमात्रं रुदन्तः। गोपगणाः गोपसङ्घाः। बहिष्ठपाषाणपृष्ठभुवि बहिष्ठस्य बहिर्वर्तमानस्य पाषा णस्य शिलायाः पृष्ठभुवि उपरिभागे। अतिस्थविष्ठम् अतीव स्थविष्ठं पृथु तमम्। देहं तृणावर्तासुरशरीरम्। अमुष्य पतितशरीरस्य। वक्षसि उरसि। अलम् अत्यर्थम्। हसन्तं विहसन्तम्। अहमक्षतोऽस्मीति नन्दादीन् बोध यितुमिति भावः। भवन्तं श्रीबालकृष्णम्। चकारः समुच्चये। अक्षीणमप र्याकुलं यथा भवति तथैव। प्रैक्षन्त ददृशुः। हन्तेत्यद्भुते॥

गोपा दानवशरीरात् भगवन्तं जगृहुरित्याह—

ग्रावप्रपातपरिपिष्टगरिष्ठदेह-
भ्रष्टासुदुष्टदनुजोपरि धृष्टहासम्।

आघ्नानमम्बुजकरेण भवन्तमेत्य
गोपा दधुर्गिरिवरादिव नीलरत्नम् ॥ ७ ॥

ग्रावप्रपातेति ॥ गोपा ग्रावप्रपातपरिपिष्टगरिष्ठदेहभ्रष्टासुदुष्टदनुजोपरि धृष्टहासम् अम्बुजकरेण आघ्नानं भवन्तम् एत्य दधु । ग्रावप्रपातपरिपिष्टगरिष्ठदेह भ्रष्टासुदुष्टदनुजोपरि ग्राव्णि प्रपात. पतनं तेन परिपिष्ट चूर्णितो गरिष्ठ अतिमहान् देहश्शरीरं यस्य तस्य, भ्रष्टासोर्गतप्राणस्य दुष्टस्य दनुजस्य तृणावर्तासुरस्य उपरि वक्षसि। धृष्टहासं धृष्ट उत्कटो हासो यस्य तद्यथा भवति तथा। अम्बुजकरेण अम्बुजप्रतिमेन करेण। आघ्नानं प्रहरन्तम्। मया हतोऽयं दैत्य इति देवान् बोधयितुमिवेति भाव। भवन्त श्रीबालकृष्णम्। एत्य प्राप्य। दधुर्गृहीतवन्त। अत्रोपमामाह—गिरिवरात् नीलरत्नमिवेति। गिरिवरात् महागिरे। नीलरत्नमिन्द्रनीलमणिम्। अत्रातिमहत्त्वमसुरस्य नीलवर्णता श्रीबालकृष्णस्य च समानो धर्म ॥

एवमापतितायां महत्यामपि विपद्यनपायं कुमारं वीक्ष्य प्रमुदितचेतसा नन्दादीनां प्रवृत्तिमाह—

एकैकमाशु परिगृह्य निकामनन्द-
न्नन्दादिगोपपरिरब्धविचुम्बिताङ्गम्।
आदातुकामपरिशङ्कितगोपनारी-
हस्ताम्बुजप्रपतितं प्रणुमो भवन्तम् ॥ ८ ॥

एकैकमिति ॥ वयम् आशु एकैक परिगृह्य निकामनन्दन्नन्दादिगोपपरिरब्धविचुम्बिताङ्गम् आदातुकामपरिशङ्कितगोपनारीहस्ताम्बुजप्रपतितं भवन्त प्रणुम। वयमित्यात्मनि बहुवचनेनात्मनो भगवत्स्तुत्यर्हतालाभेन कृतकृत्यतानुसन्धानं कवेर्ध्वन्यते। आशु झटिति। एकैक करकमलचरणपङ्कजादिप्रत्येकम्। परिगृह्य गृहीत्वा। निकामनन्दन्नन्दादिगोपपरिरब्धविचुम्बिताङ्गं निकाममत्यर्थं नन्दद्भि प्रमुदितै नन्दादिभि गोपै परिरब्धानि आश्लिष्टानि विचुम्बितानि चाङ्गानि यस्य तम्। आदातुकामपरिशङ्कितगोपनारीहस्ताम्बुजप्र

रियम्। भगवतो दैन्यहेतुमाह—नन्दमुखगोपकुलेषु रोदोपकर्णनवशात् गेह मुपगम्य क्रन्दत्सु इति। नन्दमुखगोपकुलेषु नन्दप्रभृतिषु गोपसञ्चयेषु। रोदोपकर्णनवशात्। यशोदाया रोदनध्वनि श्रुत्वेत्यर्थः। गेह गृहम्। उपगम्य प्राप्य। क्रन्दत्सु उच्चैः रुदत्सु सत्सु। स्वभक्तजनपरिदेवनश्रवणमत्र भगवतो दैन्यहेतुरिति द्रष्टव्यम्। भक्तप्रियाया तु 'मुमुक्षु दीन क्षीणजीवित' इति दर्शनात्तत्कृता सम्मत पाठ 'दीन त्वा दानव' इतीति प्रतीयते। तत्पक्षे त्वामुमुक्षुर्दीन इति योजना। दीन क्षीणजीवित इति च व्याख्या॥

अथ ते गोपा भगवन्तमक्षतशरीरमपश्यन्नित्याह—

रोदाकुलास्तदनु गोपगणा बहिष्ठ
पाषाणपृष्ठभुवि देहमतिस्थविष्ठम्।
प्रैक्षन्त हन्त निपतन्तममुष्य वक्ष-
स्यक्षीणमेव च भवन्तमल हसन्तम् ॥ ६ ॥

**रोदाकुला इति**॥ तदनु रोदाकुला गोपगणा बहिष्ठपाषाणपृष्ठभुवि निपतन्तम् अतिस्थविष्ठ देहम् अमुष्य वक्षसि अल हसन्त भवन्त च अक्षीणमेव प्रैक्षन्त हन्त। तदनु तस्मिन्नवसरे। रोदाकुला अतिमात्र रुदन्त। गोपगणा गोपसङ्घा। बहिष्ठपाषाणपृष्ठभुवि बहिष्ठस्य बहिर्वर्तमानस्य पाषाणस्य शिलाया पृष्ठभुवि उपरिभागे। अतिस्थविष्ठम् अतीव स्थविष्ठ पृथुतमम्। देह तृणावर्तासुरशरीरम्। अमुष्य पतितशरीरस्य। वक्षसि उरसि। अलम् अत्यर्थम्। हसन्त विहसन्तम्। अहमक्षतोऽस्मीति नन्दादीन् बोधयितुमिति भाव। भवन्त श्रीबालकृष्णम्। चकार समुच्चये। अक्षीणमपर्याकुल यथा भवति तथैव। प्रैक्षन्त ददृशु। हन्तेत्यद्भुते॥

गोपा दानवशरीरात् भगवन्त जगृहुरित्याह—

ग्रावप्रपातपरिपिष्टगरिष्ठदेह-
भ्रष्टासुदुष्टदनुजोपरि धृष्टहासम्।

आघ्नानमम्बुजकरेण भवन्तमेत्य
गोपा दधुर्गिरिवरादिव नीलरत्नम्	॥ ७ ॥

ग्रावप्रपातेति ॥ गोपाः ग्रावप्रपातपरिपिष्टगरिष्ठदेहभ्रष्टासुदुष्टदनुजोपरि धृष्टहासम् अम्बुजकरेण आघ्नानं भवन्तम् एत्य दधुः । ग्रावप्रपातपरिपिष्टगरिष्ठदेह भ्रष्टासुदुष्टदनुजोपरि ग्राव्णि प्रपातः पतनं तेन परिपिष्टः चूर्णितो गरिष्ठः अतिमहान् देहश्शरीरं यस्य तस्य, भ्रष्टासोर्गतप्राणस्य दुष्टस्य दनुजस्य तृणावर्तासुरस्य उपरि वक्षसि । धृष्टहासं धृष्टः उत्कटो हासो यस्य तद्यथा भवति तथा । अम्बुजकरेण अम्बुजप्रतिमेन करेण । आघ्नानं प्रहरन्तम् । मया हतोऽयं दैत्य इति देवान् बोधयितुमिवेति भावः । भवन्तं श्रीबालकृष्णम् । एत्य प्राप्य । दधुर्गृहीतवन्तः । अत्रोपमामाह—गिरिवरात् नीलरत्नमिवेति । गिरिवरात् महागिरेः । नीलरत्नमिन्द्रनीलमणिम् । अत्रातिमहत्त्वमसुरस्य नीलवर्णता श्रीबालकृष्णस्य च समानो धर्मः ॥

एवमापतितायां महत्यामपि विपद्यनपायं कुमारं वीक्ष्य प्रमुदितचेतसां नन्दादीनां प्रवृत्तिमाह —

एकैकमाशु परिगृह्य निकामनन्द-
न्नन्दादिगोपपरिरब्धविचुम्बिताङ्गम् ।
आदातुकामपरिशङ्कितगोपनारी-
हस्ताम्बुजप्रपतितं प्रणुमो भवन्तम्	॥ ८ ॥

एकैकमिति ॥ वयम् आशु एकैकं परिगृह्य निकामनन्दन्नन्दादिगोपपरिरब्धविचुम्बिताङ्गम् आदातुकामपरिशङ्कितगोपनारीहस्ताम्बुजप्रपतितं भवन्तं प्रणुमः । वयमित्यात्मनि बहुवचनेनात्मनो भगवत्स्तुत्यर्हतालाभेन कृतकृत्यतानुसन्धानं कवेर्ध्वन्यते । आशु झटिति । एकैकं करकमलचरणपङ्कजादिप्रत्येकम् । परिगृह्य गृहीत्वा । निकामनन्दन्नन्दादिगोपपरिरब्धविचुम्बिताङ्गं निकाममत्यर्थं नन्दद्भिः प्रमुदितैः नन्दादिभिः गोपैः परिरब्धानि आश्लिष्टानि विचुम्बितानि चाङ्गानि यस्य तम् । आदातुकामपरिशङ्कितगोपनारीहस्ताम्बुजप्रप

तितम् आदातुकामा गृहीतुकामेति परिशङ्कितानां भगवता तर्किताना गोप नारीणां गोपस्त्रीणा हस्ताम्बुजेषु करसरसिजेषु प्रपतितं करप्रसारणात् पूर्व मेव पतितम्। भवन्तं श्रीबालकृष्णम्। प्रणुमः प्रकर्षेण स्तुमः॥

भूयोऽपि किन्नु कृणुमः प्रणतार्तिहारी
गोविन्द एव परिपालयतात् सुतं नः।
इत्यादिमातरपितृप्रमुखैस्तदानीं
सम्प्रार्थितस्त्वदवनाय विभो त्वमेव ॥ ९ ॥

**भूय इति॥** हे विभो तदानीं मातरपितृप्रमुखै त्वदवनाय त्वमेव इत्यादि सम्प्रार्थित। विभो जगद्रक्षक। तदानीं तस्मिन्नवसरे। मातर पितृप्रमुखै मातापितृप्रभृतिभि। त्वदवनाय तव श्रीबालकृष्णरूपस्य श्रीहरेः अवनाय रक्षणाय। त्व श्रीहरिरेव। इत्यादि एवमादि। सम्प्रार्थित· सम्यक् भक्तिपुरस्सरं प्रार्थित अभ्यर्थित। प्रार्थनाप्रकारमाह—वयं भूय अपि किं नु कृणुम, प्रणतार्तिहारी गोविन्द एव न सुतं परिपालयतात इति। भूयोऽपि पुनरप्येवंविधे सङ्कटे। किं नु कृणुम कीदृशं प्रतीकारं कर्तुं शक्ता भवाम। अत प्रणतार्तिहारी प्रणतानामाश्रितानामार्ति पीडा हरतीति तथाविध। गोविन्द भगवान् हरि। एवकारेण स्वप्रयत्नस्य व्यवच्छेद.। न अस्माकम्। सुतं पुत्रम्। परिपालयतात् परित सर्वाभ्य आपद्भ्य पाल्यतात् रक्षतु॥

अथ प्रार्थयते—

वातात्मक दनुजमेव मयि प्रधून्वन्
वातोद्भवान् मम गदान् किमु नो धुनोषि।
किं वा करोमि पुनरप्यनिलालयेश
निश्शेषरोगशमनं मुहुरर्थये त्वाम् ॥ १० ॥

**वातात्मकमिति॥** अयि अनिलालयेश त्वं मम वातोद्भवान् गदान् नो धुनोषि किमु। अयीति सम्बोधने। अनिलालयेश श्रीगुरुवायुपुरेश।

त्वं श्रीबालकृष्णः । ममानन्यशरणस्य । वातोद्भवान् वातजान् । गदा नामयान् । नो धुनोषि किमु झटिति न निवर्तयिष्यसि किमु । अत्र वर्तमानसामीप्ये लट् । नच वातालयाधिपस्य मम वातरोगनिवर्तकत्वमनुप पन्नमिति वाच्यमित्याह—एवं वातात्मकं दनुजं प्रघ्नन्निति । एवम् उक्त प्रकारेण । वातात्मकं वात्यारूपधरम् । दनुजम् असुरं तृणावर्तम् । प्रघ्नन् निगृह्णन् । एवं वातासुरे त्वया निगृहीते वातालयाधिपस्यापि तव मदीयवातामयनिषूदनं नानुपपन्नमिति भावः । पुनः अपि किं वा करोमि । पुनरपि निवारितेष्वपि वातरोगेषु । किं वा करोमि रोगान्तराणां पुनरपि सम्भाव्यत्वादिति भावः । अतः त्वां निश्शेषरोगशमनं मुहुरर्थये । त्वां श्री बालकृष्णम् । निश्शेषाणां बाह्यानामाभ्यन्तराणां च सर्वेषां रोगाणामामयानां शमनं निवारणम् । मुहुः पुनः पुनः । अर्थये प्रार्थये ॥

इति तृणावर्तवधवर्णनं
त्रयश्चत्वारिंशदशकम् ॥

---

## चतुश्चत्वारिंशदशकम् ॥

*अथ मानुषबालस्वरूपमङ्गीकृतवतो भगवतो हरेर्नामकरणादिकमाह—*

गूढं वसुदेवगिरा कर्तुं ते निष्क्रियस्य संस्कारान्
हृद्गतहोरातत्त्वो गर्गमुनिस्त्वद्गृहं विभो गतवान् ॥ १ ॥

गूढमिति ॥ हे विभो गर्गमुनिः त्वद्गृहं गतवान् । विभो अल ङ्घनीयशासन । अनेन सम्बोधनेन भगवतो मनुष्यविग्रहपरिग्रहात्तदुचितानां विधीनामलङ्घनीयतया प्रेरणादेव गर्गागमननामकरणादिकमिति द्योत्यते । गर्ग मुनिः गर्गनामा मुनिः । त्वद्गृहं तव गृहम् । नन्दगोपभवनमित्यर्थः । गत वान् प्राप । गर्गागमनप्रयोजनमाह—ते संस्कारान् कर्तुमिति । ते तव

श्रीबालकृष्णस्य। संस्कारान् नामकरणादीन्। कर्तुं विधातुम्। वस्तुनो नामकरणादीनां लोकसंग्रहव्यतिरिक्तं न किमपि प्रयोजनमिति दर्शयति—निष्क्रियस्य इति। कर्मसम्बन्धरहितस्येत्यर्थः। गर्गागमने हेतुमाह—गूढं वसुदेवगिरा इति। गूढम् आत्मपुत्रतारूपरहस्यभेदो माभूदिति गुप्तं यथा भवति तथा। उक्त्वेति शेष। वसुदेवगिरा वसुदेवस्य गिरा वचनेन। गर्गस्य भगवत्संस्कारकरणार्हतां प्रकटयति—हृद्गतहोरातत्त्व इति। हृद्गतं हृदयवर्ति। सम्यग्विदितमित्यर्थ। होराया ज्योतिःशास्त्रस्य तत्त्वं याथार्थ्यं यस्य सः॥

नन्दः पुत्रस्य संस्कारान् कर्तुं प्रार्थितवानित्याह—

**नन्दोऽथ नन्दितात्मा वृन्दिष्टं मानयन्नमुं यमिनाम्।**
**मन्दस्मितार्द्रमूचे त्वत्संस्कारान् विधातुमुत्सुकधीः ॥ २ ॥**

**नन्द इति ॥** अथ नन्द नन्दितात्मा अमुं मानयन् त्वत्संस्कारान् विधातुम् उत्सुकधी मन्दस्मितार्द्रम् ऊचे। अथ अनन्तरम्। नन्दितात्मा प्रमुदितमना। मुनेरागमनमत्र प्रमोदहेतु। अमुं गर्गम्। मानयन् यथाविधि पूजयन्। त्वत्संस्कारान् तव श्रीबालकृष्णस्य संस्कारान् नामकरणादीन्। विधातुं रचयितुम्। उत्सुकधी उत्सुका साभिलाषा धीर्धिषणा यस्य सः। मन्दस्मितार्द्रं मन्दस्मितेन मन्दहासेन आर्द्रं यथा भवति तथा। ऊचे कथयामास। गर्गस्य माननीयतामाह—यमिनां वृन्दिष्ठमिति। यमिनां मुनीनाम्। वृन्दिष्ठं श्रेष्ठम्॥

नन्देन प्रार्थितो गर्गो भगवतो नाम चक्र इत्याह—

**यदुवंशाचार्यत्वात् सुनिभृतमिदमार्य कार्यमिति कथयन्।**
**गर्गो निर्गतपुलकश्चक्रे तव साग्रजस्य नामानि ॥ ३ ॥**

**यदुवंशाचार्यत्वादिति ॥** गर्ग इति कथयन् निर्गतपुलक साग्रजस्य तव नामानि चक्रे। इति एवम्। कथयन् वदन्। निर्गतपुलक. भगवद्वपुस्पर्शजनितहर्षातिरेकेण रोमाञ्चितशरीर.। साग्रजस्य अग्रजसमेतस्य।

तव श्रीबालकृष्णस्य। नामानि अभिधानानि। चक्रे कृतवान्। गर्गस्य कथनप्रकारमाह—हे आर्य यदुवंशाचार्यत्वात् इदं सुनिभृतं कार्यमिति। आर्य पूज्य। यदुवंशाचार्यत्वादित्यस्य ममेत्यादिः। यदुवंशाचार्यत्वात् यदुवंशस्य यादवकुलस्य आचार्यत्वात्। इदं नामकरणम्। सुनिभृतं सुतरां निभृतं गूढम्। कार्यं कर्तव्यम्। अन्यथा भवत्पुले कंसस्य यदुकुमारत्व शङ्का स्यादिति भावः॥

गर्गस्य रहसि नामकरणे हेतुमुत्प्रेक्षते—

**कथमस्य नाम कुर्वे सहस्रनाम्नो ह्यनन्तनाम्नो वा।**
**इति नूनं गर्गमुनिश्चक्रे तव नाम नाम रहसि विभो ॥ ४ ॥**

**कथमिति ॥** हे विभो गर्गमुनिः इति नाम नूनं तव नाम रहसि चक्रे। विभो जगद्रक्षक। इति इति मत्वा। नामेत्यवधारणे। नूनमित्युत्प्रेक्षायाम्। तव श्रीबालकृष्णस्य। नाम अभिधानम्। रहसि एकान्ते। चक्रे कृतवान्। इतिशब्दार्थमननप्रकारमाह—अहं सहस्रनाम्नः हि अनन्तनाम्न वा अस्य कथं नाम कुर्वे इति। सहस्रनाम्नः सहस्रेण नामभिर्युक्तस्य। हीति प्रसिद्धौ। सहस्रनामतया प्रसिद्धस्येत्यर्थः। अनन्तनाम्नः अनन्तान्यपरिमितानि नामानि यस्य तादृशस्य। अनन्त इति नाम यस्य तादृशस्य च। वेति पक्षान्तरे। अस्य मानुषबालवेषस्य श्रीहरेः। कथं नाम कुर्वे—अनन्तनाम्नः कथं कानिचिन्नामानि कृतानि इति येन केन चित् पृष्टः, तर्हि किमुत्तरं ब्रूयामिति विषण्ण सन्नित्यर्थः॥

भगवतः कृष्णनाम्नो व्युत्पत्तिं दर्शयति—

**कृषिधातुणकाराभ्यां सत्तानन्दात्मतां किलाभिलपत्।**
**जगदघकर्षित्वं वा कथयदृषिः कृष्णनाम ते व्यतनोत् ॥ ५ ॥**

**कृषीति ॥** ऋषिः ते कृषिधातुणकाराभ्यां सत्तानन्दात्मतामभिलपन् किल कृष्णनाम व्यतनोत्। ऋषिर्गर्गः। ते तव मानुषबालवेषस्य श्रीहरेः।

कृषिधातुणकाराभ्यां कृषिधातुना णकारेण च। सत्तानन्दात्मतां सत्ता सत्त्व मानन्दश्चात्मा स्वरूपं यस्य तस्य भावम्। सदानन्दस्वरूपतामित्यर्थः। अभिलपत् बोधयत्। कृषिधातुस्सत्तावाचकः णकारः आनन्दवाचकश्चेति तयोस्सामानाधिकरण्येन निर्देशात् सदानन्दस्वरूपताबोधकत्वं कृष्णनाम्न इति भावः। किलेति प्रसिद्धौ। अत्र पुराणवचनम्—'कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते॥' इति कृष्णनाम कृष्ण इति नाम। व्यतनोत् कृतवान्। अथ प्रकारान्तरेणापि कृष्णनाम निर्वक्ति— जगदघकर्षित्वं कथयत् वा इति। जगतां लोकानामघं पापं कर्षति निषूदयतीति जगदघकर्षी तस्य भावस्तत्त्वम्। कथयत् बोधयत्। 'सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह। न ते यमं पाशभृतोऽपि तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृता.॥' इति श्रीमद्भागवतोक्ते श्रीकृष्णपदाम्बुजस्मरणस्य सकलपापनिवर्तकत्वावगमात् कर्षति जगतामघमिति कृष्ण इति व्युत्पत्तेश्चेति भाव.॥

नामकरणवृत्तान्तमुपसंहरन् भगवतो जातकफलान्यप्यकथयन्मुनिरित्याह—

**अन्यांश्च नामभेदान् व्याकुर्वन्नग्रजे च रामादीन्।**
**अतिमानुषानुभावं न्यगदत्त्वामप्रकाशयन् पित्रे ॥ ६ ॥**

**अन्यानिति ॥** अत्र पूर्वस्मादृषिरित्यनुबध्यते। ऋषिः अन्यान् नामभेदान् च व्याकुर्वन् अग्रजे रामादीन् च पित्रे त्वामप्रकाशयन् अतिमानुषानुभावं न्यगदत्। ऋषिः गर्गः। अन्यान् अपरान्। नामभेदान् नामान्तराणि। चकारः समुच्चये। व्याकुर्वन् अन्वर्थतः कथयन्। प्रागयं वसुदेवाज्जातोऽयं तवात्मज इति वासुदेव इति नामास्तु, एवं नानाविधैः कर्मभिस्तदनुरूपाणि नानाविधानि सन्त्यस्य नामानीति कथयन्नित्यर्थः। अग्रजे ज्येष्ठे। रामादीन् लोकरमणाद्रामः, बलाधिक्यात् बल इत्यादीनि नामानि। चकारः समुच्चये। व्याकुर्वन्नित्यत्रापि सम्बध्यते। पित्रे नन्दाय। त्वां श्रीबालकृष्णम्। अप्रकाशयन् हरिरित्यप्रकाशयन्। मानुषात् मनुष्यादतिक्रम्य वर्तत इत्यति

मानुषा अनुभावाः प्रभावाः वा यस्य तम्। न्यगदत् उक्तवान्। केवलं जातकावलोकेनेति भावः॥

अथ त्रिभिर्मुनेर्जातकफलवर्णनमेव दर्शयति—

**स्निह्यति यस्तव पुत्रे मुह्यति स न मायिकैः पुनः शोकैः।**
**द्रुह्यति यः स तु नश्येदित्यवदत्ते महत्त्वमृषिवर्यः ॥ ७ ॥**

स्निह्यतीति॥ ऋषिवर्यः इति ते महत्त्वम् अवदत्। ऋषिवर्यः मुनीश्वरो गर्गः। इति एवम्। ते तव श्रीबालकृष्णस्य। महत्त्वं महिमानम्। अवदत् अकथयत्। कथनप्रकारमाह—यः तव पुत्रे स्निह्यति सः पुनः मायिकैः शोकैः न मुह्यति, यः द्रुह्यति सः तु नश्येत् इति। यः पुमान्। तव नन्दस्य। पुत्रे सुते। स्निह्यति रमते पुनश्शब्दो विशेषे। मायिकैः मायाकार्यभूतैः। शोकैः दारिद्र्यशत्रुपीडादिजनितैर्दुःखैः। मुह्यति क्लिश्यति। यः कृष्णभक्तो भवति, स तु मायाकार्यभूतैर्जननमरणादिभिर्न मुह्यति, किन्तु मुक्तो भवतीति गूढार्थः। यः पुमान् द्रुह्यति द्रोहमाचरति। अत्र तव पुत्र इति चतुर्थ्यन्ततया विपरिणम्य च योजनीयम्। नश्येत् नाशमेष्यति। अत्र यः कृष्णाभक्तो भवति, स संसारी स्यादिति गूढार्थः॥

**जेष्यति बहुतरदैत्यान् नेष्यति निजबन्धुलोकममलपदम्**
**श्रोष्यसि सुविमलकीर्तीरस्येति भवद्विभूतिमृषिरूचे ॥ ८ ॥**

जेष्यतीति॥ अत्र अयमित्यध्याहर्तव्यम्। ऋषिः इति भवद्विभूतिम् ऊचे। ऋषिः गर्गः। इति अनेन प्रकारेण। भवद्विभूतिं भवतः श्रीबालकृष्णस्य विभूतिं महिमानम्। ऊचे उक्तवान्। उक्तिप्रकारमाह—अयं बहुतरदैत्यान् जेष्यति, निजबन्धुलोकम् अमलपदं नेष्यति, त्वम् अस्य सुविमलकीर्तीः श्रोष्यसि इति। बहुतरदैत्यान् बहुतरान् असंख्यान् दैत्यान् दानवान्। जेष्यति हनिष्यतीत्यर्थः। निजबन्धुलोकम् आत्मनो बन्धुजनम्। अमलपदम् अमलं निर्मलम्। शत्रुपीडादिरहितमिति यावत्। पदं स्थानम्। नेष्यति प्रापयिष्यति। निजबन्धुलोकम् आत्मनो भक्तवर्गम्। अमलपदम् अमलं मायासन्तापवर्जितं

पद स्थान विष्णुस्थनिलय नेष्यतीति गूढार्थ। सुविमलकीर्तौ सुविमला सुतरा विमला निर्मला कलङ्करहिता। पापहरा इति गूढार्थ। कीर्ती यशसि। श्रोष्यसि आकर्ण्य ह्यसीत्यर्थ ॥

अमुनैव सर्वदुर्गं तरितास्थ कृतास्थमत्र तिष्ठध्वम्।
हरिरेवेत्यनभिलपन्नित्यादि त्वामवर्णयत् स मुनिः ॥ ९ ॥

अमुनेति॥ स मुनि हरि एव इति अनभिलपन् इत्यादि त्वामवर्णयत्। स मुनिर्गर्ग। हरि विष्णु। एवकारोऽन्येषा व्यवच्छेदे। अनभिलपन् अकथयन्। इत्यादि एतदन्यदेवेत्यर्थ। त्वा श्रीबालकृष्णम्। अवर्णयत् वर्णितवान्। वर्णनप्रकारमाह—यूयम् अमुना एव सर्वदुर्गं तरितास्थ, अत्र कृतास्थ तिष्ठध्वमिति। एवकारेणान्येषा व्यवच्छेद। सर्व दुर्गं सङ्कटजातम्। तरितास्थ तरिष्यथ। सर्वैरपि तर्तुमशक्य ससारसागर तरिष्यथेति गूढार्थ। अत्र अस्मिन् बालके। कृतास्थ कृता आस्था आदरा यस्मिन् कर्मणि तद्यथा भवति तथा। तिष्ठत वर्तध्वम्। अस्मिन् भक्ता भवतेति गूढार्थ ॥

अथ प्रकरणमुपसहरन् प्रार्थयते—

गर्गेऽथ निर्गतेऽस्मिन् नन्दितनन्दादिनन्द्यमानस्त्वम्।
मद्गदमुद्गतकरुणो निर्गमय श्रीमरुत्पुराधीश ॥ १० ॥

गर्ग इति॥ हे श्रीमरुत्पुराधीश अथ अस्मिन् गर्गे निर्गते नन्दितनन्दादिनन्द्यमान उद्गतकरुण त्व मद्गद निर्गमय। श्रीमरुत्पुराधीश श्रीगुरुवायुपुरनाथ। अथ जातकफलवर्णनानन्तरम्। निर्गते गते सति। नन्दितनन्दादिनन्द्यमान नन्दितै प्रमुदितै नन्दादिभि नन्दप्रभृतिभि नन्द्यमान लाल्यमान। उद्गतकरुण उद्गता करुणा दया यस्य स। त्व श्रीबालकृष्ण। त्वम् उद्गता मय्युदिता करुणा यस्य तथाविध सन्निति वा योजना। मद्गद ममानन्यशरणस्य गद रोगराशिम्। निर्गमय निराकुरु ॥

इति कृष्णस्य जातकर्मनामकरणवर्णन

चतुश्चत्वारिंशदशकम् ॥

## पञ्चचत्वारिंशदशकम् ॥

*अथ भगवतः श्रीबलभद्रसमेतस्य श्रीबालकृष्णस्य बाललीलां वर्णयति—*

अयि सबल मुरारे पाणिजानुप्रचारैः
किमपि भवनभागान् भूषयन्तौ भवन्तौ ।
चलितचरणकञ्जौ मञ्जुमञ्जीरशिञ्जा-
श्रवणकुतुकभाजौ चेरतुश्चारुवेगात् ॥ १ ॥

अयीति ॥ अयि सबल मुरारे पाणिजानुप्रचारैः भवनभागान् किमपि भूषयन्तौ भवन्तौ चलितचरणकञ्जौ वेगात् चारु चेरतुः । अयीति सम्बोधने । सबल बलेन बलभद्रेण सह वर्तत इति सबलस्तथाविध । मुरारे श्रीबालकृष्णस्वरूप विष्णो । पाणिजानुप्रचारैः पाणिभ्यां जानुभ्यां च क्रियमाणैः प्रचारैश्चङ्क्रमणैः । भवनभागान् भवनस्य गृहस्य भागान् तथाविधप्रचारयोग्यान् प्रदेशान् । किमपि कञ्चित्कालम् । एकत्र चिरमनवस्थानादिति भाव. । भूषयन्तौ मण्डयन्तौ । भवन्तौ युवाम् । चलितचरणकञ्जौ चलिते चरणकञ्जे पादारविन्दे याभ्यां तथाविधौ । वेगात् द्रुतम् । चारु मनोहरं यथा भवति तथा । चेरतुः जग्मतुः । चरणचालने हेतुः—मञ्जुमञ्जीरशिञ्जाश्रवणकुतुकभाजौ इति । मञ्जुमञ्जीरशिञ्जाश्रवणे मनोहरनूपुरशब्दश्रवणे यत् कुतुकं कौतूहलं भजन इति तथोक्तौ सन्तौ । इति बालस्वभावोक्तिः ॥

पाणिजानुप्रचारैर्विहरतोर्भगवतोः श्रीबलरामकृष्णयोः स्वरूपमाह—

मृदु मृदु विहसन्तावुन्मिषद्दन्तवन्तौ
वदनपतितकेशौ दृश्यपादाब्जदेशौ ।
भुजगलितकरान्तव्यालगत्कङ्कणाङ्कौ
मतिमहरतमुच्चैः पश्यतां विश्वनृणाम् ॥ २ ॥

विशेषेणोपद्रसन्तौ । जनौघमनुगच्छन्तं विलोक्य किमपि शब्दं कृत्वा असाधारणकौतुकजनकं मन्दहासं कृतवन्तावित्यर्थः । कृतनिनादमिति धावनक्रियाविशेषणं वा । द्रवन्तौ धावन्तौ । ततो जनौघे दूरस्थे सति वलितवदनपद्मं वलितमावर्जितं वदनपद्मं मुखारविन्दं यस्मिन् कर्मणि तद्यथा भवति तथा । पृष्ठतः पश्चाद्भागे । दत्तदृष्टी दत्ते अर्पिते दृष्टी नेत्रे याभ्यां तौ तथाविधौ सन्तौ । चरन्ताविति शेषः । पृष्ठतो वर्तमानान् जनान् वीक्षितुमिति भावः ॥

द्रुतगतिषु पतन्तावुत्थितौ लिप्तपङ्कौ
दिवि मुनिभिरपङ्कैः सस्मितं वन्द्यमानौ ।
द्रुतमथ जननीभ्यां सानुकम्पं गृहीतौ
मुहुरपि परिरब्धौ द्राग्युवां चुम्बितौ च ॥ ४ ॥

द्रुतगतिष्विति ॥ युवां द्रुतगतिषु पतन्तौ लिप्तपङ्कौ उत्थितौ दिवि अपङ्कैः मुनिभिः सस्मितं वन्द्यमानौ अथ जननीभ्यां सानुकम्पं द्रुतं गृहीतौ मुहुः अपि परिरब्धौ द्राक् चुम्बितौ च । युवां श्रीबलरामकृष्णौ । द्रुतगतिषु शीघ्रगमनेषु । पतन्तौ पङ्के निपतन्तौ । ततो लिप्तपङ्कौ लिप्तः पङ्कः कर्दमो ययोस्तौ । दिवि अम्बरे । अपङ्कैः अपगतपापैः । सस्मितं स्मितेन सहितं यथा भवति तथा । वन्द्यमानौ नम्यमानौ । अयमत्राशयः—योऽस्माभिः पतनभयात् पङ्कापनयनाय च सेव्यते, सोऽधुना पतितो लिप्तपङ्कश्चाहो भगवतो भक्तवात्सल्यमिति स्मितं कृत्वेति । अथ अनन्तरम् । जननीभ्यां रोहिणीयशोदाभ्याम् । सानुकम्पं सदयं यथा भवति तथा । द्रुतं झटिति । मुहुरपि पुनः पुनरपि । परिरब्धौ आलिङ्गितौ । द्राक् द्रुतम् । चकारः समुच्चये ॥

यशोदाया लालनप्रकारमाह—

स्नुतकुचभरमङ्के धारयन्ती भवन्तं
तरलमति यशोदा स्तन्यदा धन्यधन्या ।

कपटपशुपमध्ये मुग्धहासाङ्कुरं ते
दशनमुकुलहृद्यं वीक्ष्य वक्त्रं जहर्ष ॥ ५ ॥

स्नुतकुचभरमिति ॥ हे कपटपशुप धन्यधन्या यशोदा मध्ये मुग्ध हासाङ्कुरं दशनमुकुलहृद्यं ते वक्त्रं वीक्ष्य जहर्ष। कपटपशुप कपट गोपालस्वरूप। धन्यधन्या अतीव सुकृतिनी। मध्ये स्तनपानमध्ये। मुग्ध हासाङ्कुरं मुग्धो मनोहरो हासाङ्कुरो मन्दस्मिताङ्कुरो यस्मिंस्तत्। दशन मुकुलहृद्यं दशनमुकुलैः दन्तकुड्मलैः हृद्यं मनोहरम्। ते तव श्रीबालकृष्णस्य। वक्त्रं वदनारविन्दम्। वीक्ष्य दृष्ट्वा। जहर्ष तुतोष। यशोदाया धन्य तमत्वे हेतुं दर्शयति—भवन्तं स्नुतकुचभरं तरलमति अङ्के धारयन्ती स्तन्यदा इति। भवन्तं यो योगिभिर्मनसि धार्यते, तं त्वामित्यर्थः। स्नुतकुचभरं स्नुतः प्रसृतस्तन्यः कुचभरः स्तनभारो यस्मिंस्तत्। तरला कृपाकुला मतिः बुद्धिर्यस्मिंस्तत्। एतद्द्वयमपि धारणक्रियाविशेषणम्। अङ्के उत्सङ्गे। धार यन्ती वहन्ती। स्तन्यं ददातीति स्तन्यदा। योगिनामपि दुर्लभस्य भग वतोऽङ्केन वहनस्य प्राप्तत्वाद्धन्यतमा यशोदेत्यर्थः ॥

अथ चरणचारिणः श्रीबालकृष्णस्य लीलां वर्णयितुमुपक्रमते—

तदनु चरणचारी दारकैस्साकमारा-
न्निलयततिषु खेलन् बालचापल्यशाली ।
भवनशुकविलालान् वत्सकांश्चानुधावन्
कथमपि कृतहासैर्गोपकैर्वारितोऽभूः ॥ ६ ॥

तदन्विति ॥ तदनु चरणचारी दारकैः साकम् आरात् निलय ततिषु खेलन् बालचापल्यशाली भवनशुकविलालान् वत्सकान् च अनुधावन् त्वं कृतहासैः गोपकैः कथमपि वारितः अभूः। तदनु तदनन्तरम्। चरण चारी चरणाभ्यां चरन्। दारकैः गोपशिशुभिः। साकं सह। आरात् समीपे। वर्तमानास्विति शेषः। निलयततिषु गोपभवनपङ्क्तिषु। खेलन् गच्छन्। बालचापल्यशाली बालानां शिशूनामुचितं यच्चापल्यं तेन शालत

इति तथोक्तः । अत एव भवनशुकबिलालान् भवनेषु गृहेषु ये शुकाः पञ्जरस्थास्तान् बिलालान् मार्जारांश्च । वत्सकान् गोवत्सतरान् । चकारः समुच्चये । अनुधावन् अनु पश्चात् धावन् ग्रहीतुं पलायमानः । त्वं श्रीबालगोपालकृष्णः । कृतहासैः कृतो हासो हसितं यैस्तैः गोपकैः । कथमपि कथञ्चित् । प्रयासेनेत्यर्थः । वारितः निवारितः । कथमपीत्यनेन भगवतः श्रीबालकृष्णस्य भवनशुकाद्यनुधावनान्निवारणस्य गोपैर्दुश्शकत्वं, धावनस्य वैविध्यं च ध्वन्यते ॥

हलधरसहितस्त्वं यत्र यत्रोपयातो
　विवशपतितनेत्रास्तत्र तत्रैव गोप्यः ।
विगलितगृहकृत्या विस्मृतापत्यभृत्या
　मुरहर मुहुरत्यन्ताकुला नित्यमासन् ॥ ७ ॥

हलधरसहित इति ॥ हे मुरहर गोप्यः त्वं हलधरसहितः यत्र यत्र उपयातः, तत्र तत्र एव विवशपतितनेत्राः विगलितगृहकृत्याः विस्मृतापत्यभृत्याः नित्यं मुहुः अत्यन्ताकुलाः आसन् । मुरहर मुरासुरमर्दन । गोप्यः गोपस्त्रियः । त्वं श्रीबालकृष्णः । हलधरसहितः हलधरेण बलभद्रेण सहितः अन्वितः । यत्र यत्र यस्मिन् यस्मिन् प्रदेशे । उपयातः गतः । तत्र तत्रैव तस्मिंस्तस्मिन् प्रदेशे एव । नान्यत्रेत्यर्थः । विवशपतितनेत्राः विवशम् अवशं यथा भवति तथा पतिते स्वयं पतिते न तु पातिते नेत्रे यासां ताः । विगलितगृहकृत्याः विगलितानि भगवदाहृतचित्ततया विस्मृतानि गृहकृत्यानि गृहे कर्तव्यानि कर्माणि याभिस्ताः । विस्मृतापत्यभृत्याः अपत्यानि पुत्राः भृत्याश्चेत्यपत्यभृत्याः, विस्मृताः अपत्यभृत्याः याभिस्ताः । मुहुः पुनः पुनः । अत्यन्ताकुलाः अत्यन्तमतिमात्रमाकुलाः परवशाः ॥

प्रतिनवनवनीतं गोपिकादत्तमिच्छन्
　कलपदमुपगायन् कोमलं क्वापि नृत्यन् ।

मदयुवतिलोकैरर्पितं सर्पिरश्नन्
क्वचन नवविपक्वं दुग्धमप्यापिबस्त्वम् ॥ ८॥

प्रतिनवेति ॥ त्वं गोपिकादत्तं प्रतिनवनवनीतम् इच्छन् कलपदम् उपगायन् क्वापि कोमलं नृत्यन् सदययुवतिलोकैः अर्पितं सर्पिः अश्नन् क्वचन नवविपक्वं दुग्धमपि आपिब । त्वं श्रीबालकृष्णः। गोपिकादत्तं गोपिकाभिः गोपस्त्रीभिः दत्तमर्पितम्। प्रतिनवनवनीतं प्रतिनवम् अभिनवं नवनीतं नवोद्धृतमभ्रथितं सर्पि । इच्छन्नभिलषन्। अत एव कलपदं कला न्यव्यक्तमधुराणि पदानि यस्मिंस्तद्यथा भवति तथा। उपगायन् गोपीनां पुरस्तात् गायन्। क्वापि क्वचित्। कोमलं मनोहरं यथा भवति तथा। नृत्यन् नर्तनं कुर्वन्। अयमर्थ --गोप्य श्रीबालकृष्णमागतमालक्ष्य कुतूहलाकुलितचेतसः किमपि गीयतामिति काश्चन, अपरा नृत्यताम्, नवनीतं दुग्धं च दास्यामीति कथयन्ति। तत् श्रुत्वा नवनीतदुग्धाभिलाषेणैव ताः प्रीणयितुं तासां पुरस्तात् गायन् नृत्यंश्चेति। अत एव सदययुवतिलोकैः दयापरैः युवतिलोकैः गोपीजनैः। अर्पितं दत्तम्। सर्पि नवनीतम्। अश्नन् भुञ्जानः। क्वचन कुत्रचित्। नवविपक्वं नवं नूतनं सद्यो दुग्धं धारोष्णं विपक्वञ्च। दुग्धं पयः। आपिब पीतवानसि ॥

अथ भगवान् हरि स्वोपयुक्तस्यानन्तफलप्रदायितया दत्तमपि गोपीनां गोरसादिकमुपयुञ्जानो गोपगोपीरन्वग्रहीदित्याह---

मम खलु बलिगेहे याचनं जातमास्ता-
मिह पुनरबलानामग्रतो नैव कुर्वे।
इति विहितमतिः किं देव सन्त्यज्य याच्ञां
दधिघृतमहरस्त्वं चारुणा चोरणेन ॥ ९॥

ममेति ॥ हे देव त्वं याच्ञां सन्त्यज्य चारुणा चोरणेन दधिघृतम् अहरः। देव मानुषबालवेषमङ्गीकृत्य सङ्क्रीडमान। अनेन सम्बोधनेन चोरणस्य युक्तरूपता द्योत्यते। त्वं श्रीबालकृष्णः। याच्ञा याचनम्। सन्त्यज्य

परित्यज्य। चारुणा मनोहरेण। चोरणेन स्तेयेन। घृतं नवनीतम्। चकारोऽत्राध्याहर्तव्यः। अहरः हृतवानसि। भगवतो याच्ञात्यागे हेतुमुत्प्रेक्षते—इति विहितमतिः किमिति। इति अनेन प्रकारेण। विहितमतिः कृतनिश्चयः। किमिति सम्भावनायाम्। निश्चयप्रकारमाह—मम बलिगेहे याचनं जातं खलु आस्ताम्, इह पुनः अबलानामग्रतः न कुर्वे एव इति। बलिगेहे बलेर्महाबलिरिति प्रसिद्धस्यासुरस्य, बलिनो बलवतश्च गेहे गृहे। वामनावतारकाल इति भाव। याचनं याच्ञा। जातं सञ्जातम्। खल्विति प्रसिद्धौ। आस्तां भवतु। बलिन पुरस्ताद्याचनं नात्यन्तमयुक्तमिति निश्चिनोमीत्यर्थ.। इह व्रजे। पुनरिति विशेषे। तमाह—अबलानामित्यादि। अबलानां गोपस्त्रीणाम्। बलहीनानां च। अग्रतः पुरस्तात्। न कुर्वे एव न करिष्यामीति निश्चितमित्यर्थः। बलहीनानां पुरस्ताद्याचनस्यात्यन्तदैन्यापादकतया तदनुपपन्नमेवेति भावः॥

भगवतः श्रीबालकृष्णस्य दधिघृतमोषेण गोपाङ्गना रोषेण शोकेन वा न पीडिता बभूवुरित्याह—

तव दधिघृतमोषे घोषयोषाजनाना-
मभजत हृदि रोषो नावकाशं न शोकः।
हृदयमपि मुषित्वा हर्षसिन्धौ न्यधास्त्वं
स मम शमय रोगान् वातगेहाधिनाथ ॥ १० ॥

तवेति॥ घोषयोषाजनाना हृदि तव दधिघृतमोषे रोष. अवकाशं न अभजत शोकः न। घोषयोषाजनानां गोपस्त्रीणाम्। हृदि हृदये। तव श्रीबालकृष्णस्य। दधिघृतमोषे दध्नो घृतस्य च मोषे चोरणे। तज्जन्य इत्यर्थ·। रोषः कोपः। अवकाशम् अन्तरम्। न अभजत नालभत। शोक. दु.खम्। चकारोऽत्राध्याहर्तव्यः। अभजतेत्यत्रापि सम्बध्यते। अत्र हेतुमाह—त्वं हृदयमपि मुषित्वा हर्षसिन्धौ न्यधा· इति। त्वं श्रीबालकृष्णः। हृदयं गोपाङ्गनानां चेतः। न केवलं दधिघृतमित्यपिशब्दार्थः।

मुषित्वा चोरयित्वा । हर्षसिन्धौ आनन्दार्णवे । न्यधा क्षिप्तवानसि । अथ प्रार्थयते—हे वातगेहाधिनाथ स त्वं मम रोगान् शमय इति । वातगेहाधिनाथ श्रीगुरुवायुपुरनाथ । स तथाविधकृपाम्बुराशि । ममानन्यशरणस्य । रोगान् बाह्यानाभ्यन्तरांश्चामयान् । शमय नाशय ॥

इति कृष्णस्य बाल्यक्रीडावर्णनं
पञ्चचत्वारिंशदशकम् ॥

## षट्चत्वारिंशदशकम् ॥

अथ भगवान् श्रीबालकृष्णरूपी हरिर्यशोदायै स्वस्य मुखे समस्तमपि विश्वं प्रादर्शयदित्याह—

अयि देव पुरा किल त्वयि स्वयमुत्तानशये स्तनन्धये ।
परिजृम्भणतो व्यपावृते वदने विश्वमचष्ट वल्लवी ॥ १ ॥

अयीति ॥ अयि देव पुरा वल्लवी त्वयि स्वयम् उत्तानशये स्तनन्धये परिजृम्भणत व्यपावृते वदने विश्वम् अचष्ट किल । अयीति सम्बोधने । देव मायामनुष्यरूपमङ्गीकृत्य क्रीडमान । पुरा पूर्वम् । वल्लवी यशोदा । त्वयि श्रीबालकृष्णे । उत्तानशये ऊर्ध्वमुखशायिनि । स्तनन्धये स्तनं कुचं धयति पिबतीति तथाविधे सति । परिजृम्भणत विजृम्भणदशायाम् । व्यपावृते विदारिते । वदने श्रीबालकृष्णस्य मुखे । विश्वं भुवनम् । अचष्ट दृष्टवती । किलेति वार्तायाम् ॥

एवमेकदा प्रदर्श्य पुनरपि प्रदर्शयितुं हेतुमुपक्षिपति—

पुनरप्यथ बालकैः समं त्वयि लीलानिरते जगत्पते ।
फलसञ्चयवञ्चनक्रुधा तव मृद्भोजनमूचुरर्भकाः ॥ २ ॥

पुनरपीति ॥ हे जगत्पते त्वयि अथ पुनः अपि बालकैः समं लीला निरते अर्भकाः फलसञ्चयवञ्चनक्रुधा तव मृद्भोजनम् ऊचुः । जगत्पते जगद्रक्षक । त्वयि श्रीबालकृष्णे । अथ अनन्तरम् । पुनः पश्चात् । अपिस्समुच्चये । किञ्चिद्वयोतिक्रमणे सत्यपीत्यर्थः । बालकैः गोपकिशोरैः । समं सह । लीलानिरते निर्भरं क्रीडति सति । अर्भकाः गोपबालकाः । फलसञ्चयवञ्चनक्रुधा फलसञ्चयानां फलसमूहानां यद्वञ्चनं वञ्चयित्वाऽपहरणं तत्र या क्रुध् तत्कृतः कोपस्तया । तव श्रीबालकृष्णस्य । मृद्भोजनं मृद्भक्षणम् । ऊचुः अकथयन् ॥

स्वात्मजस्य मृद्भोजनं निशम्य यशोदा चुकोपेत्याह—

**अयि ते प्रलयावधौ विभो क्षितितोयादिसमस्तभक्षिणः ।**
**मृदुपाशनतो रुजा भवेदिति भीता जननी चुकोप सा ॥ ३ ॥**

अयीति ॥ अयि विभो सा जननी इति भीता चुकोप । अयीति सम्बोधने । विभो शक्तिसम्पन्न । अनेन सम्बोधनेन क्षित्यादिसमस्तभक्षणसामर्थ्यं दर्शितम् । सा श्रीबालकृष्णयोगक्षेमैकनिरता । अत एव इति एवं विचिन्त्य । भीता भयाक्रान्ता । चुकोप कुपिताऽभूत् । चिन्ताप्रकारमाह—ते मृदुपाशनतः रुजा भवेत् इति । ते तव श्रीबालकृष्णस्य । मृदुपाशनतः मृद्भक्षणात् । रुजा रोगः । भवेत् अवश्यं भविष्यति । वस्तुतो भगवतो मृद्भक्षणेऽपि न रोगो भवेत्, परं तु सा तन्न बुबोधेत्याशयेनाह—प्रलयावधौ क्षितितोयादिसमस्तभक्षिणः इति । प्रलयावधौ प्रलय एवावधिस्तदा । क्षितितोयादिसमस्तभक्षिणः क्षितिः पृथिवी, तोयमापः, आदिशब्देन तेजःप्रभृतीनां संग्रहः, क्षितितोयादि समस्तं वस्तु भक्षयितुं शीलमस्येति तथाविधस्य । पृथिव्यादिसमस्तमपि वस्तुजातं भक्षयतोऽपि नीरुजस्य सतः किं मृल्लवभक्षणमात्रेण रोगबाधा स्यादिति भावः ॥

भगवान् श्रीबालकृष्णो यशोदया पृष्टस्तन्नानुमेने इत्याह—

**अयि दुर्विनयात्मक त्वया किमु मृत्स्ना बत वत्स भक्षिता ।**
**इति मातृगिरं चिरं विभो वितथां त्वं प्रतिजज्ञिषे हसन् ॥ ४ ॥**

अयीति ॥ हे विभो त्वम् इति मातृगिरः हसन् चिरं वितथां प्रतिजज्ञिषे। विभो प्रभो। त्वं श्रीबालकृष्ण । इति एवंविधाम् । मातृगिरं मातृवाक्यम्। हसन् प्रहसन । चिरं चिरेण । वितथाम् अनृताम्। प्रतिजज्ञिषे प्रतिज्ञातवानसि। मातुरुक्तिप्रकारमाह—अयि वत्स दुर्विनयात्मक बत त्वया मृत्सा भक्षिता किमु इति। अयीति सम्बोधने। वत्स पुत्र दुर्विनयात्मक अविनीतस्वभाव। बत कष्टम्। मृत्सा मृत्तिका। भक्षिता अभ्यवहृता। किम्विति प्रश्ने ॥

अथ जननी निर्भर्त्सयितुं मुखं विदारितवानित्याह—

अयि ते सकलैर्विनिश्चिते विमतिश्चेद्वदनं विदार्यताम्।
इति मातृविभर्त्सितो मुखं विकसत्पद्मनिभं व्यदारयः ॥ ५ ॥

अयीति ॥ त्वम् इति मातृविभर्त्सितः मुखं विकसत्पद्मनिभं व्यदारय । त्वं श्रीबालकृष्ण । इति अनेन प्रकारेण। मातृविभर्त्सितः मात्रा विभर्त्सितः निर्भर्त्सितः। मुखं वदनम्। विकसत्पद्मनिभं विघटमानकमलकोशतुल्यं यथा भवति तथा। व्यदारयः विदारितवान्। मातुर्भर्त्सनप्रकारमाह—अयि सकलैः विनिश्चिते ते विमतिः चेत् वदनं विदार्यतामिति। अयीति सम्बोधने। सकलैः सर्वैर्गोपबालकैः। विनिश्चिते निर्णीते। मृद्भोजन इति शेषः। ते तवैकस्य। विमतिः विसम्मतिः। चेत् यद्यस्ति तर्हीत्यर्थः। वदनं मुखम्। विदार्यताम्। त्वयेति शेषः ॥

मात्रा निर्भर्त्सितो हरिस्तस्यै स्वमुखे भुवनान्यदर्शयदित्याह —

अपि मृल्लवदर्शनोत्सुकां जननीं तां बहु तर्पयन्निव।
पृथिवीं निखिलां न केवलं भुवनान्यप्यखिलान्यदीदृशः ॥ ६ ॥

अपीति ॥ त्वं तां जननीं न केवलं निखिलां पृथिवीम्, अखिलानि भुवनानि अपि अदीदृशः । त्वं श्रीबालकृष्ण । ताम् आत्मजेनानृत

मेवोक्तमिति निश्चिन्वन्तीम्। जननीं यशोदाम्। निखिलां समस्ताम्। पृथिवीं भूमिम्। अखिलानि सर्वाणि। भुवनानि विष्टपानि। अपिः समुच्चये। अदीदृशः प्रदर्शयामासिथ। अत्र हेतुमुत्प्रेक्षते—मृल्लवदर्शनोत्सुकामपि बहु तर्पयन्निवेति। मृल्लवदर्शनोत्सुकां मृल्लवस्य मृदो मृत्तिकाया लवस्य लेशस्य दर्शने विलोकने उत्सुकां साभिलाषाम्। अपिर्विरोधे। बहु अतिशयेन। तर्पयन् प्रीणयन्। इवेति सम्भावनायाम्॥

अथ त्रिभिर्मुखे यशोदया दृष्टान्येव विवृणोति—

कुहचिद्वनमम्बुधिः क्वचित् क्वचिदभ्रं कुहचिद्रसातलम्।
मनुजा दनुजाः क्वचित् सुरा ददृशे किं न तदा त्वदानने॥ ७॥

कुहचिदिति॥ तदा त्वदानने किं न ददृशे। तदा तस्मिन्नवसरे। त्वदानने तव श्रीबालकृष्णस्य आनने मुखे। किं न ददृशे। सर्वमप्यदृश्यतेत्यर्थः। यशोदयेति शेषः। तदेवाह—कुहचित् वनं क्वचित् अम्बुधिः, क्वचित् अभ्रं, कुहचित् रसातलं, क्वचित् मनुजाः, दनुजाः, सुराः इति। कुहचित् कुत्रचित्। वनम् अरण्यम्। क्वचित् कुत्रचित्। अम्बुधिः समुद्रः। अभ्रं नभः। रसातलं पातालम्। मनुजाः मनुष्याः। दनुजाः असुराः। सुराः देवाः। क्वचिदिति सर्वत्र सम्बध्यते॥

किञ्च—

कलशाम्बुधिशायिनं पुनः परवैकुण्ठपदाधिवासिनम्।
स्वपुरश्च निजार्भकात्मकं कतिधा त्वां न ददर्श सा मुखे॥ ८॥

कलशाम्बुधीति॥ सा मुखे त्वां कतिधा न ददर्श। सा यशोदा। मुखे श्रीबालकृष्णवदनकुहरे। त्वां श्रीबालकृष्णरूपं हरिम्। कतिधा कतिभिः प्रकारैः। न ददर्श। बहुप्रकारेणापश्यदित्यर्थः। तानेव प्रकारानाह—कलशाम्बुधिशायिनं पुनः परवैकुण्ठपदाधिवासिनं स्वपुरः निजार्भकात्मकं च इति। कलशाम्बुधिशायिनं कलशाम्बुधौ शेषपर्यङ्के शयानम्। पुनः अनन्तरम्।

परवैकुण्ठपदाधिवासिन परस्मिन् सर्वोत्कृष्टे वैकुण्ठपदे विकुण्ठनिलये वसन्तम्। स्वपुर स्वस्य पुरस्तात्। निजार्भकात्मक स्वात्मनस्स्वरूपम्। चकार समु क्षये।

अपिच—

विकसद्भुवने मुखोदरे ननु भूयोऽपि तथाविधाननः।
अनया स्फुटमीक्षितो भवाननवस्थां जगता बतातनोत् ॥ ९ ॥

विकसद्भुवन इति ॥ ननु भवान् जगताम् अनवस्थामातनोत् बत। नन्वित्यामन्त्रणे। भवान् श्रीबालकृष्ण। जगता लोकानाम्। अनवस्थाम् अस्थिरताम्। आतनोत् कृतवान्। ननु कथमेतदिति चेत्तत्राह—अनया विकसद्भुवने मुखोदरे भूय अपि तथाविधानन स्फुटम् ईक्षित इति। अनया यशोदया। विकसद्भुवने विकसन्ति प्रकाशमानानि भुवनानि विष्ट पानि यस्मिंस्तथाविधे। मुखोदरे मुखाभ्यन्तरे। भूय अपि पुनरपि। तथाविधानन तथाविध विकसद्भुवनम् आननम् मुख यस्य स। स्फुट स्पष्टम्। ईक्षित दृष्ट। अयमर्थ—यशोदा स्वसुतस्य मुखे जगत् स्वबा लक च ददर्श, तस्यापि मुखे जगत् स्वबालक चाप्यपश्यत्, पुनस्तस्याप्येव पुनश्चेति दर्पणस्थदर्पणस्येव जगतामनवस्थामातनोदिति ॥

अथ विदिततत्त्वा यशोदा श्रीबालकृष्णा हरिर्मोहयन्नासीदित्याह—

धृततत्त्वधिय तदा क्षण जननीं ता प्रणयेन मोहयन्।
स्तनमम्ब दिशेत्युपासजन् भगवन्नद्भुतबाल पाहि माम् ॥ १० ॥

धृततत्त्वधियमिति ॥ हे भगवन् अद्भुतबाल तदा क्षण धृततत्त्व धिय ता जननीं प्रणयेन मोहयन् त्व मा पाहि। भगवन् ऐश्वर्यादि सम्पन्न। अद्भुतबाल अद्भुतार्भकस्वरूप। अनेकब्रह्माण्डप्रतिबिम्बदर्पण स्थानीयत्वादद्भुतबालत्वमिति द्रष्टव्यम्। तदा श्रीबालकृष्णस्य मुखाभ्यन्तरे ब्रह्मा ण्डस्य तद्बहिस्स्य वैकुण्ठपदस्यापि दर्शनावसरे। क्षण कञ्चित् कालम्।

धृततत्त्वधियं धृता तत्त्वधीस्तत्त्वज्ञानं यया ताम् । सच्चिदानन्दात्मको हरिरेवायं योगैश्वर्येण मत्पुत्रभावेनात्मानं प्रदर्श्य मां मोहयतीति तत्त्वमधिगच्छन्तीमित्यर्थः । तां जननीं यशोदाम् । प्रणयेन पुत्रवात्सल्यप्रकर्षेण । मोहयन् विगलितपरमार्थधियं कुर्वन् । त्वं श्रीबालकृष्णः । मामनन्यशरणम् । पाहि सर्वामयात्त्रायस्व । जनन्या मोहनप्रकारमाह—हे अम्ब स्तनं दिश इति । स्तनं कुचम् । दिश देहि । मह्यमिति शेषः । इति इत्युक्त्वा । उपासजन् अङ्कमारुरुक्षन्नित्यर्थः ॥

इति विश्वरूपप्रदर्शनवर्णनं
षट्चत्वारिंशद्दशकम् ॥

## सप्तचत्वारिंशद्दशकम् ॥

अथ दशकद्वयेन कुबेरपुत्रयोश्शापमोचनचरित्रं वर्णयति—

**एकदा दधिविमाथकारिणीं मातरं समुपसेदिवान् भवान् ।**
**स्तन्यलोलुपतया निवारयन्नङ्कमेत्य पपिवान् पयोधरौ ॥ १ ॥**

**एकदेति ॥** एकदा भवान् दधिविमाथकारिणीं मातरं समुपसेदिवान्, स्तन्यलोलुपतया अङ्कम् एत्य निवारयन् पयोधरौ पपिवान् । एकदा कदाचित् । भवान् श्रीबालकृष्णः । दधिविमाथकारिणी दधिविमाथं दधिमथनं करोतीति तथोक्ताम् । मातरं जननीं यशोदाम् । समुपसेदिवान् समीपं प्राप्तवान् । स्तन्यलोलुपतया स्तन्याभिलाषेण । अङ्कमुत्सङ्गम् । एत्य प्राप्य । निवारयन् । दधिमथनादिति शेषः । पयोधरौ कुचौ । पपिवान् पीतवान् ॥

भगवति स्तनं पिबति यशोदा निचार्य ततो यथाविदित्याह—

**अर्धपीतकुचकुड्मले त्वयि स्निग्धहासमधुराननाम्बुजे ।**
**दुग्धमीश दहने परिस्रुतं धर्तुमाशु जननी जगाम ते ॥ २ ॥**

अर्धपीतेति ॥ हे ईश त्वयि अर्धपीतकुचकुड्मले स्निग्धहासमधुरान-नाम्बुजे ते जननी दहने परिस्रुतं दुग्धं धर्तुम् आशु जगाम। ईश जगद्रक्षक। त्वयि श्रीबालकृष्णे। अर्धपीतकुचकुड्मले अर्धपीतः सामिपीतः कुचकुड्मलः स्तनमुकुलो येन तथाविधे। स्निग्धहासमधुराननाम्बुजे स्निग्धहासेन अङ्गुलीभ्यां कपोलतलचालनात् स्निग्धेन मनोहरेण हासेन मन्दस्मितेन मधुरं मनोहरम् आननाम्बुजं मुखाम्बुजं यस्य तथाविधे च सति। ते तव श्रीबालकृष्णस्य। जननी यशोदा। दहने पावके। परिस्रुतं वह्निसन्तापेन फेनीभूय परितः स्रुतं गलितम्। दुग्धं पयः। धर्तुं फेनं शमयितुमित्यर्थः। आशु झटिति। जगाम गतवती ॥

अथ भगवान् दधिभाजनं बिभेदेत्याह—

**सामिपीतरसभङ्गसङ्गतक्रोधभारपरिभूतचेतसा।**
**मन्थदण्डमुपगृह्य पाटितं हन्त देव दधिभाजनं त्वया ॥ ३ ॥**

सामिपीतेति ॥ हे देव त्वया मन्थदण्डमुपगृह्य दधिभाजनं पाटितं हन्त। हे देव प्रकाशमान। त्वया श्रीबालकृष्णेन। मन्थदण्डं मन्थम्। उपगृह्य गृहीत्वा। दधिभाजनं दधिपूरितं मृत्पात्रम्। पाटितं छिन्नम्। मन्थदण्डेनेत्यर्थः। अपराधिन्यपि यशोदा यद्यपि न तादृशं दण्डमर्हति, तथापि ताभगवानेवमदण्डयदित्यनुकम्पाया हन्तेत्युक्तम्। दधिभाजनस्य पाटने हेतुमाह—सामिपीतरसभङ्गसङ्गतक्रोधभारपरिभूतचेतसा इति। सामिपीतस्य अर्धपीतस्तन्यस्य यो रसस्तस्य भङ्गेन विच्छेदेन सङ्गतः प्राप्तो यः क्रोधभारः दुर्वहः कोपस्तेन परिभूतं समाक्रान्तं चेतो मनो यस्य तेन। यद्यपि 'दधिमन्थभाजनं भित्त्वा मृषाश्रुर्दृषदश्मना' इति श्रीमद्भागवते दृश्यते, तथाप्यौचित्यायातमेतत् 'मन्थदण्डमुपगृह्य पाटितम्' इतीति द्रष्टव्यम् ॥

दधिभाजनभञ्जनध्वनिं श्रुतवत्या यशोदाया प्रवृत्तिमाह—

**उच्चलद्ध्वनितमुच्चकैस्तदा सन्निशम्य जननी समाद्रुता।**
**त्वद्यशोविसरवद्ददर्श सा सद्य एव दधि विस्तृतं क्षितौ ॥ ४ ॥**

उच्चलद्ध्वनितमिति ॥ तदा सद्यः समाद्रुता सा जननी क्षितौ विस्तृतं दधि एव ददर्श। तदा तस्मिन्नवसरे। सद्यः झटिति। समाद्रुता प्रधाव्यागता। सा जननी यशोदा। क्षितौ भूमौ। विस्तृतं विततम्। एव कारेण श्रीबालकृष्णस्य व्यवच्छेदः। ददर्श दृष्टवती। दध्न उपमानं दर्शयति—त्वद्यशोविसरवदिति। तव श्रीबालकृष्णस्य यशसः कीर्तेर्विसरो व्याप्तिस्तद्वत्। विस्तृतं तव यश इव क्षितौ विस्तृतमित्यर्थः। शुभ्रत्वरूपः साधारणो धर्मोऽत्र व्यङ्ग्यः। यशोदायाः प्रधाव्यागमने हेतुमाह—उच्चकैः उच्चलत् ध्वनितं सन्निशम्य इति। उच्चकैः उच्चैः। उच्चलत् उद्गतम्। ध्वनितं दधिभाजनपाटनध्वनिम्। सन्निशम्य श्रुत्वा॥

यशोदा श्रीबालकृष्णमन्विष्य कुत्रचिदपश्यदित्याह—

वेदमार्गपरिमार्गितं रुषा त्वामवीक्ष्य परिमार्गयन्त्यसौ।
सन्ददर्श सुकृतिन्युलूखले दीयमाननवनीतमोतवे ॥ ५ ॥

वेदमार्गेति॥ असौ त्वामवीक्ष्य रुषा परिमार्गयन्ती उलूखले सन्ददर्श। असौ यशोदा। त्वां श्रीबालकृष्णम्। अवीक्ष्य तत्रादृष्ट्वा। रुषा कोपेन। परिमार्गयन्ती परितो मार्गयन्ती अन्वेषयन्ती। सन्ददर्श दृष्टवती। रुषा अन्वेषितस्य भगवतो दर्शनमतिदुर्लभमिति दर्शयन् भगवन्तं विशिनष्टि—वेदमार्गपरिमार्गितमिति। वेदमार्गैः श्रुतिभिः प्रतिपादितैर्लिङ्गैः परिमार्गितं मननादिभिरन्विष्टम्। मुनिभिरिति शेषः। मुनिभिः श्रवणमननादिभिः कथञ्चिदध्यात्मदृशा गृहीतम्, न तु मांसचक्षुषेत्यर्थः। ननु कथमीदृशं भगवन्तं यशोदा मांसचक्षुषा साक्षात्कृतवतीत्याशङ्कायामाह—सुकृतिनी इति। बहुजन्मान्तरार्जिततथाविधपरिपक्वपुण्यसञ्चयशालिनीत्यर्थः। तदानीं यशोदादृष्टस्य भगवतः प्रवृत्तिमाह—ओतवे दीयमाननवनीतमिति। ओतवे बिडालाय। दीयमाननवनीतं दीयमानं नवनीतं नवोद्धृतं सर्पिर्येन तम्॥

यशोदा भगवन्तं गृहीत्वा रशनया बन्धुं प्रावर्ततेत्याह—

त्वां प्रगृह्य तत भीतिभावनाभासुराननसरोजमाशु सा ।
रोषरूषितमुखी सखीपुरो बन्धनाय रशनामुपाददे ॥ ६ ॥

त्वामिति ॥ सा आशु भीतिभावनाभासुराननसरोज त्वां प्रगृह्य रोषरूषितमुखी सखीपुरः बन्धनाय रशनाम् उपाददे । सा यशोदा । आशु झटिति । भीतिभावनाभासुराननसरोज भीतेर्भयस्य भावनया अभिनयेन भासुर शोभनमाननसरोज मुखपङ्कज यस्य तम् । वस्तुतो जगत्पते श्रीबालकृष्णस्य भयाभावात् भावनेत्युक्तम् । भक्तपरवशतया तद्भावनेति द्रष्टव्यम् । त्वा श्रीबालकृष्णम् । प्रगृह्य प्रकर्षेण गृहीत्वा । ग्रहण मोचयित्वा धावनान्निरोधनार्थं दृढ गृहीत्वेत्यर्थ । रोषरूषितमुखी रोषेण कोपेन रूषित भ्रूभङ्गादियुक्त मुखमस्या अस्तीति तथाविधा । सखीपुर सखीना पुरस्तात् । बन्धनाय श्रीबालकृष्ण बन्धुम् । रशना रज्जुम् । उपाददे गृहीतवती । यो हि नित्यमुक्तवपु, त बन्धुमैच्छदित्यहो मुग्धता यशोदाया इति दर्शयितुमुक्त बतेति ॥

श्रीबालकृष्णस्य बन्धुमशक्यता दर्शयति —

बन्धुमिच्छति यमेव सज्जनस्त भवन्तमयि बन्धुमिच्छती ।
सा नियुज्य रशनागुणान् बहून् द्व्यङ्गुलोनमखिल किलैक्षत ॥ ७ ॥

बन्धुमिच्छतीति ॥ अयि सा बहून् रशनागुणान् नियुज्य अखिल द्व्यङ्गुलोनम् ऐक्षत किल । अयीति सम्बोधने । भगवन्निति शेष । सा यशोदा । बहून् अनेकान् । रशनागुणान् रज्जून् । नियुज्य श्रीबालकृष्णस्याङ्गे योजयित्वा । अखिल सर्वम् । द्व्यङ्गुलोन द्व्यङ्गुलेनान न्यूनम् । ऐक्षत दृष्टवती । किलेति वार्तायाम् । अयमर्थ —यदा हि कुपिता यशोदा भगवन्त बन्धुमेक पाश तदङ्गे योजयामास, तदा त द्व्यङ्गुलोनमपश्यत्, पुनरपरमयोजयत्, तमपि द्व्यङ्गुलोनमैक्षत, पुनरन्यम्, तमपि द्व्यङ्गुलोनम्, एव यावतो रशनागुणानयोजयत्, तान् सर्वानपि द्व्यङ्गुलोनानपश्यदिति। अत्र हेतुमाह—त भवन्त बन्धुमिच्छती इति । त तथाविधम् । भवन्त श्रीबाल

कृष्णम्। पाशेन बन्धुम्। इच्छती अभिलषती। तत्पदार्थमाह—सज्जनः यमेव बन्धुमिच्छति इति। सज्जनः मोक्षार्थी। यं भगवन्तम्। एवकारेणान्येषां व्यवच्छेदः। बन्धुं शरण्यम्। इच्छति अभिलषति। बन्धुमिच्छती सा इत्यत्र बन्धुं शरण्यमिच्छतीति च प्रतीयते। सतां बन्धमोक्षप्रदस्य भगवतो बन्धनस्याशक्यत्वादिति भाव ॥

अथ भगवान् कृपया आत्मनो बन्धनमन्वमन्यतेत्याह—

**विस्मितोत्स्मितसखीजनेक्षितां स्विन्नसन्नवपुषं निरीक्ष्य ताम्।**
**नित्यमुक्तवपुरप्यहो हरे बन्धमेव कृपयाऽन्वमन्यथाः ॥ ८ ॥**

**विस्मितोत्स्मितेति ॥** हे हरे त्वं नित्यमुक्तवपु अपि कृपया बन्धमेव अन्वमन्यथाः अहो। हरे विष्णो। त्वं श्रीबालकृष्णः। नित्यमुक्तवपु नित्यमुक्तं सर्वदा मायातत्कार्योपरागरहितं वपुः शरीरं यस्य स। अपि विरोधे। कृपया यशोदायां करुणया। बन्धं संसारबन्धनम्। एवकारेणायोगव्यवच्छेदः। अन्वमन्यथा. अनुज्ञातवानसि। मुक्तस्य संसारबन्धनानुमननमसम्भाव्यमेवेति विरोध. अहो इत्यनेन दर्शित.। भक्तपारवश्यासहत्वात् पाशेन बन्धनमन्वमन्यथा इति तत्परिहारश्च। अतोऽत्र विरोधाभासोऽलङ्कारः। बन्धनानुमनने हेतुमाह—तां विस्मितोत्स्मितसखीजनेक्षिता स्विन्नसन्नवपुषं निरीक्ष्य इति। तां मातरं यशोदाम्। विस्मितोत्स्मितसखीजनेक्षितां विस्मितै. द्व्यङ्गुलोनतां संयोजितानां पाशानां दृष्ट्वा सञ्जातविस्मयैः उत्स्मितैः। तथाऽपि तां यशोदामनिवर्तमानां दृष्ट्वा उद्गतस्मितै सखीजनै वयस्याभि ईक्षिताम् अवलोकिताम्। स्विन्नसन्नवपुषं स्विन्नं परिश्रमात् सञ्जातस्वेदसलिलं सन्नं प्राप्तसादं च वपुर्यस्यास्ताम्। निरीक्ष्य दृष्ट्वा। तस्या मनोरथं पूरयितुमिति भावः॥

यशोदया बद्धस्य भगवतश्चेष्टितमाह—

**स्थीयतां चिरमुलूखले खलेत्यागता भवनमेव सा यदा।**
**प्रागुलूखलबिलान्तरे तदा सर्पिरर्पितमदन्नवास्थिथाः ॥ ९ ॥**

## अष्टचत्वारिंशदशकम् ॥

*अथ देवा भगवन्तं श्रीबालकृष्णं दामोदर इत्याचख्युरित्याह—*

**मुदा सुरौघैस्त्वमुदारसम्मदैरुदीर्य दामोदर इत्यभिष्टुतः ।**
**मृदूदरः स्वैरमुलूखले लगन्नदूरतो द्वौ ककुभावुदैक्षथाः ॥ १ ॥**

**मुदेति ॥** उदारसम्मदैः सुरैः दामोदरः इति उदीर्य मुदा अभिष्टुतः मृदूदरः त्वं स्वैरम् उलूखले लगन् अदूरतः द्वौ ककुभौ उदैक्षथाः । उदारसम्मदैः उदारः प्रवृद्धः सम्मदः प्रमोदो येषां तैः । भगवतो भक्तपराधीनतां दृष्ट्वेति भावः । सुरौघैः सुरगणैः । दाम्ना उदरे बद्धत्वात् दाम रशनागुणः उदरे यस्येत्यन्वर्थसंज्ञया दामोदर इत्युदीर्य सम्बोध्य । मुदा प्रीत्या । अभिष्टुतः स्तुतः । मृदूदरः मृदु उदरं यस्य सः । अनेन पाशबन्धनायोग्यत्वं ध्वन्यते । त्वं श्रीबालकृष्णः । स्वैरं यथासुखमिति गमनक्रियाविशेषणम् । लगन् लग्नः । अदूरतः समीपे । ककुभौ इन्द्रद्रू । उदैक्षथाः दृष्टवानसि ॥

ककुभयोः पूर्वचरितमाह—

**कुबेरसूनुर्नलकूबराभिधः परो मणिग्रीव इति प्रथां गतः ।**
**महेशसेवाधिगतश्रियोन्मदौ चिरं किल त्वद्विमुखावखेलताम् ॥ २ ॥**

**कुबेरसूनुरिति ॥** नलकूबराभिधः कुबेरसूनुः मणिग्रीवः इति प्रथां गतः परः चिरं त्वद्विमुखौ अखेलतां किल । नलकूबराभिधः नलकूबर इत्यभिधा नाम यस्य सः । कुबेरसूनुः कुबेरस्य वैश्रवणस्य सूनुः पुत्रः । प्रथां प्रसिद्धिम् । गतः प्राप्तः । परः अपरः । कुबेरसूनुरित्यत्रापि सम्बध्यते । चिरं चिराय । त्वद्विमुखौ त्वयि श्रीहरौ विमुखौ पराङ्मुखौ । अखेलतां चेरतुः । किलेति वार्तायाम् । तयोर्भगवद्विमुखतायां हेतुमाह—महेशसेवाधिगतश्रिया उन्मदौ इति । महेशसेवाधिगतया महेशस्य भगवतो गिरी

दास्य सेवया आराधनेन अधिगतया लब्धया श्रिया लक्ष्म्या। अत्र श्री शब्देन शोभा सम्पच्चिश्च गृह्यते। उन्मदौ उत्कटो मदो ययोस्तौ। शोभायाः सम्पत्तेश्चैकैकस्या अपि मदजनकत्वमस्ति, किं पुनः समुदितयोरिति भावः॥

मत्तयोस्तयोश्चेष्टितमाह—

सुरापगायां किल तौ मदोत्कटौ सुरापगायद्बहुयौवतावृतौ।
विवाससौ केलिपरौ स नारदो भवत्पदैकप्रवणो निरैक्षत ॥ ३ ॥

सुरापगायामीति ॥ भवत्पदैकप्रवण. स नारदः तौ निरैक्षत किल। भवत्पदैकप्रवण भवत्पदे भवत· श्रीवैकुण्ठस्य पदे पादकमले एवैकस्मिन् प्रवणः निर्मलहृदय। स· जगत्पूज्यतया लोकप्रसिद्ध.। निरैक्षत अपश्यत्। किलेति वार्तायाम्। श्रीनारदेन दृष्टयोस्तयोस्तदानीन्तनं व्यापारमाह—मदो त्कटौ सुरापगायद्बहुयौवतावृतौ विवाससौ सुरापगायां केलिपरौ इति। मदो त्कटौ मदेन मधुपानजनितेन उत्कटौ उद्धतौ। सुरापगायद्बहुयौवतावृतौ सुरापेण सुरासवं पिबता अत एव गायता बहुना यौवतेन युवतीसमूहेन आवृतौ परिवृतौ। विवाससौ विवस्त्रौ। सुरापगायां स्वर्गङ्गायाम्। केलिपरौ क्रीडातत्परौ॥

अथ मुनिस्तौ शप्तवानित्याह—

भिया प्रियालोकमुपात्तवाससं पुरो निरीक्ष्यापि मदान्धचेतसौ।
इमौ भवद्भक्त्युपशान्तिसिद्धये मुनिर्जगौ शान्तिमृते कुतः सुखम् ॥ ४ ॥

भियेति ॥ मुनिः इमौ जगौ। मुनिः श्रीनारदः। इमौ कुबेरपुत्रौ। जगौ शप्तवान्। शापहेतुमाह—प्रियालोकं भिया उपात्तवाससं पुरः निरीक्ष्य अपि मदान्धचेतसौ इति। प्रियालोकं स्वप्रियासमूहम्। भिया शापभयेन। उपात्तवाससम् उपात्तं स्वीकृतं वासः स्वं स्वं वस्त्रं येन तम्। पुरः पुरस्तात्। निरीक्ष्य दृष्ट्वा। अपिर्विरोधे। मदान्धचेतसौ मदेनान्धं विवेकशून्यं चेतो मनो ययोस्तौ। शापप्रयोजनमाह—भवद्भक्त्युपशान्तिसिद्धये

इति। भवद्भक्तिः भवति विष्णौ भक्तिः प्रेमलक्षणा, उपशान्तिः ईदृशकर्मकरणाभिलाषान्मनसो निवर्तनं तयोरसिद्धये लाभाय। ननु मास्तु शान्तिः का क्षतिरिति चेत्तत्राह—शान्तिमृते सुखं कुतः इति। शान्तिमुपशान्तिम्। ऋते विना। कुतः कुत्र वर्तते। न क्वाप्यशान्तानां सुखावाप्तिरित्यर्थः॥

मुनेः शापप्रकारमाह—

**युवामवाप्तौ ककुभात्मतां चिरं हरिं निरीक्ष्याथ पदं स्वमाप्नुतम्।**
**इतीरितौ तौ भवदीक्षणस्पृहां गतौ व्रजान्ते ककुभौ बभूवतुः॥ ५॥**

**युवामिति॥** तौ भवदीक्षणस्पृहा गतौ व्रजान्ते ककुभौ बभूवतु। तौ कुबेरसूनू। भवदीक्षणस्पृहां भवतः श्रीकृष्णस्येक्षणे दर्शने स्पृहामभिलाषम्। गतौ प्राप्तौ। प्राप्तश्रीकृष्णदर्शनाभिलाषावित्यर्थः। व्रजान्ते व्रजपदे। ककुभौ अर्जुनद्रुमौ। 'इन्द्रद्रुः ककुभोऽर्जुन.' इति पर्यायाः। तयोः ककुभताप्राप्तौ श्रीकृष्णदर्शनाभिलाषे च हेतुमाह—इति ईरितौ इति। इति एवम्। ईरितौ उक्तौ। उक्तिप्रकारमाह—युवां चिरं ककुभात्मताम् अवाप्तौ अथ हरिं निरीक्ष्य स्वं पदम् आप्नुतम् इति। चिरं चिराय। ककुभात्मतां ककुभस्वरूपताम्। अवाप्तौ प्राप्तौ। अथ अनन्तरम्। हरिं श्रीकृष्णम्। निरीक्ष्य दृष्ट्वा। स्वम् आत्मीयम्। पदं स्थानम्। आप्नुतं प्राप्नुतम्॥

भगवान् बालकृष्णस्तौ ककुभावपातयदित्याह—

**अतन्द्रमिन्द्रद्रुयुगं तथाविधं समेयुषा मन्थरगामिना त्वया।**
**तिरायुतोलूखलरोधनिर्धुतौ चिराय जीर्णौ परिपातितौ तरू॥ ६॥**

**अतन्द्रमिति॥** त्वया चिराय जीर्णौ तरू परिपातितौ। त्वया श्रीबालकृष्णेन। चिराय चिरेण। जीर्णौ जरामुपगतौ। तरू तौ ककुभौ। परिपातितौ सर्वतः प्रसृतशाखोपशाखं पातितौ। पातनप्रकारमाह—तथाविधम् इन्द्रद्रुयुगम् अतन्द्रं मन्थरगामिना समेयुषा तिरायुतोलूखलरोधनिर्धुतौ

इति। तथाविधं नारदशापादेवभूतं यमलम्। इन्द्रयुगमर्जुनद्रुमयुग्मम्। अतन्द्रं सोत्साहं यथा भवति तथा। मन्थरगामिना उलूखलाकर्षणेन मन्दगामिना। समेयुषा प्राप्तवता। एतत् द्वयं त्वयेत्यत्र सम्बध्यते। तिरायुतो लूखलरोधनिर्धुतौ तिरायुतस्य तिर्यग्गतस्य उलूखलस्य रोधेन निरोधेन निर्धुतौ निर्भिन्नमूलौ। त्वयेति तिरायुतोलूखलरोधनिर्धुतावित्यत्रापि सम्बध्यते॥

अथ वृक्षद्वयाभ्यन्तराद्यक्षयुगलं प्रादुरासीदित्याह—

अभाजि शाखिद्वितयं यदा त्वया तदैव तद्गर्भतलान्निरेयुषा।
महात्विषा यक्षयुगेन तत्क्षणादभाजि गोविन्द भवानपि स्तवैः ॥ ७ ॥

अभाजीति॥ हे गोविन्द यदा त्वया शाखिद्वितयम् अभाजि, तदा एव तद्गर्भतलात् निरेयुषा महात्विषा यक्षयुगेन तत्क्षणात् भवनपि स्तवैः अभाजि। गोविन्द विष्णो। त्वया श्रीबालकृष्णस्वरूपेण। शाखिद्वितयं शाखिनो: ककुभवृक्षयोर्द्वितयं युग्मम्। अभाजि भग्नम्। एवकारेण निर्गमे कालविलम्बाभावो दर्शितः। तद्गर्भतलात् तस्य शाखिद्वितयस्य गर्भतलात् अभ्यन्तरप्रदेशात्। निरेयुषा निर्गतेन। महात्विषा महती त्विट् कान्तिर्यस्य तेन। यक्षयुगेन यक्षयोः श्रीनारदशापादिन्द्रद्रुमतां प्राप्तयोर्भगवत्स्पर्शेन मुक्तशापयोः कुबेरपुत्रयोर्युगेन युग्मेन। तत्क्षणात् तदानीमेव। भवान् श्रीबालकृष्णः। अपिस्समुच्चये। स्तवैः स्तोत्रैः। अभाजि सेवितः। अत्र भग्नं शाखिद्वितयं पुरस्कृत्य प्रत्यपद्यतेत्यपिशब्देन प्रतीयते॥

इह रजस्तमोमयानां विधिशङ्करादीनां भक्ता अपि क्रमाच्छुद्धसत्त्वमये भगवति प्रकृष्टां भक्तिमधिगच्छन्तीत्याह—

इहान्यभक्तोऽपि समेष्यति क्रमात् भवन्तमेतौ खलु रुद्रसेवकौ।
मुनिप्रसादाद्भवदङ्घ्रिमागतौ गतौ वृणानौ खलु भक्तिमुत्तमाम्॥ ८ ॥

इहेति॥ इह अन्यभक्तः अपि क्रमात् भवन्तं समेष्यति खलु। इह जगति। अन्यभक्तः अन्येषु रजस्तमोमयेषु विधिशङ्करादिषु भक्तः। अपि

विरोधे । क्रमात् अधिकारक्रमेण । भवन्तं शुद्धसत्त्वमयं श्रीवैकुण्ठम् । एष्यति भजनाधिकारी भविष्यतीत्यर्थः । खलु निश्चितम् । अस्य क्रमभेदेनालान्वयः । अत्र दृष्टान्तमाह—रुद्रसेवकौ एतौ मुनिप्रसादात् भवदङ्घ्रिमागतौ उत्तमां भक्तिं वृणानौ गतौ खलु इति । रुद्रसेवकौ शिवभक्तौ । एतौ कुबेरसूनू । मुनिप्रसादात् मुनेः श्रीनारदस्य प्रसादात् अनुग्रहात् । भवदङ्घ्रिं भवतः श्रीविकुण्ठनिलयस्य मानुषबालवेषस्य अङ्घ्रिं पादकमलम् । आगतौ प्राप्तौ । उत्तमां पूजनीयाम् । भक्तिं प्रेमलक्षणाम् । वृणानौ प्रार्थयन्तौ । गतौ पितुस्सकाशं प्रति निर्गतौ । खल्विति प्रसिद्धौ ॥

अथ वृक्षपतनरवमाकर्णयतां नन्दादीनां प्रवृत्तिमाह—

**ततस्तरूद्दारणदारुणारवप्रकम्पिसम्पातिनि गोपमण्डले ।**
**विलज्जितत्वज्जननीमुखेक्षिणा व्यमोक्षि नन्देन भवान् विमोक्षदः ॥ ९ ॥**

**तत इति ॥** ततः विमोक्षदः भवान् गोपमण्डले तरूद्दारणदारुणारवप्रकम्पिसम्पातिनि विलज्जितत्वज्जननीमुखेक्षिणा नन्देन व्यमोक्षि । ततः अनन्तरम् । विमोक्षद भक्तानां मोक्षप्रदः । भवान् श्रीबालकृष्णः । गोपमण्डले गोपसङ्घे । तरूद्दारणदारुणारवप्रकम्पिसम्पातिनि तर्वोरिन्द्रद्रुमयोरुद्दारणेन भञ्जनेन सञ्जातो यो दारुणो रव भीषणध्वनिस्तेन प्रकम्पि क्वेदं किमिदमापतितमिति सम्भ्रमाविष्टमत एव सम्पाति त्वरितमागमनशीलं च तथाविधे सति । विलज्जितत्वज्जननीमुखेक्षिणा विलज्जिताया बन्धनानुशयेनातिमात्रं लज्जितायास्तव जनन्या यशोदाया मुखं, किं कृतं यशोदे त्वया, अहो अविमृश्यकारिता भवत्या इत्यभिप्रायगर्भमीक्षत इति तथोक्तेन । व्यमोक्षि पाशबन्धनान्मोचितः । बन्धमोक्षप्रदस्य सतोऽपि कदाचिद्दैवात् बद्धस्य मोचनं युक्तमिति विमोक्षद इत्यनेन ध्वन्यते ॥

अथ गोपा भगवन्तं श्रीबालकृष्णं भवनं निन्युरित्याह—

**महीरुहोर्मध्यगतो बतार्भको हरेः प्रभावादपरिक्षतोऽधुना ।**
**इति ब्रुवाणैर्गमितो गृहं भवान् मरुत्पुराधीश्वर पाहि मां गदात् ॥ १० ॥**

महीरुहोरिति ॥ भवान् इति ब्रुवाणैः गृहं गमितः । भवान् श्रीबाल कृष्णः । इति अनेन प्रकारेण । ब्रुवाणैः वदद्भिः । नन्दादिभिरिति शेषः । गृहं भवनम् । गमितः नीतः । कथनप्रकारमाह—महीरुहोः मध्यगतः अर्भकः हरेः प्रभावात् अधुना अपरिक्षतः बत इति । महीरुहोः वृक्षयोः । मध्यगतः मध्यं गतः प्राप्तः । अर्भकः शिशुः । हरेर्विष्णोः । प्रभावात् शक्तेः । अधुना इदानीम् । अपरिक्षतः अविकलाङ्गः । बतेति विस्मये । अथ प्रार्थयते—हे मरुत्पुराधीश्वर त्वं मां गदात् पाहि इति । मरुत्पुराधीश्वर श्रीगुरुवायुपुरनाथ । मामनन्यशरणम् । गदात् सर्वामयात् । पाहि त्रायस्व ॥

इति यमलार्जुनभञ्जनवर्णनम्

अष्टचत्वारिंशदशकम् ॥

---

## एकोनपञ्चाशत्तमदशकम् ।

अथोत्पातशङ्कया गोपा देशान्तरं गन्तुमारेभिरे इत्याह—

भवत्प्रभावाविदुरा हि गोपास्तरुप्रपातादिकमत्र गोष्ठे ।
अहेतुमुत्पातगणं विशङ्क्य प्रयातुमन्यत्र मनो वितेनुः ॥ १ ॥

भवत्प्रभावेति ॥ गोपाः हि अन्यत्र प्रयातुं मनः वितेनुः । हिस्त्वर्थे । अन्यत्र अन्यस्मिन् देशे । प्रयातुं व्रजान् निर्माय तत्र वस्तुमित्यर्थः । मनः वितेनुः निश्चयं चक्रुः । अत्र हेतुमाह—अत्र गोष्ठे अहेतुं तरुप्रपातादिकम्

उत्पातगणं विशङ्क्य इति । अहेतुम् अकारणम् । तरुप्रपातादिकं वृक्षपतनादि । आदिशब्देन शकटभञ्जनादि गृह्यते । शकटभञ्जनादेः प्रागेव सम्भवात् वृक्षपतनानुक्षणमेवान्यत्र गमने मतिर्बभूवेति तरुप्रपातादिकमित्यनेन व्यज्यते । उत्पातगणम् उत्पाता भाव्यनर्थसूचका निमित्तविशेषास्तेषां गणं समूहम् । विचिन्त्य निश्चित्य । ननु कथं तत्रानर्थानां सम्भवः, यत्र भगवान् हरिः सन्निहित इत्याशङ्कां परिहर्तुं, यद्यप्येवमेतत्तथाऽपि तन्नाध्यगच्छन्नित्याह—भवत्प्रभावाविदुराः इति । अविदितभवदैश्वर्या इत्यर्थः । भगवति केवलमर्त्यबुद्धेरिति भावः ॥

उपनन्दो नाम कश्चित् गोपस्तदा वृन्दावनं वासयोग्यममन्यतेत्याह—

**तत्रोपनन्दाभिधगोपवर्यो जगौ भवत्प्रेरणयैव नूनम् ।**
**इतः प्रतीच्यां विपिनं मनोज्ञं वृन्दावनं नाम विराजतीति ॥ २ ॥**

तत्रेति ॥ तत्र उपनन्दाभिधगोपवर्यः इति जगौ, भवत्प्रेरणया एव नूनम् । उपनन्दाभिधगोपवर्यः उपनन्दाभिधः उपनन्द इत्यभिधा नाम यस्य सः, स च असौ गोपवर्यो गोपश्रेष्ठः । इति अनेन प्रकारेण । जगौ उक्तवान् । एतत् भवत्प्रेरणया भवतः श्रीबालकृष्णस्य प्रेरणया प्रवर्तनया । एवकारेण अन्येषां व्यवच्छेदः । नूनं निश्चितम् । उक्तिप्रकारमाह—इतः प्रतीच्यां वृन्दावनं नाम विपिनं विराजति इति । इतः अस्मात् प्रदेशात् बृहद्वनात् । प्रतीच्यां पश्चिमदिशि । नामेति प्रसिद्धौ । विपिनम् अरण्यम् । विराजति विशेषेण शोभते । वृन्दावननिवासस्यात्यन्तसुखावहत्वं दर्शयति—मनोज्ञमिति । फलपुष्पसलिलतृणपनसाम्रनालिकेरादिसमृद्ध्या मनोहरमित्यर्थः ॥

अथ नन्दादयो गोपा वृन्दावनं प्रति जग्मुरित्याह—

**बृहद्वनं तत् खलु नन्दमुख्या विधाय गोष्ठीनमथ क्षणेन ।**
**त्वदन्वितत्वज्जननीनिविष्टगरिष्ठयानानुगता विचेलुः ॥ ३ ॥**

बृहद्वनमिति ॥ अथ नन्दमुख्याः क्षणेन तत् खलु बृहद्वनं गोष्ठीनं विधाय त्वदन्वितत्वज्जननीनिविष्टगरिष्ठयानानुगताः विचेलुः । अथ उप

नन्दवचनश्रवणानन्तरम्। नन्दमुख्या नन्दादयो गोपा। तत् तदानीन्तन निवासभूतम्। खल्विति वाक्यालङ्कारे। वृन्दवन तदाख्यया प्रसिद्धम्। गोष्ठीन भूतपूर्वगोस्थानम्। विधाय कृत्वा। वृन्दवन त्यस्त्वेर् थे। त्वदन्वित त्वज्जननीनिविष्टगरिष्ठयानानुगता युवाभ्या श्रीबलभद्रश्रीबालकृष्णाभ्यामन्वि ताभ्या सहिताभ्या त्वज्जननीभ्या युवयोर्जननीभ्या रोहिणीयशोदाभ्या निविष्टम् धिष्ठितम् अत एव गरिष्ठ महनीय यान शकटम् अनुगता अनुगच्छन्त। विवेशु जग्मु॥

अनोमनोज्ञध्वनिधेनुपालीखुरप्रणादान्तरतो वधूभि.।
भवद्विनोदालपिताक्षराणि प्रपीय नाज्ञायत मार्गदैर्घ्यम् ॥ ४ ॥

**अन इति॥** अत्र नन्दमुख्या इति पूर्वस्मादनुवर्त्य तृतीयान्ततया विपरिणम्य योजनीयम्। नन्दमुख्यै मार्गदैर्घ्यं न अज्ञायत। नन्दमुख्यै नन्दादिभि। मार्गदैर्घ्यं मार्गस्य पथो दैर्घ्यं दीर्घत्वम्। न अज्ञायत न ज्ञातम्। अत्र हेतुमाह—अनोमनोज्ञध्वनिधेनुपालीखुरप्रणादान्तरत वधूभि भवद्विनोदालपिताक्षराणि प्रपीय इति। अनोमनोज्ञध्वनिधेनुपालीखुरप्रणादान्त रत अनस शकटस्य मनोज्ञो यो ध्वनि गमनसमये जायमान शब्दो यश्च धेनुपाल्या पशुपङ्क्ते खुरप्रणाद खुरविन्यासजशब्दस्तयारन्तरत मध्ये। श्रूयमाणानीति शेष। वधूभि गोपिकाभि। भवद्विनोदालपिताक्षराणि भवत श्रीबालकृष्णस्य विनोदार्थमालपितान्याख्यातानि अक्षराणि, 'वत्स पश्य वनस्य शोभाम्' इत्यादीनि बहुविधानि भाषितानि प्रपीय प्रकर्षेण सादर श्रुत्वा॥

वृन्दावन निरीक्ष्य मुमुदे भगवानित्याह—

निरीक्ष्य वृन्दावनमीश नन्दत्प्रसूनकुन्दप्रमुखद्रुमौघम्।
अमोदथा शाद्वलसान्द्रलक्ष्म्या हरिन्मणीकुट्टिमपुष्टशोभम् ॥ ५ ॥

**निरीक्ष्येति॥** हे ईश त्व वृन्दावन निरीक्ष्य अमोदथा। ईश जग द्रक्षक। त्व श्रीकृष्ण। निरीक्ष्य नितरा दृष्ट्वा। अमोदथा मुदितोऽभू।

मोदकारणं वृन्दावनस्य रमणीयत्वमाह—नन्दत्प्रसूनकुन्दप्रसुरद्रुमौघं शाद्वलसान्द्र लक्ष्म्या हरिन्मणीकुट्टिमपुष्टशोभमिति । नन्दत्प्रसूनकुन्दप्रसुरद्रुमौघ नन्दत्प्रसूनाः नन्दन्ति समृद्धानि प्रसूनानि येषु ते नन्दत्प्रसूनाः कुन्दप्रमुखाः कुन्दप्रभृतयो लताविशेषाः द्रुमौघाः वृक्षसञ्चयाश्च यस्मिंस्तत् । शाद्वलसान्द्रलक्ष्म्या शाद्वलस्य हरिततृणनीरन्ध्रितप्रदेशस्य सान्द्रया निबिडया लक्ष्म्या शोभया । हरिन्मणीकुट्टिम पुष्टशोभं हरिन्मणीकुट्टिमवत् हरिन्मणीभिः मरतकमणीभिः रचितो यः कुट्टिमो निबद्धभूमिस्तद्वत् पुष्टा समृद्धा शोभा यस्मिंस्तत् ॥

अथ वनस्य शोभां द्रष्टुं भगवान् हरिर्वृन्दावने चचारेत्याह—

**नवाकनिर्व्यूढनिवासभेदेष्वशेषगोपेषु सुखासितेषु ।**
**वनश्रियं गोपकिशोरपालीविमिश्रितः पर्यगलोकथास्त्वम् ॥ ६ ॥**

नवाकनिर्व्यूढेति ॥ त्वम् अशेषगोपेषु नवाकनिर्व्यूढनिवासभेदेषु सुखा सितेषु गोपकिशोरपालीविमिश्रितः वनश्रियं पर्यक् अलोकथाः । त्वं श्रीबालकृष्णः । अशेषगोपेषु अशेषेषु अखिलेषु गोपेषु । नवाकनिर्व्यूढनिवासभेदेषु नवाक निर्व्यूढेषु अर्धचन्द्राकारतया विरचितेषु निवासभेदेषु भवनविशेषेषु । सुखासितेषु सुखेन वसत्सु सत्सु । गोपकिशोरपालीविमिश्रितः गोपकिशोराणां गोपपुत्राणां पाल्या समूहेन विमिश्रितः मिलितः । वनश्रियं काननशोभाम् । पर्यक् परितः । अलोकथाः दृष्टवानसि ॥

भगवान् हरिः वृन्दावने कालिन्दीमपश्यदित्याह—

**मरालकूजाकृतनर्मलापामरालमार्गागतनिर्मलापाम् ।**
**निरन्तरस्मेरसरोजवक्त्रां कलिन्दकन्यां समलोकयास्त्वम् ॥ ७ ॥**

मरालकूजेति ॥ त्वं कलिन्दकन्यां समलोकथाः । त्वं श्रीबालकृष्णः । कलिन्दकन्यां कालिन्दी नाम नदीम् । समलोकथाः दृष्टवानसि । कालिन्द्या रमणीयतामाह—मरालकूजाकृतनर्मलापाम् अरालमार्गागतनिर्मलापां निरन्तर स्मेरसरोजवक्त्रामिति । मरालकूजाकृतनर्मलापां मरालानां कलहंसानां कूजाभिः

कूजितैः कृत्वा उच्चारित नर्मलाप सरसवचनं यया ताम्। अरालमार्गागत निर्मलापाम् अरालेन वक्रेण मार्गेण पथा आगता निर्मला मलरहिता आपो जलानि यस्याम्। निरन्तरस्मेरसरोजवक्त्रां निरन्तराणि नीरन्ध्राणि स्मेराणि विकसितानि सरोजानि नलिनान्येव वक्त्रं मुखं यस्यास्ताम्। अत्र नर्माण्यालपन्त्या मृदुमन्दस्मितविकसन्मुखाम्बुजाया सविलासं गच्छन्त्या कस्याश्चिदुपभोगक्षमायाः कन्यकायाः साम्यं कालिन्द्यां प्रतीयत इति द्रष्टव्यम्॥

भगवान् गोवर्धनमपश्यदित्याह—

मयूरकेकाशतलोभनीयं मयूखमालाशबलं मणीनाम्।
विरिञ्चलोकस्पृशमुच्चशृङ्गैर्गिरिं च गोवर्धनमैक्षथास्त्वम् ॥ ८ ॥

मयूरेति॥ त्वं गोवर्धनं गिरिम् ऐक्षथाः। त्वं श्रीबालकृष्ण। गोवर्धनं तन्नामानम्। गिरिं पर्वतम्। चकारः पूर्वोक्तकलिन्दजायाः समुच्चयार्थः। ऐक्षथाः दृष्टवानसि। गोवर्धनस्य रमणीयतामाह—मयूरकेकाशतलोभनीयं मणीनां मयूखमालाशबलम् उच्चशृङ्गैः विरिञ्चलोकस्पृशम् इति। मयूरकेकाशतलोभनीयं मयूराणां शिखिनां केकाशतैः केकानां शतैरनेकैर्लोभनीयं स्पृहणीयम्। 'केका वाणी मयूरस्य' इति यद्यप्यमरसिंहेनोक्तम्, तथापि करिकलभन्यायान्न पुनरुक्तिरिति ध्येयम्। मणीनां रत्नानाम्। मयूखमालाशबलं मयूखमालाभिः रश्मिमालाभिः शबलं चित्रवर्णम्। उच्चशृङ्गैः उच्चैरुन्नतैः शृङ्गैः शिखरैः। विरिञ्चलोकस्पृशं विरिञ्चलोकं सत्यलोकं स्पृशतीति तथोक्तमित्यत्यतिशयोक्तिः॥

वनान्तरे सर्वत्रापि कलिन्दजासत्त्वमाह—

समं ततो गोपकुमारकैस्त्वं समन्ततो यत्र वनान्तमागाः।
ततस्ततस्तां कुटिलामपश्यः कलिन्दजां रागवतीमिवैकाम्॥ ९ ॥

सममिति॥ ततः त्वं गोपकुमारकैः समं समन्ततः यत्र वनान्तम् आगाः, तत्र तत्र तामेकां कलिन्दजामपश्यः। ततः अनन्तरम्। त्वं श्री

बालकृष्णः। गोपकुमारकैः गोपपुत्रैः। समं सह। समन्ततः समन्तात्। यत्र येषु येषु प्रदेशेषु। वनान्तमरण्यमध्यम्। आगाः गतवानसि। ततस्ततः तत्र तत्र। तां पूर्वोक्ताम्। एकामनन्याम्। कलिन्दजां कालिन्दीम्। ननु कथमेकस्याः सर्वत्र दर्शनमित्याशङ्कायामाह—कुटिलामिति। वक्रमार्गेण तत्र तत्रागतामित्यर्थः। अत एवोत्प्रेक्षते—रागवतीमिवेति। रागवतीं भगवत्यनुरक्ताम् इवेति सम्भावनायाम्। वक्रमार्गेणागमनमत्र सम्भावनानिमित्तम्॥

अथ भगवान् हरिरेवंविधेऽतिरमणीये वृन्दावने वत्सांश्चारयितुमुत्सुकः चचारेत्याह—

तथाविधेऽस्मिन् विपिने पशव्ये समुत्सुको वत्सगणप्रचारे।
चरन् सरामोऽथ कुमारकैस्त्वं समीरगेहाधिप पाहि रोगात्॥ १०॥

**तथाविध इति**॥ हे समीरगेहाधिप अथ तथाविधे पशव्ये अस्मिन् विपिने वत्सगणप्रचारे समुत्सुकः कुमारकैः सरामः चरन् त्वं रोगात् पाहि। समीरगेहाधिप श्रीगुरुवायुपुरनाथ। अथ अनन्तरम्। तथाविधे तथा रमणीये। पशव्ये पशुभ्यो हिते। अस्मिन् अनुपदमुक्ते। विपिने कानने वृन्दावने। वत्सगणप्रचारे वत्सगणस्य गोवत्ससमूहस्य प्रचारे। समुत्सुकः साभिलाष इत्यर्थः। कुमारकैः गोपशिशुभिः। सहेति शेषः। सरामः रामेण बलभद्रेण सहितः। चरन् सञ्चरन्। त्वं श्रीबालकृष्णः। रोगात् सर्वभयात्। पाहि त्रायस्व॥

इति वृन्दावनगमनवर्णनम्

एकोनपञ्चाशद्दशकम्॥

वात्सकं गोवत्सवृन्दम्। सञ्चारयन्। सम्यक् चारयन् त्वं श्रीबालकृष्णः। क्वचन कस्मिंश्चित्। वत्साकृतिं गोवत्सरूपधरम्। दैत्यमसुरम्। उदैक्षथाः दृष्टवानसि। खल्विति प्रसिद्धौ ॥

रभसविचलत्पुच्छं विच्छायतोऽस्य विलोकयन्
किमपि वलितस्कन्धं रन्ध्रप्रतीक्षमुदीक्षितम्।
तमथ चरणे बिभ्रद्विभ्रामयन् मुहुरुच्चकैः
कुहचन महावृक्षे चिक्षेपिथ क्षतजीवितम् ॥ ४ ॥

**रभसेति** ॥ अथ त्वं तं चरणे बिभ्रत् मुहुः उच्चकैः विभ्रामयन् क्षतजीवितं कुहचन महावृक्षे चिक्षेपिथ। अथ अनन्तरम्। त्वं श्रीबालकृष्णः। तं वत्साकृतिमसुरम्। चरणे पादे। बिभ्रत् वहन्। गृहीत्वेत्यर्थः। मुहुः पुनः पुनः। उच्चकैः वेगात्। विभ्रामयन् विशेषतो भ्रामयन्। अत एव क्षतजीवितं नष्टजीवितम्। मृतमिति यावत्। कुर्वन्निति शेषः। कुहचन कस्मिंश्चित्। महावृक्षे महति वृक्षे। चिक्षेपिथ क्षिप्तवानसि। अत्र हेतुमाह—रभसविचलत्पुच्छं विच्छायतः अस्य किमपि वलितस्कन्धं रन्ध्रप्रतीक्षम् उदीक्षितं विलोकयन्निति। रभसविचलत्पुच्छं रभसेन वेगात् विलसत् इतस्ततः सञ्चारितं पुच्छं लाङ्गूलं यथा भवति तथा विच्छायतः गच्छतः इति गोवत्सस्वभावोक्तिः। अस्य असुरस्य। किमपि किञ्चित्। वलितस्कन्धं विवर्तितग्रीवम्, रन्ध्रप्रतीक्षम् अवसरप्रतिपालनरूपं च यदुदीक्षितमवलोकनम्। विलोकयन् पश्यन्। गोवत्सवल्लाङ्गूलं चालयित्वा आगच्छन्तमपि तथाविधेन तस्य विलोकनेन तमात्मानं हन्तुमुद्यतं कमप्यसुरं निश्चित्येत्यर्थः ॥

वत्सासुरे निहते देवाना प्रमोदभरमाह—

निपतति महादैत्ये जात्या दुरात्मनि तत्क्षणं
निपतनजवक्षुण्णक्षोणीरुहक्षतकानने।
दिवि परिमिलद्वृन्दा वृन्दारकाः कुसुमोत्करैः
शिरसि भवतो हर्षाद्वर्षन्ति नाम तदा हरे ॥ ५ ॥

**निपततीति** ॥ हे हरे तदा वृन्दारकाः दिवि परिमिलद्वृन्दाः हर्षात् भवतः शिरसि कुसुमोत्करैः वर्षन्ति नाम। हरे श्रीबालकृष्ण। तदा तस्मिन्नवसरे। वृन्दारकाः देवाः। दिवि व्योम्नि। परिमिलद्वृन्दाः परिमिलन्ति समूहीभूतानि वृन्दानि गणा येषां तथाविधाः सन्तः। हर्षात् सन्तोषात्। भवतः श्रीबालकृष्णस्य। शिरसि मूर्धनि। कुसुमोत्करैः सुरतरुप्रसूनैः। वर्षन्ति नाम ववृषुरित्यर्थः। देवानां हर्षहेतुमाह—जात्या दुरात्मनि महादैत्ये निपतति तत्क्षणं निपतनजवक्षुण्णक्षोणीरुहक्षतकानने इति। जात्या स्वभावेन। दुरात्मनि दुष्टे। महादैत्ये महासुरे। निपतति मृते सतीत्यर्थः। तत्क्षणं तदानीमेव। निपतनजवक्षुण्णक्षोणीरुहक्षतकानने निपतनजवेन पतनवेगेन क्षुण्णैः चूर्णितैः क्षोणीरुहैः वृक्षैः क्षतं चूर्णितं काननमरण्यं येन तस्मिंश्च सति। तत्क्षणमित्यस्य तदेत्यस्यानन्तरं वा योजना। तेन हर्षातिशयश्च प्रतीयते॥

अकाण्डे नभसो निपतितां कुसुमावलीमालक्ष्य बालकाः सविस्मयं भगवन्तमपृच्छन्नित्याह—

सुरभिलतमा मूर्धन्यूर्ध्वं कुतः कुसुमावली<br>
निपतति तवेत्युक्तो बालैः सहेलमुदैरयः।<br>
झटिति दनुजक्षेपेणोर्ध्वं गतस्तरुमण्डलात्<br>
कुसुमनिकरः सोऽयं नूनं समेति शनैरिति ॥ ६ ॥

**सुरभिलतमेति** ॥ त्वं बालैः इति उक्तः सहेलम् इति उदैरयः। त्वं श्रीबालकृष्णः। बालैः गोपपुत्रैः। इति एवम्। उक्तः पृष्टः। सहेलं सलीलम्। इति अनेन प्रकारेण। उदैरयः उक्तवानसि। प्रश्नप्रकारमाह—तव मूर्धनि सुरभिलतमा कुसुमावली ऊर्ध्वं कुतः निपतति इति। मूर्धनि शिरसि। सुरभिलतमः अतिशयेन सुरभिः। कुसुमावली कुसुमसञ्चयः। ऊर्ध्वम् उपरि। कुतः कस्मात् प्रदेशात्। निपतति नितरां पतति। उपरि वृक्षादीनामभावादिति भावः। भगवतः प्रतिवचनप्रकारमाह—कुसुमनिकरः दनुजक्षेपेण तरुमण्डलात् झटिति ऊर्ध्वं गतः सः अयं शनैः समेति नूनमिति। अत्र स इत्यध्याहर्तव्यम्।

य कुसुमनिकर पुष्पसञ्चय । दनुजक्षेपेण दनुजस्य असुरशवस्य क्षेपेण क्षेपणेन। तरुमण्डलात् वृक्षसञ्चयात्। झटिति शीघ्रम्। ऊर्ध्वम् उपरि। गत प्लुत । अय कुसुमनिकर । शनै मन्दम्। समेति अथ पतति। नून तर्कयामीत्यर्थ ॥

अथ भगवान् बकासुरमपश्यदित्याह --

क्वचन दिवसे भूयो भूयस्तरे परपातपे
तपनतनयापाथः पातु गता भवदादयः ।
चलितगरुत प्रेक्षामासुर्बक खलु निस्मृत
क्षितिधरगरुच्छेदे कैलासशैलमिवापरम् ॥ ७ ॥

क्वचनेति ॥ भूय क्वचन दिवसे तपनतनयापाथ पातु गता भवदादय बक प्रेक्षामासु खलु। क्वचन कस्मिश्चित्। तपनतनयापाथ तपनतनयाया कालिन्द्या पाथ जलम्। गता प्राप्ता । भवदादय भवान् श्रीबालकृष्ण आदिर्येषा ते। भवत्प्रभृतय गोपगला इत्यर्थ । बक तद्रूप पूतनासहोदर कमप्यसुरम्। प्रेक्षामासु दृष्टवन्त । भवदादीना यमुनाप्रवेशे हेतुमाह-- भूयस्तरे परपातपे इति । भूयस्तरे भूयिष्ठे। परपातपे ग्रीष्मकाले। बकासुरस्य स्वरूपमाह---चलितगरुत क्षितिधरगरुच्छेदे विस्मृतम् अपर कैलासशैलम् इवेति। चलितगरुत धुतपक्षम्। क्षितिधरगरुच्छेदे क्षितिधराणा पर्वताना गरुता पक्षाणा छेदे छेदने इन्द्रकर्तृके। विस्मृतम् अच्छिन्नपक्षम्। अपर द्वितीयम्। कैलासशैल कैलासाचलम्। इवेति सम्भावनायाम्। उत्प्रेक्षालङ्कार ॥

भगवान् बकासुरमवधीदित्याह

पिबति सलिल गोपव्राते भवन्तमभिद्रुतः
स किल निगिलन्नग्निप्रख्य पुनर्द्रुतमुद्वमन् ।
दलयितुमगात्त्रोट्याः कोट्या तदाऽऽशु भवान् विभो
खलजनभिदाचुञ्चुश्चञ्चू प्रगृह्य ददार तम् ॥ ८ ॥

पिबतीति ॥ सः किल गोपव्राते सलिलं पिबति भवन्तमभिद्रुतः निगिलन् द्रुतमुद्वमन् पुनः त्रोट्याः कोट्या दलयितुमगात् । सः बकासुरः । किलेति त्वर्थे । गोपव्राते गोपकुमारसञ्चये । सलिलं जलम् । पिबति सति । भवन्तं श्रीबालकृष्णम् । अभिद्रुतः अभिधावन् । निगिलन् ग्रसन् । द्रुतं झटिति । उद्वमन् वमन् । झटित्युद्वमने हेतुः—अग्निप्रख्यमिति । अग्नि तुल्यमित्यर्थः । पुनः वमनानन्तरम् । त्रोट्याः चञ्च्वोः । कोट्या अग्रेण । दलयितुं विदारयितुम् । अगात् आगतः । एवं कृतवत्यसुरे भगवतः प्रवृत्ति माह—हे विभो तदा खलजनभिदाचुञ्चुः भवान् आशु चञ्चू प्रगृह्य तं ददार इति । विभो शक्तिसम्पन्न । तदा तस्मिन्नवसरे । खलजनभिदाचुञ्चुः खल जनानां दुष्टजनानां भिदायां भेदने चुञ्चुः निपुणः । सम्बोधनेन विशेषणेन च भगवतस्तादृशकर्मकरणे सामर्थ्यं द्योत्यते । भवान् श्रीबालकृष्णः । आशु झटिति । चञ्चू अधरोत्तरे चञ्चुपुटे । प्रगृह्य गृहीत्वा । तम् असुरम् । ददार दारितवान् ॥

देवा बकासुरवधेन तुष्टा भगवतो मूर्ध्नि कुसुमानि ववृषुरित्याह—

सपदि सहजां सन्द्रष्टुं वा मृतां खलु पूतना-
मनुजमघमप्यग्रे गत्वा प्रतीक्षितुमेव वा ।
शमननिलयं याते तस्मिन् बके सुमनोगणे
किरति सुमनोवृन्दं वृन्दावनात् गृहमैयथाः ॥ ९ ॥

सपदीति ॥ तस्मिन् बके शमननिलयं याते सुमनोगणे सुमनोवृन्दं किरति त्वं वृन्दावनात् गृहम् ऐयथाः । तस्मिन् पूर्वोक्ते । बके बकासुरे । शमननिलयं, यमसदनं प्रति । याते गते सति । सुमनोगणे देवसङ्घे । सुमनोवृन्दं सुरतरुप्रसूननिवहम् । किरति वर्षति सति । त्वं श्रीबालकृष्णः । गृहं भवनम् । ऐयथाः गतवानसि । बकस्य यमसदनगमने कारणद्वयं सोपहासमुत्प्रेक्षते—सपदि सहजां मृतां खलु पूतनां सन्द्रष्टुं वा अनुजम् अघमपि अग्रे गत्वा प्रतीक्षितुमेव वा इति । सपदि झटिति । सहजां

सोदरीम्। खल्विति वाक्यालङ्कारे। पूतना पूर्वोक्तां निशाचरीम्। सन्द्रष्टुं वीक्षितुम्। वाकार सम्भावनायाम्। एवमुत्तरत्रापि। अनुज सोदरम्। अघ तन्नामानमसुर कालविलम्बमन्तरा भगवता हनिष्यमाणम्। अपि समुच्चये। अग्रे पूर्वमेव। गत्वा प्राप्य। प्रतीक्षितुं प्रतिपालयितुम्। एवकारेणायोगव्यवच्छेद ॥

अथ प्रकृतमुपसंहरन् प्रार्थयते—

ललितमुरलीनादं दूरान्निशम्य वधूजनै-
स्त्वरितमुपगम्याराादारूढमोदमुदीक्षितः ।
जनितजननीनन्दानन्दः समीरणमन्दिर
प्रथितवसते शौरे दूरीकुरुष्व ममामयान् ॥ १० ॥

ललितमुरलीनादमिति ॥ हे समीरणमन्दिरप्रथितवसते शौरे वधूजनै दूरात ललितमुरलीनाद निशम्य त्वरितम् आरादुपगम्य आरूढमोदम् उदीक्षित जनितजननीनन्दानन्द त्व मम आमयान् दूरीकुरुष्व। समीरणमन्दिरप्रथितवसते समीरणमन्दिरे श्रीगुरुवायुपुरे प्रथिता प्रसिद्धा वसति वासो यस्य तादृश। शौरे वसुदेवपुत्र। वधूजनै गोपीजनै। दूरात् दूर देशे। ललितमुरलीनाद ललितम् अतिमनोहर मुरलीनाद मुरलीरवम्। निशम्य श्रुत्वा। त्वरित ससम्भ्रमम्। आरात् श्रीकृष्णसमीपम्। उपगम्य प्राप्य। आरूढमोदम् आरूढ प्रवृद्धा मोदो हर्षो यस्मिन् कर्मणि तद्यथा भवति तथा। उदीक्षित दृष्ट। जनितजननीनन्दानन्द जनित उत्पादित जनन्या यशोदाया नन्दस्य चानन्द सन्तोषातिशयो येन स। त्व श्रीबालकृष्ण। मम अनन्यशरणस्य। आमयान् बाह्यान्तराभ्यन्तराश्च रोगान्। दूरीकुरुष्व अपाकुरु ॥

इति व मातुरवधवर्णनं वकासुरवधवर्णनं च

पञ्चाशत्तमदशकम् ॥

अथ भगवतो वनाशनोद्यमं वर्णयति—

**कदाचन व्रजशिशुभिः समं भवान्**
**वनाशने विहितमतिः प्रगेतराम् ।**
**समावृतो बहुतरवत्समण्डलैः**
**सतेमनैर्निरगमदीश जेमनैः ॥ १ ॥**

**कदाचनेति ॥** हे ईश भवान् कदाचन व्रजशिशुभिः समं वनाशने विहितमतिः प्रगेतरां बहुतरवत्समण्डलैः समावृतः सतेमनैः जेमनैः निरगमत् । ईश जगद्रक्षक । भवान् श्रीबालकृष्णः । व्रजशिशुभिः गोपबालकैः समं सह । वने अशनं वनाशनं तत्र । विहितमतिः कृतनिश्चयः । प्रगेतराम् उषस्यासन्ने । बहुतरवत्समण्डलैः बहुतरैः बहुविधैः वत्सानां गोवत्सानां मण्डलैः समूहैः । समावृतः परिवृतः । सतेमनैः सव्यञ्जनैः । जेमनैः ओदनैः । उपलक्षित इति शेषः । गोपबालैस्समं सव्यञ्जनानोदनानादायेत्यर्थः । निरगमत् वनं प्रति निर्गतोऽभूत् ॥

वृन्दावने विचरन्तं भगवन्तं पश्यतामृषीणां चेष्टितमाह—

**विनिर्यतस्तव चरणाम्बुजद्वया-**
**दुदञ्चितं त्रिभुवनपावनं रजः ।**
**महर्षयः पुलकधरैः कलेवरै-**
**रुदूहिरे धृतभवदीक्षणोत्सवाः ॥ २ ॥**

**विनिर्यत इति ॥** महर्षयः धृतभवदीक्षणोत्सवाः पुलकधरैः कलेवरैः विनिर्यत. तव चरणाम्बुजद्वयात् उदञ्चितं रजः उदूहिरे । धृतभवदीक्षणोत्सवाः धृतः भवद्दीक्षणोत्सवो भवद्दर्शनजनितप्रमोदभरो यैस्ते । पुलकधरैः रोमाञ्चितैः । अनेन भक्तेरनुभाव उक्तः । कलेवरैः वपुर्भिः । उपलक्षिता इति शेषः ।

विनिर्यतः विनिर्गच्छतः । तव श्रीबालकृष्णस्य । चरणाम्बुजद्वयात् चरणाम्बुजयोः पादारविन्दयोः द्वयात् युग्मात् । उदञ्चितं पतितम् । रजः परागम् । उदूहिरे शिरसा धृतवन्तः । रजसो वहने हेतुमाह—त्रिभुवनपावनमिति । त्रयाणां भुवनानां लोकानां पावनं पापशोधकम् । कलेबरैरित्यस्य उदूहिरे इत्यत्र वा सम्बन्धः ॥

अथाघासुरनिग्रहे हेतुमुपक्षिपति—

प्रचारयत्यविरलशाद्वले तले
पशून् विभो भवति समं कुमारकैः ।
अघासुरो न्यरुणदघाय वर्तनीं
भयानकः सपदि शयानकाकृतिः ॥ ३ ॥

**प्रचारयतीति** ॥ हे विभो भवति अविरलशाद्वले तले कुमारकैः समं पशून् प्रचारयति भयानकः अघासुरः शयानकाकृतिः सपदि अघाय वर्तनीं न्यरुणत् । *विभो शक्तिसम्पन्न । अनेन अघासुरस्य नाशो द्योत्यते ।* भवति श्रीबालकृष्णे । अविरलशाद्वले निरन्तरहरिततृणाङ्कुरयुक्ते । तले वन प्रदेशे । कुमारकैः गोपपुत्रैः । समं सह । पशून् गोवत्सान् । प्रचारयति प्रकर्षेण चारयति सति । भयानकः भीषणः । अघासुरः अघनामा असुरः । शयानकाकृतिः अजगररूपधृक् । सपदि सत्वरम् । अघाय भगवतो भग वत्साथानां गोपपुत्राणां वत्सानां च प्रसनरूपदुरितं कर्तुम् । वस्तुतस्तु, नाघाय, किन्तु संसारबन्धहेतुभूतमघं त्यक्तुमेवेत्यवगन्तव्यम् । वर्तनीं भगवतो मार्गम् । न्यरुणत् रुरुधे ॥

गोपा अघासुरस्य मुखोदरं विविशुरित्याह—

महाचलप्रतिमतनोर्गुहानिभ-
प्रसारितप्रथितमुखस्य कानने ।
मुखोदरं विहरणकौतुकाद्गताः
कुमारकाः किमपि विदूरगे त्वयि ॥ ४ ॥

**महाचलेति** ॥ अत्र अघासुर इति पूर्वस्मादनुवर्त्य षष्ठ्यन्ततया विपरिणम्य योजनीयम्। कुमारकाः कानने विहरणकौतुकात् अघासुरस्य मुखोदरं गताः। कुमारकाः गोपपुत्राः। विवेकरहिता इति भावः। कानने वृन्दावने। विहरणकौतुकात् विहरणे क्रीडायां कौतुकात् कुतूहलात्। मुखोदरं मुखाभ्यन्तरम्। गताः प्रविष्टाः। ननु कथमिमे कुमारका भयानकमजगरमुखं दृष्ट्वा निर्भयास्तत्र विविशुरित्याशङ्कायामाह—महाचलप्रतिमतनोः गुहानिभप्रसारितप्रथितमुखस्य इति। महाचलप्रतिमतनोः महापर्वतसमानदेहस्य। गुहानिभप्रसारितप्रथितमुखस्य गुहानिभं कन्दरतुल्यं प्रसारितम् आस्तृतं प्रथितं विस्तृतं मुखं यस्य तस्य। अजगरतनोः अचलभ्रान्त्या, तन्मुखस्य कन्दरभ्रान्त्या चेति भावः। ननु कथं तत्र सान्निहिते श्रीबालकृष्णे एतत् समभूदित्याशङ्कायामाह—त्वयि किमपि विदूरगे इति। त्वयि श्रीबालकृष्णे। किमपि किञ्चित्। विदूरगे दूरदेशवर्तिनि सति। भगवतस्तत्रासन्निधानादित्यर्थः॥

अथ भगवानपि तन्मुखोदरमविशदित्याह—

**प्रमादतः प्रविशति पन्नगोदरं**
**क्वथत्तनौ पशुपकुले सवात्सके।**
**विदन्निदं त्वमपि विवेशिथ प्रभो**
**सुहृज्जनं विशरणमाशु रक्षितुम्** ॥ ५ ॥

**प्रमादत इति** ॥ हे प्रभो त्वमपि आशु पन्नगोदरं विवेशिथ। प्रभो शक्तिसम्पन्न। अनेन सम्बोधनेन भगवत्यपराधमाचरतोऽघासुरस्य नाशो ध्वन्यते। त्वं श्रीबालकृष्णः। अपिस्समुच्चये। आशु झटिति। पन्नगोदरं पन्नगस्य अजगररूपस्य असुरस्य उदरं मुखोदरम्। न तु जठरम्। विवेशिथ प्रविष्टवानसि। अत्र हेतुमाह—इदं विदन्निति। विदन् जानन् इदंपदार्थमाह—सवात्सके पशुपकुले प्रमादतः प्रविशति क्वथत्तनौ इति। सवात्सके वत्सगणसहिते। पशुपकुले पशुपानां गोपबालानां कुले समूहे। प्रमादतः अनभिज्ञतया। प्रविशति प्रविष्टे। क्वथत्तनौ दह्यमानशरीरे

च सति। पन्नगोदरमिति प्रविशतीत्यत्राप्यन्वेति। ननु किमर्थं भगवान् पन्नगोदरं प्राविशदित्याकाङ्क्षायामाह—निशरण सुहृज्जन रक्षितुमिति। विशरणम् अनन्यशरणम्। सुहृज्जन मित्रवर्गम्। अनेनावश्य रक्षणीयता द्योत्यते। रक्षितु पालयितुम्॥

अघासुरवधमाह—

गलोदरे विपुलितवर्ष्मणा त्वया
महोरगे लुठति निरुद्धमारुते।
द्रुत भवान् विदलितकण्ठमण्डलो
विमोचयन् पशुपपशून् विनिर्ययौ ॥ ६ ॥

**गलोदर इति ॥** महोरगे गलोदरे विपुलितवर्ष्मणा त्वया निरुद्धमारुते लुठति भवान् विदलितकण्ठमण्डल द्रुत पशुपपशून् विमोचयन् विनिर्ययौ। महोरगे महत्युरगे अजगररूपे अघासुरे। गलोदरे अघासुरस्य गलाभ्यन्तरे। विपुलितवर्ष्मणा विपुलित वर्धित वर्ष्म शरीर येन। अत एव त्वया श्री बालकृष्णेन। निरुद्धमारुते निरुद्धो निवारितो मारुत श्वासानिलो यस्य तस्मिन्। मार्गनिरोधादिति भाव। अत एव लुठति वेष्टमाने च सति। भवान् श्रीबालकृष्ण। विदलितकण्ठमण्डल विदलित विदारित कण्ठमण्डल येन स। कण्ठमण्डल विदार्य त मारयित्वेत्यर्थ। द्रुत झटिति। पशुपपशून् पशुपान् गोपपुत्रान् पशून् गोवत्साश्च। विमोचयन् विदारितमार्गण बहिर्निर्गमयन्। विनिर्ययौ बहिर्निर्गतोऽभूत् ॥

अघासुरो भगवदैक्य प्राप्याह—

क्षण दिवि त्वदुपगमार्थमास्थित
महासुरप्रभवमहो महो महत्।
विनिर्गते त्वयि तु निलीनमञ्जसा
नभ स्थले ननृतुरथो जगु सुरा ॥ ७ ॥

क्षणमिति॥ त्वदुपगमार्थं क्षणं दिवि आस्थितं महासुरप्रभवं महत् महः त्वयि विनिर्गते तु अञ्जसा निलीनम् अहो। त्वदुपगमार्थं तव श्री बालकृष्णस्य उपगमार्थम् अजगरशरीरात् बहिर्निर्गमनाय। क्षणं कञ्चित् कालम्। दिवि व्योम्नि। आस्थितं वर्तमानम्। महासुरप्रभवं महतः अघासुरस्य शरीरादुत्थितम्। महत् सूक्ष्मशरीरस्यापि त्यागेन परिच्छेदा भावादत्युज्ज्वलम्। महः तेजः। त्वयि श्रीबालकृष्णे। विनिर्गते अजगर गलाभ्यन्तराद्बहिर्निर्गते। अञ्जसा झटिति। निलीनं तेजस्तेजसीव भगवति निलीयादर्शनं प्राप। अहो इत्याश्चर्ये। यदयमघासुरो द्विषन्नपि भगवन्त मन्तः कृत्वा प्राणानत्यजत्, तस्मात्तत्फलं भगवत्सायुज्यं सर्वलोकसमक्षं प्राप्त वान्, अहो भगवतो भक्तवात्सल्यमित्यर्थः। देवानामेतत् पश्यतां प्रमोदभरमाह— अथो सुराः नभ स्थले ननृतुः जगुः इति। अथो अनन्तरम्। सुराः देवाः। नभःस्थले व्योम्नि। ननृतुः नृत्यन्ति स्म। जगुः तुष्टुवुश्च॥

अथ भगवान् भोजनमारभतेत्याह—

सविस्मयैः कमलभवादिभिः सुरै-
रनुद्रुतस्तदनु गतः कुमारकैः।
दिने पुनस्तरुणदशामुपेयुषि
स्वकैर्भवानतनुत भोजनोत्सवम् ॥ ८ ॥

सविस्मयैरिति॥ भवान् तदनु कमलभवादिभिः सुरैः अनुद्रुतः कुमा रकैः गतः पुनः दिने तरुणदशामुपेयुषि स्वकैः भोजनोत्सवम् अतनुत। भवान् श्रीबालकृष्णः। तदनु तदनन्तरम्। कमलभवादिभिः विरिञ्चिशर्वप्रभृ तिभिः। सुरैः देवैः। अनुद्रुतः व्योममार्गेणानुगतः। कुमारकैः गोप पुत्रैः। सहेति शेषः। गतः यथेष्टमन्यदेशं गतः। पुनः अनन्तरम्। दिने दिवसे। तरुणदशां तारुण्यम्। मध्यभागमिति यावत्। उपेयुषि प्राप्तवति सति। मध्याह्ने प्राप्त इत्यर्थः। स्वकैः आत्मनः सुहृद्भिर्गोपपुत्रैः।

सहेति शेषः। भोजनोत्सवं वनाशनकौतुकम्। अतनुत अकरोत्। ब्रह्मादीनामनुगमने हेतुः—सविस्मयैः इति। अपमोक्षं दृष्ट्वा विस्मितैरित्यर्थः॥

भगवतो भोजनप्रकारमाह—

विषाणिकामपि मुरलीं नितम्बके
निवेशयन् कवलधरः कराम्बुजे।
प्रहासयन् कलवचनैः कुमारकान्
बुभोजिथ त्रिदशगणैर्मुदा नुतः ॥ ९ ॥

विषाणिकामिति॥ त्वं विषाणिका मुरलीमपि नितम्बके निवेशयन् कराम्बुजे कवलधरः कलवचनैः कुमारकान् प्रहासयन् मुदा त्रिदशगणैः नुतः बुभोजिथ। त्वं श्रीबालकृष्ण। विषाणिका शृङ्गम्। मुरलीं वेणुनालिकाम्। अपिस्समुच्चये। नितम्बके कटिप्रदेशे। निवेशयन्। निवेश्येत्यर्थः। कराम्बुजे करपङ्कजे। कवलधर कवलं वहन्। कलवचनैः कलभाषितैः। कुमारकान् गोपपुत्रान्। प्रहासयन् प्रकर्षेण हासयन्। मुदा सन्तोषेण। हेतौ तृतीया। त्रिदशगणैः देवसङ्घैः। नुतः स्तुतः बुभोजिथ भुक्तवानसि॥

भगवतो वनाशनमवलोक्य देवास्तुष्टुवुरित्याह—

सुखाशनं त्विह तव गोपमण्डले
मखाशनात् प्रियमिव देवमण्डले।
इति स्तुतस्त्रिदशवरैर्जगत्पते
मरुत्पुरीनिलय गदात् प्रपाहि माम् ॥ १० ॥

सुखाशनमिति॥ हे जगत्पते मरुत्पुरीनिलय इति त्रिदशवरैः नुतः त्वं मां गदात् प्रपाहि। जगत्पते जगन्नायक। अनेन स्तुत्यत्वमुक्तम्। मरुत्पुरीनिलय श्रीगुरुवायुपुरवास। इति अनेन प्रकारेण। त्रिदशवरैः

ब्रह्मादिभिर्देवैः। स्तुतः ईडितः। त्वं श्रीबालकृष्णः। मामनन्यशरणम्। गदात् सर्वामयात्। प्रपाहि प्रकर्षेण त्रायस्व। स्तुतिप्रकारमाह—तव इह गोपमण्डले सुखाशनं तु देवमण्डले मखाशनात् प्रियमिव इति। तव श्रीहरेः। इह अस्मिन् वने। अथवा, इह अस्मिन्। गोपमण्डले गोपानां मण्डले समूहे। सुखाशनं सुखेनाशनं भक्षणम्। तुर्विशेषे। देवमण्डले देवानां मण्डले। मखाशनात् यज्ञभोजनात्। प्रियं प्रीतिजनकम्। इव तर्कयाम इत्यर्थः॥

इत्यघासुरवधवर्णनम्
एकपञ्चाशत्तमदशकम्॥

## द्विपञ्चाशत्तमदशकम्।

अथ ब्रह्मा भगवन्तं परीक्षितुमारेभे इत्याह—

अन्यावतारनिकरेष्वनिरीक्षितं ते
भूमातिरेकमभिवीक्ष्य तदाऽघमोक्षे।
ब्रह्मा परीक्षितुमनाः स परोक्षभावं
निन्येऽथ वत्सकगणान् प्रवितत्य मायाम् ॥ १ ॥

अन्यावतारनिकरेष्विति॥ अथ स ब्रह्मा मायां प्रवितत्य वत्सकगणान् परोक्षभावं निन्ये। अथ अनन्तरम्। सः येन भगवतो नृसिंहाद्यवतारचरित्राणि प्रत्यक्षीकृतानि, स इत्यर्थः। मायां जगन्मोहिनीमात्मनो मायाशक्तिम्। प्रवितत्य विस्तार्य। वत्सकगणान् वत्ससङ्घान्। परोक्षभावम् अदृश्यताम्। निन्ये नीतवान्। अत्र हेतुः—परीक्षितुमनाः इति। भगवत ऐश्वर्यातिशयं द्रष्टुकाम इत्यर्थः। परीक्षाभिप्राये हेतुमाह—तदा अघमोक्षे अन्यावतारनिकरेषु अनिरीक्षितं ते भूमातिरेकम् अभिवीक्ष्य इति। तदा

तस्मिन्नवसरे। अघमोक्षे अघस्य अघासुरस्य मोक्षे अपवर्गावसरे। अन्यावतारनिकरेषु अन्यावताराणां नृसिंहाद्यवताराणां निकरेषु समूहेषु। अनिरीक्षितम् अदृष्टचरम्। ते तव श्रीबालकृष्णस्य। भूमातिरेकं भूम्न ऐश्वर्यस्य अतिरेकम् अतिशयम् अघासुरशरीरादुत्थितस्य तेजसो भगवति श्रीबालकृष्णे विलयमित्यर्थः। अभिवीक्ष्य आलोक्य। ततोऽप्यधिकतरैश्वर्यविलोकनकुतूहलादिति भावः॥

तदानीं भगवान् श्रीबालकृष्णोऽपि वेधसानुक्रममकरोदित्याह—

वत्सानवीक्ष्य विवशे पशुपोत्करे तान्
आनेतुकाम इव धातृमतानुवर्ती।
त्वं सामिभुक्तकबलो गतवांस्तदानीं
भुक्तांस्तिरोऽधित सरोजभवः कुमारान् ॥ २ ॥

वत्सानिति॥ तदानीं सामिभुक्तकबलः त्वं गतवान्। तदानीं वत्सेष्वदृश्यतां गतेषु। सामिभुक्तकबलः सामिभुक्तः अर्धाभ्यवहृतः कबलो ग्रासो येन तथाविधोऽपि। त्वं श्रीबालकृष्ण एव। गतवान् तस्मात् प्रदेशात् निर्जगाम। ननु कुतो न गोपेष्वन्यतमः कश्चित् प्रेषित इति चेत्तत्राह—धातृमतानुवर्ती इति। धातुर्ब्रह्मणो मतमनुवर्तत इति तथाविधः सन्। विधातुरनुकूलमाचरितुमित्यर्थः। अन्यथा वत्सानां तिरोधानस्य दुष्करत्वादिति भावः। ननु भगवता कृतं स्वानुकूलाचरणं कुतो न ब्रह्मणा विदितमित्याशङ्कायामाह—पशुपोत्करे वत्सान् अवीक्ष्य विवशे तान् आनेतुकाम इव इति। पशुपोत्करे गोपबालकसङ्घे। अवीक्ष्य अदृष्ट्वा। विवशे विह्वले सति। अहमेव वत्सानानेष्यामीति भुञ्जानान् बालकानाख्याय। तान् वत्सान्। आनेतुकाम आनेतुमभिलषन्। इवेति सम्भावनायाम्। वस्तुतो न तदानयनाभिलाषेणेत्यर्थः। भगवन्मायामोहिततया ब्रह्मापि वत्सानानेतुमेव भगवता गतमित्यमन्यतेति भावः। भगवति गते ब्रह्मणः कृत्यमाह—सरोजभवः भुक्तान्

कुमारान् तिरोधित इति। सरोजभवः ब्रह्मा। भुक्तान् भुञ्जानान्। कुमारान् गोपबालकान्। तिरोधित तिरस्कृतवान्॥

एवं वत्सवत्सपेषु ब्रह्मणा तिरस्कृतेष्वेकाकी भगवान् सायमेतैर्विना मम व्रजप्रवेशे सति गोगोपीनां स्वात्मजादर्शनेन महान् खेदः स्यात्, तान् ब्रह्मणः अपहृत्य गमने तस्यापि खेदः स्यादिति विचिन्त्य तदुभयाभावाय स्वमायया स्वेनैव सर्वं सम्पादितवानित्याह—

वत्सायितस्तदनु गोपगणायितस्त्वं
शिक्यादिभाण्डमुरलीगवलादिरूपः।
प्राग्वद्विहृत्य विपिनेषु चिराय सायं
त्वन्मायया्ऽथ बहुधा व्रजमाययाथ ॥ ३ ॥

वत्सायित इति॥ तदनु त्वं त्वन्मायया वत्सायितः गोपगणायितः शिक्यादिभाण्डमुरलीगवलादिरूपः विपिनेषु प्राग्वत् चिराय विहृत्य अथ सायं बहुधा व्रजम् आययाथ। तदनु ब्रह्मणा वत्सवत्सपेषु तिरस्कृतेषु। त्वं श्रीबालकृष्ण एक एव। त्वन्मायया तव मायया योगैश्वर्येण। वत्सायितः वत्सा इवाचरन्। गोपगणायितः गोपगणा इवाचरन्। शिक्यादिभाण्डमुरलीगवलादिरूपः शिक्यादिरूपधरः। भाण्डं भाजनम्। मुरली वंशनालः। गवलं शृङ्गम्। विपिनेषु अरण्येषु। प्राग्वत् पूर्ववत्। चिराय चिरम्। विहृत्य विहारान् कृत्वा। अथ अनन्तरम्। सायं सन्ध्यायाम्। बहुधा बहुरूपः सन्नित्यर्थः। व्रजं व्रजपदम्। आययाथ गतवानसि॥

एवं भगवति श्रीबालकृष्ण एव बहुधा व्रजमुपगते गावो गोप्यश्चातीव प्रहृष्टा बभूवुरित्याह—

त्वामेव शिक्यगवलादिमयं दधानो
भूयस्त्वमेव पशुवत्सकबालरूपः।
गोरूपिणीभिरपि गोपवधूमयीभि-
रासादितोऽसि जननीभिरतिप्रहर्षात् ॥ ४ ॥

स्वामिति ॥ भूय पशुवत्सकबालरूपः शिवयगवलादिमयं त्वामेव दधानः त्वमेव गोरूपिणीभि गोपवधूमयीभि. अपि जननीभिः अतिप्रहर्षात् आसादित. असि। भूय व्रजप्रवेशानन्तरम्। पशुवत्सकबालरूपः पशुवत्सकानां गोवत्सकानां बालाना गोपबालकाना च रूपमाकृतिरिव रूपं यस्य सः। शिवयगवलादिमयं शिवयगवलादिस्वरूपं त्वां श्रीबालकृष्णमेव। नापरमित्यर्थः। दधान वहन्। त्व श्रीबालकृष्ण। एवकारेणान्येषां व्यवच्छेद। गोरूपिणीभि. जननीभि वत्साना जननीभिर्गोभिः। गोपवधूमयीभिः जननीभि वत्सपानां जननीभिर्गोपीभि। अतिप्रहर्षात् अतिसन्तोषात्। आसादित प्राप्त। गाव स्वात्मजरूपं भगवन्तं जिह्वया लिहन्त्य. सहुङ्कारमूधस्यमपाययन्, गोप्यश्च तथाविधं श्रीबालकृष्णमालिङ्गनादि चक्रुरित्यर्थः ॥

अथ गोगोपीना महर्षप्रकर्षातिशये हेतुं दर्शयन्नाह—

जीवं हि कञ्चिदभिमानवशात् स्वकीयं
मत्वा तनूज इति रागभरं वहन्त्यः।
आत्मानमेव तु भवन्तमवाप्य सूनुं
प्रीतिं ययुर्न कियतीं वनिताश्च गावः ॥ ५ ॥

जीवमिति ॥ हि वनिता गाव. च कञ्चित् जीवम् अभिमानवशात् तनूज इति स्वकीयं मत्वा रागभरं वहन्त्य आत्मानमेव भवन्तं सूनुम् अवाप्य कियतीं प्रीतिं न ययु। हि यस्मात्। वनिता गोप्यः। चकार. समुच्चये। कञ्चित् स्वप्रारब्धकर्मफलभोगायानुप्राप्तशरीरम्। जीवं जीवात्मानम्। अभिमानवशात् ममत्वारोपवशात्। तनूज पुत्र.। इति एवम्। स्वकीयम् आत्मसम्बन्धिनम्। मत्वा निश्चित्य। रागभरं प्रेमप्रकर्षम्। वहन्त्य दधत्य। अत तदित्यध्याहर्तव्यम्। तत् तस्मात्। आत्मानं स्वस्वाहम्प्रत्ययगोचरीभूतम्। एवकारोऽयोगव्यवच्छेदाय। भवन्तं श्रीबालकृष्णम्। सूनु पुत्रम्। अवाप्य लब्ध्वा। तुर्विशेषे। तमाह—कियतीमित्यादि। कियतीं कियत्परिमिताम्। प्रीति मुदम्। ययु प्रापु। अतिमहतीं प्रीतिमवापुरि

त्यर्थः। अत्रायमाशयः—सर्वेषां प्राणिनामात्मा प्रियतमः, तदर्थं ह्यन्ये प्रियाः, अत्र तु गोगोपीनां स्वसम्बन्धितया पुत्रेषु महती प्रीतिः पूर्वमासीत्, अधुना स्वात्मानमेव भगवन्तं पुत्रतया प्राप्तवतीनां तासां का कथेति॥

अथ बलभद्रोऽपि भगवन्तमेवंविधं प्रथमं नावागच्छदित्याह—

एवं प्रतिक्षणविजृम्भितहर्षभार-
निश्शेषगोपगणलालितभूरिमूर्तिम्।
त्वामग्रजोऽपि बुबुधे किल वत्सरान्ते
ब्रह्मात्मनोरपि महान् युवयोर्विशेषः ॥ ६ ॥

एवमिति॥ अग्रजः अपि वत्सरान्ते त्वां बुबुधे किल। अग्रजः बलभद्रः। वत्सरान्ते वत्सरस्यावसाने। त्वां श्रीबालकृष्णम्। बुबुधे विवेद। किलेति वार्तायाम्। किं रूपं बुबुधे भगवन्तमित्याकाङ्क्षायामाह—एवं प्रतिक्षणविजृम्भितहर्षभारनिश्शेषगोपगणलालितभूरिमूर्तीमिति। एवम् उक्तरीत्या। प्रतिक्षणविजृम्भितहर्षभारनिश्शेषगोपगणलालितभूरिमूर्तिं क्षणे क्षणे प्रतिक्षणं विजृम्भितः वर्धितः हर्षभारः प्रमोदभरो येषां ते, निश्शेषाः निखिलाः ये गोपाना गोपगोपीनां गणाः समूहास्तैर्लालिताः भूरिमूर्तयो बहूनि शरीराणि यस्य तम्। भगवतस्तत्तद्गोपगोप्यात्मजरूपतयेति भावः। ननु कुतो भगवदंशभूतेन बलभद्रेणैतावत्पर्यन्तमेतन्न विदितमित्याशङ्कायामाह—ब्रह्मात्मनोः अपि युवयोः महान् विशेषः इति। ब्रह्मात्मनोः ब्रह्मस्वरूपयोः। अपिर्विरोधे। युवयोः श्रीबलभद्रश्रीबालकृष्णयोः। सकलब्रह्मरूपो बलभद्रः, निष्कलब्रह्मरूपो भगवान् श्रीबालकृष्ण इति महान् विशेषः। अस्तीति शेषः॥

सकललोकपितामहो ब्रह्माऽपि भगवन्मायया विमुमोहेत्याह—

वर्षावधौ नवपुरातनवत्सपालान्
दृष्ट्वा विवेकमसृणे द्रुहिणे विमूढे।
प्रादीदृशः प्रतिनवान् मकुटाङ्गदादि-
भूषांश्चतुर्भुजयुजः सजलाम्बुदाभान् ॥ ७ ॥

**वर्षावधाविति ॥** त्व वर्षावधौ प्रतिनवान् प्रादीदृश । त्वं श्रीबालकृष्ण । वर्षावधौ संवत्सरावसाने। प्रतिनवान् स्वय विरचितान् प्रादीदृश ब्रह्मणे प्रद शितवानसि। ब्रह्मणे दर्शित स्वमायारचितानां स्वरूपमाह—मकुटाङ्गदादिभूषान् चतुर्भुजयुज सजलाम्बुदाभानिति। मकुटाङ्गदादिभूषान् किरीटकटककेयूराङ्गद श्रीवत्सकौस्तुभवनमालादिभूषितविग्रहान्। चतुर्भुजयुज शङ्खचक्रगदापद्मशोभ मानचतुर्भुजान्। सजलाम्बुदाभान् सजलजलधरच्छवीन्। एव प्रदर्शने हेतु माह—द्रुहिणे विवेकमसृणे इति। द्रुहिणे ब्रह्मणि। विवेकमसृणे एते वत्स पाला सत्या, एते मायामया इति विविच्य ज्ञातुमसमर्थे सति। विवेक मसृणत्वे हेतुमाह—नवपुरातनवत्सपालान् दृष्ट्वा विमूढे इति। नवपुरातन वत्सपालान् नवान् नूतनान् मायामयान् पुरातनान् प्राक्तनान् आत्मना तिरो हितान् वत्सपालान् वत्साश्च पालाश्च। दृष्ट्वा वीक्ष्य विमूढे विशेषेण मूढे मुग्धे ॥

पुनरपि ब्रह्मणे दर्शितानां मायामयानां वत्सतत्पालकानामेव स्वरूपमाह—

प्रत्येकमेव कमलापरिलालिताङ्गान्
भोगीन्द्रभोगशयनान् नयनाभिरामान् ।
लीलानिमीलितदृशः सनकादियोगि
व्यासेवितान् कमलभूर्भवतो ददर्श ॥ ८ ॥

**प्रत्येकमेवेति ॥** कमलभू भवत ददर्श। कमलभूर्ब्रह्मा। भवत विष्णूत्। ददर्श अपश्यत्। विष्णूना स्वरूपमाह—प्रत्येकमेव कमलापरि लालिताङ्गान् भोगीन्द्रभोगशयनान् नयनाभिरामान् लीलानिमीलितदृश सनकादि योगिव्यासेवितानिति। प्रत्येकमेकैकश। एवकारोऽयोगव्यवच्छेदे। कमला परिलालिताङ्गान् कमलया लक्ष्म्या परिलालितानि परित संवाहनादिना लालितानि अङ्गान्यवयवा येषा तान्। भोगीन्द्रभोगशयनान् शेषपर्यङ्क शायिन॰। नयनाभिरामान् नेत्राभिरामतनुद्युतीन्। लीलानिमीलितदृश लीलया अङ्गीकृतयोगनिद्रान्। सनकादियोगिव्यासेवितान् सनकादिभि सनकसना

तनसनत्कुमारसनन्दश्रीनारदप्रभृतिभिर्योगिभिर्व्यासेवितान् विशेषेणासमन्तात् सेवितान्। प्रत्येकमेवेति सर्वत्र सम्बध्यते ॥

अथ ब्रह्मा भगवन्मायया मोहमुपगत इत्याह—

नारायणाकृतिमसंख्यतमां निरीक्ष्य
सर्वत्र सेवकमपि स्वमवेक्ष्य धाता।
मायानिमग्नहृदयो विमुमोह याव-
देको बभूविथ तदा कवलार्धपाणिः ॥ ९ ॥

**नारायणाकृतिमिति** ॥ त्वं तावत् एकः कवलार्धपाणिः बभूविथ। त्वं श्रीबालकृष्णः। तावत् तदानीम्। एकः बहूनि रूपाण्युपसंहृत्यैकरूपः। कवलार्धपाणि. कवलार्धं ग्रासार्धं पाणौ यस्य तथाविधः सन्। पूर्वं वत्सान्वेषणाय प्रवृत्तस्य बालगोपालस्य कवलार्धपाणे. स्वरूपं धृतवानित्यर्थः। तावत्पदार्थमाह—यावत् धाता मायानिमग्नहृदय. विमुमोह इति। यावत् यदा। धाता ब्रह्मा। मायानिमग्नहृदयः मायया निमग्नं मूढं हृदयं मनो यस्य स। विमुमोह विशेषेण मुमोह अचेतनप्रायोऽभूत्। मायानिमग्नहृदयतायां हेतुमाह—असंख्यतमां नारायणाकृतिं सर्वत्र सेवकं स्वम् अपि अवेक्ष्य इति। असंख्यतमाम् असंख्येयाम्। नारायणाकृतिं नारायणस्य विष्णोः आकृतिं स्वरूपम्। सर्वत्र सर्वेषां नारायणानां सन्निधौ। सेवकं सेवां कुर्वाणम्। स्वम् आत्मानम्। अपिः समुच्चये। अवेक्ष्य दृष्ट्वा ॥

एवं ब्रह्मणो मदमपाकृत्य भगवान् श्रीबालकृष्णो वत्सवत्सपगणैः सह स्वनिलयं प्रापेत्याह—

नश्यन्मदे तदनु विश्वपतिं मुहुस्त्वां
नत्वा च नूतवति धातरि धाम याते।
पोतैः समं प्रमुदितैः प्रविशन् निकेतं
वातालयाधिप विभो परिपाहि रोगात् ॥ १० ॥

नश्यन्मद इति ॥ हे वातालयाधिप विभो तदनु धातरि नश्यन्मदे विश्वपतिं त्वा मुहु नत्वा नूतवति धाम याते च प्रमुदितै पोतै सम निकेत प्रविशन् त्व रागात् परिपाहि। वातालयाधिप श्रीगुरुवायुपुरनाथ। विभो शक्तिसम्पन्न। तदनु तदनन्तरम्। धातरि ब्रह्मणि। नश्यन्मदे विनष्टगर्वे। विश्वपतिं जगद्रक्षकम्। अनेन नम्यता स्तुत्यता च दर्शिता। त्वा श्रीबालकृष्णम्। मुहु पुन पुन। नत्वा प्रणम्य। नूतवति स्तुतवति। धाम सत्यलोकम्। याते गते च सति। चकार समुच्चये। प्रमुदितै वत्सानां दर्शनात् प्रकर्षेण मुदितै हृष्टै। पोतै गोपशिशुभि। सम सह। निकेतम् आत्मनो मन्दिरम्। प्रविशन् प्राप्त। त्व श्रीबालकृष्ण। रागात् बाह्यदाभ्यन्तराद्यामयौघात्। परिपाहि, मामनन्यशरण त्रायस्वेत्यर्थ ॥

इति ब्रह्मकृतवत्सापहारवर्णनं भगवन्मायया ब्रह्मणो मोहवर्णनं च
द्विपञ्चाशत्तमदशकम् ॥

## त्रिपञ्चाशत्तमदशकम् ॥

अथ भगवतो गोगणपालनं वर्णयितुमुपक्रमते—

अतीत्य बाल्यं जगतां पते त्व
मुपेत्य पौगण्डवयो मनोज्ञम्।
उपेक्ष्य वत्सावनमुत्सवेन
प्रावर्तथा गोगणपालनायाम् ॥ १ ॥

अतीत्येति ॥ हे जगतां पते त्व बाल्यम् उपे॰ … गोगणपालनाया प्रावर्तथा। जगतां पते जगद्रक्षक। त्व श्रीकृष्ण। … वत्सानुपालनम्। उपेक्ष्य त्यक्त्वा। गोगणपालनाया गोगणस्य धेनुगणस्य पाल

नायां रक्षणे। प्रावर्तथाः प्रवृत्तोऽभूः। ननु किमर्थं गोगणपालने प्रवृत्तः अभूदिति चेत्तत्राह—उत्सवेन इति। गोरक्षणकौतुकेनेत्यर्थः। भगवत श्रीकृष्णस्य धेनुगणपालनानुरूपं वयो दर्शयति—बाल्यम् अतीत्य मनोज्ञं पौगण्ड वयः उपेत्य इति। बाल्यम् आद्यं वर्षपञ्चकं कौमारसंज्ञितम्। अतीत्य अतिक्रम्य। मनोज्ञं मनोहरम्। पौगण्डवयः द्वितीयं वर्षपञ्चकम्। उपेत्य प्राप्य। यदुक्तम्—'कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि। कैशोरमा पञ्चदशाद्यौवनं तु ततः परम्॥' इति॥

युक्तरूपमेतत् भगवतः श्रीकृष्णस्येत्याह—

उपक्रमस्यानुगुणैव सेयं
मरुत्पुराधीश तव प्रवृत्तिः।
गोत्रापरित्राणकृतेऽवतीर्ण-
स्तदेव देवारभथास्तदा यत्　॥ २ ॥

**उपक्रमस्येति**॥ हे मरुत्पुराधीश सा इयं तव प्रवृत्तिः उपक्रमस्य अनुगुणा एव। मरुत्पुराधीश श्रीगुरुवायुपुरनाथ। सा इयं प्रवृत्तिः गोगणपालनरूपा। उपक्रमस्य आरम्भस्य अनुगुणा अनुरूपा। एवकारोऽयोगव्यवच्छेदाय। तत्पदार्थमाह—हे देव गोत्रापरित्राणकृते अवतीर्णः त्वं तदा तत् एव आरभथाः यत् इति। देव प्रकाशमान। गोत्रापरित्राणकृते गोत्रायाः भूम्याः परित्राणकृते परिरक्षणाय। अवतीर्णः गृहीतमनुष्यविग्रहः। त्वं भगवान् श्रीहरिः। तदा पौगण्डदशायाम् तत् एव गोत्रापरिरक्षणं गोरक्षणमेव। आरभथाः प्रारब्धवानसीति यत्, सेयं प्रवृत्तिरिति सम्बन्धः। गोत्राशब्दस्य पृथिवीधेनुगणोभयवाचकतयाऽत्र तयोरभेदाध्यवसायः॥

अथ धेनुकासुरवधोपक्रमं प्रस्तौति—

कदापि रामेण समं वनान्ते
वनश्रियं वीक्ष्य चरन् सुखेन।

श्रीदामनाम्नः स्वसखस्य वाचा
मोदादगा धेनुककाननं त्वम् ॥ ३ ॥

कदापीति ॥ कदापि वनान्ते रामेण समं वनश्रियं वीक्ष्य सुखेन चरन् त्वं श्रीदामनाम्नः स्वसखस्य वाचा मोदात् धेनुककाननम् अगाः । कदापि कदाचन । वनान्ते वनमध्ये । रामेण श्रीबलभद्रेण । समं सह । वनश्रियम् अरण्यशोभाम् । वीक्ष्य दृष्ट्वा । सुखेन स्वैरं चरन् पर्यटन् । त्वं श्रीकृष्ण.। श्रीदामनाम्न श्रीदामाभिधानस्य । स्वस्य सखा स्वसखः तस्य । वाचा गिरा । मोदात् हर्षात् । धेनुककाननं धेनुकस्य तन्नाम्नः असुरस्य काननं वनम् । अगाः गतवानसि ॥

धेनुकापतनहेतुमाह—

उत्तालतालीनिवहे त्वदुक्त्या
बलेन धूतेऽथ बलेन दोर्भ्याम् ।
मृदुः खरश्चाभ्यपतत् पुरस्तात्
फलोत्करो धेनुकदानवोऽपि ॥ ४ ॥

उत्तालेति ॥ अथ त्वदुक्त्या बलेन दोर्भ्याम् उत्तालतालीनिवहे बलेन धूते मृदुः खरः च फलोत्करः धेनुकदानव. अपि पुरस्तात् अभ्यपतत्। अथ धेनुककाननमाप्त्यनन्तरम्। त्वदुक्त्या तव श्रीकृष्णस्योक्त्या वचनेन । बलेन श्रीबलभद्रेण । दोर्भ्यां कराभ्याम् । उत्तालतालीनिवहे उत्तालानामुन्नतानां तालीनां तालवृक्षाणां निवहे समूहे । बलेन शक्त्या । धूते कम्पिते सति । मृदु· परिणत. । खरः अपरिणत. । चकारः समुच्चये । फलोत्करः फलसमूहः । धेनुकदानवः धेनुकासुरः । अपिः समुच्चये । पुरस्तात् पुरः । अभ्यपतत् पपात । अयमर्थः— बलभद्रेण शक्त्या धूननात् पक्वानि अपक्वानि च फलानि तालीवृक्षाणां परितः पेतुः, फलपतनमाकर्ण्य कुपितो धेनुकासुरो रासभाकृतिर्भूत्वा श्रीकृष्णश्रीबलभद्रयोः पुरस्तादापपात चेति ॥

धेनुकासुरवधमाह—

समुद्यतो धैनुकपालनेऽहं
  कथं वधं धैनुकमद्य कुर्वे ।
इतीव मत्वा ध्रुवमग्रजेन
  सुरौघयोद्धारमजीघनस्त्वम् ॥ ५ ॥

समुद्यत इति ॥ त्वम् अग्रजेन तं सुरौघयोद्धारम् अजीघनः । त्वं श्री कृष्णः प्रयोजकः । अग्रजेन ज्येष्ठेन बलभद्रेण प्रयोज्येन । तम् आपतन्तम् । सुरौघयोद्धारं धेनुकाख्यमसुरम् । अत्र सुरौघयोद्धारमित्युक्त्या देवानामपि दुर्जयत्वं तस्य ध्वन्यते । अजीघनः घातितवानसि । बलभद्रेण धेनुकासुरघातने हेतुमुत्प्रेक्षते—इति मत्वा इवेति । इति एवम् । मत्वा निश्चित्य । इवेति सम्भावनायाम् । मननप्रकारमाह—अहम् अद्य धैनुकं वधं कथं कुर्वे ध्रुवमिति । अद्य अधुना । धैनुकं धेनुकासुरसम्बन्धिनम् । वधं निग्रहम् । कथं कुर्वे न करोमीत्यर्थः । ध्रुवं निश्चितम् । ननु का क्षतिः धेनुकवधे इत्याशङ्कायामाह—धैनुकपालने समुद्यतः इति । धैनुकपालने धैनुकस्य धेनुसमूहस्य पालने रक्षणे । समुद्यतः सम्यगुद्यतः उद्युक्तः । धैनुकपालनोद्युक्तस्य सतो धैनुकवधस्यायुक्तत्वादिति भावः । अत्र धेनुसमूहधेनुकासुरसम्बन्धिनोः श्लेषभित्तिकाभेदाध्यवसायः ॥

अथ धेनुकासुरभृत्यानामपि संहारमाह—

तदीयभृत्यानपि जम्बुकत्वे-
  नोपागतानग्रजसंयुतस्त्वम् ।
जम्बूफलानीव तदा निरास्थ-
  स्तालेषु खेलन् भगवन् निरास्थः ॥ ६ ॥

तदीयभृत्यानिति ॥ हे भगवन् त्वम् अग्रजसंयुतः तदीयभृत्यान् अपि निरास्थः खेलन् जम्बूफलानि इव तालेषु निरास्थः । भगवन् ऐश्वर्यादिसम्पन्न

त्व श्रीकृष्ण । अग्रजसयुत अग्रजेन ज्येष्ठेन बलभद्रेण सयुत युक्त । तदीय भृत्यान् तदीयान् धेनुकासुरसम्बन्धिनो भृत्यान्। अपि समुच्चये। निरास्थ निर्गता आस्था बलिन इमे इति गणना यस्मात् स । खेलन् लीलयेत्यर्थ । जम्बूफलानि जम्बूवृक्षस्य पक्वफलानि। उपमयाऽऽत्नानायासो ध्वन्यते । तालेषु तालवृक्षेषु । निरास्थ निरसन कृतवानसि। बलात् क्षिप्त्वा जघन्थेत्यर्थ । धेनुकभृत्याना स्वरूपमाह—तदा जम्बुकत्वेन उपागतानिति। तदा निहते धेनुके । जम्बुकत्वेन सृगालरूप धृत्वा। उपागतान् स्वस्वामिनिग्रहकोपेन जिघासया हन्तु भगवत्समीपमागतान् ॥

अथ भगवान् बहून् जम्बुकानवधीदित्याह—

विनिघ्नति त्वय्यथ जम्बुकौघ सनामकत्वाद्वरुणस्तदानीम् ।
भयाकुलो जम्बुकनामधेय श्रुतिप्रसिद्ध व्यधितेति मन्ये ॥ ७ ॥

विनिघ्नतीति ॥ अथ त्वयि जम्बुकौघ विनिघ्नति वरुण सनामकत्वात् भयातुर तदानीं जम्बुकनामधेयम् श्रुतिप्रसिद्ध व्यधित इति मन्ये। अथ अनन्तरम्। त्वयि श्रीकृष्णे। जम्बुकौघ जम्बुकाना सृगालानामोघ समूहम्। विनिघ्नति मारयति सति। वरुण प्रचेता । सनामकत्वात् स्वस्यापि जम्बुक नामकत्वात्। भयातुर भयाक्रान्त । जम्बुकाख्यान् मारयन्नय हरिर्मामपि कदाचिज्जम्बुकाख्य हनिष्यतीति विचिन्त्येति भाव । तदानी तस्मिन्नवसरे। जम्बुकनामधेय स्वस्य जम्बुक इति नाम। श्रुतिप्रसिद्ध वेदप्रसिद्धम्। व्यधित कृतवान्। तथा च स्वस्य जम्बुकपदवाच्यताया श्रुतिप्रसिद्धत्वेऽपि लोकप्रसिद्धय भावान्मा हनिष्यतीति मत्वेति भाव । इति अनेन प्रकारेण। मन्ये तर्कयामि। अन्यथा लोकेऽपि वरुणस्य जम्बुक इति व्यवहार स्यादित्याशय । व्यधितेति वा पाठ । श्रुतिप्रसिद्ध स्वस्य नामधेयमाच्छादितवानित्यर्थ । इति केचित्॥

अथ भगवान्तालफलानि भुक्तवानित्याह—

तवावतारस्य फल मुरारे सजातमद्येति सुरैर्नुतस्त्वम् ।
सत्य फल जातमिहेति हासी बालैः सम तालफलान्यभुङ्क्थाः॥ ८ ॥

तवेति ॥ हे मुरारे अथ तव अवतारस्य फलं सञ्जातम् इति सुरैः नुतः त्वम् इह फलं जातं सत्यमिति हासी बालैः समं तालफलानि अभुङ्क्थाः । मुरारे मुरमर्दन । अथ अधुना । अवतारस्य श्रीकृष्णावतारस्य । फलं धेनुकवधरूपम् । सञ्जातं सम्भूतम् । इति अनेन प्रकारेण । सुरैः देवैः । नुतः स्तुतः । त्वं श्रीकृष्णः । इह अत्र वने । फलं तालफलम् । जातं सञ्जातम् । इति इत्युक्त्वा । हासी हसन् । बालैः गोपबालैः । समं सह । तालफलानि तालवृक्षाणां फलानि । अभुङ्क्थाः भुक्तवानसि ॥

अथ भगवान् व्रजमगादित्याह—

मधुद्रवस्रुन्ति बृहन्ति तानि
फलानि मेदोभरभृन्ति भुक्त्वा ।
तृप्तैश्च दृप्तैर्भवनं फलौघं
वहद्भिरागाः खलु बालकैस्त्वम् ॥ ९ ॥

मधुद्रवस्रुन्तीति ॥ त्वं मधुद्रवस्रुन्ति बृहन्ति मेदोभरभृन्ति तानि फलानि भुक्त्वा तृप्तैः दृप्तैः फलौघं वहद्भिः च बालकैः भवनम् आगाः खलु । त्वं श्रीकृष्णः । मधुद्रवस्रुन्ति मधुद्रवं स्रवन्ति एभ्य इति तथाविधानि । बृहन्ति पृथूनि । मेदोभरभृन्ति अन्तःसारवन्ति । तानि फलानि तालफलानि । भुक्त्वा भक्षयित्वा । तृप्तैः अत एव दृप्तैरहङ्कृतैः । फलौघं स्कन्धोपनेयं फलसञ्चयम् । वहद्भिः स्कन्धेनोद्वहद्भिः । बन्धुभ्यो दातुमिति भावः । चकारः समुच्चये । बालकैः गोपशिशुभिः । सहेति शेषः । भवनं गृहम् । आगाः गतवानसि ॥

धेनुकवधेन प्रहृष्टा जना अपि भगवन्तं नुनुवुरित्याह—

हतो हतो धेनुक इत्युपेत्य
फलान्यदद्भिर्मधुराणि लोकैः ।
जयेति जीवेति नुतो विभो त्वं
मरुत्पुराधीश्वर पाहि रोगान् ॥ १० ॥

हत इति ॥ हे मरुत्पुराधीश्वर विभो लोकैः इति नुतः त्वं रोगात् पाहि। मरुत्पुराधीश्वर श्रीगुरुवायुपुरनाथ। विभो शक्तिसम्पन्न। लोकैः जनैः। इति एवम्। नुतः स्तुतः। त्वं श्रीकृष्णः। रोगात् बाह्यादाभ्यन्तराच्च आमयौघात्। पाहि मामनन्यशरणं त्रायस्व। स्तुतिप्रकारमाह—जय इति जीव इति। स्तुतिहेतुमाह—धेनुकः हत. हतः इति उपेत्य मधुराणि फलानि अदद्भिः इति। धेनुकः धेनुकासुर.। हतः व्यापादितः। हर्षातिरेकात् द्विरुक्तिः। इति इत्युक्त्वा। उपेत्य प्राप्य। अर्थात् धेनुकवनम्। फलानि तालफलानि। अदद्भिः। भक्षयद्भिः। मधुराणि तालफलानि भक्षयित्वा प्रमुदितैरित्यर्थः ॥

इति धेनुकासुरवधवर्णनं
त्रिपञ्चाशत्तमदशकम् ॥

---

चतुःपञ्चाशत्तमदशकम्।

अथ दशकत्रयेण कालियमर्दनं वर्णयति—

त्वत्सेवोत्कः सौभरिर्नाम पूर्वं
कालिन्द्यन्तर्द्वादशाब्दं तपस्यन्।
मीनव्राते स्नेहवान् भोगलोले
तार्क्ष्यं साक्षादैक्षताग्रे कदाचित् ॥ १ ॥

त्वत्सेवोत्क इति ॥ पूर्वं त्वत्सेवोत्कः कालिन्द्यन्तः द्वादशाब्दं तपस्यन् भोगलोले मीनव्राते स्नेहवान् सौभरिः नाम कदाचित् तार्क्ष्यं अग्रे साक्षात् ऐक्षत। पूर्वं पुरा। त्वत्सेवोत्कः त्वत्सेवायामुत्कः उन्मनाः। कालिन्द्यन्तः कालिन्द्याः अभ्यन्तरे जले। द्वादशाब्दं द्वादशवर्षाणि। अत्यन्तसंयोगे द्वितीया। तपस्यन् तपश्चरन्। भोगलोले इतरेतरस्नेहसुखपरे। मीनव्राते मत्स्यसञ्चये। स्नेहवान् स्नेहोऽस्यास्तीति तथा। विशेषणमिदमुत्तरश्लोकाभिप्रायम्। नामेति

प्रसिद्धौ । मुनिरिति शेषः । तार्क्ष्यं गरुडम् । अग्रे पुरस्तात् । साक्षात् प्रत्यक्षतः । ऐक्षत दृष्टवान् ॥

मुनिर्गरुडं शशापेत्याह—

त्वद्वाहं तं सक्षुधं तृक्षसूनुं
मीनं कञ्चिज्जक्षतं लक्षयन् सः ।
तप्तश्चित्ते शप्तवानत्र चेत्त्वं
जन्तून् भोक्ता जीवितं चापि मोक्ता ॥ २ ॥

त्वद्वाहमिति ॥ सः त्वद्वाहं तृक्षसूनुं शप्तवान् । सः सौभरिः । त्वद्वाहं तव वाहनम् । तृक्षसूनुं गरुडम् । शप्तवान् शशाप । शापहेतुमाह—चित्ते तप्त इति । चित्ते मनसि । तप्तः जातसन्तापः । तापहेतुमाह—सक्षुधं कञ्चित् मीनं जक्षतं लक्षयन्निति । सक्षुधं क्षुधापरिगतम् । अत एव मीनं मत्स्यम् । जक्षतं भक्षयन्तम् । अस्य तृक्षसूनुमित्यनेन सम्बन्धः । लक्षयन् पश्यन् मीनेषु स्नेहपरवशतयेति भावः । शापप्रकारमाह—त्वम् अत्र जन्तून् भोक्ता चेत् जीवितं च अपि मोक्ता इति । अत्र कालिन्द्याम् । जन्तून् प्राणिनः । भोक्ता भक्षयिष्यसि चेत् तर्हि । जीवितं मोक्ता मरिष्यसि । चापीति समुच्चये ॥

कालियस्य यमुनाजलप्रवेशकारणं दर्शयति—

तस्मिन् काले कालियः क्ष्वेलदर्पात्
सर्पारातेः कल्पितं भागमश्नन् ।
तेन क्रोधात्त्वत्पदाम्भोजभाजा
पक्षक्षिप्तस्तद्दुरापं पयोऽगात् ॥ ३ ॥

तस्मिन्निति ॥ तस्मिन् काले कालियः त्वत्पदाम्भोजभाजा पक्षक्षिप्तः तद्दुरापं पयः अगात् । तस्मिन् काले । सौभरिर्यदा गरुडं शशाप, तदेत्यर्थः । कालियः तन्नामा कृष्णसर्पराट् । त्वत्पदाम्भोजभाजा तव श्रीहरेः पदाम्भोजं पादपद्मं भजतीति तथाविधेन । गरुडेनेति यावत् । गरुडेनेत्यस्य स्थाने एव

मुक्त्या कालियस्याधृष्योऽयं वैनतेय इति ध्वन्यते। पक्षक्षिप्तः पक्षेण ताडयित्वा विवशीकृतः। तद्दुरापं तेन वैनतेयेन दुरापं दुष्प्रापम्। पयः कालिन्दीह्रदम्। विशेषणेनात्र कालियस्य निर्भयनिवासो द्योत्यते। अगात् प्राप। पक्षक्षेपकारण माह—क्ष्वेलदर्पात् सर्पारातेः कल्पितं भागम् अश्नन् तेन क्रोधादिति। क्ष्वेल दर्पात् विषवीर्यमदात्। सर्पारातेः गरुडस्य। अनेन तद्वैरकारणं दर्शितम्। सर्पैरात्मरक्षणार्थं कल्पितम्। भागं बलिम्। अश्नन् भुञ्जानः। एतत् कालिय विशेषणम्। तेन स्वभागापहरणेन। क्रोधादमर्षात्॥

कालिये यमुनायां वर्तमाने जातां तत्रत्यानां पीडामाह—

घोरे तस्मिन् सूरजानीरवासे
तीरे वृक्षा विक्षताः क्ष्वेलवेगात्।
पक्षिव्राताः पेतुरभ्रे पतन्तः
कारुण्यार्द्रं त्वन्मनस्तेन जातम् ॥ ४ ॥

घोर इति। घोरे तस्मिन् सूरजानीरवासे क्ष्वेलवेगात् तीरे वृक्षाः विक्षताः। घोरे क्रूरकर्मणि। तस्मिन् कालिये। सूरजानीरवासे कालिन्दीजल निवासिनि सति। क्ष्वेलवेगात् विषवेगात्। तीरे तीरस्थिताः। वृक्षाः तरवः। विक्षताः गरलाग्निज्वालावलीढतया नष्टाः। न केवलं तीर वासिनाम्, किन्तूपरिचराणामपि विपत्तिस्समभूदित्याह—अभ्रे पतन्तः पक्षि व्राता. पेतुः इति। अभ्रे नभसि। पतन्तः डयमानाः। पक्षिव्राताः पक्षि सङ्घाः। पेतु· क्ष्वेलाग्निज्वालावलीढतया पतिता बभूवुः। भगवतः कालिय मर्दनोद्यमे हेतुमुपक्षिपति—तेन त्वन्मनः कारुण्यार्द्रं जातमिति। तेन प्राणि पीडादर्शनेन। त्वन्मनः तव श्रीकृष्णस्य मनः। कारुण्यार्द्रं दयार्द्रम्। जातं समभूत्॥

भगवतः कालियमर्दनोपक्रममाह—

काले तस्मिन्नेकदा सीरपाणिं
मुक्त्वा याते यामुनं काननान्तम्।

त्वय्युद्दामग्रीष्मभीष्मोष्मतप्ता
गोगोपाला व्यापिबन् क्ष्वेलतोयम्　　　॥ ५ ॥

**काल इति ॥** त्वयि तस्मिन् काले एकदा सीरपाणिं मुक्त्वा यामुनं काननान्तं याते गोगोपालाः उद्दामग्रीष्मभीष्मोष्मतप्ताः क्ष्वेलतोयं व्यापिबन् । त्वयि श्रीकृष्णे । तस्मिन् काले तस्मिन्नवसरे। एकदा कदाचित् । सीरपाणिं बलभद्रम् । मुक्त्वा विहाय । यामुनं यमुनासम्बन्धि । काननान्तं वनमध्यम् । याते गते सति । गावश्च गोपालाश्च गोगोपालाः । उद्दामग्रीष्मभीष्मोष्मतप्ताः उद्दामग्रीष्मस्य तीव्रघर्मकालस्य भीष्मोष्मणा दुस्सहेन तापेन तप्ताः । अत एव क्ष्वेलतोयं कालियविषदूषितं कालिन्दीजलम् । व्यापिबन् पपुः ॥

भगवान् विषतोयपानेन गतजीवितान् गोगोपालान् जीवयामासेत्याह—

नश्यज्जीवान् विच्युतान् क्ष्मातले तान्
विश्वान् पश्यन्नच्युतस्त्वं दयार्द्रः ।
प्राप्योपान्तं जीवयामासिथ द्राक्
पीयूषाम्भोवर्षिभिः श्रीकटाक्षैः　　　॥ ६ ॥

**नश्यज्जीवानिति ॥** अच्युतः त्वं दयार्द्रः विश्वान् तान् पश्यन् द्राक् उपान्तं प्राप्य श्रीकटाक्षैः जीवयामासिथ। अच्युतः च्युतिरहितः । त्वं श्रीकृष्णः । दयार्द्रः दयया आर्द्रः विलीनहृदयः। विश्वान् समस्तान् । तान् गोगोपालान् । पश्यन् विलोकयन्। द्राक् झटिति। उपान्तं समीपम्। प्राप्य गत्वा । श्रीकटाक्षैः । श्रीमद्भिः कटाक्षैः । जीवयामासिथ अजीवयः। कटाक्षाणां जीवनसामर्थ्यं दर्शयति—पीयूषाम्भोवर्षिभिः इति । पीयूषाम्भः पीयूषद्रवं वर्षन्तीति तथाविधैः । भगवतो दयार्द्रताहेतुमाह—नश्यज्जीवा क्ष्मातले विच्युतानिति। नश्यज्जीवान् आसन्नमरणान्। अत एव क्ष्मातले भूतले। विच्युतान् पतितान्। अनयोर्विशेषणयोः तान् इत्यत्र सम्बन्धः ॥

भगवत्कटाक्षामृतस्पर्शेन गोपानां हर्षातिरेकः समभूदित्याह—

किं किं जातो हर्षवर्षातिरेकः
सर्वाङ्गेष्वित्युत्थिता गोपसङ्घाः ।
दृष्ट्वाऽग्रे त्वां त्वत्कृतं तद्विदन्त-
स्त्वामालिङ्गन् दृष्टनानाप्रभावाः ॥ ७ ॥

**किं किमिति ॥** गोपसङ्घा इति उत्थिताः अग्रे त्वां दृष्ट्वा तत् त्वत्कृतं विदन्तः त्वां आलिङ्गन् । गोपसङ्घाः गोपानां सङ्घाः समूहाः । इति एवं विचिन्त्य । उत्थिताः स्वप्नादिवेत्यर्थः । अग्रे पुरस्तात् । त्वां श्रीकृष्णम् । दृष्ट्वा वीक्ष्य । तत् क्ष्वेलतोयाद्रक्षणम् । त्वत्कृतं त्वया श्रीकृष्णेन कृतम् । विदन्तः निश्चिन्वानाः । त्वां श्रीकृष्णम् । ननु कथमेतत् भगवता कृतमित्यवागच्छन्निति चेत्तत्राह—दृष्टनानाप्रभावाः इति । दृष्टा नानाविधाः प्रभावाः अघासुरवधादयो यैस्ते । इतिशब्दस्यार्थमाह—सर्वाङ्गेषु हर्षवर्षातिरेकः जातः किं किमिति । सर्वाङ्गेषु सर्वेषु अङ्गेषु अवयवेषु । हर्षवर्षातिरेकः हर्षवर्षस्य प्रमोदपीयूषवर्षस्य अतिरेकः अतिशयः । किं किमिदम् । जिज्ञासायां किंशब्दः । द्विरुक्तिः सम्भ्रमात् ॥

एवं गावोऽप्यत्यर्थं प्रमुदिता बभूवुरित्याह—

गावश्चैवं लब्धजीवाः क्षणेन
स्फीतानन्दास्त्वां च दृष्ट्वा पुरस्तात् ।
द्रागावव्रुः सर्वतो हर्षबाष्पं
व्यामुञ्चन्त्यो मन्दमुद्यन्निनादाः ॥ ८ ॥

**गाव इति ॥** एवं गावः च क्षणेन लब्धजीवाः पुरस्तात् त्वां दृष्ट्वा स्फीतानन्दाः च हर्षबाष्पं व्यामुञ्चन्त्यः मन्दम् उद्यन्निनादाः सर्वतः द्राक् आवव्रुः । एवम् उक्तरीत्या । चकारः समुच्चये । क्षणेन झटिति । लब्धजीवाः प्राप्तासवः । पुरस्तात् पुरः । त्वां श्रीकृष्णम् । दृष्ट्वा अभिवीक्ष्य ।

अत एव स्फीतानन्दा. स्फीतः प्रवृद्धः आनन्दो यासां ता.। पूर्व कटाक्षामृतपातेन सञ्जातानन्दाः पश्चात् पुरस्तात् भगवद्दर्शनेन प्रवृद्धानन्दाश्च सत्य इत्यर्थः। चकारः समुच्चये। हर्षबाष्पं प्रमोदाश्रु। व्यामुञ्चन्त्यः पातयन्त्यः। उद्यन्निनादा उद्यन् उद्गच्छन् निनादः शब्दो याभ्यस्ताः। सर्वतः सर्वत्र। भगवतः परित इत्यर्थः। द्राक् झटिति। आवव्रु परिवव्रुः। त्वामित्यस्य अत्रापि सम्बन्धः॥

आनन्दमग्नानां गोपानामुक्तिप्रकारमाह—

रोमाञ्चोऽयं सर्वतो नः शरीरे
भूयस्यन्तः काचिदानन्दमूर्छा।
आश्चर्योऽयं क्ष्वेलवेगो मुकुन्दे-
त्युक्तो गोपैर्नन्दितो वन्दितोऽभूः　　॥ ९ ॥

**रोमाञ्च इति**॥ त्वं गोपैः इति उक्तः नन्दितः वन्दितः अभूः। त्वं श्रीकृष्ण.। इति अनेन प्रकारेण। उक्त कथितः। नन्दितः अनुमोदित। वन्दित नतश्च। उक्तिप्रकारमाह—हे मुकुन्द अयं क्ष्वेलवेगः आश्चर्य इति। मुकुन्द श्रीकृष्ण। अयम् अस्माभिरनुभूयमानः। क्ष्वेलवेग. विषवेग.। आश्चर्यः विस्मयः। अन्यत्रैवमदर्शनादिति भाव.। विस्मयकारणं दर्शयति—न. शरीरे सर्वतः अयं रोमाञ्च.। अन्तः भूयसी काचित् आनन्दमूर्छा इति। नः अस्माकम्। शरीरे देहे। सर्वतः सर्वत्र। रोमाञ्चः रोमहर्षणम्। अन्तः हृदये। भूयसी महती। काचित् अनिर्वचनीया। आनन्दमूर्छा आनन्दजनिता मूर्छा मोहः। अस्तीति शेष.। विषवेगे यज्जनानां दृश्यते, तद्विपरीतमिह सञ्जातमिति विस्मयः॥

अथ प्रार्थयते—

एवं भक्तान् मुक्तजीवानपि त्वं
मुग्धापाङ्गैरस्तरोगांस्तनोपि।

ताद्दग्भूतस्फीतकारुण्यभूमा
रोगात् पाया वायुगेहाधिवास ॥ १० ॥

एवमिति ॥ हे वायुगेहाधिवास त्व मुक्तजीवान् अपि भक्तान् एव मुग्धापाङ्गैः अस्तरोगान् तनोपि ताद्दग्भूतस्फीतकारुण्यभूमा त्व रोगात् पाया । वायुगेहाधिवास गुरुवायुपुरवासिन् । त्व श्रीकृष्ण । मुक्तजीवान् मृतान् । अपिर्विरोधे । एव यथा गोगोपालान्, तथेत्यर्थ । मुग्धापाङ्गै मुग्धै सुन्दरै अपाङ्गै कटाक्षपातै । अस्तरोगान् निरामयान् । तनोपि करोपि । इदानीमपीति स्टा दर्शितम् । ताद्दग्भूतस्फीतकारुण्यभूमा ताद्दग्भूत तथा विध स्फीत प्रवृद्ध यत् कारुण्य करुणा तस्य भूमा अतिशयो यस्य स । त्व श्रीकृष्ण । रोगात् बाह्यादाभ्यन्तराच्चामयौघात् । पाया मामनन्यशरण त्रायस्वेत्यर्थ ॥

इति कालियमर्दने विपजलेन मृतानां गोगोपानामुज्जीवनवर्णनं
चतुष्पञ्चाशत्तमदशकम् ॥

पञ्चपञ्चाशत्तमदशकम् ।

अथ कालिन्दीजले दूरत उत्पतितुं तत्सौकर्याय भगवान् कमपि वृक्ष मारोढु प्राक्रमतेत्याह—

अथ वारिणि घोरतर फणिन
प्रतिवारयितु कृतधीर्भगवन् ।
द्रुतमारिथ तीरगनीपतरु
विषमारुतशोषितपर्णचयम् ॥ १ ॥

अथेति ॥ हे भगवन् अथ द्रुत तीरगनीपतरुम् आरिथ । भगवन् ऐश्वर्यादिसम्पन्न । अनेन सम्बोधनेन श्रीकृष्णस्य विषाग्निबाधाद्यभावो ध्वन्यते ।

अथ गोगोपालप्रत्युज्जीवनानन्तरम्। त्वं श्रीकृष्णः। द्रुतं झटिति। तीरगं यमुनातीरस्थं नीपतरुं कदम्बवृक्षम्। आरिथ प्राप्तवानसि। नीपवृक्षस्यापि विषाग्निपीडितत्वं दर्शयति—विषमारुतशोषितपर्णचयमिति। विषसम्पृक्तो मारुतः वातस्तेन शोषिताः पर्णानां पत्राणां चयाः समूहा यस्य तम्। ननु किमर्थं भगवान् नीपवृक्षमाससादेत्याकाङ्क्षायामाह—वारिणि घोरतरं फणिनं प्रतिवारयितुं कृतधीः इति। वारिणि यमुनाजले। वर्तमानमिति शेषः। घोरतरम् अतीव भयानकम्। अनेन प्रतिवारणस्यावश्यकता ध्वन्यते। फणिनं कालियम्। प्रतिवारयितुं निवारयितुम्। यमुनोदकादन्यत्र प्रेषयितुमित्यर्थः। कृतधीः निश्चितमानसः सन्। कदम्बवृक्षमारोढुमिति भावः॥

भगवान् यमुनाजले पपातेत्याह—

अधिरुह्य पदाम्बुरुहेण च तं
नवपल्लवतुल्यमनोज्ञरुचा।
ह्रदवारिणि दूरतरं न्यपतः
परिघूर्णितघोरतरङ्गगणे　　॥ २ ॥

अधिरुह्येति॥ त्वं नवपल्लवतुल्यमनोज्ञरुचा पदाम्बुरुहेण तम् अधिरुह्य च परिघूर्णितघोरतरङ्गगणे ह्रदवारिणि दूरतरं न्यपतः। त्वं श्रीकृष्णः। नवपल्लवतुल्यमनोज्ञरुचा नवपल्लवः नूतनकिसलयं तत्तुल्येन मनोज्ञरुचा मनोज्ञा मनोहरा रुक् शोभा यस्य तेन। अनेन नीपतरुर्भगवत्पादस्पर्शात्त्यक्तविषवेगः सञ्जातपल्लवश्च जात इत्यधःस्थितानां प्रतीतिर्द्योत्यते। पदाम्बुरुहेण पदपङ्कजेन। तं नीपतरुम्। अधिरुह्य आरुह्य। चकारः पूर्वोक्तसमुच्चये। परिघूर्णितघोरतरङ्गगणे परिघूर्णिताः परितो घूर्णिताः चलिताः घोरास्तरङ्गाणां वीचीनां गणाः समूहा यस्मिंस्तस्मिन्। ह्रदवारिणि यमुनाह्रदे। दूरतरम् अतिदूरे। न्यपतः पतितोऽसि॥

भगवतो भारेण यमुना अतीव चुक्षुभे इत्याह—

भुवनत्रयभारभृतो भवतो
गुरुभारविकम्पिविजृम्भिजला।

परिमज्जयति स्म धनुश्शतकं
तटिनी झटिति स्फुटघोषवती ॥ ३ ॥

भुवनत्रयेति ॥ तटिनी झटिति भवतः गुरुभारविकम्पिविजृम्भिजला स्फुटघोषवती धनुश्शतकं परिमज्जयति स्म । तटिनी यमुना । झटिति द्राक् । भवतः श्रीकृष्णस्य । गुरुभारविकम्पिविजृम्भिजला गुरुणा दुर्वहेण भारेण विकम्पि कम्पनशील विजृम्भि वर्धनशील च जलं यस्या सा । स्फुटघोषवती स्फुटं स्पष्टतयोच्चैः श्रूयमाणो घोषः शब्दोऽस्या अस्तीति तथाविधा । धनुश्शतकं धनुश्शतप्रमाणं तीरप्रदेशम् । परिमज्जयति स्म प्लावयामास । भगवतो भाराधिक्ये हेतुः — भुवनत्रयभारभृत इति । भुवनत्रयं जगत्त्रयमेव भारस्तं बिभर्तीति तथाविधस्य । भगवतः कुक्षिस्थाखिललोकतयेति भावः ॥

अथ कालियो जलादुन्ममज्जेत्याह—

अथ दिक्षु विदिक्षु परिक्षुभित
भ्रमितोदरवारिनिनादभरैः ।
उदकादुदगादुरगाधिपतिः
त्वदुपान्तमशान्तरुषाऽन्धमनाः ॥ ४ ॥

अथेति ॥ अथ उरगाधिपतिः अशान्तरुषा अन्धमनाः उदकात् त्वदुपान्तम् उदगात् । अथ अनन्तरम् । उरगाधिपतिः उरगाणां सर्पाणामधिपतिः कालियः । अशान्तरुषा अशान्तया प्रवृद्धया रुषा कोपेन । अन्धमनाः अन्धं विवेकशून्यं मनो यस्य तादृशः । उदकात् कालिन्दीजलात् । त्वदुपान्तं तव श्रीकृष्णस्योपान्तं समीपम् । उदगात् उन्मज्य प्राप । कोपहेतुमाह—दिक्षु विदिक्षु परिक्षुभितभ्रमितोदरवारिनिनादभरैः इति । दिक्षु प्राचीप्रमुखासु चतसृषु । विदिक्षु दक्षिणपूर्वादिसंज्ञितेषु प्राच्यादीनामन्तरालेषु । परिक्षुभितभ्रमितोदरवारिनिनादभरैः परिक्षुभितं चलितं भ्रमितं सञ्जातावर्तम् उदरम् अभ्यन्तरं यस्य तथाविधं यद्वारि जलं तस्य निनादभरैः शब्दपूरैर्हेतुभिः ॥

जलोदरादुन्नम्य कालियमद्राक्षीन् भगवानित्याह—

फणशृङ्गसहस्रविनिस्सृमर-
ज्वलदग्निकणोग्रविषाम्बुधरम् ।
पुरतः फणिनं समलोकयथा
बहुशृङ्गिणमञ्जनशैलमिव    ॥ ५ ॥

फणशृङ्गेति ॥ त्वं पुरतः फणिनं समलोकयथाः । त्वं श्रीकृष्णः । पुरतः पुरस्तात् । फणिनं कालियम् । समलोकयथाः दृष्टवानसि । कालियस्य स्वरूपमाह—फणशृङ्गसहस्रविनिस्सृमरज्वलदग्निकणोग्रविषाम्बुधरमिति । फणशृङ्गाणां शृङ्गतुल्यानां फणानां सहस्राद्विनिस्सृमरं क्षरणशीलं ज्वलदग्निकणवत् प्रज्वलत्स्फुलिङ्गवत् उग्रं भीषणं विषाम्बु विषद्रवस्तस्य, धरतीति धरम् । अत्रोपमामाह—बहुशृङ्गिणम् अञ्जनशैलम् इव इति । बहूनि शृङ्गाणि शिखराण्यस्य सन्तीति बहुशृङ्गी तथाविधम् । अञ्जनशैलम् अञ्जनपर्वतम् । अत्र फणामण्डलानां शिखराणां च बिम्बप्रतिबिम्बभावेन साधारणधर्मता । फणिनो महाकायत्वं कृष्णवर्णत्वञ्चात्रोपमया प्रतीयते ॥

भगवन्तं दृष्टवतः कालियस्याविमृश्यकारितां दर्शयति—

ज्वलदक्षिपरिक्षरदुग्रविष-
श्वसनोष्मभरः स महाभुजगः ।
परिदश्य भवन्तमनन्तबलं
समवेष्टयदस्फुटचेष्टमहो    ॥ ६ ॥

ज्वलदक्षीति ॥ *ज्वलदक्षिपरिक्षरदुग्रविषश्वसनोष्मभरः सः महाभुजगः* अनन्तबलं भवन्तं परिदश्य अस्फुटचेष्टं समवेष्टयत् अहो । ज्वलदक्षि ज्वलती अक्षिणी नेत्रे यथा भवति तथा । परिक्षरदुग्रविषश्वसनोष्मभरः परिक्षरन् विसृमरः, उग्रं भयानकं यद्विषं तत्सहितो यः श्वसनस्तस्योष्मभरः ऊष्मणो भरः, परिक्षरन् उग्रविषश्वसनोष्मभरो यस्य सः । सः महाभुजगः कालियः अनन्तबलम् अपरिमितशक्तिम् । अनेन दंशनादीनां निष्फलत्वं ध्वन्यते । भवन्तं श्रीकृष्णम् । परिदश्य परितः मर्मसु दष्ट्वा । अस्फुटचेष्टम् अस्फुटा अस्पष्टा

चेष्टा श्रीकृष्णस्य व्यापारो यस्मिन् कर्मणि तद्यथा भवति तथा। समवेष्ट यत् पर्यवेष्टयत्। अहो हन्त मूर्खना फणिन इत्यर्थ ॥

अथ व्रजवासिनो यमुना प्रापुरित्याह—

अविलोक्य भवन्तमथाकुलिते
तटगामिनि बालकधेनुगणे।
व्रजगेहतलेऽप्यनिमित्तशत
समुदीक्ष्य गता यमुना पशुपा ॥ ७ ॥

अविलोक्येति ॥ अथ तटगामिनि बालकधेनुगणे भवन्तम् अविलोक्य आकुलिते पशुपा यमुना गता। अथ अनन्तरम्। तटगामिनि तीरस्थे। बालकधेनुगणे गोपालगोसङ्घे। भवन्त श्रीकृष्णम्। अविलोक्य अदृष्ट्वा। आकुलिते पर्याकुले सति। पशुपा गोपा गोप्यश्च। यमुना कालिन्दीम्। गता प्रापु। गोपाना कालिन्दीप्राप्तौ हेतुमाह— व्रजगेहतले अपि अनिमित्तशत समुदीक्ष्य इति। व्रजगेहतले पशुपवाटिकायाम्। अपिस्समुच्चये। अनिमित्तशतम् अनिमित्ताना दुर्निमित्ताना शतम्। समुदीक्ष्य दृष्ट्वा। अनिमित्तदर्शनात् किमापतित कृष्णस्येति त्रस्तमनस सर्वेऽपि यमुना प्रापुरित्यर्थ ॥

अथ भगवान् सर्पबन्धनमुन्मुच्योत्थितोऽभूदित्याह—

अखिलेषु विभो भवदीयदशा
मवलोक्य जिहासुषु जीवभरम्।
फणिबन्धनमाशु विमुच्य जवा
दुदगम्यत हासजुषा भवता ॥ ८ ॥

अखिलेष्विति ॥ हे विभो भवता फणिबन्धन विमुच्य जवात् हासजुषा उदगम्यत। विभो शक्तिसम्पन्न। अनेन भगवत फणिबन्धनविमोचने शक्तिर्दर्शिता। भवता श्रीकृष्णेन। आशु झटिति। फणिबन्धन सर्पबन्धनम्। विमुच्य बलान्मोचयित्वा। जवात् सत्वरम्। हासजुषा आत्मकुशलज्ञापनार्थं

मन्दहासविकसन्मुखपङ्कजेन मता। उदगम्यत उत्थितम्। भगवतो जवादुत्थाने हेतुमाह—अखिलेषु भवदीयदशामवलोक्य जीवभरं जिहासुषु इति। अखिलेषु सर्वेषु गोगोपालेषु। भवदीयदशां भवदीयां भवत्सम्बन्धिनीं दशामवस्थाम्। अवलोक्य दृष्ट्वा। जीवभरं भगवद्विरहे सोढुमशक्यत्वात् भारायमाणान् प्राणानित्यर्थः। जिहासुषु हातुं त्यक्तुमिच्छत्सु सत्सु। तेषां पीडां निवारयितुमिति भावः॥

अथ भगवान् कालियस्य फणामण्डलेषु ननर्तेत्याह—

**अधिरुह्य ततः फणिराजफणान्**
**ननृते भवता मृदुपादरुचा।**
**कलशिञ्जितनूपुरमञ्जुमिल-**
**त्करकङ्कणसङ्कुलसंक्वणितम्　　॥ ९ ॥**

**अधिरुह्येति॥** ततः मृदुपादरुचा भवता फणिराजफणान् अधिरुह्य कलशिञ्जितनूपुरमञ्जुमिलत्करकङ्कणसङ्कुलसंक्वणितं ननृते। ततः अनन्तरम्। मृदुपादरुचा मृद्वी फणामणिरञ्जिततया स्निग्धा पादरुक् चरणारविन्दशोभा यस्य तथाविधेन। भवता श्रीकृष्णेन। फणिराजफणान् फणिराजस्य सर्पराजस्य कालियस्य फणान्। अधिरुह्य आरुह्य। कलशिञ्जितनूपुरमञ्जुमिलत्करकङ्कणसङ्कुलसङ्क्वणितं कलशिञ्जिते मधुरारावयुक्ते नूपुरे यस्मिंस्तत् कलशिञ्जितनूपुरं, मञ्जु मनोज्ञं ताल्व्यापृततया मिलतोः करयोः बाह्वोः कङ्कणानां च वलयानां सङ्कुलं सम्मिश्रं सङ्क्वणितं ध्वनिर्यस्मिंस्तथाविधं च यथा भवति तथा। यद्वा, कलं मनोज्ञं शिञ्जितयो पादचलनेन ध्वनतोर्नूपुरयोर्मञ्जीरयोः, मञ्जु मनोज्ञं यथा भवति तथा ताल्व्यापृततया मिलतोः करयोर्बाह्वोः कङ्कणानां वलयानां च सङ्कुलं सम्मिश्रं सङ्क्वणितं ध्वनिर्यस्मिन् कर्मणि तद्यथा भवति तथा। ननृते नृत्तमकारि॥

भगवतो नर्तनमुद्वीक्ष्य पशुपादयस्तुष्टा बभूवुरित्याह—

**जहृषुः पशुपास्तुतुषुर्मुनयो**
**ववृषुः कुसुमानि सुरेन्द्रगणाः।**

त्वयि नृत्यति मारुतगेहपते
परिपाहि स मां त्वमदान्तगदात् ॥ १० ॥

जहृषुरिति ॥ हे मारुतगेहपते त्वयि नृत्यति पशुपाः जहृषुः मुनयः तुतुषुः सुरेन्द्रगणाः कुसुमानि ववृषुः । मारुतगेहपते गुरुवायुपुरनाथ । त्वयि श्रीकृष्णे । नृत्यनि नृत्तं कुर्वति सति । पशुपाः गोपाः । जहृषु हृष्टा बभूवु । मुनय महर्षय । तुतुषुः तुष्टा बभूवुः । सुरेन्द्रगणाः सुरेन्द्राणा सुरश्रेष्ठाना गणा. समूहाः । कुसुमानि सुरतरुप्रसूनानि । ववृषुः अभ्यवर्षन् । अथ प्रार्थयते—सः त्वं माम् अदान्तगदात् परिपाहि इति । सः तथाविध । त्वं श्रीकृष्णः । मामनन्यशरणम् । अदान्तगदात् । अदान्तात् अविरतं वर्धमानात् गदात् आमयौघात् । परिपाहि त्रायस्व ॥

इति कालियमर्दने कालियशिरसि भगवन्नर्तनवर्णनं
चतुष्पञ्चाशत्तमदशकम् ॥

## षट्पञ्चाशत्तमदशकम् ।

अथ पूर्वोक्तं भगवतो नर्तनमेव वर्णयति—

रुचिरकम्पितकुण्डलमण्डलः सुचिरमीश ननर्तिथ पन्नगे ।
अमरताडितदुन्दुभिसुन्दरं वियति गायति दैवतयौवने ॥ १ ॥

रुचिरकम्पितेति ॥ हे ईश त्वं वियति दैवतयौवते अमरताडितदुन्दुभिसुन्दरं गायति रुचिरकम्पितकुण्डलमण्डल. सुचिरं पन्नगे ननर्तिथ । ईश जगद्रक्षक । त्वं श्रीकृष्णः । वियति नभसि विमानेषु । दैवतयौवते देवयुवतीसमूहे । अमरताडितदुन्दुभिसुन्दरम् अमरैर्देवैः ताडिता दुन्दुभयो यस्मिन् कर्मणि तत् सुन्दरं मनोज्ञं च यथा भवति तथा गायति सति ।

रुचिरकम्पितकुण्डलमण्डलः रुचिरं- मनोज्ञं यथा भवति तथा कम्पितं कुण्डल मण्डलं कर्णाभरणमण्डलं यस्य सः। सुचिरं चिराय। पन्नगे कालियस्य फणासु। ननर्तिथ नृत्तं कृतवानसि॥

**नमति यद्यदमुष्य शिरो हरे परिविहाय तदुन्नतमुन्नतम् ।**
**परिमथन् पदपङ्करुहा चिरं व्यहरथाः करतालमनोहरम् ॥ २ ॥**

**नमतीति ॥** हे हरे त्वम् अमुष्य यत् यत् शिरः नमति तत् परिविहाय उन्नतम् उन्नतम् पदपङ्करुहा परिमथन् करतालमनोहरं चिरं व्यहरथाः। हरे विष्णो त्वं श्रीकृष्ण.। अमुष्य कालियस्य। शिरः शीर्षम्। नमति। भगवत्पादा रविन्दमथितत्वादिति भावः। परिविहाय परित्यज्य। उन्नतम् उच्चैर्वर्तमानमन्यत् शिरः। पदपङ्करुहा पादारविन्देन। परिमथन् परितो निर्मथ्य। करताल मनोहरं करतालेन मनोहरं मनोज्ञं यथा भवति तथा। चिरं चिराय। व्यहरथाः विहारं कृतवानसि॥

अथ नागपत्न्यो भगवन्तं प्रणेमुरित्याह—

**त्वदवभग्नविभुग्नफणागणे गलितशोणितशोणितपाथसि ।**
**फणिपतावत्रसीदति सन्नतास्तदबलास्तव माधव पादयोः ॥ ३ ॥**

**त्वदवभग्नेति ॥** हे माधव तदबलाः तव पादयोः सन्नताः। माधव लक्ष्मीपते। तदबलाः तस्य कालियस्य अबलाः स्त्रियः। तव श्रीकृष्णस्य। पा दयोः चरणारविन्दयोः। सन्नताः प्रणेमुः। प्रणामहेतुमाह—फणिपतौ त्व दवभग्नविभुग्नफणागणे गलितशोणितशोणितपाथसि अवसीदति इति। फणिपतौ कालिये। त्वदवभग्नविभुग्नफणागणे त्वया श्रीकृष्णेन अवभग्नः मृदितः अत एव विभुग्नः विशेषेण भुग्नः नम्रः फणागणः फणामण्डलं यस्य तस्मिन्। एवं गलित शोणितशोणितपाथसि गलितेन वान्तेन शोणितेन रुधिरेण शोणितमरुणीकृतं पाथो यमुनाजलं येन तस्मिन्। अवसीदति भग्नगात्रे च सति॥

नागपत्न्यो भगवन्तं तुष्टुवुरित्याह—

**अयि पुरैव चिराय परिश्रुतत्वदनुभावविलीनहृदो हि ताः ।**
**मुनिभिरप्यनवाप्यपथैः स्तवैर्नुनुवुरीश भवन्तमयन्त्रितम् ॥ ४ ॥**

अयीति ॥ अयि ईश ता भवन्त मुनिभि अपि अनवाप्यपथै स्तवै अयन्त्रित नुनुवु । अयीति सम्बोधने । ईश जगद्रक्षक । ता नागपत्न्य । भवन्त श्रीकृष्णम् । मुनिभि महर्षिभि । अपिर्विरोधे । अनवाप्य प्राप्तु ज्ञातुमशक्य पन्था सकलनिष्कलरूपार्थयोजनरूपो मार्गो येषु तै । स्तवै स्तोत्रै । अयन्त्रितम् अनर्गल यथा भवति तथा । नुनुवु तुष्टुवु । ननु कथ श्रीकृष्ण नागपत्न्य एवविधै स्तवैस्तुत्यमवागच्छन्नित्याकाङ्क्षायामाह—हि पुरा एव चिराय परिश्रुतत्वदनुभावविलीनहृद इति । हि यस्मात् । पुरा पूर्वम् । एवेत्यवधारणे । चिराय चिरेण । परिश्रुतत्वदनुभावविलीनहृद परिश्रुतेन परित श्रुतेन त्वदनुभावेन तव श्रीकृष्णस्य अनुभावेन माहात्म्येन । विलीनहृद श्लथहृदया । तस्मात्तथाविधै स्तवैर्नुनुवु रित्यर्थ ॥

अथ कालियो भगवन्त प्रणनामेत्याह—

**फणिवधूगणभक्तिविलोकनप्रविकसत्करुणाकुलचेतसा ।**
**फणिपतिर्भवताऽच्युत जीवितस्त्वयि समर्पितमूर्तिरवानमत् ॥ ५ ॥**

फणिवधूगणेति ॥ हे अच्युत भवता जीवित फणिपति त्वयि समर्पितमूर्ति अवानमत् । अच्युत विष्णो । भवता श्रीकृष्णेन । जीवित मरणात् निवर्तित । फणिपति कालिय । त्वयि श्रीकृष्णे । समर्पितमूर्ति समर्पिता सम्यगर्पिता मूर्तिस्तनुर्यस्य स । अवानमत् नमश्चकार । साष्टाङ्गपात प्रणनामेत्यर्थ । फणिपतेर्जीवने हेतुमाह—फणिवधूगणभक्तिविलोकनप्रविकसत्करुणाकुलचेतसा इति । फणिवधूगणस्य नागपत्नीसमूहस्य भक्तेर्विलोकनेन प्रकर्षेण विकसन्ती या करुणा तया आकुल चेतो मनो यस्य तेन ॥

अथ कालियस्तस्माज्जिर्जगामेत्याह—

**रमणकं व्रजवारिधिमध्यगं फणिरिपुर्न करोति विरोधिताम् ।**
**इति भवद्वचनान्यतिमानयन् फणिपतिर्निरगादुरगैः समम् ॥ ६ ॥**

**रमणकमिति ॥** फणिपतिः उरगैः समं निरगात् । फणिपतिः कालियः । उरगैः स्वानुचरैः फणिभिः । समं सह । निरगात् निर्जगाम । निर्गमे हेतुः— इति भवद्वचनानि अतिमानयन्निति । इति एवंविधानि । भवद्वचनानि भवतः श्रीकृष्णस्य वचनानि वचांसि । अतिमानयन् अतीव मानयन् । भगवतो वचनप्रकारमाह—त्वं रमणकं व्रज इति । त्वं कालियः । रमणकं तदाख्यं देशम् । व्रज गच्छ । ननु कुत्रायं प्रदेश इत्याकाङ्क्षायामाह—वारिधिमध्यगमिति । समुद्रमध्यवर्तिनमित्यर्थः । ननु वैनतेयस्सापराधं मामन्यत्र दृष्ट्वा हनिष्यति, तस्मात् कथमितो मया गम्यत इत्याशङ्कायामाह—फणिरिपु. विरोधितां न करोति इति । फणिरिपु. वैनतेयः । विरोधितां विरोधम् । न करोति न करिष्यति । मच्छासनादिति भाव. । वर्तमानसामीप्ये लट् ॥

भगवानपि स्वजनै· सङ्गतोऽभूदित्याह—

**फणिवधूजनदत्तमणिव्रजज्वलितहारदुकूलविभूषितः ।**
**तटगतैः प्रमदाश्रुविमिश्रितैः समगथाः स्वजनैर्दिवसावधौ ॥ ७ ॥**

**फणिवधूजनेति ॥** त्वं फणिवधूजनदत्तमणिव्रजज्वलितहारदुकूलविभूषितः दिवसावधौ तटगतैः प्रमदाश्रुविमिश्रितैः स्वजनै. समगथाः । त्वं श्रीकृष्णः । फणिवधूजनदत्तमणिव्रजज्वलितहारदुकूलविभूषितः फणिवधूजनै नागपत्नीजनैः दत्तैः अर्पितैः मणिव्रजैः रत्नसञ्चयैः ज्वलितै. उज्ज्वलैः हारैः मुक्तादामभि. दुकूलैरम्बरैश्च विशेषेण भूषितः अलङ्कृतः । दिवसावधौ सायम् । तटगतै. तीरवर्तिभिः । प्रमदाश्रुविमिश्रितै. प्रमदाश्रुभिः सन्तोषाश्रुभिः विमिश्रितैः युक्तैः । स्वजनैः नन्दादिभिः । समगथाः सङ्गतोऽभू· ॥

अथ पशुपान् दावाग्निः पर्यवेष्टयदित्याह—

**निशि पुनस्तमसा व्रजमन्दिरं व्रजितुमक्षम एव जनोत्करे ।**
**स्वपति तत्र भवच्चरणाश्रये दवकृशानुररुन्ध समन्ततः ॥ ८ ॥**

निशीति ॥ पुन निशि भवच्चरणाश्रये जनोत्करे तव एव स्वपति दवकृशानु समन्तत अरुन्ध। पुन अनन्तरम्। निशि रात्रौ। भवच्च रणाश्रये श्रीकृष्णचरणारविन्दशरणे। अनेन तेषा निरपायता ध्वन्यते। जनोत्करे जनसञ्चये। तत्रैव यमुनातीर एव। स्वपति निद्राणे सति। दवकृशानु दवपावक। समन्तत समन्तात्। अरुन्ध अवृणात्। ननु कुतो नन्दादयो न व्रज प्रति जग्मुरित्यत्राह—तमसा व्रजमन्दिर व्रजितुम् अक्षमे इति। तमसा अन्धकारेण। व्रजमन्दिर व्रजपदम्। व्रजितु गन्तुम्। अक्षमे असमर्थे ॥

भगवांस्तमग्नि पपावित्याह—

प्रबुधितानथ पालय पालयेत्युदयदार्तरवान् पशुपालकान्।
अवितुमाशु पपाथ महानल किमिह चित्रमय खलु ते मुखम् ॥ ९ ॥

प्रबुधितानिति॥ त्वम् अथ प्रबुधितान् पालय पालय इति उदय दार्तरवान् पशुपालकान् अवितुम् आशु महानल पपाथ। त्व श्रीकृष्ण। अथ अनन्तरम्। प्रबुधितान् कृशानूष्मणा प्रबुद्धान्। पालय त्रायस्व। द्विरुक्तिस्सम्भ्रमात्। यत्तानलादित्यनुक्तिरपि सम्भ्रमातिशयादित्यवगन्तव्यम्। इति एवम्। उदयदार्तरवान् उदयन् उद्गच्छन् आर्तरव आर्तनादो येषा तान्। पशुपालकान् गोपान्। अवितु त्रातुम्। आशु झटिति। महा नल महान्तमग्निम्। पपाथ पीतवानसि। नात्र विस्मय कार्य इत्याह— इह किं चित्रमिति। इह अग्निपाने। चित्रम् अद्भुतम्। न चित्रमत्ये त्यर्थ। कुत इत्यत आह—अय ते मुख खलु इति। अयम् अग्नि। ते तव श्रीकृष्णस्य। मुख वक्त्रम्। खल्विति प्रसिद्धौ ॥

गोपा भगवन्त नुनुवुरित्याह—

शिखिनि वर्णत एव हि पीतता परिलसत्यधुना क्रिययाऽप्यसौ।
इति नुत पशुपैर्मुदितैर्विभो हर हरे दुरितै. सह मे गदान् ॥ १० ॥

शिखिनीति । हे विभो हरे पशुपैः इति नुत. त्वं दुरितैः सह मे गदान् हर । विभो परिपूर्ण । हरे विष्णो । पशुपैः गोपैः । इति अनेन प्रकारेण । नुतः स्तुतः । त्वं श्रीकृष्णः । दुरितैः रोगकारणीभूतैः पापैः । सह समम् । अन्यथा पुनरपि तत्सम्भवात् । मे ममानन्यशरणस्य । गदान् आमयान् । हर नाशय । पशुपानां स्तुतौ हेतु ---मुदितैरिति । अनलपान दर्शनेन परितुष्टैरित्यर्थः । स्तुतिप्रकारमाह---शिखिनि वर्णतः एव पीतता हि इति । शिखिनि अग्नौ । वर्णत· वर्णेन अभेदे तसिः । एवकारेणान्येषां व्यवच्छेदः । पीतता पीतत्वम् । हीति प्रसिद्धौ । सत्यम्, किं तेनेत्यत्राह— अधुना असौ क्रियया अपि परिलसति इति । अधुना इदानीम् । असौ पीतता । क्रियया कर्मणा । अपिर्विरोधे । पीततायाः गुणात्मकतया क्रियात्मकत्वाभावादग्नौ क्रियात्मकस्य पीतत्वस्यासम्भाव्यत्वाद्विरोधः । परिलसति प्रकाशते । क्रियया पीतता पानक्रियाकर्मत्वं परिलसतीति तत्परिहार । विरोधाभासोऽत्रालङ्कारः ॥

इति कालियमर्दने कालियस्य भगवदनुग्रहवर्णनं भगवतो दवानलपानवर्णनं च षट्पञ्चाशत्तमदशकम् ॥

---

सप्तपञ्चाशत्तमदशकम् ।

अथ प्रलम्बासुरवधोपयुक्तां भगवतो वनयात्रां प्रस्तौति द्वाभ्याम्—

रामसखः क्वापि दिने कामद भगवन् गतो भवान् विपिनम् ।
सूनुभिरपि गोपानां धेनुभिरभिसंवृतो लसद्वेषः ॥ १ ॥

रामसख इति ॥ हे कामद भगवन् भवान् क्वापि दिने रामसखः गोपानां सूनुभिः धेनुभिः अपि अभिसंवृतः लसद्वेषः विपिनं गत. ।

कामान् अभिलषितानर्थान् भक्तेभ्यो ददातीति कामदः तथाविध। भगवन् ऐश्वर्यादिसम्पन्न। अनेन सम्बोधनेन भगवतो निर्भयत्वं द्योत्यते। भवान् श्रीकृष्णः। क्वापि कुत्रचित्। दिने दिवसे। रामसखः रामो बलभद्रः सखा यस्य स। रामेण सहेत्यर्थ.। सूनुभिः पुत्रैः। धेनुभिः गोभि·। अपिस्समुच्चये। अभिसंवृत. अभितः संवृत. परिवृतः। लसद्वेषः लसन् शोभमानो वेषो नेपथ्यं यस्य सः। विपिनं वनम्। गत. जगाम॥

सन्दर्शयन् बलाय स्वैरं वृन्दावनश्रियं विमलाम्।
काण्डीरैस्सह बालैर्भाण्डीरकमागमो वटं क्रीडन् ॥ २ ॥

सन्दर्शयन्निति॥ त्वं बलाय विमला वृन्दावनश्रियं स्वैरं सन्दर्शयन् काण्डीरैः बालैः सह क्रीडन् भाण्डीरकं वटम् आगम.। त्वं श्रीकृष्णः। बलाय बलभद्राय। विमलां निर्मलाम्। वृन्दावनश्रियं वृन्दावनस्य श्रियं शोभाम्। स्वैरं सुखं यथा भवति तथा। सन्दर्शयन् प्रदर्शयन्। काण्डीरैः याष्टिकै यष्टिधरैरित्यर्थ। बालै. गोपपुत्रै.। सह समम्। क्रीडन् विहरन्। भाण्डीरकं भाण्डीरकाख्यम्। वटं वटवृक्षम्। आगम. गतवानसि॥

प्रलम्बासुरो भगवन्त प्रापेत्याह—

तावत्तावकनिधनस्पृहयालुर्गोपमूर्तिरदयालुः।
दैत्यः प्रलम्बनामा प्रलम्बबाहुं भवन्तमापेदे ॥ ३ ॥

तावदिति॥ तावत् प्रलम्बनामा दैत्य. प्रलम्बबाहुं भवन्तम् आपेदे। प्रलम्बनामा प्रलम्बाख्यः। दैत्य. असुरः। प्रलम्बबाहुम् आजानुलम्बिबाहुद्वययुक्तम्। भवन्तं श्रीकृष्णम्। आपेदे प्राप। प्रलम्बासुरस्य स्वरूपमाह—गोपमूर्तिः इति। गोपस्य मूर्तिस्तनुरिव मूर्तिर्यस्य तथाविध. सन्। ननु किमर्थं भगवन्तमापेदे इत्यत्राह—तावकनिधनस्पृहयालु इति।

त्वन्निग्रहेच्छावानित्यर्थः । ननु तस्य कथं तादृशजगन्मोहनविग्रहं भगवन्तं हन्तुमिच्छा समभूदित्याशङ्कायामाह—अदयालुः इति । दयालुः दयावान् न भवतीत्यदयालुः । क्रूरकर्मेत्यर्थः । किं दुष्करं क्रूराणामिति भावः ॥

भगवांस्तेन सख्यं चकारेत्याह—

*जानन्नप्यविजानन्निव तेन समं निबद्धसौहार्दः ।*
**वटनिकटे पटुपशुपव्याबद्धं द्वन्द्वयुद्धमारब्धाः ॥ ४ ॥**

**जानन्निति ॥** त्वं तेन समं निबद्धसौहार्दः वटनिकटे पटुपशुपव्याबद्धं द्वन्द्वयुद्धम् आरब्धाः । त्वं श्रीकृष्णः । तेन प्रलम्बेन । समं सह । निबद्धसौहार्दः निबद्धं कृतं सौहार्दं मैत्री येन स । वटनिकटे वटवृक्षस्य समीपे । पटुपशुपव्याबद्धं पटुभिः निपुणैः पशुपैः श्रीदामप्रभृतिभिः व्याबद्धम् इतरेतरसम्बद्धम् । आरब्धाः प्रारब्धवानसि । ननु किमज्ञानात् भगवता सौहार्दं निबद्धं तेनेति चेन्नेत्याह—जानन् अपि अविजानन् इवेति । जानन् असुरमवगच्छन् । अपिर्विरोधे । अविजानन् अनवगच्छन् । तस्य वैरोत्पादनायेति भावः ॥

अथ द्वन्द्वयुद्धप्रकारमेव दर्शयति द्वाभ्याम्—

**गोपान् विभज्य तन्वन् सङ्घं बलभद्रकं भवत्कमपि ।**
**त्वद्बलभीरुं दैत्यं त्वद्बलगतमन्वमन्यथा भगवन् ॥ ५ ॥**

**गोपानिति ॥** हे भगवन् त्वं गोपान् विभज्य बलभद्रकं भवत्कम् अपि सङ्घं तन्वन् दैत्यं त्वद्बलगतम् अन्वमन्यथाः । भगवन् ऐश्वर्यादिसम्पन्न । अनेन सम्बोधनेन प्रलम्बस्यात्मबलप्रवेशने भीत्यभावो द्योत्यते । त्वं श्रीकृष्णः । विभज्य योगिप्रतियोगिभेदेन विभज्य । बलभद्रकं बलभद्रसम्बन्धि । भवत्कं भवत्सम्बन्धि । अपिस्समुच्चये । तन्वन् कुर्वन् । दैत्यम् असुरं प्रलम्बम् । त्वद्बलगतं त्वत्सङ्घस्थम् । अन्वमन्यथाः अनुज्ञातवानसि । ननु किमर्थमेनं त्वद्बलगतमकरोदिति चेत्तत्राह—त्वद्बलभीरुमिति । तव

बलात् त्वद्बलात् भीरु भयशील्म् । अथ भाव —प्रलम्बस्त्वेवमचिन्तयत् , अस्मिन् द्वन्द्वयुद्धे पराजितो जेतार वहेदिति न्याय , दिष्टचा मिथ्या पराजितो भूत्वा अह मनयोरन्यतर नेष्यामि, तत्र रामसङ्कस्थ कृष्ण वहन् कदाचित्तृणावर्त इव विपन्न स्यामिति ॥

कल्पितविजेतृवहने समरे परयूथग स्वदयिततरम् ।
श्रीदामानमधत्था पराजितो भक्तदासता प्रथयन् ॥ ६ ॥

कल्पितेति ॥ त्व समरे परयूथग श्रीदामानम् अधत्था । त्व श्रीकृष्ण । समरे द्वन्द्वयुद्धे । परयूथग बलभद्रयूथगतम् । श्रीदामान तन्ना मधेय सखायम् । अधत्था ऊढवानसि । वहनहेतुमाह —कल्पितविजेतृवहने परा जित इति । कल्पितविजेतृवहने कल्पित निश्चित विजेतृणा वहन यस्मिन् इति समरविशेषणम् । पराजित श्रीदाम्ना निर्जित सन् । निर्जितेन जेतुर्व हनस्यावश्यकर्तव्य यादिति भाव । ननु कतो भगवता नान्य कश्चिदूढ इति चेत्तत्राह—स्वदयिततरमिति । स्वस्य दयिततरम् अतिप्रियम् । ननु किमर्थं भगवान् पराजित इत्यत्राह—भक्तदासता प्रथयन्निति । भक्तदासता भक्ताना दास्यम् । प्रथयन् प्रकटयन् । एव भक्तैराक्रम्य मम स्कन्धेऽवस्थातु शक्य मिति बोधयितु केवल पराजयमभिनीतवान्, न तु वस्तुत पराजित इति भाव ॥

अथ प्रलम्बो राम वहन्न यत्र नीतवानित्याह—

एव बहुषु च भूमन् बालेषु वहत्सु वाह्यमानेषु ।
रामविजित प्रलम्बो जहार त दूरतो भवद्भीत्या ॥ ७ ॥

एवमिति ॥ हे भूमन् एव बहुषु बालेषु वहत्सु वाह्यमानेषु च राम विजित प्रलम्ब भवद्भीत्या त दूरत जहार । भूमन् परिपूर्ण । एव उक्त रीत्या । बहुषु असख्येषु । बालेषु गोपकुमारेषु । नेतार वहत्सु, जेत्रा वाह्यमानेषु च सत्सु । रामविजित रामेण बलभद्रेण विजित । प्रलम्ब तन्नामा असुर । भवद्भीत्या भवत श्रीकृष्णात् भीत्या भयेन । त रामम् ।

दूरतः दूरे। जहार हृतवान्। अवरोहणस्थानावधि शनैर्गत्वा ततः क्षिप्रं नीतवानित्यर्थः॥

प्रलम्बः स्वरूपं प्राप्तवानित्याह—

**त्वद्दूरं गमयन्तं तं दृष्ट्वा हलिनि विहितगरिमभरे।**
**दैत्यः स्वरूपमागाद्यद्रूपात् स हि बलोऽपि चकितोऽभूत्॥ ८॥**

**त्वद्दूरमिति॥** दैत्यः स्वरूपम् आगात्। दैत्यः असुरः। स्वरूपं स्वस्य भीषणं रूपम्। आगात् प्राप। अत्र तदित्यध्याहर्तव्यम्। सः बलः अपि हि यद्रूपात् चकितः अभूत्। सः प्रसिद्धः। शेषमूर्तिरित्यर्थः। बलः बलभद्रः। किं पुनरपरे इत्यपिशब्दार्थः। हिस्त्वर्थे। यद्रूपात् यस्मा द्रूपात्। चकितः किञ्चित्त्रस्तः। मनुष्यधर्मतयेति भावः। तत् स्वरूप मिति पूर्वेणान्वयः। असुरस्य स्वरूपधारणे हेतुमाह—हलिनि विहितगरिम भरे इति। हलिनि बलभद्रे। विहितगरिमभरे उत्पादितात्मगौरवे सति। रामं वोढुमशक्यत्वात् स्वरूपमापेत्यर्थः। हलिनः आत्मगौरवोत्पादने हेतुमाह— तं त्वद्दूरं गमयन्तं दृष्ट्वा इति। तं असुरम्। त्वद्दूरं त्वत्तः श्रीकृष्णात् दूरम्। गमयन्तम् आत्मानं नीयमानम्। दृष्ट्वा विलोक्य। किन्नु खल्वयं कश्चित् दैत्यः स्यादिति शङ्कमान इति भाव.॥

अथ प्रलम्बवधमाह—

**उच्चतया दैत्यतनोस्त्वन्मुखमालोक्य दूरतो रामः।**
**विगतभयो दृढमुष्ट्या भृशदुष्टं सपदि पिष्टवानेनम्॥ ९॥**

**उच्चतयेति॥** रामः दैत्यतनो. उच्चतया दूरतः त्वन्मुखम् आलोक्य विगतभयः सपदि भृशदुष्टम् एनं दृढमुष्ट्या पिष्टवान्। रामः बलभद्रः। दैत्यतनोः असुरशरीरस्य। उच्चतया उन्नततया। किञ्चिदिव चकितोऽपीति भावः। दूरतः दूरात्। त्वन्मुखं तव श्रीकृष्णस्य मुखम्। आलोक्य दृष्ट्वा। विगतभयः विगतम् अपगतं भयं भीतिर्यस्मात् सः। सपदि झटिति।

अनधिगतम् अलब्ध निदाघस्य घर्मस्य क्रौर्यं दुस्सह ऊष्मा यत्र तस्मात् वृन्दावनान्तात् वृन्दावनमध्यात् । बहि बहिष्ठमित्यर्थ । इद काननम् ऐषीका स्यम्। उपयाता प्राप्ता । धेनव गाव । तव श्रीकृष्णस्य। विरह विषण्णा विरहेण वियोगेन विषण्णा खिन्ना । ऊष्मलग्रीष्मतापप्रसरविसर दम्भसि ऊष्मल ऊष्माधिको यो ग्रीष्मताप ग्रीष्मस्य घर्मकालस्य ताप सन्ताप । आतप इत्यर्थ । तस्य प्रसर व्याप्ति । व्याप्त सूर्यातप इत्यर्थ । स एव विसरत् व्यासम् अम्भो जलम्। तत्त्वेन प्रतीयमाना मरीचिकेत्यर्थ । तत्र आकुला पर्यटन्त्य । अयमर्थ —पिपासाकुला गाव मृगतृष्णिका मालोक्य सलिलभ्रमेण तत्समीपमुपसर्पन्ति, तदा तत्र जलमलभमाना किञ्चि द्दूरे ता दृष्ट्वा तत्र जल वर्तत इति मत्वा तत्र गच्छन्ति, तदा तत्रा प्येवम्, इतीतस्ततश्चरन्त्य इति। म्भस्य पिपासाकुलिततया पर्यटनखेदेन च निश्चेष्टताम्। आपु प्रापु । यद्वा, ऊष्मले यो ग्रीष्म तत्तापप्रसरैर्विसर दम्भसि नष्टजले इति बहिर्देशविशेषणम् । अथवा, ऊष्मलग्रीष्मतापप्रसरेण विस रन्त्या व्याप्तया अम्भस्यया पिपासया आकुला परवशा ॥

तदानीन्तन भगवत कृत्यमाह—

तदनु सह सहायैर्दूरमन्विष्य शौरे
गलितसरणिमुञ्जारण्यसञ्जातखेदम् ।
पशुकुलमभिवीक्ष्य क्षिप्रमानेतुमारा-
त्त्वयि गतवति ही ही सर्वतोऽग्निर्जजृम्भे ॥ २ ॥

तदन्विति ॥ हे शौरे तदनु त्वयि सहायै सह दूरम् अन्विष्य गलितसरणिमुञ्जारण्यसञ्जातखेद पशुकुलम् अभिवीक्ष्य क्षिप्रम् आनेतुम् आरात् गतवति ही ही सर्वत अग्नि जजृम्भे। शौरे वसुदेवसूनो। तदनु तदानीम्। त्वयि श्रीकृष्णे। सहायै अनुचरैर्गोपपुत्रै । सह समम्। दूर दूरदेशे। अन्विष्य गोकुलमन्वेषयन्नित्यर्थ । गलितसरणि मार्गभ्रष्टम्। अथवा गलित सरणिमुञ्जारण्यसञ्जातखेद गलिता नष्टा सरणि मार्गो यस्मिंस्तस्मिन् मुञ्जारण्ये

मुञ्जतृणभूयिष्ठे अरण्ये सञ्जातः खेदो यस्य तत्। पशुकुलं गोकुलम्। अभिवीक्ष्य दृष्ट्वा। क्षिप्रं झटिति। आरात् समीपम्। गतवति प्राप्तवति सति। ही ही कष्टम्। सर्वत. सर्वत। अग्निः दवदहनः। जजृम्भे ववृधे॥

दावाग्निना पीडिताः सर्वे भगवन्तं शरणं जग्मुरित्याह—

सकलहरिति दीप्ते घोरभाङ्कारभीमे
　शिखिनि विहतमार्गा अर्धदग्धा इवार्ताः।
अहह भुवनबन्धो पाहि पाहीति सर्वे
　शरणमुपगतास्त्वां तापहर्तारमेकम्　　॥ ४ ॥

सकलेति॥ सर्वे इति त्वां शरणम् उपगताः। सर्वे अखिला गोपाः। इति एवं कथयन्तः। त्वां श्रीकृष्णम्। शरणं रक्षितारम्। उपगताः प्राप्ताः। कथनप्रकारमाह—अहह हे भुवनबन्धो पाहि पाहि इति। अहह हन्त। भुवनबन्धो भुवनाना लोकानां बन्धो योगक्षेमैक निरत। पाहि नस्त्रायस्व। सम्भ्रमाद्विरुक्तिः। ननु कुतो नान्यं कञ्चित् शरणं गता इत्याशङ्कायामाह—तापहर्तारम् एकमिति। तापहर्तारं सन्ताप हरम्। एकम् अद्वितीयम्। तथा पूर्वमनुभूतत्वादिति भाव.। ननु किमर्थं ते भगवन्तं शरणं जग्मुरित्याकाङ्क्षायामाह—घोरभाङ्कारभीमे शिखिनि दीप्ते सकलहरिति विहतमार्गा. अर्धदग्धा इव आर्ताः इति। घोरभाङ्कार भीमे घोरेण भाङ्कारेण भीमे भयानके। शिखिनि अग्नौ। दीप्ते ज्वलिते सति। अत एव सकलहरिति सर्वासु दिक्षु। विहतमार्गाः विहत. प्रतिहतो मार्गो येषां ते। अर्धदग्धा इवेत्यनेन दग्धत्वाभावेऽपि तेषां तथा प्रतीति र्द्योत्यते। आर्ताः पीडावन्तः सन्तः॥

भगवतो गोगोपालपरित्राणनप्रकारमाह—

अलमलमतिभीत्या सर्वतो मीलयध्वं
　दृशमिति तव वाचा मीलिताक्षेषु तेषु।

क्व नु दवदहनोऽसौ कुत्र मुञ्जाटवी सा
सपदि वटतिरे ते हन्त भाण्डीरदेशे ॥ ५ ॥

अलमिति ॥ तेषु मीलिताक्षेषु असौ दवदहनः क्व नु, सा मुञ्जाटवी कुत्र, हन्त ते सपदि भाण्डीरदेशे वटतिरे। तेषु गोपालेषु। मीलिताक्षेषु निमीलितनयनेषु सत्सु। असौ पूर्वोक्तः। दवदहनः वनानलः। क्व नु न कुत्रापीत्यर्थः। सा पूर्वोक्ता। मुञ्जाटवी, मुञ्जारण्यम्। कुत्र न क्वाप्यासीत्। हन्तेत्याश्चर्ये। ते गोगोपालाः। सपदि झटिति। भाण्डीरदेशे यत्र भाण्डीरकाख्यो वटः, तत्रेत्यर्थः। वटतिरे अवर्तन्त। भगवता योगैश्वर्येण ते भाण्डीरदेशं नीता इति भावः। कुतस्ते निमीलनं चक्रुरित्याकाङ्क्षायामाह—इति तव वाचा इति। इति एवम्। तव श्रीकृष्णस्य। वाचा वचनेन। वचनप्रकारमाह—अतिभीत्या अलम् अलम्, सर्वतः यूयं दृशं मीलयध्वम् इति। अतिभीत्या महाभयेन। अलं पर्याप्तम्। मा भीता भूतेत्यर्थः। द्विरुक्तिस्तेषां सम्भ्रमापनयनाय। सर्वतः सर्वे। दृशं चक्षुः। जातावेकवचनम्। मीलयध्वं मीलनं कुरुत ॥

भगवान् पुनरपि यथापूर्वं वने चचारेत्याह—

जय जय तव माया केयमीशेति तेषां
नुतिभिरुदितहासो बद्धनानाविलासः।
पुनरपि विपिनान्ते प्राचरः पाटलादि-
प्रसवनिकरमात्रग्राह्यघर्मानुभावे ॥ ६ ॥

जय जयेति ॥ त्वम् उदितहासः बद्धनानाविलासः पुनः अपि विपिनान्ते प्राचरः। त्वं श्रीकृष्णः। उदितहासः जातस्मितः। बद्धनानाविलासः बद्धाः सम्बद्धाः नानाविधाः विलासाः विलासचेष्टितानि यस्मिन् सः। गोपान् प्रीणयितुं बहुविधानि विलासचेष्टितानि कुर्वन्नित्यर्थः। पुनः अनन्तरम्। अपिस्समुच्चये। विपिनान्ते वनान्तरे। प्राचरः विचेरिथ। वनान्तरस्य रम्यतामाह—पाटलादिप्रसवनिकरमात्रग्राह्यघर्मानुभावे इति। पाटला

दीनां पाटलाशिरीषप्रभृतीनां ग्रीष्मे पुष्पितानां प्रसवानां कुसुमानां निकरः समूह एव प्रसवनिकरमात्रं तेन ग्राह्यः अनुमातुं शक्यो घर्मस्य ग्रीष्मस्य अनुभावः ऊष्मा यस्मिन्। हासोदये हेतुमाह—इति तेषां नुतिभिः इति। इति एवम्। तेषां गोपानाम्। नुतिभिः स्तुतिभिः। स्तुतिप्रकारमाह—हे ईश त्वं जय जय, इयं तव माया का इति। ईश जगद्रक्षक। त्वं श्रीकृष्णः। जय सर्वोत्कर्षेण वर्तस्व। आदरभक्तिबहुमानादिना द्विरुक्तिः। इयम् अधुना दृष्टा। तव श्रीकृष्णस्य। माया ऐषीकस्थानां निमीलिताक्षाणामस्माकं झटिति भाण्डीरकदेशप्रापणरूपा। का किंस्वरूपा। अनिर्वचनीयेत्यर्थः॥

अथ ग्रीष्मकालिकं भगवतो वनविहारमाह—

त्वयि विमुखमिवोच्चैस्तापभारं वहन्तं
तव भजनवदन्तः पङ्कमुच्छोषयन्तम्।
तव भुजवदुदञ्चद्भूरितेजःप्रवाहं
तपसमयमनैषीर्यामुनेषु स्थलेषु ॥ ७ ॥

*त्वयीति*॥ *त्वं यामुनेषु स्थलेषु तपसमयम् अनैषीः*। *त्वं श्रीकृष्णः*। यामुनेषु यमुनासम्बन्धिषु। स्थलेषु प्रदेशेषु। यमुनातटेष्वित्यर्थः। विहरन्निति शेषः। तपसमयं घर्मकालम्। अनैषीः नीतवानसि। यमुनातरङ्गकणवाहिनो मारुतस्य तत्र सत्त्वादिति भावः। ग्रीष्मकालस्योपमात्रयमाह—त्वयि विमुखमिव इति। त्वयि श्रीकृष्णे। विमुखं पराङ्मुखम्। अभक्तमित्यर्थः। अत्र साधारणधर्मं दर्शयति—उच्चैः तापभारं वहन्तमिति। उच्चैः उन्नतम्। तापभारं तापस्य ऊष्मणः भारम्। अन्यत्र तापस्य सन्तापस्य मनोदुःखस्य भारम्। वहन्तं दधानम्। तव भजनवत्। तव श्रीकृष्णस्य। भजनवत् भजनमिव। साधारणधर्मं दर्शयति—अन्तः पङ्कम् उच्छोषयन्तम् इति। अन्तः सरस्याद्यन्तर्गतम्। अन्यत्र आत्मनि। वर्तमानमिति शेषः। पङ्कं कर्दमम्। अन्यत्र किल्बिषम्। उच्छोषयन्तम् उच्चैः शोषयन्तम्।

अन्यत्र नाशयन्तम्। तव भुजवत् तव श्रीकृष्णस्य। भुजवत् भुजमिव। अत्र साधारणो धर्मः—उदञ्चद्भूरितेजःप्रवाहमिति। उदञ्चन् उद्रिक्तः भूरितेजःप्रवाहः महतस्तेजसः प्रकाशस्य सूर्यातपस्य। अन्यत्र प्रतापस्य। प्रवाहो यस्मिंस्तम्। त्रिष्वप्युपमासु साधारण्यं धर्मस्य श्लेषकृतमित्यवसेयम्॥

अथ वार्षिकं विहरणमाह—

तदनु जलदजालैस्त्वद्वपुस्तुल्यभाभि-
विकसदमलविद्युत्पीतवासोविलासैः।
सकलभुवनभाजां हर्षदां वर्षवेलां
क्षितिधरकुहरेषु स्वैरवासी व्यनैषीः ॥ ८ ॥

तदन्विति॥ त्वं तदनु क्षितिधरकुहरेषु स्वैरवासी वर्षवेलां व्यनैषीः। त्वं श्रीकृष्णः। तदनु ग्रीष्मावसाने। क्षितिधरकुहरेषु गोवर्धनकन्दरासु। स्वैरवासी सुखेन निवसन्। वर्षवेलां वर्षासमयम्। व्यनैषीः नीतवानसि। वर्षवेलाया रमणीयतामाह—सकलभुवनभाजां हर्षदामिति। सकलभुवनभाजां सकलानां सर्वेषां भुवनभाजां लोकवासिनाम्। हर्षदां सन्तोषदायिनीम्। अत्र हेतुमाह—जलदजालैः इति। जलदानां मेघानां जालैः समूहैः। हेतौ तृतीया। मेघानां सकलजनसन्तोषजननसामर्थ्यं दर्शयति—त्वद्वपुस्तुल्यभाभि इति। तव श्रीकृष्णस्य वपुषो लीलाविग्रहस्य तुल्यभाभिः समानकान्तिभिः। भगवल्लीलाविग्रहस्य सर्वजनानन्दकरतया तत्तुल्यरूपाणां मेघानामपि तथात्वसम्भवादिति भावः। साधारणधर्मान्तरमप्याह—विकसदमलविद्युत्पीतवासोविलासैः इति। विकसन् प्रकाशमानः अमला निर्मला विद्युत् तडिदेव पीतवासः पीताम्बरं तस्य विलासः शोभा येषां तैः। अत्र जलदजालैरुपलक्षितां सन्तापनिवृत्त्या सस्यसम्पत्त्याच हर्षदामित्यपि वाक्ययोजना कर्तुं शक्यत इत्यपि द्रष्टव्यम्॥

गोवर्धनाचलस्तदानीं भगवन्तमभजतेत्याह—

कुहरतलनिविष्टं त्वां गरिष्ठं गिरीन्द्रः
शिखिकुलनवकेकाकाकुभिः स्तोत्रकारी ।
स्फुटकुटचकदम्बस्तोमपुष्पाञ्जलिं च
प्रविदधदनुभेजे देव गोवर्धनोऽसौ ॥ ९ ॥

कुहरतलेति ॥ हे देव असौ गोवर्धनः गिरीन्द्रः कुहरतलनिविष्टं त्वाम् अनुभेजे । देव प्रकाशमान । असौ अनुपदमुक्तः । गोवर्धनः तन्नामा गिरीन्द्रः पर्वतश्रेष्ठः । कुहरतलनिविष्टं कुहरतले गुहाभ्यन्तरे निविष्टम् उपविष्टम् । त्वां श्रीकृष्णम् । अनुभेजे अभजत । श्रीकृष्णस्य भजनीयता माह—गरिष्ठमिति । सर्वोत्कृष्टमीश्वरमित्यर्थः । गोवर्धनस्य भजनप्रकार माह—शिखिकुलनवकेकाकाकुभिः स्तोत्रकारी स्फुटकुटचकदम्बस्तोमपुष्पाञ्जलिं प्रविदधत् च इति । शिखिकुलनवकेकाकाकुभिः शिखिकुलानां मयूरनिवहा नां नवाः वर्षारम्भोद्गताः केकाः शब्दविशेषा एव काकवः भक्त्यतिशय जनिता उक्तिविशेषास्ताभिः । स्तोत्रकारी स्तुतिं कुर्वाणः । स्वयं स्तोतु मशक्यतया मयूरकेकाः स्तुतीः कृत्वेत्यर्थः । स्फुटकुटचकदम्बस्तोमपुष्पाञ्जलिं स्फुटानां विकसितानां कुटचानां गिरिमल्लिकाकुसुमानां कदम्बानां नीपकुसु मानां च स्तोमैः समूहैः पुष्पाञ्जलिं पुष्पैरभ्यर्चनम् । प्रविदधत् प्रकर्षेण भक्तिपुरस्सरं विदधत् कुर्वाणः सन् । चकारः समुच्चये ॥

अथ भगवतः शारदं विहारमाह—

अथ शरदमुपेतां तां भवद्भक्तचेतो-
विमलसलिलपूरां मानयन् काननेषु ।
तृणममलवनान्ते चारु सञ्चारयन् गाः
पवनपुरपते त्वं देहि मे देहसौख्यम् ॥ १० ॥

अथेति ॥ हे पवनपुरपते अथ काननेषु उपेतां शरदं मानयन् अमल वनान्ते गाः चारु तृणं सञ्चारयन् त्वं मे देहसौख्यं देहि । पवनपुरपते श्रीगुरुवायुपुरनाथ । अथ वर्षानन्तरम् । काननेषु अरण्येषु । उपेतां

सङ्गताम्। शरदं शरदृतुम्। मानयन् तत्कालोचितेन भोगेन सम्मानयन्नित्यर्थः। अमलवनान्ते निर्मलवनाभ्यन्तरे। गाः धेनूः। चारु रम्यम्। सञ्चारयन् सम्यक् चारयन् भक्षयन्। त्वं श्रीकृष्णः। मे ममानन्यशरणस्य। देहसौख्यम् अरोगताम्। देहि प्रयच्छ। अन्यथा भगवद्भजनं कर्तुमशक्यत्वादिति भावः। शरदो रमणीयतामाह—तां भवद्भक्तचेतोविमलसलिलपूरामिति। तां सरसीरुहसमृद्ध्यादिना प्रसिद्धाम्। भवद्भक्तचेतोविमलसलिलपूरां भवद्भक्तस्य श्रीकृष्णभक्तस्य। चेतः मन इव विमलः निर्मलः सलिलपूरः जलपूरो यस्यां ताम्। एकत्र नैर्मल्यं रागद्वेषादिराहित्यम्, अपरत्र अनाविलत्वं चेति द्रष्टव्यम्॥

इति गोगोपानां दावाग्निमोक्षवर्णनम् ऋतुवर्णनं च
अष्टपञ्चाशत्तमदशकम्॥

---

## एकोनषष्टितमदशकम्।

अथ भक्तानुग्रहायाङ्गीकृतलीलाविग्रहस्य भगवतः श्रीकृष्णस्य जगन्मोहनं रूपं पश्यन्तीनां गोपवनितानां प्रवृत्तिमाह—

त्वद्वपुर्नवकलायकोमलं प्रेमदोहनमशेषमोहनम्।
ब्रह्म तत्त्वपरचिन्मुदात्मकं वीक्ष्य सम्मुमुहुरन्वहं स्त्रियः ॥ १ ॥

त्वद्वपुरिति॥ स्त्रियः अन्वहं त्वद्वपुः वीक्ष्य सम्मुमुहुः। स्त्रियः गोप्यः। अन्वहं प्रतिदिनम्। तव श्रीकृष्णस्य वपुस्त्वद्वपुः। वीक्ष्य दृष्ट्वा। सम्मुमुहुः सम्मोहमापुः। त्वद्रूपामृतनिमग्नहृदया बभूवुरित्यर्थः। अत्र हेतुं दर्शयति—अशेषमोहनमिति। सकलजगन्मोहनमित्यर्थः। अत्र कारणमाह—नवकलायकोमलं प्रेमदोहनमिति। नवकलायकोमलं नवकलायवत् नूतनकलायकुसुमवत् कोमलं मृदुलम्। प्रेमदोहनं दर्शनमात्रेण प्रेमप्रकर्षोत्पादकमित्यर्थः।

प्रेमप्रकर्षोत्पादकत्वे हेतुमाह—तत्त्वपरचिन्मुदात्मकं ब्रह्म इति। तत्त्वपरचिन्मुदात्मकं तत्त्वात्मकं सद्रूपं चित् ज्ञानं मुदानन्दः परचिन्मुदावात्मा स्वरूपं यस्य तत् परचिन्मुदात्मकम् तत्त्वं च तत् परचिन्मुदात्मकं चेति विशेषणयोरपि कर्मधारयः। चिन्मुदोः परत्वं प्रथमश्लोकव्याख्याने दर्शितम्। ब्रह्म ब्रह्मस्वरूपं परचिदानन्दात्मकतया भगवद्वपुषो द्रष्टॄणां प्रेमप्रकर्षोत्पादकत्वादिति भावः॥

गोपिकाः पुनर्भगवद्विरहं सोढुमक्षमा बभूवुरित्याह—

**मन्मथोन्मथितमानसाः क्रमात्त्वद्विलोकनरतास्ततस्ततः।**
**गोपिकास्तव न सेहिरे हरे काननोपगतिमप्यहर्मुखे ॥ २ ॥**

**मन्मथोन्मथितेति॥** हे हरे गोपिकाः अहर्मुखे तव काननोपगतिम् अपि न सेहिरे। हरे विष्णो। गोपिकाः गोपकुमारिकाः। अहर्मुखे दिवसारम्भे। अपिरत्रापि सम्बध्यते। न केवलमन्यदेति तदर्थः। तव श्रीकृष्णस्य। काननोपगतिं काननस्य वनस्य उप समीपे गतिं धेनूनां प्रचारणाय गमनम्। किं पुनर्दूरदेशगमनमित्यपिशब्दार्थः। न सेहिरे न सोढुं शक्ता बभूवुः। अत्र हेतुः—त्वद्विलोकनरताः इति। तव श्रीकृष्णस्य विलोकनं दर्शनं तत्र रताः तत्पराः। भगवद्विलोकनभङ्गभयादिति भावः। गोपीनां भगवद्दर्शनासक्तौ हेतुमाह—ततस्ततः क्रमात् मन्मथोन्मथितमानसाः इति। ततस्ततः पुनः पुनः। क्रमात् क्रमेण। पुनः पुनः क्रमेण पूर्वावस्थाया अधिकतयेत्यर्थः। मन्मथोन्मथितमानसाः मन्मथेन कामेन उन्मथितम् अतीव पीडितं मानसं मनो यासां ताः। रागिणां प्रियजनविलोकनभङ्गस्य दुस्सहत्वादिति भावः॥

भगवति काननं गतवति विरहविधुराणां गोपीनां चेष्टितमाह—

**निर्गते भवति दत्तदृष्टयस्त्वद्गतेन मनसा मृगेक्षणाः।**
**वेणुनादमुपकर्ण्य दूरतस्त्वद्विलासकथयाऽभिरेमिरे ॥ ३ ॥**

निर्गत इति ॥ मृगेक्षणाः त्वद्गतेन मनसा निर्गते भवति दत्तदृष्टयः दूरतः वेणुनादम् उपकर्ण्य त्वद्विलासकथया अभिरेमिरे। मृगेक्षणाः मृगाक्ष्यो गोप्यः। त्वद्गतेन श्रीकृष्णनिविष्टेन। मनसा चेतसा। उपलक्षिता इति शेषः। निर्गते प्रयाते। भवति श्रीकृष्णे। दत्तदृष्टयः चक्षुर्विषयातिक्रमण पर्यन्तं दत्ता अर्पिता दृष्टि याभिस्ता। ततः चक्षुर्विषयमतिक्रान्ते भगवति। दूरत. दूरात्। वेणुनादं भगवतो मुरलीरवम्। उपकर्ण्य आकर्ण्य। पुनः ततोपि दूरदेशगमनेन वेणुनादेऽप्यश्रूयमाणे। त्वद्विलासकथया तव श्रीकृष्णस्य विलासकथया परस्परं विलासचेष्टितालापेन। चशब्दोऽत्राध्याहर्तव्य.। अभिरेमिरे कथञ्चित् कालं निन्युरित्यर्थ ॥

वनान्तमुपगतस्य भगवत प्रवृत्तिमाह—

**काननान्तमितवान् भवानपि स्निग्धपादपतले मनोरमे।**
**व्यत्ययाकलितपादमास्थितः प्रत्यपूरयत वेणुनालिकाम् ॥ ४ ॥**

काननान्तमिति ॥ भवान् अपि काननान्तम् इतवान् मनोरमे स्निग्धपादपतले व्यत्ययाकलितपादम् आस्थित वेणुनालिकां प्रत्यपूरयत। भवान् श्रीकृष्णः। अपिरप्यर्थे। काननान्तं वनमध्यम्। इतवान् प्राप्तवान्। मनोरमे रमणीये। स्निग्धपादपतले स्निग्धस्य पादपस्य वृक्षस्य तले अधस्तात्। व्यत्ययाकलितपादं व्यत्ययेन व्यत्यासेन आकलितौ निबद्धौ पादौ चरणकमले यस्मिन् कर्मणि तद्यथा भवति तथा। आस्थित. तिष्ठन्। वेणुनालिकां मुरलीम्। प्रत्यपूरयत पुनः पुनरपूरयत्। वेणुना सङ्गमावित्यर्थः। यदुक्तं कृष्णकर्णामृते—'व्यत्यस्तपादमवतंसितबर्हिबर्हं साचीकृताननिवेशितवंशनालम्। तेजः परं परमकारुणिकं पुरस्तात् प्राणप्रयाणसमये मम सन्निधत्ताम् ॥' इति ॥

वेणुगानस्य रमणीयतातिशयमाह—

**मारबाणधुतखेचरीकुलं निर्विकारपशुपक्षिमण्डलम्।**
**द्रावणं च दृषदामपि प्रभो तावकं व्यजनि वेणुकूजितम् ॥ ५ ॥**

मारबाणेति ॥ हे प्रभो तावकं वेणुकूजितं मारबाणधुतखेचरीकुलं निर्विकारपशुपक्षिमण्डलं द्रपदामपि द्रावणं च व्यजनि। प्रभो शक्तिसम्पन्न। तावकं त्वत्सम्बन्धि। वेणुकूजितं मुरलीगानम्। मारबाणधुतखेचरीकुलं मारबाणैः कामास्त्रैर्धुतं जनितकम्पस्वेदादिकं खेचरीणां देवाङ्गनानां कुलं समूहो येन तत्। निर्विकारपशुपक्षिमण्डलं निर्गता विकाराश्चेष्टा यस्मात्तन्निर्विकारं पशूनां मृगाणां पक्षिणां विहगानां च मण्डलं समूहो येन तत्। द्रपदां द्रुपलानाम्। किं पुन रन्येषामित्यपिशब्दार्थः। द्रावणं द्रवणसाधनमिति 'पाषाणादपि पीयूषं स्यन्दते यस्य लीलया' इत्यादाविव रमणीयतातिशयोक्तिः। चकारः समुच्चये। व्यजनि जातम् ॥

काननं गते भगवति गोपीनां भगवद्विषयचिन्तनप्रकारमाह त्रिभिः—

वेणुरन्ध्रतरलाङ्गुलीदलं तालसञ्चलितपादपल्लवम्।
तत् स्थितं तव परोक्षमप्यहो संविचिन्त्य मुमुहुर्व्रजाङ्गनाः ॥ ६ ॥

वेणुरन्ध्रेति ॥ व्रजाङ्गनाः वेणुरन्ध्रतरलाङ्गुलीदलं तालसञ्चलितपाद पल्लवं तत् तव स्थितं परोक्षम् अपि संविचिन्त्य मुमुहुः अहो। व्रजाङ्गनाः गोपस्त्रियः। वेणुरन्ध्रतरलाङ्गुलीदलं वेणुरन्ध्रेषु मुरलीसुषिरेषु तरलानि चञ्चलानि अङ्गुलीदलानि यस्मिंस्तत्। स्वरसन्दोहप्रकाशनार्थं वेणुरन्ध्राणि पिधातुमुद्घाटयितुञ्चेति भावः। अत्राङ्गुलीनां दलत्वोक्त्या पाण्योररविन्द साम्यं प्रतीयते। तालसञ्चलितपादपल्लवं तालसञ्चलितं तालसम्पादनाय तालानु रोधेन वा सञ्चलितः पादपल्लवः पादकिसलयं यस्मिंस्तत्। तत् जगन्मोह नम्। तव श्रीकृष्णस्य। स्थितम् अवस्थानम्। परोक्षम् अप्रत्यक्षम्। अपिर्विरोधे। संविचिन्त्य सम्यगालोचिन्त्य ध्यात्वा। मुमुहुः मोहमापन्। अहो इत्याश्चर्ये ॥

निर्विशङ्कभवदङ्गदर्शिनीः खेचरीः खगमृगान् पशूनपि।
त्वत्पदप्रणयि काननं च ता धन्यधन्यमिति नन्वमानयन् ॥ ७ ॥

निर्विशङ्केति ॥ ताः खेचरी खगमृगान् पशून् अपि काननं च धन्यधन्यं ननु इति अमानयन्। ताः व्रजस्था गोप्यः। खेचरी देवाङ्गना। खगमृगान् खगान् पक्षिणः मृगांश्च। पशून् अविशेषज्ञान्। अपिर्विरोधे। काननम् अरण्यम्। अचेतनमपीति भावः। धन्यधन्यं सुराङ्गनाद्यपेक्षयाप्यतिशयेन भाग्यवत्। नन्वित्यवधारणे। इति हेतौ। अमानयन् बहुमन्यन्त। अत्र हेतुः—निर्विशङ्कभवदङ्गदर्शिनी त्वत्पदप्रणयि इति। निर्विशङ्कभवदङ्गदर्शिनी तिरस्कृतशरीरतया सन्निहिततया च निश्शङ्कं नित्यं भवदङ्गप्रत्यङ्गदर्शनशीला इति खेचरीविशेषणम्। गोपीनां सन्निधानेऽपि लज्जया तथा दर्शनस्य दुर्लभत्वादिति भावः। निर्विशङ्कभवदङ्गदर्शनानिति लिङ्गविपरिणामेन खगमृगानि यत्रापि योजनीयम्। त्वत्पदप्रणयि भगवत्पादारविन्दससर्गि इति काननविशेषणम्। गोपीनामभिलषितस्य कुचयोर्भगवत्पादारविन्दसंसर्गस्यालब्धतयेति भावः। देवाङ्गनादीनामपि भगवत्पादाम्बुजस्पर्शस्यालब्धतया काननस्य तल्लाभेन तदपेक्षया भाग्यवत्त्वातिशय इति ध्येयम्॥

आपिबेयमधरामृतं कदा वेणुभुक्तरसशेषमेकदा।
दूरतो बत कृतं दुराशयेत्याकुला मुहुरिमाः समामुहन् ॥ ८ ॥

आपिबेयमिति ॥ इमाः मुहुः इति आकुलाः समामुहन्। इमाः गोप्यः। मुहुः पुनः पुनः। इति अनेन प्रकारेण। आकुलाः पर्याकुलाः। समामुहन् सम्मुमुहुः। इतिशब्दार्थमाह—अहं कदा एकदा वेणुभुक्तरसशेषम् अधरामृतम् आपिबेयमिति। कदा कस्मिन् काले। एकदा एकवारमपि। वेणुभुक्तरसशेषं वेणुभुक्तावशिष्टरससंयुक्तमपि। समग्रो रसः प्राप्तुमशक्य इति भावः। अधरामृतम् अमृतातिशायि भगवतोऽधररसमित्यर्थः। आपिबेयं पास्यामि। एवं स्वाभिलषितमनुसन्धाय पुनर्विमृश्यात्मनस्तत्र भाग्यहीनतामाशङ्क्य सनिर्वेदं विमृशति—दूरतः बत, दुराशया कृतम् इति। दूरतः दूरे तावदेतत्। नास्माकमेतत् सम्भवतीत्यर्थः। भाग्याभावादिति भावः। बतेति खेदे। दुराशया अत्र दुराग्रहेण। आशाया दुष्टत्वमलभ्यवस्तुविषयत्वादिति द्रष्टव्यम्। कृतम् अलम् ॥

गोपस्त्रीणामुन्मादावस्थामाह—

**प्रत्यहं च पुनरित्थमङ्गनाश्चित्तयोनिजनितादनुग्रहात्।**
**बद्धरागविवशास्त्वयि प्रभो नित्यमापुरिह कृत्यमूढताम् ॥ ९ ॥**

प्रत्यहमिति॥ हे प्रभो अङ्गनाः नित्यम् इह कृत्यमूढतामापुः। प्रभो शक्तिसम्पन्न। अङ्गनाः गोप्यः। नित्यं प्रतिदिनम्। इह कृत्य मूढताम् इदं मयैवं कर्तव्यमित्यवधारणविधुरताम्। आपुः प्रापुः। अत्र हेतुमाह— पुनः प्रत्यहं च इत्थं त्वयि बद्धरागविवशाः इति। पुनः अनन्तरम्। प्रत्यहं प्रतिदिनं च। इत्थम् उक्तप्रकारेण। त्वयि श्रीकृष्णे। बद्धरागविवशाः बद्धेन सम्बद्धेन रागेण अनुरागेण विवशाः अवशमतयः सत्यः। रागबन्धे कारणं दर्शयति—चित्तयो निजनितात् अनुग्रहादिति। चित्तयोनिजनितात् मनोभवकृतात्। अनुग्रहात् अनु ग्रहात्मकतया परिणतात् पीडनाद्धेतोः। पीडनस्यानुग्रहात्मकत्वं भगवति शृङ्गा रात्मप्रेमलक्षणभक्त्युत्पत्तिवृद्धिहेतुत्वादिति द्रष्टव्यम् ॥

एवं गोपीनां भगवति प्रेमप्रकर्षमुपपाद्यानन्तरं कविस्तमनुमोदमान आह—

**रागस्तावज्जायते हि स्वभावान्मोक्षोपायो यत्नतः स्यान्न वा स्यात्।**
**तासां त्वेकं तद्द्वयं लब्धमासीत् भाग्यं भाग्यं पाहि मां मारुतेश ॥ १० ॥**

रागस्तावदिति॥ रागः तावत् स्वभावात् जायते हि। रागः अनुरागः। तावदिति स्वर्थे। स्वभावात् स्वभावेन। जायते उत्पद्यते। स्त्रीणां पुंसाञ्चेत्यर्थः। हीति प्रसिद्धौ। मोक्षोपाय यत्नतः स्यात् न वा स्यात्। मोक्षोपायः भगवति हरौ प्रेम। यत्नत प्रयत्नेन। वाशब्दो विकल्पे। स्यादेवेति नियमो नास्तीत्यर्थः। तासां तु तद्द्वयम् एकं लब्धमासीत्, भाग्यं भाग्यम्। तासां गोपीनाम्। तुर्विशेषे। तदाह—तद्द्वयमित्यादि। तद्द्वयं तयोः कामसुखदस्य कान्तप्रेम्णो मोक्षसुखदस्येश्वरप्रेम्णश्च द्वयं युग्मम्। एकम् अभिन्नं सत्। लब्धं प्राप्तम्। आसीत् अभवत्। कान्तस्येश्वरस्य चैक्यादिति भावः। भाग्यं सुकृतपरिपाकः। द्विरुक्तिरद्भुतात् सन्तोषाति

रेकाद्रा। अथ प्रार्थयते—हे मारुतेश त्वं मां पाहि इति। मारुतेश श्रीगुरुवायुपुरनाथ। मामनन्यशरणम्। पाहि त्रायस्व ॥

इति वेणुगानवर्णनम्
एकोनषष्टितमदशकम् ॥

## षष्टितमदशकम् ।

अथ गोपीनां भगवत्सङ्गमलाभे प्रयत्नमाह—

**मदनातुरचेतसोऽन्वहं भवदङ्घ्रिद्वयदास्यकाम्यया।**
**यमुनातटसीम्नि सैकतीं तरलाक्ष्यो गिरिजां समार्चिचन् ॥ १ ॥**

**मदनातुरचेतस इति** ॥ तरलाक्ष्यः यमुनातटसीम्नि सैकतीं गिरिजां समार्चिचन्। तरलाक्ष्यः गोपसुन्दर्यः। यमुनातटसीम्नि यमुनायाः कालिन्द्याः तटसीम्नि तीरदेशे। सैकतीं सिकतामयीम्। गिरिजां तत्प्रतिमाम्। समार्चिचन् सम्यक् भक्तिपुरस्सरं पूजयामासुः। अर्चनप्रवृत्त्युद्देश्यमाह—अन्वहं भवदङ्घ्रिद्वयदास्यकाम्यया इति। अन्वहं प्रत्यहम्। भवतः श्रीकृष्णस्य अङ्घ्रिद्वयस्य पादकमलद्वन्द्वस्य यद्दास्यं दासभावः तत्काम्यया तदभिलाषेण। भगवता परिगृहीततया तत्पादारविन्दशुश्रूषां कर्तुमभिलषन्त्य इत्यर्थः। एतादृशाभिलाषे हेतु:—मदनातुरचेतसः इति। मन्मथोन्मथितमानसाः इत्यर्थः ॥

गोपीनां गिरिजार्चनप्रकारमाह—

**तव नामकथारताः समं सुदृशः प्रातरुपागता नदीम्।**
**उपहारशतैरपूजयन् दयितो नन्दसुतो भवेदिति ॥ २ ॥**

**तवेति** ॥ सुदृशः समं प्रातः तव नामकथारताः नदीम् उपागताः उपहारशतैः इति अपूजयन्। सुदृशः सुन्दर्यः। समं सम्भूय। प्रातः उषसि।

तव श्रीकृष्णस्य। नामकथारताः नामसु कथासु च रतास्तत्पराः । नामानि पठन्त्यः कथाः कथयन्त्यश्चेत्यर्थः। नदी यमुनाम्। 'उपागताः प्राप्ताः। उपहारशतैः उपहाराणां निवेद्यपुष्पमाल्यधूपदीपादीनां' शतैः।' इति एवम्। प्रार्थयन्त्य इति शेषः। अपूजयन् पूजयामासुः। गिरिजामिति पूर्वस्मादत्रानुवर्तते। प्रार्थनाप्रकारमाह—नन्दसुतः दयितः भवेदिति। नन्दसुतः श्रीकृष्णः। दयितः पतिः। 'कात्यायिनि महामाये महायोगिन्यधीश्वरि। नन्दगोपसुतं देवि पतिं मे कुरु ते नमः॥' इति मन्त्रं जपन्त्य इत्यर्थः॥

गोपीनां व्रतचर्यामधिगतवतो भगवतः प्रवृत्तिमाह—

इति मासमुपाहितव्रतास्तरलाक्षीरभिवीक्ष्य ता भवान्।
करुणामृदुलो नदीतटं समयासीत्तदनुग्रहेच्छया ॥ ३ ॥

इतीति॥ भवान् तदनुग्रहेच्छया नदीतटं समयासीत्। भवान् श्रीकृष्णः। तदनुग्रहेच्छया तासां गोपीनामनुग्रहेच्छया अनुग्रहाभिलाषेण हेतुना। नदीतटं यमुनाकूलम्। समयासीत् समागतः। अनुग्रहेच्छायां हेतुः—करुणामृदुलः इति। करुणया गोपीषु कृपया। मृदुलः आर्द्रचेताः सन्। करुणार्द्रतायां हेतुमाह—ताः तरलाक्षीः इति मासम् उपाहितव्रताः अभिवीक्ष्य इति। ताः तरलाक्षीर्व्रजसुन्दरीः। इति उक्तप्रकारेण। मासमित्यत्यन्तसंयोगे द्वितीया। उपाहितव्रताः उपाहितं धृतं व्रतं कात्यायिन्यर्चनरूपं याभिः ताः। अभिवीक्ष्य अभितो दृष्ट्वा॥

भगवन्तं दृष्टवतीनां गोपीनां प्रवृत्तिमाह—

नियमावसितौ निजाम्बरं तटसीमन्यवमुच्य तास्तदा।
यमुनाजलखेलनाकुलाः पुरतस्त्वामवलोक्य लज्जिताः ॥ ४ ॥

नियमावसिताविति॥ तदा ताः पुरतः त्वां अवलोक्य लज्जिताः। तदा तस्मिन्नवसरे। ताः गोप्यः। पुरतः पुरस्तात्। त्वां श्रीकृष्णम्। अवलोक्य दृष्ट्वा। लज्जिताः व्रीडिताः। दयितसन्निधौ विवस्त्रतयेति भावः।

ल्लाहेतुमाह—नियमावसितौ निजाम्बरं तटसीमनि अवमुच्य यमुनाजलखेल नाकुला इति। नियमावसितौ व्रतावसाने। निजाम्बरं स्वं स्वं वस्त्रम्। तटसीमनि पुलिनप्रदेशे। अवमुच्य निधाय। नग्ना भूत्वेत्यर्थः। यमुनाजलखेलनाकुला यमुनाजले कालिन्दीजले यत् खेलनं क्रीडा उदकवाधारिका तत्र आकुलाश्चलिता॥

भगवांस्तदा तासामम्बराण्यपाहरदित्याह—

**त्रपया नमिताननास्वथो वनितास्वम्बरजालमन्तिके।**
**निहितं परिगृह्य भूरुहो विटपं त्वं तरसाऽधिरूढवान्॥ ५॥**

**त्रपयेति॥** अथो त्वम् अन्तिके निहितम् अम्बरजालं परिगृह्य भूरुहः विटपम् अधिरूढवान्। अथो अनन्तरम्। त्वं श्रीकृष्ण। अन्तिके गोपीनां निकटे। निहितं निक्षिप्तम्। अम्बरजालं वस्त्रसञ्चयम्। परिगृह्य गृहीत्वा। तरसा झटिति। भूरुहः तीरस्थस्य कस्यचित्तरोः। विटपं शाखाम्। अधिरूढवान् आरुह्य स्थितः। ननु गोपीभिः कुतो न भगवानम्बरापहरणाद्वारितः इत्याशङ्कायामाह—वनितासु त्रपया नमिताननासु इति। वनितासु गोपीषु। त्रपया व्रीडया। नमिताननासु नम्रमुखीषु सतीषु॥

भगवत्यम्बराण्यपहृतवति गोपीनां तात्कालिकीमवस्थामाह—

**इह तावदुपेत्य नीयतां वसनं वः सुदृशो यथायथम्।**
**इति नर्ममृदुस्मिते त्वयि ब्रुवति व्यामुमुहे वधूजनैः॥ ६॥**

**इहेति॥** वधूजनैः व्यामुमुहे। वधूजनैः गोपीभिः। व्यामुमुहे, विवस्त्रतालज्जया न किमपि कर्तुं वस्तुं वाऽपि ता असमर्था बभूवुरित्यर्थः। ननु कथमेताभिर्नम्रमुखीभिरम्बरापहरणमवगतमित्याशङ्कायामाह—त्वयि नर्ममृदुस्मिते इति ब्रुवति इति। त्वयि श्रीकृष्णे। नर्ममृदुस्मिते नर्मणा मृदु स्मितं यस्य तस्मिन्। इति अनेन प्रकारेण। ब्रुवति कथयति सति। कथनप्रकारमाह—हे सुदृशः इह तावत् उपेत्य यथायथं वः वसनं नीयतामिति। सुदृशः शोभननयनाः। तदा श्रीलालाटनामलसत्स्मितामुखिपल्लवनाणानामत

एवातीव शोभनानां च तासां नयनानामवलोकनादेवं सम्बोधनमिति द्रष्टव्यम्। यदुक्तं श्रीकृष्णकर्णामृते—'देवः पायात् पयसि विमले यामुने मज्जतीना याचन्तीनामनुनयपदैर्वञ्चितान्यंशुकानि। लज्जालोलैरलसवलितैरुन्मिपत्पञ्चबाणै र्गोपस्त्रीणां नयनकुसुमैरर्चितः केशवो नः॥' इति। युष्माभिरिति शेषः। इह अत्र। तावदित्यवधारणे। उपेत्य आगत्य। यथायथं स्वम्वानति क्रमेण। वः युष्माकम्। वसनं वस्त्रम्। नीयताम् नेतव्यमित्यर्थः॥

गोपीभिः प्रार्थितोऽपि भगवानम्बराणि नायच्छदित्याह—

अयि जीव चिरं किशोर नस्तव दासीरवशीकरोषि किम्।
प्रदिशाम्बरमम्बुजेक्षणेत्युदितस्त्वं स्मितमेव दत्तवान् ॥ ७ ॥

अयीति॥ इति उदितः त्व स्मितमेव दत्तवान्। अत्र गोपीभिरित्य ध्याहर्तव्यम्। इति अनेन प्रकारेण। उदित. उक्त.। त्वं श्रीकृष्ण·। स्मितमेव न वसनमित्यर्थः। दत्तवान् प्रायच्छः। उक्तिप्रकारमाह—अयि किशोर त्वं चिरं जीव, किं तव दासी. नः अवशीकरोषि, हे अम्बुजेक्षण अम्बरं प्रदिश इति। अयीति सम्बोधने। किशोर बालक। चिरं चिराय। किं किमर्थम्। तव श्रीकृष्णस्य। दासी· किङ्करीः। नः अस्मान्। अवशीकरोषि वस्त्रापहरणेन कदर्थयसि। अम्बुजेक्षण पङ्कजाक्ष। अम्बरं वस्त्रम्। प्रदिश प्रयच्छ। अत्र किशोर अप्राप्तविवाह तव दासीः प्रेमार्हा. किं कुतः अवशीकरोषि अवशा अनधीना. करोषि, किन्तु परिगृहाणेत्यर्थः। अम्बरं प्रदिश वस्त्रप्रदानादिना पतिर्भव इत्युक्तो भगवांस्तदनुमोदनरूपमेव स्मितं दत्तवानिति च गम्यते॥

अथ भगवांस्ताभ्योऽम्बराणि प्रायच्छदित्याह—

अधिरुह्य तटं कृताञ्जलीः परिशुद्धाः स्वगतीर्निरीक्ष्य ताः।
वसनान्यखिलान्यनुग्रहं पुनरेवं गिरमप्यदा मुदा ॥ ८ ॥

अधिरुह्येति॥ त्वम् अखिलानि वसनानि पुनः अनुग्रहम् एवं गिरमपि मुदा अदाः। त्वं श्रीकृष्णः। अखिलानि सर्वाणि। वसनानि

वस्त्राणि। पुन अनन्तरम्। अनुग्रहम् अनुग्रहरूपाम्। इह रतिसुखप्रद त्वादन्ते मुक्तिप्रदत्वाचेति भाव। एव वक्ष्यमाणप्रकाराम्। गिर वाणीम्। अपिस्समुच्चये। मुदा तद्भक्तिविलोकनजनितया प्रीत्या। अदा दत्तवानसि। गोपीभ्य इति शेष। अत्र हेतुमाह—ता तटम् अधिरुह्य कृताञ्जली परि शुद्धा स्वगती निरीक्ष्य इति। ता गोपी। तट तीरम्। अधिरुह्य आरुह्य। कृताञ्जली कृत अञ्जलिर्याभिस्ता। अत एव परिशुद्धा वि वस्त्राप्लवनरूपव्रतभङ्गदोषान्निर्मुक्ता। स्वगती आत्मशरणा। निरीक्ष्य दृष्ट्वा॥

भगवदुक्तिप्रकारमाह—

**विदित ननु वो मनीषित वदितारस्त्विह योग्यमुत्तरम्।**
**यमुनापुलिने सचन्द्रिकाः क्षणदा इत्यबलास्त्वमूचिवान्॥ ९॥**

**विदितमिति॥** त्वम् इति अबला ऊचिवान्। त्वं श्रीकृष्ण! इति अनेन प्रकारेण। अबला गोपी। ऊचिवान् उक्तवानसि। इति शब्दार्थमाह—ननु व मनीषित विदितम्, इह तु यमुनापुलिने सचन्द्रिका क्षणदा योग्यम् उत्तर वदितारा इति। नन्वित्यामन्त्रणे। गोप्य इति शेष। व युष्माकम्। मनीषितम् अभिलषितम्। विवक्षितमपि लज्जया वक्तुमशक्यम्। विदितम् अवगतम्। मयेति शेष। अत्र क्रियैवोत्तर भविष्यतीत्याह—इहेत्यादि। इह अत्र विषये। तुर्विशेषे। यमुना पुलिने कालिन्दीतीरे। सचन्द्रिका चन्द्रिकया ज्योत्स्नया सहिता। क्षणदा क्षपा। योग्यमनुरूपम्। उत्तर प्रतिवचनम्। वदितार वक्ष्यन्ति। नाहमुत्तर वदामि, किन्तु क्रियैवात्रोत्तर भविष्यतीत्यर्थ॥

अथ गोप्यो लब्धमनोरथा स्वगृहान् जग्मुरित्याह—

**उपकर्ण्य भवन्मुखच्युत मधुनिष्यन्दि वचो मृगीदृशः।**
**प्रणयादयि वीक्ष्य वीक्ष्य ते वदनाब्ज शनकैर्गृह गताः॥ १०॥**

**उपकर्ण्येति।** अयि मृगीदृश भवन्मुखच्युत मधुनिष्यन्दि वच उप कर्ण्य प्रणयात् ते वदनाब्ज वीक्ष्य वीक्ष्य शनकै गृह गता। अयीति

सम्बोधने भगवन्निति शेषः । मृगीदृशः गोप्यः । भवन्मुखच्युतं भवतः श्रीकृष्णस्य मुखात् वदनारविन्दात् च्युतं गलितम् । मधुनिष्यन्दि मधुद्रवस्रुत् । वचः भाषितम् । उपकर्ण्य श्रुत्वा । प्रणयात् प्रेमप्रकर्षात् । ते तव । वदनाब्जं मुखपङ्कजम् । वीक्ष्य दृष्ट्वा । द्विरुक्तिः पौनःपुन्ये । पुनः पुनर्वीक्ष्येत्यर्थः । शनकैः मन्दम् । गृहं गेहं । गताः प्राप्ताः । भगवद्दर्शनभङ्गस्य सोढुमक्षमत्वेऽप्यनन्यगतिकतया कथञ्चिच्छनैर्गृहं जग्मुरित्यर्थः ॥

इति नन्वनुगृह्य वल्लवीर्विपिनान्तेषु पुरेव सञ्चरन् ।
करुणाशिशिरो हरे हर त्वरया मे सकलामयावलिम् ॥ ११ ॥

इतीति ॥ ननु हरे इति वल्लवीः अनुगृह्य पुरा इव विपीनान्तेषु सञ्चरन् करुणाशिशिरः त्वं त्वरया मे सकलामयावलिं हर । नन्वित्या मन्त्रणे । हरे विष्णो । इति उक्तप्रकारेण । वल्लवीः गोपीः । पुरेव पूर्ववत् । विपिनान्तेषु । वनमध्येषु । सञ्चरन् सम्यक् चरन् । करुणाशिशिरः दयार्द्रचेताः । त्वं श्रीकृष्णः । त्वरया कालविलम्बमन्तरेण । ममानन्यशरणस्य । सकलामयावलिं सकलानां सर्वेषां बाह्यानामाभ्यन्तराणां च आमयानां रोगाणामावलिं सञ्चयम् । हर अपाकुरु ॥

इति गोपीवस्त्रापहारवर्णनं
षष्टितमदशकं सैकम् ॥

---

## एकषष्टितमदशकम् ।

अथ भगवतो द्विजाङ्गनानुग्रहोपक्रमं वर्णयति—

ततश्च वृन्दावनतोऽतिदूरतो
वनं गतस्त्वं खलु गोपगोकुलैः ।

हृदन्तरे भक्ततरद्विजाङ्गना
कदम्बकानुग्रहणाग्रहं वहन् ॥ १ ॥

ततश्चेति ॥ ततः च त्वं गोपगोकुलैः वृन्दावनतः अतिदूरतः वनं गतः । ततः अनन्तरम् । चशब्दो वाक्यालङ्कारे । त्वं श्रीकृष्णः । गोपगोकुलैः गोपाः गावश्च तेषां कुलैःसमूहैः । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत इति न्यायात् गोपसङ्घैः गोकुलैश्चेत्यर्थः । सहेति शेषः । वृन्दावनतः वृन्दावनात् । अतिदूरतः अतिदूरे । वर्तमानमिति शेषः । वनम् अरण्यम् । गतः प्राप्तः । ननु किमर्थमेतत् कृतवानित्याकाङ्क्षायामाह—हृदन्तरे भक्ततरद्विजाङ्गनाकदम्बकानुग्रहणाग्रहं वहन्निति । हृदन्तरे मनसि । भक्ततरद्विजाङ्गनाकदम्बकानुग्रहणाग्रहं भक्ततराणामतीव भगवति हरौ भक्तानां द्विजाङ्गनानां विप्रपत्नीनां कदम्बकस्य समूहस्य अनुग्रहणमनुग्रहः तत्र आग्रहमभिलाषम् । वहन् दधानः । तदाग्रहादित्यर्थः ॥

अथ भगवान् गोपान् द्विजान्तिकं प्रेषयामासेत्याह —

ततो निरीक्ष्याशरणे वनान्तरे
किशोरलोकं क्षुधितं तृषाकुलम् ।
अदूरतो यज्ञपरान् द्विजान् प्रति
व्यसर्जयो दीदिवियाचनाय तान् ॥ २ ॥

तत इति ॥ त्वं ततः तान् दीदिवियाचनाय अदूरतः यज्ञपरान् द्विजान् प्रति व्यसर्जयः । त्वं श्रीकृष्णः । ततः अनन्तरम् । तान् गोपबालबालकान् । दीदिवियाचनाय ओदनप्रार्थनाय । अदूरतः समीपे । यज्ञपरान् स्वर्गकामनया यजतो भक्तिज्ञानविमुखान् । द्विजान् ब्राह्मणान् । व्यसर्जयः प्रेषयामासिथ । प्रेषणे हेतुमाह—अशरणे वनान्तरे किशोरलोकं क्षुधितं तृषाकुलं निरीक्ष्य इति । अशरणे गृहरहिते । वनान्तरे वनमध्ये । किशोरलोकं गोपालबालकजनम् । क्षुधितं बुभुक्षितम् । तृषाकुलं पिपासाकुलम् च सन्तम् । निरीक्ष्य दृष्ट्वा । ननु द्विजाङ्गनानुग्रहणाभिलाषी भगवान्

किमर्थं बालकान् द्विजसमीपं प्रेषयामासेति चेदत्र ब्रूमः—विद्याभिजात्यादिना दृप्तानां द्विजानां पश्चात्तापमुत्पाद्य पुनस्तानपि भक्तिज्ञानतत्परान् विधातुमित्य वगन्तव्यम्। अन्ते चैतद्वक्ष्यति—'निरूप्य दोषं निजम्' इत्यादिना ॥

ओदनं याचमानान् गोपान् द्विजन्मानो नाभ्यनन्दन्नित्याह—

गतेष्वथो तेष्वभिधाय तेऽभिधां
कुमारकेष्वोदनयाचिषु प्रभो।
श्रुतिस्थिरा अप्यभिनिन्युरश्रुतिं
न किञ्चिदूचुश्च महीसुरोत्तमाः ॥ ३ ॥

गतेष्विति ॥ हे प्रभो महीसुरोत्तमाः तेषु कुमारकेषु अथो गतेषु ते अभिधामभिधाय ओदनयाचिषु श्रुतिस्थिराः अपि अश्रुतिम् अभिनिन्युः, किञ्चित् न ऊचुः च। प्रभो शक्तिसम्पन्न। महीसुरोत्तमाः ब्राह्मणश्रेष्ठाः। तेषु कुमारेषु गोपपुत्रेषु। अथो भगवन्नियोगानन्तरम्। गतेषु निर्गतेषु। ते श्रीकृष्णस्य। अभिधां नाम। अभिधाय कथयित्वा। ओदनयाचिषु ओदनं याचमानेषु सत्सु। कृष्णो वः क्षुधार्त ओदनं याचत इतीरयत्स्वित्यर्थः। श्रुतिस्थिराः श्रुतौ कर्मकाण्डोक्तकर्ममार्गे स्थिराः निश्चितबुद्धयः। अपिर्विरोधे। अश्रुतिं श्रवणाभावम्। अभिनिन्युः अभिनीतवन्तः। अश्रुतमेव तैरिति भावः। अत्र श्रुतौ श्रवणे स्थिरा निश्चला अप्यश्रवणमभिनिन्युरिति विरोधस्यापिशब्देन प्रतीयमानत्वाद्विरोधाभासः। किञ्चित् दास्यामि, नेति वा। ऊचुः उक्तवन्तः ॥

अथ बालका भग्नमनोरथा भगवन्निकटं प्रत्याजग्मुरित्याह—

अनादरात् खिन्नधियो हि बालकाः
समाययुर्युक्तमिदं हि यज्वसु।
चिरादभक्ताः खलु ते महीसुराः
कथं हि भक्तं त्वयि तैस्समर्प्यते ॥ ४ ॥

अनादरादिति ॥ बालकाः हि अनादरात् खिन्नधियः समाययुः। बालकाः गोपपुत्राः। हिस्त्वर्थे। अनादरात् द्विजैरनादृतत्वात्। खिन्नधियः

दुःखिताः।-समाययुः प्रत्याजग्मुः। अथ कविस्तेषु द्विजेषु सोपहासमाह—इदं यज्वसु युक्तं हि, हि ते महीसुराः चिरात् अभक्ताः खलु, तैः त्वयि कथं भक्तं समर्प्यते इति। इदं भगवतो वचस्यनादरः। यज्वसु यागपरेषु। केवलेन यागादिकर्मणा स्वर्गमात्राभिलाषिष्वित्यर्थः। युक्तम् उचितम्। हीति प्रसिद्धौ। हि यस्मात्। महीसुराः ब्राह्मणाः। चिरात् चिराय। अभक्ताः भगवति श्रीवासुदेवे भक्तिशून्याः। खल्विति प्रसिद्धौ। तैः भगवति हराव भक्तैर्द्विजैः। त्वयि श्रीकृष्णे। कथं केन प्रकारेण। भक्तम् अन्नम्। समर्प्यते सम्यगर्प्यते। भगवति श्रीकृष्णेऽभक्ततया ते द्विजा भगवतस्ते नैव ओदनं यच्छेयुरित्यर्थः। अपगतं भक्तमन्नं येभ्यस्तेऽभक्ता यतः तस्मादशक्ता भक्तार्पणे इतीदं तेषु युक्तमिति च प्रतीयते॥

अथ गोपा द्विजपत्नीः प्रार्थयामासुरित्याह—

निवेदयध्वं गृहिणीजनाय मां<br>
दिशेयुरन्नं करुणाकुला इमाः।<br>
इति स्मितार्द्रं भवतेरिता गता-<br>
स्ते दारका दारजनं ययाचिरे ॥ ५ ॥

**निवेदयध्वमिति**॥ ते दारकाः दारजनं गताः ययाचिरे। दारकाः गोपकुमाराः। दारजनं द्विजपत्नीसमूहम्। गताः प्राप्ताः। ययाचिरे प्रार्थयामासुः। ओदनमिति शेषः।- अत्र हेतुमाह—भवता इति स्मितार्द्रम् ईरिताः इति। भवता श्रीकृष्णेन। इति अनेन प्रकारेण। ईरिताः उक्ताः सन्तः। भगवदुक्तिप्रकारमाह—यूयं मां गृहिणीजनाय निवेदयध्वम्, करुणाकुलाः इमाः अन्नं दिशेयुः इति। मां श्रीकृष्णम्। गृहिणीजनाय दारजनाय। निवेदयध्वम् कृष्णो व ओदनं याचत इति कथयतेत्यर्थः। करुणाकुलाः कृपापरवशाः। इमाः विप्रपत्न्यः। दिशेयुः दास्यन्ति॥

अथ गोपेभ्यो भगवदागमनं श्रुत्वा द्विजपत्न्यस्त्वरितमाजग्मुरित्याह—

गृहीतनाम्नि त्वयि सम्भ्रमाकुला-
श्चतुर्विधं भोज्यरसं प्रगृह्य ताः।
चिरंधृतत्वत्प्रविलोकनाग्रहाः
स्वकैर्निरुद्धा अपि तूर्णमाययुः ॥ ६ ॥

**गृहीतनाम्नीति** ॥ ताः त्वयि गृहीतनाम्नि सम्भ्रमाकुलाः चतुर्विधं भोज्य रसं प्रगृह्य स्वकैः निरुद्धाः अपि तूर्णम् आययु। ताः द्विजपत्न्यः। त्वयि - श्रीकृष्णे। गृहीतनाम्नि गृहीतं ज्ञातं नाम यस्य तस्मिन् सति। सम्भ्रमा कुलाः त्वरिताः। चतुर्विधं चतस्रो विधाः प्रकाराः कटूपदंशमधुरोपदंशाम्लो पदंशदध्युपदंशभेदेन, भोज्यखाद्यपेयलेह्यभेदेन वा यस्मिंस्तथाविधम्। भोज्य रसं रसवत् भोज्यम्। प्रगृह्य गृहीत्वा। स्वकैः स्वभर्तृपुत्रैः। निरुद्धाः निवारिताः। अपिर्विरोधे। तूर्णं झटिति। आययुः आजग्मुः। भर्तृ *पुत्राननादृत्येति भावः। तासां भर्त्राद्यनादरणे हेतुमाह—चिरंधृतत्वत्प्रविलोक* नाग्रहाः इति। चिरं चिराय धृतो यस्तव श्रीकृष्णस्य प्रविलोकने प्रकर्षेण विलोकने दर्शने आग्रहोऽभिलाषो याभिस्ताः ॥

विप्रपत्न्यो भगवन्तं ददृशुरित्याह—

विलोलपिञ्छं चिकुरे कपोलयोः
समुल्लसत्कुण्डलमार्द्रमीक्षिते।
निधाय बाहुं सुहृदंससीमनि
स्थितं भवन्तं समलोकयन्त ताः ॥ ७ ॥

**विलोलपिञ्छमिति** ॥ ताः भवन्तं समलोकयन्त। ता. विप्रपत्न्यः। भवन्तं श्रीकृष्णम्। समलोकयन्त सम्यग्ददृशुः। विप्रपत्नीभिर्दृष्टस्य भगवतः स्वरूपमाह—चिकुरे विलोलपिञ्छं कपोलयोः समुल्लसत्कुण्डलम् ईक्षिते आर्द्रं सुहृदंससीमनि बाहुं निधाय स्थितमिति। चिकुरे. कुन्तले। विलोलपिञ्छं विलोलानि चञ्चलानि पिञ्छानि बर्हाणि यस्य तम्। कपोलयोर्गण्डयोः। समुल्लसत्कुण्डलं समुल्लसन्ती शोभमाने कुण्डले यस्य तम्। ईक्षिते कटाक्षे।

आर्द्रं यस्मात्यातिशयजनितानन्दाश्रुणार्द्रम्। मुग्धमर्मीमनि सुहृद् कस्यचि न्नियम्य गोपपुत्रस्य अमर्मामनि अमर्मदेशे। बाहु करम्। निधाय नियम्य। स्थितं निष्ठन्तम् ॥

अथ भगवत्समीपं प्राप्तुमपारयन्त्या कस्याश्चिद्वृत्तिमाह—

तदा च काचित्त्वदुपागमोद्यता
गृहीतहस्ता दयितेन यज्वना।
तदैव सञ्चिन्त्य भवन्तमञ्जसा
विवेश कैवल्यमहो कृतिन्यसौ ॥ ८ ॥

तदेति ॥ तदा च त्वदुपागमोद्यता काचित् यज्वना दयितेन गृहीत हस्ता भवन्तं सञ्चिन्त्य तदा एव कैवल्यं विवेश। तदा प्रस्थितासु द्विजपत्नीषु भगवन्तं द्रष्टुम्। चकारस्त्वर्थे। त्वदुपागमोद्यता त्वदुपागमे तव श्रीकृष्णस्योपागमे प्राप्तावुद्यता। भगवन्तं द्रष्टुं प्रस्थितेत्यर्थः। काचित् यज्ञपत्नी। यज्वना यजमानेन। दयितेन भर्त्रा। गृहीतहस्ता गृहीतो हस्त करो यस्याः सा। आः पापे किमिदं प्रतिकृलाचरणमित्युक्त्वा निवारितेत्यर्थः। भवन्तं श्रीकृष्णम्। सञ्चिन्त्य भगवन्तं यथाश्रुतं हृदापगृह्य। तदैव तस्मिन्नेवावसरे। अञ्जसा झटिति। अनायासेनेत्यर्थः। कैवल्यं जीवपरयोरैक्य रूपं भगवत्सायुज्यम्। विवेश प्राप। ननु पुण्यपापयोः क्षयेण विना कथमीदृशी सा मुक्तिमुपगतवतीति चेत्, निरतिशयभगवत्सङ्कल्पसुखानुभवेन, दुस्सहेन भगवद्विरहसन्तापेन च सद्यः प्रक्षीणबन्धना सती गुणमयं देहं जहा विति ध्येयम्। अथ कश्चित्तथाविधां तस्या गतिमभिसन्धाय सविस्मयमनु मोदमानः आह—अहो असौ कृतिनी इति। अहो इत्याश्चर्ये। असौ यज्ञपत्नी। कृतिनी भाग्यवती। अतिघोरेणापि तपसा प्राप्तुमशक्यस्य कैव ल्यस्यानायासेन तस्या लाभादिति भावः ॥

भगवता द्विजाङ्गनानुग्रहप्रकारमाह—

आदाय भोज्यान्यनुगृह्य ताः पुन-
स्त्वदङ्गसङ्गस्पृहयोज्झतीर्गृहम् ।
विलोक्य यज्ञाय विसर्जयन्निमा-
श्चकर्थ भर्तॄनपि तास्वगर्हणान् ॥ ९ ॥

आदायेति ॥ त्वं भोज्यानि आदाय ताः अनुगृह्य पुनः त्वदङ्गसङ्गस्पृहया गृहम् उज्झतीः विलोक्य इमाः यज्ञाय विसर्जयन् भर्तॄन् तासु अगर्हणान् अपि चकर्थ। त्वं श्रीकृष्ण । भोज्यानि चतुर्विधानि। आदाय स्वीकृत्य। ताः विप्रपत्नीः। पुनः अनन्तरम्। त्वदङ्गसङ्गस्पृहया तव श्रीकृष्णस्य अङ्गसङ्गे भक्त्यतिशयेन पादशुश्रूषणादावित्यर्थः। स्पृहया अभिलाषेण। भक्तप्रियाकृतस्तु त्वया सह रिरंसयेत्याहु । गृहं सानुबन्धम्। उज्झतीः त्यजन्तीः। विलोक्य दृष्ट्वा। इमाः द्विजाङ्गनाः। यज्ञाय अध्वराय। विसर्जयन् प्रेषयन्। भर्तॄन् तासां पतीन्। तासु द्विजाङ्गनासु। अगर्हणान् अपगता गर्हणा परपुरुषविलोकनयुक्ता निन्दा येभ्यस्तान्। अपिः समुच्चये। चकर्थ कृतवानसि। अन्यथा ते परित्यजेयुस्ता इति भावः ॥

अथ द्विजा अपि भगवन्तं तुष्टुवुरित्याह—

निरूप्य दोषं निजमङ्गनाजने
विलोक्य भक्तिं च पुनर्विचारिभिः ।
प्रबुद्धतत्त्वैस्त्वमभिष्टुतो द्विजै-
र्मरुत्पुराधीश निरुन्धि मे गदान् ॥ १० ॥

निरूप्येति ॥ त्वं द्विजैः पुनः अभिष्टुतः। त्वं श्रीकृष्ण। द्विजैः यज्ञपरैः। पुनः पुनरपि। अभिष्टुतः अभितः स्तुत। नन्वभक्ताः कथं तुष्टुवुरित्याशङ्कायामाह—निजं दोषं निरूप्य अङ्गनाजने भक्तिं च विलोक्य इति । निजम् आत्मीयम्। दोषं जगत्पतेः श्रीकृष्णस्य अवमाननरूपम्। निरूप्य विचिन्त्य । अङ्गनाजने द्विजातिसंस्कारगुरुकुलवासात्ममीमांसातपश्शौचादिविहीने स्त्रीजने। भक्तिं संसारबन्धमोक्षकारिणीं भगवति हरौ रतिम्।

चकारस्समुच्चये। विलोक्य उपलभ्य। ननु कथं श्रीकृष्णानादरणमात्मदोषं मेनिरे द्विजा इत्याशङ्कायामाह—प्रबुद्धतत्त्वैः इति। प्रबुद्धं ज्ञातं तत्त्वं जगत्पतिर्भगवान् श्रीकृष्णोऽस्मानयाचतेत्येतद्रूपं यैस्तैः। तत्त्वावबोधे हेतुः— विचारिभि. इति। विचिन्तनशीलैरित्यर्थ। अथ प्रार्थयते—हे मरुत्पुराधीश त्वं मे गदान् निरुन्धि इति। मरुत्पुराधीश श्रीगुरुवायुपुरनाथ। त्वं श्री कृष्ण। मे ममानन्यशरणस्य। गदान् आमयान्। निरुन्धि निवारय॥

इति यज्ञपत्न्युद्धरणवर्णनम्

एकषष्टितमदशकम् ॥

## द्विषष्टितमदशकम्।

अथ भगवत श्रीकृष्णस्येन्द्रदर्पापहरणं वर्णयितुमुपक्रमते—

कदाचिद्गोपालान् विहितमखसम्भारविभवान्
निरीक्ष्य त्वं शौरे मघवमदमुद्ध्वंसितुमनाः।
विजानन्नप्येतान् विनयमृदु नन्दादिपशुपा-
नपृच्छः को नाऽयं जनक भवतामुद्यम इति ॥ १ ॥

कदाचिदिति॥ हे शौरे त्वं गोपान् कदाचित् विहितमखसम्भार विभवान् निरीक्ष्य विजानन् अपि एतान् नन्दादिपशुपान् इति विनयमृदु अपृच्छ.। शौरे वसुदेवपुत्र। त्वं श्रीकृष्ण। कदाचित् एकदा। विहित मखसम्भारविभवान् विहित. उपार्जितो मखस्य यज्ञस्य सम्भाराणामुपकरणाना विभवस्समृद्धिर्यैस्तान्। निरीक्ष्य दृष्ट्वा। विजानन् एतत्तत्त्वं विशेषेण जानन्। अपिर्विरोधे। नन्दादिपशुपान् नन्दादीन् पशुपान् गोपान्। अथवा, एता निन्द्रयागोद्यतान् गोपान् विजानन्नपीति योजना। इन्द्रयागोद्यता गोपा

इत्यवगच्छत्वपीत्यर्थः। इति अनेन प्रकारेण। विनयमृदु विनयेन प्रह्वीभावेन मृदु अनुद्धतं यथा भवति तथा। अपृच्छः पृष्टवानसि। प्रश्नप्रकारमाह—हे जनक अयं भवतामुद्यमः कः वा इति। जनक तात। अयं दृश्यमानः। उद्यमः उत्साहः। क इति जिज्ञासायाम्। वाकारो वाक्यालङ्कारे। ननु किमर्थमेवमपृच्छत् भगवानित्याकाङ्क्षायामाह—मघवमदम् उध्वंसितुमनाः इति। मघवमदं मघोन इन्द्रस्य मदम्। उध्वंसितुमनाः उध्वंसितुमुन्मूलयितुं मनो यस्य तादृशः सन्। इन्द्रस्य मदमुन्मूलयितुमित्यर्थः॥

नन्दस्य प्रतिवचनमाह—

बभाषे नन्दस्त्वां सुत ननु विधेयो मघवतो
मखो वर्षे वर्षे सुखयति स वर्षेण पृथिवीम्।
नृणां वर्षायत्तं निखिलमुपजीव्यं महितले
विशेषादस्माकं तृणसलिलजीव्या हि पशवः ॥ २ ॥

बभाष इति॥ नन्दः त्वां बभाषे। नन्दः नन्दगोपः। त्वां श्रीकृष्णम्। बभाषे उक्तवान्। किमुक्तवानित्याकाङ्क्षायामाह—सुतेत्यादि। ननु सुत मघवतः मखः विधेयः। नन्वित्यामन्त्रणे। मघवतः इन्द्रस्य। मखः अध्वरः। विधेयः कर्तव्यः। ननु किमर्थमित्याकाङ्क्षायामाह—सः वर्षे वर्षे वर्षेण पृथिवीं सुखयति इति। सः इन्द्रः। वर्षे वत्सरे। वीप्सायां द्विरुक्तिः। वर्षेण वृष्ट्या। पृथिवीम्, अत्र पृथिवीशब्देन जना लक्ष्यन्ते। तिरश्चामपि सुखयतीति फलम्। सुखयति सलिलसस्यादिसमृद्ध्या प्रीणयतीत्यर्थः। ननु मास्तु वर्षम्, को दोष इत्याशङ्कायामाह—महितले नृणां निखिलम् उपजीव्यं वर्षायत्तमिति। महितले भूतले। नृणां मनुष्याणाम्। निखिलं समस्तम्। उपजीव्यं जीवनोपयोगि वस्तुजातम्। वर्षायत्तं वर्षाधीनम्। एवं सामान्येन वर्षस्योपयोगं प्रदर्श्य गोपानां विशेषमप्याह—विशेषात्वि अस्माकं पशवः तृणसलिलजीव्याः हि इति। विशेषात् विशिष्य।

अस्माकं गोपानां न । पशवः गावः । तृणसलिलजीव्या तृणानि सलिलजलं नीयानि जीवनोपयुक्तानि यासां ताः । हीति प्रसिद्धौ । अतो विशेषतोऽस्माभिर्मघवतो मखः कर्तव्य इति भावः ॥

अथ भगवतः प्रतिवचनमाह द्वाभ्याम्—

इति श्रुत्वा वाचं पितुरयि भवानाह सरसं
धिगेतन्नो सत्यं मघवजनिता वृष्टिरिति यत् ।
अदृष्टं जीवानां सृजति खलु वृष्टिं समुचितां
महारण्ये वृक्षाः किमिव बलिमिन्द्राय ददते ॥ ३ ॥

इति श्रुत्वेति ॥ अयि भवान् इति पितुः वाचं श्रुत्वा सरसम् आह । अयीति सम्बोधने । भगवन्निति शेषः । भवान् श्रीकृष्णः । इति उक्तप्रकाराम् । पितुः नन्दस्य । वाचमुक्तिम् । श्रुत्वा निशम्य । सरसं सयुक्तिकं यथा भवति तथा । आह अकथयत् । ननु किमकथयदित्यत्राह—एतत् धिक् इति । धिक् निन्दायाम् । एतद्विषयिका निन्देत्यर्थः । एतत्पदार्थमाह—वृष्टिः मघवजनिता इति यत् इति । वृष्टिः वर्षम् । मघवजनिता इन्द्रकृता । निन्दाहेतुमाह—नो सत्यमिति । ननु कथं जायते वृष्टिरिति चेत्तत्राह—जीवानाम् अदृष्टं समुचितां वृष्टिं सृजति खलु इति । जीवानां प्राणिनाम् । अदृष्टं जीवनोपयोगि प्रारब्धं कर्म । समुचितां तत्तज्जीवनानुरूपाम् । वृष्टिं वर्षम् । सृजति जनयति । खल्विति अवधारणे, प्रसिद्धौ वा । एवम् अभिमतं वृष्टिहेतुमुक्त्वा इन्द्रयागस्य वृष्टिहेतुत्वे व्यतिरेकव्यभिचारं दर्शयति —महारण्ये वृक्षाः इन्द्राय किमिव बलिं ददते इति । महारण्ये महाटव्याम् । अत्र महच्छब्दप्रयोगेण मनुष्यैस्तरभिर्जनानां तत्र प्रवेशाभावादनुपयोग, तेन जनानां मखेन तत्रापि वर्षं जायत इत्येतदप्यनुपपन्नम्, यत्कार्यं यददृष्टाधीनम् तत् तदुपभोगसमयात् परम्परया वा जायतीति न्यायादित्यपि सूचितम् । वृक्षाः तरवः । इन्द्राय देवराजाय । किमिव कथमिव । बलिं यजनम् । किमिव ददते किमिव यजन्ति । नैव च यजन्तीत्यर्थः । अतः महारण्याभावेऽपि तत्र वृष्टेर्दर्शनात्तत्र व्यतिरेकव्यभिचारेण न मघवजनिता

वृष्टिरित्येतत् सत्यम्, किन्तु तेषां जीवनादृष्टमेव वर्षकारणमित्यवगन्तव्यमिति भावः ॥

एवं नन्दोदितस्यैकदेशे दूषणमुद्भाव्यापरं भागमङ्गीकुर्वन् कर्तव्यमाह—

इदं तावत् सत्यं यदिह पशवो नः कुलधनं
तदाजीव्यायासौ बलिरचलभर्त्रे समुचितः।
सुरेभ्योऽप्युत्कृष्टा ननु धरणिदेवाः क्षितितले
ततस्तेऽप्याराध्या इति जगदिथ त्वं निजजनान् ॥ ४ ॥

**इदं तावदिति ॥** त्वम् इति निजजनान् जगदिथ। त्वं श्रीकृष्णः। इति अनेन प्रकारेण। निजजनान् निजान् आत्मीयान् जनान् नन्दादीन्। जगदिथ उक्तवानसि। उक्तिप्रकारमाह—इदमित्यादि। इदं तावत् सत्यम्। तावदिति स्वर्थे। सत्यं तथ्यम्। इदंपदार्थमाह—नः इह पशवः कुलधनमिति। नः अस्माकं पशुपानाम्। इह अस्मिन् लोके। पशवः धेनवः। कुलधनं कुलस्य वंशस्य धनं सम्पत्। ननु तर्हि किमस्माभिरधुना विधेयमित्यत्राह—तदाजीव्याय असौ बलि अचलभर्त्रे समुचित, क्षितितले धरणिदेवाः सुरेभ्य. अपि उत्कृष्टाः ननु, तत. ते अपि आराध्याः इति। तदाजीव्याय तासां पशूनामाजीव्याय जीवनोपायभूततृणसलिलसम्पत्तये। असौ प्रारब्धः। अचलभर्त्रे गोवर्धनाय। समुचित सुतरां युक्त। गोवर्धनस्य तृणसलिलसम्पादकत्वादिति भावः। क्षितितले इत्यस्य यत इत्यादिः। क्षितितले भूतले। धरणिदेवाः ब्राह्मणाः। सुरेभ्यः देवेभ्यः। उत्कृष्टाः उत्कर्षशालिनः। नन्वित्यवधारणे। ततः तस्मात्। ते धरणिदेवाः। अपिस्समुच्चये। आराध्याः पूजनीयाः। अनेनास्माकमिष्टसिद्धिः स्यादिति भावः ॥

नन्दादयो भगवद्वचनमङ्गीचक्रुरित्याह—

भवद्वाचं श्रुत्वा बहुमतियुतास्तेऽपि पशुपा
द्विजेन्द्रानर्चन्तो बलिमददुरुच्चैः क्षितिभृते।

व्यधुः प्रादक्षिण्यं सुभृशमनमन्नादरयुता-
स्त्वमादाः शैलात्मा बलिमखिलमाभीरपुरतः ॥ ५ ॥

भवद्वाचमिति ॥ ते पशुपाः अपि भवद्वाचं श्रुत्वा बहुमतियुताः द्विजेन्द्रान् अर्चन्तः क्षितिभृते उच्चैः बलिम् अददुः, प्रादक्षिण्यं व्यधुः, सुभृशम् आदरयुताः अनमन्, त्वं शैलात्मा आभीरपुरतः अखिलं बलिम् आदाः। ते पशुपा नन्दाद्याः। अपिस्त्वर्थे भवद्वाचं भवतः श्रीकृष्णस्य वाचं वचनम्। श्रुत्वा निशम्य। बहुमतियुता बहुमानयुक्ताः। युक्तियुक्ततया भगवद्वचनस्येति भावः। द्विजेन्द्रान् ब्राह्मणश्रेष्ठान्। अर्चन्तः पूजयन्तः। क्षितिभृते गोवर्धनपर्वताय। उच्चैः पूर्वस्माद्विशिष्टमहुसाधनोपबृंहितम्। बलिं पूजाम्। अददुः चक्रुः। प्रादक्षिण्यं प्रदक्षिणीकरणम्। व्यधुः चक्रुः। सुभृशम् अत्यर्थम्। आदरयुताः आदरेण युक्ताः। अनमन् नमश्चक्रुः। त्वं श्रीकृष्णः। शैलात्मा शैलवन्महतीं तनुमादाय, शैलोऽस्मि प्रसन्नोऽस्मीति वदन्नित्यर्थः। आभीरपुरतः आभीराणां गोपानां पुरस्तात्। अखिलं समस्तम्। बलिमुपहारम्। आदाः अभुङ्क्थाः ॥

अथ भगवान् गोपानां विश्वासोदयार्थमकथयदित्याह—

अवोचश्चैवं तान् किमिह वितथं मे निगदितं
गिरीन्द्रो नन्वेष स्वबलिमुपभुङ्क्ते स्ववपुषा।
अयं गोत्रो गोत्रद्विषि च कुपिते रक्षितुमलं
समस्तानित्युक्ता जहृषुरखिला गोकुलजुषः ॥ ६ ॥

अवोच इति ॥ त्वं तान् एवम् अवोच च। त्वं श्रीकृष्णः। तान् गोपान्। एवं वक्ष्यमाणरीत्या। अवोच. उक्तवानसि। चकारः समुच्चये। उक्तिप्रकारमाह—इह मे निगदितं वितथं किम्, एषः गिरीन्द्रः स्ववपुषा स्वबलिम् उपभुङ्क्ते ननु, अयं गोत्रः गोत्रद्विषि च कुपिते समस्तान् रक्षितुम् अलमिति। इह अत्र विषये। मे मम। निगदितं कथितम्। मयोक्तमित्यर्थः। ननु कथं विश्वस्यत इत्यत्राह—गिरीन्द्र इत्यादि। एषः

गिरीन्द्रः गोवर्धनः। स्ववपुषा स्वस्य देवताविग्रहेण। स्वबलिं स्वस्य बलिम्। उपभुङ्क्ते आदत्ते। पश्यन्तु भवन्त इति भावः। नन्विन्द्रे कुपिते का गतिरस्माकमित्यत्राह—अयमित्यादि। गोत्र. गिरिः। गोत्रद्विषि पर्वतानां पक्षच्छिदि। चकारोऽप्यर्थकः। कुपिते क्रुद्धे सति। समस्तान् सर्वा नस्मान्। रक्षितुं त्रातुम्। अलं शक्तो भवति। अस्य पर्वतस्येतरेभ्यः कोपि विशेषोऽस्तीति भावः। इति उक्ताः अखिलाः गोकुलजुषः जहृषुः। इति एवम्। उक्ताः भगवतेरिताः। अखिलाः सर्वे। गोकुलजुषः गोकुलवासिनः। जहृषुः हृष्टा बभूवुः॥

अथ गोपेभ्यो देवेन्द्रश्चुकोपेत्याह—

**परिप्रीता याताः खलु भवदुपेता व्रजजुषो**
**व्रजं यावत्तावन्निजमखविभङ्गं निशमयन्।**
**भवन्तं जानन्नप्यधिकरजसाऽऽक्रान्तहृदयो**
**न सेहे देवेन्द्रस्त्वदुपरचितात्मोन्नतिरपि ॥ ७ ॥**

**परिप्रीता इति॥** यावत् व्रजजुषः खलु परिप्रीता. भवदुपेताः व्रजं याता तावत् देवेन्द्र निजमखविभङ्गं निशमयन् न सेहे। यावत् यदा। व्रजजुषः गोपाः। खल्विति स्वर्थे। परिप्रीताः परितः सर्वतः प्रीतास्तुष्टाः। शैलः समक्षमस्माकं बलिं बुभुजे इति मत्वेति भावः। भवदुपेताः भवता श्रीकृष्णेन उपेताः सहिताः। व्रजं पशुस्वाटिकाम्। याताः गताः। तावत् तदा। *निजमखविभङ्गं निजमखस्य आत्मनो मखस्य यज्ञस्य विभङ्गं ध्वंसनम्।* निशमयन् शृण्वन्। न सेहे न सोढवान्। निजमखविभङ्गमित्यत्रापि कर्म। ननु मर्त्याकारेण भगवता वैकुण्ठेनैव भग्नो मख इति किं नावगतमिन्द्रेणेत्याशङ्कायामाह—भवन्तं जानन् अपि इति। भवन्तं श्रीकृष्णं मायामानुषविग्रहं विष्णुम्। जानन् अवगच्छन्। अपिर्विरोधे। नन्वस्तु श्रीकृष्णो भगवान् विष्णुः, ततः किमित्यत आह—त्वदुपरचितात्मोन्नतिः अपि इति। त्वया श्रीकृष्णरूपेण श्रीवैकुण्ठेनैव उपरचिता कृता आत्मनः स्वस्य उन्नतिरैन्द्रं

पद यस्य तथाविध । अपिर्विरोधे। विरोध परिहरनाह—अधिकरजसा आक्रान्तहृदय इति । अधिकरजसा अधिकेन प्रवृद्धेन रजसा तत्कार्येण मान क्रोधमत्सरादिना । आक्रान्तहृदय आक्रान्तमतिक्रान्त हृदय मनो यस्य ॥ ॥

कुपितस्येन्द्रस्य प्रवृत्तिमाह—

मनुष्यत्व यातो मधुभिदपि देवेष्वविनय
विधत्ते चेन्नष्टस्त्रिदशसदसा कोपि महिमा ।
ततश्च ध्वसिष्ये पशुपहतकस्य श्रियमिति
प्रवृत्तस्त्वा जेतु मधिकिल मघवा दुर्मदनिधि ॥ ८ ॥

मनुष्यत्वमिति ॥ स मघवा इति त्वा नेतु प्रवृत्त किल । स भगवदुपरचितात्मोन्नति । मघवा देवेन्द्र । इति एव निश्चित्य । त्वा श्रीकृष्णम् । नेतु विनेतुम् । प्रवृत्त उद्युक्त । किलेति वार्तायाम् । निश्चयप्रकारमाह—पशुपहतकस्य श्रिय ध्वसिष्ये इति । पशुपहतकस्य गोपाल धमस्य कृष्णस्य नन्दस्य वा । श्रिय सम्पत्समृद्धिम् । ध्वसिष्ये निषूद यिष्यामि । एत निश्चये हेतु —तत च इति । तस्मात् कारणादित्यर्थ । चशब्दो वाक्यालङ्कारे । तत्पदार्थमाह—मधुभित् अपि मनुष्यत्व यात देवेषु अविनय विधत्ते चेत्, त्रिदशसदसा कोपि महिमा नष्ट इति । मधुभित् मधुहन्ता भगवान् हरि । अपिर्विरोधे । मनुष्यत्व मनुष्यभावम् । यात प्राप्त । देवेषु अमर्त्येषु । अविनयम् अवज्ञाम् । विधत्ते करोति चेत् तर्हि । त्रिदशसदसा देवसभाना । कोपि अनिर्वचनीय । महिमा माहात्म्यम् । नष्ट विनष्ट । अत्रायमाशय —मानुषै सर्वैरपि खलु देवास्सर्वदा सर्वात्मना पूजनीया, यतो वर्षादिना देवा मानुषाणा योगक्षेम वहन्ति। मनुष्य भावमुपागतो भगवान् मधुहन्ता यद्यविनय देवेष्वाचरति, तर्हि सकलमानवपूज्यता प्रयुक्तस्य देवाना महत उत्कर्षस्य भङ्ग स्यात् । यदितु मनुष्यभावमप्राप्य मधु हन्ता देवेष्वविनय विधत्ते, तदा न देवाना महिम्न कापि क्षति । अतो मनुष्य स्वरूपस्य भगवतो मधुहन्तुरपि देवेष्वविनयो न क्षन्तव्य इति। नन्विन्द्र

कुतो भगवन्तं जेतुमक्षममात्मानं नाध्यगच्छदित्याकाङ्क्षायामाह—दुर्मदनिधिः इति। दुर्मदस्य निधिर्निधानभूतः। दुर्मदाः खलु सर्वानप्यात्मनो हीनान् मन्यन्त इति भावः॥

इन्द्रो भगवन्तं जेतुं प्रतस्थ इत्याह—

त्वदावासं हन्तुं प्रलयजलदानम्बरभुवि
प्रहिण्वन् बिभ्राणः कुलिशमयमभ्रेभगमनः।
प्रतस्थेऽन्यैरन्तर्दहनमरुदाद्यैर्विहसितो
भवन्माया नैव त्रिभुवनपते मोहयति कम् ॥ ९ ॥

त्वदावासमिति॥ अयं त्वदावासं हन्तुं प्रलयजलदान् अम्बरभुवि प्रहिण्वन् कुलिशं बिभ्राणः अभ्रेभगमनः दहनमरुदाद्यैः अन्यैः अन्तः विहसितः प्रतस्थे। अयं देवेन्द्रः त्वदावासं तव श्रीकृष्णस्य। आवासं पशुपवाटिकाम्। हन्तुम् उन्मूलयितुम्। प्रलयजलदान् पुष्कलावर्तकादीन्। अम्बरभुवि नभःस्थले। प्रहिण्वन् मुञ्चन्। कुलिशं वज्रम्। बिभ्राणः वहन्। अभ्रेभगमनः ऐरावतमधिरूढः। दहनमरुदाद्यैः अग्निपवनप्रभृतिभिः। अन्यैः अपरैर्देवैः। अन्तः हृदयेन। विहसितः अयमधुना अनन्तशक्तिं विश्वस्य गोप्तारं भगवन्तं श्रीकृष्णं जेतुमुद्यतः, अहो मौर्ख्यमस्येति परिहसितः। इन्द्रस्य त्रिकालेषु प्राधान्यान्मनसा विहसनमिति द्रष्टव्यम्। प्रतस्थे प्रातिष्ठत। हन्त कथमयं भगवन्नाथो देवेन्द्रः श्रीकृष्णं जेतुमुद्यत इत्याशङ्कां परिहर्तुमर्थान्तरं न्यस्यति—हे त्रिभुवनपते भवन्माया कं नैव मोहयति इति। त्रिभुवनपते त्रिलोकनाथ। भवन्माया भवतः तव माया। कं न मोहयति। सर्वानपि मोहयत्येवेत्यर्थः॥

भगवान् श्रीकृष्णस्त्विन्द्रागमनं प्रतिपालयंस्तस्माद्भीतान् गोपानाश्वासयंश्च तस्थावित्याह—

सुरेन्द्रः क्रुद्धश्चेद्द्विजकरुणया शैलकृपयाऽ-
प्यनातङ्कोऽस्माकं नियत इति विश्वास्य पशुपान्।

अहो किं नायातो गिरिभिदिति सञ्चिन्त्य निवसन्
मरुद्गेहाधीश प्रणुद मुरवैरिन् मम गदान् ॥ १० ॥

सुरेन्द्र इति ॥ हे मरुद्गेहाधीश मुरवैरिन् इति पशुपान् विश्वास्य इति सञ्चिन्त्य निवसन् त्वं मम गदान् प्रणुद। मरुद्गेहाधीश गुरुवायुपुरनाथ। मुरवैरिन् मुरारे। इति एवम्। पशुपान् गोपान्। विश्वास्य आश्वास्य। इति अनेन प्रकारेण। सञ्चिन्त्य चिन्तयित्वा। निवसन् वर्तमान। त्वं श्रीकृष्ण.। मम अनन्यशरणस्य। गदान् आमयान्। प्रणुद नाशय। भगवतश्चिन्ताप्रकारमाह—अहो गिरिभित् किं न आयातः इति। अहो इत्याश्चर्ये। गिरिभित् देवेन्द्रः। किं कुतः कारणात्। न आयात. कुपितो मां जेतुं नागत। आश्वासनप्रकारमाह— सुरेन्द्रः क्रुद्धः चेत् द्विजकरुणया शैलकृपया अपि अस्माकम् अनातङ्कः नियतः इति। सुरेन्द्र· देवेन्द्र। क्रुद्ध कुपित. चेत्तर्हि। द्विजकरुणया द्विजानां ब्राह्मणानां करुणया कृपया। शैलकृपया शैलस्य गोवर्धनाचलस्य कृपया करुणया। अपिस्समुच्चये। परस्परापेक्षां विनाऽप्येकस्या एवास्मद्रक्षणे सामर्थ्यमस्ति, किं पुनर्मिलितयोस्तयोरित्यपिशब्देन द्योत्यते। अस्माकं नः। अनातङ्कः आतङ्कस्य दु.खस्य अभाव सुखम्। नियत· निश्चित. ॥

इति इन्द्रयागविघातवर्णनं
द्विषष्टितमदशकम् ॥

## त्रिषष्टितमदशकम्।

अथ भगवान् श्रीकृष्ण· कुपितेनेन्द्रेण प्रहितान् जलधरानद्राक्षीदित्याह—

ददृशिरे किल तत्क्षणमक्षत-
स्तनितजृम्भितकम्पितदिक्तटाः।

सुषमया भवदङ्गतुलां गता
व्रजपदोपरि वारिधरास्त्वया ॥ १ ॥

ददृशिर इति ॥ त्वया तत्क्षणं व्रजपदोपरि वारिधराः ददृशिरे किल। त्वया श्रीकृष्णेन। तत्क्षणम् इन्द्रागमनप्रतिपालनक्षणे। व्रजपदोपरि व्रजपदस्य उपरि उपरिभागे नभसि। वारिधराः मेघाः। ददृशिरे दृष्टाः। किलेति वार्तायाम्। मेघानां स्वरूपमाह—अक्षतस्तनितजृम्भितकम्पितदिक्तटाः सुषमया भवदङ्गतुलां गताः इति। अक्षतस्तनितजृम्भितकम्पितदिक्तटाः अक्षतेन अविच्छिन्नेन स्तनितेन गर्जितेन जृम्भितेन व्याप्त्या च कम्पितानि वेपितानि दिक्तटानि दिशां तटानि भागा यैस्ते। अत्र तटशब्देन तत्रस्था जना लक्ष्यन्ते। पशुपक्ष्यादीनामपि कम्पितत्वप्रतीतिः फलम्। अथवा, अक्षतेन स्तनितजृम्भितेन प्रवृद्धेन स्तनितेन कम्पितानि दिक्तटानि यैस्ते। सुषमया कान्त्या। भवदङ्गतुलां भवदङ्गस्य भवतः श्रीकृष्णस्य अङ्गस्य शरीरस्य तुलां साम्यम्। गताः प्राप्ताः॥

अथ गोपा भीता भगवन्तं शरणं जग्मुरित्याह—

विपुलकरकमिश्रैस्तोयधारानिपातै-
र्दिशि दिशि पशुपानां मण्डले दण्ड्यमाने।
कुपितहरिकृतान्नः पाहि पाहीति तेषां
वचनमजित शृण्वन् मा बिभीतेत्यभाणीः ॥ २ ॥

विपुलेति ॥ हे अजित इति तेषां वचनं शृण्वन् इति अभाणीः। अजित केनाप्यपराजित। अनेन इन्द्रेण जेतुमशक्यो भगवानिति ध्वन्यते। इति एवंविधम्। तेषां गोपानाम्। वचनं वाक्यम्। शृण्वन् निशमयन्। इति अनेन प्रकारेण। अभाणीः उक्तवानसि। भगवदुक्तिप्रकारमाह—मा बिभीत इति। बिभीत भीता भवत। गोपानां वचनप्रकारमाह—नः कुपितहरिकृतात् पाहि पाहि इति। नः अस्मान्। कुपितहरिकृतात् कुपितेन इन्द्रेण कृतात् निर्मितात्। वर्षादिति शेषः। पाहि त्रायस्व।

सम्भ्रमाद्द्विरुक्ति । गोपानामेवमुक्तौ हेतुमाह—पशुपाना मण्डले दिशि दिशि विपुलकरकमिश्रै तोयधारानिपातै दण्ड्यमाने इति। पशुपाना गोपानाम्। मण्डले समूहे। दिशि दिशि सर्वासु दिक्षु। विपुलकरकमिश्रै स्थूलजल शर्करामिश्रै । तोयधारानिपातै तोयधारणा जलधाराणा निपातै सम्पातै । दण्ड्यमाने पीड्यमाने सति ॥

भगवतो गोवर्धनाद्धरणमाह—

कुल इह खलु गोत्रो दैवत गोत्रशत्रो
विहतिमिह स रुन्ध्यात् को नु न: सशयोऽस्मिन् ।
इति सहसितवादी देव गोवर्धनाद्रि
त्वरितमुदमुमूलो मूलतो बालदोर्भ्याम् ॥ ३ ॥

कुल इति॥ हे देव त्वम् इति सहसितवादी गोवर्धनाद्रि त्वरित बालदोर्भ्यां मूलत उदमुमूल । देव प्रकाशमान। त्व श्रीकृष्ण । इति एवम्। सहसितवादी मृदुमन्दस्मितेन सह वदन्। गोवर्धनाद्रि गोवर्धना चलम्। त्वरित झटिति। बालदार्भ्यां बालाभ्या दोर्भ्यां कराभ्याम्। मूलत मूलात्। उदमुमूल उन्मूलितवानसि। उक्तिप्रकारमाह—इह कुले गोत्र दैवत खलु स इह गोत्रशत्रो विहति रुन्ध्यात्, व अस्मिन् क नु सशय इति। इह कुले अस्माक पशुपाना वशे। गोत्र गोवर्धनाद्रि । दैवत कुलदेवता। स गोवर्धन । इह अत्र गोकुले। गोत्रशत्रो पर्वतद्विपोऽपीन्द्रात्। विहति नाशम्। रुन्ध्यात् निवारयिष्यति। व युष्माकम्। अस्मिन् मदुक्ते। को नु सशय युष्माभि सशयो न कर्तव्य इत्यर्थ ॥

श्रीकृष्णा गोवर्धन छत्रमिव वहस्तस्याधस्तात् गाव सर्वानपि व्रज वासिना निधायारक्षदित्याह—

तदनु गिरिवरस्य प्रोद्धृतस्यास्य तावत्
सिकतिलमृदुदेशे दूरतो वारितापे ।

परिकरपरिमिश्रान् धेनुगोपानधस्ता-
दुपनिदधदधत्था हस्तपद्मेन शैलम् ॥ ४ ॥

तदन्विति॥ तदनु त्वं तावत् प्रोद्धृतस्य अस्य गिरिवरस्य अधस्तात् दूरतः वारितापे सिकतिलमृदुदेशे परिकरपरिमिश्रान् धेनुगोपान् उपनिदधत् हस्तपद्मेन शैलम् अधत्थाः। तदनु गोवर्धनोन्मूलनानन्तरम्। त्वं श्रीकृष्णः। तावत् प्रथमम्। प्रोद्धृतस्य उन्मूलितस्य। अस्य गिरिवरस्य गोवर्धनाचलस्य। अधस्तात् अधः। दूरतः दूरे। वारितापे वारिता निवारिता आपो जलानि यस्मिंस्तस्मिन्। सिकतिलमृदुदेशे सिकतिले वालुकाप्राये अत एव मृदौ कठिनेतरे देशे। देशस्य विशेषणद्वयेन सुखवासयोग्यता दर्शिता। परिकरपरिमिश्रान् परिकरैः शिक्यभाण्डादिभिः सर्वैरुपकरणैः परिमिश्रान् संयुक्तान्। धेनुगोपान् धेनूः गावो गोपांश्च। उपनिदधत् प्रवेशयन्। हस्तपद्मेन करपङ्कजेन। शैलं गोवर्धनाचलम्। अधत्थाः धृतवानसि॥

भगवतः शैलवहनेऽनायासं दर्शयति—

भवति विधृतशैले बालिकाभिर्वयस्यै-
रपि विहितविलासं केलिलापादिलोले।
सविधमिलितधेनूरेकहस्तेन कण्डू-
यति सति पशुपालास्तोषमैषन्त सर्वे ॥ ५ ॥

भवतीति॥ सर्वे पशुपालाः तोषम् ऐषन्त। सर्वे अखिलाः। पशुपालाः गोपाः। तोषं तुष्टिम्। ऐषन्त प्राप्ताः। तोषकारणमाह—विधृतशैले भवति बालिकाभिः वयस्यैः अपि विहितविलासं केलिलापादिलोले सविधमिलितधेनूः एकहस्तेन कण्डूयति सति इति। विधृतशैले विधृतः एकहस्तेन विशेषतः पतनभयहेतुभूतकम्पादिभिर्विना धृतः शैलो येन तस्मिन्। भवति श्रीकृष्णे। बालिकाभिः गोपविलासिनीभिः। वयस्यैः मित्रैः। अपिस्समुच्चये।

विहितविलास विहित कृतो विलासो यस्मिन् कर्मणि तद्यथा भवति तथा। केलिसलापादिलोले केलिसल्लापादौ क्रीडासल्लापादौ लोले तत्परे। सविधमिलित धेनू सविधे समीपे मिलिता आगता धेनू गा। एकहस्तेन एकेन हस्तेन करपङ्कजेन। कण्डूयति कण्डूयन कुर्वाणे। चशब्दोऽत्राध्याहर्तव्य। सति स्थितवति सति। भगवत शैलोद्वहने अनायासमवगम्य पतनशङ्काया अपगमादिति भाव॥

गोपा भगवत शैलोद्धरण दृष्ट्वा अतिविस्मिता बभूवुरित्याह—

अतिमहान् गिरिरेष तु वामके
करसरोरुहि त धरते चिरम्।
किमिदमद्भुतमद्रिबल न्विति
त्वदवलोकिभिराकथि गोपकैः ॥ ६ ॥

**अतिमहानिति** ॥ त्वदवलोकिभि गोपकै इति आकथि। त्वदवलोकिभि श्रीकृष्णदर्शिभि। गोपकै गोपै। इति अनेन प्रकारेण। आकथि कथितम्। कथनप्रकारमाह—गिरि अतिमहान् एष तु त वामके करसरोरुहि चिर धरते, इदम् अद्भुतम्, अद्रिबल किमिति। गिरि गोवर्धनाचल। अतिमहान् प्रभुतर। एष श्रीकृष्ण। तुर्विशेषे। तमाह—वामक इत्यादि। त गिरिम्। वामके दक्षिणेतरे। करसरोरुहि कराब्जे। चिर चिराय। धरते वहति। इद दृश्यमानम्। अद्भुतम् आश्चर्यम्। अद्रिबलम् अद्रे गोवर्धनस्य पक्षरहितस्यापि बल प्रभाव। किमिति जिज्ञासायाम्। न्विति वितर्के॥

भगवन शैलोद्धारणेन प्रभावं पश्यतोऽपि मूढस्येन्द्रस्य चेष्टितमाह—

ह ह ह धार्ष्ट्यममुष्य वटोर्गिरिं
व्यथितबाहुरसाववरोपयेत्।
इति हरिस्त्वयि बद्धविगर्हणो
दिवसमसप्तकमुग्रमवर्षयत् ॥ ७ ॥

हह हेति ॥ हरिः त्वयि इति बद्धविगर्हणः दिवससप्तकम् उग्रम् अवर्षयत्। हरिः इन्द्रः। त्वयि श्रीकृष्णे। इति एवं विचिन्त्य। बद्ध विगर्हणः बद्धा सञ्जाता विगर्हणा निन्दा यस्य सः। दिवससप्तकं सप्त दिनानि। अत्यन्तसंयोगे द्वितीया। उग्रं भीमं यथा भवति तथा। अव र्षयत् वर्षं विधातुं जलधरांश्चोदयामास। चिन्ताप्रकारमाह—ह ह ह अमुष्य वटोः धाष्टर्यम्, असौ व्यथितबाहुः गिरिम् अवरोपयेत् इति। ह ह हेत्यद्भुते। वटोः बालकस्य। धाष्टर्यं धृष्टता। असौ वटुः। व्यथितबाहुः व्यथितः प्राप्तसादो बाहुः पाणिर्यस्य तथाविधः सन्। गिरिं पर्वतम्। अवरोपयेत् अधः स्थापयेत् ॥

अथेन्द्रो भीतः पलायित इत्याह—

> अचलति त्वयि देव पदात् पदं
> गलितसर्वजले च घनोत्करे।
> अपहृते मरुता मरुतां पति-
> स्त्वदभिशङ्कितधीः समुपाद्रवत् ॥ ८ ॥

अचलतीति ॥ हे देव मरुतां पतिः त्वदभिशङ्कितधीः समुपाद्रवत्। देव प्रकाशमान। मरुतां देवानाम्। पतिः इन्द्रः। त्वदभिशङ्कितधीः त्वत्तः श्रीकृष्णस्य सकाशात् अभिशङ्किता भीता धीर्बुद्धिर्यस्य सः। समुपाद्रवत् पलायनमकरोत्। इन्द्रस्य भयहेतुमाह—त्वयि पदात् पदम् अचलति घनो त्करे गलितसर्वजले मरुता अपहृते च इति। त्वयि श्रीकृष्णे। पदात् पूर्वस्थानात्। पदं पदप्रमाणमपि देशान्तरम्। अचलति अगच्छति। घनोत्करे मेघसञ्चये। गलितसर्वजले गलितानि स्रुतानि सर्वाणि सकलानि जलानि यस्मात्तस्मिन्। अत एव मरुता वायुना। अपहृते दूरं नीते च सति। चकारो भगवदचलनजलस्रवणमरुदपहरणानां समुच्चये। मदीया शक्तिर्नास्मिन् फलतीति विचिन्त्येति भावः ॥

अथ भगवान् गिरिं भूमौ निचिक्षिप इत्याह—

शममुपेयुषि वर्षभरे तदा
पशुपधेनुकुले च विनिर्गते।
भुवि विभो समुपाहितभूधरः
प्रमुदितैः पशुपैः परिरेभिषे ॥ ९ ॥

**शममिति॥** हे विभो तदा वर्षभरे शमम् उपयुषि पशुपधेनुकुले विनिर्गते च भुवि समुपाहितभूधर त्वं प्रमुदितैः पशुपैः परिरेभिषे। विभो शक्तिसम्पन्न। अनेन भगवतः पर्वतस्योद्धरणे यथास्थाननिक्षेपणे चानायासो द्योत्यते। तदा मेघेषु मरुताऽपहृतेषु। वर्षभरे प्रकृष्टे वर्षे। शमं शान्तिम्। उपेयुषि गतवति सति। पशुपधेनुकुले पशुपानां गोपानां धेनूनां गवां च कुले समूहे सपरिकरे। विनिर्गते शैलस्याधःप्रदेशात् बहिर्गते सति। चकारो वर्षशमपशुपादिनिर्गमयोः समुच्चये। भुवि भूमौ। समुपाहितभूधर सम्यक् यथास्थानम् उपाहितः निक्षिप्तः भूधरः गोवर्धनाचलो येन सः। त्वं श्रीकृष्ण। प्रमुदितैः भगवत्प्रभावातिशयदर्शनात् प्रकर्षेण मुदितैः सन्तुष्टैः। पशुपैः गोपैः। परिरेभिषे आश्लिष्टोऽभूः॥

देवाः भगवन्तं तुष्टुवुरित्याह—

धरणिमेव पुरा धृतवानसि
क्षितिधरोद्धरणे तव कः श्रमः।
इति नुतस्त्रिदशैः कमलापते
गुरुपुरालय पालय मां गदात् ॥ १० ॥

**धरणिमिति॥** हे गुरुपुरालय कमलापते इति त्रिदशैः नुत त्वं मां गदात्-पालय। गुरुपुरालय श्रीगुरुवायुपुरवास। कमलापते लक्ष्मीपते। इति अनेन प्रकारेण। त्रिदशैः देवैः। नुत स्तुत। त्वं श्रीकृष्ण। माम् अनन्यशरणम्। गदात् आमयात्। पालय रक्ष। नुतिप्रकारमाह— त्वं पुरा धरणिमेव धृतवान् असि, तव क्षितिधरोद्धरणे कः श्रमः इति।

पुरा पूर्वम्। वराहावतार इत्यर्थः। धरणिं पृथिवीम्। एवकारोऽयोग व्यवच्छेदे। धृतवान् दंष्ट्राग्रेणाभ्युद्धृतवान्। तव तथाविधस्यानन्तशक्तेः। क्षितिधरोद्धरणे क्षितिधरस्य पृथिव्यपेक्षयाऽत्यल्पकस्य पर्वतस्य उद्धरणे वहने। कः श्रमः। न कोपि श्रम इत्यर्थः॥

इति गोवर्धनोद्धरणवर्णनं
त्रिषष्टितमदशकम् ॥

## चतुष्षष्टितमदशकम्।

अथ गोपाः श्रीकृष्णस्यालौकिकव्यापारदर्शनाद्विस्मिता भगवतो जातक मपृच्छन् नन्दमित्याह—

आलोक्य शैलोद्धरणादिरूपं प्रभावमुच्चैस्तव गोपलोकाः।
विश्वेश्वरं त्वामभिमत्य विश्वे नन्दं भवज्जातकमन्वपृच्छन् ॥ १ ॥

आलोक्येति॥ विश्वे गोपलोकाः त्वां विश्वेश्वरम् अभिमत्य नन्दं भवज्जातकम् अन्वपृच्छन्। विश्वे सर्वे। गोपलोका गोपालका। त्वां श्रीकृष्णम्। विश्वेश्वरं लोकेश्वरम्। अभिमत्य उद्दिश्य। नन्दं व्रजेश्वरम्। भवज्जातकं भवतः श्रीकृष्णस्य जातकम्। अन्वपृच्छन् पृष्टवन्तः। जातक विषयकप्रश्ने हेतुमाह—तव शैलोद्धरणादिरूपम् उच्चैः प्रभावम् आलोक्य इति। तव श्रीकृष्णस्य। शैलोद्धरणादिरूपम् शैलोद्धरणपूतनावधशकटासुरभञ्जनतृणा वर्तायमकरासभस्वरूपासुरादिसंहाररूपम्। उच्चैः उन्नतम्। प्रभावम् अलौकिक व्यापारमित्यर्थः। आलोक्य दृष्ट्वा॥

गोपा नन्दोदितं भगवतो जातकफलं श्रुत्वा भगवन्तं बहुमन्यन्तेत्याह—

**गर्गोदितो निर्गदितो निजाय वर्गाय तातेन तव प्रभावः ।**
**पूर्वाधिकस्त्वय्यनुराग एषामैधिष्ट तावद्बहुमानभारः ॥ २ ॥**

**गर्गोदित इति ॥** तातेन निजाय वर्गाय गर्गोदितः तव प्रभावः निर्गदित.। तातेन पित्रा नन्देन। निजाय वर्गाय स्वकीयेभ्यो गोपेभ्य इत्यर्थ.। गर्गोदित. मुनिना गर्गेणोदितः 'स्निह्यति यस्तव पुत्रे' इत्यादि नोक्त.। तव श्रीकृष्णस्य। प्रभाव. माहात्म्यम्। निर्गदितः कथितः। तावत् एषा त्वयि अनुराग बहुमानभार. पूर्वाधिकः ऐधिष्ट। तावत् भगवज्जातकश्रवणसमये। एषा गोपानाम्। त्वयि भगवति श्रीकृष्णे। अनुरागः स्नेह.। बहुमानभार. आदरातिशयः। तद्रूपेणेत्यर्थः। पूर्वाधिकः पूर्वस्मादधिकः सन्। ऐधिष्ट अवर्धत ॥

अथेन्द्रोऽपि गतमदस्सन् भगवन्तं तुष्टावेत्याह—

**ततोऽवमानोदिततत्त्वबोधः सुराधिराजः सह दिव्यगव्या ।**
**उपेत्य तुष्टाव स नष्टगर्वः स्पृष्ट्वा पदाब्जं मणिमौलिना ते ॥ ३ ॥**

**तत इति ॥** तत स सुराधिराजः दिव्यगव्या सह उपेत्य ते पदाब्जं मणिमौलिना स्पृष्ट्वा तुष्टाव। तत अनन्तरम्। स· यः पूर्वं मनुष्यत्वं यात इत्याद्युक्त्वा भगवन्तं जेतुमुद्यत। सुराधिराजः देवेन्द्र.। दिव्यगव्या सुरभ्या। सह समम्। उपेत्य आगत्य। ते श्रीकृष्णस्य। पदाब्जं पादारविन्दम्। मणिमौलिना मणिखचितेन रत्नखचितेन मौलिना किरीटेन। स्पृष्ट्वा। श्रीकृष्णपादारविन्दयोः प्रणम्येत्यर्थ.। तुष्टाव स्तुतिभिराराधितवान्। त्वामिति शेष.। ननु कथं सगर्वो देवेन्द्रो भगवन्तं तुष्टावेत्याशङ्कायामाह— नष्टगर्वः इति। नष्ट. गर्व· अभिमानो यस्य तादृशः सन्। गर्वनाशे हेतुः—अवमानोदिततत्त्वबोधः इति। अवमानेन भगवतः सकाशात् परा जयेन उदितः उत्पन्न· तत्त्वबोधः मनुष्यतामुपगतोऽपि मयाऽजय्योऽयं हरिः, किन्तु पूज्य एवास्माभिरिति ज्ञानं यस्य सः ॥

सुरभिरिन्द्रोऽपि भगवन्तमभ्यषिञ्चदित्याह—

स्नेहस्नुतैस्त्वां सुरभिः पयोभि-
गोविन्दनामाङ्कितमभ्यषिञ्चत्।
ऐरावतोपाहृतदिव्यगङ्गा-
पाथोभिरिन्द्रोऽपि च जातहर्षः ॥ ४ ॥

स्नेहस्नुतैरिति ॥ सुरभिः स्नेहस्नुतैः पयोभिः त्वां गोविन्दनामाङ्कितम् अभ्यषिञ्चत्। सुरभिः दिव्यगवी। स्नेहस्नुतैः स्नेहेन स्नुतैः स्नुतैः। पयोभिर्दुग्धैः। त्वां श्रीकृष्णम्। गोविन्दनामाङ्कितं गोविन्द इति नाम्ना अङ्कितं कृत्वा। गोविन्द इत्याहूयेत्यर्थः। अपि च इन्द्रः जातहर्षः ऐरावतोपाहृतदिव्य गङ्गापाथोभिः। अपि च किञ्च। इन्द्रः वासवः। जातहर्षः सञ्जात सन्तोषः। ऐरावतोपाहृतदिव्यगङ्गापाथोभिः ऐरावतेन उपाहृतैः आनीतैः दिव्य गङ्गायाः मन्दाकिन्याः पाथोऽभिः जलैः। अभ्यषिञ्चदित्यत्रापि सम्बध्यते ॥

अभिषेकस्य फलमाह—

जगत्त्रयेशे त्वयि गोकुलेशे
तथाऽभिषिक्ते सति गोपवाटः।
नाकेऽपि वैकुण्ठपदेऽप्यलभ्यां
श्रियं प्रपेदे भवतः प्रभावात् ॥ ५ ॥

जगत्त्रयेश इति ॥ गोपवाटः नाके वैकुण्ठपदे अपि अलभ्यां श्रियं प्रपेदे। गोपवाटः गोपानां निवासः। नाके स्वर्गे। वैकुण्ठपदे विकुण्ठलोके। अपिशब्दो विरोधे। अलभ्यां दुर्लभाम्। श्रियं लक्ष्मीम्। प्रपेदे प्राप। अत्र हेतुमाह—जगत्त्रयेशे त्वयि तथा गोकुलेशे अभिषिक्ते सति इति। जगत्त्रयेशे जगत्त्रयस्य लोकत्रितयस्य ईशे रक्षितरि। त्वयि श्रीकृष्णे। तथा तेन प्रकारेण। गोकुलेशे गोकुलस्येशे। सति वर्तमाने सति। एवमभिषेचने हेतुमाह—भवतः प्रभावादिति। भवतः श्रीकृष्णस्य ॥

अथ वरुणस्य कश्चिदनुचरो नन्दं जहारेत्याह—

कदाचिदन्तर्यमुनं प्रभाते स्नायन् पिता वारुणपूरुषेण।
नीतस्तमानेतुमगाः पुरीं त्वं तां वारुणीं कारणमर्त्यरूपः ॥ ६ ॥

कदाचिदिति॥ कदाचित् प्रभाते अन्तर्यमुनं स्नायन् पिता वारुण पूरुषेण नीत । कदाचिदेकदा। प्रभाते प्रातः। अन्तर्यमुनं यमुनायाम्। स्नायन् स्नानं कुर्वाण । पिता नन्द । वारुणपूरुषेण वरुणानुचरेण केन चिदसुरेण। नीत वरुणपुरीं प्रापित । अथ भगवतो नन्दप्रत्यानयनमाह— तमित्याद्यारभ्योत्तरश्लोकस्थचतुर्थपादपर्यन्तेन । कारणमर्त्यरूप· त्वं तम् आनेतुं तां वारुणीं पुरीम् अगा । कारणमर्त्यरूप भूभारापहरणायाङ्गीकृतमनुष्य विग्रह·। अनेन भगवतो वरुणालयप्रवेशे शक्तिर्दर्शिता। त्वं श्रीकृष्णः। तं पितरं नन्दम्। आनेतुं प्रत्यानेतुम्। तां मनुष्यैर्दुष्प्राप्यतया प्रसिद्धाम्। वारुणीं वरुणसम्बन्धिनीम्। पुरीं राजधानीम्। अगा. गतवानसि॥

ससम्भ्रम तेन जलाधिपेन प्रपूजितस्त्वं प्रतिगृह्य तातम्।
उपागतस्तत्क्षणमात्मगेहं पिताऽवदत्तच्चरितं निजेभ्यः ॥ ७ ॥

ससम्भ्रममिति॥ त्वं ससम्भ्रमं तेन जलाधिपेन प्रपूजित तं तातं प्रतिगृह्य तत्क्षणम् आत्मगेहम् उपागत । त्वं श्रीकृष्ण.। ससम्भ्रमं भग वद्दर्शनेन जातसम्भ्रम यथा भवति तथा। तेन सागसा। जलाधिपेन वरुणेन। प्रपूजित प्रकर्षेण पूजित । तं तातं नन्दम्। प्रतिगृह्य आदाय। तत्क्षणं तस्मिन्नेव क्षणे। व्रजौकसां शोकसम्भ्रमनिवारणार्थमिति भाव.। आत्म गेह व्रजम्। उपागत प्राप्त । पिता तत् चरितं निजेभ्य अवदत्। पिता नन्द.। तत् आत्मापहरणादि। चरितं वृत्तान्तम्। निजेभ्य गोपेभ्य.। अवदत् अकथयत्॥

अथ भगवान् गोपानात्मन. पदं व्यादर्शयदित्याह—

हरिं विनिश्चित्य भवन्तमेतान्
भवत्पदालोकनबद्धतृष्णान्।
निरीक्ष्य विष्णो परमं पदं त-
द्दुरापमन्यैस्त्वमदीदृशस्तान्　　॥ ८ ॥

हरिमिति ॥ हे विष्णो त्वं तान् अन्यैः दुरापं तत् परमं पदम् अदीदृशः। त्वं श्रीकृष्णः। तान् गोपान्। अन्यैः तथाविधभगवद्भक्तभिन्नैः। दुरापं प्राप्तुमशक्यम्। तत् अनावृतं ब्रह्मस्वरूपम्। परमं सर्वोत्कृष्टम्। पदं स्थानम्। अदीदृशः दर्शितवानसि। ननु किमर्थमेतद्दर्शितवानित्यत्राह—एतान् भवत्पदालोकनबद्धतृष्णान् निरीक्ष्य इति। एतान् गोपान्। भवतः मायामानुषविग्रहस्य विष्णोः पदं ब्रह्म तस्य आलोकने बद्धतृष्णाः साभिलाषाः तथाविधान्। निरीक्ष्य दृष्ट्वा। गोपानामेवंविधाभिलाषोदये हेतुं दर्शयति—भवन्तं हरिं विनिश्चित्य इति। भवन्तं श्रीकृष्णम्। हरिं विष्णुम्। विनिश्चित्य विशेषेण सुदृढं निश्चित्य। अमानुषैः पर्वतोद्वहनन्दानयनादिभिश्चेष्टितैरित्यर्थः॥

स्फुरत्परानन्दरसप्रवाह-
प्रपूर्णकैवल्यमहापयोधौ।
चिरं निमग्नाः खलु गोपसङ्घा-
स्त्वयैव भूमन् पुनरुद्धृतास्ते　　॥ ९ ॥

स्फुरत्परानन्देति ॥ गोपसङ्घाः स्फुरत्परानन्दरसप्रवाहप्रपूर्णकैवल्यमहापयोधौ चिरं निमग्नाः खलु। गोपसङ्घाः गोपसमूहाः। स्फुरत्परानन्दरसप्रवाहप्रपूर्णकैवल्यमहापयोधौ स्फुरन् प्रकाशमानो यः परानन्दात्मको रसः तस्य प्रवाहेण प्रपूर्णः प्रकर्षेण पूर्णः कैवल्याख्यो महापयोधिः महोदधिः तस्मिन्। चिरं चिराय। निमग्नाः नितरां मग्नाः। अभूवन्निति शेषः। विगलितवेद्यान्तरं ब्रह्मानन्दमन्वभूवन्नित्यर्थः। हे भूमन् पुनः ते त्वया एव उद्धृताः। भूमन् परिपूर्ण। ते गोपसङ्घाः। त्वया श्रीकृष्णेन। एवकारेणान्येषां व्यवच्छेदः। उद्धृताः उन्मग्नाः कृताः॥

अथ कवि श्रीकृष्णस्य निष्कलब्रह्मत्वं प्रतिपादयन् प्रकरणमुपसंहरति—

करबदरवदेवं देव कुत्रावतारे
परपदमनवाप्यं दर्शितं भक्तिभाजाम्।
तदिह पशुपरूपी त्वं हि साक्षात् परात्मन्
पवनपुरनिवासिन् पाहि मामामयेभ्यः॥ १० ॥

करबदरवदिति॥ हे देव ननु इह पशुपरूपी त्वं हि साक्षात् परात्मा। देव प्रकाशमान। ननु तस्मात् कारणात्। त्वं श्रीकृष्ण। हि स्फुटम्। साक्षात् स्वेच्छयाऽङ्गीकृतशुद्धसत्त्वमयविग्रहतया प्रत्यक्षगोचरतामुपगतः। परात्मा सच्चिदानन्दाद्वितीयात्मकं ब्रह्म। असीति शेषः। तत्सदार्थमाह—कुत्र अवतारे अनवाप्यं परपदम् एवं करबदरवत् भक्तिभाजां दर्शितमिति। कुत्रावतारे कस्मिन्नवतारे। अनवाप्यं प्राप्तुमशक्यम्। परपदं स्वनिलयं ब्रह्म। एवम् उक्तप्रकारेण। करबदरवत् करस्थकर्कन्धूफलमिव। भक्तिभाजां भक्तानां गोपानाम्। दर्शितं प्रदर्शितम्। त्वयेति शेषः। निष्कलब्रह्मस्वरूपाद्भगवतोऽन्यैरेव परपदप्रदर्शनस्याशक्यत्वात् भगवान् श्रीकृष्णो निष्कलब्रह्मैवेत्यर्थः। अथ प्रार्थयते—हे पवनपुरवासिन् त्वं माम् आमयेभ्यः पाहि इति। पवनपुरनिवासिन् गुरुवायुपुरनाथ। मामनन्यशरणम्। आमयेभ्यः गदेभ्यः। पाहि रक्ष॥

इति गोविन्दपट्टाभिषेकवर्णनं वरुणलोकात् नन्दानयनवर्णनं गोपानां ब्रह्मपदप्रदर्शनवर्णनं च
चतुष्षष्टितमदशकम्॥

---

## पञ्चषष्टितमदशकम् ।

अथ भगवतो गोपस्त्रीभ्यः प्रतिश्रुतमनङ्गोत्सवं वर्णयितुमुपक्रमते—

गोपीजनाय कथितं नियमावसाने
मारोत्सवं त्वमथ साधयितुं प्रवृत्तः ।
सान्द्रेण चान्द्रमहसा शिशिरीकृताशे
प्रापूरयो मुरलिकां यमुनावनान्ते ॥ १ ॥

**गोपीजनायेति॥** अथ त्वं यमुनावनान्ते मुरलिकां प्रापूरयः । अथ अनन्तरम् । त्वं श्रीकृष्णः । यमुनावनान्ते यमुनावनस्य कालिन्दीतटभुवो वनस्य अन्ते अभ्यन्तरे । मुरलिकां वेणुम् । प्रापूरयः प्रकर्षेण पूरितवान् । मधुरं वेणुना सञ्जगावित्यर्थः। ननु किमर्थमेतत् कृतवानित्याकाङ्क्षायामाह— नियमावसाने गोपीजनाय कथितं मारोत्सवं साधयितुं प्रवृत्त. इति। नियमावसाने नियमस्य गोपीभिः कृतस्य कात्यायन्यर्चनव्रतस्य अवसाने विरामे । गोपीजनाय गोपस्त्रीसञ्चयाय। कथितं 'विदितं ननु वो मनीषितम्' इत्यादिना प्रतिज्ञातम्। मारोत्सवं कामोत्सवम् । साधयितुं सम्पादयितुम् । प्रवृत्तः उद्युक्तः सन् । यमुनावनस्य रमणीयतामाह—सान्द्रेण चान्द्रमहसा शिशिरीकृताशे इति। सान्द्रेण शरत्कालिकतया निबिडेन। चान्द्रमहसा चन्द्रिकया। एतच्चोत्फुल्लमल्लिकाया अप्युपलक्षणम्। उक्तञ्च श्रीमद्भागवते—'भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः। वीक्ष्य रन्तुं मनश्चक्रे' इति। शिशिरीकृताशे शिशिरीकृताः शीतलीकृताः आशा दिशो यस्य। अनेन रत्युद्दीपनसद्भावो दर्शितः ॥

गोप्यः सर्वं विसृज्य यमुनावनप्राप्तौ हेतुभूतं चित्तविमोहं प्रापुरित्याह—

सम्मूर्छनाभिरुदितस्वरमण्डलाभिः
सम्मूर्छयन्तमखिलं भुवनान्तरालम् ।

त्वद्वेणुनादमुपकर्ण्य विभो तरुण्य-
स्तत्तादृशं कमपि चित्तविमोहमापुः ॥ २ ॥

सम्मूर्छनाभिरिति ॥ हे विभो तरुण्यः तत्तादृशं कमपि चित्त विमोहम् आपु । विभो परिपूर्ण। तरुण्यः गोपवधूट्यः। तत्तादृशं स एव तादृशो यस्य तम्। अनुपममित्यर्थः। कमपि अनिर्वचनीयम्। चित्त विमोहं चित्तस्य मनसो विमोहं सम्मोहम्। आपुः प्रापुः। अत्र हेतुः— त्वद्वेणुनादम् उपकर्ण्य इति। त्वद्वेणुनादं तव-श्रीकृष्णस्य वेणुनादं मुरली रवम्। उपकर्ण्य आकर्ण्य। मुरलीरवस्य मोहोत्पादनसामर्थ्यं दर्शयति— उदितस्वरमण्डलाभि सम्मूर्छनाभि अखिलं भुवनान्तरालं सम्मूर्छयन्तमिति। उदितस्वरमण्डलाभिः उदितानि स्फुटं श्रूयमाणानि स्वरमण्डलानि प्रयोगभेदा यासु ताभि । सम्मूर्छनाभि आरोहावरोहणरूपैस्सप्तभिः स्वरैः। यदुक्तम्— 'क्रमयुक्तास्स्वरास्सप्त मूर्छना परिकीर्तिता' इति। अखिलं समस्तम्। भुवना न्तरालं भुवनस्य लोकस्य अन्तरालमभ्यन्तरम्। अत्र अन्तरालशब्देन तत्रत्या जना लक्ष्यन्ते । तिरश्चामपि मूर्छितत्वं व्यङ्ग्यम्॥

चित्तविमोहमुपगताना गोपीना प्रवृत्तिमाह—

ता गेहकृत्यनिरतास्तनयप्रसक्ताः
कान्तोपसेवनरताश्च सरोरुहाक्ष्यः ।
सर्वं विसृज्य मुरलीरवमोहितास्ते
कान्तारदेशमयि कान्ततनो समेताः ॥ ३ ॥

ता इति ॥ अयि कान्ततनो गेहकृत्यनिरता तनयप्रसक्ता. कान्तोप सेवनरता. च ता. सरोरुहाक्ष्य सर्वं विसृज्य कान्तारदेशं समेता.। अयीति सम्बोधने। कान्ततनो मनोहराकार । काश्चित् गेहकृत्यनिरता. गृहकर्म व्यापृताः। काश्चिच्च तनयप्रसक्ताः अपत्यलालनपरा. । काश्चन कान्तोप सेवनरताः पतिशुश्रूषणरता.। चकारोऽनुक्तानां भोजनादिकर्मनिरतानां समुच्च यार्थ । सरोरुहाक्ष्य गोप्य.। सर्वमखिलं स्वस्वकर्म। विसृज्य त्यक्त्वा।

कान्तारदेशम् अरण्यप्रदेशम्। समेताः प्राप्ताः। अत्र हेतुः—ते मुरलीरवमोहिताः इति। ते श्रीकृष्णस्य। मुरलीरवमोहिताः मुरलीरवेण वेणुनादेन मोहिताः जनितसम्मोहाः सत्यः॥

अथ गोपीनां भगवत्समागमसम्भ्रमं दर्शयति त्रिभिः—

काश्चिन्निजाङ्गपरिभूषणमादधाना
वेणुप्रणादमुपकर्ण्य कृतार्धभूषाः।
त्वामागता ननु तथैव विभूषिताभ्य-
स्ता एव संरुरुचिरे तव लोचनाय ॥ ४ ॥

काश्चिदिति॥ वेणुप्रणादम् उपकर्ण्य काश्चित् निजाङ्गपरिभूषणम् आदधानाः त्वाम् आगताः। वेणुप्रणादं मुरलीरवम्। उपकर्ण्य आकर्ण्य। काश्चित् गोप्यः। निजाङ्गपरिभूषणं निजानामङ्गानां करचरणादीनां परिभूषणं वलयनूपुरादि। आदधानाः आ समन्ताद्दधानाः दधत्यः। अनुरागचेष्टितोक्तिरियम्। यदुक्तम्—'विलोचनपथं त्यज्य निर्गच्छत्यनलङ्कृता' इति। त्वां श्रीकृष्णम्। आगताः प्राप्ताः। कृतार्धभूषाः तथा एव ननु। अत्र निजाङ्गपरिभूषणम् आदधानाः वेणुप्रणादम् उपकर्ण्य इत्यपि योजनीयम्। आदधानाः कुर्वत्यः। अत्रान्तरे वेणुप्रणादम् उपकर्ण्य भगवत्समागमत्वरया कृतार्धभूषाः असमापितालङ्करणव्यापाराः। तथैव तेनैव प्रकारेण। त्वामागता इत्यत्रापि सम्बध्यते। नन्वित्यवधारणे। कृतार्धभूषासु भगवतः प्रीत्यतिशयो जात इत्याह—ताः एव तव लोचनाय विभूषिताभ्यः संरुरुचिरे इति। ताः करधृतभूषाः कृतार्धभूषाश्च। एवेत्यवधारणे। तव श्रीकृष्णस्य। लोचनाय नेत्राय। विभूषिताभ्यः अलङ्कृताभ्यः। संरुरुचिरे रुचये प्रीतये बभूवुः। अलङ्करणकालविलम्बमसहमानानां तासां प्रेमप्रकर्षदर्शनादिति भावः॥

हारं नितम्बभुवि काचन धारयन्ती
काञ्चीञ्च कण्ठभुवि देव त्वाम् समागता।

हारित्वमात्मजघनस्य मुकुन्द तुभ्यं
व्यक्तं बभाष इव मुग्धमुखी विशेषात् ॥ ५ ॥

हारमिति ॥ हे देव काचन नितम्बभुवि हारं कण्ठभुवि काञ्चीं च धारयन्ती त्वां समागता। देव प्रकाशमान। काचन गोपी। नितम्बभुवि जघनस्थले। हारं मुक्तादाम। कण्ठभुवि कण्ठदेशे। काञ्चीं रशनाम्। चकारः समुच्चये। धारयन्ती वहन्ती। त्वां श्रीकृष्णम्। समागता प्राप्ता। अत्रोत्प्रेक्षते—हे मुकुन्द मुग्धमुखी आत्मजघनस्य विशेषात् हारित्वं तुभ्यं व्यक्तं बभाषे इव इति। मुग्धमुखी मुग्धं सुन्दरं मुखं यस्यास्तथाविधा सा गोपी। आत्मजघनस्य आत्मनः स्वस्य जघनस्य नितम्बस्यापि। विशेषात् विशेषतः। हारित्वं हारोऽस्यास्तीति हारी तस्य भावं, मनोहरत्वं च। श्लेषेणोभयोरभेदाध्यवसायः। तुभ्यं श्रीकृष्णाय। व्यक्तं स्फुटं यथा भवति तथा। बभाषे अकथयत्। इवेति सम्भावनायाम्। मुखसौन्दर्यस्य प्रत्यक्षत्वेन तत्कथनं न च युक्तम्, नितम्बस्याशुकाच्छन्नतया तस्य मनोहरत्वं वक्तव्यमेवेति गोप्याश्रितरुचिः मुग्धमुखीत्यनेन ध्वन्यते ॥

काचित् कुचे पुनरसज्जितकञ्चुलीका
व्यामोहतः परवधूभिरलक्ष्यमाणा।
त्वामाययौ निरुपमप्रणयातिभार-
राज्याभिषेकविधये कलशीधरेव ॥ ६ ॥

काचिदिति ॥ काचित् पुनः व्यामोहतः कुचे असज्जितकञ्चुलीका त्वामाययौ। काचित् गोपी। पुनःशब्दस्त्वर्थे। व्यामोहतः व्यामोहात्। कुचे स्तनयोरित्यर्थः। असज्जितकञ्चुलीका असंयोजितकञ्चुलीका। त्वां श्रीकृष्णम्। आययौ प्राप। नन्वन्याभिर्गोपीभिः कुतो न स्मारितेत्या शङ्कायामाह—परवधूभिः अलक्ष्यमाणा इति। परवधूभिः अन्याभिर्गोपीभिः।

अलक्ष्यमाणा अदृष्टा च सती। व्यामोहः परवधूनामपि वेदितव्यः। अत्रो उत्प्रेक्षते—निरुपमप्रणयातिभारराज्याभिषेकविधये कलशीधरा इवेति। निरुपम प्रणयातिभारराज्याभिषेकविधये निरुपमः अनुपमो यः प्रणयस्य प्रेमप्रकर्षस्य अतिभारः महान् भारः। अतिशय इति यावत्। तद्रूपे राज्ये स्थाप्य अभिषेकविधये अभिषेककरणाय। कलशीधरा सुवर्णकलशद्वयं वहन्ती। इवेति सम्भावनायाम् ॥

अथ कासाञ्चिद्गोपीनां भगवत्सन्निधिं गन्तुमपारयन्तीनां पुण्यां गतिमाह—

काश्चिद्गृहात् किल निरेतुमपारयन्त्य-
स्त्वामेव देव हृदये सुदृढं विभाव्य।
देहं विधूय परचित्सुखरूपमेकं
त्वामाविशन् परमिमा ननु धन्यधन्याः ॥ ७ ॥

**काश्चिदिति** ॥ काश्चित् गृहात् निरेतुम् अपारयन्त्यः हे देव त्वामेव हृदये सुदृढं विभाव्य देहं विधूय परचित्सुखरूपम् एकं त्वामाविशन्। काश्चित् गोप्यः। गृहात् भवनात्। निरेतुं बहिर्गन्तुम्। अपारयन्त्यः असमर्थाः सत्यः। भर्त्रादिभिर्बलान्निवारितत्वादिति भावः। देव प्रकाशमान। त्वां श्रीकृष्णम्। हृदये चेतसि। सुदृढं सुतरां दृढम्। विभाव्य ध्यात्वा। विजातीयभावनानन्तरितभगवद्भावनाप्रवाहं कृत्वेत्यर्थः। देहं स्थूलसूक्ष्मात्मकम्। विधूय त्यक्त्वा। परचित्सुखरूपं परचिदानन्दस्वरूपम्। एकमद्वितीयम्। त्वां श्रीकृष्णाकारं ब्रह्म। आविशन् प्रापुः। ननु कर्मपाशबद्धानां कथं विदेहमुक्तिः सम्भवतीति चेन्न, भगवद्विरहजनितसन्तापातिशयेन विगतकिल्बिषा भगवदाश्लेषध्यानजनितानन्दातिशयेन प्रक्षीणपुण्यसञ्चयाश्च ताः परमात्मानं श्री कृष्णं ध्यायन्त्यो मुक्ता बभूवुरिति ध्येयम्। उक्तञ्च श्रीमद्भागवते—'दुस्सहप्रेष्ठविरहतीव्रतापधुताशुभाः। ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ॥ तमेव परमात्मानं जारबुद्ध्याऽपि सङ्गताः। जहुर्गुणमयं देहं सद्यः प्रक्षीण बन्धनाः ॥' इति। अथ कविस्तासां गतिमनुमोदमान आह—इमाः ननु

परं धन्यधन्या इति। इमाः सद्योमुक्ताः अस्त्वविनिर्गमाः गाव्य। नन्वि त्यवधारणे। परम् अत्यर्थम्। धन्यधन्या अतिशयेन धन्या ॥

येन केनापि प्रकारेण श्रीकृष्णे मनस्समाधानं मोक्षहेतुरित्याह—

जारात्मना न परमात्मतया स्मरन्त्यो
नार्यो गताः परमहंसगतिं क्षणेन ।
तं त्वां प्रकाशपरमात्मतनुं कथञ्चि-
च्चित्ते वहन्नमृतमश्रममश्नुवीय ॥ ८ ॥

जारात्मनेति ॥ अहं प्रकाशपरमात्मतनुं तं त्वां कथञ्चित् चित्ते वहन् अश्रमम् अमृतम् अश्नुवीय। प्रकाशपरमात्मतनुं प्रकटीकृतपरब्रह्म स्वरूपम्। तं तथाविधम्। त्वां श्रीकृष्णम्। कथञ्चित् येन केनापि प्रकारेण। कामक्रोधादिभिरित्यर्थः। चित्ते मनसि। वहन् दधानः। अश्रमम् अनायासेन। अमृतं मोक्षम्। अश्नुवीय प्राप्नुयाम्। उक्तञ्च श्रीमद्भागवते—'कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा। नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥' इति। तत्सदार्थमाह—नार्यः जारात्मना, न परमात्मतया स्मरन्त्यः क्षणेन परमहंसगतिं गताः इति। अत्र यम् इत्यादि। यः जारात्मना उपपतिधिया। न परमात्मतया न परमात्मत्वेन। स्मरन्त्यः चिन्तयन्त्यः। क्षणेन झटिति। परमहंसगतिं परमहंसानामात्मानात्म विवेकिनां गतिं मोक्षम्। गताः प्राप्ताः ॥

गोपीभिर्दृष्टस्य भगवतः स्वरूपमाह—

अभ्यागताभिरभितो व्रजसुन्दरीभि-
र्मुग्धस्मितार्द्रवदनः करुणावलोकी ।
निस्सीमकान्तिजलधिस्त्वमवेक्ष्यमाणो
विश्वैकहृद्य हर मे पवनेश रोगान् ॥ ९ ॥

**अभ्यागताभिरिति॥** हे विश्वैकहृद्य पवनेश अभितः अभ्यागताभिः व्रजसुन्दरीभिः अवेक्ष्यमाणः मुग्धस्मितार्द्रवदनः करुणावलोकी निस्सीमकान्तिजलधिः त्वं मे रोगान् हर। विश्वैकहृद्य जगदेकमनोहर। पवनेश गुरुवायुपुरनाथ। अभितः परितः। अभ्यागताभिः आगताभिः। व्रजसुन्दरीभिः गोपसुन्दरीभिः। अवेक्ष्यमाणः दृश्यमानः। मुग्धस्मितार्द्रवदनः मुग्धेन मनोहरेण स्मितेन मन्दहासेन आर्द्रं सिक्तं वदनं मुखं यस्य सः। करुणावलोकी कृपया गोपीर्विलोकयन्नित्यर्थः। निस्सीमकान्तिजलधिः सीमारहितशोभासमुद्रभूतः। सीमा अवधिः। त्वं श्रीकृष्णः। मे मम। रोगान् आमयान्। हर -नाशय॥

इति रासक्रीडायां गोपीनां भगवत्समीपगमनवर्णनं
पञ्चषष्टितमदशकमेकोनम्॥

## षट्षष्टितमदशकम्।

अथोपयातासु गोपीषु भगवतः प्रवृत्तिमाह द्वाभ्याम्—

**उपयातानां सुदृशां कुसुमायुधबाणपातविवशानाम्।**
**अभिवाञ्छितं विधातुं कृतमतिरपि ता जगाथ वाममिव॥ १ ॥**

**उपयातानामिति॥** त्वं ताः वामम् इव जगाथ। त्वं श्रीकृष्णः ताः गोपीः। वामं प्रतिकूलम्। इवेति सम्भावनायाम्, अवधारणे वा। ननु भगवांस्तासामननुकूलः किमेवमवददित्याकाङ्क्षायामाह—कुसुमायुधबाणपातविवशानाम् उपयातानां सुदृशाम् अभिवाञ्छितं विधातुं कृतमतिः अपि इति। कुसुमायुधबाणपातविवशानां कुसुमायुधस्य कामस्य बाणपातेन शरपातेन विवशानामवशचित्तानाम्। अत एवोपयातानां समीपे आगतानाम्। सुदृशां

व्रजसुन्दरीणाम्। अभिवाञ्छितम् अभिलषितमनङ्गोत्सवम्। विधातुं कर्तुम्। कृतमति निश्चितमानसः। अपिर्विरोधे। तासां मुखादनुरागपेशला गिरः श्रोतुमिति भावः॥

भगवान् कुलवधूधर्ममप्याहेत्याह—

**गगनगतं मुनिनिवहं श्रावयितुं जगिथ कुलवधूधर्मम्।**
**धर्म्यं खलु ते वचनं कर्म तु नो निर्मलस्य विश्वास्यम्॥ २॥**

**गगनगतमिति॥** त्वं गगनगतं मुनिनिवहं श्रावयितुं कुलवधूधर्मं जगिथ। त्वं श्रीकृष्ण। गगनगतम् अन्तरीक्षवर्तिनम्। मुनिनिवहम् ऋषिसङ्घम्। कुलवधूधर्मं कुलवधूनां कुलस्त्रीणां धर्मम्। जगिथ उक्तवानसि। अत्र श्रीमद्भागवतम्—'दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा। पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी॥ अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम्। जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियाः॥' इति। नन्वनुपनीतस्य कामोत्सव एवाधर्मः, किमुत परस्त्रीभिः कुलवधूभिः, अतस्तत्कर्ता कथितं कुलवधूधर्मे कथं मुनीनां विश्वासः स्यादित्याशङ्कां परिहरति—ते वचनं धर्म्यं खलु, कर्म तु नो विश्वास्यमिति। ते तव श्रीकृष्णस्य। वचनं वाक्यम्। धर्म्यं धर्मादनपेतम्। खल्विति प्रसिद्धौ। उक्तं च श्रीमद्भागवते—'ईश्वराणां वचः सत्यम्' इति। तुर्विशेषे। तदाह—नो विश्वास्यमिति। विश्वास्यं विश्वासयोग्यम्। अत्र हेतुः—निर्मलस्य इति। निर्गुणत्वात् कर्मानधिकारिण इत्यर्थः। अत्र श्रीमद्भागवतम्—'धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्। तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा॥' इति॥

गोप्यो भगवदुक्तिं निशम्यातीव विह्वला बभूवुरित्याह—

**आकर्ण्य ते प्रतीपां वाणीमेणीदृशः परं दीनाः।**
**मा मा करुणासिन्धो परित्यजेत्यतिचिरं निनेदुस्ताः॥ ३॥**

**आकर्ण्येति ॥** ताः एणीदृशः इति अतिचिरं विलेपुः। ताः एणी दृशः हरिणेक्षणा गोप्यः। इति अनेन प्रकारेण। अति अतिमात्रम् चिरं चिराय। विलेपुः रुदत्य ऊचुरित्यर्थः। विलापे हेतुः—परं दीनाः इति। परम् अत्यर्थम्। दीनाः क्षीणमानसाः सत्यः। दैन्ये कारण माह—ते प्रतीपां वाणीमाकर्ण्य इति। ते तव श्रीकृष्णस्य। प्रतीपां प्रतिकूलाम्। वाणीं स्वागतं वः, किं करवाणि, कच्चिद्व्रजस्यानामयम्, ब्रूतागमनकारणमत्र, रजन्यां नेह स्त्रीभिः स्थेयम्, पतयः पितरो भ्रातरः पुत्रा वा वोऽपश्यन्तो विचिन्वन्ति, मा कुरुध्वं बन्धुसाहसमित्यादिरूपामुक्तिम्। आकर्ण्य श्रुत्वा। विलापप्रकारमाह—हे करुणासिन्धो मा मा परित्यज इति। करुणासिन्धो कृपाम्बुधे। अनेन सम्बोधनेन परित्यागस्यानौचित्यं द्योत्यते। मामेति द्विरुक्तिस्सम्भ्रमात्। परित्यज उपेक्षस्व। नः इति शेषः ॥

अथ भगवान् गोपीनां मनोरथं पूरयितुमारेभे इत्याह—

**तासां रुदितैर्लपितैः करुणाकुलमानसो मुरारे त्वम्।**
**ताभिः समं प्रवृत्तो यमुनापुलिनेषु काममभिरन्तुम् ॥ ४ ॥**

**तासामिति ॥** हे मुरारे त्वं ताभिः समं यमुनापुलिनेषु काममभि रन्तुं प्रवृत्तः। मुरारे मुरासुरमर्दन। त्वं श्रीकृष्णः। ताभिः गोपीभिः। समं सह। यमुनापुलिनेषु कालिन्दीसैकतप्रदेशेषु। कामं यथेष्टम्। अभिरन्तुं क्रीडितुम्। प्रवृत्तः उद्युक्तः। भगवतः क्रीडोद्यमे हेतुः—करुणाकुल मानसः इति। करुणया कृपया आकुलमार्द्रं मानसं मनो यस्य सः। कृपार्द्रतायां हेतुमाह—तासां रुदितैः लपितैः इति। तासां गोपस्त्रीणां रुदितैः रोदनैः। लपितैः भाषितैः। सरोदनैर्मा मा करुणासिन्धो परि त्यजेत्याद्यालापैरित्यर्थः ॥

अथ पञ्चभिर्भगवतो गोपीभिः सह यथेष्टविहारं वर्णयति—

परिहारस्तु, अङ्ग त्व सङ्गमे निनराम अरमय इति। अङ्गेति सम्बोधने। अङ्ग कृष्ण। बाह्यैराभ्यन्तरैश्च सम्भोगविनोदैररमय । गोपाङ्गना इति शेष ॥

एव सामान्यतो गोपीजनसम्भोगमुपवर्ण्यानन्तर विशिष्य राधिकासम्भोग लालसं भगवन्त स्तौति—

राधातुङ्गपयोधरसाधुपरीरम्भलोलुपात्मानम् ।
आराधये भवन्त पवनपुराधीश शमय सकलगदान् ॥ १० ॥

राधातुङ्गपयोधरेति ॥ अहं राधातुङ्गपयोधरसाधुपरीरम्भलोलुपात्मान भवन्तम्- आराधये। राधातुङ्गपयोधरसाधुपरीरम्भलोलुपात्मान राधायास्तन्नाम धेयाया कस्याश्चित् गोपवनिताया तुङ्गयोरुन्नतयो पयोधरयो स्तनयोर्य साधु परीरम्भ गाढाश्लेषण तत्र लोलुप साभिलाष आत्मा मनो यस्य तम्। भवन्तं श्रीकृष्णम्। आराधये पूजयामि। अथ प्रार्थयते—हे पवनपुराधीश सकलगदान् शमय इति। पवनपुराधीश गुरुवायुपुरनाथ। सकल गदान् सकलान् बाह्यानाभ्यन्तराश्च सर्वान् गदान् वातादीन रागादींश्चा मयान्। शमय नाशय॥

इति रासक्रीडाया गोपीना भगवत्कृतधर्मोपदेशवर्णन
यमुनापुलिने भगवता सह विहारवर्णन च
षट्पष्टितमदशकम्॥

सप्तषष्टितमदशकम्।

एवं भगवत कृष्णाल्लब्धमाना गोप्य आत्मान भुवि स्त्रीणामभ्यधिकं मेनिरे इत्याह—

स्फुरत्परानन्दरसात्मकेन
त्वया समासादितभोगलीलाः।

असीममानन्दभरं प्रपन्ना
महान्तमापुर्मदमम्बुजाक्ष्यः　　॥ १ ॥

**स्फुरत्परानन्देति ॥** अम्बुजाक्ष्यः महान्तं मदम् आपुः। अम्बुजाक्ष्यः गोप्यः। महान्तं प्रकृष्टम्। मदं गर्वम्। आपुः प्रापुः। मदकारणमाह—असीमम् आनन्दभरं प्रपन्नाः इति। असीमम् अपगतावधिम्। आनन्दभरम् आनन्दस्य रतिसुखात्मकब्रह्मानन्दस्य भरमतिरेकम्। प्रपन्नाः प्राप्ताः। आनन्दातिरेके हेतुमाह—त्वया समासादितभोगलीलाः इति। त्वया श्रीकृष्णेन। समासादितभोगलीलाः समासादिता प्राप्ता भोगलीला रतिक्रीडा याभिस्ताः। ननु भवता सङ्गताः प्रकृष्टं रतिसुखं यद्यपि प्राप्ता भवेयुः, तथाऽपि ब्रह्मानन्दं कथं प्रपन्ना इत्याकाङ्क्षायामाह—स्फुरत्परानन्दरसात्मकेन इति। स्फुरन् प्रकाशमानः परानन्दो ब्रह्मानन्द एव रसः आत्मा यस्य तेन। *आनन्दात्मकस्य भगवतः समाश्लेषादिना रतिसुखरूपेण ब्रह्मानन्दातिरेकमेवान्वभूवन्नित्यर्थः* ॥

अथ भगवान् गोपीनां मदं नाशयितुं तिरोहितोऽभूदित्याह—

निलीयतेऽसौ मयि मय्यमायं
रमापतिर्विश्वमनोभिरामः।
इति स्म सर्वाः कलिताभिमाना
निरीक्ष्य गोविन्द तिरोहितोऽभूः　　॥ २ ॥

**निलीयत इति ॥** हे गोविन्द त्वं तिरोहितः अभूः। गोविन्द श्रीकृष्ण। तिरोहितः अन्तर्हितः। अन्तर्धाने हेतुमाह—सर्वाः इति स्म कलिताभिमानाः निरीक्ष्य इति। सर्वाः सकला गोपीः। इति एवं निश्चित्य। स्मेति पादपूरणे, वाक्यालङ्कारे वा। कलिताभिमानाः कलितः धृतः अभिमानो गर्वो याभिस्ताः। निरीक्ष्य दृष्ट्वा। विचिन्तनप्रकारमाह—विश्वमनोभिरामः असौ रमापतिः मयि मयि अमायं निलीयते इति। विश्वमनोभिरामः

जगदेकमनोहरः। रमापतिः रमाया लक्ष्म्याः पतिः। तस्या अपि मनो मोहनोऽयं श्रीकृष्ण इत्यर्थः। मयि मय्येव। द्विरुक्तिर्गोपीनां बहुत्वात्। अमायं निर्व्याजम्। निलीयते आसक्तो भवति। अन्यासु दाक्षिण्याद्बहिरेवानुराग प्रकटनादिकमिति भावः॥

भगवानेकान्ते राधां नाम कामपि गोपीमरमयदित्याह—

राधाभिधां तावदजातगर्वा-
मतिप्रियां गोपवधूं मुरारे।
भवानुपादाया गतो विदूरं
तया सह स्वैरविहारकारी ॥ ३ ॥

राधाभिधामिति॥ भवान् तावत् राधाभिधां गोपवधूम् उपादाय स्वैरविहारकारी विदूरं गतः। भवान् श्रीकृष्णः। तावत् तदा। राधा भिधां राधेत्यभिधा यस्यास्ताम्। गोपवधूं गोपीम्। उपादाय आदाय। तया राधया। सह समम्। स्वैरविहारकारी। यथेच्छं विहारं कुर्वाणः। विदूरं दूरदेशम्। ननु कुतो राधाऽपि न त्यक्तेति चेत्तत्राह—अतिप्रियामिति। अति अतिमात्रं प्रिया वल्लभाम्। राधायां प्रेमातिशये हेतुमाह—अजातगर्वा मिति। अजातः अनुत्पन्नः गर्वः अभिमानो यस्यास्ताम्॥

तिरोहितेऽथ त्वयि जाततापाः
सम समेताः कमलायताक्ष्यः।
वने वने त्वां परिमार्गयन्त्यो
विषादमापुर्भगवन्नपारम् ॥ ४ ॥

तिरोहित इति॥ हे भगवन् अथ कमलायताक्ष्यः त्वयि तिरोहिते समं जाततापाः समेताः वने वने त्वां परिमार्गयन्त्यः अपारं विषादम् आपुः। भगवन् ऐश्वर्यादिसम्पन्न। अनेन भगवतस्तिरोधानसामर्थ्यं द्योत्यते। अथ अनन्तरम्। कमलायताक्ष्यः व्रजसुन्दर्यः। त्वयि श्रीकृष्णे। तिरोहिते

अन्तर्हिते सति । समं तुल्यं यथा भवति तथा । जाततापाः जातः उत्पन्नः तापः सन्तापो यासां ताः । तुल्यसन्तापा इत्यर्थः । समेताः मिलिताः । वने वने वनेषु सर्वत्र । त्वां श्रीकृष्णम् । परिमार्गयन्त्यः परितो मार्गयन्त्यः अन्वेषमाणाः । अपारम् अनवधिम् । विषादं दुःखम् । आपुः प्रापुः । न तु भगवन्तं प्रापुरिति भावः ॥

गोपीनामन्वेषणप्रकारमाह—

हा चूत हा चम्पक कर्णिकार
हा मल्लिके मालति बालवल्यः ।
किं वीक्षितो नो हृदयैकचोर
इत्यादि तास्त्वत्प्रवणा विलेपुः ॥ ५ ॥

**हा चूतेति ॥** त्वत्प्रवणाः ताः इत्यादि विलेपुः । त्वत्प्रवणाः त्वयि श्रीकृष्णे प्रवणाः आसक्तचित्ताः । ताः गोप्यः । इत्यादि एवमादिप्रकारेण । विलेपुः विलापं चक्रुः । विलापप्रकारमाह—हा चूत हा चम्पक कर्णिकार हा मल्लिके मालति बालवल्यः युष्माभिः नः हृदयैकचोरः किं वीक्षितः इति । सम्बोधनार्थस्य हेशब्दस्य स्थाने सर्वत्रात्र दुःखातिरेकात् प्रयुक्तो हाशब्द इति द्रष्टव्यम् । चूत रसाल । बालवल्यः बाललताः । युष्मा भिरिति शेषपूरणम् । नः अस्माकम् । हृदयस्यैकस्य चोरः अपहर्ता । न शरीरस्य । शरीरं विहाय हृदयमात्रमपहृत्य गतः कृष्ण इत्यर्थः । किमिति प्रश्ने । वीक्षितः दृष्टः । अचेतनेष्वपि सचेतनेष्विव प्रश्नो नानुपपन्नः कामार्तानाम् ॥

काचित् भावनया भगवन्तमद्राक्षीदित्याह—

निरीक्षितोऽयं सखि पङ्कजाक्षः
पुरो ममेत्याकुलमालपन्ती ।

त्वां भावनाचक्षुषि वीक्ष्य काचि-
तापं सखीनां द्विगुणीचकार ॥ ६ ॥

निरीक्षित इति ॥ काचित् सखीना ताप द्विगुणीचकार। काचित् गोपी। सखीना वयस्यानाम्। तापं सन्तापम्। द्विगुणीचकार द्विगुण कृतवती। कथमेतदित्याकाङ्क्षायामाह—इति आकुलम् आल्पन्ती इति। इति अनेन प्रकारेण। आकुल सखेदम्। आल्पन्ती कथयन्ती सती। आलापप्रकारमाह—अय पङ्कजाक्ष मम पुर निरीक्षित इति। पङ्कजाक्ष श्रीकृष्ण। पुर पुरस्तात्। निरीक्षित दृष्ट। भयेति शेष। ननु किं दौर्जन्यात्तयैवमुक्तमिति चेन्नेत्याह—त्वा भावनाचक्षुषि वीक्ष्य इति। त्वा श्रीकृष्णम्। भावनाचक्षुषि भावनारूप चक्षुषि। भावनया चक्षुषेवेत्यथ। वीक्ष्य दृष्ट्वा। एव गोप्या कयाचिदुक्तानामाशाजननादन्यासा तापो द्विगुण मवर्धतेत्यर्थ ॥

अथोन्मादावस्था प्राप्ता गोप्यो भगवच्चेष्टितान्यनुचक्रुरित्याह—

त्वदात्मिकास्ता यमुनातटान्ते
तवानुचक्रुः किल चेष्टितानि।
विचित्य भूयोऽपि तथैव माना-
त्त्वया विमुक्तां ददृशुश्च राधाम् ॥ ७ ॥

त्वदात्मिका इति ॥ ता यमुनातटान्ते तव चेष्टितानि अनुचक्रु किल। ता गोप्य। यमुनातटान्ते कालिन्दीतीरदेशे। तव श्रीकृष्णस्य। चेष्टितानि पूतनावधशकटभञ्जनकालियमर्दनादीनि। अनुचक्रु अनुकृतवत्य। अत्र हेतु—त्वदात्मिका इति। भावनाप्रकर्षेण तन्मयता गता इत्यर्थ। भगवान् राधामप्यमुञ्चदित्याह—भूय अपि विचित्य तथा एव मानात् त्वया विमुक्ता राधा ददृशु च इति। भूय पुन। अपि समुच्चये। विचित्य भवन्तमन्विष्य। तथैव यथेतरासा मानात् परित्यागस्तद्वत्। मानात् अह मेवास्य प्रियतमा यदन्या विहाय मया रमते इति गर्वात्। त्वया श्री

कृष्णेन। विमुक्तां परित्यक्ताम्। मानभञ्जनायेति भावः। राधां तन्नामधेयां गोपीम्। ददृशुः अपश्यन्। चकारः समुच्चये॥

अथ गोपीनां प्रकृष्टां दीनदशामाह—

ततः समं ता विपिने समन्ता-
त्तमोवतारावधि मार्गयन्त्यः।
पुनर्विमिश्रा यमुनातटान्ते
भृशं विलेपुश्च जगुर्गुणांस्ते ॥ ८ ॥

**तत इति॥** ततः ताः समं विपिने समन्तात् तमोवतारावधि मार्गयन्त्यः पुनः यमुनातटान्ते विमिश्राः भृशं विलेपुः, ते गुणान् जगुः च। ततः राधादर्शनानन्तरम्। ताः गोप्यः। सममित्यस्य तयेत्यादिः। तया राधया। समं सह। विपिने यमुनावने। समन्तात् समन्ततः। तमोवतारावधि चन्द्रास्तमयपर्यन्तमित्यर्थः। मार्गयन्त्यः अन्वेषयन्त्यः। त्वामिति शेषः। पुनः अनन्तरम्। यमुनातटान्ते कालिन्दीपुलिने। विमिश्राः सम्मिलिताः। भृशम् अत्यर्थम्। सुस्वरमित्यर्थः। विलेपुः रुरुदुः। ते तव श्रीकृष्णस्य। गुणान् सौन्दर्यादीन्। जगुः अगायन्त॥

एवं गोपवनितासु नष्टगर्वासु विक्लबासु च भगवांस्तासामाविरभूदित्याह—

तथा व्यथासङ्कुलमानसानां
व्रजाङ्गनानां करुणैकसिन्धो।
जगत्त्रयीमोहनमोहनात्मा
त्वं प्रादुरासीरयि मन्दहासी ॥ ९ ॥

**तथेति॥** अयि करुणैकसिन्धो त्वं व्रजाङ्गनानां प्रादुरासीः। अयीति सम्बोधने। करुणैकसिन्धो कृपाम्बुराशे। त्वं श्रीकृष्णः। व्रजाङ्गनानां गोपस्त्रीणाम्। पुरस्तादिति शेषः। प्रादुरासीः आविरभूः। प्रादुर्भूतस्य भगवतः स्वरूपमाह—जगत्त्रयीमोहनमोहनात्मा मन्दहासी इति। जगत्त्रयीमोहनः कामः

तस्यापि मोहन आत्मा स्वरूप यस्य स । मन्दहासी स्मयमानमुखाम्बुजश्च । भगवत प्रादुर्भावे कारणमाह—तथा व्यथासङ्कुलमानसानामिति । तथाभूतया अनिर्देश्यया व्यथया पीडया सङ्कुलम् आकुल मानस यासा तासाम् । तासा व्यथामवलोक्य करुणयेति भाव ॥

भगवद्दर्शनात् गोप्य प्रमादाकुला बभूवुरित्याह—

सन्दिग्धसन्दर्शनमात्मकान्त
त्वां वीक्ष्य तन्व्यः सहसा तदानीम् ।
किं किं न चक्रुः प्रमदातिभारात्
स त्वं गदात् पालय मारुतेश ॥ १० ॥

सन्दिग्धसन्दर्शनमिति ॥ तन्व्य तदानीं सन्दिग्धसन्दर्शनम् आत्मकान्त त्वा वीक्ष्य सहसा प्रमदातिभारात् किं किं न चक्रु । सन्दिग्धम् इत परमपि नाम त द्रक्ष्यामि न वेति सशयविषयीभूत सन्दर्शनम् अवलोकन यस्य तम्। इद विशेषण प्रमदातिभारे हेतुतयोपात्तम्। आत्मकान्तम् आत्मन स्वस्य कान्त प्रेष्ठम्। त्वा श्रीकृष्णम्। वीक्ष्य दृष्ट्वा। सहसा झटिति। प्रमदातिभारात् प्रमोदातिरेकात्। किं कि न चक्रु बहुविध चुम्बनाश्लेषादिक चक्रुरित्यर्थ । अथ प्रार्थयते—हे मारुतेश स त्व गदात् पालय इति। मारुतेश गुरुवायुपुरनाथ। स तथाविधकृपाम्बुराशि । त्व श्रीकृष्ण । गदात आमयात्। पालय रक्ष। मामिति शेष ॥

इति रासक्रीडायां गोपीना मदापनोदाय भगवदन्तर्धानवर्णन
भगवद्वेषगवर्णनं भगवत्प्राविर्भाववर्णन च

सप्तषष्टितमदशकम् ॥

## अष्टषष्टितमदशकम् ।

अथ गोपीनां प्रमोदचेष्टितं वर्णयति—

तव विलोकनाद्गोपिकाजनाः
प्रमदसङ्कुलाः पङ्कजेक्षण ।
अमृतधारया संप्लुता इव
स्तिमिततां दधुस्त्वत्पुरोगताः ॥ १ ॥

तवेति ॥ हे पङ्कजेक्षण गोपिकाजनाः तव विलोकनात् अमृतधारया संप्लुताः इव प्रमदसङ्कुलाः त्वत्पुरोगताः स्तिमिततां दधुः । पङ्कजेक्षण पद्मलोचन । गोपिकाजनाः गोपाङ्गनाः । तव श्रीकृष्णस्य । विलोकनात् दर्शनात् । अमृतधारया अमृतस्य पीयूषस्य धारया संप्लुताः सिक्ताः । इवेति सम्भावनायाम् । प्रमदसङ्कुलाः हर्षाकुलाः । त्वत्पुरोगताः तव श्रीकृष्णस्य पुरः अग्रे गताः प्राप्ताः । स्तिमिततां निश्चलताम् । दधुः प्रापुरित्यर्थः ॥

अथ गोपीनां हर्षचेष्टितान्याह चतुर्भिः—

तदनु काचन त्वत्कराम्बुजं
सपदि गृह्णती निर्विशङ्कितम् ।
घनपयोधरे संनिधाय सा
पुलकसंवृता तस्थुषी चिरम् ॥ २ ॥

तदन्विति ॥ तदनु काचन त्वत्कराम्बुजं सपदि निर्विशङ्कितं गृह्णती घनपयोधरे सन्निधाय सा पुलकसंवृता चिरं तस्थुषी । तदनु कञ्चित्कालं निष्पन्दमवस्थायानन्तरम् । काचन गोपी । त्वत्कराम्बुजं तव श्रीकृष्णस्य कराम्बुजं करपङ्कजम् । सपदि झटिति । निर्विशङ्कितं निश्शङ्कं यथा भवति तथा । गृह्णती आददाना । गृहीत्वेत्यर्थः । घनपयोधरे घने पीने

पश्यन्तीषु कथमियमेतदकरोदित्यत्राह—कामिनी अपगतत्रपा इति। कामिनी अत्यारूढमनोभवा। अत एव अपगतत्रपा अपगता नष्टा त्रपा लज्जा यस्याः सा॥

विकरुणो वने संविहाय मा-
मपगतोऽसि का त्वामिह स्पृशेत्।
इति सरोषया तावदेकया
सजललोचनं वीक्षितो भवान् ॥ ५ ॥

विकरुण इति॥ तावत् भवान् सरोषया एकया इति सजललोचनं वीक्षितः। तावत् तदानीम्। भवान् श्रीकृष्णः। सरोषया प्रणयकोपवत्या। एकया कयाचित् गोप्या। इति इत्यभिप्रायेण। सजललोचनं सजले सबाष्पे लोचने नेत्रे यस्मिन् कर्मणि तद्यथा भवति तथा। वीक्षितः दृष्टः। इतिशब्दार्थमाह—विकरुणः त्वं मां वने संविहाय अपगतः असि, इह का त्वां स्पृशेदिति। विकरुणः निर्दयः। अत एव त्वं श्रीकृष्णः। मां भयशीलां त्वयि विस्रब्धाम्। वने भयानके कानने। संविहाय त्यक्त्वा। अपगतः निर्गतः। इह गोपवनितासु। का त्वां स्पृशेत्। न कोपि स्पृशेदित्यर्थः॥

पुनरपि भगवांस्ताभि सम्मिलितोऽभूदित्याह—

इति मुदाऽऽकुलैर्वल्लवीजनैः
सममुपागतो यामुने तटे।
मृदुकुचाम्बरैः कल्पितासने
घुसृणभासुरे पर्यशोभथाः ॥ ६ ॥

इतीति॥ त्वम् इति मुदा आकुलैः वल्लवीजनैः समम् उपागतः यामुने तटे घुसृणभासुरे मृदुकुचाम्बरैः कल्पितासने पर्यशोभथाः। त्वं श्रीकृष्णः। इति उक्तप्रकारेण। मुदा प्रीत्या। आकुलैः अवशचित्तैः। वल्लवीजनैः गोपीजनैः। समं सह। उपागतः प्राप्तः। यमुना

तटस्यात् कर्मता। यामुने तटे यमुनातीरे। घुसृणभासुरे कुङ्कुमशोभिते। गोपिकास्तनलिप्तस्य कुङ्कुमस्य कुचाम्बरेषु सक्तत्वादिति भावः। मृदुकुचाम्बरैः मृदुभिः कुचाम्बरैः स्तनावरणांशुकैः। कल्पितासने कल्पिते निर्मिते आसने। पर्यशोभथाः विलेसिथ॥

अथ गोप्यो भगवन्तमपृच्छन्नित्याह—

कतिविधा कृपा केऽपि सर्वतो
धृतदयोदयाः केचिदाश्रिते।
कतिचिदीदृशा मादृशेष्वपी-
त्यभिहितो भवान् वल्लवीजनैः ॥ ७ ॥

कतिविधेति॥ भवान् वल्लवीजनैः इति अभिहितः। भवान् श्रीकृष्णः। वल्लवीजनैः गोपस्त्रीभिः। इति एवम्। अभिहितः उक्तः। पृष्ट इत्यर्थः। प्रश्नप्रकारमाह—कृपा कतिविधा, केऽपि सर्वतः धृतदयोदयाः, केचित् आश्रिते, कतिचित् मादृशेषु अपि ईदृशाः इति। कृपा दया। कतिविधा कति विधाः प्रकारा यस्याः सा। केऽपि केचन। सर्वतः सर्वत्र। आश्रितानाश्रितादिभेदमन्तरा सर्वेष्वपीत्यर्थः। धृतदयोदयाः धृतो दयाया उदयः आविर्भावो येषां ते। केचित् अन्ये केचन। आश्रिते शरणागते, अनुजीविनि वा जने। धृतदयोदया इत्यत्राप्यन्वेति। कतिचित् अपरे केचित्। मादृशेषु भर्तृपुत्रादीनपि विहाय यथा वयं त्वा शरणं गताः, तथा सर्वं विसृज्य शरणं गतेष्वपि जनेषु। ईदृशाः त्वमिव निर्दयाः। दृश्यन्त इति शेषः। अत्र कतिविधा कृपेति तत्त्वं ब्रूहीत्यर्थः॥

भगवन् परिसान्त्वनप्रकारमाह—

अयि कुमारिका नैव शङ्क्यतां
कठिनता मयि प्रेमकातरे।
मयि तु चेतसो वोऽनुवृत्तये
कृतमिदं मयेत्यूचिवान् भवान् ॥ ८ ॥

अयीति॥ भवान् इति ऊचिवान्। भवान् श्रीकृष्णः। इति एवम्। ऊचिवान् उक्तवान्। उक्तिप्रकारमाह—अयि कुमारिकाः मयि कठिनता न एव शङ्क्यतामिति। अयीति सम्बोधने। कुमारिकाः गोपाङ्गनाः। कठिनता निर्दयत्वम्। नैव शङ्क्यतां नैव शङ्कनीया। भवतीभिरित्यर्थः। कुत इत्यत्राह—प्रेमकातरे इति। युष्मत्प्रणयापायभीरौ। ननु किमर्थमेवं भवता वयं परित्यक्ता इत्यत्राह—मयि तु वः चेतस अनुवृत्तये मया इदं कृतमिति। मयि युष्मत्प्रणयाभिलाषिणि। तुरवधारणे, वाक्यालङ्कारे वा। वः भवतीनाम्। चेतसः हृदयस्य। अनुवृत्तये अनुवर्तनाय। इदं भवतीनां परित्यागः। कृतम् अनुष्ठितम्। अन्यथा अतिपरिचयादवज्ञा स्यादिति भावः॥

अयि निशम्यतां जीववल्लभाः
　प्रियतमो जनो नेदृशो मम।
तदिह रम्यतां रम्ययामिनी-
　ष्वनुपरोधमित्यालपो विभो　　॥ ९॥

अयीति। हे विभो त्वम् इति आलप। विभो परिपूर्ण। त्वं श्रीकृष्ण। इति एवम्। आलप. ऊचिषे। उक्तिप्रकारमाह—अयि जीववल्लभाः निशम्यतामिति। अयीति सम्बोधने। जीववल्लभा प्राणेभ्योऽतिप्रिया। निशम्यतां श्रूयताम्। भवतीभिरिति शेषः। अत्रोक्तिमध्ये श्रूयतामित्युक्त्या वक्ष्यमाणस्य विशिष्य श्रद्धेयत्वमिति द्योत्यते। ननु किमस्माभिः श्रोतव्यमित्यत्राह—मम ईदृशः प्रियतमः जनः न, तत् इह रम्ययामिनीषु अनुपरोधं रम्यतामिति। मम भवतीनां प्रेमाभिलाषिणः। ईदृशः भवत्य इव। प्रियतमः। प्रणयादिनेत्यर्थः। भवतीनां मदापनयनादिति भावः। तत् तस्मात्। इह यमुनापुलिने। रम्य यामिनीषु रम्यासु चन्द्रिकोज्ज्वलतया रमणीयासु यामिनीषु निशासु। अनुपरोधं निश्शङ्कं यथा भवति तथा। रम्यतां भवत्यो मया सह क्रीडन्त्वित्यर्थः॥

अथ भगवतो रासक्रीडोद्यममाह—

इति गिराधिकं मोदमेदुरै-
व्रजवधूजनैः साकमारमन् ।
कलितकौतुको रासखेलने
गुरुपुरीपते पाहि मां गदात् ॥ १० ॥

इतीति ॥ हे गुरुपुरीपते रासखेलने कलितकौतुकः इति गिरा अधिकं मोदमेदुरैः व्रजवधूजनैः साकम् आरमन् त्वं मां गदात् पाहि । गुरुपुरीपते श्रीगुरुवायुपुरनाथ । रासखेलने रासक्रीडायाम् । कलितकौतुकः धृतकौतुकः । इति एवम् । गिरा वाचा । अधिकम् अत्यर्थम् । मोदमेदुरैः मोदेन सन्तोषेण मेदुरैः मांसलैः । प्रमोदभरतुन्दिलान्तःकरणैरित्यर्थः । व्रजवधूजनैः गोपस्त्रीजनैः । साकं सह । आरमन् रममाणः । त्वं श्रीकृष्ण मामनन्यशरणम् । गदात् आमयात् । पाहि रक्ष ॥

इति रासक्रीडायां गोपीनां भगवत्समागमादानन्दपारवश्यवर्णनं प्रणयकोपवर्णनं भगवत्कृतसान्त्वनवर्णनं च

अष्टषष्टितमदशकम् ॥

---

## एकोनसप्ततितमदशकम् ।

अथ पूर्वोपक्षिप्तां भगवतो रासक्रीडां वर्णयितुमारभमाणः प्रथमं तदुचितं भगवतो नेपथ्यं वर्णयति —

केशपाशधृतपिञ्छिकाविततिसञ्चलन्मकरकुण्डलं
हारजालवनमालिकाललितमङ्गरागघनसौरभम् ।
पीतचेलधृतकाञ्चिकाञ्चितमुदञ्चदंशुमणिनूपुरं
रासकेलिपरिभूषितं तव हि रूपमीश कलयामहे ॥ १ ॥

**केशपाशेति ॥** हे ईश वय तव हि रूप कलयामहे। ईश जगद्रक्षक। तव श्रीकृष्णस्य। हीति वाक्यालङ्कार। रूप दिव्य मङ्गलविग्रहम्। कलयामहे ध्यायामि। ननु भगवत अनन्तरूपत्वात् कीदृश रूपमित्यत्राह—रासकेलिपरिभूषितमिति। रासक्रीडायै विरचितनेपथ्यम्। रासक्रीडा नाम भगवतो गोपीभि सहाङ्गनामङ्गनामन्तरा श्रीकृष्ण, श्रीकृष्ण श्रीकृष्ण चान्तरेणाङ्गनेनि मण्डल विरचय्य करतालगीतै सह नर्तनम्। भगवतो भूषणानि विवृणोति—केशपाशधृतपिञ्छिकावितति सञ्चलन्मकरकुण्डल हारजालवनमालिकाललितम् अङ्गरागघनसौरभ पीतचेलधृतकाञ्चिकाञ्चितम् उदञ्च दशुमणिनूपुरम् इति। केशपाशधृतपिञ्छिकावितति केशपाशे कबरीभरे धृता अलङ्कृता पिञ्छिकावितति मयूरपिञ्छविरचित परित परिदृश्य मानचद्रक शिरोलङ्कारविशेषो यस्य तत्। सञ्चलन्मकरकुण्डल सञ्चलती गण्डलोले मकरकुण्डले मकराकारे कुण्डले यस्य तत्। हारजालवनमालिका ललित हारजालै मुक्तादामभि वनमालिकया पुष्पमाल्येन च ललित मनोहरम्। अङ्गरागघनसौरभम् अङ्गरागै अनुलिप्तै कुङ्कुमादिभिर्घन निबिड सौरभ सुगन्धो यस्मिंस्तत्। पीतचेलधृतकाञ्चिकाञ्चित पीतचेले पीताम्बरोपरि धृतया बद्धया काञ्चिकया मणिमेखलया अञ्चित शोभितम्। उदञ्च दशुमणिनूपुरम् उदञ्चदशुनी उद्गतमयूखे मणिनूपुरे मणिमये नूपुरे मञ्जीरे यस्य तत्॥

*एव भगवतो नेपथ्यविधानमभिधायानन्तर रासक्रीडा वर्णयति—*

तावदेव कृतमण्डने कलितकञ्चुलीककुचमण्डले
गण्डलोलमणिकुण्डले युवतिमण्डलेऽथ परिमण्डले।
अन्तरा सकलसुन्दरीयुगलमिन्दिरारमण सञ्चरन्
मञ्जुला तदनु रासकेलिमयि कञ्जनाभ समुपादधाः॥ २॥

**तावदिति ॥** अयि इन्दिरारमण कञ्जनाभ त्व तदनु मञ्जुला रासकेलिं समुपादधा। अयीति सम्बोधने। इन्दिरारमण श्रीपते। कञ्ज

जम् अंसे गोपीनां स्कन्धे लम्बितं विन्यस्तं कराम्बुजं पाणिपङ्कजं यस्मिं स्तत्। श्रोणिबिम्बचलदम्बरं श्रोणिबिम्बे जघनप्रदेशे चलत् वलमानम् अम्बरं वस्त्रं यस्मिंस्तत्। चकारः समुच्चये। रासकेलिरसडम्बरं रासकेलिरसस्य रासक्रीडारसस्य डम्बरं परिपोषम्। भजत भजध्वम् ॥

श्रद्धया विरचितानुगानकृततारतारमधुरस्वरे
नर्तनेऽथ ललिताङ्गहारलुलिताङ्गहारमणिभूषणे।
सम्मदेन कृतपुष्पवर्षमलमुन्मिषद्दिविषदां कुलं
चिन्मये त्वयि निलीयमानमिव सम्मुमोह सवधूकुलम् ॥ ५ ॥

श्रद्धयेति ॥ अथ नर्तने श्रद्धया विरचितानुगानकृततारतारमधुरस्वरे ललिताङ्गहारलुलिताङ्गहारमणिभूषणे सम्मदेन कृतपुष्पवर्षम् अलमुन्मिषत् स वधूकुलं दिविषदां कुलं चिन्मये त्वयि निलीयमानमिव सम्मुमोह। अथ अनन्तरम्। नर्तने नृत्ते। श्रद्धया कौतुकेन। विरचितानुगानकृततारतार मधुरस्वरे विरचितेन कृतेन अनुगानेन परोत्रीतोन्नयनरूपेण कृतः तारतारः अत्युच्चः मधुरः मनोहरः स्वरः शब्दविशेषो यस्मिंस्तथाभूते। ललिताङ्गहार लुलिताङ्गहारमणिभूषणे ललितैः मनोज्ञैः अङ्गहारैः अङ्गविक्षेपैः लुलितानि स्वस्थानात् च्युतानि अङ्गहारमणिभूषणानि अङ्गस्थानि हारमणिभूषणानि हाराः मुक्तादामानि मणिभूषणानि मणिमयानि भूषणानि यस्मिंस्तथाविधे च सति। सम्मदेन स्वातिशायिप्रयोगातिशयदर्शनजनितेन प्रमोदेन। कृतपुष्पवर्षं कृतं पुष्पवर्षं पुष्पवृष्टिर्येन तत्। अलम् अत्यर्थम्। उन्मिषत् दर्शनोत्सुकम्। सवधूकुलं सस्त्रीसमूहम्। दिविषदां देवानाम्। कुलं समूहः। चिन्मये, अत्र चित्पद मानन्दस्याप्युपलक्षणम्। चिदानन्दमये इत्यर्थः। त्वयि श्रीकृष्णे। निली यमानं नितरां लीयमानम्। अदृष्टदृष्टदृश्यदर्शनभेदमित्यर्थः। इवेति सम्भाव नायाम्। सम्मुमोह सम्मोहमाप ॥

रासक्रीडया मदृद्धदर्पाणां गोपीनां मोदचेष्टितान्याह द्वाभ्याम्—

स्विद्यदङ्गलतनुवल्लरी तदनु कापि नाम पशुपाङ्गना।
कान्तमंसमवलम्बते स्म तव तान्तिभारमुकुलेक्षणा।

काचिदाचलितकुन्तला नवपटीरसारघनसौरभं
वञ्चनेन तव सञ्चुचुम्ब भुजमञ्चितोरुपुलकाङ्कुरम् ॥ ६ ॥

स्विन्नेति ॥ तदनु कापि नाम पशुपाङ्गना तव कान्तम् अंसम् अवलम्बते स्म। कापि नाम काचित्। पशुपाङ्गना गोपी। तव श्रीकृष्णस्य। कान्तं मनोहरम्। अंसं भुजमूलम्। अवलम्बते स्म अवलम्ब्यातिष्ठत्। अत्र हेतुमाह—स्विन्नसन्नतनुवल्लरी तान्तिभारमुकुलेक्षणा इति। स्विन्नसन्न तनुवल्लरी स्विन्ना स्वेदार्द्रा रासक्रीडया सन्ना प्राप्तसादा तनुवल्लरी कुसुम मञ्जरीवातीव सुकुमारा तनुर्यस्याः सा। तान्तिभारमुकुलेक्षणा तान्तिभारेण सादातिरेकेण मुकुलेक्षणा मुकुलितलोचना च सती। काचित् आचलितकुन्तला नवपटीरसारघनसौरभं तव भुजम् अञ्चितोरुपुलकाङ्कुरं वञ्चनेन सञ्चुचुम्ब। आचलितकुन्तला विश्लथत्कबरीभरा। नवपटीरसारघनसौरभं नवपटीरसारवत् नूतनमलयजसारवत् घनं सौरभं सौरभ्यं यस्य तम्। तव श्रीकृष्णस्य। भुजं करम्। अञ्चितोरुपुलकाङ्कुरम् अञ्चिताः चुम्बनार्थं निजकराभ्यां भगवत्करस्य ग्रहणेन सञ्जाता उरवो महान्तः पुलकाङ्कुराः रोमाञ्चा यस्मिन् कर्मणि तद्यथा भवति तथा। वञ्चनेन अन्यापदेशेन। सञ्चुचुम्ब चुम्बितवती। पुलकाङ्कुराणां हर्षानुभावत्वम् ॥

कापि गण्डभुवि सन्निधाय निजगण्डमाकुलितकुण्डलं
पुण्यपूरनिधिरन्ववाप तव पूगचर्वितरसामृतम्।
इन्दिराविहृतिमन्दिरं भुवनसुन्दरं हि नटनान्तरे
त्वामवाप्य दधुरङ्गनाः किमु न सम्मदोन्मददशान्तरम् ॥ ७ ॥

कापीति ॥ कापि तव गण्डभुवि निजगण्डम् आकुलितकुण्डलं सन्निधाय पूगचर्वितरसामृतम् अन्ववाप। कापि काचित् गोपी। तव श्रीकृष्णस्य। गण्डभुवि कपोलदेशे। निजगण्डं स्वकपोलम्। आकुलित कुण्डलम् आकुलितं चालितं कुण्डलं यस्मिन् कर्मणि तद्यथा भवति तथा। सन्निधाय संयोज्य। पूगचर्वितरसामृतं पूगचर्वितरसं वीटिकारसमेवामृतम्।

अन्ववाप प्रतिनमाह। कथमस्या अत्राधिकार समभूदित्याह—पुण्यपूरनिधि इति। पुण्यपूरस्य पुण्यसञ्चयस्य निधिर्निधानम्। अङ्गना हि नटनान्तरे त्वामवाप्य किमु सम्मदोन्मददशान्तरं न दधु। अङ्गना गोप्य। हिस्त्वर्थे। नटनान्तरे नृत्तमध्ये। त्वा श्रीकृष्णम्। अवाप्य प्राप्य। किमु कीदृग्विधम्। सम्मर्दोन्मददशान्तर सम्मदेन प्रमोदेन कृतम् उन्मददशान्तरं पूर्वापरानुसन्धान वैधुर्यलक्षणमवस्थाविशेषम्। दधु धृतवत्य। तासा सम्मदातिरेके हेतुमाह— इन्दिराविहृतिमन्दिरं भुवनसुन्दरमिति। इन्दिराविहृतिमन्दिरम् इन्दिराया लक्ष्म्या विहृतिमन्दिरं विहारस्थलभूतम्। भुवनसुन्दर त्रिलोकसुन्दरम्। त्रिजगत्सुन्दरस्य भगवतो लाभादित्यर्थ ॥

रासक्रीडया गोपीना प्रमोदमग्नतामाह—

गानमीश विरत क्रमेण किल वाद्यमेलनमुपारत
ब्रह्मसम्मदरसाकुलाः सदसि केवल ननृतुरङ्गनाः।
नाविदन्नपि च नीविकां किमपि कुन्तलीमपि च कञ्चुलीं
ज्योतिषामपि कदम्बक दिवि विलम्बित किमपर ब्रुवे ॥ ८ ॥

गानमिति ॥ हे ईश अङ्गना सदसि केवल ननृतु। ईश जगद्रक्षक। अङ्गना गोप्य। सदसि सभायाम्। केवल ननृतु नर्तनमात्र विदधु। अत्र हेतु—ब्रह्मसम्मदरसाकुला इति। ब्रह्मसम्मदरसेन ब्रह्मानन्दानुभवेन आकुला परवशा सत्य। विगलितवेद्यान्तरब्रह्मानन्दानुभवादित्यर्थ। नर्तनस्य कैवल्यमाह—क्रमेण गान विरत किल, वाद्यमेलनम् उपारतम्, अपि च नीविका कुन्तली कञ्चुली किमपि न अविदन्निति। क्रमेण क्रमात्। गान गीतम्। विरतम् उपरतम्। किलेति वार्तायाम्। वाद्यमेलन वाद्याना मृदङ्गादीना मेलन वादनम्। उपारत निवृत्तम्। अपि च किञ्च। अङ्गना इत्यत्रापि सम्बध्यते। नीविका वस्त्रबन्धम्। कञ्चुली कुचपटम्। कुन्तली कचभरम्। किमपि विश्लथा काश्चिदपीत्यर्थ। न अविदन् न अवागच्छन्। किञ्च, दिवि ज्योतिषां कदम्बकम् अपि विलम्बितम्

इति। दिवि व्योम्नि। ज्योतिषां ग्रहनक्षत्राणाम्। कदम्बकं समूहः। विलम्बिनं विलम्बं जग्मुरित्यर्थः। रासक्रीडादर्शनजनितानन्दमग्नतयेति भावः। अपरं किं ब्रुवे। अपरम् अन्यत् गानविरामादिकम्। किं किमर्थम्। ब्रुवे कथयामि। ज्योतिषामपि तथात्वे का कथा गोपीनामित्यर्थः॥

अथ भगवांस्तासां कामोत्सवमप्युदादित्याह—

मोदसीम्नि भुवनं विलाप्य विहृतिं समाप्य च ततो विभो
केलिसम्मृदितनिर्मलाङ्गनवघर्मलेशसुभगात्मनाम्।
मन्मथासहनचेतसां पशुपयोषितां सुकृतचोदित-
स्तावदाकलितमूर्तिरादधिथ मारवीरपरमोत्सवान्॥ ९॥

**मोदसीम्नीति॥** हे विभो त्वं मोदसीम्नि भुवनं विलाप्य ततः विहृतिं समाप्य च केलिसम्मृदितनिर्मलाङ्गनवघर्मलेशसुभगात्मनां मन्मथासहनचेतसां पशुपयोषितां मारवीरपरमोत्सवान् आदधिथ। विभो परिपूर्ण। त्वं श्रीकृष्ण। मोदसीम्नि ब्रह्मानन्दे। भुवनं व्रजलोकम्। विलाप्य मज्जयित्वा। ततः अनन्तरम्। विहृतिं रासक्रीडाम्। समाप्य परिसमाप्य। चकारः समुच्चये। केलिसम्मृदितनिर्मलाङ्गनवघर्मलेशसुभगात्मना केल्या रासक्रीडया सम्मृदितानि निर्मलान्यङ्गानि यासां तासां नवेन नूतनेन घर्मलेशेन स्वेदलवेन सुभगो मुक्तामणिभूषित इव रमणीय आत्मा अङ्गं यासां तासाम्। मन्मथासहनचेतसां मन्मथेन मनो मथ्नातीत्यन्वर्थनामकेन कामेन असहनं सुरतव्यापारलीलाकालक्षेपासहिष्णु चेतो मनो यासां तासाम्। पशुपयोषितां गोपाङ्गनानाम्। मारवीरपरमोत्सवान् मारवीरस्य अनङ्गवीरस्य परमोत्सवान्। उत्कृष्टान् सुरतविशेषानित्यर्थः। बहुवचनेन नानाविधान् बाह्यानाभ्यन्तरांश्च सुरतविशेषान् द्योत्यते। आदधिथ दत्तवानसीत्यर्थः। नन्वेकस्य कथमनेकाभिस्सह युगपत् सुरतविधानमित्याशङ्कायामाह—तावत् आकलितमूर्तिः इति। यावत्यो गोप्यः, तावत्यः आकलिताः धृताः मूर्तयो विग्रहा येन तथोक्तः सन्। ननु तपोभिरपि दुरापो

ब्रह्मशङ्करमुखानपीह पशुपाङ्गनासु बहुमानयन्
भक्तलोकगमनीयरूप कमनीय कृष्ण परिपाहि माम् ॥ ११ ॥

**कामिनीरिति** ॥ हे कामनीयकनिधे भवान् ब्रह्मशङ्करमुखान् अपि इह पशुपाङ्गनासु बहुमानयन् हि । कामनीयकनिधे कामनीयकस्य सौभाग्यस्य निधे निधानभूत । भवान् श्रीकृष्ण । ब्रह्मशङ्करमुखान् विधि शङ्करादीन् । किं पुनरन्यानित्यपिशब्दार्थः । इह पृथिव्याम् । पशुपाङ्गनासु गोपीषु । बहुमानयन् बहुमानयुक्तान् कुर्वन् । हीति प्रसिद्धौ । ब्रह्मादीनां बहुमानोत्पादनप्रकारमाह—कामिनीः इति यामिनीषु खलु योगिगम्यं कमपि पूर्णसम्मदरसार्णवम् अनुभावयन्निति । कामिनीः गोपीः । इति उक्तप्रकारेण । यामिनीषु निशासु । खल्विति वाक्यालङ्कारे । योगिगम्यं योगिभिर्गम्यं प्राप्यम् । कमपि अनिर्वचनीयम् । पूर्णसम्मदरसार्णवं ब्रह्मानन्दमित्यर्थः । अनुभावयन् आस्वादयन् । अथ प्रार्थयते—हे भक्तलोकगमनीयरूप कमनीय कृष्ण मां परिपाहि इति । भक्तलोकगमनीयरूप भक्तलोकानां भक्तजनाना गमनीयं प्राप्यं रूपं यस्य तथाविध । कमनीय मनोहराङ्गने । मामनन्यशरणम् । परिपाहि त्रायस्व ॥

इति रासक्रीडायां कमनीयरूपधारिणा भगवता
सह गोपीनां नृत्तगीतादिविलासवर्णनम्
एकोनसप्ततितमदशकं सैकम् ॥

---

अथ विद्याधरशापमोचनं वर्णयितुमुपक्रममाणः प्रथमं तद्धेतुमवतारयति—

इति त्वयि रसाकुलं रमितवल्लभे वल्लवाः
कदापि पुरमम्बिकाकमितुरम्बिकाकानने ।
समेत्य भवता समं निशि निषेव्य दिव्योत्सवं
सुखं सुषुपुरग्रसीद्व्रजपमुग्रनागस्तदा ॥ १ ॥

इतीति ॥ त्वयि इति रसाकुलं रमितवल्लभे कदापि वल्लवाः अम्बिकाकानने अम्बिकाकमितुः पुरं भवता समं समेत्य निशि दिव्योत्सवं निषेव्य सुखं सुषुपुः । त्वयि श्रीकृष्णे । इति उक्तप्रकारेण । रसाकुलं रसेनाकुलं यथा भवति तथा । रमितवल्लभे रमिताः वल्लभाः प्रियतमा गोप्यो येन तथाविधे सति । कदापि कदाचित् । वल्लवाः गोपाः । अम्बिकाकानने अम्बिकावने । अम्बिकाकमितुः पार्वतीपतेः । पुरं क्षेत्रम् । भवता श्रीकृष्णेन । समं सह । समेत्य प्राप्य । निशि रात्रौ । दिव्योत्सवं दिव्यमुत्सवम् । निषेव्य अनुभूय । सुखं यथा भवति तथा । सुषुपुः सुप्ता बभूवुः । तदानीन्तनं विशेषमाह—तदा उग्रनागः व्रजपम् अग्रसीदिति । तदा तस्मिन्नवसरे । उग्रनागः उग्रो भयानकः कश्चिन्नागः अजगरः । व्रजपं नन्दम् । अग्रसीत् ग्रस्तवान् ॥

अजगरस्य शापमोक्षमाह—

समुन्मुखमथोल्मुकैरभिहतेऽपि तस्मिन् बला-
दमुश्चति भवत्पदे न्यपति पाहि पाहीति तैः ।
तदा खलु पदा भवान् समुपगम्य पस्पर्श तं
बभौ स च निजां तनुं समुपसाद्य वैद्याधरीम् ॥ २ ॥

समुन्मुखमिति ॥ अथ तैः तस्मिन् उल्मुकैः समुन्मुखं अभिहते अपि बलात् अमुञ्चति पाहि पाहि इति भवत्पदे न्यपति। अथ प्रसनानन्तरम्। तैः गोपैः। तस्मिन् अजगरे। उल्मुकैः अलातैः। समुन्मुखं प्रसनव्यग्रम्। अभिहते ताडिते। अपिर्विरोधे। अमुञ्चति नन्दम् अमुञ्चति सति। पाहि त्रायस्व। द्विरुक्तिःसम्भ्रमात्। इति इत्युक्त्वा। भवत्पदे भवतः श्रीकृष्णस्य पदयोरित्यर्थः। न्यपति पतितम्। भगवतः प्रवृत्तिमाह—तदा खलु भवान् समुपगम्य पदा तं पस्पर्श इति। तदा तदानीम्। खल्विति त्वर्थे। भवान् श्रीकृष्णः। समुपगम्य समीपं प्राप्य। पदा पादेन। तम् अजगरम्। पस्पर्श स्पृष्टवानसि। भगवता स्पृष्टस्य अजगरस्यावस्थामाह—सः च वैद्याधरीं निजां तनुं समुपसाद्य बभौ इति। सः अजगरः। चकारस्त्वर्थे। वैद्याधरीं विद्याधरसम्बन्धिनीम्। निजाम् आत्मीयाम्। तनुं शरीरम्। समुपसाद्य सम्यक् प्राप्य। बभौ शुशुभे ॥

विद्याधरो भगवन्तं तुष्टावेत्याह—

सुदर्शनधर प्रभो ननु सुदर्शनाख्योऽस्म्य
मुनीन् क्वचिदपाहसं त इह मां व्यधुर्वाहसम्।
भवत्पदसमर्पणादमलतां गतोऽस्मीत्यसौ
स्तुवन् निजपदं ययौ व्रजपदं च गोपा मुदा ॥ ३ ॥

सुदर्शनधरेति ॥ हे सुदर्शनधर असौ इति स्तुवन् निजपदं ययौ। सुदर्शनधर चक्रपाणे। असौ विद्याधरः। इति अनेन प्रकारेण। स्तुवन् स्तुतिं कुर्वाणः। निजपदं विद्याधरलोकम्। ययौ जगाम। स्तुतिप्रकारमाह—ननु प्रभो अहं सुदर्शनाख्यः अस्मि, क्वचित् मुनीन् अपाहसम्, ते इह मां वाहसं व्यधुः, भवत्पदसमर्पणात् अमलतां गतः अस्मि इति। नन्विस्यामन्त्रणे। प्रभो अलङ्घनीयशासन। अनेन भगवच्छासनेनैव सर्वमेतत् संवृत्तमित्याशयो ध्वन्यते। सुदर्शनाख्यः सुदर्शननामा। क्वचित् कदाचित्। मुनीन् विरूपानङ्गिरस इत्यर्थः। अपाहसम् उपहसितवानस्मि।

अद्दमित्याक्षिप्यते। रूपगर्वितः अहमित्यर्थः। ते अङ्गिरसः। इह अत्र प्रदेशे। याद्दमम् अजगरम्। व्यधुः शापेन तथा कृतवन्त इत्यर्थः। अमलतां नैर्मल्यम्। शापनिर्मो चनमित्यर्थः। भवत्पदसमर्पणात् भवत्पदपङ्कजस्पर्शादित्यर्थः। गतः प्राप्तः। गोपानां प्रवृत्तिमाह—गोपाः मुदा व्रज पदं च इति। मुदा प्रमोदेन। व्रजपदं पशुपवाटिकाम्। ययुरिति वचनविप रिणामेनात्र सम्बध्यते। चकारः समुच्चये॥

अथ शङ्खचूडवधमाह—

> कदापि खलु सीरिणा विहरति त्वयि स्त्रीजनं-
> जहार धनदानुगः स किल शङ्खचूडोऽबलाः।
> अतिद्रुतमनुद्रुतस्तमथ मुक्तनारीजनं
> रुरोजिथ शिरोमणिं हलभृते च तस्याददाः ॥ ४ ॥

कदापीति॥ त्वयि खलु सीरिणा स्त्रीजनैः विहरति धनदानुगः सः शङ्खचूडः अबलाः जहार किल। कदापि कदाचित्। त्वयि श्रीकृष्णे। खल्विति त्वर्थे। सीरिणा बलभद्रेण। स्त्रीजनैः गोपीभिः। सहेति शेषः। विहरति क्रीडति सति। धनदानुगः वैश्रवणभृत्यः। सः प्रसिद्धः। शङ्खचूडः तन्नामा। अबलाः गोपीः। जहार हृत्वा दूरमगमत्। किलेति वार्तायाम्। अथ त्वम् अतिद्रुतम् अनुद्रुतः मुक्तनारीजनं तं रुरोजिथ, तस्य शिरो मणिं हलभृते अददाः च। अथ अनन्तरम्। त्वं श्रीकृष्णः। अतिद्रु तम् अतिजवात्। अनुद्रुतः शङ्खचूडमनुधावन्। मुक्तनारीजनम् - अनुधा वन्तं भगवन्तं वीक्ष्य भयान्मुक्तो नारीजनः स्त्रीजनो येन तम्। भयात् स्त्रीजनं मुक्त्वा जीवितरक्षायै धावन्तमित्यर्थः। तं शङ्खचूडम्। रुरोजिथ निगृहीतवान्। तस्य शङ्खचूडस्य। शिरोमणिं चूडामणिम्। हलभृते श्रीबल भद्राय। अददाः दत्तवानसि॥

दिनेषु गोप्यो भगवद्विरहातुराः परिदेवनं चक्रुरित्याह—

दिनेषु च सुहृज्जनैः सह वनेषु लीलापरं
मनोभवमनोहरं रसितवेणुनादामृतम् ।
भवन्तममरीदृशाममृतपारणादायिनं
विचिन्त्य किमु नालपन् विरहतापिता गोपिकाः ॥ ५ ॥

दिनेष्विति ॥ गोपिका दिनेषु च सुहृज्जनैः सह वनेषु लीलापरं मनोभवमनोहरं रसितवेणुनादामृतम् अमरीदृशाममृतपारणादायिनं भवन्तं विचिन्त्य किमु न आलपन् । गोपिकाः गोप्यः । दिनेषु दिवसेषु । चकारः सर्वेषां दिनानां समुच्चयार्थः । सुहृज्जनैः मित्रमण्डलैः । सह समम् । वनेषु विपिनेषु । लीलापरं केलीपरम् । मनोभवमनोहरं मनोभवात् कामादपि मनोहरम् । रसितवेणुनादामृतं रसितम् आस्वदितं वेणुनादरूपममृतं येन तम् । अमरीदृशां भगवद्दर्शनार्थमागतानां देवाङ्गनानां दृशां नेत्राणाम् । अमृतपारणादायिनम् अमृतपारणां निजरूपामृतपारणां ददातीति तथोक्तम् । भवन्तं श्रीकृष्णम् । विचिन्त्य अनुचिन्त्य । विरहतापिताः विरहेण वियोगानलेन तापिताः । किमु नालपन् तत्तदवस्थामनुचिन्त्य विलेपुरित्यर्थः ॥

अथारिष्टवधमवतारयति—

भोजराजभृतकस्त्वथ कश्चित्
कष्टदुष्टपथदृष्टिररिष्टः ।
निष्ठुराकृतिरपष्ठुनिनादः
स्तिष्ठते स्म भवते वृषरूपी ॥ ६ ॥

भोजराजेति ॥ अथ भोजराजभृतकः अरिष्टः कश्चित् भवते तिष्ठते स्म । अथ अनन्तरम् । भोजराजभृतकः भोजराजस्य कंसस्य भृतकः भृत्यः । अरिष्टः अरिष्टनामा कश्चिद्दैत्यः । भवते भवद्दर्शनपथे इत्यर्थः । तिष्ठते स्म तस्थौ । अरिष्टस्य स्वभावं स्वरूपं चाह—कष्टदुष्टपथदृष्टिः निष्ठुराकृतिः अपष्ठुनिनादः वृषरूपी इति । कष्टदुष्टपथदृष्टिः कष्टा हिंसा

बहुला दुष्पथे अविनीतमार्गे दृष्टिः अन्वेषणं यस्य सः। निष्ठुराकृतिः क्रूरस्वरूपः। अपटुनिनादः कठोरशब्दः। वृषरूपी वृषभाकृतिः सन् ॥

अरिष्टो भगवन्तमापेद इत्याह—

शाक्वरोऽथ जगतीधृतिहारी
मूर्तिमेष बृहतीं प्रदधानः।
पङ्क्तिमाशु परिघूर्ण्य पशूनां
छन्दसां निधिमवाप भवन्तम् ॥ ७ ॥

**शाक्वर इति ॥** अथ शाक्वरः एषः आशु पशूनां पङ्क्तिं परिघूर्ण्य छन्दसां निधिं भवन्तम् अवाप। अथ अनन्तरम्। शाक्वरः वृषरूपी। शाक्वरच्छन्दोमय इति च गम्यते। एषः अरिष्टः। आशु झटिति। पशूनां धेनूनाम्। पङ्क्तिम् आवलिम्। पङ्क्तिरूपं छन्दश्च। परिघूर्ण्य विद्राव्य। छन्दसां वेदानाम्। निधिं निधानभूतम्। भवन्तं श्रीकृष्णम्। अवाप प्राप। अरिष्टस्य अतिक्रूरतामाह—जगतीधृतिहारी बृहतीं मूर्तिं प्रदधान इति। जगतीधृतिहारी जगत्याः पृथिव्याः धृतिं स्थैर्यं हर्तुं शीलमस्येति तथोक्तः। जगतीरूपं धृतिरूपं च छन्दसी हर्तुं शीलमस्येति च प्रतीयते। बृहतीं महतीम्। बृहतीरूपं छन्दश्च। मूर्तिं तनुम्। प्रदधानः दधानः। एषः अरिष्टः शाक्वरीजगतीधृतिबृहतीपङ्क्तिछन्दोमात्रयुक्तः, भगवांस्तु छन्दोनिधिरिति महान् विशेष इति प्रतीयते ॥

अथारिष्टवधमाह—

तुङ्गशृङ्गमुखमाश्वभियन्तं
संगृहय्य रभसादभियन्तम्।
भद्ररूपमपि दैत्यमभद्रं
मर्दयन्नमदयः सुरलोकम् ॥ ८ ॥

तुङ्गशृङ्गेति ॥ त्वं तुङ्गशृङ्गमुखम् आशु अभियन्तम् अभियं भद्ररूपमपि अभद्रं तं दैत्यं रभसात् संगृह्य मर्दयन् सुरलोकम् अमदयः। त्वं श्रीकृष्ण। तुङ्गशृङ्गमुखं तुङ्गे उन्नते शृङ्गे यस्मिंस्तत् तुङ्गशृङ्गम्, तादृशं मुखं यस्य तम्। आशु झटिति। अभियन्तम् अभिमुखमागच्छन्तम्। अभियं निर्भयम्। भद्ररूपं वृषाकृतिधरत्वाच्छुभ्रविग्रहम्। अपिर्विरोधे। अभद्रं पापम्। तं दैत्यमरिष्टम्। रभसात् वेगात्। संगृह्य गृहीत्वा। मर्दयन् निगृह्णन्। सुरलोकं देवसङ्घम्। अमदयः प्रसादयामासिथ ॥

देवा भगवन्तं तुष्टुवुरित्याह—

चित्रमद्य भगवन् वृषघातात्
सुस्थिराऽजनि वृषस्थितिरुर्व्याम्।
वर्धते च वृषचेतसि भूयान्
मोद इत्यभिनुतोऽसि सुरैस्त्वम् ॥ ९ ॥

चित्रमिति ॥ त्वं सुरैः इति अभिनुतः असि। त्वं श्रीकृष्ण। सुरैर्देवैः। इति अनेन प्रकारेण। अभिनुतः अभिष्टुतः। स्तुतिप्रकारमाह—हे भगवन् अद्य वृषघातात् उर्व्यां वृषस्थितिः सुस्थिरा अजनि चित्रम्, वृषचेतसि भूयान् मोदः वर्धते च इति। भगवत् ऐश्वर्यादिसम्पन्न। अद्य इदानीम्। वृषघातात् वृषरूपस्यारिष्टस्य वधात्। उर्व्यां भूमौ। वृषस्थिति वृषस्य धर्मस्य स्थितिरवस्थानम्। सुस्थिरा सुतरां स्थिरा दृढा। अजनि जाता। चित्रम् आश्चर्यम्। वृषस्य धर्मस्य घाताद्धर्मनाशेन भवितव्यम्, अत्र तु विपरीतमेव परिणतमिति विरोधं चित्रमित्यनेन द्योत्यते। परिहारस्तूक्त एव। विरोधाभासोऽलङ्कारः। वृषघातादित्यत्रापि सम्बध्यते। वृषचेतसि वृष्णः इन्द्रस्य चेतसि मनसि। भूयान् अधिकतरः। मोदः सम्मदः। चकारः समुच्चये। अत्रापि चित्रमित्यन्वेति। वृषघातात् शाकरवधात् वृषचेतसि शाकरहृदये मोदस्यासम्भाव्यतया विस्मयः। परिहारस्तूक्तः। अत्रापि विरोधाभासोऽलङ्कारः ॥

एवमरिष्टं निहत्य भगवान् पुनः स्वगृहं प्राप्तवानित्याह—

औक्षकाणि परिधावत दूरं
वीक्ष्यतामयमिहोक्षविभेदी ।
इत्थमात्तहसितैः सह गोपै-
र्गेहगस्त्वमव वातपुरेश ॥ १० ॥

औक्षकाणीति ॥ हे वातपुरेश इत्थम् आत्तहसितैः गोपैः सह गेहगः त्वम् अव । वातपुरेश श्रीगुरुवायुपुरनाथ । इत्थम् अनेन प्रकारेणोक्त्वा । आत्तहसितैः आत्तं स्वीकृतमिति यावत् । हसितं हासो यैस्तैः । गेहगः गृहं प्राप्तः । त्वं श्रीकृष्ण । अव त्रायस्व । मामिति शेषः । गोपानां हासोक्तिप्रकारमाह—हे औक्षकाणि यूयं दूरं परिधावत, इह उक्षविभेदी अयं वीक्ष्यतामिति । औक्षकाणि उक्षसमूहाः । दूरं दूरदेशे । परिधावत परितो धावत । ननु किमर्थमेतदित्याह—वीक्ष्यतामित्यादि । इह अत्र । उक्षविभेदी उक्षहन्ता । अयं पुरो वर्तमानः श्रीकृष्णः । वीक्ष्यतां दृश्यताम् । अन्यथा अयं युष्मानपि हनिष्यतीति भावः ॥

इति सुदर्शनाख्यविद्याधरस्य शापमोक्षवर्णनं शङ्खचूडवधवर्णनं वृषभासुरवधवर्णनं च
सप्ततितमदशकम् ॥

---

एकसप्ततितमदशकम् ।

अथ भगवतः केशिक्षपणमवतारयति—

यत्नेषु सर्वेष्वपि नावकेशी
केशी [illegible] भोजेशितुरिष्टबन्धुः ।
त्वं सिन्धुजावाप्य इतीव मत्वा
सम्प्राप्तवान् सिन्धुजवाजिरूपः ॥ १ ॥

यत्नेष्विति ॥ सर्वेषु अपि यत्नेषु नावकेशी भोजेशितुः इष्टबन्धुः सः केशी सिन्धुजवाजिरूपः सम्प्राप्तवान् । सर्वेषु सकलेषु । यत्नेषु प्रयत्नेषु लोकपीडनादाविर्त्यर्थः । अवकेशी निष्फलो न भवतीति नावकेशी । सफल प्रयत्नः । अत एव भोजेशितुः कंसस्य । इष्टबन्धुः प्रियमित्रम् । सः प्रसिद्धः । केशी तन्नामा असुरः । सिन्धुजवाजिरूपः सिन्धुजः सिन्धुदेश भव स चासौ वाजी हयस्तद्रूपं । सम्प्राप्तवान् सम्प्राप । त्वामिति विभक्ति विपरिणामेनात्रान्वेति । केशिनः सैन्धवरूपधारणे हेतुमुत्प्रेक्षते—त्वं सिन्धु जावाप्य इति मत्वा इवेति । त्वं श्रीकृष्णः । सिन्धुजावाप्यः सिन्धुजया लक्ष्म्या अवाप्यः प्राप्यः । इति एवम् । मत्वा निश्चित्य । इवेति सम्भा वनायाम् । यद्ययं सिन्धुजावाप्यः तर्ह्यहमपि सिन्धुजो भवामीति निश्चित्ये त्यर्थः ॥

केशी भगवन्तमापपातेत्याह—

**गन्धर्वतामेष गतोऽपि रूक्ष-**<br>
**र्नादैः समुद्वेजितसर्वलोकः ।**<br>
**भवद्विलोकावधि गोपवाटीं**<br>
**प्रमर्द्य पापः पुनरापतत्त्वाम् ॥ २ ॥**

गन्धर्वतामिति ॥ पापः एषः गन्धर्वतां गतः अपि रूक्षैः नादैः समुद्वेजितसर्वलोकः भवद्विलोकावधि गोपवाटीं प्रमर्द्य पुनः त्वामापतत् । पापः पापकर्मकृत् । परोपद्रवशीलत्वादेव गोपवाटीप्रमर्दनादिकमस्येत्यनेन द्योत्यते । एषः केशी । गन्धर्वतां हयत्वम् । गतः प्राप्तः । रूक्षैः कठोरैः । नादैः ध्वनिभिः । समुद्वेजितसर्वलोकः समुद्वेजितः सुतरामुद्विग्नः कृतः सर्वलोकः सकलजनो येन सः । गन्धर्वतां देवयोनिविशेषत्वं गतेन मधुर स्वरेण भवितव्यम्, तेषां मधुरस्वरत्वात्, प्रत्युतायं रूक्षस्वर इति विरोधः अत्रापिशब्देन प्रतीयते । परिहारस्तूक्तः । विरोधाभासोऽलङ्कारः । भवद्वि लोकावधि श्रीकृष्णदर्शनपर्यन्तम् । गोपवाटीम्, अत्र गोपवाटीशब्देन तत्रत्या

जना दृश्यन्ते। पद्मादीनामपि प्रमर्दितत्वप्रतीतिः फलम्। पुन अनन्त रम्। त्वां श्रीकृष्णम्। आपतत् आपपात॥

वाजिनो हि पादक्षेपेण प्रहरन्ति, केशी च वाजिरूपधरः, तस्मात् पदा भगवन्तं प्राहरदित्याह—

ताक्ष्यार्पिताङ्घ्रेस्तव ताक्ष्यं एष
चिक्षेप वक्षोभुवि नाम पादम्।
भृगोः पदाघातकथां निशम्य
स्वेनापि शक्यं तदितीव मोहात् ॥ ३ ॥

ताक्ष्यार्पितेति॥ एष ताक्ष्यं ताक्ष्यार्पिताङ्घ्रेः तव वक्षोभुवि पादं चिक्षेप नाम। ताक्ष्यं अश्वः। केशीत्यर्थः। ताक्ष्यार्पिताङ्घ्रेः ताक्ष्यं गरुडे अर्पितः न्यस्तः अङ्घ्रिः पादो यस्य तस्य। तव श्रीकृष्णस्य। ताक्ष्यं ताक्ष्यार्पिताङ्घ्रेरित्याभ्यामसुरस्य पादप्रहारोद्यमस्य सम्भाव्यता ध्वन्यते। वक्षोभुवि उरःस्थले। पादं चरणम्। चिक्षेप क्षिप्तवान्। नामेति प्रसिद्धौ। पादप्रक्षेपे हेतुमुत्प्रेक्षते—इति मोहात् इवेति। इति एवंप्रकारात्। मोहात् अज्ञानात्। इवेति सम्भावनायाम्। मोहप्रकारमाह—तत् स्वेन अपि शक्यमिति। तत् भगवदुरसि पादहननम्। स्वेन आत्मना। अपिस्समुच्चये। शक्यं साध्यम्। मोहोदये हेतुमाह—भृगोः पदाघातकथां निशम्य इति। भृगोः तन्नाम्नो महामुने। पदाघातकथां पदाघातस्य पादप्रहारस्य कथां वार्ताम्। निशम्य श्रुत्वा। इयं कथा 'भृगुः किल सरस्वतीनिकटवासिनस्तापसान्' इत्यादिना उत्तरत्र वक्ष्यते। उत्प्रेक्षया चाशक्यत्वं द्योत्यते॥

केशिना पादे प्रक्षिप्ते भगवान् किमकरोदित्याकाङ्क्षायामाह—

प्रवञ्चयन्नस्य खुराञ्चलं द्रा-
गमुञ्च चिक्षेपिथ दूरदूरम्।

सम्मूर्छितोऽपि ह्यतिमूर्छितेन
क्रोधोष्मणा खादितुमाद्रुतस्त्वाम् ॥ ४ ॥

**प्रवञ्चयन्निति ॥** त्वम् अस्य खुराञ्चलं प्रवञ्चयन् द्राक् अमुं दूरदूरं चिक्षेपिथ च। त्वं श्रीकृष्णः। अस्य वाजिरूपधरस्य केशिनः। खुराञ्चलं पादप्रहारम्। प्रवञ्चयन् छलयन्। द्राक् झटिति। अमुम् असुरम्। दूरदूरं सुतरां दूरे। चिक्षेपिथ पादयोः गृहीत्वा क्षिप्तवानसीत्यर्थः। चकारः समुच्चये। पादप्रहारे निष्फले जाते पुनर्भगवन्तं खादितुमारेभ इत्याह— सः मूर्छितः अपि अतिमूर्छितेन क्रोधोष्मणा त्वां खादितुम् आद्रुतः हि इति। सः असुरः। मूर्छितः मूर्छामुपगतः। अपिर्विरोधे। अतिमूर्छितेन अत्यर्थं मूर्छितेन प्रवृद्धेन। क्रोधोष्मणा कोपानलेन। त्वां श्रीकृष्णम्। खादितुं दष्टुम्। आद्रुतः प्राद्रवत्। हीति प्रसिद्धौ। अश्वस्य स्वभावकथनमिदम् ॥

अथ केशिक्षपणमाह—

त्वं वाहदण्डे कृतधीश्च बाहा-
दण्डं न्यधास्तस्य मुखे तदानीम्।
तद्वृद्धिरुद्धश्वसनो गतासुः
सप्तीभवन्नप्ययमैक्यमागात् ॥ ५ ॥

**त्वमिति ॥** त्वं वाहदण्डे कृतधीः च तदानीं तस्य मुखे बाहादण्डं न्यधाः। त्वं श्रीकृष्णः। वाहदण्डे अश्वदमे। कृतधीः निश्चितमानसः। तदानीम् तस्मिन्नभिद्रवति। तस्य केशिनः। मुखे वदनकुहरे। बाहादण्डं बाहुदण्डम्। बवयोरभेदः। न्यधाः प्रवेशयामासिथ। तदिष्टमनुसरन्निवेति भावः। अत्र चकारेणाप्यर्थकेन वाहदण्डे कृतधीरपि वाहस्या दण्डं न्यधा इति विरोधप्रतीतेर्विरोधाभासोऽलङ्कारः। अयं तद्वृद्धिरुद्धश्वसनः गतासुः सप्तीभवन् अपि ऐक्यमागात्। अयम् असुरः। तद्वृद्धिरुद्धश्वसनः तस्य बाहुदण्डस्य वृद्ध्या वर्धनेन रुद्धः निरुद्धः श्वसनः प्राणमारुतो यस्य सः। अत एव गतासुः मृतः। सप्तीभवन् अश्वतामुपगतः। अपी

णामपि भगवदैक्यस्य दुर्लभत्वाद्विरोधं द्योतयति। ऐक्यं भगवत्सायुज्यम्। आगात् प्राप। अत्र अपिशब्देन सप्तधा विभक्तोऽप्येकीभावमुपगत इत्यपि विरोधप्रतीतेर्विरोधाभासः॥

देवा भगवन्तं तुष्टुवुरित्याह—

आलम्भमात्रेण पशोः सुराणां
प्रसादके नूत्न इवाश्वमेधे।
कृते त्वया हर्षवशाः सुरेन्द्रा-
स्त्वां तुष्टुवुः केशवनामधेयम् ॥ ६ ॥

आलम्भमात्रेणेति॥ सुरेन्द्राः हर्षवशाः त्वां केशवनामधेयं तुष्टुवुः। सुरेन्द्राः सुराः देवाः इन्द्रश्च। प्राधान्यादिन्द्रस्य ग्रहणम्। हर्षवशाः सन्तोषाधीनाः। हेतुगर्भमिदं विशेषणम्। त्वां श्रीकृष्णम्। केशवनामधेयम् केशवेत्याहूयेत्यर्थः। तुष्टुवुः नुनुवु। देवानां हर्षहेतुमश्वमेधत्वेनोत्प्रेक्षते—त्वया पशोः आलम्भमात्रेण सुराणां प्रसादके नूत्ने अश्वमेधे कृते इवेति। त्वया श्रीकृष्णेन। पशोः यज्ञपशोरश्वस्य। असुरस्य हयरूपत्वात् पशुत्वेनाध्यवसायः। आलम्भमात्रेण हिंसामात्रेण। सुराणां देवानाम्। प्रसादके प्रसादहेतौ। नूत्ने अपूर्वे। अयमत्राशय.—अश्वमेधे हि पशुमालभ्य तेन यजने कृते सत्येव देवानां प्रमोदो जायते, न त्वालम्भमात्रेण। इह त्वालम्भमात्रेण तेषां प्रसादः समभूदित्यपूर्वत्वमिति। वस्तुतस्तु, हयरूपस्यासुरस्य केशिनो वधादेव देवाना प्रमोद इत्यवगन्तव्यम्। अश्वमेधे तदाख्ये यज्ञे। कृते कृते सति॥

अथ श्रीनारदो भगवन्तं तुष्टावेत्याह—

कंसाय ते शौरिसुतत्वमुक्त्वा
तं तद्वधोत्कं प्रतिरुध्य वाचा।

प्राप्तेन केशिक्षपणावसाने
श्रीनारदेन त्वमभिष्टुतोऽभूः ॥ ७ ॥

कंमायेति ॥ त्वं कंमाय ते शौरिसुतत्वम् उक्त्वा केशिक्षपणावसाने प्राप्तेन श्रीनारदेन अभिष्टुतः अभूः। त्वं श्रीकृष्णः। ते तव श्रीकृष्णस्य। शौरिसुतत्वं वसुदेवपुत्रताम्। देवक्या अष्टमगर्भतामिति यावत्। उक्त्वा निगद्य। केशिक्षपणावसाने केशिक्षपणस्य केशिवधस्य अवसाने। प्राप्तेन आगतेन। अभिष्टुतः स्तुतः। ननु कंसः कुतो न वसुदेवं जघानेत्यत्राह—तद्वधोत्कं तं वाचा प्रतिरुध्य इति। तद्वधोत्कं तस्य शौरिणः वधे निग्रहे उत्कम् उद्युक्तमित्यर्थः। आत्मनो वचनादिति भावः। वाचा उक्त्या। प्रतिरुध्य निवार्य ॥

अथ व्योमासुरवधं प्रस्तौति—

कदापि गोपैः सह काननान्ते
निलायनक्रीडनलोलुपं त्वाम्।
मयात्मजः प्राप दुरन्तमायो
व्योमाभिधो व्योमचरोपरोधी ॥ ८ ॥

कदापीति ॥ कदापि दुरन्तमायः व्योमचरोपरोधी व्योमाभिधः मयात्मजः काननान्ते गोपैः सह निलायनक्रीडनलोलुपं त्वां प्राप। कदापि कदाचित्। दुरन्तमायः दुरन्ता अपरिमिता माया यस्य सः। उत्तरश्लोकाभिप्रायमेतद्विशेषणम्। व्योमाभिधः व्योमाख्यः। मयात्मजः मयस्यात्मजः पुत्रः। काननान्ते वनमध्ये। निलायनक्रीडनलोलुपं निलायनक्रीडने तिरोधाननिरीक्षणस्पर्शनरूपे क्रीडने विहारे लोलुपं साभिलाषम्। तथा क्रीडन्तमित्यर्थः। त्वां श्रीकृष्णम् ॥

व्योमासुरस्य प्रवृत्तिमाह—

स चोरपालायितवल्लवेषु
चोरायितो गोपशिशून् पशूंश्च।

कंसेनादिष्टो गान्दिनेयः परं प्रमुदितोऽभूदित्याह—

अक्रूर एष भवदङ्घ्रिपरश्चिराय
त्वद्दर्शनाक्षममनाः क्षितिपालभीत्या ।
तस्याज्ञयैव पुनरीक्षितुमुद्यतस्त्वा-
मानन्दभारमतिभूरितरं बभार ॥ २ ॥

अक्रूर इति ॥ एषः अक्रूरः अतिभूरितरम् आनन्दभारं बभार । अतिभूरितरम् अत्यर्थमधिकम् आनन्दभारम् आनन्दस्य भारम् । बभार धृतवान् । अत्र हेतुमाह—चिराय भवदङ्घ्रिपरः क्षितिपालभीत्या त्वद्दर्शनाक्षममनाः पुनः तस्य आज्ञया एव त्वाम् ईक्षितुम् उद्यतः इति । चिराय चिरेण । भवदङ्घ्रिपरः भवद्भक्तः । क्षितिपालभीत्या क्षितिपालात् कंसात् भीत्या भयेन । त्वद्दर्शनाक्षममनाः तव श्रीकृष्णस्य दर्शने अवलोकने अक्षमम् असमर्थं मनो यस्य स । भगवन्तं द्रक्ष्यामीति मनसा विचिन्तयितुमसमर्थ इत्यर्थः । पुनः अनन्तरम् । तस्य कंसस्य । आज्ञया नियोगेन । एवकारेणायोगव्यवच्छेदः । त्वां श्रीकृष्णम् । ईक्षितुं द्रष्टुम् । उद्यत उद्युक्तः ॥

अथ अक्रूरस्य व्रजं गच्छतो मार्गे समुपजातानि वृत्तान्याह चतुर्भिः—

सोऽयं रथेन सुकृती भवतो निवासं
गच्छन् मनोरथगणान् त्वयि धार्यमाणान् ।
आस्वादयन् मुहुरपायभयेन दैवं
सम्प्रार्थयन् पथि न किञ्चिदपि व्यजानात् ॥ ३ ॥

सोऽयमिति ॥ रथेन भवतः निवासं गच्छन् सः अयं पथि न किञ्चित् अपि व्यजानात् । रथेन स्यन्दनेन । भवतः श्रीकृष्णस्य । निवासं वासस्थानं व्रजम् । सः भक्तशिरोमणिः । अयम् अक्रूरः । पथि मार्गे । किञ्चिदपि किमपि वस्तु तत्रत्यम् । न व्यजानात् न अवागच्छत् । अत

हेतुमाह—त्वयि धार्यमाणान् मनोरथगणान् मुहुः आस्वादयन् अपायभयेन दैवं सम्प्रार्थयन्निति। त्वयि श्रीकृष्णे विषये। मनोरथगणान् दर्शनस्पर्शनाद्यभिलाषसमूहान्। मुहुः पुनः पुनः। आस्वादयन्। शृङ्गारादिरसमिव आस्वाद्य विगलितवेद्यान्तरः सन्नित्यर्थः। अपायभयेन अपायाद्विघ्नात् भयेन भीत्या। स्वस्य कंसभृत्यत्वादिति भावः। दैवम् ईश्वरम्। सम्प्रार्थयन् श्रीकृष्णदर्शनादिकं मे भूयादिति सम्यक् प्रार्थयन्। अत्रापि मुहुरित्यन्वेति। चकारोऽत्राध्याहर्तव्यः। अक्रूरस्य भगवति मनोरथधारणयोग्यतां दर्शयति—सुकृती इति। सुकृतं पूर्वजन्मकृतपुण्यसञ्चयोऽस्यास्तीति तथोक्तः॥

मनोरथास्वादनप्रकारमेवाह—

द्रक्ष्यामि वेदशतगीतगतिं पुमांसं
स्प्रक्ष्यामि किंस्विदपि नाम परिष्वजेयम्।
किं वक्ष्यते स खलु मां क्व नु वीक्षितः स्या-
दित्थं निनाय स भवन्मयमेव मार्गम् ॥ ४ ॥

द्रक्ष्यामीति॥ स इत्थं भवन्मयमेव मार्गं निनाय। सः अक्रूरः। इत्थम् एवं विचिन्त्य। भवन्मयं श्रीकृष्णमयमेव यथा भवति तथा। एव कारेणान्यपेक्षा व्यवच्छेदः। श्रीकृष्णेतरानुसन्धानं विनेत्यर्थः। मार्गं पन्थानम्। निनाय नीतवान्। चिन्ताप्रकारमाह—द्रक्ष्यामीत्यादि। अहं पुमांसं किंस्वित् द्रक्ष्यामि स्प्रक्ष्यामि। पुमांसं पुरुषं श्रीकृष्णम्। किंस्विदिति वितर्के। द्रक्ष्यामि दृष्ट्वा हृष्यामि। स्प्रक्ष्यामि स्पृष्ट्वा हृष्यामि। पुमांसं किंस्विदित्यत्राप्यन्वेति। अपि नाम परिष्वजेयम्। अपि नामेति वितर्के। परिष्वजेयम् आलिङ्ग्य निर्वृतो भवेयम्। पुमांसमित्यत्राप्यन्वेति। श्रीकृष्णदर्शनादीनां दुर्लभत्वं दर्शयति—वेदशतगीतगतिमिति। वेदशतैरनेकैरुपनिषद्वाक्यैर्गीता प्रतिपादिता गतिः स्वरूपं यस्य तम्। सः खलु मां किं वक्ष्यते। सः श्रीकृष्णः। खल्विति खेदे। मां कृताञ्जलिमवस्थितम्। किमिति वितर्के। वक्ष्यते हे अक्रूर इति वक्ष्यते किम्। क्व नु वीक्षितः स्यात्। क्व नु कुत्र देशे। वीक्षितः दृष्टः॥

कंसेनादिष्टो गान्दिनेयः परं प्रमुदितोऽभूदित्याह—

अक्रूर एष भवदङ्घ्रिपरश्चिराय
त्वद्दर्शनाक्षममनाः क्षितिपालभीत्या ।
तस्याज्ञयैव पुनरीक्षितुमुद्यतस्त्वा-
मानन्दभारमतिभूरितरं बभार ॥ २ ॥

अक्रूर इति ॥ एषः अक्रूरः अतिभूरितरम् आनन्दभारं बभार । अतिभूरितरम् अत्यर्थमधिकम् आनन्दभारम् आनन्दस्य भारम् । बभार धृतवान् । अत्र हेतुमाह—चिराय भवदङ्घ्रिपरः क्षितिपालभीत्या त्वद्दर्शनाक्षममनाः पुनः तस्य आज्ञया एव त्वाम् ईक्षितुम् उद्यतः इति । चिराय चिरेण । भवदङ्घ्रिपरः भवद्भक्तः । क्षितिपालभीत्या क्षितिपालात् कंसात् भीत्या भयेन । त्वद्दर्शनाक्षममनाः तव श्रीकृष्णस्य दर्शने अवलोकने अक्षमम् असमर्थं मनो यस्य स । भगवन्तं द्रक्ष्यामीति मनसा विचिन्तयितुमसमर्थ इत्यर्थः । पुनः अनन्तरम् । तस्य कंसस्य । आज्ञया नियोगेन । एवकारेणायोगव्यवच्छेदः । त्वां श्रीकृष्णम् । ईक्षितुं द्रष्टुम् । उद्यत उद्युक्तः ॥

अथ अक्रूरस्य व्रजं गच्छतो मार्गे समुपजातानि वृत्तान्याह चतुर्भिः—

सोऽयं रथेन सुकृती भवतो निवासं
गच्छन् मनोरथगणान् त्वयि धार्यमाणान् ।
आस्वादयन् मुहुरपायभयेन दैवं
सम्प्रार्थयन् पथि न किञ्चिदपि व्यजानात् ॥ ३ ॥

सोऽयमिति ॥ रथेन भवतः निवासं गच्छन् स अयं पथि न किञ्चित् अपि व्यजानात् । रथेन स्यन्दनेन । भवत श्रीकृष्णस्य । निवासं वासस्थानं व्रजम् । स. भक्तशिरोमणिः । अयम् अक्रूरः । पथि मार्गे । किञ्चिदपि किमपि वस्तु तत्रत्यम् । न व्यजानात् न अवागच्छत् । अत

हेतुमाह—त्वयि धार्यमाणान् मनोरथगणान् मुहुः आस्वादयन् अपायभयेन दैवं सम्प्रार्थयन्निति। त्वयि श्रीकृष्णे विषये। मनोरथगणान् दर्शनस्पर्शनाद्यभिलाषसमूहान्। मुहुः पुनः पुनः। आस्वादयन्। शृङ्गारादिरसमिव आस्वाद्य विगलितवेद्यान्तरः सन्नित्यर्थः। अपायभयेन अपायाद्विघ्नात् भयेन भीत्या। स्वस्य कंसभृत्यत्वादिति भावः। दैवम् ईश्वरम्। सम्प्रार्थयन् श्रीकृष्णदर्शनादिकं मे भूयादिति सम्यक् प्रार्थयन्। अत्रापि मुहुरित्यन्वेति। चकारोऽत्राध्याहर्तव्यः। अक्रूरस्य भगवति मनोरथधारणयोग्यतां दर्शयति—सुकृती इति। सुकृतं पूर्वजन्मकृतपुण्यसञ्चयोऽस्यास्तीति तथोक्तः॥

मनोरथास्वादनप्रकारमेवाह—

द्रक्ष्यामि वेदशतगीतगतिं पुमांसं
स्प्रक्ष्यामि किंस्विदपि नाम परिष्वजेयम्।
किं वक्ष्यते स खलु मां क्व नु वीक्षितः स्या-
दित्थं निनाय स भवन्मयमेव मार्गम् ॥ ४ ॥

द्रक्ष्यामीति॥ स इत्थं भवन्मयमेव मार्गं निनाय। सः अक्रूरः। इत्थम् एवं विचिन्त्य। भवन्मयं श्रीकृष्णमयमेव यथा भवति तथा। एवकारेणान्येषां व्यवच्छेदः। श्रीकृष्णेतरानुसन्धानं विनेत्यर्थः। मार्गं पन्थानम्। निनाय नीतवान्। चिन्ताप्रकारमाह—द्रक्ष्यामीत्यादि। अहं पुमांसं किंस्वित् द्रक्ष्यामि स्प्रक्ष्यामि। पुमांसं पुरुषं श्रीकृष्णम्। किंस्विदिति वितर्के। द्रक्ष्यामि दृष्ट्वा हृष्यामि। स्प्रक्ष्यामि स्पृष्ट्वा हृष्यामि। पुमांसं किंस्विदित्यत्राप्यन्वेति। अपि नाम परिष्वजेयम्। अपि नामेति वितर्के। परिष्वजेयम् आलिङ्ग्य निर्वृतो भवेयम्। पुमांसमित्यत्राप्यन्वेति। श्रीकृष्णदर्शनादीनां दुर्लभत्वं दर्शयति—वेदशतगीतगतिमिति। वेदशतैरनेकैरुपनिषद्वाक्यैर्गीता प्रतिपादिता गतिः स्वरूपं यस्य तम्। सः खलु मां किं वक्ष्यते। सः श्रीकृष्णः। खल्विति तर्के। मां कृताञ्जलिमवस्थितम्। किमिति वितर्के। वक्ष्यते हे अक्रूर इति वक्ष्यते किम्। क्व नु वीक्षितः स्यात्। क्व नु कुत्र देशे। वीक्षितः दृष्टः॥

वृन्दावनं प्रविष्टस्याक्रूरस्य दशाविशेषमाह—

भूयः क्रमादभिविशन् भवदङ्घ्रिपूतं
वृन्दावनं हरविरिञ्चसुराभिवन्द्यम् ।
आनन्दमग्न इव लग्न इव प्रमोहे
किं किं दशान्तरमवाप न पङ्कजाक्ष ॥ ५ ॥

भूय इति ॥ हे पङ्कजाक्ष आनन्दमग्नः इव प्रमोहे लग्नः इव किं किं दशान्तरं न अवाप । पङ्कजाक्ष अरविन्दलोचन । अत्र स इति पूर्व स्मादनुवर्तते । सः अक्रूरः । आनन्दमग्नः आनन्दार्णवे निमग्नः इव । प्रमोहे मूर्छायाम् । लग्नः सक्तः । बहिर्विकाराभावान्मूढ इवेत्यर्थः । किं किं दशान्तरं कीदृशमवस्थाविशेषम् । न अवाप न प्राप । सर्वमप्यवापे त्यर्थः । अत्र हेतुमाह—भूय. क्रमात् हरविरिञ्चसुराभिवन्द्यं वृन्दावनम् अभि विशन्निति । भूयः अनन्तरम् । क्रमात् क्रमेण । हरविरिञ्चसुराभिवन्द्यं हरेण रुद्रेण विरिञ्चेन ब्रह्मणा सुरैः देवैः अभिवन्द्यं वन्दनीयम् । अभि विशन् प्रविशन् । वृन्दावनस्य शर्वादिवन्द्यत्वाहेतुमाह—भवदङ्घ्रिपूतमिति । भवतः श्रीकृष्णस्य अङ्घ्रिभ्यां पादाभ्यां पूतं पवित्रितम् ॥

वृन्दावनं पश्यतोऽक्रूरस्य प्रवृत्तिमाह—

पश्यन्नवन्दत भवद्विहृतिस्थलानि
पांसुष्ववेष्टत भवच्चरणाङ्कितेषु ।
किं ब्रूमहे बहुजना हि तदापि जाता
एवन्तु भक्तितरला विरलाः परात्मन् ॥ ६ ॥

पश्यन्निति ॥ भवद्विहृतिस्थलानि पश्यन् अवन्दत । अत्रापि स इत्यनुवर्तते । सः अक्रूरः । भवद्विहृतिस्थलानि भवत. श्रीकृष्णस्य विहृति स्थलानि विहारस्थलानि । पश्यन् ईक्षमाणः । अवन्दत अनमत । पांसुषु अवेष्टत वेष्टनमकरोत् । अत्र हेतुः—भवच्चरणाङ्कितेषु इति । भवतः

श्रीकृष्णस्य चरणाभ्यां पदारविन्दाभ्यामङ्कितेषु लाञ्छितेषु । पांसुषु छत्राङ्कुशाद्यङ्कितां पदपङ्क्तिमवलोक्य श्रीकृष्णपदपांसव एवैत इति मत्वा तान् सर्वाङ्गेष्वकरोदित्यर्थः । अथ कविरक्रूरस्य भक्त्यतिशयमनुमोदमान आह—किमित्यादि । वयं किं ब्रूमहे । ब्रूमहे कथयामः । तदा अपि बहुजनाः जाताः हि । तदा तस्मिन्नवसरे । श्रीकृष्णावतारकाल इत्यर्थः । अपीति कालान्तरसमुच्चये । बहुजनाः बहवो जनाः । जाताः उत्पन्नाः । हीति प्रसिद्धौ । श्रीकृष्णावतारात् पूर्वं पश्चात्तत्काले च बहवो जना जाता इत्यर्थः । हे परात्मन् तु एवं भक्तितरलाः विरलाः । परात्मन् परब्रह्मस्वरूप । तु किन्त्वित्यर्थः । एवम् अक्रूरवत् । भक्तितरलाः भक्त्या तरलाः विलीनहृदयाः । विरलाः दुर्लभाः । तथा तर्कयामीत्यर्थः ॥

अथ क्रमात् भगवद्भवनान्तिकं प्रापेत्याह—

> सायं स गोपभवनानि भवच्चरित्र-
> गीतामृतप्रसृतकर्णरसायनानि ।
> पश्यन् प्रमोदसरितेव किलोह्यमानो
> गच्छन् भवद्भवनसन्निधिमन्वयासीत् ॥ ७ ॥

सायमिति ॥ गच्छन् सः सायं भवद्भवनसन्निधिम् अन्वयासीत् । गच्छन् भगवद्भवनं प्रति गच्छन् । सः अक्रूरः । भवद्भवनसन्निधिं भवतः श्रीकृष्णस्य भवनं गृहं तस्य सन्निधिं समीपम् । अन्वयासीत् प्राप । उत्प्रेक्षते—प्रमोदसरिता उह्यमान इव किलेति । प्रमोदसरिता सन्तोषात्मिकया नद्या । उह्यमानः वाह्यमानः । इवेति सम्भावनायाम् । प्रमोदहेतुमाह—गोपभवनानि पश्यन्निति । गोपानां भवनानि गृहाणि । पश्यन् विलोकयन् । गोपभवनानां रमणीयतामाह—भवच्चरित्रगीतामृतप्रसृतकर्णरसायनानि इति । भवतः श्रीकृष्णस्य चरितं गानयोग्यतया निबद्धमेव गीतं तदेवामृतं तस्य प्रसृतं निष्यन्द एव कर्णरसायनं श्रोत्रानन्दकरं येषु तानि ॥

अथ भगवन्तमद्राक्षीदित्याह—

तावद्ददर्श पशुदोहविलोकलोलं
भक्तोत्तमागतिमिव प्रतिपालयन्तम् ।
भूमन् भवन्तमयमग्रजवन्तमन्त-
र्ब्रह्मानुभूतिरससिन्धुमिवोद्वमन्तम् ॥ ८ ॥

तावदिति ॥ हे भूमन् अयं तावत् भवन्तं ददर्श । भूमन् परिपूर्णरूप । अयम् अक्रूरः । तावत् भगवद्भवनसमीपप्राप्तिसमये । अथवा प्रथमम् । भवन्तं श्रीकृष्णम् । ददर्श अपश्यत् । अक्रूरेण दृष्टस्य भगवतः समवस्थामाह—पशुदोहविलोकलोलं भक्तोत्तमागतिं प्रतिपालयन्तम् इव अग्रजवन्तम् अन्तर्ब्रह्मानुभूतिरससिन्धुम् उद्वमन्तम् इवेति । पशुदोहविलोकलोलं पशुदोहस्य गोदोहनस्य विलोके दर्शने लोलं सतृष्णम् । भक्तोत्तमागतिं भक्तेषूत्तमस्य अक्रूरस्य आगतिम् आगमनम् । प्रतिपालयन्तं प्रतीक्षमाणम् । इवेति सम्भावनायाम् । अनेनाक्रूरे भगवत आदरातिशयो ध्वन्यते । अग्रजवन्तं बलभद्रसमन्वितम् । अन्तर्ब्रह्मानुभूतिरससिन्धुम् अन्तर्गतं ब्रह्मानुभूतिरसं चिदानन्दात्मकं ब्रह्मैव सिन्धुं समुद्रम् । उद्वमन्तं बहिः प्रवर्तयन्तम् । इवेति सम्भावनायाम् । उत्प्रेक्षया च दृष्टमात्र एव श्रीकृष्णे गान्दिनेयस्य ब्रह्मानन्दार्णवनिमग्नत्वं द्योत्यते । भक्तप्रियाकृतस्तु—ब्रह्मानुभूतिर्ब्रह्मज्ञानं तज्जन्यो रससिन्धुस्सुखार्णव आनन्दः । पथि श्रीकृष्णाकाराकारितायाश्चित्तवृत्तेरन्तःस्थत्वात् भगवद्दर्शनसमनन्तरं तस्या इन्द्रियद्वारा बहिर्निर्गमनाद्धान्तःस्थश्रीकृष्णदर्शनसुखं बहिरुद्वमन्तमिवेत्यर्थ इत्याहु ॥

अक्रूरेण दृष्टयोर्भगवतोस्तदानीन्तनं नेपथ्यमाह—

सायन्तनाप्लवविशेषविविक्तगात्रौ
द्वौ पीतनीलरुचिराम्बरलोभनीयौ ।
नातिप्रपञ्चधृतभूषणचारुवेषौ
मन्दस्मितार्द्रवदनौ स युवां ददर्श ॥ ९ ॥

**सायन्तनेति ॥** सः सायन्तनाप्लवविशेषविविक्तगात्रौ पीतनीलरुचिराम्बरलोभनीयौ नातिप्रपञ्चधृतभूषणचारुवेषौ मन्दस्मितार्द्रवदनौ युवां द्वौ ददर्श। सः अक्रूरः। सायन्तनाप्लवविशेषविविक्तगात्रौ 'सायन्तनेन सान्ध्येन आप्लवेन स्नानेन विशेषतो विविक्तं निर्मलं गात्रं ययोस्तौ'। पीतनीलरुचिराम्बरलोभनीयौ पीतनीलाभ्यां रुचिराभ्यां शोभनाभ्यामम्बराभ्यां लोभनीयौ मनोज्ञौ। नातिप्रपञ्चधृतभूषणचारुवेषौ नातिप्रपञ्चम् अनतिबहुलं यथा स्यात्तथा धृतैर्भूषणैराभरणैः चारुः मनोहरो वेषः अलंक्रिया ययोस्तौ। मन्दस्मितार्द्रवदनौ मन्दस्मितेन मन्दहासेन आर्द्रं सिक्तं वदनं ययोस्तौ। युवां श्रीरामकृष्णौ। ददर्श अपश्यत्॥

अथ भगवानक्रूरं स्वगृहमनयदित्याह—

> दूराद्रथात् समवरुह्य नमन्तमेन-
> मुत्थाप्य भक्तकुलमौलिमथोपगूहन्।
> हर्षान्मिताक्षरगिरा कुशलानुयोगी
> पाणिं प्रगृह्य सबलोऽथ गृहं निनेथ ॥ १० ॥

**दूरादिति ॥** अथ त्वं दूरात् रथात् समवरुह्य नमन्तम् एनम् उत्थाप्य हर्षात् उपगूहन् मिताक्षरगिरा कुशलानुयोगी अथ पाणिं प्रगृह्य सबलः गृहं निनेथ। त्वं श्रीकृष्ण। दूरात् दूरे। रथात् स्यन्दनात्। समवरुह्य अवरुह्य। नमन्तं पुनः पुनः प्रणमन्तम्। एनम् अक्रूरम्। झटिति तत्समीपं प्राप्य उत्थाप्य। हर्षात् प्रमोदात्। उपगूहन् आश्लिष्यन्। मिताक्षरगिरा मितानि परिमितानि अक्षराणि वर्णा यस्यां तथाविधया गिरा वाचा। हर्षादित्यस्य मध्यमणिन्यायेनोभयत्रापि सम्बन्धः। कुशलानुयोगी कुशलं पृच्छन्। अथ कुशलप्रश्नानन्तरम्। पाणिम् अक्रूरस्य करम्। प्रगृह्य गृहीत्वा। सबलः बलभद्रसमन्वितः। गृहम् आत्ममन्दिरम्। निनेथ नीतवानसि। ननु कथमक्रूरः अन्तरात्मनो भगवतः संश्लेषेऽधिकारितां गत इत्यत्राह—भक्तकुलमौलिमिति। भगवद्भक्तकुलश्रेष्ठमित्यर्थः॥

कंसादेस्तमभिगच्छतो भगवतः प्रस्थानोपक्रमनाह—

नन्देन साकममितादरमर्चयित्वा
तं यादवं तदुदितां निशमय्य वार्ताम् ।
गोपेषु भूपतिनिदेशकथां निवेद्य
नानाकथाभिरिह तेन निशामनैषीः ॥ ११ ॥

नन्देनेति ॥ त्वं नन्देन सार्कं तं यादवम् अमितादरम् अर्चयित्वा तदुदितां वार्तां निशमय्य गोपेषु भूपतिनिदेशकथां निवेद्य इह तेन नाना कथाभिः निशामनैषीः । त्वं श्रीकृष्णः । सार्कं सह । तं यादवमक्रूरम् । अमितादरम् अमितः अपरिमितः आदरः यस्मिन् कर्मणि तद्यथा भवति तथा । अर्चयित्वा पूजयित्वा । तदुदितां तेन अक्रूरेण उदिता कथिताम् । वार्तां धनुर्यज्ञवार्ताम् । निशमय्य श्रुत्वा । भूपतिनिदेशकथां भूपतेः कंसस्य निदेशकथां नियोगवृत्तान्तम् । निवेद्य बोधयित्वा । इदमुपायनसम्भारसम्भृत शकटसंयोजनाद्यादेशस्याप्युपलक्षणम् । इह स्वगृह एव । तस्य धनुर्मानस प्रत्यक्षगतत्वात् । नानाकथाभिः नानाविधाभिः कथाभिर्वार्तालापैः । तेन अक्रूरेण सह । निशां रात्रिम् । अनैषीः नीतवानसि ॥

तस्यां निशायां श्रीकृष्णे गोपीनामन्यासक्तिशङ्काऽभूदित्याह—

चन्द्रागृहे किमुत चन्द्रभगागृहे नु
राधागृहे नु भवने किमु मैत्रविन्दे ।
धूर्तो विलम्बत इति प्रमदाभिरुच्चै-
राशङ्कितो निशि मरुत्पुरनाथ पायाः ॥ १२ ॥

चन्द्रागृह इति ॥ हे मरुत्पुरनाथ निशि प्रमदाभिः इति उच्चैः आशङ्कितः त्वं पायाः । मरुत्पुरनाथ गुरुवायुपुरनाथ । निशि रात्रौ । प्रमदाभिः गोपीभिः । इति अनेन प्रकारेण । उच्चैः अत्यर्थम् । आश ङ्कितः सशयितः । त्वं श्रीकृष्णः । पायाः मामनन्यशरणम् त्रायस्वेत्यर्थः । आशङ्काप्रकारमाह—धूर्तः चन्द्रागृहे किमुत चन्द्रभगागृहे नु राधागृहे नु मैत्रविन्दे भवने किमु विलम्बते इति । धूर्तः वञ्चकः । अथ त्वद्गृह

मेष्यामीति तासां निकटे पूर्वं प्रतिज्ञाय तथाऽकरणाद्धूर्त इत्युक्तिः। चन्द्रा गृहे चन्द्रायाः तन्नामधेयाया गोपाङ्गनाया गृहे भवने। किमुतेति वितर्के। चन्द्रभगागृहे चन्द्रभगासंज्ञितायाः गोप्या गृहे। न्विति वितर्के। एवमुत्तरत्रापि। राधागृहे राधाया गृहे भवने। मैत्रविन्दे मित्रविन्दाख्याया गोप्यास्सम्बन्धिनि। भवने गृहे। किम्विति वितर्के। विलम्बते मां वञ्चयित्वा वसतीत्यर्थः॥

इति अक्रूरस्य गोकुलयात्रा-वृन्दावनयात्रि-भगवत्समागमभगवत्कृतसत्कारादीनां वर्णनं

द्विसप्ततितमं दशकं सटिकम्॥

## त्रिसप्ततितमदशकम्।

अथ गोप्यो भगवद्गमनवार्तां श्रुत्वा अतिमात्रं पर्याकुला बभूवुरित्याह—

निशमय्य तवाथ यानवार्तां
भृशमार्ताः पशुपालबालिकास्ताः।
किमिदं किमिदं कथं न्वितीमाः
समवेताः परिदेवितान्यकुर्वन् ॥ १ ॥

निशमय्येति॥ अथ ता इमाः पशुपालबालिकाः भृशम् आर्ताः समवेताः इति परिदेवितानि अकुर्वन्। अथ अनन्तरम्। ताः श्रीकृष्णमयजीविताः। इमाः क्षणमपि भगवद्विरहं सोढुमक्षमाः। पशुपालबालिकाः गोपकुमारिकाः। भृशम् अत्यर्थम्। आर्ताः दुःखिताः। समवेताः सम्मिलिताः। इति अनेन प्रकारेण। परिदेवितानि विलापान्। अकुर्वन् चक्रुः। गोपीनामार्तिकारणमाह—तव यानवार्तां निशमय्य इति। तव

श्रीकृष्णस्य। "यानवार्ता गमनवृत्तान्तम्। कंसादेशादक्रूरः श्रीकृष्णं नेतु मागत इति गोपानां मुखादुपश्रुत्येत्यर्थः। परिदेवनप्रकारमाह—इदं किम्, इदं किम्, कथं नु" इति। इदम् अमृतास्वादे विषपानमिवातिकष्टमव स्थान्तरमापतितम्। किमिति जिज्ञासायाम्। द्विरुक्तिरावेगात्। कथं नु किमस्मद्भाग्यदोषात् उत नन्दसूनोर्निर्घृणत्वादित्यर्थः॥

तदेव परिदेवनप्रकारमाह—

करुणानिधिरेष नन्दसूनुः
कथमस्मान् विसृजेदनन्यनाथाः।
बत नः किमु दैवमेवमासी-
दिति तास्त्वद्गतमानसा विलेपुः ॥ २ ॥

करुणानिधिरिति॥ ताः इति विलेपुः। ताः गोप्यः। इति अनेन प्रकारेण। विलेपुः परिदेवनं चक्रुः। परिदेवने हेतुः—त्वद्गत मानसाः इति। त्वद्गतं श्रीकृष्णे निविष्टं मानसं मनो यासाम् ताः। विलापप्रकारमाह—एषः नन्दसूनुः कथम् अस्मान् विसृजेदिति। एषः अस्मासु प्रणयपरवशत्वेन दृष्टः। नन्दसूनुः श्रीकृष्णः। अस्मान् तस्मिन् विश्वस्ताः। विसृजेत् परित्यजेत्। नन्वकरुणा विश्वस्तानपि त्यजन्तीति चेत्तत्राह—करुणानिधिः इति। करुणायाः कृपायाः निधिर्निधानभूतः। नन्वन्यस्माद्रक्षणं स्यादिति परित्यक्ता इत्याशङ्कायामाह—अनन्यनाथाः इति। तदेकशरणा इत्यर्थः। किञ्च, नः दैवम् एवमासीत् किमु बत इति। नः अस्माकम्। दैवं भाग्यम्। एवं निरतिशयसुखप्रदं सहसा नष्टं च। आसीत् संवृत्तम्। किम्विति जिज्ञासायां वितर्के वा। बतेति खेदे॥

अथ पर्याकुलाना गोपीनामाश्वासनप्रकारमाह द्वाभ्याम्—

चरमप्रहरे प्रतिष्ठमानः
सह पित्रा निजमित्रमण्डलैश्च।

परितापभरं नितम्बिनीनां
शमयिष्यन् व्यमुचः सखायमेकम् ॥ ३ ॥

**चरमप्रहर इति ॥** चरमप्रहरे पित्रा निजमित्रमण्डलैः च सह प्रतिष्ठमानः त्वं नितम्बिनीनां परितापभरं शमयिष्यन् एकं सखायं व्यमुचः । चरमप्रहरे अन्त्ययामे । पित्रा नन्देन । निजमित्रमण्डलैः निजैः स्वीयैः मित्रमण्डलैः सुहृत्समूहैः । चकारः समुच्चये । प्रतिष्ठमानः मधुरां प्रति निर्गच्छन् । त्वं श्रीकृष्णः । नितम्बिनीनां गोपाङ्गनानाम् । परितापभरं सन्तापोद्रेकम् । शमयिष्यन् शमयितुमिच्छन् । एकं कञ्चन । सखायम् आप्तं मित्रम् । व्यमुचः प्रेषितवानसि ॥

भगवतः सन्देशप्रकारमाह—

अचिरादुपयामि सन्निधिं वो
भविता साधु मयैव सङ्गमश्रीः ।
अमृताम्बुनिधौ निमज्जयिष्ये
द्रुतमित्याश्वसिता वधूरकार्षीः ॥ ४ ॥

**अचिरादिति ॥** त्वम् इति वधूः आश्वसिताः अकार्षीः । त्वं श्रीकृष्णः । इति एवमुक्त्वा । वधूः गोपीः । आश्वसिताः आश्वासवतीः । अकार्षीः कृतवानसि । उक्तिप्रकारमाह—अहम् अचिरात् वः सन्निधिम् उपयामि, मया साधु सङ्गमश्रीः भविता एव, अहं द्रुतम् अमृताम्बुनिधौ निमज्जयिष्ये इति । अचिरात् अल्पेन कालेन । वः भवतीनाम् । सन्निधिं समीपम् । उपयामि उपगतो भविष्यामीत्यर्थः । वर्तमानसामीप्ये लट् । मया श्रीकृष्णेन । साधु सम्यक् । सङ्गमश्रीः सङ्गमसौख्यम् । भविता भविष्यति । अयोगव्यवच्छेदार्थ एवकारः । अचिरादिति च इति चात्रापि सम्बध्यते । द्रुतं झटिति । अमृताम्बुनिधौ सुखार्णवे । अमृतं मोक्षस्तदेवाम्बुधिस्तस्मिन्निति च गम्यते । निमज्जयिष्ये निमग्नाः करिष्यामि । अन्ते मोक्षमपि वितरिष्यामीति च गम्यते । अत्र व इति द्वितीयान्ततया सम्बध्यते ॥

अथ भगवता गमनं वर्णयति द्वाभ्याम्—

सविषादभरं सयाच्ञमुच्चै-
रतिदूरं वनिताभिरीक्ष्यमाणः ।
मृदु तद्दिशि पातयन्नपाङ्गान्
सबलोऽक्रूररथेन निर्गतोऽभूः ॥ ५ ॥

सविषादभरमिति ॥ त्वं वनिताभिः सविषादभरम् उच्चैः सयाच्ञम् अतिदूरम् ईक्ष्यमाणः तद्दिशि मृदु अपाङ्गान् पातयन् सबलः अक्रूररथेन निर्गतः अभूः । त्वं श्रीकृष्णः । वनिताभिः गोपीभिः । सविषादभरं सशोकातिशयं यथा भवति तथा । उच्चैः अत्यर्थम् । सयाच्ञं याच्ञया याचनेन त्वदागमनविलम्बेऽस्माकं प्राणा यास्यन्ति अतस्त्वरितमागन्तव्यमित्येवरूपया सह स्याद्यथा तथा । अतिदूरम् चक्षुर्विषयातिक्रमणपर्यन्तमित्यर्थः । ईक्ष्यमाणः दृश्यमानः । तद्दिशि तासां गोपीनां दिशि । मृदु सप्रेमम् । अपाङ्गान् कटाक्षान् । पातयन् प्रवर्तयन् । अयि जीववल्लभा युष्मद्विरहसोढुमक्षमोऽहमलङ्घनीयत्वान्नृपतिशासनस्याधुना गच्छामि, कृतकार्यः सत्वरं प्रत्यागमिष्यामीति सानुरागं वदन्निव ताः कटाक्षैरीक्षमाण इत्यर्थः । सबलः बलभद्रसमन्वितः । अक्रूररथेन अक्रूरानीतेन रथेन स्यन्दनेन । निर्गतः गतः ॥

अनसा बहुलेन वल्लवानां
मनसा चानुगतोऽथ वल्लभानाम् ।
वनमार्तमृगं विषण्णवृक्षं
समतीतो यमुनातटीमयासीः ॥ ६ ॥

अनसेति ॥ अथ त्वं बहुलेन वल्लवानाम् अनसा वल्लभानां मनसा च अनुगतः आर्तमृगं विषण्णवृक्षं वनं समतीतः यमुनातटीमयासीः । अथ अनन्तरम् । त्वं श्रीकृष्णः । बहुलेन प्रचुरेण । वल्लवानां गोपानाम् । अनसा शकटेन । जातावेकवचनम् । वल्लभानां गोपीनाम् । मनसा चेतसा । अत्राप्येकवचनं पूर्ववत् । चकारः समुच्चये । अनुगतः अनुयातः । आर्तं

मृगं भगवद्विरहार्ता दुःखिता मृगा यस्मिंस्तत्। विषण्णवृक्षं श्रीकृष्णगमना द्विषण्णा दुःखिता वृक्षा यस्मिंस्तत्। समतीतः अतिक्रान्तः। यमुना तटीं यमुनायास्तटीं तीरम्। अयासी. प्राप्तवानसि ॥

भगवानक्रूरस्यात्मानं यमुनायां रथेऽपि युगपददर्शयदित्याह—

नियमाय निमज्य वारिणि त्वा-
मभिवीक्ष्याथ रथेऽपि गान्दिनेयः।
विवशोऽजनि किन्विदं विभोस्ते
ननु चित्रं त्ववलोकनं समन्तात् ॥ ७ ॥

**नियमायेति** ॥ गान्दिनेयः नियमाय निमज्य विवशः अजनि। गान्दिनेयः अक्रूरः। नियमाय सन्ध्यावन्दनादि कर्तुम्। निमज्य यमुनायां मज्जनं कृत्वा। विवश. विस्मयाक्रान्तहृदय.। अजनि जातः। विस्मये हेतुमाह—त्वां वारिणि रथे अपि अभिवीक्ष्य इति। त्वां श्रीकृष्णम्। वारिणि यमुनोदके। रथे स्यन्दने। अपिशब्दो दर्शनस्य यौगपद्यं व्यनक्ति। अभिवीक्ष्य अवलोक्य। नात्र विस्मयावकाश इत्याह—ननु विभोः ते इदं समन्तादवलोकनं तु किं नु चित्रमिति। नन्वित्यामन्त्रणे। भगवन्निति शेष·। विभो परिपूर्णस्य। ते तव श्रीकृष्णस्य। इदम् अक्रूरेणानुभूतम्। समन्तात् जले रथे च। अवलोकनं दर्शनम्। किन्विति क्षेपे। चित्रम् आश्चर्यम्। विभुत्वात् भगवतो नाश्चर्यमेतदित्यर्थ· ॥

अथाक्रूरो जलाभ्यन्तरे भगवन्तमनन्तशय्यास्थितमद्राक्षीदित्याह—

पुनरेष निमज्य पुण्यशाली
पुरुषं त्वां परमं भुजङ्गभोगे।
अरिकम्बुगदाम्बुजैः स्फुरन्तं
सुरसिद्धौघपरीतमालुलोके ॥ ८ ॥

किमु शीतलिमा महान् जले यत्
पुलकोऽसाविति चोदितेन तेन ।
अतिहर्षनिरुत्तरेण सार्धं
रथवासी पवनेश पाहि मा त्वम् ॥ १० ॥

किम्विति ॥ हे पवनेश इति उदितेन अतिहर्षनिरुत्तरेण च तेन सार्धं रथवासी त्वं मा पाहि । पवनेश गुरुवायुपुरनाथ । इति अनेन प्रकारेण । उदितेन उक्तेन । त्वयेत्यर्थाल्लभ्यते । अतिहर्षनिरुत्तरेण अतिहर्षेण अधिकहर्षेण भगवत्स्वरूपदर्शनजनितानन्दबाष्पनिरुद्धकण्ठतयेति यावत् । निरुत्तरेण प्रतिवचनशून्येन । चकार समुच्चये । तेन अक्रूरेण । सार्धं सह । रथवासी रथस्थ । त्वं श्रीकृष्ण । मामनन्यशरणम् । पाहि त्रायस्व । भगवत उक्तिप्रकारमाह—जले शीतलिमा महान् किमु, यत् असौ पुलक इति । जले यमुनासलिले । शीतलिमा शैत्यम् । महान् अधिक । किम्विति जिज्ञासायाम् । यत् यस्मात् । असौ दृश्यमान । पुलक रोमाञ्च । दृश्यत इति शेष । यदय पुलकस्त्वयि दृश्यते, तज्जले किं महच्छैत्यं वर्तत इति नर्मप्रश्नोऽयमित्यवगन्तव्यम् ॥

इति भगवतो मधुराप्रस्थानवर्णनं यमुनाजले अक्रूरस्य भगवत्स्वरूप
साक्षात्कारादिवर्णनं च
त्रिसप्ततितमदशकम् ॥

## चतुस्सप्ततितमदशकम् ।

अथ भगवता मधुराप्रवेशमाह—

सम्प्राप्तो मधुरां दिनार्धविगमे तत्रान्तरस्मिन् वस
न्नारामे विहिताशनः सखिजनैर्यातः पुरीमीक्षितुम् ।

प्राप्तो राजपथं चिरश्रुतिधृतव्यालोककौतूहल-
स्त्रीपुंसोघदगण्यपुण्यनिगलैराकृष्यमाणो नु किम् ॥ १ ॥

सम्प्राप्त इति ॥ त्वं दिनार्धविगमे मधुरां सम्प्राप्तः तत्र अन्तरस्मिन् आरामे वसन् विहिताशनः पुरीमीक्षितुं सखिजनैः यातः राजपथं प्रापः । त्वं श्रीकृष्णः। दिनार्धविगमे मध्याह्ने। मधुरां मधुरापुरीम्। सम्प्राप्तः प्राप्तः। तत्र मधुरायाम्। अन्तरस्मिन् आसन्ने। आरामे उपवने। विहिताशनः विहितं कृतमशनं येन सः। पुरीं मधुरापुरीम्। ईक्षितुं द्रष्टुम्। सखिजनैः मित्रवर्गैस्सह। यातः प्रयातः। राजपथं राजमार्गम्। प्रापः प्राप्तवानसि। भगवतो राजमार्गप्रवेशकारणमुत्प्रेक्षते— चिरश्रुतिधृतव्यालोककौतूहलस्त्रीपुंसोघदगण्यपुण्यनिगलैः आकृष्यमाणः नु किमिति। चिरश्रुतिधृतव्यालोककौतूहलस्त्रीपुंसोघदगण्यपुण्यनिगलैः चिरश्रुत्या चिरकालश्रवणेन धृतं व्यालोककौतूहलं दर्शनकौतुकं येषां तेभ्यः स्त्रीपुंसेभ्यः स्त्रीभ्यः पुरुषेभ्यश्चोघन्ति फलोन्मुखानि अगण्यानि अपरिमेयानि पुण्यान्येव निगलाः शृङ्खलास्तैः। आकृष्यमाणः आ समन्तात् कृष्यमाणः सन्। नु किमिति सम्भावनायाम् ॥

अथ भगवदागमनमुपश्रुत्य मधुराङ्गनाः कुतूहलात् भगवन्तं द्रष्टुमाजग्मुरित्याह—

त्वत्पादद्युतिवत् सरागसुभगास्त्वन्मूर्तिवद्योषितः
सम्प्राप्ता विलसत्पयोधररुचो लोला भवद्दृष्टिवत् ।
हारिण्यस्त्वदुरःस्थलीवदयि ते मन्दस्मितप्रौढिव-
न्नैर्मल्योल्लसिताः कचौघरुचिवद्राजत्कलापाश्रिताः ॥ २ ॥

त्वत्पादेति ॥ अयि योषितः सम्प्राप्ताः। अयीति सम्बोधने। भगवन्निति शेषः। योषितः मधुरापुरवास्तव्याः स्त्रियः। सम्प्राप्ताः इतस्ततः प्रासादादिकमधिरुह्य भगवद्दर्शनकुतूहलात् भगवदागमनं प्रतिपाल्य तस्थुरित्यर्थः। योषितां स्वरूपमाह—त्वत्पादद्युतिवत् सरागसुभगाः त्वन्मूर्तिवत्

विलसत्पयोधररुचः भवद्दृष्टिवत् लोलाः त्वदुरःस्थलीवत् हारिण्यः ते मन्द स्मितप्रौढिवत् नैर्मल्योल्लसिताः कचौघरुचिवत् राजत्कलापाश्रिताः इति । त्वत्पाद द्युतिवत् तव श्रीकृष्णस्य पादद्युतिवत् पादारविन्दशोभेव । सरागसुभगाः भगवतो गुणश्रवणाच्चिराय भगवति सानुरागाः, अन्यत्र रक्तवर्णा । सुभगाः सौभाग्यवत्यः । त्वन्मूर्तिवत् तव श्रीकृष्णस्य मूर्तिर्विग्रह इव । विलसत्प योधररुचः विलसन्ती उल्लसन्ती पयोधररुक् कुचकलशकान्तिर्यासां ताः, अन्यत्र विलसन्ती पयोधरस्य नवजलधरस्य रुगिव रुग्यस्याः सा । भवद्दृष्टिवत् भवतः श्रीकृष्णस्य दृष्टी दृशाविव । लोलाः भगवद्दर्शनकुतूहलयुताः, अन्यत्र इतस्ततः समागतानां योषितां दर्शनार्थं चञ्चले । त्वदुरःस्थलीवत् तव श्रीकृष्णस्य उरःस्थली वक्षःस्थलीव । हारिण्यः मनोहराकाराः, अन्यत्र मुक्तादामभूषिता । ते तव । मन्दस्मितप्रौढिवत् मन्दस्मितस्य मन्दहासस्य प्रौढिः उदारता इव । नैर्मल्योल्लसिताः नैर्मल्येन स्वच्छशरीरतया शुद्धहृदय तया वा उल्लसिताः दीप्यमाना, अन्यत्र नैर्मल्येन शरच्चन्द्रचन्द्रिकाधवलत्वेन उल्लसिता । कचौघरुचिवत् कचौघस्य तव केशपाशस्य रुचिरशोभेव । राज त्कलापाश्रिताः राजद्भिर्विराजमानैः कलापैः भूषणैः आश्रिताः जुष्टा, अन्यत्र राजद्भिः कलापैः बर्हैराश्रिता । अत्र सर्वास्वप्युपमासु श्लेषकृतः साधारणो धर्मः । अत्रोपमाभिर्भगवद्गुणश्रवणात् भगवति जातानुरागाश्चिराय भगवन्तमेव ध्यायन्त्यो मधुराङ्गना भगवत्सारूप्यं गता इवासन्निति ध्वन्यते ॥

अथ मधुरामाविशतो भगवतो दुष्टनिग्रहं शिष्टानुग्रहं च वर्णयितुमुपक्रममाण प्रथमं दुष्टस्य कस्यचिद्रजकस्य वधमाह—

तास्तामाकलयन्नपाङ्गवलनैर्मोदं प्रहर्षाद्भुत-
व्यालोलेषु जनेषु तत्र रजकं कञ्चित् पटीं प्रार्थयन् ।
कस्ते दास्यति राजकीयवसनं याहीति तेनोदितः
सद्यस्तस्य करेण शीर्षमहृथाः सोऽप्याप पुण्यां गतिम् ॥ ३ ॥

लसत्पयोधररुचः भवद्दृष्टिवत् लोलाः त्वदुरःस्थलीवत् हारिण्यः ते मन्द
तप्रौढिवत् नैर्मल्योल्लसिताः कचौघरुचिवत् राजत्कलापाश्रिता. इति । त्वत्पाद
तिवत् तव श्रीकृष्णस्य पादद्युतिवत् पादारविन्दशोभेव । सरागसुभगाः
ावतो गुणश्रवणाच्चिराय भगवति सानुरागाः, अन्यत्र रक्तवर्णा । सुभगाः
भाग्यवत्यः । त्वन्मूर्तिवत् तव श्रीकृष्णस्य मूर्तिविग्रह इव । विलसत्प
धररुचः विलसन्ती उल्लसन्ती पयोधररुक् कुचकलशकान्तिर्यासां ताः, अन्यत्र
िलसन्ती पयोधरस्य नवजलधरस्य रुगिव रुग्यस्याः सा । भवद्दृष्टिवत्
वतः श्रीकृष्णस्य दृष्टी दृशाविव । लोलाः भगवद्दर्शनकुतूहलयुताः, अन्यत्र
तस्ततः समागतानां योषितां दर्शनार्थं चञ्चले । त्वदुरःस्थलीवत् तव
ीकृष्णस्य उरःस्थली वक्षःस्थलीव । हारिण्यः मनोहराकाराः, अन्यत्र
ुक्तादामभूषिता । ते तव । मन्दस्मितप्रौढिवत् मन्दस्मितस्य मन्दहासस्य
ौढिः उदारता इव । नैर्मल्योल्लसिताः नैर्मल्येन स्वच्छशरीरतया शुद्धहृदय
तया वा उल्लसिताः दीप्यमानाः, अन्यत्र नैर्मल्येन शरच्चन्द्रचन्द्रिकावद्धावल्येन
उल्लसिता । कचौघरुचिवत् कचौघस्य तव केशपाशस्य रुचिरिव शोभेव । राज
त्कलापाश्रिताः राजद्भिर्विराजमानैः कलापैः भूषणैः आश्रिताः जुष्टाः, अन्यत्र
राजद्भिः कलापैः बर्हैराश्रिता । अत्र सर्वास्वप्युपमासु श्लेषकृतः साधारणो
धर्मः । अत्रोपमाभिर्भगवद्गुणश्रवणात् भगवति जातानुरागाश्चिराय भगवन्तमेव
ध्यायन्त्यो मधुराङ्गना भगवत्सारूप्यं गता इवासन्निति ध्वन्यते ॥

अथ मधुरामाविशतो भगवतो दुष्टनिग्रहं शिष्टानुग्रहं च वर्णयितुमुपक्रममाणः प्रथमं दृप्तस्य कस्यचिद्रजकस्य वधमाह—

तामामाकलयन्नपाङ्गनलनैर्मोदं प्रहर्षाद्भुत-
व्यालोलेषु जनेषु तत्र रजकं कञ्चित् पटीं प्रार्थयन् ।
कस्ते दास्यति राजकीयवसनं याहीति तेनोदितः
मयस्तस्य करेण शीर्षमहृथाः सोऽप्याप पुण्यां गतिम् ॥ ३ ॥

जनितेन प्रहर्षेण । वेषोचितं विचित्रवर्णदुकूलादिकमित्यर्थः । दाश्वांसं दत्तवन्तम् । वेषोचितप्रदाने हेतुः—आयतमतिमिति । आयता विपुला मतिः मानसं यस्य तम् । अथ कविस्तपोभिरप्यनवाप्यस्य मोक्षस्य तथाविधस्य लाभेन विस्मित आह—कः जीवात्मनां सुकृतं वेद इति । जीवात्मनां जीवानाम् । सुकृतं पुण्यम् । को वेद । न कोपि जानातीत्यर्थः । केवलं फलानुमेयमेतदिति भावः । हे लक्ष्मीपते त्वं पुनः मालाकृता मालाभिः स्तबकैः स्तवैः अपि मानितः तेन वृतां भक्तिं परां लक्ष्मीं च दिदेशिथ । त्वं श्रीकृष्णः । पुनः अनन्तरम् । मालाकृता मालाकारेण । मालाभिः स्रग्भिः । स्तबकैः कुसुमगुच्छकैः । स्तवैः स्तुतिभिः । मानितः पूजितः । तेन मालाकारेण । वृतां प्रार्थिताम् । भक्तिं प्रेमलक्षणाम् । परामधिकतराम् । लक्ष्मीं श्रियम् । दिदेशिथ दत्तवानसि । सम्बोधनं लक्ष्मीप्रदानाभिप्रायमिति वेदितव्यम् ॥

कुब्जामब्जविलोचनां पथि पुनर्दृष्ट्वाऽङ्गरागे तया
दत्ते साधु किलाङ्गरागमददास्तस्या महान्तं हृदि ।
चित्तस्थामृजुतामथ प्रथयितुं गात्रेऽपि तस्याः स्फुटं
गृह्णन् मञ्जु करेण तामुदनयस्तावज्जगत्सुन्दरीम् ॥ ५ ॥

कुब्जामिति ॥ अङ्ग त्वं पुनः पथि अब्जविलोचना कुब्जां दृष्ट्वा तस्या हृदि महान्तं रागं अददा किल । अङ्गेति सम्बोधने । त्वं श्रीकृष्णः । पथि मार्गे । अब्जविलोचनां कमलायतनयनाम् । एतच्चान्तराधिव्यतिरिक्तसर्वावयवसौन्दर्यस्याप्युपलक्षणम् । कुब्जा त्रिवक्रतया विरूपां काञ्चन सैरन्ध्रीम् । दृष्ट्वा विलोक्य । तस्याः सैरन्ध्र्याः । हृदि चेतसि । महान्तम् अपरिमेयम् । रागं भगवत्यनुरागम् । अददाः दत्तवानसि । भगवदनुग्रहात् तस्या मनसि श्रीकृष्णे महाननुरागः समभूदित्यर्थः । रागस्य मोक्षोपायरूपतया चानुग्रहत्वमिति द्रष्टव्यम् । उक्तञ्चैतत्—'रागस्तावज्जायते हि स्वभावान्मोक्षोपायो यत्नतः स्यान्नवा स्यात् । तासां त्वेकं तद्द्वयं लब्धमासीत्'

इति। किलेति वार्तायाम्। अत्र हेतुमाह—तया साधु अङ्गरागे दत्ते इति। तया सैरन्ध्रया। साधु सादरम्। अङ्गरागे अङ्गानुलेपने। दत्ते अर्पिते सति। अङ्गरागे दत्तेऽङ्गरागमेवाददा इति च प्रतीयते। किञ्चेत्याह— अथ तां करेण गृह्णन् मञ्जु उदनय इति। अथ अनन्तरम्। तां कुब्जाम्। करेण पाणिना। गृह्णन् आदायेत्यर्थः। मञ्जु देहपीडा यथा न स्यात् तथा। उदनय उन्नीतवानसि। अस्य फलमाह—तावत् जगत्सुन्दरीमिति। तावत् तदा। जगत्सुन्दरीं त्रिलोकसुन्दरीम्। कृतवानिति शेषः। उन्नयन मुत्प्रेक्ष्याह—तस्याः चित्तस्थाम् ऋजुतां गात्रे अपि प्रथयितुं स्फुटमिति। तस्याः कुब्जायाः। चित्तस्थां मनोगततया अपरोक्षां ऋजुतां निष्कल्मषताम्। अवक्रतामिति च प्रतीयते। गात्रे देहे। अपिस्समुच्चये। प्रथयितुं प्रकटयितुम्। स्फुटमिति सम्भावनायाम्॥

अथेदृशमलौकिकं भगवच्चेष्टितमाकलयतां जनानां प्रवृत्तिमाह—

तावन्निश्चितवैभवास्तव विभो नात्यन्तपापा जना
यत्किञ्चिद्ददते स्म शक्त्यनुगुणं ताम्बूलमाल्यादिकम्।
गृह्णानः कुसुमादि किञ्चन तदा मार्गे निबद्धाञ्जलि
र्नातिष्ठं बत हा यतोऽद्य विपुलामार्तिं व्रजामि प्रभो॥ ६॥

तावदिति॥ हे विभो तावत् नात्यन्तपापा जना शक्त्यनुगुणं यत्किञ्चित ददते स्म। विभो शक्तिसम्पन्न। तावत् तदानीम् नात्यन्तपापाः न अत्यन्तम् अतिमात्रं पापं येषां ते। शक्त्यनुगुणं यथाशक्ति। तुभ्य मित्यर्थाल्लभ्यते। यत्किञ्चित् यत्किमपि वस्तु। ददते स्म अर्पितवन्तः। तान्येव वस्तून्याह—ताम्बूलमाल्यादिकमिति। अत्र हेतुमाह—तव निश्चित वैभवा इति। तव श्रीकृष्णस्य। निश्चितवैभवा निश्चितं निर्णीतो वैभवा भक्तानुग्रहसामर्थ्यम् अलौकिकप्रभावो वा यैस्ते। कुब्जाया समीकरण दर्शनादिति भावः। अथ भगवत्प्रीत्युपायस्याल्पीयस्त्व स्वस्य तदलाभात् पीडानुभवञ्च विचिन्त्य कविस्सविषादमाह— हे प्रभो अहं तदा कुसुमादि

किञ्चन गृह्णानः निबद्धाञ्जलिः मार्गे न अतिष्ठं बत हा इति । प्रभो शक्ति सम्पन्न । अहं मन्दभाग्य. । तदा भगवदागमनवेलायाम् । कुसुमादि पुष्प माल्यादिकं किञ्चन वस्तु । गृह्णानः वहन् । निबद्धाञ्जलिः कृताञ्जलिपुटः । मार्गे भगवदागमनमार्गे । न अतिष्ठं न स्थितवानस्मि । बत हेति खेदा तिशये । ननु किं तेनेत्यत आह—यतः अद्य विपुलामार्तिं व्रजामि इति । यतः यस्मात् कारणात् । तथाऽनवस्थानादित्यर्थः । अद्य अधुना । विपुलाम् असह्याम् । आर्तिं पीडाम् । व्रजामि अनुभवामि । यद्यहं तदा तथा स्थितोऽभवम् , तर्ह्यधुना नैवमार्तस्स्यामिति भाव. ॥

अथ भगवतो मधुरापुरगोपुरप्राप्तिमाह—

**एष्यामीति विमुक्तयाऽपि भगवन्नालेपदात्र्या तया**
**दूरात् कातरया निरीक्षितगतिस्त्वं प्राविशो गोपुरम् ।**
**आघोषानुमितत्वदागममहाहर्षोल्ललद्देवकी-**
**वक्षोजप्रगलत्पयोरसमिषात्त्वत्कीर्तिरन्तर्गता ॥ ७ ॥**

**एष्यामीति ॥** हे भगवन् त्वम् इति विमुक्तया अपि तया आलेप दात्र्या निरीक्षितगति· गोपुरं प्राविश । भगवन् ऐश्वर्यादिसम्पन्न । त्वं श्रीकृष्ण· । इति एवमुक्त्वा । विमुक्तया विसृष्टया । अपिर्विरोधे । भगव दुक्तेरन्यथात्वासम्भवाद्विरोध । तया पूर्वोक्तया । आलेपदात्र्या सैरन्ध्र्या । दूरात् दूरे । निरीक्षितगति निरीक्षिता विलोकिता गतिर्गमनं यस्य स· । प्राविशः आविष्टोऽसि । इतिशब्दार्थमुक्तिप्रकारमाह— अहम् एष्यामि इति । अहं कृतकार्यस्सन्नागमिष्यामि त्वत्समीपमित्यर्थ । अपिशब्दार्थं विरोधं परिहरन्नाह—कातरया इति । वियोगभीरुतया भगवद्वचनस्यान्यथात्वशङ्कयेत्यर्थ. । भगवदागमनं जानन्त्या देवकीदेव्या. प्रहर्षं दर्शयन्नाह—आघोषानुमितत्वदा गममहाहर्षोल्ललद्देवकीवक्षोजप्रगलत्पयोरसमिषात् त्वत्कीर्तिः अन्तर्गता इति । आघोषानुमितत्वदागममहाहर्षोल्ललद्देवकीवक्षोजप्रगलत्पयोरसमिषात् आघोषेण पौराणां कोलाहलेन अनुमितो यस्त्वदागम· श्रीकृष्णागमनं तेन·यो महान् हर्ष.

देवा भगवतश्चापभञ्जनध्वनिं श्रुत्वा तुतुषुरित्याह—

श्वः कंसक्षपणोत्सवस्य पुरतः प्रारम्भतूर्योपम-
श्चापध्वंसमहाध्वनिस्तव विभो देवानरोमाञ्चयत् ।
कंसस्यापि च वेपथुस्तदुदितः कोदण्डखण्डद्वयी-
चण्डाभ्याहतरक्षिपूरुषरवैरुत्कूलितोऽभूत्त्वया ॥ ९ ॥

श्व इति ॥ हे विभो तव चापध्वंसमहाध्वनिः देवान् अरोमाञ्चयत् । विभो शक्तिसम्पन्न । तव श्रीकृष्णस्य । चापध्वंसमहाध्वनिः चापध्वंसः चाप भञ्जनं तज्जनितो महाध्वनिः महान् शब्दः । देवान् अमरान् । अरोमाञ्चयत् प्रहर्षेण पुलकितशरीरानकरोत् । देवानां प्रहर्षहेतुं दर्शयन्नाह—श्वः कंसक्षपणोत्सवस्य पुरतः प्रारम्भतूर्योपमः इति । श्वः श्वो भाविनः । कंसक्षपणोत्सवस्य कंसक्षपणं कंसवधस्तद्रूपस्योत्सवस्य । पुरतः पूर्वम् । मङ्गलार्थं कर्तव्यमित्यर्थः । प्रारम्भतूर्योपमः प्रारम्भे आरम्भसमये क्रियमाणं यत्तूर्यं तत्सदृशः । श्वो भविता कंसवध इति निश्चित्य देवाः प्रमोदेन पुलकितशरीरा बभूवुरित्यर्थः । चापध्वंसध्वनिं श्रुत्वा कंसस्त्रस्तश्चाभवदित्याह—अपि च तदुदितः कंसस्य वेपथुः त्वया कोदण्डखण्डद्वयीचण्डाभ्याहतरक्षिपूरुषरवैः उत्कूलित अभूदिति । अपि च किञ्च । तदुदितः तेन चापध्वंसमहाध्वनिश्रवणेन उदितः जातः । वेपथुः सर्वाङ्गकम्पः । त्वया श्रीकृष्णेन । कोदण्डखण्डद्वयीचण्डाभ्याहतरक्षिपूरुषरवैः कोदण्डखण्डयोश्चापखण्डयोर्द्वय्या युग्मेन चण्डम् अतिगाढं यथा स्यात्तथा अभ्याहतानां ताडितानां रक्षिपूरुषाणां रक्षिणां पुरुषाणां रवैः हा धिक् हा हा हताः स्म इत्यादिरूपैः शब्दैः । उत्कूलितः अतिमात्रं वर्धितः ॥

अथ तद्दिनवृत्तान्तमुपसंहरन् प्रार्थयते—

शिष्टैर्दुष्टजनैश्च दृष्टमहिमा प्रीत्या च भीत्या ततः
सम्पश्यन् पुरसम्पदं प्रविचरन् सायं गतो वाटिकाम् ।
श्रीदाम्ना सह राधिकाविरहजं खेदं वदन् प्रस्वप-
न्नानन्दन्नवतारकार्यघटनाद्वातेश संरक्ष माम् ॥ १० ॥

शिष्टैरिति ॥ हे वातेश ततः शिष्टैः दुष्टजनैः च प्रीत्या भीत्या च दृष्टमहिमा पुरसम्पदं सम्पश्यन् प्रविचरन् सायं वाटिकां गतः श्रीदाम्ना सह राधिकाविरहजं खेदं वदन् अवतारकार्यघटनात् आनन्दन् प्रस्वपन् त्वं मां संरक्ष। वातेश गुरुवायुपुरनाथ। ततः चापभञ्जनानन्तरम्। शिष्टैः सद्भिः। दुष्टजनैः दुष्टैः। प्रीत्या सन्तोषेण। भीत्या भयेन। यथासंख्यमन्वयः। चकारौ समुच्चये। दृष्टमहिमा दृष्टो महिमा माहात्म्यं यस्य सः। पुरसम्पदं पुरस्य नगरस्य सम्पदं समृद्धिम्। सम्पश्यन् सम्यग्विलोकयन् प्रविचरन् सञ्चरन्। सायं सन्ध्यायाम्। वाटिकां शकटस्थानम्। गतः प्राप्तः। श्रीदाम्ना तन्नाम्ना सुहृदा। सह समम्। राधिकाविरहजं राधावियोगजनितम्। खेदं सन्तापम्। वदन् भाषमाणः। अवतारकार्यघटनात् अवतार कार्यस्य भूभारापहरणरूपस्य घटनात् संयोजनात्। अयं भावः— कंसे हते तन्मित्रं मागधो योद्धुमागमिष्यति, तदा तन्मित्रं यवनः सैनिकाश्च बहवः, तेषु हतेषु तत्सुहृदश्शिशुपालादयश्चागमिष्यन्ति, तथाच तेषां क्षपणं सुकरमिति। आनन्दन् प्रमुदितमनाः। त्वं श्रीकृष्णः। मामनन्यशरणम्। संरक्ष त्रायस्व ॥

इति भगवतो मथुरापुरीप्रवेश-रजकनिग्रह-वायक-
मालाकारकुब्जानुग्रह-धनुर्भङ्गादिवर्णनं

चतुस्सप्ततितमदशकम् ॥

## पञ्चसप्ततितमदशकम् ।

अथ भगवतो मल्लयुद्धं वर्णयितुमुपक्रमते—

प्रातस्सन्त्रस्तभोजक्षितिपतिवचसा प्रस्तुते मल्लतूर्ये
सङ्घे राज्ञां च मञ्चानभिययुषि गते नन्दगोपेऽपि हर्म्यम् ।
कंसे सौधाधिरूढे त्वमपि सहबलः सानुगश्चारुवेषो
रङ्गद्वारं गतोऽभूः कुपितकुवलयापीडनागावलीढम् ॥ १ ॥

**प्रातरिति** ॥ प्रातः सन्त्रस्तभोजक्षितिपतिवचसा मल्लतूर्ये प्रस्तुते राज्ञां सङ्घे च मञ्चान् अभिययुषि तदा नन्दगोपे अपि हर्म्यं कंसे सौधाधिरूढे त्वमपि सहबलः सानुगः चारुवेषः कुपितकुवलयापीडनागावलीढं रङ्गद्वारं गतः अभूः । प्रातः परेद्युः । सन्त्रस्तभोजक्षितिपतिवचसा सन्त्रस्तस्य भगवतो देवक्या अष्टमगर्भतया अलौकिकप्रभावदर्शनाच्च मां हनिष्यत्ययमिति भीतस्य भोजक्षितिपतेः कंसस्य वचसा आज्ञया । मल्लतूर्ये मल्लक्रीडानुसारिवाद्यघोषे । प्रस्तुते आरब्धे सति । राज्ञां नृपाणाम् । सङ्घे समूहे । चकारः समुच्चये । मञ्चान् राज्ञां मल्लक्रीडादर्शनार्थं निर्मितान् स्थानविशेषान् । अभिययुषि आरूढे । तदा तस्मिन्नवसरे । अपिस्समुच्चये । हर्म्यं प्रासादम् । अभिययुषीत्यत्रापि सम्बध्यते । सौधाधिरूढे सौधं प्रासादमधिरूढे आरूढे च सति । त्वं श्रीकृष्णः । अपिस्समुच्चये । सहबलः बलभद्रसहितः । सानुगः अनुचरैर्गोपैरन्वितः । चारुवेषः मनोहरनेपथ्यान्वितः । कुपितकुवलयापीडनागावलीढं कुपितेन अम्बष्ठस्य प्रेरणया क्रुद्धेन कुवलयापीडाख्येन नागेन गजेन अवलीढं निवारितप्रवेशम् । रङ्गद्वारं मल्लरङ्गप्रवेशनमार्गम् । गतः प्राप्तः ॥

अथ कुवलयापीडवधमाह द्वाभ्याम्—

पापिष्ठापेहि मार्गाद्द्रुतमिति वचसा निष्ठुरक्रुद्धबुद्धे-
रम्बष्ठस्य प्रणोदादधिकजवजुषा हस्तिना गृह्यमाणः ।

केलीमुक्तोऽथ गोपीकुचकलशचिरस्पर्धिनं कुम्भमस्य
व्याहत्यालीयथास्त्वं चरणभुवि पुनर्निर्गतो वल्गुहासी ॥ २ ॥

पापिष्ठेति ॥ त्वम् अम्बष्ठस्य प्रसादात् हस्तिना गृह्यमाणः केली मुक्तः अथ अस्य कुम्भं व्याहत्य चरणभुवि अलीयथाः । त्वं श्रीकृष्ण । अम्बष्ठस्य महामात्रस्य । प्रसादात् प्रेरणया । हस्तिना कुवलयापीडाख्येन । गृह्यमाणः गृहीतः । केलीमुक्तः केल्या लील्या । अनायासेनेत्यर्थः । मुक्तः स्वयं करात् गलितः । अथ अनन्तरम् । अस्य हस्तिनः । कुम्भं मस्तकम् । व्याहत्य अभिहत्य । चरणभुवि पादद्वयमध्ये । अलीयथाः लीनोऽभूः । अम्बष्ठस्य प्रसादे हेतुमाह—इति वचसा निष्ठुरक्रुद्धबुद्धेः इति । इति एवं रूपेण । वचसा वचनेन । निष्ठुरक्रुद्धबुद्धेः निष्ठुरा स्वभावेन क्रूरा क्रुद्धा च बुद्धिर्यस्य । वचनप्रकारमाह—हे पापिष्ठ त्वं मार्गात् द्रुतम् अपहि इति । पापिष्ठ पापिषु प्रकृष्टतम । मार्गात् वर्त्मनः । द्रुतं झटिति । अपहि गच्छ । ननु कथं हस्ती भगवन्तं गृहीतुं समर्थोऽभूदित्यत आह—अधिकजवजुषा इति । अधिकजवेनेत्यर्थः । युक्तरूपं भगवत करिकुम्भताडनमित्याह—गोपीकुचकलश चिरस्पर्धिनमिति । गोपीनां भगवद्वल्लभानां कुचकलशैस्सह चिराय स्पर्धमानम् । अनेन स्वप्रियजनस्पर्धिनां दण्डनं युक्तमेवेत्यनुसन्धायैवेत्युत्प्रेक्षा गम्यते । पुनः वल्गुहासी निर्गतः । पुनः अनन्तरम् । वल्गुहासी मनोहरस्मितार्द्र वदनः सन् । स्मितं चानुगादीनामाश्वासनायेति वेदितव्यम् । निर्गतः चरण मध्यात् बहिर्गतः ॥

हस्तप्राप्योऽप्यगम्यो झटिति मुनिजनस्येव धावन् गजेन्द्रं
क्रीडन्नापत्य भूमौ पुनरभिपततस्तस्य दन्तं सजीवम् ।
मूलादुन्मूल्य तन्मूलगमहितमहामौक्तिकान्यात्ममित्रे
प्रादास्त्वं हारमेभिर्ललितविरचितं राधिकायै दिशेति ॥ ३ ॥

हस्तप्राप्य इति ॥ त्वं गजेन्द्रं मुनिजनस्य इव हस्तप्राप्यः अपि अगम्यः झटिति धावन् क्रीडन् भूमौ आपत्य पुनः अभिपततः तस्य दन्तं

सजीव मूलात् उन्मूल्य तन्मूलगमहितमहामौक्तिकानि इति आत्ममित्रे प्रादा । स्व श्रीकृष्ण । गजेन्द्र कुवलयापीडम् । अभ्येत्येति शेष । मुनिजनस्य ऋषिजनस्य । तस्य हस्तप्राप्य हस्तेन प्राप्य प्राप्तु शक्य । पदे पदे स्पृश्यमानोऽपीत्यर्थ । अगम्य गृहीतुमशक्यो यथा तथा । झटिति शीघ्रम् । धावन् पलायमान । क्रीडन् लीलयेत्यर्थ । भूमौ भुवि । आपत्य निपत्य । पुन अनन्तरम् । अभिपतत भगवन्त भूमौ पतित मत्वा दन्ताभ्या भूमौ प्रहरत इत्यर्थ । तस्य गजेन्द्रस्य । दन्त दन्तद्वयम् । मूलात् मूलत । उन्मूल्य उत्पाट्य । तन्मूलगमहितमहामौक्तिकानि तन्मूलगानि तस्य दन्त द्वयस्य मूलगानि मूले वर्तमानानि महितानि महार्हाणि महान्ति आमलकवत् स्थूलानि मौक्तिकानि मुक्ताफलानि । इति इत्युक्त्वा । आत्ममित्रे आत्मनो मित्रे सुहृदि । प्रादा अर्पितवानसि । उक्तिप्रकारमाह—एभि ललितविर चित हार राधिकायै दिश इति । एभि मौक्तिके । ललितविरचित ललित मनोहर यथा स्यात्तथा विरचित निर्मितम् । हार मुक्तादाम । राधिकायै मत्प्रेयस्यै । दिश प्रयच्छ ॥

अथ कुवलयापीट निहत्यागच्छन्त भगवन्त विलोक्य जना शश सुरित्याह—

गृह्णान दन्तमसे युतमथ हलिना रङ्गमङ्गाविशन्त
　त्वा मङ्गल्याङ्गभङ्गीरभसहृतमनोलोचना वीक्ष्य लोका ।
ह हो धन्यो हि नन्दो नहि नहि पशुपालाङ्गना नो यशोदा
　नो नो धन्येक्षणाः स्मस्त्रिजगति वयमेवेति सर्वे शशसु ॥ ४ ॥

गृह्णानमिति ॥ अङ्ग सर्वे लोका अथ त्वा वीक्ष्य इति शशसु । अङ्गेति सम्बोधने । श्रीकृष्णेत्यर्थाल्लभ्यते । सर्वे सकला । लोका जना । अथ अनन्तरम् । त्वा श्रीकृष्णम् । वीक्ष्य दृष्ट्वा । इति अनेन प्रकारेण । शशसु तुष्टुवु । अत्र हेतु —मङ्गल्याङ्गभङ्गीरभसहृतमनोलोचना इति । मङ्गल्यया शुभया अङ्गभङ्ग्या देहकान्त्या रभसेन बलात् हृतान्याकृष्टानि मनांसि लोचनानि नेत्राणि येषा ते तथाविधा सन्त । तदानीन्तन

भगवत स्वरूपमाह—अमे दन्त गृह्णान हरिणा युत रङ्गम् आविशन्तमिति। असे स्कन्धे। दन्त हतस्य कुवलयापीडस्य दन्तम्। गृह्णान दधानम्। हरिणा अपर दन्त स्कन्धे वहता बलभद्रेण। युतम् अन्वितम्। रङ्ग मञ्च रङ्गम्। आविशन्त प्रविशन्तम्। स्तुतिप्रकारमाह—ह हा नन्द धन्य। हि, नहि नहि, पशुपालाङ्गना नो, यशोदा नो ना, त्रिजगति वयमेव धन्येक्षणा स्म इति। ह हा हे हे जना। नन्द यस्यैवविध पुत्रोऽजायत। धन्य सुकृती। हीति निश्चये। नहि नहीति केषाञ्चिन्निषेधवचनम्। किन्तु पशुपालाङ्गना या एन मेघ स्तनाभ्या गाढमालिङ्गन् ता गाव्य। धन्या इति विपरिणम्य सम्बध्यते। नो इत्यन्येषा निषेधवचनम्। किन्तु यशोदा यस्या पुत्रतामयमगच्छत्। नो ना इति परेषा निषेधवचनम्। त्रिजगति जगत्त्रये। एवकारेणान्येषा व्यवच्छेद। धन्येक्षणा धन्यानीक्षणानि नेत्राणि येषा ते, यैरेतादृशोऽयं दृष्ट ॥

ननु कथमेव भगवति सर्वेषा स्नेहबहुमानादय समभूवन्नित्याह—

पूर्णं ब्रह्मैव साक्षान्निरवधि परमानन्दसान्द्रप्रकाश
गोपेषु त्व व्यलासीर्न खलु बहुजनैस्तावदावेदितोऽभू.।
दृष्ट्वाऽथ त्वा तदद्यप्रथममुपगते पुण्यकाले जनौघाः
पूर्णानन्दा विपापा. सरसमभिजगुस्त्वत्कृतानि स्मृतानि ॥ ५ ॥

पूर्णमिति॥ त्व पूर्णं ब्रह्म एव। त्व श्रीकृष्ण। पूर्णं सर्वानुस्यूतम्। तथाच भगवन सर्वेषामात्मतया आत्मनि सर्वेषा स्नेहातिशयाच्च जनौघाना भगवत्येवविध स्नेहो युज्यते, ब्रह्मात्मकत्वात् बहुमानादयश्चोपपद्यन्त इति भाव। मायाया मेदे प्रतिबिम्बितो ब्रह्मात्मा भगवानेव जीवात्मेति 'मद्देस्ता प्रतिबिम्बितो विविशिवान्' इत्यादिनोक्तम्। ननु कथ ब्रह्मणश्चाक्षुपत्वमत आह—गोपेषु साक्षात् व्यलासी इति। साक्षात् प्रत्यक्षतया। व्यलासी विलेसिथ। श्रीकृष्णात्मना गोपेषु चक्षुर्विषयता गत इत्यर्थ। ननु भगवत शरीरपरिग्रहे ससारित्वप्रसङ्ग इत्यत आह—निरवधिपरमानन्दसान्द्रप्रकाश

मिति। निरवधि नित्यम्। परमानन्दसान्द्रप्रकाशं परमानन्दसान्द्रः परमानन्दैकघनः प्रकाशश्चिद्यस्य तत्। चिदानन्दैकघनमित्यर्थः। नित्यत्वाज्जननमरणासम्भवः, आनन्दमयत्वाद्दुःखानवाप्तिः, चिद्घनत्वादज्ञानापरिभवश्चेति, न संसारधर्मसम्बन्ध इति भावः। कुतस्तर्हि कंसादयो भगवन्तं ब्रह्मात्मना नाध्यगच्छन्नित्याशङ्कायामाह—तावत्, बहुजनैः न आवेदितः अभूः खलु इति। तावत् तदानीम्। बहुजनैः बहुभिर्जनैः। आवेदितः ब्रह्मात्मनाऽधिगतः। खल्विति प्रसिद्धौ। किन्तु यैः कैश्चिज्जन्मजन्मान्तरार्जितपुण्यपरिपाकवद्भिरेव ब्रह्मात्मनाऽधिगतोऽभूरिति भावः। ननु कथं पापीयसां भगवद्दर्शनसम्भव इत्याशङ्क्याह—तदा *जनौघाः पुण्यकाले उपगते त्वाम् इदंप्रथमं दृष्ट्वा* अथ विपापाः पूर्णानन्दाः स्मृतानि त्वत्कृतानि सरसम् अभिजगुः इति। तदा तस्मिन्नवसरे। जनौघाः जनसङ्घाः। पुण्यकाले प्रकृष्टस्य पुण्यस्य फलोन्मुखतादशायाम्। उपगते प्राप्ते सति। *त्वां श्रीकृष्णाकारं ब्रह्म।* इदं प्रथमम् इदमेव प्रथमं पूर्वं यस्मिन् कर्मणि तद्यथा भवति तथा। दृष्ट्वा चक्षुषा साक्षात्कृत्य। अथ अनन्तरम्। भगवद्दर्शनाद्विपापाः विगतपाप्मानः। अत एव पूर्णानन्दाः पूर्णः परिपूर्णः आनन्दो येषां तथाविधाः सन्तः। स्मृतानि स्मृतिविषयीभूतानि। त्वत्कृतानि *त्वया व्रजस्थेनालस्थेन* च कृतानि पूतनामोक्षादीनि रजकवधादीनि च सरसं सानन्दम्। अभिजगुः प्रशशंसुः। अयमत्राशयः—पुण्यपापयोः पुण्यस्य प्रकर्षे सति प्रथमं तस्य फलोन्मुखत्वम्, तेन भगवद्दर्शनाधिकारः, तेन भगवद्दर्शनम्, तेन पापनाशे सति भगवद्गुणानुकीर्तनम्, तेनाज्ञाननाशो ज्ञानोदय आनन्दावाप्तिश्च सम्भवतीति॥

अथ भगवतो रामकृष्णयोर्मल्लयुद्धमाह—

चाणूरो मल्लवीरस्तदनु नृपगिरा मुष्टिको मुष्टिशाली
त्वां रामं चाभिपेदे झटझटिति मिथो मुष्टिपातातिरूक्षम्।
उत्पातापातनाकर्षणविविधरणान्यासतां तत्र चित्रं
मृत्योः प्रागेव मल्लप्रभुरगमदयं भूरिशो बन्धमोक्षान्॥ ६॥

चाणूर इति ॥ तदनु मल्लवीरः चाणूरः मुष्टिशाली मुष्टिकः नृप गिरा त्वां रामं च झटझट् इति मिथः मुष्टिपातातिरूक्षम् अभिपेदे। तदनु मल्लरङ्गप्राप्ते भगवति श्रीकृष्णे। मल्लवीरः मल्लेष्वायुधं विना मुष्टियुद्धकुशलेषु वीरः अतिनिपुणः। अथवा मल्लश्चासौ वीरश्चेति कर्मधारयः। चाणूरः तन्नामा। मुष्टिशाली मुष्टियुद्धकुशलः। मुष्टिकः तन्नामधेयः। चकारोऽत्रापि सम्बध्यते। नृपगिरा नृपस्य कंसस्य गिरा नियोगेन। त्वां श्रीकृष्णम्। रामं बलभद्रम्। चकारः समुच्चये। झटझट् इति शब्दानुकरणम्। मिथः परस्परम्। मुष्टिपातातिरूक्षं मुष्टिपातैर्मुष्टिप्रहारैः अतिरूक्षम् अतिक्रूरं यथा भवति तथा। अभिपेदे आपेदे। चाणूरः श्रीकृष्णं, मुष्टिको रामञ्चेति यथासंख्यमन्वयः। उत्पातापातनाकर्षणविविधरणानि आसताम्। उत्पातः उत्पतनम् आपातः पातनम् आकर्षणं परस्परं करं गृहीत्वा कर्षणम् एवं विधानि विविधानि नानाविधानि रणानि युद्धानि। आसताम् नात्र कश्चिद्विस्मय इति भावः। तत्र अयं मल्लप्रभुः मृत्योः प्राक् एव भूरिशः बन्धमोक्षान् अगमत् चित्रम्। तत्र रणे। अयं मल्लप्रभुः चाणूरः। मृत्योः मरणात्। प्रागेव पूर्वमेव। भूरिशः बहून्। बन्धमोक्षान् अपवर्गान्। अगमत् प्राप। इति यत् चित्रमाश्चर्यम्। मृतस्यैव हि बन्धमोक्षस्सम्भवति, स चैक एव, मुक्तानां पुनरावृत्त्यसम्भवात्, इह तु मरणात् प्रागेव बन्धमोक्ष, ॥ केवलमेकं बन्धमोक्षं प्राप, किन्तु भूरिश इति महदिदमाश्चर्यमिति विरोधः। परिहारस्तु बन्धात् परस्परं कराभ्यां बन्धनानि मोक्षान् बन्धान्मोचनानि चागमदिति ॥

अथ मल्लवधमाह—

हा धिक्कष्टं कुमारौ सुललितवपुषौ मल्लवीरौ कठोरौ
न द्रक्ष्यामो व्रजामस्त्वरितमिति जने भाषमाणे तदानीम्।
चाणूरं तं करोद्भ्रामणविगलदसुं पोथयामासिथोर्व्यां
पिष्टोऽभून्मुष्टिकोऽपि द्रुतमथ हलिना नष्टशिष्टैर्दधावे ॥ ७ ॥

**हा धिगिति ॥** तदानीं त्वं करोद्भ्रामणविगलदसुं तं चाणूरम् उर्व्यां पोथयामासिथ। तदानीं तस्मिन्नवसरे। त्वं श्रीकृष्णः। करोद्भ्रामण विगलदसुं करेण यदुद्भ्रामणं तेन विगलदसुं मृतम्। उर्व्यां भूपृष्ठे। पोथयामासिथ क्षिप्तवानसि। ननु किमित्येवं झटिति तं जघान भगवानिति चेत्तत्राह —इति जने भाषमाणे इति। इति एवम्। जने द्रष्टृजने। भाषमाणे कथयति सति। भाषणप्रकारमाह—न द्रक्ष्यामः त्वरितं व्रजामः इति। न द्रक्ष्यामः, अत्यन्तमनुचितत्वात्। अतस्त्वरितं व्रजामो गच्छामः। ननु किमत्रानौचित्यमिति चेत्तत्राह—हा धिक् कष्टं कुमारौ सुललितवपुषौ मल्लवीरौ कठोरौ इति। धिगिति निन्दायाम्। हा कष्टमिति खेदातिशये। कुमारौ श्रीरामकृष्णौ। सुललित वपुषौ सुललितं सुतरां ललितं मृदु वपुः शरीरं ययोस्तौ। कठोरौ कठिन शरीरौ। नचैतावेताभ्यां योगयोग्यावित्यत्यन्तमनुचितमेतद्दर्शनमिति भावः। द्रष्टॄणां मल्लक्रीडादर्शनस्योद्वेगकारितया भगवान् झटिति चाणूरमवधीदिति द्रष्टव्यम्। अथ हलिना मुष्टिकः अपि द्रुतं पिष्टः अभूत्। अथ चाणूर वधानन्तरम्। अपिरुक्तयोः शलतोशलकयोः समुच्चये। द्रुतं झटिति। पिष्टः हतः। नष्टशिष्टैः दधावे। नष्टशिष्टैः नष्टेभ्यः शिष्टैरवशिष्टैर्मल्लैः। दधावे प्राणपरीप्सया धावनं कृतम् ॥

तदानीं कर्तव्यमजानतः कंसस्य प्रवृत्तिमाह—

कंसः संवार्य तूर्यं खलमतिरविदन् कार्यमार्यान् पितॄंस्ता-
नाहन्तुं व्याप्तमूर्तेस्तव च समशिषद्दूरमुत्सारणाय।
रुष्टो दुष्टोक्तिभिस्त्वं गरुड इव गिरिं मञ्चमञ्चन्नुदञ्च-
त्खड्गव्यावल्गदुस्संग्रहमपि च हठात् प्राग्रहीरौग्रसेनिम् ॥ ८ ॥

**कंस इति ॥** कंसः तूर्यं संवार्य आर्यान् तान् पितॄन् आहन्तुं व्याप्तमूर्तेः तव दूरमुत्सारणाय च समशिषत्। तूर्यं मल्लवाद्यम्। संवार्य निवार्य। आर्यान् पूज्यान्। तान् पितॄनुग्रसेनवसुदेवनन्दगोपान्। आहन्तुं हन्तुम्। व्याप्तमूर्तेः परिपूर्णस्य। एतच्च तदजानन्तं कंसं प्रति सोपहासवचनम्। तव श्रीकृष्णस्य।

दूरं दूरतः। उत्सारणाय निस्सारणाय। चकारः समुच्चये। समशिषत् आज्ञापितवान्। नन्वेवंविधं भगवतश्चेष्टितमवलोक्य कंसः कुतो न भगवत्पादयोः प्रणामं कृतवानित्यत आह—कार्यमविदन्निति। कार्यं कर्तव्यं भगवतः प्रणामम्। अविदन् अजानन्। ननु कुतो नैतत् कंसेन ज्ञातमिति चेत्तत्राह—खलमतिरिति। दुष्टमानस इत्यर्थः। अथ भगवतः कंसवधोपक्रममाह—त्वं मञ्चम् अञ्चन् उदञ्चत्खड्गव्यावल्गदुस्संग्रहमपि औग्रसेनिं हठात् प्राग्रहीः च इति। त्वं श्रीकृष्णः। मञ्चं कंसस्य प्रासादम्। अञ्चन् उत्पतन्। उदञ्चत्खड्गव्यावल्गदुस्संग्रहम् उदञ्चतः उन्नमितस्य खड्गस्य कृपाणस्य व्यावल्गेन चलनेन दुःसंग्रहं गृहीतुमशक्यम्। अपिर्विरोधे औग्रसेनिं कंसम्। हठात् बलात्कारेण। प्राग्रहीः गृहीतवानसि। चकारः समुच्चये। अत्र हेतुमाह—दुष्टोक्तिभिः रुष्टः इति। दुष्टोक्तिभिः दुष्टस्य कंसस्योक्तिभिः। रुष्टः कुपितः। भगवतो मञ्चोत्पतने उपमामाह—गरुड-गिरिमिवेति। गरुडः वैनतेयः। गिरिं पर्वतम्। उपमया चोत्पतनेऽनायासो मञ्चस्यौन्नत्यञ्च ध्वन्यते॥

अथ कंसवधमाह—

सद्यो निष्पिष्टसन्धिं भुवि नरपतिमापात्य तस्योपरिष्टा-
त्त्वय्यापात्ये तदैव त्वदुपरि पतिता नाकिनां पुष्पवृष्टिः।
किं किं ब्रूमस्तदानीं सततमपि भिया त्वद्गतात्मा स भेजे
सायुज्यं त्वद्धयोत्था वरद परमियं वासना कालनेमेः॥ ९॥

सद्य इति। तदा एव त्वदुपरि नाकिनां पुष्पवृष्टिः पतिता। तदा एव तस्मिन्नेवावसरे। त्वदुपरि तव श्रीकृष्णस्योपरि। श्रीकृष्णशरीर इत्यर्थः। नाकिनाममराणाम्। पुष्पवृष्टिः पुष्पवर्षम्। पतिता पपात। तमेवावसरं दर्शयति—त्वयि सद्यः निष्पिष्टसन्धिं नरपतिं भुवि आपात्य तस्य उपरिष्टात् आपात्ये इति। त्वयि श्रीकृष्णे। सद्यः झटिति। निष्पिष्टसन्धिं निष्पिष्टाः नितरां पिष्टास्सन्धयो यस्य तम्।

नरपतिं कंसम्। भुवि भूमौ। आपात्य मञ्चात् पातयित्वा। तस्य कंसस्य। उपरिष्टात् उपरि। आपात्ये पतिते सति। उपरि भगवतः पतनेन कंसं गतजीवितं दृष्ट्वा देवाः प्रमुदिताः कुसुमानि ववृषुरित्यर्थः। भगवता हतस्य पुण्यां गतिमाह—हे वरद तदानीं सः सायुज्यं भेजे इति। वरद भक्ताभीष्टवरप्रद। तदानीं तस्मिन्नेवावसरे। सः कंसः। सायुज्यं भगवदैक्यम्। भेजे प्राप। द्विषतोऽपि कंसस्य सायुज्यप्राप्तिमाकलय्य सविस्मयमाह—किं किं ब्रूमः इति। हन्तात्र कारणं किं किं वदाम इत्यर्थः। एवमपि मयाऽत्र यदुपलब्धं कारणम्, तत् कथयामीत्याशयेनाह—सततं भिया अपि त्वद्गतात्मा इति। सततं सर्वदा। भिया भयेन। अपिर्विरोधे। त्वद्गतात्मा भगवति निविष्टचित्तः। भक्त्या भगवति निविष्टचेतसां का कथेत्यपिशब्देन ध्वन्यते। ननु कथमयं दुरात्मा कंसो भियाऽपि भगवन्निविष्टचित्तोऽभूदित्याशङ्कायामाह—इयं कालनेमेः त्वद्वधोत्था वासना परमिति। इयं भयेनापि भगवति मनसः स्थिरीकरणम्। कालनेमेः तन्नाम्नोऽसुरस्य। कंसः प्राग्जन्मनि कालनेमिरासीदिति द्रष्टव्यम्। त्वद्वधोत्था भगवत्कृतेन वधेन जनिता। कालनेमिश्च भगवता हत इति 'त्वं कालनेमिमथ मालिमुखान् जघन्थ' इत्यनेनोक्तम्। वासना परं वासनैव। एवञ्च येन केनापि प्रकारेण भगवति मनसः स्थिरीकरणमपवर्गकारणमिति सिद्धम्। यदुक्तञ्च श्रीमद्भागवते—'कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा। नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते' इति॥

अथ कंसभ्रातृवधादिकमाह—

तद्भ्रातॄनष्ट पिष्ट्वा द्रुतमथ पितरौ सन्नमन्नुग्रसेनं
　कृत्वा राजानमुच्चैर्यदुकुलमखिलं मोदयन् कामदानैः।
भक्तानामुत्तमं चोद्धवममरगुरोराप्तनीतिं सखायं
　लब्ध्वा तुष्टो नगर्यां पवनपुरपते रुन्धि मे सर्वरोगान्॥ १०॥

तद्भ्रातॄनिति॥ हे पवनपुरपते अष्ट तद्भ्रातॄन् पिष्ट्वा अथ द्रुतं पितरौ सन्नमन् उग्रसेनं राजानं कृत्वा अखिलं यदुकुलं कामदानैः उच्चैः मोदयन्

भक्तानामुत्तमम् अमरगुरो. आप्तनीतिम् उद्धवं सखायं लब्ध्वा च तुष्टः नगर्यां त्वं मे सर्वरोगान् रुन्धि। पवनपुरपते गुरुवायुपुरनाथ। तद्भ्रातॄन् तस्य कंसस्य भ्रातॄननुजान् कङ्कन्यग्रोधकादीन् भ्रातुर्वधात् कोपेन भगवन्तं हन्तुमाप ततः। पिष्ट्वा निहत्य। अथ अनन्तरम्। द्रुतं झटिति। पितरौ कंसेन बद्धौ देवकीवसुदेवौ। सन्नमन् बन्धनादुन्मुच्य प्रणम्येत्यर्थः। उग्रसेनं मातामहं कंसेन बद्धमुन्मुच्य। राजानं नृपम्। कृत्वा विधाय। अखिलं समस्तम्। यदुकुलं यादवकुलम्। कामदानैः हिरण्यरत्नाद्यभिलषितसमस्त वस्तुप्रदानैः। उच्चैः अत्यर्थम्। मोदयन् तोषयन्। भक्तानां भगवद्भक्तानाम्। तेषु मध्य इत्यर्थः। उत्तमं श्रेष्ठम्। अमरगुरो बृहस्पतेः। आप्तनीतिम् आप्ता अभ्यस्ता नीतिः नीतिविद्या येन तम्। उद्धवं तन्नामानम्। सखायं कार्यसचिवतया नर्मसचिवतया चेत्यर्थः। लब्ध्वा प्राप्य। चकारः समुच्चये। अत एव तुष्टः प्रमुदितमना। नगर्यां मधुरायाम्। वसन्निति शेषः। त्वं श्रीकृष्ण। मे ममानन्यशरणस्य। सर्वरोगान् सर्वान् बाह्याना भ्यन्तरांश्च रोगानामयान् रुन्धि निवारय॥

इति कुवलयापीडवधवर्णनं भगवतो महारङ्गप्रवेशवर्णनं
मल्लयुद्धवर्णनं मल्लवधवर्णनं कंसवधादिवर्णनं च

पञ्चसप्ततितमदशकम्॥

## षट्सप्ततितमदशकम् ।

अथ भगवतो लोकसंग्रहार्थं विद्यापरिग्रहं वर्णयति—

गत्वा सान्दीपनिमथ चतुष्षष्टिमात्रैरहोभिः
सर्वज्ञस्त्वं सह मुसलिना सर्वविद्या गृहीत्वा ।
पुत्रं नष्टं यमनिलयनादाहृतं दक्षिणार्थं
दत्वा तस्मै निजपुरमगा नादयन् पाञ्चजन्यम् ॥ १ ॥

**गत्वेति** ॥ अथ त्वं मुसलिना सह सान्दीपनिं गत्वा चतुष्षष्टि मात्रैः अहोभिः सर्वविद्याः गृहीत्वा नष्टं यमनिलयनात् आहृतं पुत्रं दक्षिणार्थं तस्मै दत्वा पाञ्चजन्यं नादयन् निजपुरम् अगाः । अथ कंसवधानन्तरम् । त्वं श्रीकृष्णः । मुसलिना बलभद्रेण । सह समम् । सान्दीपनिं तन्नामानं कञ्चित् मुनिम् । गत्वा प्राप्य । चतुष्षष्टिमात्रैः चतुष्षष्टिरेव चतुष्षष्टिमात्राणि तथाविधैः । अहोभिः दिवसैः । सर्वविद्याः सर्वाः वेदवेदाङ्गादिरूपाः सकला विद्याः । गृहीत्वा तस्मान्मुनेरादाय । नष्टं मृतम् । यमनिलयनात् यमस्यान्तकस्य निलयनात् गृहात् । आहृतम् आनीतम् । पुत्रं सुतम् । दक्षिणार्थं गुरुदक्षिणायै । तस्मै सान्दीपनये । दत्वा वितीर्य । पाञ्चजन्यं शङ्खरूपं पञ्चजनं नामासुरं निहत्य गृहीतं पाञ्चजन्याख्यं शङ्खम् । नादयन् आध्मापयन् । निजपुरं स्वस्य पुरं मथुराम् । अगाः गतवानसि । ननु कथं चतुष्षष्टिमात्रैर्दिवसैः सर्वा विद्या गृहीतुं शक्यत इत्याशङ्कायामाह—सर्वज्ञः इति । सर्वं जानातीति सर्वज्ञः । ननु सर्वज्ञस्यान्यस्माद्विद्याग्रहणं निरर्थकत्वादनुपपन्नमिति चेन्न, लोकसंग्रहार्थं भगवता कृतत्वात् । मनुष्यत्वमुपगतस्येश्वरस्यापि धर्माचरणमपरिहार्यमिति ध्येयम् ॥

अथ भगवान् गोपीनां परितापं शमयितुमुद्धवं प्राहिणोदित्याह—

स्मृत्वा स्मृत्वा पशुपसुदृशः प्रेमभारप्रणुन्नाः
 कारुण्येन त्वमपि विवशः प्राहिणोरुद्धवं तम् ।
किंचामुष्मै परमसुहृदे भक्तवर्याय तासां
 भक्त्युद्रेकं सकलभुवने दुर्लभं दर्शयिष्यन् ॥ २ ॥

स्मृत्वेति ॥ त्वमपि उद्धवं प्राहिणोः । त्वं श्रीकृष्ण । अपि समुच्चये । प्राहिणोः गोकुलं प्रति प्रेषितवानसि । अत्र हेतुं दर्शयति— कारुण्येन विवशः इति । कारुण्येन कृपया । भक्तवात्सल्येनेति यावत् । विवशः परवशः सन् । भगवतः कारुण्यवैवश्ये हेतुमाह—पशुपसुदृशः स्मृत्वा स्मृत्वा प्रेमभारप्रणुन्ना इति । पशुपसुदृशः गोप्यः । स्मृत्वा स्मृत्वा अनुचिन्त्य । त्वामिति शेषः । प्रेमभारप्रणुन्नाः प्रेमभारेण रागातिशयेन प्रणुन्नाः । परवशाः इत्यर्थः । जाताः इति शेषः । परमभक्तासु तासु करुणया भक्तवात्सल्यरूपया भगवान् परवशः सन्नित्यर्थः । उद्धवप्रेषणे हेत्वन्तरमप्याह— किंचेत्यादि । किंच उद्धवप्रेषणे हेत्वन्तरमप्यस्तीत्यर्थः । तदेव विशदयति— अमुष्मै सकलभुवने दुर्लभं तासां भक्त्युद्रेकं दर्शयिष्यन्निति । अमुष्मै उद्धवाय । सकलभुवने सर्वेष्वपि लोकेषु । दुर्लभं लब्धुमशक्यम् । तासां गोपीनाम् । भक्त्युद्रेकं भक्तेरुद्रेकमतिशयम् दर्शयिष्यन् प्रदर्शयिष्यन् । प्रदर्शयितुमित्यर्थः । गोपीनां भक्त्युद्रेकप्रदर्शनस्य फलमाह—भक्तवर्याय इति । भक्तोत्तमायेत्यर्थः । भक्तोत्तमोऽहमिति तस्याभिमानं शमयितुमिति भावः । नन्वस्तु तस्याभिमानः, का क्षतिरिति चेत्तत्राह—परमसुहृदे इति । निरहङ्कारस्यैव स्वकीयपरममित्रत्वं युक्तमित्याशयेनेति भावः ॥

गोकुलं प्रविष्टस्योद्धवस्य प्रवृत्तिमाह—

त्वन्माहात्म्यप्रथिमपिशुनं गोकुलं प्राप्य सायं
 त्वद्वार्ताभिर्बहु स रमयामास नन्दं यशोदाम् ।
प्रातर्दृष्ट्वा मणिमयरथं शङ्किताः पङ्कजाक्ष्यः
 श्रुत्वा प्राप्तं भवदनुचरं त्यक्तकार्याः समीयुः ॥ ३ ॥

त्वन्माहात्म्येति ॥ सः गोकुलं प्राप्य त्वद्वार्ताभिः नन्दं यशोदां बहु रमयामास। सः उद्धवः। गोकुलं गोकुले नन्दभवनमित्यर्थः। प्राप्य सम्प्राप्य। त्वद्वार्ताभिः तव श्रीकृष्णस्य वार्ताभिः वृत्तान्तैः। नन्दं यशोदां च। बहु अतिशयेन। रमयामास जातहर्षावकरोत्। ननु कुतो न गोपी स्तथाऽकरोत्तदैवेति चेत्तत्राह—सायमिति। सायं सन्ध्यायाम्। सायं समागतमुद्धवं स्वस्वगेहस्था गोप्यो नाविदन्निति भावः। गोकुलस्य विशेष माह—त्वन्माहात्म्यप्रथिमपिशुनमिति। त्वन्माहात्म्यस्य तव श्रीकृष्णस्य यन्मा हात्म्यं तस्य प्रथिमा विस्तारस्तस्य पिशुनं सूचकम्। यत्समृद्धिमवलोक्य भगवतो माहात्म्यमीदृशमिति ज्ञातुं शक्यमित्यर्थः। उक्तञ्च—'नाकेऽपि वैकुण्ठपदेऽप्य लभ्यां श्रियं प्रपेदे भवतः प्रभावात्' इति। अथ गोपीनां प्रवृत्तिमाह— प्रातः पङ्कजाक्ष्यः मणिमयरथं दृष्ट्वा शङ्किताः प्राप्तं भवदनुचरं श्रुत्वा त्यक्तकार्याः समीयुः इति। प्रातः प्रभाते। पङ्कजाक्ष्यः गोप्यः। मणिमयरथं मणिमयं रत्नमयं रथं स्यन्दनम्। दृष्ट्वा विलोक्य। शङ्किताः श्रीकृष्णागमनमाशङ्क मानाः। पुनः प्राप्तम् आगतम्। भवदनुचरं भवतः श्रीकृष्णस्यानुचरं सखायम्। श्रुत्वा आकर्ण्य। त्यक्तकार्याः त्यक्तानि कार्याणि गेहकृत्यादीनि याभिस्ताः। समीयुः उद्धवसमीपं प्रापुः ॥

उद्धवं दृष्टवतीनां गोपीनां प्रवृत्तिमाह—

दृष्ट्वा चैनं त्वदुपमलसद्वेषभूषाभिरामं
　स्मृत्वा स्मृत्वा तव विलसितान्युच्चकैस्तानि तानि।
रुद्धालापाः कथमपि पुनर्गद्गदां वाचमूचुः
　सौजन्यादीन् निजपरभिदामप्यलं विस्मरन्त्यः ॥ ४ ॥

दृष्ट्वेति ॥ अत्र पूर्वस्मात् पङ्कजाक्ष्यः इत्यनुवर्तते। पङ्कजाक्ष्यः रुद्धालापाः सौजन्यादीन् निजपरभिदामपि अलं विस्मरन्त्यः पुनः कथमपि गद्गदां वाचमूचुः। पङ्कजाक्ष्यः गोप्यः। रुद्धालापाः रुद्धः निवारितप्रसरः आलापः आभाषणं यासां ताः। सौजन्यादीन् सुजननाविनयादीनि।

नगरसुदृशां विदग्धानां नागरिकाङ्गनानाम्। कान्तः मनोहरः। विदग्धाङ्गनावशंवदस्यास्मास्वविदग्धासु का गणनेति भावः। असौ कृष्णः। क्व कुत्र वर्तते। यद्ययं न नागरिकाङ्गनावशंवदः, तर्हि कथमस्मान् परित्यजेदिति भावः। एवं परमभक्तास्वपि गोपीष्वेवंविधं सन्तापमापादयन्तं भगवन्तमाकलय्य कविः स्वस्याऽपि सन्तापापादनमाशङ्क्यातीव भीतो गोपीनां वचनमपरिसमाप्यैव मध्ये तदकरणाय प्रार्थयते—हा हरे नाथ पायाः इति। हा इति खेदे। हरे श्रीकृष्ण। नाथ भक्तलोकरक्षक। पायात् त्रायस्व। मामिति शेषः। भक्तलोकरक्षकस्त्वं ममैवंविधं सन्तापं मा कुर्विति भावः। भक्तप्रियायां तु हा हरे इत्यादि गोपीवचनत्वेन व्याख्यातम्। तन्मते श्लोकस्यास्य गोपीवचनानुकरणरूपतया स्तोत्रत्वं नोपपद्यत इति द्रष्टव्यम्। एवं सेर्ष्यं किञ्चिदभिधाय पुनर्भगवद्गुणानुस्मरणप्रवृद्धहृच्छया गोप्यः सविषादं पुरस्तादसन्निहितमपि भगवन्तं सन्निहितमिवोन्मादात् सम्बोध्याहुः—हे कान्त हन्त का वा अमृतवपुषः ते आश्लेषाणां चुम्बनानाम् उन्मादानां कुहकवचसां विस्मरेदिति। कान्त अस्मन्मनोहर। हन्तेति खेदे। का वा का नाम गोपी। अमृतवपुषः पीयूषमयविग्रहस्य। ते तव श्रीकृष्णस्य। आश्लेषाणामालिङ्गनानाम्। उन्मादानाम् आत्मानं विस्मृत्य कृतानां तत्तद्विलसितानाम्। कुहकवचसां कपटवचनानाम्। विस्मरेत् न कापि विस्मरेदित्यर्थः। 'अत्रास्मार्षीज्जलनिधिमन्थनस्य शौरिः' इत्यत्रेवाश्लेषाणामित्यादौ कर्मणि षष्ठी॥

रासक्रीडालुलितललितं विश्लथत्केशपाशं
मन्दोद्भिन्नश्रमजलकणं लोभनीयं त्वदङ्गम्।
कारुण्याब्धे सकृदपि समालिङ्गितुं दर्शयेति
प्रेमोन्मादाद्भुवनमदन त्वत्प्रियास्त्वां विलेपुः ॥ ६ ॥

रासक्रीडेति॥ हे भुवनमदन त्वत्प्रियाः प्रेमोन्मादात् त्वाम् इति विलेपुः। भुवनमदन सर्वेषामपि कामोन्मादजनक। त्वत्प्रियाः तव श्रीकृष्णस्य प्रियाः गोप्यः। प्रेमोन्मादात् श्रीकृष्णविषयकप्रेमकृतादुन्मादात्।

त्वां श्रीकृष्णम्। उद्दिश्येति शेषः। इति अनेन प्रकारेण। विलेपुः परिदेवनं चक्रुः। विलापप्रकारमाह—हे कारुण्याब्धे त्वं त्वदङ्गं सकृदपि समालिङ्गितुं दर्शय इति। कारुण्याब्धे कृपासागर। त्वं श्रीकृष्णः। त्वदङ्गं तव श्रीकृष्णस्य अङ्गं शरीरम्। सकृदपि एकवारमपि। समालिङ्गितुं सम्यगादमालिङ्गितुम्। दर्शय प्रदर्शय। भगवदङ्गस्य विशेषतो रमणीयत्वमाह—रासक्रीडालुलितललितं विश्लथत्केशपाशं मन्दोद्भिन्नश्रमजलकणं लोभनीयमिति। रासक्रीडालुलितललितं रासक्रीडया लुलितं मृदितं ललितं रमणीयम्। विश्लथत्केशपाशं विश्लथन् शिथिलः केशपाशः कचभारो यस्य तत्। मन्दोद्भिन्नश्रमजलकणं किञ्चिदुद्गतस्वेदबिन्दुसन्दोहम्। अत एव लोभनीयम् अतिमनोहरम्॥

अथोद्धवो गोपीराश्वास्ताश्वकारेत्याह—

एवंप्रायैर्विवशवचनैराकुला गोपिकास्ता-
स्त्वत्सन्देशैः प्रकृतिमनयत् सोऽथ विज्ञानगर्भैः।
भूयस्ताभिर्मुदितमतिभिस्त्वन्मयीभिर्वधूभि-
स्तत्तद्वार्तासरसमनयत् कानिचिद्वासराणि ॥ ७ ॥

एवंप्रायैरिति॥ अथ सः एवंप्रायैः विवशवचनैः आकुलाः ताः गोपिकाः त्वत्सन्देशैः प्रकृतिमनयत्। अथ अनन्तरम्। सः उद्धवः। एवंप्रायैः एवंविधैः। विवशवचनैः परिदेवितैः। आकुलाः परवशाः। ताः भगवत्प्रियाः। गोपिकाः गोपीः। त्वत्सन्देशैः तव श्रीकृष्णस्य सन्देशैः। प्रकृतिं स्वस्थताम्। अनयत् नीतवान्। ननु कथं केवलं सन्देशैस्तासां कृतार्थता स्यादित्याकाङ्क्षायामाह—विज्ञानगर्भैरिति। तत्त्वज्ञानप्रदैरित्यर्थः। एवं गोपीस्समाश्वास्योद्धवो व्रज एव कतिचिद्दिनान्यवसदित्याह—भूयः मुदितमतिभिः ताभिः वधूभिः तत्तद्वार्तासरसं कानिचित् वासराणि अनयदिति। भूयः अनन्तरम्। मुदितमतिभिः तुष्टाभिः। त्वन्मयीभिः श्रीकृष्णमयीभिः। ताभिः श्रीकृष्णमयजीविताभिः। वधूभिः गोपीभिः। सहेति शेषः। तत्तद्वार्ता

सरसं तत्तद्वार्ताभिः तत्तद्वृत्तान्तकथनैः सरसं यथा भवति तथा। कानिचित् कतिचित्। वासराणि दिनानि। अनयत् नीतवान्। अत्र त्वन्मयीभिरित्युद्धवस्य गोकुलनिवासेच्छाहेतुप्रदर्शनपरम् ॥

गोपीनां भगवन्मयत्वमेव विवृणोति—

त्वत्प्रोद्गानैः सहितमनिशं सर्वतो गेहकृत्यं
त्वद्वार्तैव प्रसरति मिथः सैव चोत्स्वापलापाः।
चेष्टाः प्रायस्त्वदनुकृतयस्त्वन्मयं सर्वमेवं
दृष्ट्वा तत्र व्यमुहदधिकं विस्मयादुद्धवोऽयम् ॥ ८ ॥

**त्वत्प्रोद्गानैरिति** ॥ तत्र अयम् उद्धवः विस्मयात् अधिकं व्यमुहत्। तत्र गोकुले। अयं भगवद्भक्तेषूत्तमः। विस्मयात् आश्चर्यात्। अधिकम् अत्यर्थम्। व्यमुहत् विमुमोह। अत्र हेतुमाह—एवं सर्वं त्वन्मयं दृष्ट्वा इति। एवम् उक्तप्रकारेण। सर्वं सकलमपि कृत्यम्। त्वन्मयं श्रीकृष्णमयम्। दृष्ट्वा विलोक्य। एवपदार्थमाह—अनिशं सर्वतः गेहकृत्यं त्वत्प्रोद्गानैः सहितम्, मिथः त्वद्वार्ता एव प्रसरति, उत्स्वापलापाः च सा एव प्रायः, चेष्टाः त्वदनुकृतयः इति। अनिशं सततम्। सर्वतः सर्वत्र। गेहकृत्यं गृहकर्म। त्वत्प्रोद्गानैः तव श्रीकृष्णस्य प्रोद्गानैः प्रकृष्टैः लीलाचरित्रप्रतिपादकतया प्रकर्षवद्भिः उद्गानैः उच्चैर्गीयमानैर्ललितपदबन्धनैः। सहितम् अन्वितम्। मिथः परस्परम्। त्वद्वार्ता तव श्रीकृष्णस्य वार्ता वृत्तान्तः। एवकारेणान्येषां व्यवच्छेदः। प्रसरति प्रवर्तते। अत्र प्रसरतीत्यनेन प्रसरणस्याबुद्धिपूर्वकत्वम्, तेन गोपीनां सर्वदा भगवन्निविष्टहृदयता च ध्वन्यते। उत्स्वापलापाः स्वप्नवचनानि। चकारः समुच्चये। सैव त्वद्वार्तैव। अत्राप्येवकारेणान्येषां व्यवच्छेदः। प्रायः प्रायेण। चेष्टाश्चेष्टितानि। त्वदनुकृतयः श्रीकृष्णचेष्टानुकरणरूपाः ॥

अथोद्धवस्य सत्स्वपि बहुविधेषु तत्तद्गोपीसमाश्वासनप्रकारेषु प्रधानभूतायाः राधायाः समाश्वसनप्रकारमाह—

राधाया मे प्रियतममिदं मत्प्रियैवं ब्रवीति
त्वं किं मौनं कलयसि सखे मानिनी मत्प्रियेव ।
इत्याद्येव प्रवदति सखि त्वत्प्रियो निर्जने मा-
मित्थंवादैररमयदयं त्वत्प्रियामुत्पलाक्षीम् ॥ ९ ॥

राधाया इति ॥ अयं त्वत्प्रियामुत्पलाक्षीमित्थंवादैः अरमयत् । अयम् उद्धव । त्वत्प्रिया तव श्रीकृष्णस्य प्रिया प्रेयसीम् । उत्पलाक्षीं सुन्दरीम् । राधिकामित्यर्थः । इत्थंवादैः एवंविधैर्वचनैः । अरमयत् रमयामास । वचनप्रकारमाह—हे सखि त्वत्प्रियः निर्जने माम् इत्यादि एव प्रवदति इति । त्वत्प्रियः तव प्रियः श्रीकृष्णः । निर्जने रहसि । इत्यादि एवमादि । एव नान्यत् किमपीत्यर्थः । प्रवदति प्रकर्षेण वदति कथयति । इतिशब्दार्थं भगवतो वचनप्रकारमाह—इदं मे राधाया प्रियतमम्, मत्प्रिया एव ब्रवीति, हे सखे त्वं मानिनी मत्प्रिया इव किं मौनं कलयसि इति । इदम् यत्किञ्चिद्रम्यं कुसुमादि गृहीत्वा निर्दिश्योक्तिरियम् । मे मम राधिकामयजीवितस्य । प्रियतमम् अतिप्रियम् । मत्प्रिया मम प्रेमभाजनीभूता राधा । एवं ब्रवीति मयि कदाचित्किञ्चिद्भाषमाणे इत्थं प्रतिवदति । यदा कदाचित् श्रीकृष्णवचनस्यादत्तोत्तरे मत्सुहृदे । भगवद्वाक्यमनुवदति—सखे इति । सखे मित्र । मानिनी प्रणयकुपिता । मत्प्रियेव राधेव । किं कुतो हेतोः । मौनमप्रतिवचनम् । कलयसि दधासि ॥

अथ भगवत्सन्देशमाह—

एष्यामि द्रागनुपगमनं केवलं कार्यभारा-
द्विश्लेषेऽपि स्मरणदृढतासम्भवान्मास्तु खेदः ।
ब्रह्मानन्दे मिलति न चिरात्सङ्गमो वा वियोग-
स्तुल्यो वः स्यादिति तव गिरा सोऽकरोन्निर्व्यथास्ताः ॥ १० ॥

एष्यामीति ॥ सः इति तव गिरा ताः निर्व्यथा अकरोत् । सः उद्धवः । इति अनेन प्रकारेण । तव श्रीकृष्णस्य । गिरा सन्देशेन ।

ताः गोपीः। निर्व्यथाः निर्गताः व्यथाः विरहवेदना याभ्यस्ताः। अकरोत् कृतवान्। भगवद्वचनप्रकारमाह—अहं द्राक् एष्यामि इति। द्राक् झटिति। एष्यामि भवतीनां समीपमागमिष्यामि। ननु कुतो भवान् नैतावत्पर्यन्त मलागत इति चेत्तत्राह—अनुपगमनं कार्यभारात् केवलमिति। अनुपगम नम् अनागमनम्। कार्यभारात् कार्यस्य भारात्। केवलमित्यवधारणे। न तु प्रेममान्द्यादित्यर्थः। ननु त्वद्विरहः कथं सोढुं शक्यत इत्यत्राह— विश्लेषे अपि स्मरणदृढतासम्भवात् खेदः मास्तु इति। विश्लेषे विरहे। स्मरणदृढतासम्भवात् स्मरणस्य श्रीकृष्णानुसन्धानस्य दृढतायाः दार्ढ्यस्य सम्भवाद्धेतोः। खेदः दुःखम्। मास्तु माभूत्। वः इत्युत्तरवाक्या दत्रापि सम्बध्यते। अयमत्राशयः—विरहवेदनाया दुःसहत्वेऽपि मत्स्मरण दार्ढ्यापादकतया तस्य च समाधिरूपत्वान्महानयं लाभो भवतीनामिति न खेदावकाश इति। भगवत्स्मरणदार्ढ्यस्य फलमाह—वः नचिरात् ब्रह्मानन्दे मिलति सङ्गमः वियोगः वा तुल्यः स्यादिति। वः गोपीनाम्। नचिरात् अल्पेन कालेन। मत्स्मरणदार्ढ्यात् ब्रह्मानन्दे ब्रह्मात्मन्यानन्दे। मिलति प्रकाशमाने सति। सङ्गमः मत्समागमः। वियोगः मद्विरहः। वाकारः समुच्चये। तुल्यः समरसः। स्यात् भविष्यति॥

अथोद्धवस्य गोकुलात् प्रत्यागमनमाह—

एवं भक्तिः सकलभुवने नेक्षिता न श्रुता वा
किं शास्त्रौघैः किमिह तपसा गोपिकाभ्यो नमोऽस्तु।
इत्यानन्दाकुलमुपगतं गोकुलादुद्धवं तं
दृष्ट्वा हृष्टो गुरुपुरपते पाहि मामामयौघात् ॥ ११ ॥

एवमिति॥ हे गुरुपुरपते गोकुलात् इति उपगतम् आनन्दाकुलं तम् उद्धवं दृष्ट्वा हृष्टः त्वं माम् आमयौघात् पाहि। गोकुलात् व्रजात्। इति एवमुक्त्वा पुनः पुनः प्रणम्येत्यर्थः। उपगतम् आगतम्। आनन्दाकुलं भगवत्प्रेयसीनां गोपिकानां निरतिशयभक्तिदर्शनेन तत्सहवासलाभेन च जनि

तेन आनन्देन आकुल परवशम्। तम् अपगतभक्तोत्तमाभिमानेन परिशुद्धम्। इदञ्च भगवतो हर्षोदये निमित्तम्। दृष्ट्वा विलोक्य। हृष्ट प्रमुदित। त्वं श्रीकृष्ण। मामनन्यशरणम्। आमयौघात् रोगसमूहात्। पाहि त्रायस्व। उद्धवस्योक्तिप्रकारमाह—एव भक्ति सकलभुवने न ईक्षिता, श्रुता वा न, शास्त्रौघै किम्, इह तपसा किम्, गोपिकाभ्य नम अस्तु इति। एवं गोपीनामिव। भक्ति भगवत्प्रेमलक्षणा। सकलभुवने भुवनेषु क्वचिदपीत्यर्थ। ईक्षिता दृष्टा। ननु किं त्वया भुवनानि सर्वाणि दृष्टानीत्यत आह—श्रुता वा इति। वाकार समुच्चये। शास्त्रौघै शास्त्रसञ्चयै। किं किं प्रयोजनम्। अधीतशास्त्रसञ्चयानामप्येवविधभक्त्यदर्शनात् अनधीतशास्त्राणामपि गोपीनामेतादृशभक्तिदर्शनाच्च अन्वयव्यतिरेकाभ्या व्यभिचारादिति भाव। तपसा तपश्चर्यया। चकारोऽत्राध्याहर्तव्य। किम्, अन्वयव्यतिरेकाभ्या व्यभिचारान्न किञ्चित् प्रयोजनमित्यर्थ। परन्तु इदमेवात्र कर्तव्यमित्यभिप्रायेणाह—गोपिकाभ्य इति। गोपिकाभ्य गोपस्त्रीभ्य एव। नमोऽस्तु, तासामेव सर्वोत्कृष्टत्वादिति भाव॥

इति उद्धवदूत्यवर्णनं

षट्सप्ततितमदशकम् सैवम्॥

## सप्तसप्ततितमदशकम् ।

अथ भगवता पूर्वं रमयिष्यामीत्यालेपदात्रीं प्रत्युक्तस्य निर्वहणं वर्णयति—

सैरन्ध्र्यास्तदनु चिरं स्मरातुराया
यातोऽभूस्सललितमुद्धवेन सार्धम् ।
आवासं त्वदुपगमोत्सवं सदैव
ध्यायन्त्याः प्रतिदिनवाससज्जिकायाः ॥ १ ॥

सैरन्ध्र्या इति ॥ तदनु त्वं सैरन्ध्र्याः आवासं यातः अभूः । तदनु तदनन्तरम् । त्वं श्रीकृष्णः । सैरन्ध्र्याः यया भगवते दत्तमालेपनं तस्याः । आवासं भवनम् । यातः प्राप्तः । अत्र हेतुमाह—प्रतिदिनवाससज्जिकायाः इति । प्रतिदिनं दिने दिने वाससज्जिकायाः अद्यागमिष्यति कान्तोऽद्यागमिष्यति कान्त इति विचिन्त्य भगवत्समागमोचितवेषभूषादिभिरात्मानं, धूपादिभिः केलिगृहं च मण्डयित्वा भगवत्समागमं प्रतिपाल्य वर्तमानाया इत्यर्थः । वासकसज्जिकालक्षणं तु—'प्रियागमनवेलायां मण्डयन्ती मुहुर्मुहुः । क्रीडागृहं तथाऽऽत्मानं सा स्याद्वासकसज्जिका ॥' इति । भगवदागमनप्रतिपालने हेतुं दर्शयति—सदा एव त्वदुपगमोत्सवं ध्यायन्त्याः इति । सदैव सर्वदैव । त्वदुपगमोत्सवं त्वदुपगमः तव श्रीकृष्णस्य उपगमः समागम एवोत्सवः पञ्चेन्द्रियमनःप्रीतिजनकत्वादुत्सवायमानस्तम् । ध्यायन्त्याः चिन्तयन्त्याः । सदा तस्या भगवत्समागमध्याने कारणं दर्शयति—चिरं स्मरातुरायाः इति । चिरं चिराय । रथ्यायां भगवत्सन्दर्शनादारभ्येत्यर्थः । स्मरातुरायाः भगवतो विश्वातिशायिसौन्दर्यं दृष्ट्वा भगवत्करस्पर्शाच्च मन्मथोन्मथितमानसाया इत्यर्थः । भगवतः सैरन्ध्रीसमागमोचितवेषभूषादिकमाह—सललितम् उद्धवेन सार्धमिति । सललितं कामिनीजनमनःसनाकर्षकवेषभूषासम

न्वितं यथा भवति तथा इति यानक्रियाविशेषणम्। उद्धवेन परमसुहृदा। सार्धं सह ॥

भगवान् सैरन्ध्रीमरमयदित्याह—

उपगते त्वयि पूर्णमनोरथां
प्रमदसम्भ्रमकम्प्रपयोधराम्।
विविधमाननमादधतिं मुदा
रहसि तां रमयाञ्चकृषे सुखम् ॥ २ ॥

उपगत इति ॥ त्वं रहसि तां सुखं रमयाञ्चकृषे। त्वं श्रीकृष्णः। रहसि एकान्ते। तां सैरन्ध्रीम्। सुखं यथा भवति तथा। रमयाञ्चकृषे रमयामासिथ। सैरन्ध्र्यास्तात्कालिकीमवस्थामाह—त्वयि उपगते पूर्णमनोरथां प्रमदसम्भ्रमकम्प्रपयोधरां मुदा विविधमाननम् आदधतीमिति। त्वयि श्रीकृष्णे। उपगते स्वभवनं प्राप्ते सति। पूर्णमनोरथां पूर्णः फलितो मनोरथो यस्यास्ताम्। प्रमदसम्भ्रमकम्प्रपयोधरां प्रमदेन प्रहर्षेण यः सम्भ्रमः सौजन्यव्यापारत्वरा तेन कम्प्रौ चपलौ पयोधरौ कुचौ यस्यास्ताम्। मुदा प्रहर्षेण। विविधमाननं विविधं नानाविधं माननं सत्कारम्। आदधतीं कुर्वाणाम् ॥

भगवान् सैरन्ध्र्यै वरमदादित्याह—

पृष्टा वरं पुनरसाववृणोद्वराकी
भूयस्त्वया सुरतमेव निशान्तरेषु।
सायुज्यमस्त्विति वदेत् बुध एव कामं
सामीप्यमस्त्वनिशमित्यपि नाब्रवीत्किम् ॥ ३ ॥

पृष्टेति ॥ पुनः वरं पृष्टा असौ भूयः निशान्तरेषु त्वया सुरतम् एव अवृणोत्। पुनः भगवतः प्रस्थानसमये। वरं पृष्टा अभिलषितं वरं पृच्छ्यतेति भगवतोक्ता। असौ सैरन्ध्री। भूयः पुनरपि। निशान्तरेषु

अन्यासु रात्रिषु। त्वया श्रीकृष्णेन सह। सुरतमेव न तु मोक्षमित्यर्थः। अवृणोत् वव्रे। ननु मुक्तिप्रदे भगवति हरौ वरं वृणीष्वाभिलषितमिति पृष्टवति कुतो न सा मोक्षमवृणोदित्याशङ्कायामाह—वराकी इति। मोक्षरसानभिज्ञेत्यर्थः। सैरन्ध्र्या वरप्रार्थनमिदमत्यन्तमनुचितमप्यासीदित्याह —बुध एव सायुज्यम् अस्तु इति वदेत्, कामम्, किमनिशं सामीप्यमस्तु इत्यपि न अब्रवीदिति। बुध मोक्षरसाभिज्ञ एव, नान्यः। सायुज्यं भगवदैक्यम्। कामम् आस्तामेतत्। एवेत्यध्याह्रियते। भगवत्सङ्गमरसाभिज्ञेत्यर्थः। किं कुतः कारणात्। अनिशं सर्वदा। सामीप्यं समीपे भगवतो वर्तनम्। अस्त्वित्यपि मम भवतु इत्येतदपि। नाब्रवीत् न वव्रे। तस्मात् सर्वमीश्वरेच्छापरतन्त्रमेवेति भावः॥

भगवतो वरप्रदानमाह—

ततो भवान् देव निशासु कासुचि-
न्मृगीदृशं तां निभृतं विनोदयन्।
अदादुपश्लोक इति श्रुतं सुतं
स नारदात् सात्त्वततन्त्रविद्बभौ ॥ ४ ॥

तत इति॥ हे देव भवान् ततः कासुचित् निशासु तां मृगीदृशं निभृतं विनोदयन् उपश्लोकः इति श्रुतं सुतम् अदात्। देव प्रकाशमान। भवान् श्रीकृष्ण। ततः अनन्तरम्। निशासु रात्रिषु। तां मृगीदृशं कुरङ्गनयनां सैरन्ध्रीम्। निभृतं गूढम्। विनोदयन् रमयन्। श्रुतं प्रसिद्धम्। सुतं पुत्रम्। अदात् अयच्छत्। पुत्रस्य विशेषमाह—स नारदात् सात्त्वततन्त्रविद् बभौ इति। सः उपश्लोकः। सात्त्वततन्त्रवित् सात्त्वततन्त्रं पाञ्चरात्राद्यागमं वेत्तीति तथोक्तः। बभौ शुशुभे॥

अथ भगवतोऽक्रूरमन्दिरप्रवेशमाह—

अक्रूरमन्दिरमितोऽथ बलोद्धवाभ्या-
मभ्यर्चितो बहु नुतो मुदितेन तेन।

एनं विसृज्य विपिनागतपाण्डवेय-
धृत्तं विवेदिथ तथा धृतराष्ट्रचेष्टाम् ॥ ५ ॥

अक्रूरमन्दिरमिति ॥ अथ त्वं बलोद्धवाभ्याम् अक्रूरमन्दिरम् इतः मुदितेन तेन अभ्यर्चित. बहु नुतः एनं विसृज्य विपिनागतपाण्डवेयवृत्तं तथा धृतराष्ट्रचेष्टां विवेदिथ। अथ अनन्तरम्। त्वं श्रीकृष्णः। बलोद्धवाभ्यां बलेन बलभद्रेण उद्धवेन च सहेत्यर्थः। अक्रूरमन्दिरम् अक्रूरस्य मन्दिरं भवनम्। इतः प्राप्तः। मुदितेन श्रीकृष्णागमनात् प्रीतेन। तेन अक्रूरेण। अभ्यर्चितः पूजितः। बहु बहुप्रकारम्। नुतः स्तुतः। एनम् अक्रूरम्। विसृज्य वियुज्य। विपिनागतपाण्डवेयवृत्तं विपिनागतानां विपिनादागतानां पाण्डवेयानाम् पाण्डुपुत्राणां स्वपितृष्वस्रेयाणां वृत्तं वृत्तान्तम्। तथा तेन प्रकारेण। धृतराष्ट्रचेष्टां स्वपुत्रवशस्य धृतराष्ट्रस्य चेष्टां गरलप्रदानमदीपातनादिकमुद्यमम्। विवेदिथ ज्ञातवानसि ॥

अथ जामातुर्वधमुपश्रुत्य कुपितस्य जरासन्धस्य प्रवृत्तिमाह—

विघाताज्जामातुः परमसुहृदो भोजनृपते-
र्जरासन्धे रुन्धत्यनवधिरुषाऽन्धे च मधुराम्।
रथाद्यैर्द्योर्लब्धैः कतिपयबलस्त्वं बलयुत-
स्त्रयोविंशत्यक्षौहिणि तदुपनीतं समहृथाः ॥ ६ ॥

विघातादिति ॥ अथ त्वं जरासन्धे मधुरां रुन्धति बलयुत तदुपनीतं त्रयोविंशत्यक्षौहिणि समहृथा.। अथ अनन्तरम्। त्वं श्रीकृष्ण। जरासन्धे तन्नाम्नि मगधभूभृति। मधुरां मधुरापुरीम्। रुन्धति रुन्धाने सति। बलयुतः बलभद्रान्वितः। तदुपनीतं तेन जरासन्धेन। उपनीतम् आनीतम्। त्रयोविंशत्यक्षौहिणि त्रयोविंशतिरक्षौहिण्यो यस्मिंस्तत्। बलमिति शेषः। 'एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका। पत्त्यङ्गैस्त्रिगुणैस्सर्वैः क्रमादाख्या यथोत्तरम्॥ सेनामुखं गुल्मगणौ पृतनाऽनीकिनी चमूः। वरूथिनी दशानीकिन्यक्षौहिणी' इत्यमरसिंहेनाक्षौहिण्याः संख्या निर्दिष्टा। समहृथाः

संहृतवानसि। भगवतोऽल्पसैन्यत्वमाह—कतिपयबल इति। अल्पसैन्य इत्यर्थः। भगवतो युद्धोपकरणलाभमाह—द्योलब्धैः रथाद्यैरिति। द्योलब्धैः द्योः स्वर्गाल्लब्धैः प्राप्तैः। रथाद्यैः स्यन्दनप्रभृतिभिर्युद्धोपकरणैः। जरासन्धस्य मधुरानिरोधने हेतुमाह—अनवधिरुषा अन्धे इति। अनवधिरुषा अवसानरहितेन कोपेन। अन्धे कृत्याकृत्यमजानाने। रोषकारणमाह—जामातुः परमसुहृदः भोजनृपतेः विघातादिति। जामातुः दुहित्रोरस्तिप्राप्त्योः पत्युः। परमसुहृदः परममित्रस्य। भोजनृपतेः कंसस्य। विघातात् वधात्॥

जरासन्धस्य पराजयमाह—

बद्धं बलादथ बलेन बलोत्तरं त्वं
भूयो बलोद्यमरसेन मुमोचिथैनम्।
निश्शेषदिग्जयसमाहृतविश्वसैन्यात्
कोऽन्यस्ततो हि बलपौरुषवांस्तदानीम् ॥ ७ ॥

बद्धमिति॥ अथ त्वं बलेन बलात् बद्धम् एनं भूयो बलोद्यमरसेन मुमोचिथ। अथ अनन्तरम्। त्वं श्रीकृष्णः। बलेन बलभद्रेण। बलात् बलात्कारेण। बद्धं गृहीतम्। एनं जरासन्धम्। भूयो बलोद्यमरसेन भूयो बलोद्यमे पुनरपि संग्रामे रसेन प्रीत्या। बलोद्यमरसे हेतुं दर्शयति—बलोत्तरमिति। बलेन उत्तरमुत्कृष्टम्। बलिना बलिभिः सहैव बलोद्यमरसस्य सम्भवादिति भावः। नन्वन्येन केनचित् सह बलोद्यमः क्रियताम्, किं जरासन्धेनेत्यत आह—तदानीं निश्शेषदिग्जयसमाहृतविश्वसैन्यात् ततः अन्यः कः हि बलपौरुषवानिति। तदानीं तस्मिन्नवसरे। निश्शेषदिग्जयसमाहृतविश्वसैन्यात् निश्शेषाणां सर्वासां दिशाम्। अत्र दिक्शब्देन तत्रत्या राजानो लक्ष्यन्ते। सर्वेषामपि जनानां स्वकीयाज्ञावशंवदत्वप्रतीतिः फलम्। जयेन समाहृतान्यानीतानि विश्वेषां सर्वेषां राज्ञां सैन्यानि येन तस्मात्। ततः जरासन्धात्। अन्यः अपरः। को हि को नाम।

**अष्टादश इति ॥** त्वम् अस्य अष्टादशे समरे समुपेयुषि आशु त्वष्ट्रा पयोधिमध्ये पुरं विधाप्य अथ योगबलतः स्वजनान् तत्र अनैषीः। त्वं श्रीकृष्णः। अस्य जरासन्धस्य। अष्टादशे अष्टादशतमे। 'विघातात्' इत्यादिना पूर्वमेकः प्रदर्शितः, पुनः 'युद्धं त्वया व्यधित षोडशकृत्वः' इत्यनेन षोडश च कथिताः, एवमाहत्य सप्तदशातिक्रान्ता इति भावः। समरे युद्धे। समुपेयुषि आगामिनि सति। आशु झटिति। त्वष्ट्रा विश्वकर्मणा। पयोधिमध्ये पश्चिमसमुद्रमध्ये। पुरं द्वारवत्याख्यां पुरीम्। विधाप्य कारयित्वा। अथ अनन्तरम्। योगबलतः योगैश्वर्येण। स्वजनान् स्वसम्बन्धिनः सर्वान् जनान्। तत्र द्वारवत्याम्। अनैषीः नीतवानसि। ननु किमर्थमेवं कृतवानिति चेत्तत्राह—अथ यवनत्रिकोट्या यवनं पुरः दृष्ट्वा इति। अथ अनन्तरम्। यवनत्रिकोट्या यवनानां यवनजातीयानां त्रिकोट्या कोटित्रयेण। अन्वितमिति शेषः। यवनं यवनराजम्। दृष्ट्वा आलक्ष्य। म्लेच्छजनपरिहारायेति भावः ॥

एवं स्वजनान् द्वारकां प्रापय्य पुनः किमकरोत् भगवानित्याकाङ्क्षायामाह—

पद्भ्यां त्वं पद्ममाली चकित इव पुरान्निर्गतो धावमानो
म्लेच्छेशेनानुयातो वधसुकृतविहीनेन शैले न्यलैषीः।
सुप्तेनाङ्घ्र्याहतेन द्रुतमथ मुचुकुन्देन भस्मीकृतेऽस्मिन्
भूयास्मै गुहान्ते सुललितवपुषा तस्थिषे भक्तिभाजे ॥ १० ॥

**पद्भ्यामिति ॥** पद्ममाली त्वं पद्भ्यां पुरात् निर्गतः चकितः इव धावमानः म्लेच्छेशेन अनुयातः शैले न्यलैषीः। पद्ममाली पङ्कजमालां दधानः। त्वं श्रीकृष्णः। पद्भ्यां पादाभ्याम्। पुरात् मधुरापुरात्। निर्गतः प्रयातः। चकितः भीतः। इवशब्देन वस्तुतो भीत्यभावो दर्शितः। धावमानः पलायमानः। म्लेच्छेशेन म्लेच्छानां यवनानामीशेन राज्ञा। अनुयातः अनुगतः। भवन्तं भीतं मत्वा गृहीतुमिति भावः। शैले गिरिगह्वरे।

न्यलैषीः निलीनोमूः । ननु कुतो भगवांस्तं नावधीदित्याशङ्कायामाह—वधसुकृत विहीनेन इति । वधसुकृतेन भगवत्कर्तृकवधप्रापकेन सुकृतेन विहीनः रहितः । भगवत्कर्तृकस्य वधस्य सुकृतैकलभ्यत्वादिति भावः । अथ त्वम् अस्मिन् सुप्तेन मुचुकुन्देन भस्मीकृते अस्मै भूपाय गुहान्ते सुललितवपुषा तस्थिषे । अथ अनन्तरम् । त्वं श्रीकृष्णः । अस्मिन् यवने । सुप्तेन निद्राणेन । मुचुकुन्देन ऐक्ष्वाकेण केनचिद्राज्ञा । कदाचिदैक्ष्वाको मुचुकुन्दो नाम राजा देवानां संग्रामे साहाय्यं कर्तुं देवलोकमगच्छत्, तदा निद्राभावेन श्रान्तो राजा महेन्द्रेण वरं वृणीष्वेति पृष्टः निद्रां प्रार्थितवान् । तदा प्रभृति देवदत्तया निद्रया सुखं गुहाभ्यन्तरे सुष्वापेति कथाऽत्रानुसन्धेया । भस्मीकृते दग्धे सति । भस्मीकरणे हेतुमाह—अङ्घ्रयाहतेन इति । अङ्घ्रया पादेनाहतेन । यवनेनेत्यर्थाल्लभ्यते । अस्मै भूपाय मुचुकुन्दाय । गुहान्ते गह्वराभ्यन्तरे । सुललितवपुषा सुतरां ललितेन मनोहरेण वपुषा शरीरेण उपलक्षित । तस्थिषे आत्मानं प्रदर्श्य स्थितवानसीत्यर्थः । युक्तमेतदात्मनः प्रदर्शनमिति दर्शयितुं राजानं विशिनष्टि—भक्तिभाजे इति । भक्तायेत्यर्थः ॥

ऐक्ष्वाकोऽहं विरक्तोऽस्म्यखिलनृपसुखे त्वत्प्रसादैककाङ्क्षी
हा देवेति स्तुवन्तं वरविततिषु तं निस्पृहं वीक्ष्य हृष्यन् ।
मुक्तेस्तुल्यां च भक्तिं धुतसकलमलां मोक्षमप्याशु दत्वा
कार्यं हिंसाविशुद्ध्यै तप इति च तदा प्रात्थ लोकप्रतीत्यै ॥ ११ ॥

ऐक्ष्वाक इति ॥ त्वं तदा मुक्तेः तुल्यां धुतसकलमलां भक्तिं च आशु मोक्षमपि दत्वा इति प्रात्थ च । त्वं श्रीकृष्णः । तदा तस्मिन् समये । मुक्तेः मोक्षस्य तुल्या सदृशीम् । धुतसकलमलां विनिर्धूताशेषसंसारक्लेशाम् । अत एवास्या दुःखासंसर्गेण निरतिशयानन्दस्वरूपतया च मोक्षतुल्यत्वमिति ध्येयम् । यद्वक्ष्यति—'त्वद्भक्त्या तुष्टबुद्धेः' इत्यादिना । धुतसकलमिति पाठे अज्ञानकल्पित संसारनिवृत्तिरूपमिति मोक्षविशेषणतया योजनीयम् । भक्तिं प्रेमलक्षणाम् । मोक्षप्राप्तिपर्यन्तं मा भूदस्य संसारक्लेश इति मत्वेति भाव । आशु समनन्तरम् ।

ब्राह्मणजन्मान्त इत्यर्थः ।' न तु तस्मिन्नेव जन्मनि ।' इति एवम् । प्रात्थ अकथयः । चकारः समुच्चये । भगवत उक्तिप्रकारमाह—हिंसाविशुद्ध्यै तपः कार्यमिति । हिंसाविशुद्ध्यै हिंसाया वधजनितपाप्मनो विशुद्ध्यै मोचनाय । कार्यं कर्तव्यम् । ननु भगवद्दर्शनेनैव कृतार्थस्य मुचुकुन्दस्य किं तपसेत्या शङ्कायामाह—लोकप्रतीत्यै इति । लोकानां जनानां प्रतीतिर्ज्ञानम् । लोकान् राजधर्मं बोधयितुमित्यर्थः । ननु कुतो भगवान् मुचुकुन्दाय ऐहिकसुखसाधकान् वरान् नायच्छदित्याशङ्कायामाह—तम् इति स्तुवन्तं वरविततिषु निस्पृहं वीक्ष्य हृष्यन्निति । तं मुचुकुन्दम् । इति अनेन प्रकारेण । स्तुवन्तं स्तुतिं कुर्वाणम् । वरविततिषु वराणां विततिषु सञ्चयेषु । निस्पृहं निर्गता स्पृहा अभिलाषो यस्मात्तम् । वीक्ष्य अवगम्य । हृष्यन् प्रहृष्टमनाः सन् । स्तुतिप्रकारमाह—हा देव अहम् ऐक्ष्वाकः अखिलनृपसुखे विरक्तः त्वत्प्रसादैककाङ्क्षी अस्मि इति । भगवद्दर्शनजनितप्रमोदवशात् सम्बोधनेऽत्र हाकारः । देव प्रकाशमान । ऐक्ष्वाकः इक्ष्वाकुवंशजः । अखिलनृपसुखे समस्तराजभोगे । विरक्तः जातवैराग्यः । त्वत्प्रसादैककाङ्क्षी तव प्रसादमेकमेवाकाङ्क्षमाणः ॥

अथ यवनसैन्यवधादि संक्षेपेणाह—

तदनु मधुरां गत्वा हत्वा चमूं यवनाहृतां
　मगधपतिना मार्गे सैन्यैः पुरेव निवारितः ।
चरमविजयं दर्पायास्मै प्रदाय पलायितो
　जलधिनगरीं यातो वातालयेश्वर पाहि माम् ॥ १२ ॥

तदन्विति ॥ हे वातालयेश्वर तदनु मधुरां गत्वा यवनाहृतां चमूं हत्वा मार्गे मगधपतिना सैन्यैः पुरा इव निवारितः अस्मै दर्पाय चरमविजयं प्रदाय पलायितः जलधिनगरीं यातः त्वं मां पाहि । वातालयेश्वर गुरुवायुपुरनाथ । तदनु तदनन्तरम् । मधुरां मधुरापुरीम् । गत्वा प्राप्य । यवनाहृतां यवनेन आहृताम् आनीताम् । चमूं मधुरां पर्यवष्टभ्य वर्तमानां

न्यलपीः निलीनोभूः। ननु कुतो भगवांस्तं नावधीदित्याशङ्कायामाह—वधसुकृत विहीनेन इति। वधसुकृतेन भगवत्कर्तृकवधप्रापकेन सुकृतेन विहीनः रहितः। भगवत्कर्तृकस्य वधस्य सुकृतैकलभ्यत्वादिति भावः। अथ त्वम् अस्मिन् सुप्तेन मुचुकुन्देन भस्मीकृते अस्मै भूपाय गुहान्ते सुललितवपुषा तस्थिषे। अथ अनन्तरम्। त्वं श्रीकृष्णः। अस्मिन् यवने। सुप्तेन निद्राणेन। मुचु कुन्देन ऐक्ष्वाकेण केनचिद्राज्ञा। कदाचिदैक्ष्वाको मुचुकुन्दो नाम राजा देवानां संग्रामे साहाय्यं कर्तुं देवलोकमगच्छत्, तदा निद्राभावेन श्रान्तो राजा महेन्द्रेण वरं वृणीष्वेति पृष्टः निद्रां प्रार्थितवान्। तदा प्रभृति देवदत्तया निद्रया सुखं गुहाभ्यन्तरे सुष्वापेति कथाऽत्रानुसन्धेया। भस्मीकृते दग्धे सति। भस्मीकरणे हेतुमाह—अङ्घ्रयाहतेन इति। अङ्घ्रया पादेनाहतेन। यवनेनेत्यर्थाल्लभ्यते। अस्मै भूपाय मुचुकुन्दाय। गुहान्ते गह्वराभ्यन्तरे। सुललितवपुषा सुतरां ललितेन मनोहरेण वपुषा शरीरेण उप लक्षितः। तस्थिषे आत्मानं प्रदर्श्य स्थितवानसीत्यर्थः। युक्तमेतदात्मनः प्रदर्शनमिति दर्शयितुं राजानं विशिनष्टि—भक्तिभाजे इति। भक्तायेत्यर्थः॥

ऐक्ष्वाकोऽहं विरक्तोऽस्म्यखिलनृपसुखे त्वत्प्रसादैककाङ्क्षी
हा देवेति स्तुवन्तं वरविततिषु तं निस्पृहं वीक्ष्य हृष्यन्।
मुक्तेस्तुल्यां च भक्तिं धुतसकलमलां मोक्षमप्याशु दत्वा
कार्यं हिंसाविशुद्ध्यै तप इति च तदा प्रात्थ लोकप्रतीत्यै॥ ११॥

ऐक्ष्वाक इति॥ त्वं तदा मुक्तेः तुल्यां धुतसकलमलां भक्तिं च आशु मोक्षमपि दत्वा इति प्रात्थ च। त्वं श्रीकृष्णः। तदा तस्मिन् समये। मुक्तेः मोक्षस्य तुल्यां सदृशीम्। धुतसकलमलां विनिर्धूताशेषसंसारक्लेशाम्। अत एवास्या दुःखासंसर्गेण निरतिशयानन्दस्वरूपतया च मोक्षतुल्यत्वमिति ध्येयम्। यद्वक्ष्यति—'त्वद्भक्त्या तुष्टबुद्धेः' इत्यादिना। धुतसकलमिति पाठे अज्ञानकल्पित संसारनिवृत्तिरूपमिति मोक्षविशेषणतया योजनीयम्। भक्तिं प्रेमलक्षणाम्। मोक्षप्राप्तिपर्यन्तं मा भूदस्य संसारक्लेश इति मत्वेति भावः। आशु समनन्तरम्।

ब्राह्मणजन्मान्त इत्यर्थः । न तु तस्मिन्नेव जन्मनि । इति एवम् । मात्थ अकथयः । चकारः समुच्चये । भगवत उक्तिप्रकारमाह—हिंसाविशुद्ध्यै तपः कार्यमिति । हिंसाविशुद्ध्यै हिंसाया वधजनितपाप्मनो विशुद्ध्यै मोचनाय । कार्यं कर्तव्यम् । ननु भगवद्दर्शनेनैव कृतार्थस्य मुचुकुन्दस्य किं तपसेत्या शङ्कायामाह—लोकप्रतीत्यै इति । लोकानां जनानां प्रतीतिर्ज्ञानम् । लोकान् राजधर्मं बोधयितुमित्यर्थः । ननु कुतो भगवान् मुचुकुन्दाय ऐहिकसुखसाधकान् वरान् नायच्छदित्याशङ्कायामाह—तम् इति स्तुवन्तं वरविततिषु निस्पृहं वीक्ष्य हृष्यन्निति । तं मुचुकुन्दम् । इति अनेन प्रकारेण । स्तुवन्तं स्तुतिं कुर्वाणम् । वरविततिषु वराणां विततिषु सञ्चयेषु । निस्पृहं निर्गता स्पृहा अभिलाषो यस्मात्तम् । वीक्ष्य अवगम्य । हृष्यन् प्रहृष्टमनाः सन् । स्तुतिप्रकारमाह—हा देव अहम् ऐक्ष्वाकः अखिलनृपसुखे विरक्तः त्वत्प्रसादैककाङ्क्षी अस्मि इति । भगवद्दर्शनजनितप्रमोदवशात् सम्बोधनेऽत्र हाकारः । देव प्रकाशमान । ऐक्ष्वाकः इक्ष्वाकुवंशजः । अखिलनृपसुखे समस्तराजभोगे । विरक्तः जातवैराग्यः । त्वत्प्रसादैककाङ्क्षी तव प्रसादमेकमेवाकाङ्क्षमाणः ॥

अथ यवनसैन्यवधादि संक्षेपेणाह—

तदनु मधुरां गत्वा हत्वा चमूं यवनाहृतां
मगधपतिना मार्गे सैन्यैः पुरेव निवारितः ।
चरमविजयं दर्पायास्मै प्रदाय पलायितो
जलधिनगरीं यातो वातालयेश्वर पाहि माम् ॥ १२ ॥

**तदन्विति** ॥ हे वातालयेश्वर तदनु मधुरां गत्वा यवनाहृतां चमूं हत्वा मार्गे मगधपतिना सैन्यैः पुरा इव निवारितः अस्मै दर्पाय चरमविजयं प्रदाय पलायितः जलधिनगरीं यातः त्वं मां पाहि । वातालयेश्वर गुरुवायुपुरनाथ । तदनु तदनन्तरम् । मधुरां मधुरापुरीम् । गत्वा प्राप्य । यवनाहृतां यवनेन आहृताम् आनीताम् । चमूं मधुरां पर्यवरुध्य वर्तमानां

सेनाम्। हत्वा निहत्य। मार्गे द्वारकागमनमार्गे। मगधपतिना जरासन्धेन। सैन्यैः सैनिकैः सह। पुरेव पुरा यथा तथा। निवारितः वारितः। अस्मै मगधपतये। दर्पाय अहङ्काराय। नत्वशक्ततयेति भावः। चरम विजयं पश्चिमजयमष्टादशे समरे। प्रदाय दत्वा। पलायितः धावन् प्रवर्षणाख्यं गिरिमारुह्य तस्मादुत्पत्य भूमौ पतित्वा जरासन्धेनालक्षितः सन्निति भावः। जलधिनगरीं द्वारकाम्। यातः प्राप्तः। त्वं श्रीकृष्णः। माम् अनन्यशरणम्। पाहि त्रायस्व॥

इति सैरन्ध्रवामुपश्लोकोत्पत्तिवर्णनं जरासन्धादियुद्धवर्णनं मुचुकुन्दानुग्रहवर्णनं च सप्तसप्ततितमदशकं सटिकम्॥

---

अष्टसप्ततितमदशकम्।

अथ दशकद्वयेन भगवतो रुक्मिणीहरणं वर्णयति—

त्रिदिववर्धकिवर्धितकौशलं त्रिदशदत्तसमस्तविभूतिमत्।
जलधिमध्यगतं त्वमभूषयो नवपुरं वपुरञ्चितरोचिषा ॥ १ ॥

त्रिदिववर्धकीति॥ त्वं वपुरञ्चितरोचिषा नवपुरम् अभूषयः। त्वं श्रीकृष्णः। वपुरञ्चितरोचिषा देहकान्त्येत्यर्थः। नवपुरं नूतनराजधानीं द्वारकाम्। नवग्रहणेन नैर्मल्यातिशयो ध्वन्यते। अभूषयः अलङ्कृतवानसि। नवपुरस्य विशेषमाह—त्रिदिववर्धकिवर्धितकौशलं त्रिदशदत्तसमस्तविभूतिमत् जलधिमध्यगतम् इति। त्रिदिववर्धकिवर्धितकौशलं त्रिदिववर्धकिना विश्वकर्मणा वर्धितानि सर्वत्र प्रयत्नेन कृतानि कौशलानि यस्मिंस्तत्। अनेनानन्यसाधारणं शिल्पसौष्ठवमुक्तम्। त्रिदशदत्तसमस्तविभूतिमत् त्रिदशैः

इन्द्रादिलोकपालैः दत्ताः अर्पिताः समस्ताः सकला विभूतयो यस्मिंस्तत्। जलधिमध्यगतं पश्चिमाम्भोधिमध्यस्थम्। अनेन शत्रूणां दुष्प्रवेशत्वमुक्तम्॥

भगवतः परिवेतृत्वशङ्कां परिहर्तुं प्रथमं ज्येष्ठस्य दारपरिग्रहं वर्णयति—

**ददुषि रैवतभूभृति रेवतीं हलभृते तनयां विधिशासनात्।**
**महितमुत्सवघोषमपूपुषः समुदितैर्मुदितैः सह यादवैः॥ २॥**

**ददुषीति॥** त्वं समुदितैः मुदितैः यादवैः सह महितम् उत्सव घोषम् अपूपुषः। त्वं श्रीकृष्णः। समुदितैः सम्मिलितैः। मुदितैः प्रहृष्टैः। सह समम्। महितं महाविभवतया अतिश्लाघ्यम्। उत्सवघोषं पञ्चेन्द्रियमनःप्रमोदजनकं घोषम्। अपूपुषः अकरोः। उत्सवसम्पादन कारणं दर्शयति—रैवतभूभृति विधिशासनात् हलभृते तनयां रेवतीं ददुषि इति। रैवतभूभृति रैवते रेवतपुत्रे ककुद्मिनि भूभृति राजनि। विधिशासनात् विधेर्ब्रह्मणः शासनादाज्ञया। हलभृते बलभद्राय। तनयां पुत्रीम्। रेवतीं तन्नामधेयाम्। ददुषि यच्छति सति॥

अथ भगवतो रुग्मिणीहरणबीजं प्रस्तौति—

**अथ विदर्भसुतां खलु रुग्मिणीं प्रणयिनीं त्वयि देव सहोदरः।**
**स्वयमदित्सत चेदिमहीभुजे स्वतमसा तमसाधुमुपाश्रयन्॥ ३॥**

**अथेति॥** हे देव अथ सहोदरः विदर्भसुतां त्वयि प्रणयिनीं स्वयं चेदिमहीभुजे अदित्सत। देव प्रकाशमान। अथ बलभद्रदारपरिग्रहोत्सव समाप्त्यनन्तरम्। सहोदरः सोदरो रुग्मी। विदर्भसुतां विदर्भराजदुहितरम्। त्वयि श्रीकृष्णे। प्रणयिनीमनुरक्ताम्। रुग्मिणीं तन्नामधेयाम्। स्वयम् आत्मनैव, न तु पित्रोरनुमत्या। चेदिमहीभुजे स्वमित्राय शिशुपालाय। अदित्सत दातुमैच्छत्। ननु कुतोऽयं बन्धूनां कृष्णाय भगिनीं दातुमिच्छता मनुमतिं विनैव चैद्याय दातुमैच्छदित्याशङ्कायामाह—स्वतमसा असाधुं तम्

उपाश्रयन्निति। स्वतमसा स्वस्य तमसा अज्ञानेन। असाधु दुष्टम्। त चैद्यम्। उपाश्रयन् आश्रयन्। कृष्णद्विडित्यर्थः॥

सोदरस्योद्यमं श्रुतवत्या रुक्मिण्या प्रवृत्तिमाह—

**चिरधृतप्रणया त्वयि बालिका सपदि काङ्क्षितभङ्गसमाकुला।**
**तव निवेदयितुं द्विजमादिशत् स्वकदनं कदनङ्गविनिर्मितम्॥ ४॥**

**चिरधृतेति॥** त्वयि चिरधृतप्रणया बालिका काङ्क्षितभङ्गसमाकुला सपदि तव कदनङ्गविनिर्मितं स्वकदनं निवेदयितुं द्विजम् आदिशत्। त्वयि श्रीकृष्णे। चिरधृतप्रणया चिरं चिराय धृतः प्रणयः अनुरागो यया सा। बालिका रुक्मिणी। काङ्क्षितभङ्गसमाकुला काङ्क्षितस्य भगवत्कर्तृकस्यात्मनः पाणिग्रहणस्य भङ्गेन प्रतिबन्धेन समाकुला खिन्ना। सपदि झटिति। तव श्रीकृष्णस्य। कदनङ्गविनिर्मितं कुत्सितेनानङ्गेन कामेन विनिर्मितं कृतम्। पीडाकारित्वादनङ्गस्य कुत्सितत्वमिति वेदितव्यम्। स्वकदनं स्वस्य कदनं पीडाम्। निवेदयितुं विज्ञापयितुम्। द्विजम् आप्तं कंचित् ब्राह्मणम्। आदिशत् आदिदेश॥

रुक्मिण्या समादिष्टस्य द्विजस्य प्रवृत्तिमाह—

**द्विजसुतोऽपि च तूर्णमुपाययौ तव पुरं हि दुराशदुरासदम्।**
**मुदमवाप च सादरपूजितः स भवता भवतापहृता स्वयम्॥ ५॥**

**द्विजसुत इति॥** द्विजसुतः अपि तूर्णं तव पुरम् उपाययौ च। द्विजसुतः ब्राह्मणपुत्रः। अपिस्त्वर्थे। तूर्णं झटिति। तव श्रीकृष्णस्य। पुरं राजधानीम्। उपाययौ प्राप। चशब्देन रुक्मिणीनियोगस्य ब्राह्मणोपागमस्य च यौगपद्यम्, तेन द्विजस्यादरातिशयश्च द्योत्यते। भगवत्पुरस्य दुराशदुष्प्रवेशतामाह—दुराशदुरासदमिति। दुराशैः दुष्टाशयैरेव दुरासदं दुष्प्रापम्। स मुदमवाप च। स द्विजः। मुदं प्रीतिम्। अवाप प्राप। चकारः समुच्चये। अत्र हेतुमाह—भवता स्वयं सादरपूजितः

इति। भवता श्रीकृष्णेन, न त्वन्येन। सादरपूजितः सादरं यथा भवति तथा पूजितः सत्कृतः। भगवत्कृतपूजायाः परमानन्दजनकत्वमाह--भवताप हृता इति। भवतापं संसारसन्तापं हरतीति तेन॥

स च भवन्तमवोचत कुण्डिने नृपसुता खलु राजति रुग्मिणी।
त्वयि समुत्सुकया निजधीरतारहितया हि तया प्रहितोऽस्म्यहम्॥ ६॥

स इति॥ स. भवन्तम् अवोचत च। स. द्विजः। भवन्तं श्रीकृष्णम्। अवोचत अकथयत्। चकारेण पूर्वक्रियासमुच्चायकेनोऽत्तरक्रियायां कालविलम्बाभावो द्योत्यते। उक्तिप्रकारमाह—कुण्डिने नृपसुता रुग्मिणी राजति खलु, अहं त्वयि समुत्सुकया तया प्रहितः अस्मि हि इति। कुण्डिने विदर्भराजपुर्याम्। नृपसुता राजकुमारी। रुग्मिणी तदाख्या। राजति विराजते। खल्विति प्रसिद्धौ। त्वयि श्रीकृष्णे। समुत्सुकया अनुरक्तया। निजधीरता रहितया निजा स्वीया या धीरता धैर्यं तया रहितया वियुक्तया। तया रुग्मिण्या। प्रहित. प्रेषित। हीति निश्चये॥

रुग्मिण्या सन्देशप्रकारमाह—

तव हृताऽस्मि पुरैव गुणैरहं हरति मां किल चेदिनृपोऽधुना।
अयि कृपालय पालय मामिति प्रजगदे जगदेकपते तया॥ ७॥

तवेति॥ हे जगदेकपते तया इति प्रजगदे। जगदेकपते लोकैकनाथ। तया रुग्मिण्या। इति अनेन प्रकारेण। प्रजगदे प्रकर्षेण याच्ञादिपुरस्सरं जगदे उक्तम्। उक्तिप्रकारमाह—अयि कृपालय त्वं मां पालय इति। कृपालय करुणाम्बुधे। अनेन सम्बोधनेन पालनस्यावर्जनीयत्वं द्योत्यते। त्वं श्रीकृष्णः। मामनन्यशरणा रुग्मिणीम्। पालय त्राहि। ननु किमापतितमत्याहितं तवेति चेत्तत्राह—माम् अधुना चेदिनृपः हरति किल इति। मां त्वदायत्तचित्ताम्। चेदिनृपः शिशुपालः। हरतीति वर्तमानसामीप्ये लट्। किलेति वार्तायाम्। बन्धवस्तथा चिकीर्षन्तीति श्रुतमित्यर्थः।

ननु प्रकृष्टराजवंशजातेन तथाविधाया राजकन्यकाया हरणमतीव युक्तम्, तस्य भाग्यैकलभ्यत्वादित्याशङ्कायामाह—अहं पुरा एव तव गुणैः हृता अस्मि इति। पुरैव पूर्वमेव। तव श्रीकृष्णस्य। गुणैः रूपवीर्यादिभिः। हृता त्वदायत्तचित्ता कृता। गृहागतैर्गीयमानास्त्वदीया रूपवीर्यगुणश्रिय उपश्रुत्य त्वय्यतीवासक्तां मामधुना शिशुपालाय दातुं सोदर उपक्रमते, तस्मात् झटिति हे करुणाम्बुधे कृष्ण त्वं मां राक्षसेन विधिनाऽपहृत्य त्रायस्वेत्यर्थः॥

एवमात्मनः प्रार्थना निवेद्य तदस्वीकारे स्वस्य चिकीर्षितमप्याह—

अशरणां यदि मां त्वमुपेक्षसे सपदि जीवितमेव जहाम्यहम्।
इति गिरा सुतनोरतनोद्भृशं सुहृदयं हृदयं तव कातरम्॥ ८॥

अशरणामिति॥ अयं सुहृत् सुतनोः इति गिरा तव हृदयं भृशं कातरम् अतनोत्। अयं सुहृत् रुग्मिण्या प्रेषितो ब्राह्मणः। प्रियतमाप्राणरक्षणोद्यतत्वाद्द्विजस्य भगवन्मित्रत्वमिति द्रष्टव्यम्। सुतनोः रुग्मिण्याः। इति एवंविधया। गिरा सन्देशवचनेन। तव श्रीकृष्णस्य। हृदयं मनः। भृशम् अत्यर्थम्। कातरं प्रियतमाप्राणापायभीरु। अतनोत् चकार। उक्तिप्रकारमाह—त्वं माम् उपेक्षसे यदि अहं सपदि जीवितं जहामि एव इति। त्वं श्रीकृष्णः। उपेक्षसे परित्यजसि। यदि, तर्हीति शेषः। जीवितं प्राणान्। जहामि प्रतङ्कशान् कृत्वा त्यक्ष्यामि। अत्र लटा प्राणत्यागस्य कालविलम्बाभावो द्योत्यते। एवकारेणायोगव्यवच्छेदः। ननु मया त्यक्ता त्वामन्यो रक्षतीत्याशङ्कायामाह—अशरणामिति। अनन्यशरणामित्यर्थः॥

अथ भगवतः प्रतिवचनमाह—

अकथयस्त्वमथैनमये सखे तदधिका मम मन्मथवेदना।
नृपसमक्षमुपेत्य हराम्यहं तदयि तां दयितामसितेक्षणाम्॥ ९॥

अकथय इति॥ अये अथ त्वम् एनम् अकथयः। अये इति सम्बोधने। भगवन्निति शेषः। अथ अनन्तरम्। त्वं श्रीकृष्णः।

एनं द्विजम्। अकथयः उक्तवानसि। उक्तिप्रकारमाह—अयि सखे मयि मन्मथवेदना तदधिका, तत् अहं नृपसमक्षमुपेत्य असितेक्षणां तां दयितां हरामि इति। अयीति सम्बोधने। सखे मित्र। मन्मथवेदना कामपीडा। तदधिका तस्या रुग्मिण्यनुभूयमानाया अधिका। वर्तत इति शेषः। तत् तस्मात्। नृपसमक्षं नृपाणां चैद्यजरासन्धप्रभृतीनां समक्षं प्रत्यक्षम्। उपेत्य प्राप्य। असितेक्षणाम् असिते सितेतरे नीले ईक्षणे नेत्रे यस्यास्ताम्। तां मय्यनुरक्ताम्। दयिता प्रियां रुग्मिणीम्। हरामि राक्षसेन विधिना उद्वहामीत्यर्थः॥

अथ भगवान् कुण्डिनं प्रति जगामेत्याह—

**प्रमुदितेन च तेन समं तदा रथगतो लघु कुण्डिनमेयिवान्।**
**गुरुमरुत्पुरनायक मे भवान् वितनुतां तनुतां निखिलापदाम्॥ १०॥**

प्रमुदितेनेति॥ भवान् तदा लघु प्रमुदितेन तेन समं रथगतः कुण्डिनम् एयिवान् च। भवान् श्रीकृष्णः। लघु क्षिप्रम्। प्रमुदितेन भगवद्वचनं श्रुत्वा सन्तुष्टेन। तेन द्विजेन। समं सह। रथगतः रथमधिरूढः। कुण्डिनं विदर्भपुरीम्। एयिवान् जगाम। चकारेण पूर्वक्रियासमुच्चायकेन प्रतिवचनप्रस्थानयोर्यौगपद्यं तेन भगवतो रुग्मिणीहरणे त्वरा च द्योत्यते। अथ प्रार्थयते—गुरुमरुत्पुरनायक भवान् मे निखिलापदां तनुतां वितनुतामिति। गुरुमरुत्पुरनायक गुरुवायुपुरनाथ। मे ममानन्यशरणस्य निखिलापदां निखिलानामखिलानामापदां विपदाम्। तनुतामल्पत्वम्। वितनुतां क्रियताम्॥

इति द्वारकावासवर्णनं रुग्मिणीपरिणये भगवतः कुण्डिनपुरप्राप्तिवर्णनं च अष्टसप्ततितमदशकम्॥

## एकोनाशीतितमदशकम् ।

अथ भगवत कुण्डिनप्रवेशमाह—

बलसमेतबलानुगतो भवान् पुरमगाहत भीष्मकमानितः ।
द्विजसुत त्वदुपागमवादिनं धृतरसा तरसा प्रणनाम सा ॥ १ ॥

बलसमेतेति ॥ भवान् भीष्मकमानितः पुरमगाहत । भवान् श्रीकृष्ण । भीष्मकमानित भीष्मकेन रुक्मिण्या पित्रा विदर्भराजेन मानित यथावत् पूजित । पुर विदर्भनगरीम् । अगाहत प्राप । भगवान् बलभद्रोऽपि साल्वादीनामुद्यम सोदर श्रीकृष्णमेक कन्या हर्तुं गत चावगम्य कलहशङ्कित तत्साहाय्य कर्तुं तमन्वगच्छदित्याह— बलसमेतबलानुगत इति । बलै सैन्यै समेतेन सहितेन बलेन श्रीबलभद्रेण अनुगत अनुयात सन् । भगवते प्रेषित ब्राह्मण प्रत्यागतमवलोकयन्त्या वैदर्भ्या प्रवृत्तिमाह—सा तरसा द्विजसुत प्रणनाम इति । सा रुक्मिणी । तरसा झटिति । द्विजसुतम् आत्मना भगवते पूर्वं प्रेषित ब्राह्मणपुत्रम् । प्रणनाम अन्यत् प्रियमपश्यन्ती प्रकर्षेण सादर ननाम । श्रियोऽशभूता सा रुक्मिणी नमस्कारेण स्वात्मान समग्रा श्रिय तस्मै समर्पितवतीत्यर्थ । यथोक्त श्रीमद्भागवते—'न पश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा' इति । रुक्मिण्या प्रणामकरणे हेतुमाह—धृतरसा इति । धृत रस प्रीतिर्यया तथा सती । रुक्मिण्या प्रीतिकारण दर्शयति—त्वदुपागमवादिनमिति । भवतीं नेतुमागतो हरिरितीरयन्तमित्यर्थ ॥

भगवतो दिव्यमङ्गलविग्रहस्य रुक्मिण्याश्चालौकिक परस्परानुरूप रूप पश्यता पुरवासिना प्रवृत्तिमाह—

भुवनकान्तमवेक्ष्य भवद्वपुर्नृपसुतस्य निशम्य च चेष्टितम् ।
विपुलखेदजुषां पुरवासिनां सरुदितैरुदितैरगमन्निशा ॥ २ ॥

**भुवनकान्तमिति ॥** निशा पुरवासिनां सरुदितैः उदितैः अगमत्। निशा रात्रिः। पुरवासिनां विदर्भनगरीनिवासिनाम्। सरुदितैः रुदितेन रोदनेन सहितैः। उदितैः प्रलापैः सह। अगमत् अगच्छत्। रोदने हेतुमाह—विपुलखेदजुषामिति। विपुलं महत् खेदं दुःखं जुषन्ते सेवन्त इति तथाविधानाम्। खेदकारणमाह—भुवनकान्तं भवद्वपुः अवेक्ष्य नृप सुतस्य चेष्टितं निशम्य च इति। भुवनकान्तं जगन्मोहनं वैदर्भ्या अनुरूपम्। भवद्वपुः भवतः श्रीकृष्णस्य वपुः दिव्यमङ्गलविग्रहम्। अवेक्ष्य दृष्ट्वा। नृपसुतस्य राजपुत्रस्य रुग्मिणः। चेष्टितम् अनुरूपाय शिशुपालाय रुग्मिण्याः प्रदानोद्यमरूपं व्यापारम्। निशम्य श्रुत्वा। चकारः समुच्चये॥

अथ रुग्मिण्याः कुलदेवीवन्दनयात्रां दर्शयति—

**तदनु वन्दितुमिन्दुमुखी शिवां विहितमङ्गलभूषणभासुरा ।**
**निरगमत् भवदर्पितजीविता स्वपुरतः पुरतः सुभटावृता ॥ ३ ॥**

**तदन्विति ॥** तदनु भवदर्पितजीविता इन्दुमुखी पुरतः सुभटावृता स्वपुरतः निरगमत्। तदनु तदनन्तरम्। भवदर्पितजीविता भवति श्रीकृष्णे अर्पितं समर्पितं जीवितं यया सा। कुलदेवीवन्दनयात्रायां मम हरणं सुकरमिति द्विजमुखेन भगवते निवेदितत्वात् तत्समयस्यासन्नत्वाच्चात्मनो भगवत्सङ्गमेकमेव काङ्क्षन्ती सम्यङ्मुकुन्दचरणाम्बुजमनुध्यायन्तीत्यर्थः। इन्दुमुखी शशाङ्कवदना रुग्मिणी। पुरतः पुरस्तात्। सुभटावृता सुभटैः शोभनैः शूरैः सन्नद्धैरुद्यतायुधैश्च भटैः सैनिकैरावृता परिवृता। स्वपुरतः स्वस्याः पुरतः कन्यकापुरात् बहिः। निरगमत् निर्जगाम। निर्गमनस्य प्रयोजनमाह—शिवां वन्दितुमिति। शिवां कुलदेवीं भवानीम्। वन्दितुं पूजयितुम्। रुग्मिण्यास्तदानीन्तनं स्वरूपमाह—विहितमङ्गलभूषणभासुरा इति। विहितैः धृतैः मङ्गलभूषणैः मङ्गलार्थैर्भूषणैराभरणैः भासुरा रुचिराङ्गी सती॥

अम्बिकालयं प्राप्ताया रुग्मिण्याः प्रार्थनाप्रकारमाह—

कुलवधूभिरुपेत्य कुमारिका गिरिसुतां परिपूज्य च सादरम् ।
मुहुरयाचत तत्पदपङ्कजे निपतिता पतितां तव केवलम् ॥ ४ ॥

कुलवधूभिरिति ॥ कुमारिका कुलवधूभिः गिरिसुतामुपेत्य सादरं परिपूज्य च तत्पदपङ्कजे निपतिता तव पतितां केवलं मुहुः अयाचत। कुमारिका रुग्मिणी। कुलवधूभिः कुलस्त्रीभिः सह। गिरिसुतां भवानीम्। उपेत्य प्राप्य। सादरम् आदरपूर्वं यथा भवति तथा। परिपूज्य सम्यगाराध्य। गिरिसुतायाः कर्मत्वमत्र। चकारः समुच्चये। तत्पदपङ्कजे तस्याः गिरिसुतायाः पदपङ्कजे पादारविन्दे। निपतिता दण्डवत्प्रणम्येत्यर्थः। तव श्रीकृष्णस्य। पतितां केवलं भर्तृत्वमेव। मुहुः पुनः पुनः। अयाचत प्रार्थयामास। 'नमस्ये त्वाऽम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम्। भूयात् पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ॥' इत्युक्तं श्रीमद्भागवते ॥

अथ मुनिव्रतं त्यक्त्वा रुग्मिणी गिरिजालयान्निर्जगामेत्याह—

समवलोककुतूहलसङ्कुले नृपकुले निभृतं त्वयि च स्थिते ।
नृपसुता निरगाद्गिरिजालयात् सुरुचिरं रुचिरञ्जितदिङ्मुखा ॥ ५ ॥

समवलोकेति ॥ नृपकुले समवलोककुतूहलसङ्कुले त्वयि निभृतं स्थिते च नृपसुता रुचिरञ्जितदिङ्मुखा गिरिजालयात् सुरुचिरं निरगात्। नृपकुले राजमण्डले। समवलोककुतूहलसङ्कुले समवलोके सम्यग्दर्शने यत् कुतूहलं कौतुकं तेन सङ्कुले आकुले सति। त्वयि श्रीकृष्णे। निभृतं रुग्मिणीं हर्तुं रन्ध्रप्रतीक्षं गूढं यथा भवति तथा। स्थिते सति। चकारः समुच्चये। नृपेषु रुग्मिणीं द्रष्टुमवस्थितेषु भगवति तां हर्तुं रन्ध्रं प्रतीक्ष्य गूढं स्थिते च सतीत्यर्थः। नृपसुता रुग्मिणी। रुचिरञ्जितदिङ्मुखा रुच्या प्रभया रञ्जितानि प्रकाशितानि दिङ्मुखानि आशामुखानि यया तथाविधा सती। गिरिजालयात् अम्बिकासदनात्। सुरुचिरं सुतरां शोभनं यथा भवति तथा। निरगात् निर्जगाम॥

गिरिजालयान्निर्गच्छन्तीं रुग्मिणीं दृष्टवतां नृपाणां भगवतश्च समवस्थामाह—

**भुवनमोहनरूपरुचा तदा विवशिताखिलराजकदम्बया।**
**त्वमपि देव कटाक्षविमोक्षणैः प्रमदया मदयाञ्चकृषे मनाक् ॥ ६ ॥**

भुवनमोहनेति ॥ हे देव तदा त्वमपि भुवनमोहनरूपरुचा विवशिताखिलराजकदम्बया प्रमदया कटाक्षविमोक्षणैः मनाक् मदयाञ्चकृषे। देव स्वयम्प्रकाशस्वरूप। अनेन भगवतो मदोदयाद्यनवकाशो ध्वन्यते। तदा रुग्मिण्यागमनसमये। त्वम् आत्मारामः श्रीकृष्णः। अपिर्विरोधे। का कथा पुनरन्येषामिति भावः। भुवनमोहनरूपरुचा जगन्मोहनसौन्दर्यलावण्यसम्पन्नया। विवशिताखिलराजकदम्बया विवशितानि अवशीकृतानि अखिलानि समस्तानि राजकदम्बानि नृपमण्डलानि यया तया। प्रमदया कान्तया रुग्मिण्या। कटाक्षविमोक्षणैः कटाक्षाणां विमोक्षणैः पातनैः। मनागीषत्। मदयाञ्चकृषे सञ्जातमदः कृतः। वस्तुतो भगवतो मदोदयस्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरियमतिशयोक्तिरिति द्रष्टव्यम् ॥

अथ भगवतो रुग्मिणीहरणमाह—

**क्व नु गमिष्यसि चन्द्रमुखीति तां सरसमेत्य करेण हरन् क्षणात्।**
**समधिरोप्य रथं त्वमपाहृथा भुवि ततो विततो निनदो द्विषाम् ॥ ७ ॥**

क्व नु इति ॥ त्वं क्षणात् सरसम् एत्य इति तां करेण हरन् रथं समधिरोप्य अपाहृथाः। त्वं श्रीकृष्णः। क्षणात् झटिति। रथारोहणात् पूर्वमित्यर्थः। यदुक्तं श्रीमद्भागवते—'तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम्' इति। सरसं यथा भवति तथा। एत्य रुग्मिण्याः समीपं प्राप्य। इति एवमुक्त्वा। तां रुग्मिणीम्। करेण हरन्। करेण गृहीत्वेत्यर्थः। रथं सुपर्णलक्षणं स्यन्दनम्। समधिरोप्य समारोप्य। अपाहृथाः अपहृतवान्। सृगालमध्यात् भागहृत् पञ्चानन इव

पश्यत साल्वजरासन्धादीनविगणय्य रुक्मिणी गृहीत्वा सुपर्णलक्षण रथं समारोप्य रामादिभि पुरोगमै सह शनैर्ययावित्यर्थ । भगवत उक्तिप्रकारमाह— हे चन्द्रमुखी त्व क्व नु गमिष्यसि इति। चन्द्रमुखि चन्द्रानने । क्व नु गमिष्यसि । न कुत्रापीत पर त्वया गन्तव्यम्, मदीय रथमारुह्य चिरप्रणयिना मया सहैव गन्तव्यमित्यर्थ । रुक्मिणीहरण पश्यता जरासन्धादीना प्रवृत्तिमाह— तत भुवि द्विषता निनद वितत इति। तत भगवद्गमनानन्तरम्। भुवि भूमौ। द्विषता साल्वादीनाम्। निनद क्रोधसम्भ्रमादिजनित कोलाहल । वितत विस्तृत ॥

अथ साल्वादीना पराजयमाह—

क्व नु गतः पशुपाल इति क्रुधा कृतरणा यदुभिश्च जिता नृपाः ।
न तु भवानुदचाल्यत तैरहो पिशुनकैः शुनकैरिव केसरी ॥ ८ ॥

क्व नु इति ॥ क्रुधा इति कृतरणा नृपा यदुभि जिता च । क्रुधा कोपेन। इति एवमुक्त्वा। कृतरणा कृतो रणो यैस्ते। नृपा साल्वजरासन्धादय । यदुभि यादवै । जिता पराजिता । चकार समुच्चये। नृपाणामुक्तिप्रकारमाह—पशुपाल क्व नु गत इति। पशुपाल इत्युक्तिरवज्ञया। भवान् तु पिशुनकै तै न उदचाल्यत अहो। भवान् श्रीकृष्ण । तुर्विशेषे। पिशुनकै दुर्जनै । तै साल्वादिभि । न उदचाल्यत स्थानान्न चालित । अहो इत्याश्चर्ये। मिलितानामपि द्विषा भवचालनाशक्तिराश्चर्यहेतु । अत्रोपमामाह—शुनकै केसरी इव इति। शुनकै श्वभि । केसरी सिंह ॥

एव साल्वादीना पराजयमुपवर्ण्यानन्तर स्वसार चैद्याय साधयितु कृतप्रतिज्ञस्य रुक्मिणोऽपि पराजयमाह—

तदनु रुक्मिणमागतमाहवे वधमुपेक्ष्य निबध्य विरूपयन् ।
हृतमद परिमुच्य बलोक्तिभिः पुरमया रमया सह कान्तया ॥ ९ ॥

तदन्विति ॥ तदनु त्वं रुग्मिणं निबध्य विरूपयन् हृतमदं बलोक्तिभिः परिमुच्य कान्तया रमया सह पुरम् अयाः । तदनु तदनन्तरम् । त्वं श्रीकृष्णः । रुग्मिणं रुग्मिण्याः सहोदरम् । निबध्य बध्वा । विरूपयन् केशानां वपनेन विरूपं कुर्वन् । अत एव हृतमदं हृतो मदो यस्य तम् । कृत्वेति शेषः । बलोक्तिभिः बलस्य हलायुधस्य उक्तिभिर्वाक्यैः । परिमुच्य त्यक्त्वा । रमया तदंशावतारभूतया वैदर्भ्या । सह समम् । पुरं द्वारकाम् । अयाः गतवानसि । रुग्मिणा कृतमपराधं दर्शयति— आहवे आगतमिति । आहवे युद्धे । कन्यां चैद्याय साधयितुमिति भावः । ननु कुतो न हत इत्यत आह—वधमुपेक्ष्य इति । रुग्मिण्याः प्रार्थनयेति भावः ॥

अथ रुग्मिण्या रमणप्रकारमाह त्रिभिः—

नवसमागमलज्जितमानसां प्रणयकौतुकजृम्भितमन्मथाम् ।
अरमयः खलु नाथ यथासुखं रहसि तां हसितांशुलसन्मुखीम् ॥ १० ॥

नवसमागमेति ॥ हे नाथ त्वं नवसमागमलज्जितमानसां प्रणयकौतुकजृम्भितमन्मथां हसितांशुलसन्मुखीं तां रहसि यथासुखम् अरमयः । नाथ जगद्रक्षक । त्वं श्रीकृष्णः । नवसमागमलज्जितमानसां नवेन नूतनेन समागमेन सङ्गमेन लज्जितं मानसं यस्यास्ताम् । नवग्रहणं लज्जाया आधिक्यद्योतनार्थम् । प्रौढाया अपि कुलाङ्गनायाः किञ्चिल्लज्जासम्भवात् । प्रणयकौतुकजृम्भितमन्मथां प्रणयकौतुकाभ्यां जृम्भित. वर्धितः मन्मथः कामो यस्याः ताम् । अनेनास्या रमणौचित्यं दर्शितम् । हसितांशुलसन्मुखीं हसितांशुभिः शरच्चन्द्रचन्द्रिकाधवलस्मितशोभाभिः लसत् भासमानं मुखं यस्यास्ताम् । इदं च विशेषणं भगवत्सम्भोगजनितहर्षानुभवप्रदर्शनपरम् । तां रुग्मिणीम् । रहसि एकान्ते । यथासुखं सुखमनतिक्रम्य । रमयाग्रहणे रमयामासिथ ॥

विविधनर्मभिरेवमहर्निशं प्रमदमाकलयन् पुनरेकदा ।
ऋजुमतेः किल वक्रगिरा भवान् वरतनोरतनोदतिलोलताम् ॥ ११ ॥

विविधेति ॥ भवान् एवम् अहर्निशं विविधनर्मभिः वरतनोः प्रमदम् आकलयन् पुनः एकदा वक्रगिरा अतिलोलतामतनोत् । भवान् श्रीकृष्णः । एवम् अनेन प्रकारेण । अहर्निशं दिवानिशम् । विविधनर्मभिः विविधैः बहुविधैः नर्मभिः नर्मणे कृतैरालापादिभिः । वरतनोः सुरूपाया रुग्मिण्याः । प्रमदं प्रहर्षम् । आकलयन् विस्तारयन् । वक्रगिरा वक्रोक्त्या । वक्रोक्ति प्रकारश्च 'राजपुत्रीप्सिता भूपैः' इत्यादिश्रीमद्भागवते द्रष्टव्यः । अतिलोलताम् अतिपरवशताम् । अतनोत् अकरोत् । ननु वक्रोक्तितात्पर्यं किं न विदितं तयेत्यत्राह—ऋजुमतेः इति । ऋज्वी कपटानभिज्ञा मतिर्यस्याः सा ॥

तदधिकैरथ लालनकौशलैः प्रणयिनीमधिकं सुखयन्निमाम् ।
अयि मुकुन्द भवच्चरितानि नः प्रगदतां गदतान्तिमपाकुरु ॥ १२ ॥

तदधिकैरिति ॥ अयि मुकुन्द अथ तदधिकैः लालनकौशलैः प्रणयिनीम् इमाम् अधिकं सुखयन् त्वं भवच्चरितानि प्रगदतां नः गदतान्तिम् अपाकुरु । अयीति सम्बोधने । अथ अनन्तरम् । रुग्मिणीं समाश्वास्येति भावः । तदधिकैः ततः पूर्वस्मादप्युपचारादधिकैः । लालनकौशलैः लालनोपायैः । प्रणयिनीं प्रियतमाम् । इमां रुग्मिणीम् । अधिकम् अत्यर्थम् । सुखयन् प्रीणयन् । त्वं श्रीकृष्णः । भवच्चरितानि भवतः श्रीकृष्णस्य चरितानि लीलावतारचरितानि । प्रगदतां प्रकर्षेणोच्चैर्गदतां कीर्तयताम् । नः अस्माकम् । गदतान्तिं रोगपीडाम् । अपाकुरु नाशय ॥

इति रुग्मिणीपरिणयवर्णनं
तोनाशीतितमदशकं सद्विकम् ॥

## अशीतितमदशकम् ।

अथ भगवतः सत्यभामोद्वाहं प्रस्तौति—

सत्राजितस्त्वमथ लुब्धवदर्कलब्धं
दिव्यं स्यमन्तकमणिं भगवन्नयाचीः ।
तत्कारणं बहुविधं मम भाति नूनं
तस्यात्मजां त्वयि रतां छलतो विवोढुम् ॥ १ ॥

**सत्राजित इति ॥** हे भगवन् अथ त्वं लुब्धवत् सत्राजितः दिव्यं स्यमन्तकमणिम् अयाचीः । अथ अनन्तरम् । त्वं श्रीकृष्णः । लुब्धवत् लुब्ध इव । सत्राजितः तन्नाम्नो यादवस्य । दिवि भवं दिव्यम् । स्यमन्तकमणिं स्यमन्तकाख्यं रत्नम् । अयाचीः प्रार्थयामासिथ । ननु कथं तस्य दिव्यरत्नलाभः समभूदित्यत आह—अर्कलब्धमिति । अर्कात् तपसा आराधितात् सूर्याल्लब्धम् । तत्कारणं मम बहुविधं भाति । तत्कारणं तस्य स्यमन्तकयाचनस्य कारणम् । बहुविधं जाम्बवतीलाभेच्छादिरूपं बहुप्रकारम् । भाति प्रतिभाति । तथाऽप्येवं निश्चिनोमीत्याह—तस्य आत्मजां छलतः विवोढुं नूनमिति । तस्य सत्राजितः । आत्मजां दुहितरं गिरा परार्पितां सत्यभामाम् । छलतः व्याजेन । विवोढुं परिणेतुम् । नूनं निश्चिनोमि । स्यमन्तकमणिमयाचीरिति सम्बन्धः । ननु कुतोऽयं निर्बन्ध इति चेत्तत्राह—त्वयि रतामिति । त्वयि श्रीकृष्णे । रतामनुरक्ताम् ॥

भगवताऽभ्यर्थितोऽपि सत्राजिन्न मणिमयच्छत्, तेनापदमप्यन्वभूदित्याह—

अदत्तं तं तुभ्यं मणिवरमनेनाल्पमनसा
प्रसेनस्तद्भ्राता गलभुवि वहन् प्राप मृगयाम् ।
अहन्नेनं सिंहो मणिमहसि मांसभ्रमवशात्
कपीन्द्रस्तं हत्वा मणिमपि च बालाय ददिवान् ॥ २ ॥

अदत्तमिति ॥ तद्भ्राता प्रसेन अनेन तुभ्यम् अदत्तं तं मणिवरं गलभुवि वहन् मृगयां प्राप। तद्भ्राता तस्य सत्राजितो भ्राता सोदरः। प्रसेन· तन्नामा। अनेन सत्राजिता। तुभ्यं श्रीकृष्णाय। अदत्तम् अप्रतिपादितम्। तं मणिवरं स्यमन्तकाख्यं रत्नम्। गलभुवि कण्ठदेशे। वहन् दधान्.। मृगयाम् आखेटम्। प्राप तत्र व्याप्तोऽभूत्। ननु कुतो भगवते सत्राजिन्न मणिवरं दत्तवानिति चेत्तत्राह—अल्पमनसा इति। भगवत्प्रभावानभिज्ञतयेत्यर्थः। एनं सिंहः अहन्। एनं प्रसेनम्। अहन् जघान। अत्र हेतुमाह—मणिमहसि मांसभ्रमवशादिति। मणिमहसि स्यमन्तकतेजसि। मांसभ्रमवशात् महदिदं मांसपिण्डमिति भ्रान्त्या। अपिच कपीन्द्रः तं हत्वा मणिं बालाय ददिवान्। अपिच किञ्च। कपीन्द्रः जाम्बवान्। तं सिंहम्। हत्वा निहत्य। मणिं स्यमन्तकम्। ददिवान् क्रीडनकत्वेन ददौ॥

सत्राजित् भगवत्यपवादमारोपितवानित्याह—

शशंसुः सत्राजिद्गिरमनु जनास्त्वां मणिहरं
जनानां पीयूषं भवति गुणिनां दोषकणिका।
ततः सर्वज्ञोऽपि स्वजनसहितो मार्गणपरः
प्रसेनं तं दृष्ट्वा हरिमपि गतोऽभूः कपिगुहाम् ॥ ३ ॥

शशंसुरिति ॥ सत्राजिद्गिरम् अनु जना त्वां मणिहरं शशंसु.। सत्राजिद्गिरं कृष्णो मद्भ्रातरं हत्वा मणिं जग्राहेत्येवंविधं सत्राजितो वचनम्। अनु पश्चात्। तत् श्रुत्वेत्यर्थ। त्वां श्रीकृष्णम्। मणिहरं रत्नस्यापहर्तारम्। शशंसु. ऊचु·। पूर्वं भगवतो मणियाचनात्तद्वचसि विस्रम्भेणेति भावः। नन्वेवमपि गुणोत्तरे भगवति जना दोषोत्कीर्तनं कथं चक्रुरित्याशङ्कायामर्थान्तरं सामान्यं न्यस्यति—गुणिनां दोषकणिका जनानां पीयूषं भवति इति। गुणिनां गुणशालिनाम्। दोषकणिका दोषस्य कणिका लेशोऽपि। पीयूषं पीयूषवदास्वाद्यं भवतीत्यर्थः। लोकापवादमाकर्णितवतो

भगवतः कृत्यमाह—ततः त्वं सर्वज्ञः अपि स्वजनसहितः मार्गणपरः तं प्रसेनं हरिमपि दृष्ट्वा कपिगुहां गतः अमूः इति। ततः लोकापवादश्रवणानन्तरम्। त्वं श्रीकृष्णः। सर्वं जानातीति सर्वज्ञः। अनेन मार्गणादिकं यद्यपि निरर्थकं भगवतः, तथाऽपि मानुषं भावमनुसृत्य कृतमेतदिति दर्शितम्। अपिर्विरोधे। स्वजनसहितः स्वजनैः सहितः। स्वजनान् साक्षीकृत्येत्यर्थः। मार्गणपरः अन्वेषणपरः। त्वं प्रसेनं मृतम्। हरिं सिंहं च मृतम्। दृष्ट्वा विलोक्य कपिगुहां जाम्बवतो निवासभूतां गुहाम्। गतः क्रमात् प्राप्तः॥

भवन्तमवितर्कयन्नतिवयाः स्वयं जाम्बवान्
मुकुन्दशरणं हि मां क इह रोद्धुमित्यालपन्।
विभो रघुपते हरे जय जयेत्यलं मुष्टिभि-
श्चिरं तव समर्चनं व्यधित भक्तचूडामणिः ॥ ४॥

भवन्तमिति॥ भक्तचूडामणिः जाम्बवान् स्वयम् इति आलपन् इति मुष्टिभिः अलं चिरं तव समर्चनं व्यधित। भक्तचूडामणिः भगवद्भक्तशिरोमणिः। भगवदर्पितात्मा भगवत्प्रीत्यर्थमेव सर्वाणि कर्माणि कुर्वाण इत्यर्थः। जाम्बवान् तन्नाम्ना प्रसिद्धो वानरेन्द्रः। इति अनेन प्रकारेण। आलपन् कथयन्। इति एवं स्तुवन्। अलमत्यर्थम्। चिरं चिराय। तव दशाकृतिकृतः श्रीकृष्णस्य। समर्चनशब्देनात्र प्रहारो लक्ष्यते। भगवतः प्रीत्यतिशयजनकत्वं ध्वन्यते। व्यधित कृतवान्। आलापप्रकारमाह—मुकुन्दशरणं हि मां रोद्धुं कः इति। मुकुन्दशरणं मुकुन्दः शरणं रक्षिता यस्य तम्। हीति प्रसिद्धौ। तथा प्रसिद्धमित्यर्थः। रोद्धुं निरोद्धुम्। इह अत्र जगति। कः आगत इति शेषः। न केवलमहं दशाननादिषु प्रकटितपौरुषः, किन्तु मुकुन्दशरणश्चास्मीत्यतस्त्वरितमपसर, अन्यथा तव प्राणापायः स्यादित्याशयः। स्तुतिप्रकारमाह—विभो रघुपते हरे जय जय इति। विभो परिपूर्ण। रघुपते रघुनाथस्वरूप। हरे विष्णो। जय सर्वोत्कर्षेण वर्तस्व। नन्वयं परमभागवतो वानरेन्द्रः कथं भगवता सह विरोधमाचरदित्याशङ्कायामाह—भवन्तम् अवितर्कयन्निति।

भवन्तं रूपान्तरेण छन्नं रघुपतिम्। अवितर्कयन् अविजानन्। अत्र हेतुमाह—अतिवया. इति। अतिवृद्धत्वाद्विगलितोहापोहशक्तिर्भगवन्तमजानन्नयं जाम्बवान् भगवन्तमेव स्तुवन् मुष्टियुद्धानुरोधेन प्रदक्षिणं परिक्रमन् मुष्टिभिः प्रहरन्नपि पुष्पैर्मन्त्रपूर्वकं समर्चनं कुर्वाण इव भगवतः प्रीतिभाजनं बभूवेति भावः ॥

अथ भगवतो जाम्बवतीपरिग्रहमाह—

बुध्वाऽथ तेन दत्तां
नवरमणीं वरमणिं च परिगृह्णन्।
अनुगृह्णन्नमुमागाः
सपदि च सत्राजिते मणिं प्रादाः ॥ ५ ॥

बुध्वेति ॥ अथ त्वं बुध्वा तेन दत्तां नवरमणीं वरमणिं च परिगृह्णन् अमुम् अनुगृह्णन् आगाः। अथ अनन्तरम्। बुध्वा मुष्टिप्रहारेण सञ्जातव्यथतया भगवन्तं पुराणपुरुषमवगम्य। तेन जाम्बवता। दत्ताम् आग.प्रमार्जनायार्पिताम्। नवरमणीं नवामप्रौढां रमणीं भार्याम्। तेन दत्तं वरमणिं स्यमन्तकम्। चकारः समुच्चये। परिगृह्णन् स्वीकुर्वन्नित्यर्थ.। अमुं जाम्बवन्तम्। अनुगृह्णन् कराम्बुजतलेन तं परामृश्यापगतव्यथं विरचय्य तस्मै श्रेय समृद्धिं प्रदायेत्यर्थः। आगाः द्वारका प्रत्यागतोऽसि। सपदि सत्राजिते मणिं प्रादाः च। सपदि द्वारकाप्राप्त्यनुपदमेव। मणिं स्यमन्तकम्। प्रादाः दत्तवानसि। जनानां संशयमपनेतुमिति बोध्यम्॥

अथ भगवतो मणियाचनस्य फलं सत्यभामालाभं दर्शयति—

तदनु स खलु व्रीलालोलो विलोलविलोचनां
दुहितरमहो धीमान् भामां गिरैव परार्पिताम्।
अदित मणिना तुभ्यं लभ्यं समेत्य भवानपि
प्रमुदितमनास्तस्यैवादान्मणिं गहनाशयः ॥ ६ ॥

तदन्विति ॥ तदनु सः खलु व्रीलालोलः विलोलविलोचनां गिरा एव परार्पितां दुहितरं भामां मणिना तुभ्यम् अदित। सः सत्राजित्। खल्विति त्वर्थे। व्रीलालोलः व्रीलया महाप्रभावे भगवति मिथ्यापवादारोपजनितया लोलश्चञ्चलात्मा। विलोलविलोचनां विलोले चञ्चले विलोचने यस्यास्ताम्। गिरा वचनेनैव, न कर्मणा। परार्पितां परस्मै शतधन्वने अर्पितां दत्ताम्। दुहितरम् आत्मजाम्। भामां तदाख्याम्। मणिना स्यमन्तेन सह। तुभ्यं श्रीकृष्णाय। अदित दत्तवान्। ननु कुतोऽयं सत्राजित् प्रतिज्ञाभङ्गमकरोदिति चेत्तत्राह—अहो धीमानिति। अहो इत्याश्चर्ये। धीमान् बुद्धिमान्। स्वसुतायामासक्ताय भगवते तां प्रदाय स्वापराधमार्जनं करोमीत्याशयेनेति भावः। भवान् अपि प्रमुदितमनाः तस्य एव मणिम् अदात्। भवान् श्रीकृष्णः। प्रमुदितमनाः प्रहृष्टः सन्। तस्य सत्राजित एव, नान्यस्मै। मणिं स्यमन्तकम्। अदात् दत्तवान्। प्रमोदकारणमाह—लभ्यं समेत्य इति। लभ्यं लब्धुमभिलषितं कन्यारत्नम्। समेत्य लब्ध्वा। ननु किमिति भगवान् लब्धं यौतकं मणिवरं तस्मै प्रत्यर्पितवानित्याशङ्कायामाह—गहनाशयः इति। गहनः अन्यैर्ज्ञातुमशक्यः आशयः अन्तःकरणं यस्य सः। भूयोऽप्यस्य मणिहेतुकामापदं विधातुम् अन्यद्वा किञ्चिद्विधातुमिति देवैरपि ज्ञातुमशक्यमिति भावः ॥

अथ सत्राऽजितो वधमाह—

*व्रीलाकुलां रमयति त्वयि सत्यभामां*
*कौन्तेयदाहकथयाऽथ कुरून् प्रयाते।*
*ही गान्दिनेयकृतवर्मगिरा निपात्य*
*सत्राजितं शतधनुर्मणिमाजहार* ॥ ७ ॥

व्रीलाकुलामिति ॥ त्वयि व्रीलाकुलां सत्यभामां रमयति शतधनुः ही गान्दिनेयकृतवर्मगिरा सत्राजितं निपात्य मणिमाजहार। त्वयि श्रीकृष्णे। व्रीलाकुलां नवोढतया लज्जाकुलाम्। सत्यभामां सत्यभामामेव। रमयति

अनवरतं रमयति सति अतिप्रेम्णा अपरा विहायेत्यर्थः। शतधनुः शतधन्वा, यस्मै गिरा प्रागर्पिता सत्यभामा यश्च तस्या अलाभेन सत्राजित्यन्तःप्ररूढ रोषश्च। हीति खेदे। तद्धेतुश्चाक्रूरे कापथमतेरुदयः। गान्दिनेयकृतवर्मगिरा गान्दिनेयस्याक्रूरस्य कृतवर्मणः तन्नाम्नो यादवस्य च गिरा प्रतिज्ञानुसारेण कन्याया अदातारं सत्राजितं जहीत्येवंरूपया। निपात्य हत्वा मणिं स्यमन्तकम्। आजहार अपाहरत्। ननु कथं भगवति जामातरि जाग्रति शतधन्वा सत्राजितं हन्तुं समर्थोऽभूदित्याशङ्कायामाह—अथ कौन्तेयदाहकथया कुरून् प्रयाते इति। अथ अनन्तरम्। कौन्तेयदाहकथया कौन्तेयानां सुहृदां पाण्डवानां दाहकथया। जतुगृहे दग्धाः पाण्डवा इति वृत्तान्तं श्रुत्वे त्यर्थः। कुरून् हस्तिनपुरम्। प्रयाते गते सति ॥

> शोकात् कुरूनुपगतामवलोक्य कान्तां
> हत्वा द्रुतं शतधनुं समहर्षयस्ताम्।
> रत्ने सशङ्क इव मैथिलगेहमेत्य
> रामो गदां समशिशिक्षत धार्तराष्ट्रम् ॥ ८ ॥

शोकादिति ॥ त्वं शोकात् कुरूनुपगतां कान्तामवलोक्य द्रुतं शत धनुं हत्वा तां समहर्षय। त्वं श्रीकृष्णः। शोकात् पितृवधजनितात् दुःखात्। कुरून् हस्तिनपुरम्। उपगतां प्राप्ताम्। कान्तां प्रियां सत्य भामाम्। अवलोक्य दृष्ट्वा। द्रुतं झटिति। शतधनुं शतधन्वानम्। हत्वा निहत्य। तां सत्यभामाम्। समहर्षयः प्रसादितवानसि। ननु प्रियावच नेनान्यस्य वधे महान् जनापवादः स्यादित्यत आह—रत्ने सशङ्क इव इति। रत्ने स्यमन्तके। सशङ्कः ससंशयः इव। मणिहेतोः शतधन्वानं निहत वानिति ख्यापयितुं तद्वासंसि मणिमन्विष्टवानित्यर्थः। रामः मैथिलगेहम् एत्य धार्तराष्ट्रं गदां समशिशिक्षत। रामः बलभद्रः भगवता पुरीं गत्व मणि मन्विष्य शतधन्वना स्यमन्तकं कुत्रचिन्न्यासीकृतमिति कथनेन पर्याकुलचित्तः। मैथिलगेहं मैथिलस्य मिथिलाधिपस्य गेहं राजधानीम्। एत्य प्राप्य। धार्तराष्ट्रं दुर्योधनम्। गदां गदायुद्धम्। समशिशिक्षत अशिक्षयत् ॥

नन्वक्रूरे कथमियं कुत्सिता मतिस्समभूदित्याशङ्कां परिहरति द्वाभ्याम्—

अक्रूर एष भगवन् भवदिच्छयैव
सत्राजितः कुचरितस्य युयोज हिंसाम्।
अक्रूरतो मणिमनाहृतवान् पुनस्त्वं
तस्यैव भूतिमुपधातुमिति ब्रुवन्ति　　॥ ९ ॥

अक्रूर इति ॥ हे भगवन् एषः अक्रूर. भवदिच्छया एव सत्राजितः हिंसां युयोज। भगवन्नैश्वर्यादिसम्पन्न। एषः भगवद्भक्तानामग्रणीः। भवदिच्छया भवतः श्रीकृष्णस्येच्छया। एवकारेणान्येषां व्यवच्छेदः। हिंसां वधम्। युयोज अकारयत्। ननु भगवतः कथं श्वशुरं हन्तुमिच्छा जातेत्याकाङ्क्षायामाह—कुचरितस्य इति। भगवतो मिथ्यापवादारोपणेन निन्दितचरितस्येत्यर्थ.। त्वं पुनः अक्रूरतः मणिमनाहृतवान्। त्वं श्रीकृष्णः। पुनः अनन्तरम्। अक्रूरतः अक्रूरात्। मणिं स्यमन्तकम्। अनाहृतवान् आहृतवान् न भवतीत्यनाहृतवान्। कुत इत्यत आह—तस्य एव भूतिम् उपधातु मिति ब्रुवन्ति इति। तस्य अक्रूरस्य। एवकारेणान्यस्य व्यवच्छेदः। भूतिं विभूतिम्। उपधातुम् उत्पादयितुम्। इति एवम्। ब्रुवन्ति कथयन्ति। अभिज्ञा इति शेष॰॥

ननु किमर्थमक्रूरमेवं भगवान् प्रेरितवानित्यत आह—

भक्तस्त्वयि स्थिरतरः स हि गान्दिनेय-
स्तस्यैव कापथमतिः कथमीश जाता।
विज्ञानवान् प्रशमवानहमित्युदीर्णं
गर्वं ध्रुवं शमयितुं भवता कृतैव　　॥ १० ॥

भक्त इति ॥ हे ईश स. गान्दिनेयः त्वयि भक्तः स्थिरतरः हि, तस्य एव कापथमतिः कथं जाता। ईश जगद्रक्षक। सः यो नन्दगोकुलं गच्छन् भगवच्चरणाङ्कितेषु पांसुषु वेष्टनादिकं चकार। त्वयि श्रीकृष्णे। स्थिरतरः अतिशयेन निश्चलस्वभावः। भगवत्यनपायिन्या भक्त्या समन्वित

इत्यर्थः। हीति प्रसिद्धौ। तस्य तथाविधस्याक्रूरस्य। एवकारो विरोधे। कापथमतिः कापथे हिंसादौ मतिरभिलाषः। कथं जाता। नैतदुपपद्यत इत्यर्थः। अथात्र काञ्चिदुपपत्तिमाह—अहं विज्ञानवान् प्रशमवान् इति उदीर्णं गर्वं शमयितुमेव भवता कृता ध्रुवमिति। विज्ञानवान् विज्ञानसम्पन्नः। प्रशमवान् प्रशान्तः। इति एवंरूपम्। उदीर्णम् उद्रिक्तम्। गर्वम् अहङ्कारम्। शमयितुं नाशयितुम्। एवकारेण नान्यत् किमपि कारणं विचारमार्गमवतरतीति दर्शितम्। भवता श्रीकृष्णेन। कृता विहिता। ध्रुवम् तथा सम्भावयामीत्यर्थः॥

अथ भगवतो मणिप्रकटनमाह—

यातं भयेन कृतवर्मयुतं पुनस्त-
माहूय तद्विनिहितं च मणिं प्रकाश्य।
तत्रैव सुव्रतधरे विनिधाय तुष्यन्
भामाकुचान्तशयनः पवनेश पायाः ॥ ११ ॥

**यातमिति॥** हे पवनेश पुनः भयेन कृतवर्मयुतं यातं तम् आहूय तद्विनिहितं मणिं प्रकाश्य च तत्र एव विनिधाय तुष्यन् भामाकुचान्तशयनः त्वं पायाः। पवनेश गुरुवायुपुरनाथ। पुनः अनन्तरम्। भयेन सत्राजितो हन्तुः शतधन्वनो वधः समभूत् पुनस्तत्रेरकयोरपि वधो भावीति विचिन्त्य भयेन। कृतवर्मयुतं कृतवर्मणा तन्नाम्ना स्वमित्रेण युतम्। यातं देशान्तरं गतम्। तम् अक्रूरम्। आहूय दूतमुखेन। तद्विनिहितं शतधन्वना तस्मिन्नक्रूरे विनिहितं न्यासीकृतम्। मणिं स्यमन्तकम्। प्रकाश्य अग्रजादिभ्यः प्रदर्श्य। चकारः समुच्चये। तत्र अक्रूरे। एवकारेणान्यस्य व्यवच्छेदः। विनिधाय समर्प्य। तुष्यन् हृष्टः। भामाकुचान्तशयनः भामायाः स्तनयोरन्तराले शयानः। त्वं श्रीकृष्णः। पायाः रक्ष। मामिति शेषः। अक्रूरे मणेः समर्पणे हेतुः—सुव्रतधरे इति। सुव्रतेतैर्मणेर्दुर्वहत्वात्त्वमेवैनं वोढुं समर्थ इति कथयित्वेत्यर्थः॥

इति स्यमन्तकोपाख्यानं
अशीतितमदशकम् सैकम्॥

## एकाशीतितमदशकम् ।

*अथ भगवतो याज्ञसेनीविवाहगमनादिकं वर्णयितुमुपक्रमते—*

स्निग्धां मुग्धां सततमपि तां लालयन् सत्यभामां
यातो भूयः सह खलु तया याज्ञसेनीविवाहम् ।
पार्थप्रीत्यै पुनरपि मनागास्थितो हस्तिपुर्यां
शक्रप्रस्थं पुरमपि विभो संविधायागतोऽभूः ॥ १ ॥

स्निग्धामिति ॥ हे विभो सततमपि स्निग्धां मुग्धां सत्यभामां लालयन् त्वं भूयः तया सह खलु याज्ञसेनीविवाहं यातः पुनः अपि पार्थ प्रीत्यै मनाक् हस्तिपुर्यामास्थितः शक्रप्रस्थं पुरमपि संविधाय आगतः अभूः । विभो शक्तिसम्पन्न । सततमपि सर्वदापि । स्निग्धां प्रणयिनीम् । मुग्धां मोहनरूपाम् । लालयन् नानाप्रकारैरुपायैः प्रीणयन् । त्वं श्रीकृष्णः । तया सत्यभामया । सह सार्धम् । खल्वित्यवधारणे । सहैवेत्यर्थः । लालयन्निति तया सह गमनहेतुः । याज्ञसेनीविवाहं यज्ञसेनदुहितुः कृष्णाया विवाहम् । तदर्थं पाञ्चालराजधानीमित्यर्थः । यातः गतः । पुनः विवाहानन्तरम् । अपिस्त्वर्थे । पार्थप्रीत्यै पार्थाना पृथात्मजानां युधिष्ठिरप्रमुखानां प्रीत्यै तुष्ट्यै । मनाक् कञ्चित् कालम् । हस्तिपुर्यां हस्तिनाख्ये पुरे । आस्थितः वसन् । शक्रप्रस्थम् इन्द्रप्रस्थाख्यम् । संविधाय विश्वकर्मणा कारयित्वेत्यर्थः । आगतः द्वारकां प्राप्तः ॥

*इदानीं भगवतः सोदर्याः सुभद्रायाः प्रियसखे समर्पणमाह—*

भद्रां भद्रां भवदवरजां कौरवेणार्थ्यमानां
त्वद्वाचा तामहृत कुहनामस्करी शक्रसूनुः ।
तत्र क्रुद्धं बलमनुनयन् प्रत्यगास्तेन सार्धं
शक्रप्रस्थं प्रियसखमुदे सत्यभामासहायः ॥ २ ॥

आत्मानं सप्तधा विभज्येत्यर्थः। निमेषात् झटिति। नग्नजिन्नन्दनां नग्न जितः तन्नाम्नः कोसलराजस्य नन्दनां पुत्रीम्। तां सौन्दर्यादिसम्पदा वृष जिलभ्यत्वेन च प्रसिद्धाम्। सत्यां तदाख्याम्। उदवहः परिणीतवानसि। अयमर्थः——नग्नजिता यः खल्विमान् सप्त वृषवरानोजसा बध्नीयात्, तस्मै दुहितरं रूपसम्पन्नां दास्यामीति प्रतिश्रुतत्वात् सप्तधाऽऽत्मानं विभज्य एकै केनैकैकमिति युगपदेव तान् सप्तापि वृषवरान् बध्वा तुष्टेन नग्नजिता प्रदत्तां सत्यां परिणीतवानसीति। हे देव अथ सन्तर्दनाद्या. ते तत्सोदर्यां भद्रां नाम प्रददुः। देव प्रकाशमान। अथ सत्याविवाहानन्तरम्। सन्तर्द नाद्याः सन्तर्दनप्रभृतयः केकयराजपुत्राः। ते तुभ्यं श्रीकृष्णाय। तत्सोदर्यां सन्तर्दनादीनां सोदरीम्। भद्रां नाम कन्यामिति शेषः। अथवा नामेति प्रसिद्धौ। अस्य प्रददुरित्यनन्तरं योजना। हे वरद सा अपि भवतः पैतृष्वसेयी। वरद भक्ताभीष्टवरप्रद। सा भद्रा। समुच्चयार्थोऽपिशब्दो भद्राया मित्रविन्दासम्बन्धं दर्शयति। पैतृष्वसेयी पितृष्वसुर्वसुदेवभगिन्याः श्रुतकीर्तेः पुत्री ॥

अथ भगवतो लक्ष्मणाहरणमाह——

पार्थाद्यैरप्यकृतलवनं तोयमात्राभिलक्ष्यं
लक्षं छित्वा शफरमहृथा लक्ष्मणां मद्रकन्याम्।
अष्टावेवं तव समभवन् वल्लभास्तत्र मध्ये
शुश्रोथ त्वं सुरपतिगिरा भौमदुश्चेष्टितानि ॥ ५ ॥

पार्थाद्यैरिति॥ त्वं पार्थाद्यै अपि अकृतलवनं तोयमात्राभिलक्ष्यं लक्षं शफरं छित्वा मद्रकन्यां लक्ष्मणां अहृथाः। त्वं श्रीकृष्ण। पार्थाद्यैः भीमदुर्योधनमागधप्रभृतिभिः। अपिशब्देन का कथा पुनरन्येषामिति द्योत्यते। अकृतलवनम् अकृतं लवनं छेदनं यस्य। अत्र हेतुतयोक्तम्——तोयमात्राभि लक्ष्यमिति। तोयमात्रे जले केवलं प्रतिबिम्बितया अभिलक्ष्यं द्रष्टुं शक्यम्। लक्षं शरव्यम्। शफरं मीनप्रतिमाम्। छित्वा शरेण विध्वा। मद्रकन्या

मद्रराजदुहितरम्। लक्ष्मणेत्याख्या। अहृथा हृतवानसि। एवं तव अष्टौ वल्लभाः समभवन्। एवम् उक्तप्रकारेण। अष्टौ रुक्मिणी, जाम्बवती, सत्यभामा, कालिन्दी, मित्रविन्दा, सत्या, भद्रा, लक्ष्मणा चेत्यष्टौ। वल्लभा. भार्याः। अथ भगवतो नरकासुरवधं वर्णयितुमुपक्रमते—तत्र मध्य इत्यादिना। त्वं तत्र मध्ये सुरपतिगिरा भौमदुश्चेष्टितानि शुश्रोथ। त्वं श्रीकृष्ण.। तत्र मध्ये तस्मिन्नवसर/इत्यर्थ.। अथवा, तत्र वल्लभासम्बन्धिनि मध्ये। वल्लभाभि· सहेत्यर्थ.। रममाण इति शेषः। सुरपतिगिरा सुरपतेरिन्द्रस्य गिरा भौमेन मातृकुण्डलादीन्यपहृतानि, ततस्तं हत्वाऽस्मान् पालयेत्यादि वाचा। भौमदुश्चेष्टितानि भौमस्य भूमेरपत्यस्य नरकस्य दुश्चेष्टितानि जगत्पीडनानि कर्माणि। शुश्रोथ श्रुतवानसि॥

इदानीं भगवतो जैत्रयात्रादिकं वर्णयति—

**स्मृतायातं पक्षिप्रवरमधिरूढस्त्वमगमो**
**वहन्नङ्के भामामुपवनमिवारातिनगरम्।**
**विभिन्दन् दुर्गाणि त्रुटितपृतनाशोणितरसैः**
**पुरं तावत् प्राग्ज्योतिषमकुरुथाः शोणितपुरम्॥ ६॥**

**स्मृतायातमिति॥** त्वं स्मृतायातं पक्षिप्रवरम् अधिरूढ अङ्के भामा वहन् अरातिनगरम् अगम·। त्वं श्रीकृष्ण.। स्मृतायातं स्मरणमात्रेण आयातम्। पक्षिप्रवरं गरुडम्। अधिरूढ आरूढ। अङ्के उत्सङ्गे। भामा सत्यभामाम्। वहन् उद्वहन्। अरातिनगरम् अरातेर्नरकासुरस्य नगरं पुरम्। अगमः गतवानसि। अत्रोत्प्रेक्षते—उपवनमिवेति। उपवनम् उद्यानम्। इवेति सम्भावनायाम्। प्रियतमाया अङ्के वहनमारामसम्भावनाबीजम्। उत्प्रेक्षया च शत्रुसंहारस्यारामविहारवदाह्लादकत्वमनायाससाध्यता च द्योत्यते। त्वं तावत् दुर्गाणि विभिन्दन् त्रुटितपृतनाशोणितरसै. प्राग्ज्योतिषं पुरं शोणितपुरम् अकुरुथाः। तावत् प्रथमम्। दुर्गाणि गिरिशस्त्रजलाग्न्यादिमयानि। विभिन्दन् विपाटनादिना नाशयन्। त्रुटितपृतनाशोणितरसै. त्रुटिताया. छिन्नायाः

पृतनायाः सेनायाः शोणितरसैः रुधिरद्रवैः। प्राग्ज्योतिषमिति नाम ग्रहणम्। पुरं शोणितपुरं रक्तवर्णं कृतमित्यर्थः॥

अथ भगवतो मुरमर्दनं नरकासुरवधं चाह—

मुरस्त्वां पञ्चास्यो जलधिवनमध्यादुदपतत्
स चक्रे चक्रेण प्रदलितशिरा मङ्क्षु भवता।
चतुर्दन्तैर्दन्तावलपतिभिरिन्धानसमरं
रथाङ्गेन छित्वा नरकमकरोस्तीर्णनरकम् ॥ ७ ॥

**मुर इति॥** पञ्चास्यः मुरः जलधिवनमध्यात् त्वाम् उदपतत्। पञ्चास्यः पञ्चवक्त्रः। मुरः मुरासुरः। जलधिवनमध्यात् जलधेः जलदुर्गस्य वनस्य जलस्य मध्यात्। त्वां श्रीकृष्णम्। उदपतत् आपपात। सः भवता मङ्क्षु चक्रेण प्रदलितशिराः चक्रे। सः मुरः। भवता श्रीकृष्णेन। मङ्क्षु झटिति। चक्रेण सुदर्शनाख्येन भगवतो वरायुधेन। प्रदलितशिराः प्रदलितानि छिन्नानि शिरांसि मस्तकानि यस्य सः। चक्रे कृतः। त्वं चतुर्दन्तैः दन्तावलपतिभिः इन्धानसमरं नरकं रथाङ्गेन छित्वा तीर्णनरकम् अकरोः। त्वं श्रीकृष्णः। चतुर्दन्तैः चत्वारो दन्ता येषां तैः। दन्तावलपतिभिः गजेन्द्रैः। इन्धानसमरं प्रवृद्धसंग्रामम्। नरकं नरकासुरम्। रथाङ्गेन सुदर्शनेन। छित्वा छिन्नशिरसं कृत्वा। तीर्णनरकं संसारोत्तीर्णमित्यर्थः। अकरोः कृतवानसि॥

भौमपुत्रे भगवतो राज्यार्पणं वल्लभाना षोडशसहस्रस्य स्वीकारं चाह—

स्तुतो भूम्या राज्यं सपदि भगदत्तेऽस्य तनये
गजञ्चैकं दत्वा प्रजिघयिथ नागान् निजपुरीम्।
खलेनाबद्धानां स्वगतमनसां षोडश पुनः
सहस्राणि स्त्रीणामपि च धनराशिं च विपुलम् ॥ ८ ॥

**स्तुत इति॥** त्वं सपदि भूम्या स्तुतः अस्य तनये भगदत्ते राज्यम् एकं गजं च दत्वा पुनः नागान् खलेन आबद्धानां स्वगतमनसां

स्त्रीणां षोडश सहस्राणि अपि च विपुलं धनराशिं च निजपुरीं प्रजिघयिथ। त्वं श्रीकृष्णः। सपदि झटिति। भूम्या भूमिदेव्या। स्तुतः स्तवैः प्रीणितः। अस्य नरकासुरस्य। तनये पुत्रे। भगदत्त इति नाम। राज्यं राष्ट्रम्। गजं चतुर्दन्तम्। चकारः समुच्चये। दत्वा प्रदाय। पुनः पश्चात्। नागान् चतुर्दन्तान् गजान्। खलेन पापेन नरकासुरेण। आबद्धानां बद्धानाम्। स्वगतमनसां स्वस्मिन् बद्धभावानाम्। विशेषणमिदं भगवतस्तासां स्वीकारे हेतुप्रदर्शनपरम्। अपि च किञ्च। विपुलं महान्तम्। धनराशिं धनसञ्चयम्। चकारः समुच्चये। निजपुरीं द्वारकाम्। प्रजिघयिथ प्राहिणोः॥

भगवतः पारिजातहरणमाह—

भौमापाहृतकुण्डलं तददितेर्दातुं प्रयातो दिवं
शक्राद्यैर्महितः समं दयितया द्युस्त्रीषु दत्तह्रिया।
हृत्वा कल्पतरुं रुषाऽभिपतितं जित्वेन्द्रमभ्यागत-
स्तत्तु श्रीमददोष ईदृश इति व्याख्यातुमेवाकृथाः ॥ ९ ॥

भौमापाहृतेति ॥ त्वं तत् भौमापाहृतकुण्डलम् अदितेः दातुं दिवं प्रयातः द्युस्त्रीषु दत्तह्रिया दयितया समं शक्राद्यैः महितः कल्पतरुं हृत्वा रुषा अभिपतितम् इन्द्रं जित्वा अभ्यागतः। भौमापाहृतकुण्डलं भौमेन नरकेन अपाहृतम् इन्द्रादपहृतं कुण्डलम् अदितेः कर्णाभरणम्। अदितेः इन्द्रजनन्याः। दातुं प्रदातुम्। दिवं स्वर्गम्। प्रयातः यातः। द्युस्त्रीषु शच्युर्वश्यादिषु सुरसुन्दरीषु। दत्तह्रीया रूपातिशयात् दत्ता ह्रीर्लज्जा यया तया। दयितया प्रियया सत्यभामया। समं सह। शक्राद्यैः इन्द्रादिभिः। महितः पूजितः। कल्पतरुं पारिजातम्। हृत्वा अपहृत्य। अभिपतितम् अभिमुखं योद्धुमागतम्। इन्द्रं देवराजम्। जित्वा विजित्य। अभ्यागतः स्वपुरं प्राप्तः। ननु स्थावरजङ्गमात्मकं निखिलमपि जगज्जालं सृष्टवतो भगवतः किमनेन क्षुद्रेण पारिजातेन प्रयोजनमित्याशङ्क्याह—तत् तु श्रीमददोषः ईदृशः इति

व्याख्यातुमेव अकृथाः इति। तत् पारिजातहरणेनेन्द्रस्य परिभवजननम्। श्रीमददोष· श्रीमदेन जनितो दोषः। ईदृशः यथेन्द्रस्य तथा। इति एवम्। व्याख्यातुं प्रकाशयितुम्। एवकारेण प्रयोजनान्तरस्य व्यवच्छेदः। अकृथाः कृतवानसि ॥

अथ भगवतः षोडशसहस्राधिकवल्लभाभिर्विहरणादिकं संक्षेपेणाह—

कल्पद्रुं सत्यभामाभवनभुवि सृजन् द्व्यष्टसाहस्रयोषाः
स्वीकृत्य प्रत्यगारं विहितबहुवपुर्लालयन् केलिभेदैः।
आश्चर्यान्नारदालोकितविविधगतिस्तत्र तत्रापि गेहे
भूयः सर्वासु कुर्वन् दश दश तनयान् पाहि वातालयेश ॥ १० ॥

कल्पद्रुमिति ॥ हे वातालयेश सत्यभामाभवनभुवि कल्पद्रुं सृजन् प्रत्यगारं विहितबहुवपु द्व्यष्टसाहस्रयोषाः स्वीकृत्य केलिभेदैः लालयन् आश्चर्यात् तत्र तत्र गेहे अपि नारदालोकितविविधगतिः भूय सर्वासु दश दश तनयान् कुर्वन् त्वं पाहि। वातालयेश गुरुवायुपुरनाथ। सत्यभामाभवनभुवि सत्यभामाया भवनभुवि गृहारामे। कल्पद्रुम् इन्द्रादपहृतं पारिजातम्। सृजन् स्थापयन्। प्रत्यगारं गृहे गृहे। विहितबहुवपु· विहितानि बहूनि वपूंषि येन सः। भवनं प्रति रूपभेदेन स्थित्येत्यर्थः। द्व्यष्टसाहस्रयोषाः स्त्रीणां षोडशसहस्राणि। स्वीकृत्य युगपत् परिणीय। केलिभेदैः केलीनां विहाराणां भेदैः प्रकारैः। तैस्तैर्विहारैरित्यर्थः। लालयन् प्रीणयन्। आश्चर्यात् एतदाश्चर्यं श्रुत्वेत्यर्थः। यत्र यत्र गेहे नारदोऽगच्छत्, तत्र तत्र गेहेऽपि। नारदालोकितविविधगतिः नारदेन आलोकिता दृष्टा विविधा नानाप्रकारा गतयो गार्हस्थ्यभेदा यस्य सः। भूयः पश्चात् सर्वासु सकलासु वल्लभासु। दश दश प्रत्येकं दशसंख्याकान्। तनयान् पुत्रान्। कुर्वन् उत्पादयन्। त्वं श्रीकृष्ण। पाहि त्रायस्व। मामिति शेषः ॥

इति सुभद्राहरणवर्णनं श्रीकृष्णस्य महिष्यन्तरपरिग्रहवर्णनं नरकासुरवधादिवर्णनं च पञ्चाशीतितमदशकम्

# द्व्यशीतितमदशकम् ।

अथ प्रद्युम्नादिचरितं वर्णयति—

प्रद्युम्नो रौग्मिणेयः स खलु तव कला शम्बरेणाहृतस्तं
हत्वा रत्या सहाप्तो निजपुरमहरद्रुग्मिकन्यां च धन्याम् ।
तत्पुत्रोऽथानिरुद्धो गुणनिधिरवहद्रोचनां रुग्मिपौत्रीं
तत्रोद्वाहे गतस्त्वं न्यवधि मुसलिना रुग्म्यपि द्यूतवैरात् ॥ १ ॥

**प्रद्युम्न इति ॥** रौग्मिणेयः तव कला शम्बरेण आहृतः सः प्रद्युम्नः खलु तं हत्वा रत्या सह निजपुरम् आप्तः धन्यां रुग्मिकन्यां च अहरत् । रौग्मिणेयः रुग्मिणीपुत्र. । तव श्रीकृष्णस्य । कला अंशभूतः । शम्बरेण तन्नाम्नाऽसुरेण । आहृतः अपहृत । जातमात्र एव हृत्वा समुद्रे क्षिप्तो मत्स्येन निगीर्णो, धीवरैर्गृहीत्वा शम्बरायोऽपहारीकृतस्य तस्यैव मत्स्य स्योदरात् पाचकैर्लब्धः, रत्या पोषितो यावदारूढयौवनः तावत्तस्या विदित वृत्तान्तश्चेत्यर्थः । सः प्रसिद्धः प्रद्युम्न इति नाम । खल्विति वा योजना । खल्वित्यवधारणे । तं शम्बरम् । हत्वा निहत्य । रत्या पूर्वस्मिन् जन्मनि स्वस्य वल्लभया । सह साकम् । निजपुरं द्वारकाम् । आप्तः प्राप्तः । धन्यां शुभाम् । रुग्मिकन्यां रुग्मिण स्वमातुलस्य कन्यां दुहितरं रुग्मवतीम् । चकारः समुच्चये । अहरत् हृतवान् । अथ तत्पुत्रः गुणनिधिः अनिरुद्धः रुग्मिपौत्रीं रोचनामवहत् । तत्पुत्र. तस्य प्रद्युम्नस्य पुत्रः । गुणनिधिः गुणशाली । अनिरुद्ध इति नाम । रुग्मिपौत्रीं रुग्मिण. पुत्रस्य पुत्रीम् । रोचनेति नाम । तत्र उद्वाहे त्वं गतः । तत्रोऽद्वाहे रोचनाविवाहे । त्वं श्रीकृष्णः । गतः गतवान् । रुग्मी द्यूतवैरात् मुसलिना न्यवधि अपि । द्यूतवैरात् द्यूतस्य वैरात् छलेन बलभद्रे पराजयमारोप्याधिक्षेपात् । मुसलिना बलभद्रेण । न्यवधि हतः । अपिशब्देन कलिङ्गस्य दन्ताः पातिता इत्युक्तम् ॥

अथ भगवतो बाणयुद्धमवतारयति—

बाणस्य सा बलिसुतस्य सहस्रबाहो
माहेश्वरस्य महिता दुहिता किलोषा ।
त्वत्पौत्रमेनमनिरुद्धमदृष्टपूर्वं
स्वप्नेऽनुभूय भगवन् विरहातुराभूत् ॥ २ ॥

बाणस्येति ॥ हे भगवन् बलिसुतस्य सहस्रबाहो माहेश्वरस्य बाणस्य महिता दुहिता सा उषा त्वत्पौत्रम् अदृष्टपूर्वम् एनमनिरुद्धं स्वप्ने अनुभूय विरहातुरा अभूत् किल। भगवन् ऐश्वर्यादिसम्पन्न। बलिसुतस्य बलि पुत्रस्य। सहस्रबाहो सहस्रं बाहवः करा गिरिशप्रसादाल्लब्धा यस्य तस्य। माहेश्वरस्य महेश्वरसहायस्य बाणस्य बाणासुरस्य। दुहिता पुत्री। महिता पूजिता। सा सौन्दर्यादिसम्पदा प्रसिद्धा। उषेति नाम। त्वत्पौत्रं तव श्रीकृष्णस्य पौत्रं पुत्रस्य प्रद्युम्नस्य पुत्रम्। अदृष्टपूर्वम् उषया पूर्वमदृष्टम्। स्वप्नेऽनुभूय स्वप्ने तेन सह सुरतमनुभूय। विरहातुरा जाग्रदवस्थायां विरहेण वियोगेन आतुरा सन्तप्तमानसा। किलेति वार्तायाम् ॥

अनिरुद्धस्योपासङ्गम दर्शयति—

योगिन्यतीव कुशला खलु चित्रलेखा
तस्याः सखी विलिखती तरुणानशेषान् ।
तत्रानिरुद्धमुषया विदितं निशाया-
मानेष्ट योगबलतो भवतो निकेतात् ॥ ३ ॥

योगिनीति ॥ तस्या सखी चित्रलेखा खलु अशेषान् तरुणान् विलिखती तत्र उषया विदितम् अनिरुद्धं भवतः निकेतात् निशायामानेष्ट। तस्याः उषायाः। सखी वयस्या। चित्रलेखा तदाख्या कुम्भाण्डपुत्री। खल्विति त्वर्थे। विरहविधुरामुषां पश्यन्ती सन्तापकारणं सम्पृच्छ्य विदित स्वप्नवृत्तान्ता सतीति भावः। अशेषान् निखिलान्। तरुणान् यूनः।

विलिखती चित्रे निवेश्य तस्यै किमयं भवत्याऽनुभूतः, किमयं वा भवत्यानुभूत इति तांस्तान् दर्शयित्वा तां पृच्छती सतीत्यर्थः । तत्र तेषु तरुणेषु मध्ये । विदितम् अयमेव मया स्वप्ने दृष्ट इति निवेदितमित्यर्थः । भवतः श्रीकृष्णस्य । निकेतात् गृहात् । निशायां रात्रौ । आनेष्ट आनीतवती । ननु कथमियं चित्रे सकलानप्यदृष्टान् यूनो लिखितुं समर्थाऽभूदित्याशङ्कायामाह—योगिनी अतीव कुशला इति । योगिनी अणिमाद्यैश्वर्यसम्पन्ना । अतीव अतिमात्रम् । कुशला चित्रकर्मादिकलाप्रावीण्यशालिनी । अयमर्थः—चित्रलेखा स्वयोगचक्षुषा दूरस्थान् परोक्षानपि निखिलांस्तरुणान् पश्यन्ती स्ववैदग्ध्येन तांस्तांस्तत्तत्प्रकारेणैव चित्रे विलिखतीति । ननु कथं शत्रुभिर्मनसाऽपि प्रवेष्टुमशक्याया द्वारवत्याः परैर्दुर्धर्षमनिरुद्धमानीतवतीति चेत्तत्राह—योगबलतः इति । योग प्रभावेणेत्यर्थः ॥

कन्यान्तःपुरं गतस्यानिरुद्धस्य वार्तामाह—

कन्यापुरे दयितया सुखमारमन्तं
चैनं कथञ्चन बबन्धुषि शर्वबन्धौ ।
श्रीनारदोक्ततदुदन्तदुरन्तरोषै-
स्त्वं तस्य शोणितपुरं यदुभिर्न्यरुन्धाः ॥ ४ ॥

कन्यापुर इति ॥ शर्वबन्धौ कन्यापुरे दयितया सुखम् आरमन्तं च एनं कथञ्चन बबन्धुषि त्वं श्रीनारदोक्ततदुदन्तदुरन्तरोषैः यदुभिः तस्य शोणितपुरं न्यरुन्धाः । शर्वबन्धौ बाणे । शर्वबन्धावित्युक्त्या बाणस्य परैर्दुर्धर्षत्वमनिरुद्धबन्धने शक्तिश्च द्योत्यते । कन्यापुरे कन्यान्तःपुरे । दयितया प्रियया उषया । सुखं यथा भवति तथा । आरमन्तं निर्बाधं रममाणम् । चकारो वाक्यालङ्कारे । एनमनिरुद्धम् । कथञ्चन कृच्छ्रेण । बबन्धुषि नागपाशबद्धं कुर्वति सति । त्वं श्रीकृष्णः । श्रीनारदोक्ततदुदन्तदुरन्तरोषैः श्रीनारदेनोक्तेन कथितेन तस्य अनिरुद्धस्य उदन्तेन बन्धनवृत्तान्तश्रवणेन दुरन्तः निरवधिः रोषो येषां तैः । यदुभिः यादवैः । तस्य बाणस्य ।

शोणितपुरं शोणिताख्यं पुरम्। न्यरुन्धा. आवृणोः॥

अथ तेषां संग्राममप्रकारमाह—

पुरीपालः शैलप्रियदुहितृनाथोऽस्य भगवान्
समं भूतव्रातैर्यदुबलमशङ्कं निरुरुधे।
महाप्राणो बाणो झटिति युयुधानेन युयुधे
गुहः प्रद्युम्नेन त्वमपि पुरहन्त्रा जघटिषे ॥५॥

पुरीपाल इति॥ भगवान् शैलप्रियदुहितृनाथ. भूतव्रातैः समं यदुबलम् अशङ्कं निरुरुधे। भगवान् ऐश्वर्यादिसम्पन्न.। शैलप्रियदुहितृनाथः शैलस्य हिमवत प्रियदुहितु. प्रियपुत्र्याः पार्वत्या नाथो भर्ता। भूतव्रातैः भूतगणैः। समं सह। यदुबलं यादवसैन्यम्। अशङ्कं निर्भयम्। निरुरुधे रुरोध। ननु किमर्थमिदं भगवता शिवेनाचरितमिति चेत्तत्राह— अस्य पुरीपालः इति। भक्तवात्सल्येन नगरपालकतां गत इत्यर्थः। झटिति महाप्राण. बाणः युयुधानेन युयुधे। झटिति सत्वरम्। महाप्राणः महाबल। बाणः बाणासुर। युयुधानेन सात्यकिना सह। युयुधे अयुध्यत। गुहः प्रद्युम्नेन। गुह स्कन्द। युयुधे इत्यत्रापि सम्बध्यते। त्वं पुरहन्त्रा अपि जघटिषे। त्वं श्रीकृष्णः। पुरहन्त्रा शिवेन। जघटिषे अयुद्ध्यथाः॥

अथ भगवद्विरोधिनां पराजयमाह—

निरुद्धाशेषास्त्रे मुमुहुषि तवास्त्रेण गिरिशे
द्रुता भूता भीताः प्रमथकुलवीराः प्रमथिताः।
परास्कन्दत् स्कन्दः कुसुमशरबाणैश्च सचिवः
स कुम्भाण्डो भाण्डं नवमिव बलेनाशु बिभिदे ॥६॥

निरुद्धाशेषास्त्र इति॥ गिरिशे निरुद्धाशेषास्त्रे तव अस्त्रेण मुमुहुषि भूता. भीताः द्रुता। गिरिशे धूर्जटौ। निरुद्धाशेषास्त्रे निरुद्धानि प्रत्यस्त्रैर्निवारितानि अशेषाणि निखिलान्यस्त्राणि यस्य तस्मिन्। तव श्रीकृष्णस्य।

अस्त्रेण मोहनास्त्रेण । मुमुहुषि मोहमुपगते सति । भूताः भूतगणाः । भीताः भयाक्रान्ताः । द्रुताः पलायिताः । प्रमथकुलवीराः प्रमथिताः । प्रमथकुलवीराः पार्षदकुलवीराः । प्रमथिताः पीडिताः । स्कन्दः कुसुमशरबाणैः परास्कन्दत् च । स्कन्दः गुहः । कुसुमशरबाणैः कुसुमशरस्य प्रद्युम्नस्य बाणैः शरैः । परास्कन्दत् प्रतिनिवृत्तः । सचिवः सः कुम्भाण्डः नवं भाण्डमिव आशु बलेन विभिदे । सचिवः बाणस्य मन्त्री । सः प्रसिद्धः । कुम्भाण्ड इति नाम । नवं नूतनम् । भाण्डं जलेन पूर्णं मृद्भाजनमित्यर्थः । आशु शीघ्रं बलेन बलभद्रेण । विभिदे भिन्नोऽभूत् ॥

एवं बाणपक्षीयाणां पराजयं वर्णयित्वा बाणस्य शिवज्वरस्यापि तमाह—

चापानां पञ्चशत्या प्रसभमुपगते छिन्नचापेऽथ बाणे
व्यर्थे याते समेतो ज्वरपतिरशनैरज्वरि त्वज्ज्वरेण ।
ज्ञानी स्तुत्वाऽथ दत्वा तव चरितजुषां विज्वरं स ज्वरोऽगात्
प्रायोऽन्तर्ज्ञानवन्तोऽपि च बहुतमसा रौद्रचेष्टा हि रौद्राः ॥ ७ ॥

चापानामिति ॥ अथ बाणे चापानां पञ्चशत्या प्रसभमुपगते छिन्नचापे व्यर्थे याते ज्वरपतिः त्वज्ज्वरेण समेतः अशनैः अज्वरि । अथ गिरिशादिषु पराजितेषु । बाणे बाणासुरे । चापानां धनुषाम् । पञ्चशत्या तस्य सहस्रबाहुत्वादिति भावः । प्रसभं बलात्कारेण । उपगते भगवता सह योद्धुमागते । छिन्नचापे छिन्नाः भगवता कृताश्चापा यस्य तस्मिन् । व्यर्थे विरथे । याते प्रतिनिवृत्ते च सति । ज्वरपतिः महेश्वरो ज्वरः । त्वज्ज्वरेण तव श्रीकृष्णस्य ज्वरेण । समेतः युद्ध्यन् । अशनैः सत्वरम् । अज्वरि सन्तप्तोऽभूत् । अथ ज्ञानी सः ज्वरः स्तुत्वा तव चरितजुषां विज्वरं दत्वा अगात् । अथ अनन्तरम् । ज्ञानी तत्त्वज्ञानसम्पन्नः । स्तुत्वा स्तोत्रैः श्रीकृष्णं प्रसाद्य । तव श्रीकृष्णस्य । चरितजुषां चरितानि लीलावतारचेष्टितानि जुषन्ते सेवन्त इति तथोक्तास्तेषाम् । विज्वरं ज्वराभावम् । अगात् गतः । ननु ज्ञानी माहेश्वरो ज्वरः कथं जनानां पीडनं कुर्यात्

इत्यत इआह—हि प्रायः रौद्राः अन्तः ज्ञानवन्तः अपि च बहुतमसा रौद्रचेष्टाः इति। हि यस्मात्। प्रायः बाहुल्येन। रौद्राः रुद्रसम्बन्धिनः। अन्तः हृदि। ज्ञानवन्तः ज्ञानिनः। अपिचेति विरोधे। बहुतमसा तमोगुणाधिक्येन। रौद्रचेष्टाः क्रूरकर्माणः। तथाच स्वाभाविकं तस्य परिपीडनं दुर्वारमिति भावः॥

इदानीं बाणस्य पराजयमाह—

बाणं नानायुधोग्रं पुनरभिपतितं दर्पदोषाद्वितन्वन्
निर्लूनाशेषदोषं सपदि बुबुधुषा शङ्करेणोपगीतः।
तद्वाचा शिष्टबाहुद्वितयमुभयतो निर्भयं तत्प्रियं तं
मुक्त्वा तद्दत्तमानो निजपुरमगमः सानिरुद्धः सहोपः॥ ८ ॥

**बाणमिति॥** त्वं दर्पदोषात् पुनः अभिपतितं नानायुधोग्रं बाणं सपदि निर्लूनाशेषदोषं वितन्वन् बुबुधुषा शङ्करेण उपगीतः तद्वाचा उभयतः शिष्टबाहुद्वितयं निर्भयं तत्प्रियं तं मुक्त्वा तद्दत्तमानः सानिरुद्धः सहोपः निजपुरमगमः। त्वं श्रीकृष्ण.। दर्पदोषात् मम न कोपि समान इति चित्तवृत्तिर्दर्पस्तद्रूपात् दोषात्। पुनः अनन्तरम्। अभिपतितं योद्धुमापतितम्। नानायुधोग्रं नानाप्रकारैरायुधैस्तेषु तेषु करेषु धृतैरुग्रं भयङ्करम्। बाणं बाणासुरम्। सपदि झटिति। निर्लूनाशेषदोषं निर्लूनाः छिन्नाः अशेषाः सर्वे दोषाः भुजा यस्य तम्। वितन्वन् कुर्वन्। केवलमेकस्माद्दर्पदोषादपतितमपि छिन्नगर्वादिनिखिलदोषसञ्चयं वितन्वन्निति च गम्यते। बुबुधुषा आत्मानं विष्णुमप्येकमधिजग्मुषा। शङ्करेण शिवेन। उपगीतः स्तुतः। तद्वाचा तस्य श्रीशङ्करस्य वाचा। उभयतः उभयोर्वामदक्षिणयोः पार्श्वयोरित्यर्थ.। शिष्टबाहुद्वितयं शिष्टमवशिष्टं बाहुद्वितयं बाहुद्वयं यस्य तथोक्तम्। द्वयोः पार्श्वयोर्द्वौ द्वौ करावित्यर्थः। निर्भयं भयरहितम्। तत्प्रियं तस्य श्रीशङ्करस्य प्रियं भक्तम्। तं बाणम्। मुक्त्वा विमुच्य। तद्दत्तमानः तेन बाणेन दत्तो मानः पारिबर्हो यस्मै सः। सानिरुद्धः अनिरुद्धेन सहितः।

सहोष उषया च सहित । निजपुर द्वारकाम्। अगम प्राप्त ॥

एव बाणयुद्धचरितमुपसंहृत्यानन्तरं श्रीकृष्णावतारस्य सर्वोत्कर्षं युक्त्या प्रतिपादयति—

मुहुस्तावच्छक्र वरुणमजयो नन्दहरणे
यम बालानीतौ दवदहनपानेऽनिलसखम् ।
विधिं वत्सस्तेये गिरिशमिह बाणस्य समरे
विभो विश्वोत्कर्षी तदयमवतारो जयति ते ॥ ९ ॥

मुहुरिति ॥ हे विभो विश्वोत्कर्षी अय ते अवतार जयति । विभो कर्तुमकर्तुमन्यथा कर्तुं समर्थ। तत् तस्मात्। विश्वोत्कर्षी विश्वेभ्य सकलेभ्यो देवेभ्य उत्कर्षोऽस्यास्तीति तथाभूत । अय ते अवतार श्रीकृष्णावतार । जयति सर्वोत्कर्षेण वर्तते। तत्पदार्थमाह—शक्र तावत् मुहु नन्दहरणे वरुण बालानीतौ यम दवदहनपाने अनिलसख वत्सस्तेये विधिम् इह बाणस्य समरे गिरिशम् अजय इति। शक्र देवेन्द्रम्। तावदिति स्वर्थो विशेषे वर्तते। तमाह—मुहुरिति। न केवल वरुणादिवदेकवारम्, किन्तु मखभङ्गपारिजातहरणादिष्विति बहुश । नन्दहरणे नन्दस्य हरणे। वरुण प्रचेतसम्। बालानीतौ बालस्य गुरुपुत्रस्य आनीतौ आनयने। यम कृतान्तम्। अनिलसखम् अग्निम्। दवदहनपाने दवदहनस्य वनाग्ने पाने 'अवितुमाशु पपाथ महानलम्' इति पूर्वमुक्ते। वत्सस्तेये गोवत्सापहरणे। विधि ब्रह्माणम्। इह अस्मिन्ननुपदमुक्ते। बाणस्य बाणासुरस्य। समरे युद्धे । गिरिश शिवम्। उक्ताना सर्वेषा समुच्चयार्थमत्र चकारोऽपि योजनीय । अजय जितवानसि ॥

अथ नृगमोक्षमाह—

द्विजरुषा कृकलासवपुर्धर
नृगनृप त्रिदिवालयमापयन् ।

निजजने द्विजभक्तिमनुत्तमा-
मुपदिशन् पवनेश्वर पाहि माम् ॥ १० ॥

द्विजरुषेति ॥- हे पवनेश्वर द्विजरुषा कृकलासवपुर्धरं नृगनृपं त्रिदिवालयमापयन् निजजने अनुत्तमां द्विजभक्तिमुपदिशन् त्वं मां पाहि। पवनेश्वर गुरुवायुपुरनाथ। द्विजरुषा दत्तापहरणजनितेन ब्राह्मणकोपेन। कृकलासवपुर्धरं कृकलासरूपधारिणम्। नृगनृपं नृगाख्यं नृपं राजानम्। त्रिदिवालयं स्वर्गम्। आपयन् प्रापयन्। निजजने स्वस्य पुत्रपौत्रादिषु। अनुत्तमां न विद्यते उत्तमो यस्यास्ताम्। द्विजभक्तिं ब्राह्मणभक्तिम्। उपदिशन्, *नृगस्य ब्राह्मणगवापहरणेन कृकलासत्वं, तद्दानमाहात्म्येन स्वर्गप्राप्तिं* च नृगमुखेन निवेदनपुरस्सरमिति भावः। त्वं श्रीकृष्णः। मामनन्यशरणम्। पाहि त्रायस्व॥

इति उषापरिणयवर्णनं बाणासुरयुद्धवर्णनं नृगस्य शापमोक्षवर्णनं च
त्र्यशीतितमदशकम्

---

त्र्यशीतितमदशकम्।

अथ पौण्ड्रकवधं वर्णयितुमुपक्रमते—

रामेऽथ गोकुलगते प्रमदाप्रसक्ते
हूतानुपेतयमुनादमने मदान्धे।
स्वैरं समारमति सेवकवादमूढो
दूतं न्ययुङ्क्त तव पौण्ड्रकवासुदेवः ॥ १ ॥

राम इति॥ अथ रामे गोकुलगते हूतानुपेतयमुनादमने प्रमदाप्रसक्ते मदान्धे स्वैरं समारमति सेवकवादमूढः पौण्ड्रकवासुदेवः तव दूतं

न्ययुङ्क्त। अथ अनन्तरम्। रामे बलभद्रे। गोकुलगते गोकुलं गोपवाटं गते प्राप्ते। हृतानुपेतयमुनादमने हृतामप्यनुपेतामनागतां यमुनां दमयतीति तथोक्ते। प्रमदाप्रसक्ते प्रमदासु गोपीषु प्रसक्ते आसक्ते। मदान्धे मदेन वारुणीमदिरापानजनितेनान्धे मत्ते। स्वैरं यथेच्छम्। समारमति गोपीभिः सह क्रीडति सति। सेवकवादमूढः त्वमेव नारायणो हरिर्वासुदेव इति सेवकोक्तिभिर्मूढः भगवान् नारायणोऽहमेवेत्यात्मानं मन्यमानः। हरेर्लिङ्गानि यावच्छक्यं दधान इत्यर्थः। पौण्ड्रकवासुदेव इति तस्य राज्ञो नाम। तव श्रीकृष्णस्य। दूतं सन्देशहरम्। न्ययुङ्क्त प्राहिणोत् ॥

पौण्ड्रकस्य सन्देशमाह—

नारायणोऽहमवतीर्ण इहास्मि भूमौ
धत्से किल त्वमपि मामकलक्षणानि ।
उत्सृज्य तानि शरणं व्रज मामिति त्वां
दूतो जगाद सकलैर्हसितः सभायाम् ॥ २ ॥

**नारायण इति ॥** दूत इति त्वा जगाद। दूतः पौण्ड्रकस्य सन्देशहरः। इति अनेन प्रकारेण। त्वां श्रीकृष्णम्। जगाद उक्तवान्। इतिशब्दस्यार्थं दर्शयति—अहं नारायणः, इह भूमौ अवतीर्णः अस्मि, त्वमपि मामकलक्षणानि धत्से किल, तानि उत्सृज्य मां शरणं व्रज इति। अहम् अहमेव। नारायणः विष्णुः। अस्मीत्यत्रापि सम्बध्यते। किञ्च, इह भूमौ अत्र भुवि। अवतीर्णः जातः। अथवा, अहमेव इह भूमाववतीर्णो नारायणोऽस्मीत्यन्वयः। न त्वमिति भावः। ननु ततः किमत आह—धत्स इत्यादि। त्वं श्रीकृष्णः। अपिशब्दः समुच्चये। मामकलक्षणानि मामकानि मत्सम्बन्धीनि लक्षणानि श्रीवत्सकौस्तुभादीनि। धत्से वहसि। किलेति वार्तायाम्। तानि मामकलक्षणानि। उत्सृज्य त्यक्त्वा। मां भूमाववतीर्णं नारायणम्। शरणं व्रज शरणं गच्छ।

कीदृग्वर्तते। अवेयात् अवगन्तु शक्तो भवेत्। यतो द्विषन्नपि भगवन्त पौण्ड्रको भगवदैक्यबुद्ध्या सायुज्य गतोऽभूदिति॥

भगवता श्रीकृष्णेन निकृत्त काशिराजस्य शिरो दृष्ट्वा कुपितस्य तत्पुत्रस्य सुदक्षिणस्य वृत्तान्तमाह—

काशीश्वरस्य तनयोऽथ सुदक्षिणाख्यः
शर्वं प्रपूज्य भवते विहिताभिचारः।
कृत्यानलं कमपि बाणरणातिभीतैः
भूतैः कथञ्चन वृतैः सममभ्यमुञ्चत् ॥ ६ ॥

काशीश्वरस्येति॥ अथ सुदक्षिणाख्य काशीश्वरस्य तनय शर्वं प्रपूज्य भवते विहिताभिचार बाणरणातिभीतै कथञ्चन वृतै भूतै सम कमपि कृत्यानलम् अभ्यमुञ्चत्। अथ अनन्तरम्। सुदक्षिणाख्य सुदक्षिणनामा। काशीश्वरस्य काशिराजस्य। तनय पुत्र। शर्वं शिवम्। प्रपूज्य प्रकर्षेण पूजयित्वा। भवते श्रीकृष्णाय। विहिताभिचार विहित कृत आभिचार आभिचारकर्म येन स। बाणरणातिभीतै बाणस्य बाणासुरस्य रणे युद्धे अतिशयेन भीतै। अत एव कथञ्चन कृच्छ्रेण वृतै परिवार्य स्थितै। सम सह। कमपि अतिशयेनोग्ररूपमित्यर्थ। कृत्यानलम् आभिचारकुण्डोत्थित मूर्तिमन्तमग्निम्। अभ्यमुञ्चत् विससर्ज॥

भगवत कृत्यानिर्वापणमाह—

तालप्रमाणचरणामखिलं दहन्तीं
कृत्यां विलोक्य चकितैः कथितोऽपि पौरैः।
द्यूतोत्सवे किमपि नो चलितो विभो त्व
पार्श्वस्थमाशु विससर्जिथ कालचक्रम् ॥ ७ ॥

तालप्रमाणेति॥ हे विभो त्व तालप्रमाणचरणामखिल दहन्ती कृत्या विलोक्य चकितै पौरै कथित अपि द्यूतोत्सवे किमपि नो चलित। हे विभो

शक्तिसम्पन्न। सम्बोधनमिदं चलनाभावे हेतुप्रदर्शनपरम्। त्वं श्रीकृष्णः। तालप्रमाणचरणाम् आयामपरिणाहाभ्यां तालप्रमाणौ तालवृक्षप्रमाणौ चरणौ पादौ यस्यास्ताम्। अखिलं समस्तं वस्तु। विलोक्य दृष्ट्वा। चकितैः भीतैः। पौरैः पुरवासिभिः। कथितः त्राहि त्राहीत्यभ्यर्थितः। अपिर्विरोधे। किमपि किञ्चिदपि। नो चलितः। आसीरिति शेषः। ननु किं पुनः पौरांस्त्रातुं भगवता कृतमित्याकाङ्क्षायामाह—आशु पार्श्वस्थं कालचक्रं विससर्जिथ इति। आशु झटिति। पार्श्वस्थं पार्श्ववर्ति। कालचक्रं सुदर्शनम्। विससर्जिथ विसृष्टवानसि॥

चक्रेणाभिद्रुतायाः कृत्यायाः कृत्यमाह—

अभ्यापतत्यमितधाम्नि भवन्महास्त्रे
हा हेति विद्रुतवती खलु घोरकृत्या।
रोषात् सुदक्षिणमदक्षिणचेष्टितं तं
पुप्लोष चक्रमपि काशिपुरीमधाक्षीत् ॥ ८ ॥

अभ्यापततीति॥ अमितधाम्नि भवन्महास्त्रे अभ्यापतति हा हा इति विद्रुतवती घोरकृत्या खलु रोषात् सुदक्षिणं पुप्लोष। अमितधाम्नि सूर्यकोटिप्रतिमे। भवन्महास्त्रे भवतः श्रीकृष्णस्य महास्त्रे सुदर्शने। अभ्यापतति अभिमुखमापतति सति। हा हा इति हा हेत्याक्रन्दन्ती। विद्रुतवती पलायिता। घोरकृत्या घोरा भीषणा कृत्या। रोषात् कोपात्। पुप्लोष ददाह। सुदक्षिणप्लोषणे हेतुमाह—अदक्षिणचेष्टितमिति। अदक्षिणम् अनुचितं चेष्टितं कर्म यस्य तम्। अयं भावः—आभिचारस्याब्रह्मण्ये सफलतया शङ्करेणानुगृहीतत्वात्तदनादरेण ब्रह्मण्ये भगवति श्रीकृष्णे प्रयोगाददक्षिणचेष्टितत्वमिति। चक्रं काशिपुरीमपि अधाक्षीत्। चक्रं सुदर्शनम्। काशिपुरी काशिनगरीम्। अधाक्षीत् ददाह॥

अथ विविदवधमाह—

स खलु विविदो रक्षोघाते कृतोपकृतिः पुरा
तव तु कलया मृत्युं प्राप्तुं तदा खलतां गतः।

कीदृग्वर्तते। अवेयात् अवगन्तु शक्तो भवेत्। यतो द्विषन्नपि भगवन्त पौण्ड्रको भगवदैक्यबुद्ध्या सायुज्य गतोऽभूदिति॥

भगवता श्रीकृष्णेन निकृत्त काशिराजस्य शिरो दृष्ट्वा कुपितस्य तत्पुत्रस्य सुदक्षिणस्य वृत्तान्तमाह—

काशीश्वरस्य तनयोऽथ सुदक्षिणाख्यः
शर्वं प्रपूज्य भवते विहिताभिचारः।
कृत्यानलं कमपि बाणरणातिभीतै-
र्भूतैः कथञ्चन वृतैः सममभ्यमुञ्चत् ॥ ६ ॥

काशीश्वरस्येति॥ अथ सुदक्षिणाख्य काशीश्वरस्य तनय शर्वं प्रपूज्य भवते विहिताभिचार बाणरणातिभीतै कथञ्चन वृतै भूतै सम कमपि कृत्या नलम् अभ्यमुञ्चत्। अथ अनन्तरम्। सुदक्षिणाख्य सुदक्षिणनामा। काशी श्वरस्य काशिराजस्य। तनय पुत्र। शर्वं शिवम्। प्रपूज्य प्रकर्षेण पूजयित्वा। भवते श्रीकृष्णाय। विहिताभिचार विहित कृत आभिचार आभिचारकर्म येन स। बाणरणातिभीतै बाणस्य बाणासुरस्य रणे युद्धे अति शयेन भीतै। अत एव कथञ्चन कृच्छ्रेण वृतै परिवार्य स्थितै। सम सह। कमपि अतिशयेनोग्ररूपमित्यर्थ। कृत्यानलम् आभिचारकुण्डात्थित मूर्तिमन्त मग्निम्। अभ्यमुञ्चत् विससर्ज॥

भगवत कृत्यानिर्वापणमाह—

तालप्रमाणचरणामखिलं दहन्तीं
कृत्यां विलोक्य चकितैः कथितोऽपि पौरैः।
द्यूतोत्सवे किमपि नो चलितो विभो त्वं
पार्श्वस्थमाशु विससर्जिथ कालचक्रम् ॥ ७ ॥

तालप्रमाणेति॥ हे विभो त्व तालप्रमाणचरणामखिल दहन्तीं कृत्यां विलोक्य चकितै पौरै कथित अपि द्यूतोत्सवे किमपि नो चलित। हे विभो

शक्तिसम्पन्न । सम्बोधनमिदं चलनाभावे हेतुप्रदर्शनपरम्। त्वं श्रीकृष्णः। तालप्रमाणचरणाम् आयामपरिणाहाभ्यां तालप्रमाणौ तालवृक्षप्रमाणौ चरणौ पादौ यस्यास्ताम्। अखिलं समस्तं वस्तु । विलोक्य दृष्ट्वा । चकितैः भीतैः। पौरैः पुरवासिभिः। कथितः त्राहि त्राहीत्यभ्यर्थितः। अपिर्विरोधे। किमपि किञ्चिदपि। नो चलितः। आसीरिति शेषः। ननु किं पुनः पौरांस्त्रातुं भगवता कृतमित्याकाङ्क्षायामाह—आशु पार्श्वस्थं कालचक्रं विससर्जिथ इति। आशु झटिति। पार्श्वस्थं पार्श्ववर्ति। कालचक्रं सुदर्शनम्। विससर्जिथ विसृष्टवानसि॥

चक्रेणाभिद्रुतायाः कृत्यायाः कृत्यमाह—

अभ्यापतत्यमितधाम्नि भवन्महास्त्रे
　हा हेति विद्रुतवती खलु घोरकृत्या।
रोषात् सुदक्षिणमदक्षिणचेष्टितं तं
　पुप्लोष चक्रमपि काशिपुरीमधाङ्क्षीत्　　॥ ८ ॥

**अभ्यापततीति॥** अमितधाम्नि भवन्महास्त्रे अभ्यापतति हा हा इति विद्रुतवती घोरकृत्या खलु रोषात् सुदक्षिणं पुप्लोष। अमितधाम्नि सूर्यकोटिप्रतिमे। भवन्महास्त्रे भवतः श्रीकृष्णस्य महास्त्रे सुदर्शने। अभ्यापतति अभिमुखमापतति सति। हा हा इति हा हेत्याक्रन्दन्ती। विद्रुतवती पलायिता। घोरकृत्या घोरा भीषणा कृत्या। रोषात् कोपात्। पुप्लोष ददाह। सुदक्षिणप्लोषणे हेतुमाह—अदक्षिणचेष्टितमिति। अदक्षिणम् अनुचितं चेष्टितं कर्म यस्य तम्। अयं भावः—आभिचारस्याब्रह्मण्ये सफलतया शङ्करेणानुगृहीतत्वात्तदनादरेण ब्रह्मण्ये भगवति श्रीकृष्णे प्रयोगाददक्षिणचेष्टितत्वमिति। चक्रं काशिपुरीमपि अधाङ्क्षीत्। चक्रं सुदर्शनम्। काशिपुरी काशिनगरीम्। अधाङ्क्षीत् ददाह॥

अथ विविदवधमाह—

स खलु विविदो रक्षोघाते कृतोपकृतिः पुरा
　तव तु कलया मृत्युं प्राप्तुं तदा खलतां गतः।

नरकसचिवो देशक्लेशं सृजन् नगरान्तिके
झटिति हलिना युध्यन्नद्धा पपात तलाहतः ॥ ९ ॥

स इति ॥ पुरा रक्षोघाते कृतोपकृति स विविद खलु तव कलया तु मृत्यु प्राप्तु तदा खलता गत नरकसचिव देशक्लेश सृजन् नगरान्तिके हलिना युध्यन् झटिति अद्धा तलाहत पपात । पुरा श्रीरामावतार। रक्षोघाते रावणवधे। कृतोपकृति कृता उपकृति उपकारो येन स । स प्रसिद्ध । विविद तन्नामा वानरश्चर । तव श्रीकृष्णस्य । कलया अशेन । मृत्यु मरणम् । भगवता हताना मोक्षप्राप्ते सम्भवादिति भाव । तदा श्रीकृष्णावतार काले । खलता दुष्टताम् । गत प्राप्त । अन्यथा भगवदशेन मृत्युस्तस्य दुर्लभ इत्यवगन्तव्यम्। नरकसचिव नरकस्य नरकासुरस्य सचिव सखा । देशक्लेश देशाना क्लेश पीडाम्। सृजन् कुर्वन्। नगरान्तिके नगरस्य आनर्त स्यान्तिक रैवतके । हलिना श्रीबलभद्रेण । झटिति शीघ्रम् । अद्धा सम्यक् । लीलयेत्यर्थ । तलाहत तलेन पाणितलेन आहत अभिहत । पपात अपतत् मृतोऽभूदित्यर्थ ॥

अथ जाम्बवतीसुतस्य साम्बस्य दुर्योधनसुतापहरणमाह—

साम्ब कौरव्यपुत्रीहरणनियमित सान्त्वनार्थी कुरूणा
यातस्तद्वाक्यरोषोद्धृतकरिनगरो मोचयामास राम ।
ते धात्या पाण्डवेयैरिति यदुपृतना नामुचस्त्व तदानी
त त्वा दुर्बोधलील पवनपुरपते तापशान्त्यै निषेवे ॥ १० ॥

साम्बमिति ॥ राम कुरूणा सान्त्वनार्थी यात तद्वाक्यरोषोद्धृतकरि नगर कौरव्यपुत्रीहरणनियमित साम्ब मोचयामास। राम बलभद्र । कुरूणा कौरवाणाम्। सान्त्वनार्थी सान्त्वनमभिलषन् । यात हस्तिन गत । तद्वाक्य रोषाद्धृतकरिनगर तद्वाक्यजनितेन रोषेण उद्धृत करिनगर येन स । कुरून् सान्त्वयन्तेषामधिक्षेपण जातामर्षा लाङ्गलाग्रेण हस्तिनमुद्विदार्य गङ्गाया कर्षन्नि त्यर्थ । कौरव्यपुत्रीहरणनियमित कौरव्यस्य सुयोधनस्य पुत्र्या लक्ष्मणाया हरणेन

जातकोपैः कुरुभिर्नियमितं कथञ्चित् बद्धम्। साम्बं तन्नामानं जाम्बवत्याः सुतम्। मोचयामास। लक्ष्मणया समं विमोचितवानित्यर्थः। ननु भगवता कुतो न यादवसैन्यं प्रेषितमिति चेत्तत्राह—ते पाण्डवेयैः घात्याः इति तदानीं त्वं यदुपृतनां न अमुचः इति। ते कौरवाः। पाण्डवेयैः पाण्डुपुत्रैः। घात्याः घातयितुं योग्याः। इति एवं विचिन्त्य। तदानीं तस्मिन्नवसरे। त्वं श्रीकृष्णः। यदुपृतनां यादवसेनाम्। न अमुचः न प्राहिणोः। अथ प्रार्थयते—हे पवनपुरपते अहं दुर्बोधलीलं तं त्वां तापशान्त्यै निषेवे इति। पवनपुरपते गुरुवायुपुरनाथ। अहम् अनन्यशरणः अहम्। दुर्बोधलीलं दुर्बोधा अन्यैर्ज्ञातुमशक्या लीलाः क्रीडा यस्य तम्। त्वां श्रीकृष्णम्। तापशान्त्यै तापत्रयोन्मूलनाय। निषेवे। शरणं प्रपन्नोऽस्मीत्यर्थः॥

इति पौण्ड्रकवधवर्णनं काशिपुरीदाहवर्णनं बलभद्रप्रतापवर्णनं च
त्र्यशीतितमदशकम्॥

---

## चतुरशीतितमदशकम्।

अथ भगवतः समन्तपञ्चकगमनमाह—

क्वचिदथ तपनोपरागकाले
　पुरि निदधत् कृतवर्मकामसूनू।
यदुकुलमहिलावृतस्सुतीर्थं
　समुपगतोऽसि समन्तपञ्चकाख्यम्　॥ १ ॥

**क्वचिदिति॥** अथ त्वं क्वचित् तपनोपरागकाले पुरि कृतवर्मकामसूनू निदधत् यदुकुलमहिलावृतः समन्तपञ्चकाख्यं सुतीर्थं समुपगतः असि। अथ अनन्तरम्। त्वं श्रीकृष्णः। क्वचित् कुत्रचित्। तपनोपरागकाले सूर्यग्रहण

नरकसचिवो देशक्लेशं सृजन् नगरान्तिके
झटिति हलिना युध्यन्नद्धा पपात तलाहतः ॥ ९ ॥

स इति ॥ पुरा रक्षोघाते कृतोपकृतिः सः विविदः खलु तव कलया तु मृत्युं प्राप्तुं तदा खलतां गतः नरकसचिवः देशक्लेशं सृजन् नगरान्तिके हलिना युध्यन् झटिति अद्धा तलाहतः पपात । पुरा श्रीरामावतारे । रक्षोघाते रावणवधे । कृतोपकृतिः कृता उपकृतिः उपकारो येन सः । सः प्रसिद्धः । विविदः तन्नामा वानरेश्वरः । तव श्रीकृष्णस्य । कलया अंशेन । मृत्युं मरणम् । भगवता हतानां मोक्षप्राप्तेः सम्भवादिति भावः । तदा श्रीकृष्णावतार काले । खलता दुष्टताम् । गतः प्राप्तः । अन्यथा भगवदंशेन मृत्युस्तस्य दुर्लभ इत्यवगन्तव्यम् । नरकसचिवः नरकस्य नरकासुरस्य सचिवः सखा । देशक्लेश देशानां क्लेशं पीडाम् । सृजन् कुर्वन् । नगरान्तिके नगरस्य आनर्त स्यान्तिके रैवतके । हलिना श्रीबलभद्रेण । झटिति शीघ्रम् । अद्धा सम्यक् । लीलयेत्यर्थ । तलाहत. तलेन पाणितलेन आहतः अभिहतः । पपात अपतत् मृतोऽभूदित्यर्थ ॥

अथ जाम्बवतीसुतस्य साम्बस्य दुर्योधनसुतापहरणमाह—

साम्बं कौरव्यपुत्रीहरणनियमितं सान्त्वनार्थी कुरूणां
यातस्तद्वाक्यरोषोद्धृतकरिनगरो मोचयामास रामः ।
ते घात्याः पाण्डवेयैरिति यदुपृतनां नामुचस्त्वं तदानीं
तं त्वां दुर्बोधलीलं पवनपुरपते तापशान्त्यै निषेवे ॥ १० ॥

साम्बमिति ॥ रामः कुरूणां सान्त्वनार्थी यातः तद्वाक्यरोषोद्धृतकरि नगरः कौरव्यपुत्रीहरणनियमितं साम्बं मोचयामास । रामः बलभद्र । कुरूणां कौरवाणाम् । सान्त्वनार्थी सान्त्वनमभिलषन् । यात· हस्तिनं गत· । तद्वाक्य रोषोद्धृतकरिनगरः तद्वाक्यजनितेन रोषेण उद्धृतं करिनगरं येन सः । कुरून् सान्त्वयंस्तेषामधिक्षेपेण जातामर्षो लाङ्गलाग्रेण हस्तिनमुद्विदार्य गङ्गायां कर्षन्नि त्यर्थः । कौरव्यपुत्रीहरणनियमितं कौरव्यस्य सुयोधनस्य पुत्र्याः लक्षणाया. हरणेन

जातकोपै कुरुभिर्नियमितं कथञ्चित् बद्धम्। साम्बं तन्नामानं जाम्बवत्या. सुतम्। मोचयामास। लक्षणया समं विमोचितवानित्यर्थः। ननु भगवता कुतो न यादवसैन्यं प्रेषितमिति चेत्तत्राह—ते पाण्डवेयैः घात्या. इति तदानी त्वं यदु पृतनां न अमुच इति। ते कौरवाः। पाण्डवेयै पाण्डुपुत्रै। घात्या. घात यितु योग्याः। इति एवं विचिन्त्य। तदानी तस्मिन्नवसरे। त्वं श्रीकृष्णः। यदुपृतनां यादवसेनाम्। न अमुच. न प्राहिणो। अथ प्रार्थयते—हे पवन पुरपते अहं दुर्बोधलीलं तं त्वा तापशान्त्यै निषेवे इति। पवनपुरपते गुरुवायुपुर नाथ। अहम् अनन्यशरण अहम्। दुर्बोधलीलं दुर्बोधा अन्यैर्ज्ञातुमशक्या लीला क्रीडा यस्य तम्। त्वां श्रीकृष्णम्। तापशान्त्यै तापत्रयोन्मूलनाय। निषेवे। शरणं प्रपन्नोऽस्मीत्यर्थ ॥

इति पौण्ड्रकवधवर्णनं काशिपुरीदाहवर्णनं बलभद्रप्रतापवर्णनं च

त्र्यशीतितमदशकम् ॥

---

## चतुरशीतितमदशकम्।

अथ भगवत समन्तपञ्चकगमनमाह -

क्वचिदथ तपनोपरागकाले
　　पुरि निदधन् कृतवर्मकामसूनू।
यदुकुलमहिलावृतस्सुतीर्थं
　　समुपगतोऽसि समन्तपञ्चकाख्यम्　　॥ १ ॥

**क्वचिदिति॥** अथ त्वं क्वचित् तपनोपरागकाले पुरि कृतवर्मकामसूनू निदधत् यदुकुलमहिलावृत. समन्तपञ्चकाख्यं सुतीर्थं समुपगत. असि। अथ अनन्तरम्। त्वं श्रीकृष्ण। क्वचित् कुत्रचित्। तपनोपरागकाले सूर्यग्रहण

काले। पुरि द्वारवत्याम्। कृतवर्मकामसूनू कृतवर्माणमनिरुद्धञ्च। निदधत् नियुक्तवान्। पुरीं रक्षितुं नियुज्येत्यर्थः। यदुकुलमहिलावृतः यदुकुलमहिलाभिः यादवकुलस्त्रीभिः वृतः आवृतः। समन्तपञ्चकाख्यं समन्तपञ्चकमित्याख्या नाम यस्य तत्। सुतीर्थं पापशोधनात् शोभनं तीर्थम्। समुपगतः प्राप्तः॥

भगवतः पाण्डवादिभिः सम्मेलनादिकमाह—

बहुतरजनताहिताय तत्र
त्वमपि पुनन् विनिमज्य तीर्थतोयम्।
द्विजगणपरिमुक्तवित्तराशिः
सममिलथाः कुरुपाण्डवादिमित्रैः ॥ २ ॥

**बहुतरेति ॥** त्वमपि तत्र बहुतरजनताहिताय विनिमज्य तीर्थतोयं पुनन् द्विजगणपरिमुक्तवित्तराशिः कुरुपाण्डवादिमित्रैः सममिलथाः। त्वं श्रीकृष्णः। तत्र समन्तपञ्चके बहुतरजनताहिताय बहुतरायाः असंख्येयायाः जनतायास्तीर्थे स्नानार्थमागतस्य जनसमूहस्य हिताय उपकाराय। विनिमज्य निमज्जनं कुर्वन्। तीर्थतोयं तीर्थोदकम्। पुनन् पावयन्। तीर्थतोयस्य स्वतः पापशोधकत्वेऽपि स्वकर्तृकेन निमज्जनेन सामान्यतीर्थापेक्षया समन्तपञ्चकस्यात्यर्थं पापशोधकत्वमुत्पादयन्नित्यर्थः। द्विजगणपरिमुक्तवित्तराशिः द्विजगणेभ्यः ब्राह्मणसङ्घेभ्यः परिमुक्ता दत्ता वित्तराशयः धनसञ्चया येन सः। कुरुपाण्डवादिमित्रैः कुरुपाण्डवादिभिः कौरवयुधिष्ठिरप्रभृतिभिः मित्रैः सुहृद्भिः। सममिलथाः सम्मिलितोऽभूः॥

श्रीकृष्णवधूनां द्रौपद्याश्च सम्मेलनमाह—

तव खलु दयिताजनैः समेता
द्रुपदसुता त्वयि गाढभक्तिभारा।
तदुदितभवदाहृतिप्रकारै-
रतिमुमुदे सममन्यभामिनीभिः ॥ ३ ॥

**तवेति ॥** त्वयि गाढभक्तिभारा द्रुपदसुता खलु तव दयिताजनैः समेता तदुदितभवदाहृतिप्रकारैः अन्यभामिनीभिः समम् अतिमुमुदे। त्वयि श्रीकृष्णे।

गाढभक्तिभारा गाढः दृढः भक्तिभारः भक्त्यतिशयो यस्याः सा। द्रुपदसुता द्रौपदी। खल्विति स्वर्थे। तव श्रीकृष्णस्य। दयिताजनैः प्रेयसीभिः रुग्मिण्यादिभिः। समेता सम्मिलिता। तदुदितभवदाहृतिप्रकारैः तदुदितैः ताभिः रुग्मिण्यादिभिः उदितैः उक्तैः भवतः श्रीकृष्णस्य कर्तुराहृतिप्रकारैः हरणप्रकारैः। आहरणप्रकारं श्रुत्वेत्यर्थः। अन्यभामिनीभिः सुभद्रादिभिः। समं सह। अति अत्यर्थम्। मुमुदे मुदिताऽभूत्॥

*अथ भगवतो गोपगोपीसङ्गमं दर्शयति—*

**तदनु च भगवन् निरीक्ष्य गोपा-**
**नतिकुतुकादुपगम्य मानयित्वा।**
**चिरतरविरहातुराङ्गरेखाः**
**पशुपवधूः सरसं त्वमन्वयासीः　　॥ ४ ॥**

**तदन्विति॥** हे भगवन् तदनु च त्वं गोपान् निरीक्ष्य अतिकुतुकात् उपगम्य मानयित्वा चिरतरविरहातुराङ्गरेखाः पशुपवधूः सरसम् अन्वयासीः। भगवन् ऐश्वर्यादिसम्पन्न। तदनु च तदनन्तरं तु। गोपान् नन्दादीन्। निरीक्ष्य दृष्ट्वा। अतिकुतुकात् अतिमात्रकौतुकेन। उपगम्य गोपानां समीपं प्राप्य। मानयित्वा नन्दादीन् यथोचितं सम्पूज्य। चिरतरविरहातुराङ्गरेखाः चिरतरेण अतिदीर्घेण विरहेण आतुरा क्लेशिता अङ्गरेखा कृशा शरीरयष्टिर्यासां ताः। पशुपवधूः गोपीः। रसेन सह वर्तत इति सरसं यथा भवति तथा। अन्वयासीः अनुगतोऽभूः॥

भगवतो गोपीसमागमे विशेषमाह—

**सपदि च भवदीक्षणोत्सवेन**
**प्रमुषितमानहृदां नितम्बिनीनाम्।**
**अतिरसपरिमुक्तकञ्चुलीके**
**परिचयहृद्यतरे कुचे न्यलैपीः　　॥ ५ ॥**

सपदीति ॥ त्वं भवदीक्षणोत्सवेन सपदि प्रमुषितमानहृदां नितम्बिनीनाम् अतिरसपरिमुक्तकञ्चुलीके परिचयहृद्यतरे कुचे न्यलैषी च । त्वं श्रीकृष्ण । भवदीक्षणोत्सवेन भवतः श्रीकृष्णस्य ईक्षणरूपेण दर्शनरूपेण उत्सवेन 'उत्सूते हर्षमित्येष उत्सवः परिकीर्तितः' इत्युक्तलक्षणेन । सपदि झटिति । प्रमुषितमानहृदां प्रमुषितः प्रणष्टः मानो यस्मिंस्तादृशं हृत् हृदयं यासां तासाम् । नितम्बिनीनां गोपवधूनाम् । अतिरसपरिमुक्तकञ्चुलीके अतिरसेन अतिशयितेनेतरेतरानुरागेण परिमुक्ता अपनीता कञ्चुलीका गात्रिका यस्मात्तस्मिन् । परिचयहृद्यतरे परिचयेन पूर्वानुभवेन हृद्यतरे अत्यर्थं हृदयप्रीतिजनके । कुचे प्रत्येकमेकैकस्याः कुचयोः । न्यलैषी निलीनोऽभूः । चकारः समुच्चये । 'आलिङ्गितायाः पुनरायताक्ष्यामाशास्महे विग्रहयोरभेदम्' इत्युक्तरीत्या कामिभिर्जनैः प्रार्थ्यमानं यत् कामिनीविग्रहैक्यसुखं तत् भगवानन्वभूदित्यर्थः ॥

अथ भगवतो राधिकायाः सान्त्वनं दर्शयति—

रिपुजनकलहैः पुनः पुनर्मे<br>
समुपगतैरियती विलम्बनाऽभूत् ।<br>
इति कृतपरिरम्भणे त्वयि द्रा-<br>
गतिविवशा खलु राधिका निलिल्ये ॥ ६ ॥

रिपुजनकलहैरिति ॥ राधिका खलु त्वयि द्राक् अतिविवशा निलिल्ये । राधिका राधाभिधा भगवत इतराभ्यो गोपीभ्योऽप्यत्यर्थं प्रियतमा काचित् गोपी । खल्विति स्वार्थे । त्वयि श्रीकृष्णे । द्राक् झटिति । अतिविवशा अतिशयेन विवशा विगतमाना । निलिल्ये निलीनाऽभूत् । भगवदैक्यसुखमिवान्वभूदित्यर्थः । मानत्यागे हेतुमाह— इति कृतपरिरम्भणे इति । इति एवमुक्त्वा । कृतपरिरम्भणे कृतं परिरम्भणमालिङ्गनं येन तस्मिन् । उक्तिप्रकारमाह—पुनः पुनः समुपगतैः रिपुजनकलहैः मे इयती विलम्बना अभूदिति । पुनः पुनः मुहुः । समुपगतैः सञ्जातैः । रिपुजनकलहैः रिपुजनैरसुरैः सह कलहैः समरैः ।

मे त्वद्वियोगविधुरस्यापि मम। इयती इयत्परिमिता। दीर्घकालानुबन्धिनीत्यर्थः। विलम्बना विलम्बः। अभूत् जाता। न तु त्वद्विषयकप्रेममान्द्यादिति भावः॥

भगवान् गोपीभ्यस्तत्त्वमुपादिशदित्याह—

अपगतविरहव्यथास्तदा ता
रहसि विधाय ददाथ तत्त्वबोधम्।
परमसुखचिदात्मकोऽहमात्मे-
त्युदयतु वः स्फुटमेव चेतसीति ॥ ७ ॥

**अपगतविरहव्यथा इति** ॥ त्वं तदा ताः रहसि अपगतविरहव्यथाः विधाय इति तत्त्वबोधं ददाथ। त्वं श्रीकृष्णः। तदा तस्मिन्नवसरे। ताः गोपीः। रहसि एकान्ते। अपगतविरहव्यथाः अपगता परिरम्भणादिभिर्निर्गता विरहव्यथा भगवद्विरहदुःखं याभ्यस्तादृशीः। विधाय कृत्वा। इति अनेन प्रकारेणोक्त्वा। तत्त्वबोधं तत्त्वस्य सद्रूपस्यात्मनो बोधं ज्ञानम्। ददाथ दत्तवानसि। भगवत उक्तिप्रकारमाह—अहं परमसुखचिदात्मकः आत्मा इति वः चेतसि स्फुटमेव उदयतु इति। अहं सर्वेषामप्यहमिति प्रत्ययविषयीभूत। परमसुखचिदात्मकः परमसुखं परमः आनन्दश्चित् ज्ञानं चात्मा स्वरूपं यस्य सः। आत्मा न तु देह· प्राणादयः इन्द्रियादीनि वा। इति एवंविधा धी.। वः गोपीनाम्। चेतसि मनसि। स्फुटं स्पष्टम्। विपरीतकोटिभानमन्तरेणेत्यर्थः। उदयतु मदनुमहान्मननाद्यायासमन्तरेणापि झटिति प्रकाशताम्। यद्वा, अहं श्रीकृष्ण.। आत्मा सर्वेषामन्तर्यामी। अतो न कदापि भवतीनां मद्वियोगोऽस्तीति भावः। अन्यत् सर्वं पूर्ववत्॥

गोपीनां भगवदुपदेशफलं दर्शयति—

सुखरसपरिमिश्रितो वियोगः
किमपि पुराऽभवदुद्धवोपदेशैः।

समभवदमुतः परं तु तासां
परमसुखैक्यमयी भवद्विचिन्ता ॥ ८ ॥

सुखरसपरिमिश्रित इति ॥ पुरा उद्धवोपदेशैः वियोगः किमपि सुखरसपरिमिश्रितः अभवत्। पुरा पूर्वम्। तासामित्युत्तरवाक्यादपकृष्यात्रापि योज्यम्। तासां गोपीनाम्। उद्धवोपदेशैः उद्धवस्योपदेशैः 'ब्रह्मानन्दे मिलति न चिरात् सङ्गमो वा वियोगस्तुल्यो वः स्यात्' इत्यादिरूपैः। वियोगः भगवद्विरहः। किमपि किञ्चित्। सुखरसपरिमिश्रितः सुखरसेन परिमिश्रितः सम्मिलितः। अल्पेन सुखरसेन मिश्रीभावात् भगवद्वियोगस्तासां किञ्चिदिव सह्यतां गतोऽभूदित्यर्थः। अमुतः परं तु तासां भवद्विचिन्ता परमसुखैक्यमयी समभवत्। अमुतः भगवदुपदेशात्। परं परस्तात्। तुर्विशेषे। तमाह—परमसुखैक्यमयीति। तासां गोपीनाम्। भवद्विचिन्ता भवतः श्रीकृष्णस्य विचिन्ता चिन्तनम्। परमसुखैक्यमयी परमानन्दाभेदानुभवरूपा। समभवत् सञ्जाता॥

अथ वसुदेवस्य देवयजनमाह द्वाभ्याम्—

मुनिवरनिवहैस्तवाथ पित्रा
दुरितशमाय शुभानि पृच्छ्यमानैः।
त्वयि सति किमिदं शुभान्तरैरि-
त्युरुहसितैरपि याजितस्तदाऽसौ ॥ ९ ॥

मुनिवरनिवहैरिति ॥ अथ तव पित्रा दुरितशमाय शुभानि पृच्छ्यमानैः मुनिवरनिवहैः त्वयि सति शुभान्तरैः किमिदम् इति उरुहसितैः अपि तदा असौ याजितः। अथ अनन्तरम्। तव श्रीकृष्णस्य। पित्रा वसुदेवेन। दुरितशमाय पापोपशान्तये। शुभानि कर्तव्यानि पुण्यकर्माणि। पृच्छ्यमानैः अनुयुज्यमानैः। मुनिवरनिवहैः मुनिवराणां व्यासनारदप्रभृतीनां निवहैः समूहैः। त्वयि त्रिजगन्मङ्गलात्मके पुत्रे। सति वर्तमाने सति। शुभान्तरैः अन्यैः पुण्यकर्मभिः। किमिदं किमेतद्दुरितशमनप्रार्थनमित्यर्थः।

उरुहसितैः उरु महत् हसितं हासो येषां तैः। अपिर्विरोधे। तदा तस्मिन्नवसरे। असौ वसुदेवः याजितः यजनं कारितः। अभूदिति शेषः॥

सुमहति यजने वितायमाने
प्रमुदितमित्रजने सहैव गोपाः।
यदुजनमहितास्त्रिमासमात्रं
भवदनुषङ्गरसं पुरेव भेजुः ॥ १० ॥

सुमहतीति॥ सुमहति प्रमुदितमित्रजने यजने वितायमाने गोपाः सह एव यदुजनमहिताः पुरा इव त्रिमासमात्रं भवदनुषङ्गरसं भेजुः। सुमहति सुतरां महति समस्तसम्पत्समृद्धतया उत्तमकल्पके। प्रमुदितमित्रजने सर्वैः कामैस्तर्पित तया प्रकर्षेण मुदितास्तुष्टा मित्रजना बन्धुवर्गा यस्मिंस्तस्मिन्। यजने यागे। वितायमाने क्रियमाणे सति। गोपाः नन्दादयः। सहैव बन्धुभिः सहैव। यदुजनमहिताः यदुजनैः यदुभिर्महिताः पूजिताः। पुरेव गोकुल इव। त्रिमास मात्रं त्रयाणां मासानां यावदन्तम्। भवदनुषङ्गरसं भवतः श्रीकृष्णस्यानुषङ्गः सम्पर्कः तज्जन्यं रसमानन्दम्। भेजुः अन्वभूवन्नित्यर्थः॥

अथ राधिकाया विशेषमाह—

व्यपगमसमये समेत्य राधां
दृढमुपगूह्य निरीक्ष्य वीतखेदाम्।
प्रमुदितहृदयः पुरं प्रयातः
पवनपुरेश्वर पाहि मां गदेभ्यः ॥ ११ ॥

व्यपगमसमय इति॥ हे पवनपुरेश्वर व्यपगमसमये राधां समेत्य दृढमुपगूह्य वीतखेदां निरीक्ष्य प्रमुदितहृदयः पुरं प्रयातः त्वं मां गदेभ्यः पाहि। पवनपुरेश्वर गुरुवायुपुरनाथ। व्यपगमसमये विश्लेषावसरे। समेत्य प्राप्य। दृढं गाढम्। उपगूह्य आश्लिष्य। वीतखेदां त्यक्तविरह व्यथाम्। निरीक्ष्य दृष्ट्वा। प्रमुदितहृदयः प्रमुदितं प्रकर्षेण मुदितं तुष्टं

हृदयं यस्य सः। पुरं द्वारकाम्। प्रयातः गतः। त्वं श्रीकृष्णः। माम् अनन्यशरणम्। गदेभ्यः रोगेभ्यः। पाहि त्रायस्व॥

इति समन्तपञ्चकयात्रावर्णनं
चतुरशीतितमदशकं सैकम् ॥

## पञ्चाशीतितमदशकम्।

अथ जरासन्धवधं प्रस्तौति—

ततो मगधभूभृता चिरनिरोधसंक्लेशितं
शताष्टकयुतायुतद्वितयमीश भूमीभृताम्।
अनाथशरणाय ते कमपि पूरुषं प्राहिणो-
दयाचत स मागधक्षपणमेव किं भूयसा ॥ १ ॥

तत इति॥ हे ईश ततः भूमीभृतां शताष्टकयुतायुतद्वितयम् अनाथशरणाय ते कमपि पूरुषं प्राहिणोत्। ईश जगद्रक्षक। ततः अनन्तरम्। भूमीभृतां राज्ञाम्। शताष्टकयुतायुतद्वितयं शताष्टकेनाष्टभिः शतैर्युतं युक्तमयुतयोर्द्वितयं द्वयम्। सहस्राणां विंशतिरष्टौ शतानि चेत्यर्थः। अनाथशरणाय अनाथानां शरणाय रक्षकाय। ते तुभ्यम्। कमपि पूरुषं सन्देशहरम्। प्राहिणोत् प्रेषयामास। दूतप्रेषणे हेतुमाह—मगधभूभृता चिरनिरोधसंक्लेशितमिति। मगधभूभृता जरासन्धेन। चिरनिरोधसंक्लेशितं चिरनिरोधेन संक्लेशितं सुतरां क्लेशितम्। दूतस्य प्रार्थनाप्रकारमाह—सः, भूयसा किम्, मागधक्षपणमेव अयाचत इति। सः दूतः। भूयसा अधिकेन विज्ञापनेन। किम् किं प्रयोजनम्। इतीति शेषः। इति इति मत्वा। मागधक्षपणं मागधस्य जरासन्धस्य क्षपणं निषूदनम्। एवकारेणान्येषां ऽव्यवच्छेदः। अयाचत प्रार्थयामास॥

अथ मागधमभियियासोरपि भगवत इन्द्रप्रस्थगमनमाह—

यियासुरभिमागधं तदनु नारदोदीरिता-
युधिष्ठिरमखोद्यमादुभयकार्यपर्याकुलः।
विरुद्धजयिनोऽध्वरादुभयसिद्धिरित्युद्धवे
शशंसुषि निजैः समं पुरमियेथ यौधिष्ठिरीम् ॥ २ ॥

**यियासुरिति ॥** अभिमागधं यियासुः तदनु नारदोदीरितात् युधिष्ठिरमखोद्यमात् उभयकार्यपर्याकुलः त्वम् उद्धवे इति शशंसुषि यौधिष्ठिरी पुरम् इयेथ। अभिमागधं मागधं जरासन्धमभिमुखीकृत्य। यियासुः यातुमिच्छन्। तदनु तदवसरे। नारदोदीरितात् नारदेनोदीरितादुक्तात्। युधिष्ठिरमखोद्यमात् युधिष्ठिरस्य धर्मात्मजस्य मखोद्यमात् राजसूयकरणोद्यमात्। यियक्षमाणेन धर्मात्मजेनाहूतस्सन्नित्यर्थः। उभयकार्यपर्याकुलः जरासन्धवधयुधिष्ठिरानुग्रहरूपाभ्यामुभाभ्यां युगपत् कर्तव्याभ्यां कार्याभ्यां पर्याकुलः किं जरासन्धं निहत्य पूर्वं भक्तानां नृपाणां मोचनं कर्तव्यम्, उत सुहृदो युधिष्ठिरस्यानुग्रहः प्रथमं कर्तव्य इति निर्णेतुमशक्नुवन्नित्यर्थः। त्वं श्रीकृष्णः। इति अनेन प्रकारेण। शशंसुषि उक्तवति। यौधिष्ठिरी युधिष्ठिरसम्बन्धिनीम्। पुरम् इन्द्रप्रस्थम्। इयेथ यातोऽसि। उद्धवस्योक्तिप्रकारमाह— विरुद्धजयिनः अध्वरात् उभयसिद्धिः इति। विरुद्धजयिनः शत्रुनिग्रहपूर्वं कर्तव्यात्। अध्वरात् राजसूयाख्यात्। उभयसिद्धिः उभयस्य कार्यद्वयस्य सिद्धिः॥

भगवतीन्द्रप्रस्थं गते युधिष्ठिरस्य कृत्यमाह—

अशेषदयितायुते त्वयि समागते धर्मजो
विजित्य सहजैर्महीं भवदपाङ्गसंवर्धितैः।
श्रियं निरुपमां वहन्नहह भक्तदासायितं
भवन्तमयि मागधे प्रहितवान् सभीमार्जुनम् ॥ ३ ॥

**अशेषेति ॥** त्वयि अशेषदयितायुते समागते धर्मजः भवदपाङ्गसंवर्धितैः सहजैः मही विजित्य निरुपमां श्रियं वहन् अयि अहह भक्तदासा

यिन भवन्न सभीमार्जुन मागधे प्रहितवान्। त्वयि श्रीकृष्णे। अशेष दयितायुते अशेषाभिर्निखिलाभि दयिताभिर्वल्लभाभिर्युते। समागते सम्प्राप्ते सति। धर्मज युधिष्ठिर। भवदपाङ्गसवर्धिते भवत श्रीकृष्णस्य अपाङ्गेन कटाक्षपातेन सवर्धिते प्रवृद्धबले। सहजे भीमादिभि। मही निखिला दिश। विनिर्जित्य जित्वा। निरुपमाम् अतुलाम्। श्रिय सम्पदम्। वहन् दधान। अयीति सम्बोधने। भगवन्निति शेष। अहहेत्याश्चर्ये। भगवतो भक्तपारतन्त्र्यस्याकल्पनमाश्चर्यहेतु। भक्तदासायित भक्तानां दासवत् वर्तमानम्। भवन्त श्रीकृष्णम्। सभीमार्जुन भीमार्जुनाभ्यां सह। मागधे जरासन्धवधाय। प्रहितवान् प्रेषितवान्॥

मागधान्तिक प्राप्तस्य भगवत कृत्यमाह—

गिरिव्रजपुर गतास्तदनु देव यूय त्रयो
यया च समरोत्सव द्विजमिषेण त मागधम्।
अपूर्णसुकृत त्वमु पवनजेन सग्रामयन्
निरीक्ष्य सह जिष्णुना त्वमपि राजयुध्वा स्थित॥ ४ ॥

गिरिव्रजपुरमिति॥ हे देव यूय त्रय तदनु द्विजमिषेण गिरिव्रजपुर गता त मागध समरोत्सव ययाच। देव प्रकाशमान। यूय त्रय श्रीकृष्णो भीमोऽर्जुनश्च। तदनु तदनन्तरम्। द्विजमिषेण ब्राह्मणव्याजेन। ब्राह्मणवेष धृत्वेत्यर्थ। गिरिव्रजपुर गिरिव्रजाख्य मागधस्य पुरम्। गता प्राप्ता। त ब्राह्मणानामभीष्टदातृत्वेन प्रसिद्धम्। मागध जरासन्धम्। समरोत्सव द्रष्टृकौतुकजनक द्वन्द्वयुद्धम्। ययाच प्रार्थितवन्त। त्वमपि अमु पवनजेन सग्रामयन् जिष्णुना सह निरीक्ष्य स्थित। त्व श्रीकृष्ण। अपिस्त्वर्थे। अमु मागधम्। पवनजेन भीमेन। तुरवधारणे। सग्रामयन् युद्ध कारयन्। जिष्णुना अर्जुनेन। सह समम्। निरीक्ष्य दृष्ट्वा। पश्य न्नित्यर्थ। स्थित अतिष्ठ। ननु कुतो भगवान् स्वय न मागधेन युयुध इत्याशङ्का परिहरति—अपूर्णसुकृतमिति राजयुध्वेति च। अपूर्णसुकृतम्

अपूर्णं जीवितान्ते भगवद्दर्शनसम्पादकत्वेऽपि सद्योमुक्तिप्रदस्य भगवत्कर्तृकवधस्य सम्पादने सामर्थ्यविरहादपरिपूर्णं सुकृतं यस्य तम्। राजयुध्वा राजानौ भीम मागधावन्योन्यं योधितवान्। अथवा, राज्ञः पाण्डवान् दुर्योधनतत्पक्षीयांश्च परस्परं योधितवान्॥

जरासन्धवधं राज्ञां मोचनं चाह—

अशान्तसमरोद्धतं विटपपाटनासंज्ञया
　निपात्य जरसः सुतं पवननजेन निष्पाटितम्।
विमुच्य नृपतीन् मुदा समनुगृह्य भक्तिं परां
　दिदेशिथ गतस्पृहानपि च धर्मगुप्त्यै भुवः ॥ ५ ॥

**अशान्तेति॥** त्वम् अशान्तसमरोद्धतं जरसः सुतं विटपपाटनासंज्ञया पवनजेन निष्पाटितं निपात्य नृपतीन् विमुच्य मुदा परां भक्तिं समनुगृह्य गतस्पृहान् अपि च धर्मगुप्त्यै भुवः दिदेशिथ। त्वं श्रीकृष्णः। अशान्तसमरो द्धतम् अशान्ते अदृष्टान्यतरजयपराजये समरे द्वन्द्वयुद्धे उद्धतम् अहंकृतम्। जरसः सुतं जरासन्धम्। जरसः सुतमित्यनेन जातमात्र एव धात्र्या परित्यक्तं शरीरार्धद्वयं जरानाम्न्या पिशाच्या संयोज्य सञ्जातचेतनं कृत्वा तया पुत्रत्वेन परिगृहीतत्वात् शरीरस्य द्वैधीभाव एव तस्य मृतिरिति दर्शितम्। अत एव विटपपाटनासंज्ञया विटपस्य तरुशाखायाः पाटना विदारणं तद्रूपया संज्ञया ज्ञापकेन। विटपं विपाट्य भीमाय दर्शयित्वेत्यर्थः। पवनजेन भगवत्कृतस्य विटपपाटनस्य प्रयोजनं जानता भीमेन। निष्पाटितम् एकं तस्य पादं पदाऽऽक्रम्यापरं कराभ्यामादाय गुदात्प्रभृति विदार्य द्विधा शरीरं विभज्येत्यर्थः। निपात्य घातयित्वा। नृपतीन् जरासन्धेन दिग्जये गृहीत्वा गिरिकन्दरे निरुद्धान् राज्ञः। विमुच्य बन्धनान्मोचयित्वा। मुदा प्रमोदेन। परां प्रकृष्टामनपायिनीं च। भक्तिं भगवत्प्रेमलक्षणाम्। समनुगृह्य सम्यगनुगृह्य। गतस्पृहान् विगतराज्यभोगाभिलाषान्। अपि चेति विरोधे। तत्परिहारार्थं धर्मगुप्त्यै इति। धर्मस्य राज्ञां स्वधर्मतयाऽपरिहार्यस्य प्रजापरिपालनस्य गुप्त्यै

रक्षणाय। स्वधर्मत्यागस्याशुभावहत्वादिति भावः। भुवः स्वस्वविषयान्। दिदेशिथ दत्तवानसि ॥

युधिष्ठिरस्य राजसूये भगवता कृतान् विशेषानाह—

प्रचक्रुषि युधिष्ठिरे तदनु राजसूयाध्वरं
प्रसन्नभृतकीभवत्सकलराजकव्याकुलम्।
त्वमप्ययि जगत्पते द्विजपदावनेजादिकं
चकर्थ किमु कथ्यते नृपवरस्य भाग्योन्नतिः ॥ ६ ॥

प्रचक्रुषीति ॥ तदनु युधिष्ठिरे प्रसन्नभृतकीभवत्सकलराजकव्याकुलं राजसूयाध्वरं प्रचक्रुषि अयि जगत्पते त्वमपि द्विजपदावनेजादिकं चकर्थ। तदनु तदनन्तरम्। युधिष्ठिरे धर्मात्मजे। प्रसन्नभृतकीभवत्सकलराजकव्याकुलं प्रसन्नैः परितुष्टैः भृतकीभवद्भिः अभृतका भृतका भृत्या भवन्तो भृतकीभवन्तस्तादृशैः सकलैः सर्वैः राजकैः राजसङ्घैः व्याकुलं संकुलम्। प्रायो लोके जनानां कस्यचित् भृतकीभावे प्रसादो नोपलक्ष्यते, इह तु न तथा। युधिष्ठिरस्य भृत्यभावं गता अपि सर्वे नृपास्तस्य गुणोत्कर्षात्तस्मिन् प्रसन्ना श्चाभूवन्नित्यर्थः। राजसूयाध्वरं राजसूयक्रतुम्। प्रचक्रुषि कुर्वाणे सति। अयीति सम्बोधने। जगत्पते जगद्रक्षक। अत एव त्वं जगद्वन्द्यचरण पङ्कजोपि। द्विजपदावनेजादिकं द्विजानां ब्राह्मणानां पदावनेजादिकं पाद प्रक्षालनपरिवेषणोच्छिष्टहरणादिकृत्यम्। चकर्थ कृतवानसि। अथ कविः सविस्मयमाह— नृपवरस्य भाग्योन्नतिः किमु कथ्यते इति। नृपवरस्य राजश्रेष्ठस्य युधिष्ठिरस्य। भाग्योन्नतिः भाग्योद्रेकः। किमु कथम्। कथ्यते उच्यते। यतो जगतां रक्षिता सर्वलोकाभिवन्द्यचरणपङ्कजश्च भगवान् हरिः स्वयं दासवत्तस्य सेवां कुर्वन्नवर्तत, तस्माद्युधिष्ठिरस्य भाग्योन्नतिरियतीति कथयितुं न केनापि शक्यत इत्यर्थः ॥

अथाग्रपूजाविधानमाह—

ततः सवनकर्मणि प्रवरमग्र्यपूजाविधिं
विचार्य सहदेववागनुगतः स धर्मात्मजः।
व्यधत्त भवते मुदा सदसि विश्वभूतात्मने
तदा ससुरमानुषं भुवनमेव तृप्तिं दधौ ॥ ७ ॥

तत इति ॥ ततः सः धर्मात्मजः सवनकर्मणि प्रवरम् अग्र्यपूजाविधिं सदसि विश्वभूतात्मने भवते मुदा व्यधत्त। ततः अनन्तरम्। सः धार्मिकानामग्रेसरत्वेन प्रसिद्धः। धर्मात्मजः युधिष्ठिरः। सवनकर्मणि यज्ञकर्मणि। प्रवरं श्रेष्ठम्। अग्र्यपूजाविधिम् अग्र्यपूजाया विधिं विधानम्। सदसि सभायाम्। विश्वभूतात्मने विश्वेषां सर्वेषां भूतानामात्मने आत्मभूताय। इदं विशेषणं सर्वेषां भुवनानां तृप्तिहेतुतयोपात्तम्। भवते श्रीकृष्णाय। मुदा सन्तोषेण। अग्र्यपूजाया उचितस्य पात्रस्य लाभोऽत्र सन्तोषहेतुरिति द्रष्टव्यम्। व्यधत्त अकरोत्। भगवते अग्र्यपूजाविधाने हेतुं दर्शयति—विचार्य सहदेववागनुगतः इति। विचार्य अत्र सदसि कस्मै अग्र्यपूजा विधेयेत्यालोच्य। सहदेववागनुगतः सहदेवस्य स्वानुजस्य वाचं गिरमनुगतः अनुसृतः। सहदेवस्याभिप्रायमनुसृत्येत्यर्थः। भगवते अग्र्यपूजाविधानस्य फलं दर्शयति—ससुरमानुषं भुवनमेव तदा तृप्तिं दधौ इति। ससुरमानुषं सुरैर्मानुषैश्च सहितम्। भुवनं जगत्। अत्र भुवनपदेन तत्रस्था जना लक्ष्यन्ते। तिरश्चामपि तृप्तताप्रतीतिः फलम्। एवकारोऽयोगव्यवच्छेदार्थः। तदा विश्वभूतात्मनि भगवति पूजिते। तृप्तिं सौहित्यम्। दधौ प्राप ॥

अथ भगवतः शिशुपालवधहेतुं प्रस्तौति—

ततः सपदि चेदिपो मुनिनृपेषु तिष्ठत्स्वहो
सभाजयति को जडः पशुपदुर्दुरूटं वटुम्।
इति त्वयि स दुर्वचोविततिमुद्वमन्नासना-
दुदापतदुदायुधः समपतन्नमुं पाण्डवाः ॥ ८ ॥

तत इति ॥ ततः मुनिनृपेषु तिष्ठत्सु अहो सः चेदिपः सपदि इति त्वयि दुर्वचोविततिमुद्वमन् उदायुधः आसनात् उदापतत् । ततः अनन्तरम्। मुनिनृपेषु मुनिषु नृपेषु च। तिष्ठत्सु श्रीकृष्णाय विहितामग्रपूजामभिनन्द्य वर्तमानेषु सत्स्वित्यर्थः। अहो इत्याश्चर्ये। चेदिपस्य मौर्ख्यानुसन्धानमाश्चर्यहेतु। स. रुग्मिणीहरणेन भगवति बद्धवैरः। चेदिप. शिशुपालः। सपदि झटिति। इति अनेन प्रकारेण। त्वयि श्रीकृष्णे विषये। दुर्वचोविततिं दुर्वचसां दुर्भाषितानां विततिं परम्पराम्। उद्वमन् उद्गिरन्। यथा मुमूर्षुः कश्चित् भुक्तं सर्वं वमति, तद्वदयमासन्नमृत्युः सन्नेव भगवति दुर्वचांसि व्याजहारेत्यर्थ। उदायुध उद्धृतमायुधं येन स.। आसनात् पीठात्। उदापतत् उत्थायाभ्ययात्। इतीत्यनेनोक्तं प्रकारमाह—कः जडः पशुपदुर्दुरूटं वटुं सभाजयति इति। जडः मन्दबुद्धिः। पशुपदुर्दुरूटं पशुपापसदम्। वटुं माणवकम्। सभाजयति पूजयति। जाड्यादेवास्य पूजनं पशुपस्य, न तु विहिताविहितयोर्विवेकेन कृतमिति भाव.। अथवा, क. जड. मुनिनृपेषु तिष्ठत्सु अहो पशुपदुर्दुरूटं वटुं सभाजयतीति योजना। सत्स्वपि महामुनिषु राजर्षिषु च तान् विहाय पूजानर्हं पशुपमहो मौर्ख्यातिशयेन पूजयतीत्यर्थ.। अमुं पाण्डवा· समपतन्। अमुं चैवम्। समपतन् हन्तुमुद्यताः ॥

अथ शिशुपालवधमाह—

निवार्य निजपक्षगानभिमुखस्य विद्वेषिण-
स्त्वमेव जहृषे शिरो दनुजदारिणा स्वारिणा।
जनुस्त्रितयलब्धया सततचिन्तया शुद्धधी-
स्त्वया स परमेकतामधृत योगिनां दुर्लभाम्　　॥ ९ ॥

निवार्येति ॥ निजपक्षगान् निवार्य त्वमेव दनुजदारिणा स्वारिणा अभिमुखस्य विद्वेषिण शिर जहृषे। निजपक्षगान् स्वपक्षीयान् पाण्डवान्। निवार्य निरुध्य। त्वं श्रीकृष्ण. दनुजदारिणा असुरशरीरभेदनशीलेन। स्वारिणा स्वस्यारिणा चक्रायुधेन। अभिमुखस्य सम्मुखस्य। विद्वेषिणः

शिशुपालस्य। शिरः शीर्षम् जहृषे हृतवानसि। अथ चैद्यस्य मोक्षप्राप्ति माह—सः योगिनां दुर्लभां त्वया परम् एकतामधृत इति। सः चैद्यः। योगिनां योगेन भगवन्तं ध्यायतामपि। दुर्लभां लब्धुमशक्याम्। त्वया श्रीकृष्णेन। परम् अत्यन्तम्। एकतामैक्यम्। अधृत प्राप्तवानित्यर्थः। ननु कथमयं द्विषन्नपि भगवन्तं भगवदैक्यं प्राप्तवानित्याशङ्कां परिहरति—जनुस्त्रितयलब्धया सततचिन्तया शुद्धधीरिति। जनुस्त्रितयलब्धया जनुषां हिरण्यकशिपुरावणशिशुपालरूपाणां जन्मनां त्रितये लब्धया प्राप्तया। स्वभावतः प्राप्तुमशक्यस्य प्राप्तिर्हि लाभ उच्यते। भगवन्तं द्विषता प्राप्तुमशक्ययाऽपि संरम्भयोगेन 'भवैस्त्रिभिर्मामुपेतम्' इति भगवदनुग्रहेण प्राप्तयेत्यर्थः। सतत चिन्तया निरन्तरध्यानेन। शुद्धधीः शुद्धा अपगतदोषा धीर्यस्य सः। येन केनापि प्रकारेण भगवद्ध्यानस्य चित्तशुद्धिहेतुत्वादिति भावः॥

राजसूयस्य समाप्तिं दर्शयति—

ततः सुमहिते त्वया क्रतुवरे निरूढे जनो
ययौ जयति धर्मजो जयति कृष्ण इत्यालपन्।
खलस्स तु सुयोधनो धुतमनाः सपत्नश्रिया
मयार्पितसभामुखे स्थलजलभ्रमादभ्रमीत् ॥ १० ॥

**तत इति॥** ततः त्वया सुमहिते क्रतुवरे निरूढे जनः इति आलपन् ययौ। ततः अनन्तरम्। त्वया श्रीकृष्णेन। सुमहिते सुतरां महिते पूजिते। क्रतुवरे राजसूये। निरूढे परिसमापिते सति। इति अनेन प्रकारेण। आलपन् कथयन्। ययौ स्वां स्वां वसतिमगच्छत्। जनानां कथनप्रकारमाह—धर्मजः जयति कृष्ण जयति इति। धर्मजः युधिष्ठिरः। जयति। यतः सर्वेश्वरो भगवान् श्रीकृष्णः स्वस्य वशे वर्तत इत्यर्थः। कृष्णः भक्तानां विधेयतामापन्नो हरिः। जयति सर्वोत्कर्षेण वर्तते। अथ युधिष्ठिरस्य श्रियं दृष्टवतो दुर्योधनस्य विचेष्टितमाह—खलः सः सुयोधनः तु मयार्पितसभामुखे स्थलजलभ्रमात् अभ्रमीदिति। खलः दुष्टः। सः जननादारभ्य पाण्डवानां

विरोधितया प्रसिद्ध.। सुयोधन· दुर्योधन.। तुर्विक्षेपे। तमाह—मयार्पितेत्यादिना। मयार्पितमभासुरे मयेन तन्नाम्रा खाण्डवदाहेऽर्जुनेन पावकाद्रक्षितेनासुरशिल्पिना अर्पितायां दत्ताया. सभाया मुखे पुरोभागे। स्थलजलभ्रमात् स्थलजलयोर्भ्रमात् भ्रान्त्या। स्थले जलभ्रान्त्या जले स्थलभ्रमेण चेत्यर्थः। ननु किमर्थं दुर्योधनस्तत्रागच्छदित्याकाङ्क्षायामाह—सपत्नश्रिया धुतमनाः इति। सपत्नश्रिया सपत्नानां शत्रूणां पाण्डवानां श्रिया सम्पत्समृद्ध्या। धुतमनाः धुतम् असूयया चालितं मनो यस्य तथाविध सन्। एवंविधस्तत्र प्रविशन्नित्यर्थः॥

अथ भगवतो भूभारक्षपणबीजवापं दर्शयति—

तदा हसितमुत्थितं द्रुपदनन्दनाभीमयो-
रपाङ्गकलया विभो किमपि तावदुज्जृम्भयन्।
धराभरनिराकृतौ सपदि नाम बीजं वपन्
जनार्दन मरुत्पुरीनिलय पाहि मामामयात् ॥ ११ ॥

तदेति ॥ हे विभो मरुत्पुरीनिलय जनार्दन तदा द्रुपदनन्दनाभीमयोः उत्थितं हसितं नाम धराभरनिराकृतौ बीजम् अपाङ्गकलया तावत् किमपि उज्जृम्भयन् सपदि वपन् त्वं माम् आमयात् पाहि। विभो शक्तिसम्पन्न। अनेन सम्बोधनेन द्रुपदजाभीमयोर्हसितोत्थितिर्भगवत प्रेरणयैवेति द्योत्यते। मरुत्पुरीनिलय गुरुवायुपुराधीश्वर। जनार्दन विष्णो। तदा दुर्योधनस्य स्थलजलभ्रमावसरे। द्रुपदनन्दनाभीमयो द्रुपदनन्दनाया द्रौपद्या भीमस्य च। उत्थितं किञ्चिदिव सञ्जातम्। हसितं नाम हसितमेव। धराभरनिराकृतौ धराभरस्य भूभारस्य निराकृतौ क्षेपणे। अपाङ्गकलया स्वानुमतिसूचनेन कटाक्षपातेन। तावत् प्रथमम्। किमपि किञ्चित्। उज्जृम्भयन् वर्धयन्। सपदि पश्चाच्छीघ्रम्। वपन्। अयमर्थ —दुर्योधनस्य स्थलजलभ्रमं दृष्ट्वोत्थितं द्रुपदजाभीमयोर्हसितमेव भूभारक्षेपबीजं परिकल्प्य प्रथमं तद्बीजमपाङ्गकलया ताभ्यां तत्र स्वानुमतिं बोधयित्वा संवर्ध्य पश्चाद्दुर्योधनायास्य प्रदर्शनरूपं बीजवापं कुर्वन्निति। त्वं श्रीकृष्ण.। मामनन्यशरणम्। आमयात् गदौघात् पाहि त्रायस्व॥

इति जरासन्धवधवर्णनं युधिष्ठिरराजसूयवर्णनं च
पञ्चाशीतितमदशकं सैकम्॥

# षडशीतितमदशकम् ।

अथ साल्वादिवधं प्रस्तौति—

साल्वो भैष्मीविवाहे यदुबलविजितश्चन्द्रचूडाद्विमानं
विन्दन् सौभं समायी त्वयि वसति कुरूंस्त्वत्पुरीमभ्यभाङ्क्षीत् ।
प्रद्युम्नस्तं निरुन्धन्नखिलयदुभटैर्न्यग्रहीदुग्रवीर्यं
तस्यामात्यं द्युमन्तं व्यजनि च समरः सप्तविंशत्यहान्तम् ॥ १ ॥

साल्व इति ॥ साल्वः त्वत्पुरीमभ्यभाङ्क्षीत् । साल्व इति कस्यचिद्राज्ञो नाम । त्वत्पुरी तव श्रीकृष्णस्य पुरी द्वारकाम् । अभ्यभाङ्क्षीत् बभञ्ज । अत्र हेतुमाह—भैष्मीविवाहे यदुबलविजितः इति । भैष्मीविवाहे भैष्म्याः वैदर्भ्याः विवाहे । यदुबलविजितः यदुबलेन यादवसैन्येन विजितः निर्जितः । ननु कथं दुर्धर्षां द्वारवतीमाक्रमितुं समर्थोऽभूदित्याशङ्कायामाह— चन्द्रचूडात् सौभं विमानं विन्दन् समायी इति । चन्द्रचूडात् भक्त्या समाराध्य तोषितात् त्र्यम्बकात् । सौभमिति विमानस्य नाम । विमानं व्योमयानम् । विन्दन् लब्धवान् । समायी मायया सह वर्तत इति तथोक्तः । परैरभेद्यं सौभाख्यं विमानमधिरुह्य मायाविद्यया क्वचिन्निलीय क्वचित् प्रकाशं गत्वा च सत्वरं तत्र सञ्चरन्नित्यर्थः । ननु मायाधिनाथे भगवति तत्र सन्निहिते कथं साल्वस्य माया तत्रत्यान् मोहयितुं समर्थाऽभूदित्याशङ्क्याह—त्वयि कुरून् वसति इति । त्वयि श्रीकृष्णे । वसति निवसति सति । धर्मात्मजस्य राजसूयं निर्वर्तयितुमिन्द्रप्रस्थे निवसति सतीत्यर्थः । तदानीन्तनं प्रद्युम्नस्य चेष्टितं वर्णयति—प्रद्युम्न अखिलयदुभटैः तं निरुन्धन् उग्रवीर्यं तस्य अमात्यं द्युमन्तं न्यग्रहीदिति । अखिलयदुभटैः अखिलैः सकलैः यदुभटैर्यादवसैनिकैस्सह । तं साल्वम् । निरुन्धन् निवारयन् । उग्रवीर्यम् असह्यविक्रमम् । तस्य साल्वस्य । अमात्यं मन्त्रिणम् । द्युमानिति तस्य

सञ्ज्ञा। न्यग्रहीत् अवधीत्। समर सप्तविंशत्यहान्त व्यजनि च। समर युद्धम्। सप्तविंशत्यहान्त सप्तविंशत्या दिनेष्वित्यर्थ। व्यजनि जातोऽभूत्॥

अथ भगवतो द्वारकागमनादिकमाह—

तावत्त्वं रामशाली त्वरितमुपगतः खण्डितप्रायसैन्यं
सौभेशं तं न्यरुन्धाः स च किल गदया शार्ङ्गमभ्रंशयत्ते।
मायाताताद्व्यहिंसीदपि तव पुरतस्तत्त्वयाऽपि क्षणार्धं
नाज्ञायीत्याहुरेके तदिदमवमतं व्यास एव न्यषेधीत्॥ २॥

तावदिति॥ तावत् त्वं रामशाली त्वरितमुपगतः खण्डितप्रायसैन्यं सौभेशं तं न्यरुन्धाः। तावत् तदानीम्। त्वं श्रीकृष्ण। रामशाली रामेण बलभद्रेण सहितः। त्वरितं द्वारकाभञ्जनं श्रुत्वा सत्वरम्। उपगतः द्वारकां प्राप्तः। खण्डितप्रायसैन्यं खण्डितप्रायाणि विनाशितप्रायाणि सैन्यानि यस्य तम्। सौभेशं सौभस्य तन्नाम्नो विमानस्येशम्। सौभमधिरुह्य युध्यन्तमित्यर्थः। अनेन तस्य दुर्धर्षत्वं द्योत्यते। तं साल्वम्। न्यरुन्धाः निवारितवानसि। स च गदया ते शार्ङ्गम् अभ्रंशयत्। स साल्वः। चकारस्त्वर्थो विशेषे। तमाह—गदयेत्यादि। ते श्रीकृष्णस्य। शार्ङ्गं धनुः। अभ्रंशयत् त्याजयामास। तव पुरतः मायाताताद्व्यहिंसीदपि। किञ्च, तव श्रीकृष्णस्य। पुरतः पुरस्तात्। मायातातं मायया निर्मितं वसुदेवम्। व्यहिंसीत् जघान। अपीति समुच्चये। एके तत् त्वया अपि क्षणार्धं न अज्ञायि इति आहुः। एके केचन मुनयः। तत् मायातातहननम्। त्वया श्रीकृष्णेन। अपिर्विरोधे। क्षणार्धं कञ्चित् कालम्। न अज्ञायि न मायया हननमिति ज्ञातमभूत्। आहुः कथयन्ति। अत्र एके आहुरित्यनेनैतत्स्वमतमिति दर्शितम्। अस्मिन्स्वरस दर्शयन्नाह— तत् इदम् अवमतमिति। तदिदं भगवतोऽनवबोधः। अवमतम् अनुपपन्नम्। पुन इत्यत आह—व्यास एव न्यषेधीदिति। व्यासः भगवान् श्रीवेदव्यासः। एवकाराऽयोगव्यवच्छेदार्थः। न्यषेधीत् निषिद्धवान्। क्व शोकमोहौ स्नेहा

वा भयं वा येऽङ्गसम्भवाः । क्व चाखण्डितविज्ञानज्ञानैश्वर्यस्त्वखण्डितः ॥' इति श्रीमद्भागवतोक्तो निषेधप्रकारोऽत्र द्रष्टव्यः ॥

सात्वादीनां वधमाह—

क्षिप्त्वा सौभं गदाचूर्णितमुदकनिधौ मङ्क्षु साल्वेऽपि चक्रे-
णोत्कृत्ते दन्तवक्रः प्रसभमभिपतन्नभ्यमुञ्चत् गदां ते ।
कौमोदक्या हतोऽसावपि सुकृतनिधिश्चैद्यवत् प्रापदैक्यं-
सर्वेषामेव पूर्वं त्वयि धृतमनसां मोक्षणार्थोऽवतारः ॥ ३ ॥

क्षिप्त्वेति ॥ सौभं गदाचूर्णितम् उदकनिधौ क्षिप्त्वा मङ्क्षु साल्वे अपि चक्रेण उत्कृत्ते दन्तवक्रः प्रसभमभिपतन् ते गदामभ्यमुञ्चत् । सौभं साल्वस्य विमानम् । गदाचूर्णितं गदया कौमोदक्या चूर्णितं शकलीकृतं कृत्वा । उदकनिधौ समुद्रे । क्षिप्त्वा प्रक्षिप्य । मङ्क्षु झटिति । अपिः समुच्चये । चक्रेण सुदर्शनेन । उत्कृत्ते छिन्नशीर्षे कृते सति । त्वयेति शेषः । दन्तवक्रः तन्नामा नृपः । प्रसभं हठात् । अभिपतन् आपतन् । ते तुभ्यं श्रीकृष्णाय । त्वां हन्तुमित्यर्थः । अभ्यमुञ्चत् अक्षिपत् । असौ अपि कौमोदक्या हतः चैद्यवत् ऐक्यं प्रापत् । असौ दन्तवक्रः । अपिः समुच्चये । कौमोदक्या तदाख्यया भगवतो गदया । हतः निहतः । चैद्यवत् शिशुपाल इव । ऐक्यं भगवत्सायुज्यम् । प्रापत् अवाप । ऐक्य प्राप्तौ हेतुमाह—सुकृतनिधिरिति । कथमयं द्विषन्नपि भगवन्तं सुकृती समभवदिति शङ्कां परिहरन् भगवदवतारस्य फलमात्मना हेतुभिः संभावितं दर्शयति—पूर्वं त्वयि धृतमनसां सर्वेषामेव मोक्षणार्थः अवतारः इति । पूर्वं प्राग्जन्मनि । त्वयि श्रीकृष्णे । धृतमनसां धृतं मनो यैस्तेषाम् । प्राग्जन्मनि भगवद्ध्यानं कृतवतामित्यर्थः । सर्वेषां सकलजनानाम् । एवकारोऽप्यर्थे । मोक्षणार्थः मुक्तिप्रदानाय । अवतारः अयं श्रीकृष्णावतारः । इति हेतुभि स्तर्कयामीत्यर्थः । पूर्वं भगवत्स्मरणात् द्विषन्नपि भगवन्तं दन्तवक्रस्सुकृत निधिरस्समभूदिति भावः ॥

अथ भगवतो द्रौपदीक्लेशनिराकरणमाह--

त्वय्यायातेऽथ जाते किल कुरुसदसि द्यूतके संयतायाः
क्रन्दन्त्या याज्ञसेन्याः सकरुणमकृथाश्चेलमालामनन्ताम् ।
अन्नान्तप्राप्तशर्वांशजमुनिचकितद्रौपदीचिन्तितोऽथ
प्राप्तः शाकान्नमश्नन् मुनिगणमकृथास्तृप्तिमन्तं वनान्ते ॥ ४ ॥

त्वयीति ॥ अथ त्वयि आयाते कुरुसदसि द्यूतके जाते संयतायाः सकरुणं क्रन्दन्त्याः याज्ञसेन्याः चेलमालां त्वम् अनन्ताम् अकृथाः किल। अथ अनन्तरम्। त्वयि श्रीकृष्णे। आयाते द्वारका प्रति गते सति कुरुसदसि कौरवाणां सभायाम्। द्यूतके सव्याजतया कुत्सिते द्यूते। संयतायाः दुश्शासनेन केशेषु गृहीत्वा विमुच्यमानचेलाञ्चलायाः इत्यर्थः। शकुनिना व्याजेन द्यूते पराजितत्वेन दारैः सह पाण्डवानां दासभावं गतत्वा दिति भाव.। सकरुणं सखेदम्। क्रन्दन्त्याः रुदन्त्याः। याज्ञसेन्याः द्रौपद्या.। चेलमालां वस्त्रपरम्पराम्। त्वं श्रीकृष्ण। अनन्ताम् अवसान रहिताम्। दुश्शासनेन बहुशो विमोचितामप्यवसानरहितामित्यर्थः। अकृथाः कृतवानसि। किलेति वार्तायाम्। एवमेकविधं द्रौपद्याः क्लेशनिराकरण मुक्त्वा अपरमपि क्लेशनिवारणमाह— अथ त्वम् अन्नान्तप्राप्तशर्वांशजमुनिचकित द्रौपदीचिन्तित. प्राप्त. वनान्ते शाकान्नमश्नन् मुनिगणं तृप्तिमन्तम् अकृथा. इति। अथ अनन्तरम्। त्वं श्रीकृष्ण.। अन्नान्तप्राप्तशर्वांशजमुनिचकित द्रौपदीचिन्तित अन्नान्ते द्रौपद्या भोजनेनाक्षय्यपात्रेऽन्नरहिते सति प्राप्तात् आगतात् शर्वांशजात् गिरीशांशभवान्मुनेर्दुर्वाससः चकितया शापात् भीतया द्रौपद्या पाञ्चालराजदुहित्रा चिन्तितः ध्यातः। प्राप्तः वनान्तं प्राप्येत्यर्थः। वनान्ते वनमध्ये। शाकान्नमक्षय्यपात्रलग्नं शाकशकलम्। अश्नन् भुञ्जानः। मुनिगणं सशिष्यवर्गं दुर्वाससम्। तृप्तिमन्तं सौहित्यवन्तम्। अकृथाः कृतवानसि। अत. स्नातुं गत सशिष्यवर्गो मुनिः पाण्डवाश्रममगत्वैव निर्जगामेति भाव.॥

अथ भगवतो दूतकृत्यं प्रस्तौति—

युद्धोद्योगेऽथ मन्त्रे मिलति सति वृतः फल्गुनेन त्वमेकः
कौरव्ये दत्तसैन्यः करिपुरमगमो दूत्यकृत् पाण्डवार्थम्।
भीष्मद्रोणादिमान्ये तव खलु वचने धिक्कृते कौरवेण
व्याघृण्वन् विश्वरूपं मुनिसदसि पुरीं क्षोभयित्वा गतोऽभूः ॥ ५ ॥

युद्धोद्योग इति॥ अथ युद्धोद्योगे मिलति सति फल्गुनेन मन्त्रे एकः वृतः त्वं कौरव्ये दत्तसैन्यः पाण्डवार्थं दूत्यकृत् करिपुरमगमः। अथ अनन्तरम्। युद्धोद्योगे पाण्डवानां कौरवाणां च परस्परं समरोद्यमे। मिलति सति प्रवर्तमाने सति। फल्गुनेन अर्जुनेन। मन्त्रे कार्यविचारे। एकः अद्वितीयः। वृतः प्रार्थितः। त्वं श्रीकृष्णः। कौरव्ये दुर्योधने। दत्त सैन्यः दत्तास्सैन्यास्सैनिका येन सः। पाण्डवार्थं पाण्डवानां कृते। दूत्यकृत् दूत्यं दूतकर्म करोतीति तथोक्तः। करिपुरं हस्तिनम्। अगमः गतवानसि। भीष्मद्रोणादिमान्ये तव खलु वचने कौरवेण धिक्कृते त्वं मुनिसदसि विश्व रूपं व्याघृण्वन् पुरीं क्षोभयित्वा गत अभूः। भीष्मद्रोणादिमान्ये भीष्म द्रोणादिभिर्मान्ये पूजिते इत्यर्थः। तव श्रीकृष्णस्य। खल्विति स्वर्थे। कौरवेण दुर्योधनेन। धिक्कृते निराकृते सति। त्वं श्रीकृष्णः। मुनि सदसि मुनीनां सदसि सभायाम्। विश्वरूपं विश्वात्मकं रूपं स्वरूपम्। व्याघृण्वन् प्रदर्शयन्। पुरीं हस्तिनम्। अत्र पुरीशब्देन पुरीगतजना लक्ष्यन्ते। तिरश्चामपि क्षोभप्रतीति फलम्। गतः पाण्डवान्तिकं प्राप्तः॥

भगवतोऽर्जुने तत्त्वोपदेशमाह—

जिष्णोस्त्वं कृष्ण सूतः खलु समरमुखे बन्धुघाते दयालुं
खिन्नं तं वीक्ष्य वीरं किमिदमयि सखे नित्य एकोऽयमात्मा।
को वध्यः कोऽत्र हन्ता तदिह वधभियं प्रोज्झ्य मय्यर्पितात्मा
धर्म्यं युद्धं चरेति प्रकृतिमनयथा दर्शयन् विश्वरूपम्॥ ६ ॥

जिष्णोरिति ॥ हे कृष्ण त्वं खलु जिष्णोः सूतः समरमुखे बन्धुघाते दयालुं खिन्नं तं वीरं वीक्ष्य विश्वरूपं दर्शयन् इति प्रकृति मनयथाः। त्वं श्रीकृष्णः। खल्विति त्वर्थे। जिष्णोः अर्जुनस्य। सूतः सारथिर्भवन्। समरमुखे संग्रामप्रारम्भे। बन्धुघाते बन्धूनां भीष्मादीनां घाते हनने। दयालुं दयापरवशम्। खिन्नं दुःखितम्। तं येन धराभरस्य निराकरणं कर्तव्यमिति भगवता निर्णीतम्, तादृशमित्यर्थः। वीरं वीर्यवन्तमर्जुनम्। वीरं तमिति वा योजना। अत्र पक्षे तमर्जुनमिति व्याख्येयम्। वीक्ष्य दृष्ट्वा। विश्वरूपमैकात्म्यम्। दर्शयन् अर्जुनविश्वासार्थं प्रदर्शयेत्यर्थः। इति एवमुक्त्वा। प्रकृतिं गतसम्मोहताम्। अनयथाः प्रापयामासिथ। भगवत उक्तिप्रकारमाह—अयि सखे इदं किम्, अयमात्मा नित्यः एकः, अत्र वध्यः कः, हन्ता कः तत् इह वधभियं प्रोज्झ्य मयि अर्पितात्मा धर्म्यं युद्धं चर इति। अयीति सम्बोधने। सखे मित्र। अनेन सम्बोधनेनास्मद्वाक्यमवश्यं भवता श्रोतव्यमनुष्ठेयं चेति द्योत्यते। इदं युद्धारम्भे षण्डस्येव तव विषण्णत्वम्। ननु कथं बन्धूनां वधः कर्तव्य इत्याशङ्कायामाह—अयमित्यादि। अयं सर्वेष्वपि शरीरेषु दृश्यमानः। आत्मा जीवात्मा। नित्यः नाशरहितः। एकः अद्वितीयः। ततः किमत आह—अत्रेत्यादिना। अत्र अस्मिन् मायाप्रपञ्चे। को वध्यः आत्मनो नित्यत्वान्न कोपि वध्योऽस्तीत्यर्थः। को हन्ता। भेदेन प्रतीतावपि वस्तुतो भेदाभावेनात्मनो न हन्ताऽप्यपरो दृश्यत इत्यर्थः। तत् तस्मात्। वधभियं वधे भियं भीतिम्। प्रोज्झ्य त्यक्त्वा। मयि श्रीकृष्णे। अर्पितात्मा अर्पितः आत्मा येन सः। यत् भगवत्यर्पितात्मा करोति, तन्नाधर्माय कल्पत इति भावः। ननु किमर्थमेवं भगवत्यर्पयित्वाऽपि हिंसाबहुलं युद्धं क्रियत इत्याशङ्कां परिहर्तुमुक्तम् धर्म्यमिति। धर्मादनपेतम्। अत्रायमाशयः—इह हि न केनापि स्वधर्मस्य परित्यागः कर्तुं युक्तः, स्वधर्मपरित्यागे सकलान्यपि श्रेयांसि नश्यन्ति, क्षत्रियाणां ह्यार्तत्राणाय समरो धर्म एव, एवमपि यत् भगवदर्पणपूर्वकं कर्म क्रियते, तदेव संसारनिवृत्तये भवति,

तस्मात् भगवत्यर्पयित्वा स्वधर्मस्य युद्धस्याचरणं न दोषाय भवति, किन्तु श्रेयस्करमेवेति ॥

अथ भक्तोत्तमस्य भीष्मस्य प्रतिज्ञां पालयितुं भगवतः स्वप्रतिज्ञापरित्यागं दर्शयति—

**भक्तोत्तंसेऽथ भीष्मे तव धरणिभरक्षेपकृत्यैकसक्ते**
**नित्यं नित्यं विभिन्दत्यवनिभृदयुतं प्राप्तसादे च पार्थे।**
**निश्शस्त्रत्वप्रतिज्ञां विजहदरिवरं धारयन् क्रोधशाली-**
**वाधावन् प्राञ्जलिं तं नतशिरसमथो वीक्ष्य मोदादपागाः ॥ ७ ॥**

**भक्तोत्तंस इति ॥** अथ भक्तोत्तंसे भीष्मे तव धरणिभरक्षेपकृत्यैकसक्ते नित्यं नित्यम् अवनिभृदयुतं विभिन्दति पार्थे प्राप्तसादे च त्वं निश्शस्त्रत्वप्रतिज्ञां विजहत् क्रोधशाली वा अरिवरं धारयन् धावन् अथो प्राञ्जलिं नतशिरसं तं वीक्ष्य मोदात् अपागाः। अथ अनन्तरम्। भक्तोत्तंसे भक्तश्रेष्ठे। भीष्मे गाङ्गेये। तव श्रीकृष्णस्य। धरणिभरक्षेपकृत्यैकसक्ते धरणिभरस्य भूभारस्य क्षेपकृत्यं निराकरणात्मकं कर्म तस्मिन्नेवैकस्मिन् सक्ते आसक्ते। अत एव नित्यं नित्यं प्रतिदिनम्। अवनिभृदयुतम् अवनिभृतां नृपाणामयुतं दशसहस्राणि। विभिन्दति व्यापादयति सति। पार्थे अर्जुने। प्राप्तसादे भीष्मसायकैः सञ्जातक्लेशे सति। चकारः समुच्चये। त्वं श्रीकृष्णः। निश्शस्त्रत्वप्रतिज्ञाम्। अहं शस्त्रग्रहणं न करिष्यामीति प्रतिज्ञाम्, विजहत् त्यजन्। क्रोधशाली रोषवान्। वेति सम्भावनायाम्। यथा भगवान् कुपित इति जनैः सम्भाव्यते तथेत्यर्थः। वस्तुतो भगवतः क्रोधाभावात् भक्तोत्तमस्य भीष्मस्य प्रतिज्ञापरिपालनार्थमेव क्रोधाभिनयः शस्त्रग्रहणञ्चेत्यहो भक्तपारवश्यमिति भावः। अरिवरं सुदर्शनम्। धारयन् दधानः। धावत् भीष्माभिमुखं प्रधावत्। अथो अनन्तरम्। प्राञ्जलिं मुकुलितकरम्। नतशिरसं नम्रशीर्षम्। तं भीष्मम्। वीक्ष्य दृष्ट्वा। मोदात् सन्तोषेण। अपागाः अपगतोऽसि ॥

अथ भगवतो बहुविधं पार्थपरित्राणं दर्शयति—

युद्धे द्रोणस्य हस्तिस्थिररणभगदत्तेरितं वैष्णवास्त्रं
वक्षस्याधत्त चक्रस्थगितरविमहाः प्रार्दयत् सिन्धुराजम् ।
नागास्त्रे कर्णमुक्ते क्षितिमवनमयन् केवलं कृत्तमौलिं
तत्रे तत्रापि पार्थं किमिव न हि भवान् पाण्डवानामकार्षीत् ॥ ८ ॥

युद्ध इति ॥ भवान् द्रोणस्य युद्धे हस्तिस्थिररणभगदत्तेरितं वैष्णवास्त्रं वक्षसि आधत्त । भवान् श्रीकृष्णः । द्रोणस्य द्रोणाचार्यस्य । युद्धे समरे । हस्तिस्थिररणभगदत्तेरितं हस्तिना गजराजेन स्थिरो रणो यस्य तेन भगदत्तेन नरकसूनुना ईरितम् अर्जुनं हन्तुं प्रयुक्तम् । 'गजश्चैकं दत्वा' इति पूर्वमुक्तं चतुर्दन्तं दन्तावलपतिमारुह्य स्थिरतरं युध्यता भगदत्तेन प्रयुक्तमित्यर्थः । वैष्णवास्त्रं वैष्णवं विष्णुदेवताकमस्त्रम् । वक्षसि उरसि । आधत्त धृतवान् । भगदत्तेन प्रयुक्तं वैष्णवास्त्रमर्जुनापायशङ्कया तस्य पुरः समुत्थाय स्थितस्सन् स्ववक्षसा समादाय तं ररक्षेत्यर्थः । चक्रस्थगितरविमहाः सिन्धुराजं प्रार्दयत् । चक्रस्थगितरविमहाः चक्रेण सुदर्शनेन स्थगितं तिरस्कृतं रविमहः सूर्यतेजो येन तथाविधः सन् । सिन्धुराजं जयद्रथम् । प्रार्दयत् अर्दितवान् । श्वः सूर्यास्तमयात् प्रागेवाहं मम पुत्रस्य हन्तारं जयद्रथं हनिष्यामि, अन्यथा सगाण्डीवस्सन्नग्निप्रवेशं करिष्यामीति कृतप्रतिज्ञं प्रियसखमर्जुनं परित्रातुं दुर्योधनादिभिर्गूढं कुत्रापि संस्थापितं जयद्रथं बहिः प्रकाशयितुं सुदर्शनेन दिनकरं तिरस्कृत्य सन्ध्यां समुत्पाद्य तदवसरे सहासं दुर्योधनादिभिः प्रदर्शितं तं सिन्धुराजमर्जुनेन व्यापादितवानित्यर्थः । नागास्त्रे कर्णमुक्ते क्षितिमवनमयन् । केवलं कृत्तमौलिं पार्थं तत्रापि तत्रे । कर्णमुक्ते कर्णेनार्जुनं हन्तुं प्रयुक्ते सति । क्षितिं भूमिम् । अवनमयन् किञ्चिदधो नयन् । अत एव केवलं कृत्तमौलिं खण्डितसकेशकिरीटमात्रम् । कुर्वन्निति शेषः । पार्थम् अर्जुनम् । तत्रापि तस्यामपि महत्यामापदि । तत्रे ररक्ष । अथ कविर्भगवतो भक्तपारवश्यमनुसन्धाय सविस्मयमाह—पाण्डवानां किमिव न अकार्षीत् हि इति । पाण्डवानां पाण्डुपुत्राणाम् । किमिव किन्नाम । न अकार्षीत् न कृतवान् ।

हीति प्रसिद्धौ । -पाण्डवानां तत्तदवसरेषु यद्यदावश्यकम्, तत्तत् सर्वं कृत वानिति प्रसिद्धमित्यर्थः । अहो भगवतो भक्तपारवश्यमिति भावः ॥

अथ कुरूणां पाण्डवानां च परस्परं संग्राममनभिनन्दतो बलभद्रस्य प्रवृत्तिमाह—

युद्धादौ तीर्थगामी स खलु हलधरो नैमिशक्षेत्रमृच्छ-
न्नप्रत्युत्थायिसूतक्षयकृदथ सुतं तत्पदे कल्पयित्वा ।
यज्ञघ्नं वल्कलं पर्वणि परिदलयन् स्नाततीर्थो रणान्ते
सम्प्राप्तो भीमदुर्योधनरणमशमं वीक्ष्य यातः पुरीं ते ॥ ९ ॥

युद्धादाविति ॥ युद्धादौ तीर्थगामी सः हलधरः खलु नैमिशक्षेत्रम् ऋच्छन् अप्रत्युत्थायिसूतक्षयकृत् अथ सुतं तत्पदे कल्पयित्वा पर्वणि यज्ञघ्नं वल्कलं परिदलयन् स्नाततीर्थः रणान्ते सम्प्राप्तः अशमं भीमदुर्योधनरणं वीक्ष्य ते पुरीं यातः । युद्धादौ पाण्डवानां कौरवाणां परस्परं सङ्गरे प्रारब्धे इत्यर्थः । सः दुर्योधनपक्षपातवत्त्वेन प्रसिद्धः । हलधरः बलभद्रः । नैमिशक्षेत्रं नैमिशाख्यं क्षेत्रम् । ऋच्छन् गच्छन् । अप्रत्युत्थायिसूतक्षयकृत् अप्रत्युत्थायिनः प्रत्युत्थानमकुर्वतः सूतस्य क्षयं वधं करोतीति तथोक्तः । अथ अनन्तरम् । सुतं तस्य सूतस्य पुत्रम् । तत्पदे तस्य सूतस्य पदे मुनिदत्ते ब्रह्मासने । कल्पयित्वा संस्थाप्य । पर्वणि सर्वत्र पर्वस्वित्यर्थः । यज्ञघ्नं यज्ञदूषकम् । वल्कलं तन्नामानमसुरम् । परिदलयन् निघ्नन् । स्नाततीर्थः स्नातानि तीर्थानि गङ्गायमुनादितीर्थानि येन सः । रणान्ते रणस्य कौरवाणां पाण्डवानां च परस्परं संग्रामस्यान्ते अवसाने । सम्प्राप्तः समागतः । अशमं शान्ति रहितम् । भीमदुर्योधनरणं भीमदुर्योधनयोः रणं द्वन्द्वयुद्धम् । वीक्ष्य दृष्ट्वा । ते श्रीकृष्णस्य । पुरीं द्वारकाम् । यातः प्राप्तोऽभूत् ॥

अश्वत्थाम्नो दमनप्रकारमाह—

संसुप्तद्रौपदेयक्षपणहतधियं द्रौणिमेत्य त्वदुक्त्या
तन्मुक्तं ब्राह्ममस्त्रं समहृत विजयो मौलिरत्नं च जह्रे ।

उच्छित्त्यै पाण्डवाना पुनरपि च विशत्युत्तरागर्भमस्त्रे
रक्षन्नङ्गुष्ठमात्रः किल जठरमगाश्चक्रपाणिर्विभो त्वम् ॥ १० ॥

ससुप्तेति ॥ विजय त्वदुक्त्या द्रौणिम् एत्य तन्मुक्त ब्राह्मास्त्र समहृत मौलिरत्न जह्रे च। विजय अर्जुन । त्वदुक्त्या तव श्रीकृष्णस्योक्त्या निदेशेन । द्रौणिम् अश्वत्थामानम् । एत्य प्राप्य। तन्मुक्त तेनाश्वत्थाम्ना मुक्त प्रयुक्तम्। ब्राह्मास्त्र ब्रह्मास्त्रम्। समहृत सहृतवान्। मौलिरत्न चूडामणिम्। अर्थादश्वत्थाम्न । जह्रे हृतवान्। चकार समुच्चये। अत्र हेतु वर्णयति—ससुप्तद्रौपदेयक्षपणहतधियमिति। ससुप्ताना सम्यक् सुप्ताना द्रौपदेयाना द्रौपदीपुत्राणा क्षपणेन वधेन हतधियम् अविदितेतिकर्तव्यताकम्। अथ पाण्डववशपरित्राणप्रकारमाह—हे विभो स पाण्डवानामुच्छित्त्यै पुन अपि च अस्त्रे उत्तरागर्भ विशति रक्षन् अङ्गुष्ठमात्र चक्रपाणि जठरम् अगा किल इति। विभो शक्तिसम्पन्न। त्व श्रीकृष्ण । उच्छित्त्यै वशच्छेदाय। अपि चेति समुच्चये। अस्त्र द्रौणिप्रयुक्ते ब्रह्मास्त्रे इत्यर्थ । उत्तरागर्भम् उत्तराया अभिमन्युपत्न्या गर्भम्। विशति प्राप्ते सति। रक्षन् रक्षितुमित्यर्थ । अङ्गुष्ठमात्र अङ्गुष्ठमात्रवपु । चक्रपाणि सुदर्शन पाणौ वहन्। जठरम् अर्थादुत्तराया उदरम्। अगा गतवानसि। किलेति वार्तायाम्। भगवानुत्तराया जठर प्रविश्य चक्रेणास्त्र निवार्य गर्भस्थ शिशु ररक्षेत्यर्थ ॥

अथ धर्मजस्य भक्तिं भीष्मस्य मुक्तिं च प्रदाय भगवान् कृतकृत्योऽभूदित्याह—

धर्माघ धर्मसूनोरभिदधदखिल छन्दमृत्युस्स भीष्म
स्त्वा पश्यन् भक्तिभूम्नैव हि सपदि ययौ निष्कलब्रह्मभूयम्।
सयाज्याथाश्वमेधैस्त्रिभिरतिमहितैर्धर्मज पूर्णकाम
सम्प्राप्तो द्वारका त्व पवनपुरपते पाहि मा सर्वरोगात् ॥ ११ ॥

धर्मौघमिति ॥ छन्दमृत्युः सः भीष्मः धर्मसूनोः अखिलं धर्मौघम् अभिदधत् त्वां पश्यन् भक्तिभूम्ना एव सपदि निष्कलब्रह्मभूयं ययौ हि। छन्दमृत्युः स्वच्छन्दमृत्युः। सः भगवतो भूभारहरणे परमसुहृत्। धर्मसूनोः युधिष्ठिरस्य। अखिलं समस्तम्। धर्मौघं धर्मसञ्चयम्। अभिदधत् कथयन्। कथयित्वेत्यर्थः। त्वां श्रीकृष्णम्। भक्तिभूम्ना भक्त्यतिशयेन। सपदि झटिति। निष्कलब्रह्मभूयं निष्कलब्रह्मात्मताम्। भगवत्सायुज्यमित्यर्थः। ययौ प्राप। हीति प्रसिद्धौ। हे पवनपुरपते अथ अतिमहितैः त्रिभिः अश्वमेधैः धर्मजं संयाज्य पूर्णकामं द्वारकां सम्प्राप्तः त्वं मां सर्वरोगात् पाहि। पवनपुरपते गुरुवायुपुरनाथ। अथ अनन्तरम्। अतिमहितैः अत्यर्थं पूजितैः। धर्मजं धर्मपुत्रम्। संयाज्य याजयित्वा। पूर्णकामं पूर्णमनोरथम्। कृत्वेति शेषः। संप्राप्तः अधिगतः। त्वं श्रीकृष्ण। मामनन्यशरणम्। सर्वरोगात् वातादिभ्यो बाह्येभ्यो रागादिभ्य आन्तरेभ्यश्चामयेभ्यः इत्यर्थः। पाहि त्रायस्व ॥

इति साल्वादिवधवर्णनं भारतयुद्धोपक्रमवर्णनं भारतयुद्धवर्णनं च
षडशीतितमदशकं सैकम् ॥

---

## सप्ताशीतितमदशकम्।

अथ भगवतः कुचेलानुग्रहप्रकारं वर्णयति—

कुचेलनामा भवतः सतीर्थ्यतां
गतः स सान्दीपनिमन्दिरे द्विजः।
त्वदेकरागेण धनादिनिस्पृहो
दिनानि निन्ये प्रशमी गृहाश्रमी ॥ १ ॥

कुचेलनामेति ॥ सान्दीपनिमन्दिरे भवतः सतीर्थ्यतां गतः कुचेल नामा सः द्विजः त्वदेकरागेण धनादिनिस्पृहः प्रशमी गृहाश्रमी दिनानि

निन्ये। सान्दीपनिमन्दिरे सान्दीपनेः तन्नाम्नो मुनेर्मन्दिरे भवने। भवत श्रीकृष्णस्य। सतीर्थ्यतां सब्रह्मचारित्वम्। गतः प्राप्तः। कुचेलनामा कुचे लाख्यः। सः भगवतः परममित्रत्वेन प्रसिद्धः। द्विजः ब्राह्मणः। त्वदेक रागेण त्वयि श्रीकृष्णे एवैकस्मिन् रागेण प्रेमलक्षणया भक्त्या। धनादि निःस्पृहः धनादौ निःस्पृहः निरभिलाषः। प्रशमी जितेन्द्रियः। गृहाश्रमी गृहमेधी सन्। दिनानि दिवसान्। निन्ये नीतवान्॥

क्षुधार्तायाः कुचेलपत्न्याः प्रार्थनाप्रकारं दर्शयति—

समानशीलाऽपि तदीयवल्लभा
तथैव नो चित्तजयं समेयुषी।
कदाचिदूचे बत वृत्तिलब्धये
रमापतिः किं न सखा निषेव्यते ॥ २ ॥

**समानशीलेति**। समानशीला अपि तथा एव चित्तजयं नो समे युषी तदीयवल्लभा बत कदाचित् वृत्तिलब्धये ऊचे। समानशीला समानं कुचेलस्वभावतुल्यं शीलं स्वभावो यस्याः सा। अविविरोधे। तथैव कुचे लवदेव। चित्तजयं चित्तस्य मनसो जयम्। धनादिनिःस्पृहत्वमित्यर्थः। नो समेयुषी अप्राप्तवती। तदीयवल्लभा कुचेलपत्नी। बतेति खेदे। तथाविधायाः कुचेलपत्न्या दारिद्र्यदुःखानुसन्धानं कवेः खेदहेतुः। कदा चित् एकदा। वृत्तिलब्धये वृत्तेर्जीवनस्य लब्धये प्राप्त्यै। ऊचे अवदत्। पतिमिति शेषः। उक्तिप्रकारमाह—सखा रमापतिः किं न निषेव्यते इति। सखेत्यनेन निषेवौचित्यं द्योत्यते। रमापतिः श्रीकृष्णः। रमायाः लक्ष्म्याः पतिरित्यन्वर्थोऽयं रमापतिशब्दो भगवत स्वसेवकानां सर्वसम्पत्समृद्धिप्रदाने सामर्थ्यं व्यनक्ति। यद्यपि श्लोकेऽस्मिन् युष्मच्छब्देन भवच्छब्देन वा न भग वतो निर्देशो विद्यते, तथाऽप्युत्तरश्लोकावस्थितस्येतिशब्दस्यार्थप्रदर्शनपरत्वेन न स्तोत्रत्वानुपपत्तिः। अथवा, भगवन्नित्यध्याहृत्य योजनेऽपि न स्तोत्रत्वानु पपत्तिरिति द्रष्टव्यम्॥

कुचेलस्य द्वारकां प्रति गमनमाह—

इतीरितोऽयं प्रियया क्षुधार्तया
जुगुप्समानोपि धने मदावहे ।
तदा त्वदालोकनकौतुकाद्ययौ
वहन् पटान्ते पृथुकानुपायनम् ॥ ३ ॥

**इतीति ॥** क्षुधार्तया प्रियया इति ईरितः अयं धने जुगुप्समानः अपि तदा त्वदालोकनकौतुकात् पटान्ते पृथुकान् उपायनं वहन् ययौ। क्षुधार्तया क्षुत्क्षामया। प्रियया पत्न्या। इति रमापतिः किं न सखेत्या द्युक्तप्रकारेण। ईरितः उक्तः। अयं कुचेलः। धने सम्पत्समृद्धौ। जुगुप्स मानः जुगुप्सावान्। अपिर्विरोधे। तदा तस्मिन्नवसरे। त्वदालोकन कौतुकात् त्वदालोकने तव श्रीकृष्णस्यालोकने दर्शने कौतुकात् कुतूहलात्। पटान्ते वस्त्राञ्चले पृथुकानेवोपायनमुपहारम्। वहन् दधानः। ययौ जगाम। धने जुगुप्सायां हेतुः—मदावहे इति। मदावहे मदजनके॥

कुचेलस्य भगवन्निकेतनप्राप्तिमाह—

गतोऽयमाश्चर्यमयीं भवत्पुरीं
गृहेषु शैब्याभवनं समेयिवान्।
प्रविश्य वैकुण्ठमिवाप निर्वृतिं
तवातिसम्भावनया तु किं पुनः ॥ ४ ॥

**गत इति ॥** अयम् आश्चर्यमयीं भवत्पुरीं गतः गृहेषु शैब्याभवनं समेयिवान्। अयं कुचेलः। आश्चर्यमयीम् अनल्पशिल्पतयाऽद्भुतं द्रष्टृणा मुत्पादयन्तीम्। भवत्पुरीं भवतः श्रीकृष्णस्य पुरीं द्वारकाम्। गतः प्राप्तः। गृहेषु द्व्यष्टसाहस्रेषु मध्ये। शैब्याभवनं शैब्यायाः भवनम्। समेयि वान् प्राप्तवान्। तव अतिसम्भावनया तु वैकुण्ठं प्रविश्य इव निर्वृतिमाप, किं पुनः। तव श्रीकृष्णस्य। अतिसम्भावनया अधिकया पादावनेजन

वीजनादिरूपया सम्भावनया सम्माननेन। तुर्विशेषे। तमाह—वैकुण्ठमित्यादि। वैकुण्ठं विकुण्ठलोकम्। प्रविश्य प्राप्य। निर्वृतिं परमानन्दम्। आप प्राप। किं पुनः। उच्यत इति शेषः। इतोऽधिकं न किञ्चिदपि वक्तव्यमस्तीत्यर्थः॥

कुचेलेन सह भगवतः सम्भाषणप्रकारमाह—

प्रपूजितं तं प्रियया च वीजितं
करे गृहीत्वाऽकथयः पुराकृतम्।
यदिन्धनार्थं गुरुदारचोदितै-
रपर्तुवर्षं तदमर्षि कानने ॥ ५ ॥

**प्रपूजितमिति॥** त्वं प्रपूजितं प्रियया वीजितं च तं करे गृहीत्वा पुराकृतम् अकथयः। त्वं श्रीकृष्णः। प्रपूजितं प्रकर्षेण पूजितम्। प्रियया शैब्यया। चकारः समुच्चये। तं कुचेलम्। गृहीत्वा आदाय। पुराकृतं पूर्वं गुरुकुले कृतं वृत्तम्। अकथयः उक्तवानसि। उक्तिप्रकारमाह—इन्धनार्थं गुरुदारचोदितैः अस्माभिः कानने यत् अपर्तुवर्षं तत् अमर्षि इति। इन्धनार्थम् इन्धनमाहर्तुम्। गुरुदारचोदितैः गुरुदारैः गुरुपत्न्या चोदितैः प्रेरितैः। कानने वने। अपर्तुवर्षम् अपर्तौ वर्षर्तुव्यतिरिक्ते काले वर्षम्। आसीदिति शेषः। अमर्षि सोढम्। अपर्तुवर्षममर्षीति यत्, तत् पुराकृतं कर्माकथयदिति सम्बन्ध इति भक्तप्रिया॥

भगवतः कुचेलानीतस्योपायनस्य प्रतिग्रहं दर्शयति—

त्रपाजुषोऽस्मात् पृथुकं बलादथ
प्रगृह्य मुष्टौ सकृदाशिते त्वया।
कृतं कृतं नन्वियतेति सम्भ्रमा-
द्रमा किलोपेत्य करं रुरोध ते ॥ ६ ॥

**त्रपाजुष इति॥** अथ त्वया अस्मात् बलात् पृथुकं मुष्टौ प्रगृह्य सकृत् आशिते रमा सम्भ्रमात् उपेत्य इति ते करं रुरोध किल। अथ

अनन्तरम्। त्वया श्रीकृष्णेन। अस्मात् कुचेलात्। बलात् बलेन। प्रगृह्य आदाय। सकृत् एकवारम्। आशिते तस्मिन् भुक्ते सति। रमा श्रीः। सम्भ्रमात् त्वरया। उपेत्य आगत्य। इति एवमुक्त्वा। ते श्रीकृष्णस्य। करं पुनरपि भोक्तुं कुचेलात् पृथुकं गृहीतुमुद्यतम्। रुरोध निवारितवती। किलेति वार्तायाम्। रमाया उक्तिप्रकारमाह—ननु इयता कृतं कृतमिति। नन्वित्यामन्त्रणे। इयता एतावन्मात्रेण। कृतम् इह चामुत्र च समस्तविधभोगसाधने पर्याप्तम्। सम्भ्रमाद्विरुक्तिः। इतोऽधिकस्य त्वत्प्रसादस्य समुचिता या सम्पत्समृद्धिः तत्सम्पादनेऽहमसमर्थेति भावः। भगवतो बलात् पृथुकस्वीकारे हेतुः—त्रपाजुषः इति। श्रीनिकेतनाय भगवते कथं पृथुकमुष्टिं ददामीति लज्जाकुलादित्यर्थः॥

अथ कुचेलस्य मतिनिवृत्तिमाह—

भक्तेषु भक्तेन स मानितस्त्वया
पुरीं वसन्नेकनिशां महासुखम्।
बतापरेद्युर्द्रविणं विना ययौ
विचित्ररूपस्तव खल्वनुग्रहः ॥ ७ ॥

भक्तेष्विति॥ स. भक्तेषु भक्तेन त्वया मानितः एकनिशां महासुखं पुरीं वसन् अपरेद्युः द्रविणं विना ययौ बत। सः कुचेलः। भक्तेषु भक्तिमत्सु। भक्तेन वत्सलेन। त्वया श्रीकृष्णेन। मानितः सम्यक् सत्कृतः। एकनिशाम् एकमात्रां रात्रिम्। महासुखमिति क्रियाविशेषणम्। पुरीं द्वारकाम्। अपरेद्युः अन्येद्युः। द्रविणं विना धनलेशेनापि विना। ययौ स्वगृहं प्रति निवृत्तः। बतेति खेदे। धनलाभेच्छया समागतस्य कुचेलस्य तदलाभजनितं शोकमनुसन्धाय कवेः खेदः। अथ भगवत्कृतं तदनुग्रहमनुसन्धाय सहर्षाद्भुतमाह—तव अनुग्रहः विचित्ररूपः खलु इति। तव श्रीकृष्णस्य। विचित्ररूपः समक्षासमक्षादिरूपेण बहुप्रकारः। खल्विति प्रसिद्धौ॥

द्वारकाया निर्गच्छतः कुचेलस्य चिन्ताप्रकारमाह—

यदीहयाचिष्यमदास्यदच्युतो
 वदामि भार्यां किमिति व्रजन्नसौ ।
त्वदुक्तिलीलास्मितमग्नधीः पुनः
 क्रमादपश्यन्मणिदीप्रमालयम् ॥ ८ ॥

यदीति ॥ इति पुनः त्वदुक्तिलीलास्मितमग्नधीः व्रजन् असौ क्रमात् मणिदीप्रम् आलयमपश्यत् । इति एवं विचिन्त्य । पुनः अनन्तरम् । त्वदुक्तिलीलास्मितमग्नधीः तव श्रीकृष्णस्य उक्तौ मधुरालापे लीलास्मिते च मग्ना तदितरविषयानवगाहिनी धीर्यस्य सः । व्रजन् गच्छन् । असौ कुचेलः । क्रमात् क्रमेण । मणिदीप्रं मणिभिः रत्नैर्दीप्रमुज्ज्वलम् । आलयं स्वभवनम् । अपश्यत् दृष्टवान् । कुचेलस्य चिन्ताप्रकारमाह—अहं यदि अयाचिष्यम्, तर्हि अच्युतः अदास्यत् हि, भार्यां किं वदामि इति । अयाचिष्यं याचितवानस्मि । अच्युत श्रीकृष्णः । अदास्यत् हि । हीत्य वधारणे । दास्यत्येव । नाहं याचितवानच्युतश्च न दत्तवानित्यर्थः । भार्या मम पतिः सुहृदो भगवतः श्रीकृष्णात् प्रभूतं धनमादायागमिष्यतीति चिन्त यित्वा मदागमनप्रतीक्षिणीम् । किं वदामि अकृत्वा याचनामपि निर्धनः प्रति निवृत्तोऽहं किं कथयामि । विचारदशायां न किमप्युत्पश्यामीत्यर्थः ॥

कुचेलो भगवदनुग्रहं बुबुध इत्याह—

किं मार्गविभ्रंश इति भ्रमन् क्षणं
 गृहं प्रविष्टः स ददर्श वल्लभाम् ।
सखीपरीतां मणिहेमभूषितां
 बुबोध च त्वत्करुणां महाद्भुताम् ॥ ९ ॥

किमिति ॥ सः किं मार्गविभ्रंशः इति क्षणं भ्रमन् गृहं प्रविष्टः वल्लभां ददर्श । सः कुचेलः । किं मार्गविभ्रंशः किं मार्गभ्रंशः । जात

इति शेषः। किन्नु खल्वहं मार्गात् भ्रष्टः पुनरपि द्वारकां प्रविष्टोऽस्मीति विचिन्त्येत्यर्थः। भ्रमन् कर्तव्यमजानानः। पुनः गृहं भगवदनुग्रहेण लब्धं सुरपुरातिशायिनं स्वकीयमालयं प्रविष्टः प्राप्तः। वल्लभां स्वपत्नीम्। ददर्श दृष्टवान्। वल्लभायास्तदानीन्तनमवस्थाविशेषमाह — सखीपरीतां मणिहेमभूषितामिति। सखीपरीतां सखीभिः परीतां परिवृताम्। मणिहेमभूषितां मणिभिः मणिमयैराभरणैः हेम्ना स्वर्णमयैश्चाभरणैर्भूषितामलङ्कृताम्। महाद्भुतां त्वत्करुणां बुबोध च। महाद्भुताम् अमर्त्यदुर्लभाया आत्मसम्पदो भगवत्कृपाहेतुकतयाऽत्यन्तमद्भुतकारिणीम्। त्वत्करुणां तव श्रीकृष्णस्य करुणां कृपाम्। बुबोध बुबुधे॥

अथ विस्मयनीयां कुचेलस्य चरमगतिमाह—

स रत्नशालासु वसन्नपि स्वयं
समुन्नमद्भक्तिभरोऽमृतं ययौ ।
त्वमेवमापूरितभक्तवाञ्छितो
मरुत्पुराधीश हरस्व मे गदान् ॥ १० ॥

स इति॥ सः स्वयं रत्नशालासु वसन् अपि समुन्नमद्भक्तिभरः अमृतं ययौ। स. कुचेलः। रत्नशालासु रत्नमयीषु शालासु सौधपङ्क्तिषु कामोद्दीपनविभवेषु। अपिर्विरोधे। सुखितस्य भगवत्स्मरणासम्भवाद्विरोधः। उक्तञ्च केनचित् सुधिया—'विपदः सन्तु नः शश्वत्तासु सङ्कीर्त्यते हरिः' इति। समुन्नमद्भक्तिभरः प्रवृद्धभक्त्यतिशयः। अमृतं मोक्षम्। ययौ प्राप। अथ प्रार्थयते--हे मरुत्पुराधीश एवम् आपूरितभक्तवाञ्छितः त्वं मे गदान् हरस्व इति। मरुत्पुराधीश श्रीगुरुपवनपुरनाथ। एवम् उक्तप्रकारेण। आपूरितभक्तवाञ्छितः आपूरितं दत्तं भक्तस्य कुचेलस्य वाञ्छितम् अभिलषितं येन। त्वं श्रीकृष्णः। मे ममानन्यशरणस्य। गदान् बाधानाम्यन्तरांश्चामयान्। हरस्व निवारय॥

इति कुचेलोपाख्यानवर्णनम्
सप्ताशीतितमदशकम्॥

## अष्टाशीतितमदशकम् ।

अथ भगवतो मातुर्मृतपुत्रानयनमाह—

**प्रागेवाचार्यपुत्राहृतिनिशमनया स्वीयषट्सूनुवीक्षां**
**काङ्क्षन्त्या मातुरुक्त्या सुतलभुवि बलिं प्राप्य तेनार्चितस्त्वम् ।**
**धातुश्शापाद्धिरण्यान्वितकशिपुभवान् शौरिजान् कंसभग्ना-**
**नानीयैनान् प्रदर्श्य स्वपदमनयथाः पूर्वपुत्रान् मरीचेः ॥ १ ॥**

**प्रागेवेति ॥** त्वम् आचार्यपुत्राहृतिनिशमनया प्राक् एव स्वीयषट्सूनुवीक्षां काङ्क्षन्त्याः मातुः उक्त्या सुतलभुवि बलिं प्राप्य तेन अर्चितः धातुः शापात् हिरण्यान्वितकशिपुभवान् शौरिजान् कंसभग्नान् मरीचेः पूर्वपुत्रान् आनीय प्रदर्श्य एनान् स्वपदम् अनयथाः । त्वं श्रीकृष्णः । आचार्यपुत्राहृतिनिशमनया आचार्यस्य सान्दीपनेः पुत्रस्य आहृतिः आनयनं तस्या निशमनया । *मृतं पुत्रम् आनीय आचार्यस्य दक्षिणां कृतवानिति निशम्येत्यर्थः ।* स्वीयषट्सूनुवीक्षां स्वीयानामात्मीयानां षण्णां सूनूनां पुत्राणां कंसेन पूर्वं हतानां वीक्षां दर्शनम् । काङ्क्षन्त्या इच्छन्त्याः । मातुः देवक्याः । *उक्त्या वचनेन । सुतलभुवि सुतलनाम्नि लोके । बलिं महाबलिम् ।* प्राप्य उपगम्य । तेन बलिना । अर्चितः पूजितः । धातुः ब्रह्मणः । हिरण्यान्वितकशिपुभवान् हिरण्यकशिपोः पुत्रतया जातान् । पुनः शौरिजान् शौरेर्वसुदेवाद्देवक्यां जातान् । कंसभग्नान् कंसेन भग्नान् हतान् । पूर्वपुत्रान् पूर्वात्मजान् । प्रदर्श्य मात्रे दर्शयन् । एनान् मरीचेः सुतान् । स्वपदं स्वकीयं स्थानम् । अनयथाः नीतवानसि ॥

अथ श्रुतदेवबहुलाश्वयोर्मुक्तिप्रदानमाह द्वाभ्याम्—

**श्रुतदेव इति श्रुतं द्विजेन्द्रं बहुलाश्वं नृपतिं च भक्तिपूर्णम् ।**
**युगपत्त्वमनुग्रहीतुकामो मिथिलां प्रापिथ तापसैः समेतः ॥ २ ॥**

श्रुतदेव' इति ॥' त्वं श्रुतदेवः इति श्रुतं द्विजेन्द्रं बहुलाश्वं नृपतिं च युगपत् अनुग्रहीतुकामः तापसैः समेतः मिथिलां प्रापिथ। त्वं श्रीकृष्णः। श्रुतं प्रसिद्धम्। द्विजेन्द्रं द्विजश्रेष्ठम्। बहुलाश्वं तन्नामानम्। नृपतिं राजानम्। चकारः समुच्चये। युगपत् समकालम्। अनुग्रहीतुकामः अनुग्रहीतुमिच्छन्। तापसैः मुनिभिः। समेतः सहितः। मिथिलां मिथिलानगरीम्। प्रापिथ प्राप्तवानसि। श्रुतदेवबहुलाश्वयोरनुग्रहणेच्छायां हेतुमाह— भक्तिपूर्णमिति। भक्त्या पूर्णम्। एतच्चोभयत्र सम्बध्यते॥

गच्छन् द्विमूर्तिरुभयोर्युगपन्निकेत-
मेकेन भूरिविभवैर्विहितोपचारः।
अन्येन तद्दिनभृतैश्च फलौदनाद्यै-
स्तुल्यं प्रसेदिथ ददाथ च मुक्तिमाभ्याम् ॥ २ ॥

गच्छन्निति ॥ त्वं द्विमूर्तिः उभयोः निकेतं युगपत् गच्छन् एकेन भूरिविभवैः अन्येन तद्दिनभृतैः फलौदनाद्यैः च विहितोपचारः तुल्यं प्रसेदिथ, आभ्यां मुक्तिं ददाथ च। त्वं श्रीकृष्णः। द्विमूर्तिः अङ्गीकृतशरीरद्वयः। उभयोः बहुलाश्वश्रुतदेवयोः। निकेतं गृहम्। युगपत् समकालम्। गच्छन् प्राप्तः। एकेन बहुलाश्वेन। भूरिविभवैः भूरिभिः प्रभूतैः विभवैः उपकरणैः। अन्येन श्रुतदेवेन। तद्दिनभृतैः तस्मिन्नेव दिने भृतैः सम्भृतैः। फलौदनाद्यैः फलौदनप्रभृतिभिः। विहितोपचार विहितः कृतः उपचारः पूजा यस्य सः। तुल्यं न्यूनाधिकभावेन विना। प्रसेदिथ तयोः प्रसन्नोऽभूः। आभ्यां बहुलाश्वश्रुतदेवाभ्याम्। मुक्तिं मोक्षम्। ददाथ दत्तवानसि। चकारः समुच्चये॥

अथार्जुनस्य गर्वापनयनपुरस्सरं भगवति तत्त्वबुद्ध्यापादनप्रकारमाह—

भूयोऽथ द्वारवत्यां द्विजतनयमृतिं तत्प्रलापानपि त्वं
को वा दैवं निरुन्ध्यादिति किल कथयन् विश्ववोढाप्यसोढाः।

अथार्जुनस्य द्वारवत्यामागमनं प्रतिज्ञाविधानं चाह—

नष्टा अष्टास्य पुत्राः पुनरपि तव तूपेक्षया कष्टवादः
स्पष्टो जातो जनानामथ तदवसरे द्वारकामार पार्थः ।
मैत्र्या तत्रोषितोऽसौ नवमसुतमृतौ विप्रवर्यप्ररोदं
श्रुत्वा चक्रे प्रतिज्ञामनुपहृतसुतः सन्निवेक्ष्ये कृशानुम् ॥ ५ ॥

**नष्टा इति** ॥ अस्य अष्टपुत्राः नष्टाः । अस्य द्विजस्य । नष्टाः मृताः । पुनः अपि तु तव उपेक्षया जनानां स्पष्टः कष्टवादः जातः । पुनरपि अष्टस्वपत्येषु नष्टेष्वपि । अनेन भगवदुपेक्षाया अत्यन्तमनौचित्यं द्योत्यते । तुर्विशेषे । तमाह—तवोपेक्षयेति । तव जगदीश्वरस्य द्विजसुतांस्त्रातुं समर्थस्य श्रीकृष्णस्य । उपेक्षया औदासीन्येन । स्पष्टः प्रकाशः । न तु गूढः । कष्टवादः कष्टमिदं भगवतो द्विजसुतपरिरक्षणौदासीन्यमिति प्रवादः । जातः सञ्जातः । अथ तदवसरे पार्थः द्वारकामार । अथ अनन्तरम् । तदवसरे तस्मिन्नवसरे । पार्थः अर्जुनः । द्वारकां द्वारवतीम् । आर प्राप । तत्र मैत्र्या उषितः असौ नवमसुतमृतौ विप्रवर्यप्ररोदं श्रुत्वा प्रतिज्ञां चक्रे । तत्र द्वारवत्याम् । मैत्र्या मित्रतया । उषितः वसन्नित्यर्थः । असौ अर्जुनः । नवमसुतमृतौ विप्रस्य नवमेऽपि पुत्रे मृते । विप्रवर्यप्ररोदं विप्रवर्यस्य द्विजवरस्य प्ररोदं प्रकृष्टं रोदनम् । श्रुत्वा आकर्ण्य । चक्रे कृतवान् । प्रतिज्ञाप्रकारमाह—अनुपहृतसुतः अहं कृशानुं सन्निवेक्ष्ये इति । अनुपहृतसुतः अदत्तजनिष्यमाणपुत्रः । कृशानुम् अग्निम् । सन्निवेक्ष्ये प्रविश्य प्राणांस्त्यक्ष्ये । यद्यहं जनिष्यमाणं तव पुत्रं न दास्यामि, तर्ह्यग्निं प्रविश्य प्राणान् त्यक्ष्यामीत्यर्थः । इति प्रतिज्ञां चक्र इति सम्बन्धः ॥

अर्जुनस्य द्विजसुतपरिरक्षणोद्यमाद्याह—

मानी स त्वामपृष्ट्वा द्विजनिलयगतो बाणजालैर्महास्त्रै
रुन्धानः सूतिगेहं पुनरपि सहसा दृष्टनष्टे कुमारे ।

याम्यामैन्द्रीं तथाऽन्याः सुरवरनगरीर्विद्ययाऽऽसाद्य सद्यो
मोघोद्योगः पतिष्यन् हुतभुजि भवता सस्मितं वारितोऽभूत् ॥ ६ ॥

**मानीति** ॥ मानी त्वामपृष्ट्वा द्विजनिलयगत बाणजालै महास्त्रै सूतिगेह रुन्धान पुन अपि कुमारे सहसा दृष्टनष्टे याम्याम् ऐन्द्रां तथा अन्या सुरवरनगरी सद्य विद्यया आसाद्य मोघोद्योग हुतभुजि पतिष्यन् भवता सस्मित वारित अभूत्। मानी आश्रितरक्षणेऽद्वितीयोऽहमित्यभिमानवान्। इद विशेषण त्वामपृष्ट्वेत्यत्र हेतुप्रदर्शनपरम्। स अर्जुन। त्वा श्रीकृष्णम्। परममित्रमपीति भाव। अपृष्ट्वा अनापृच्छ्य। द्विजनिलयगत द्विजस्य ब्राह्मणस्य निलय गृह गत प्राप्त। बाणजालै शरौघै। महास्त्रै महद्भिराग्नेयादिभिरस्त्रै। सूतिगेह सूतिकागृहम्। रुन्धान कृतपञ्जरो रक्षन्नित्यर्थ। पुन अनन्तरम्। अपि समुच्चये। कुमारे दशमे द्विजसुते। सहसा झटिति। दृष्टनष्टे दृष्टे प्रसूते नष्टे अदर्शन गते सति। जातमात्र एव झटिति सशरीरमदर्शन गत इत्यर्थ। पूर्वेभ्योऽस्य विशेष इति द्रष्टव्यम्। याम्या यमसम्बन्धिनी पुरीम्। ऐन्द्रीमिन्द्रसम्बन्धिनीं नगरीम्। तथा तेन प्रकारेण। अन्या इतरा। सुरवरनगरी सुरवराणा वरुणकुबेरादीना नगरी पुरी। सद्य सहसा। विद्यया योगैश्वर्येण। आसाद्य प्राप्य। मोघोद्योग मोघ निष्फल उद्योग उद्यमो यस्य स। सर्वत्र गवेषयन् द्विजसुतमदृष्ट्वेत्यर्थ। अत एव हुतभुजि वह्नौ। पतिष्यन् प्रतिज्ञा परिपालयितु पतितुमुद्यत। भवता श्रीकृष्णेन। सस्मित स्मितेन सह वर्तत इति यथा भवति तथा। वारित निवारित। पौरुषस्य दैवसापेक्षत्वमिदानीमवगतमित्यर्जुनस्य भावावेदन स्मिते हेतु ॥

अथ भगवदर्जुनयोर्वैकुण्ठलोकगमनमाह—

सार्धं तेन प्रतीचीं दिशमतिजविना स्यन्दनेनाभियातो
लोकालोकं व्यतीतस्तिमिरभरमथो चक्रधाम्ना निरुन्धन्।

चक्रांशुक्लिष्टदृष्टिं स्थितमथ विजयं पश्य पश्येति वारां
पारे त्वं प्राददर्शः किमपि हि तमसां दूरदूरं पदं ते ॥ ७ ॥

सार्धमिति ॥ त्वं तेन सार्धं प्रतीचीं दिशम् अतिजविना स्यन्दनेन अभियातः लोकालोकं व्यतीतः अथो तिमिरभरं चक्रधाम्ना निरुन्धन् अथ चक्रांशुक्लिष्टदृष्टिं स्थितं विजयं वारां पारे इति ते पदं प्राददर्शः। त्वं श्रीकृष्णः। तेन अर्जुनेन। सार्धं सह। प्रतीचीं वारुणीम्। दिशम् आशाम्। अतिजविना अचिन्त्यवेगेन। स्यन्दनेन भगवतो दिव्येन रथेन। अभियातः गतः। लोकालोकं चक्रवालम्। व्यतीतः अतिक्रान्तः। अथो अनन्तरम्। तिमिरभरं लोकालोकात् बहिस्सूर्यालोकाभावात् पुञ्जीभूतमन्धकारनिकरम्। चक्रधाम्ना सहस्रारतेजसा। निरुन्धन् निवारयन्। अथ अनन्तरम्। चक्रांशुक्लिष्टदृष्टिं चक्रांशुभिः सहस्रारगभस्तिभिः क्लिष्टा विलोकनाक्षमा दृष्टिर्यस्य तम्। स्थितं चक्षुषी निमील्य स्थितम्। विजयम् अर्जुनम्। वारां पारे कारणजलस्य मध्य इत्यर्थः। इति एवमुक्त्वा। ते विकुण्ठनिलयस्य श्रीकृष्णस्य। पदं विकुण्ठलोकसंज्ञितं परमं स्थानम्। प्राददर्शः प्रदर्शितवानसि। भगवत उक्तिप्रकारमाह—पश्य पश्य इति। अत्र द्विरुक्त्या भगवत्पदस्य दर्शनीयतातिशयो ध्वन्यते। दर्शनीयतातिशये हेतुं दर्शयति—तमसां दूरदूरं किमपि इति। तमसां दूरदूरम्। अत्र तमःपदं रजसोऽप्युपलक्षणम्। रजस्तमःकार्यभूतैः मानक्रोधभयादिभिः कदाप्यस्पृष्टमित्यर्थः। किमपि अनिर्देश्यरूपम्। हीति प्रसिद्धौ ॥

श्रीकृष्णार्जुनयोर्भगवत्समागममाह—

तत्रासीनं भुजङ्गाधिपशयनतले दिव्यभूषायुधाद्यै-
रावीतं पीतचेलं प्रतिनवजलदश्यामलं श्रीमदङ्गम्।
मूर्तीनामीशितारं परमिह तिसृणामेकमर्थं श्रुतीनां
त्वामेव त्वं परात्मन् प्रियसखसहितो नेमिथ क्षेमरूप ॥ ८ ॥

तत्रेति ॥ हे परात्मन् त्वं प्रियसखसहितः त्वामेव नेमिथ। परात्मन् परब्रह्मस्वरूप। त्वं श्रीकृष्णः। प्रियसखसहितः प्रियसखेन प्रिय मित्रेणार्जुनेन सहित। त्वामेव। श्रीवैकुण्ठस्य द्वारकावासिनः श्रीकृष्णस्या प्यैश्येनानन्यमित्यर्थ.। नेमिथ प्रणतोऽभू.। विकुण्ठलोकवासिनो भगवतः स्वरूपमाह— तत्र भुजङ्गाधिपशयनतले आसीनं दिव्यभूषायुधाद्यैः आवीतं पीतचेलं प्रतिनवजलदश्यामलं श्रीमदङ्गं तिसृणा मूर्तीनामीशितारम् इह परं श्रुतीनाम् एकमर्थं क्षेमरूपमिति। तत्र कारणजलमध्यवर्तिनि विकुण्ठनिलये। भुजङ्गाधिपशयनतले अनन्तभोगतल्पे। आसीनम् उपविष्टम्। दिव्यभूषायुधाद्यैः दिव्याभरणदिव्यायुधप्रभृतिभि.। आवीतं परीतम्। पीतचेलं पीताम्बरम्। प्रतिनवजलदश्यामलं नूतनजलधरच्छविम्। श्रीमदङ्गं श्रीमत् लक्ष्म्या विराज मानम् अङ्गं शरीरं यस्य तम्। तिसृणां मूर्तीनां ब्रह्मादीनाम्। ईशितारं रक्षितारम्। अत्र विष्णोरपि त्रिमूर्त्यन्तर्गततया स्वस्य स्वयमेव रक्षितेति सिद्धम्। अत एवोक्तम्—इह परमिति। इह जगति। परम् सर्वोत्कृ ष्टम्। श्रुतीनाम् वेदानाम्। एकमर्थं प्रधानप्रतिपाद्यम्। अत एव क्षेम रूपं परमपुरुषार्थस्वरूपम् ॥

अथ भगवतो द्विजवरे तत्सुतार्पणमाह—

युवां मामेव द्वावधिकविवृतान्तर्हिततया
विभिन्नौ सन्द्रष्टुं स्वयमहमहार्षं द्विजसुतान्।
नयेतं द्रागेतानिति खलु वितीर्णान् पुनरमून्
द्विजायादायादाः प्रणुतमहिमा पाण्डुजनुषा ॥ ९ ॥

युवामिति ॥ त्वम् इति खलु वितीर्णान् अमून् आदाय पुनः ड्डुजनुषा प्रणुतमहिमा द्विजाय अदा.। त्वम् श्रीकृष्ण। इति एवमुक्त्वा। ल्विति वाक्यालङ्कारे। अथवा खल्विति प्रसिद्धौ। अदा. इत्यस्योत्तरमन्वेति । वितीर्णान् भगवता दत्तान्। अमून् सर्वान् द्विजात्मजान्। आदाय ।कृत्य। पुनः अनन्तरम्। पाण्डुजनुषा अर्जुनेन। प्रणुतमहिमा प्रणुतः

प्रकर्षेण स्तुतः महिमा माहात्म्यं यस्य सः। द्विजाय ब्राह्मणाय। अदाः द्वारकां प्राप्य दत्तवानसि। श्रीवैकुण्ठस्योक्तिप्रकारमाह— अहं स्वयं मामेव अधिकविवृतान्तर्हिततया विभिन्नौ युवां द्वौ सन्द्रष्टुं द्विजसुतान् अहार्षम्, एतान् द्राक् नयेतमिति। अधिकविवृतान्तर्हिततया अधिकविवृतः शुद्धसत्त्वोपाधिकतया प्रकटितनिजैश्वर्यः अन्तर्हितः उपाध्यन्तर्हितनिजैश्वर्यः तयोर्भावः अधिकविवृतान्तर्हितता तया विभिन्नौ जीवेश्वररूपेण भासमानौ। युवाम् कृष्णार्जुनौ। द्वौ द्विधा वर्तमानौ। सन्द्रष्टुम् सम्यक् द्रष्टुम्। द्विजसुतान् ब्राह्मणपुत्रान्। अहार्षं हृतवानस्मि। एतान् समीपे वर्तमानान्। द्विजसुतान् दश। द्राक् झटिति। नयेतम् आदाय द्वारकां नीत्वा द्विजाय यच्छतमित्यर्थः॥

अथ भगवतो यजनाद्याह—

**एवं नानाविहारैर्जगदभिरमयन् वृष्णिवंशं प्रपुष्ण-**
**न्नीजानो यज्ञभेदैरतुलविहृतिभिः प्रीणयन्नेणनेत्राः।**
**भूभारक्षेपदम्भात्पदकमलजुषां मोक्षणायावतीर्णः**
**पूर्णं ब्रह्मैव साक्षाद्यदुषु मनुजतारूषितस्त्वं व्यलासीः॥ १०॥**

**एवमिति॥** भूभारक्षेपदम्भात् पदकमलजुषां मोक्षणाय मनुजतारूषितः यदुषु अवतीर्णः पूर्णं ब्रह्म एव त्वम् एवं नानाविहारैः जगत् अभिरमयन् वृष्णिवंशं प्रपुष्णन् यज्ञभेदैः ईजानः अतुलविहृतिभिः एणनेत्राः प्रीणयन् साक्षात् व्यलासीः। भूभारक्षेपदम्भात् भूभारस्य भुवो भारायमाणानां नृपाणां क्षेपस्य संहारस्य दम्भाद्व्याजेन। पदकमलजुषां पदकमलं जुषन्ते सेवन्त इति तथाविधानाम्। भक्तानामित्यर्थः। मोक्षणाय संसारसागरसमुद्धरणाय। मनुजतारूषितः मनुजतया मनुष्यत्वेन रूषितः प्रच्छन्नस्वस्वरूपः। यदुषु यादवकुले। अवतीर्णः जातः। पूर्णं सच्चिदानन्दरूपम्। एवकारेणान्यस्य व्यवच्छेदः। त्वं श्रीकृष्णः। एवमुक्तप्रकारेण। नानाविहारैः नानाविधैः विहारैः लीलाभिः। जगत् लोकम्। अभिरमयन् आनन्दयन्।

वृष्णिवंशं यादवकुलम्। प्रपुष्णन् संवर्धयन्। यज्ञभेदैः नानाप्रकारैः क्रतुभिः। ईजानः लोकसंग्रहार्थं यजन्। अतुलविहृतिभिः अतुलाभिर्निस्तुलाभिर्विहृतिभिः लीलाभिः। गणनेयाः षोडशसहस्राधिका वल्लभाः। प्रीणयन् आनन्दयन्। साक्षात् प्रत्यक्षमूर्तिः। व्यलासीः विलेसिथ॥

वसुदेवोद्धवयोस्तत्त्वबोधलाभमाह—

प्रायेण द्वारवत्यामवृतदयि तदा नारदस्त्वद्रसार्द्र-
स्तस्माल्लेभे कदाचित् खलु सुकृतनिधिस्त्वत्पिता तत्त्वबोधम्।
भक्तानामग्रयायी स च खलु मतिमानुद्धवस्त्वत्त एव
प्राप्तो विज्ञानसारं स किल जनहितायाधुनाऽऽस्ते बदर्याम् ॥ ११ ॥

प्रायेणेति ॥ अयि तदा नारदः प्रायेण द्वारवत्यामवृतत्। अयीति सम्बोधने। भगवन्निति शेषः। प्रायेण प्रायशः। दक्षशापादेकत्र स्थिरतया वस्तुमशक्यतया गतागतपूर्वकमित्यर्थः। द्वारवत्या द्वारकायाम्। अवृतत् वर्तते स्म। अत्र हेतुः—त्वद्रसार्द्रः इति। त्वयि श्रीकृष्णे रसेन भक्त्या आर्द्रः विलीनहृदयः। सुकृतनिधिः त्वत्पिता खलु कदाचित् तस्मात् तत्त्वबोधं लेभे। सुकृतनिधिः प्रकृष्टपुण्यवान्। त्वत्पिता तव श्रीकृष्णस्य पिता वसुदेवः। खल्विति स्वर्थे, वाक्यालङ्कारे वा। कदाचित् एकदा। तस्मात् श्रीनारदात्। तत्त्वबोधं तत्त्वज्ञानम्। लेभे लब्धवान्। भक्तानाम् अग्रयायी मतिमान् स उद्धवः च त्वत्तः एव विज्ञानसारं प्राप्तः खलु। भक्तानां भक्तिमताम्। अग्रयायी अग्रेसरः। मतिमान् धीमान्। चकारस्त्वर्थे। त्वत्तः श्रीकृष्णात्। एवकारेणान्यस्य व्यवच्छेदः। विज्ञानसारं तत्त्वबोधम्। प्राप्तः लब्धवान्। खल्विति प्रसिद्धौ। सः जनहिताय अधुना बदर्यामास्ते किल। सः उद्धवः। जनहिताय जनानां तत्त्वोपदेशाय। अधुना इदानीमपि। बदर्यां बदर्याश्रमे। आस्ते वर्तते। किलेति वार्तायाम्॥

अथ भगवतः श्रीकृष्णावतारचरितमुपसंहरन्नाह —

सोऽयं कृष्णावतारो जयति तव विभो यत्र सौहार्दभीति–
स्नेहद्वेषानुरागप्रभृतिभिरतुलैरश्रमैर्योगभेदैः।
आर्तिं तीर्त्वा समस्तामसृतपदमगुस्सर्वतः सर्वलोकाः
स त्वं विश्वार्तिशान्त्यै पवनपुरपते भक्तिपूर्त्यै च भूयाः ॥ १२ ॥

सोऽयमिति ॥ हे विभो तव सः अयं कृष्णावतारः जयति। विभो परिपूर्ण। तव श्रीगुरुपवनपुरेशस्य विष्णोः। सः अनन्यसाधारणतया प्रसिद्धः। अयम् इदानीं मया वर्णितः। कृष्णावतारः श्रीकृष्णरूपेणावतारः। जयति सर्वोत्कर्षेण वर्तते। अत्र हेतुमाह—सर्वतः सर्वलोकाः यत्र सौहार्दभीतिस्नेहद्वेषानुरागप्रभृतिभिः अतुलैः अश्रमैः योगभेदैः समस्तामार्तिं तीर्त्वा अमृतपदम् अगुरिति। सर्वतः सर्वत्र। सर्वलोकाः सर्वे निखिलाः लोकाः जनाः। यत्र श्रीकृष्णे। सौहार्दभीतिस्नेहद्वेषानुरागप्रभृतिभिः पाण्डवादयः सौहार्दात्, कंसो भयेन, नन्दवसुदेवादयः स्नेहात्, चैद्यादयो द्वेषात्, गोप्योऽनुरागाच्चेत्येवमादिभिः। अतुलैः अनुपमैः। अश्रमैः श्रमरहितैः। योगभेदैः योगानां भगवति मनसः स्थिरीकरणोपायानां भेदैः प्रकारविशेषैः। समस्तां निखिलाम्। आर्तिम् आध्यात्मिकादिपीडाम्। तीर्त्वा समुत्तीर्य। अमृतपदं मोक्षम्। अगुः आपुः। अथ प्रार्थयते—हे पवनपुरपते सः त्वं विश्वार्तिशान्त्यै भक्तिपूर्त्यै च भूयाः इति। पवनपुरपते श्रीगुरुवायुपुरनाथ। सः श्रीकृष्णरूपेणावतीर्णः। विश्वार्तिशान्त्यै समस्तसन्तापनिवृत्तये। भक्तिपूर्त्यै भक्तेः पूर्त्यै पूरणाय च ॥

इत्यर्जुनगर्वापनयनवर्णनम्

अष्टाशीतितमदशकं सटिकम् ॥

## एकोननवतितमदशकम् ।

एवं भगवदवतारचरित्राण्युपवर्ण्यानन्तरं लोकानुग्रहाय भगवतः श्रीकृष्णस्यैव भजनीयतां प्रतिपिपादयिषुः प्रथमं भगवदुपासकेषु विभवाद्यलाभदर्शनात् ज्यायमानं जनानां भगवदुपासनावैमुख्यं परिहरन्नाह—

रमाजाने जाने यदिह तव भक्तेषु विभवो
न सम्पद्यस्सद्यस्तदिह मदकृत्त्वादशमिनाम् ।
प्रशान्तिं कृत्वैव प्रदिशसि ततः काममखिलं
प्रशान्तेषु क्षिप्रं न खलु भवदीये च्युतिकथा ॥ १ ॥

**रमाजाने इति ॥** हे रमाजाने इह तव भक्तेषु विभवः सद्यः न सम्पद्यः यत् तत् इह मदकृत्त्वात् इति अहं जाने। रमाजाने लक्ष्मीपते। एतत् सम्बोधनं भगवतः सद्यो विभवप्रदाननैपुण्यं व्यनक्ति। इह जगति। तव श्रीकृष्णस्य। भक्तेषु उपासकेषु। विभवः सम्पत्समृद्धिः। सद्यः किञ्चिद्भजनमात्रेण। न सम्पद्यः परिणतो न भवति। इह विभवे। मदकृत्त्वात् मदजनकत्वात्। इतीत्यध्याहृतम्। जाने अवगच्छामि। नन्वेवं सति विभवाभिलाषिभिर्भगवदुपासनं न कर्तव्यमित्याशङ्कां परिहरति—अशमिनां प्रशान्तिं कृत्वा एव ततः अखिलं कामं प्रदिशसि, प्रशान्तेषु क्षिप्रमिति। अशमिनाम् अशान्तानाम्। प्रशान्तिं प्रशमनम्। एवकारोऽयोगव्यवच्छेदार्थः। ततः अनन्तरम्। अखिलं निखिलम्। कामम् अभिलाषम्। प्रदिशसि प्रयच्छसि। प्रशान्तेषु प्रकर्षेण शान्तेषु। क्षिप्रं सद्यः। अखिलं कामं प्रदिशसीति सम्बन्धः। ननु कुतो भगवान् भक्तेषु क्लेशमावहतीत्याशङ्कां परिहरति—भवदीये च्युतिकथा न भवति खलु इति। भवदीये भगवद्भक्ते। च्युतिकथा च्युतेर्भ्रंशस्य कथा प्रसङ्गोऽपि। खल्विति प्रसिद्धौ। अशान्तानां सम्पत्समृद्धौ सत्यां मदोत्पत्त्या भ्रंशो भविष्यति, तस्मात् स्व भक्तेषु न कदापि भ्रंशो भवेदिति प्रथमं तेषु प्रशान्तिं करोमीति भावः ॥

श्रीकृष्णेतरदेवोपासकेषु प्रथमं विभवसम्पन्नेष्वपि पश्चादशान्ततया तेषां भ्रंशं प्रतिपादयति—

**सद्यःप्रसादरुषितान् विधिशङ्करादीन्**
**केचिद्विभो निजगुणानुगुणं भजन्तः।**
**भ्रष्टा भवन्ति बत कष्टमदीर्घदृष्ट्या**
**स्पष्टं वृकासुर उदाहरणं किलास्मिन् ॥ २ ॥**

**सद्य इति॥** हे विभो केचित् अदीर्घदृष्ट्या सद्यप्रसादरुषितान् *विधिशङ्करादीन् निजगुणानुगुणं भजन्तः भ्रष्टाः भवन्ति बत कष्टम्।* विभो परिपूर्ण। अदीर्घदृष्ट्या अतिचिरविष्णुभजनमान्द्यादित्यर्थः। रागी फलप्राप्तौ विलम्बं सोढुं न शक्तो भवतीति विधिशङ्करादीन् भजत इति भावः। सद्य.प्रसादरुषितान् सद्यः प्रसन्नान् सद्यो रुषितांश्च। विधिशङ्करादीन् ब्रह्मरुद्रप्रमुखान्। निजगुणानुगुणं स्वस्ववासनानुरोधेन। भ्रष्टा॰ भवन्ति। तेषामेव कोपादिति भाव.। बत कष्टमिति खेदातिशये। अत्रोदाहरण माह-—अस्मिन् वृकासुरः स्पष्टमुदाहरणं किल इति। अस्मिन् श्रीकृष्णेत रोपासकाना भ्रंशे। वृकासुर वृकनामाऽसुरः। स्पष्टं स्फुटम्। उदाहरणं दृष्टान्त॰। किलेति वार्तायाम्॥

वृकासुरस्य वृत्तान्तं वर्णयति चतुर्भि —

**शकुनिजः स तु नारदमेकदा**
**त्वरिततोषमपृच्छदधीश्वरम्।**
**स च दिदेश गिरीशमुपासितुं**
**न तु भवन्तमबन्धुमसाधुषु ॥ ३ ॥**

**शकुनिज इति॥** स. शकुनिजः तु एकदा नारदं त्वरिततोषम् अधीश्वरमपृच्छत्। सः यः पूर्वमुदाहरणत्वेन दर्शित.। शकुनिज. शाकुनेयो वृकासुरः। तुर्विशेषे। एकदा एकस्मिन् दिने। नारदं श्रीनारद

मुनिम्। त्वरिततोषं सद्यःप्रसादम्। अधीश्वरम् ईश्वरम्। अपृच्छत् पृष्टवान्। स च *गिरीशम् उपासितुं दिदेश।* सः श्रीनारदमुनिः। 'च'कारस्त्वर्थे। गिरीशं शिवम्। उपासितुं तपसाऽऽराधयितुम्। दिदेश उपदिष्टवान्। न तु भवन्तम्। भवन्तं श्रीकृष्णम्। उपासितुं दिदेशेत्यस्यापि सम्बन्धः। अत्र हेतुं दर्शयति—असाधुषु अबन्धुमिति। असाधुषु असज्जनेषु। अबन्धुम् अवत्सलम्॥

वृकासुरस्य तपःप्रकारं वरप्रार्थनां चाह—

तपस्तप्त्वा घोरं स खलु कुपितः सप्तमदिने
*शिरश्छित्वा सद्यः पुरहरमुपस्थाप्य पुरतः।*
अतिक्षुद्रं रौद्रं शिरसि करदानेन निधनं
जगन्नाथाद्वव्रे भवति विमुखानां क्व शुभधीः ॥ ४ ॥

**तप इति॥** सः घोरं तपः तप्त्वा सप्तमदिने कुपितः शिरः छित्वा सद्यः पुरतः पुरहरम् उपस्थाप्य अतिक्षुद्रं रौद्रं शिरसि करदानेन निधनं जगन्नाथात् वव्रे खलु। सः शाकुनेयः। घोरं दारुणम्। सप्तमदिने सप्तमे दिवसे। शिरः शीर्षम्। छित्वा स्वयमेवेत्यर्थः। सद्यः झटिति। पुरतः पुरस्तात्। पुरहरं शिवम्। उपस्थाप्य प्रत्यक्षीकृत्य। अतिक्षुद्रं कस्यापि पुरुषार्थस्यानुपयोगितया असारम्। रौद्रं भयानकम्। शिरसि मूर्धनि। करदानेन स्वस्य करार्पणेन। निधनं मरणप्राप्तिरूपम्। *अहं यस्य शिरसि करमर्पयामि, सः झटिति पञ्चतां गच्छेदितीदृशं वर*मित्यर्थः। जगन्नाथात् जगदीश्वराच्छिवात्। वव्रे प्रार्थितवान्। ननु कुतोऽयं शोभनं कमपि वरं न वव्रे इति चेत्तत्राह—भवति विमुखानां शुभधीः क्व इति। भवति श्रीवासुदेवे। विमुखानाम् अभक्तानाम्। शुभधीः शुभबुद्धिः। क्व न कुत्रापीत्यर्थः॥

अथ दुराशयस्यास्य वरप्रदानेनापतितं भगवतो गिरीशस्यानर्थं दर्शयति—

मोक्तारं बन्धमुक्तो हरिणपतिरिव प्राद्रवत् सोऽथ रुद्रं
दैत्याद्भीत्या स्म देवो दिशि दिशि वलते पृष्ठतो दत्तदृष्टिः।
तूष्णीके सर्वलोके तव पदमधिरोक्ष्यन्तमुद्वीक्ष्य शर्वं
दूरादेवाग्रतस्त्वं पटुवटुवपुषा तस्थिषे दानवाय　॥ ५ ॥

**मोक्तारमिति॥** अथ सः रुद्रं प्राद्रवत्। अथ वरप्राप्त्यनन्तरम्। सः वृकासुरः। रुद्रं शिवम्। प्राद्रवत् जगन्नाथेन दत्तो वरः सफलो न वेति परीक्षितुमभ्यद्रवदित्यर्थः। अत्रोपमामाह—बन्धमुक्तः हरिणपतिः मोक्तारमिव इति। बन्धमुक्तः बन्धनान्मोचितः। हरिणपतिः सिंहः। मोक्तारं येन मोचितस्तम्। देवः दैत्यात् भीत्या पृष्ठतः दत्तदृष्टिः दिशि दिशि वलते स्म। देवः शिवः। दैत्यात् शाकुनेयात्। भीत्या भयेन। पृष्ठतः पश्चात्। दत्तदृष्टिः दत्ता अर्पिता दृष्टिर्येन सः। दिशि दिशि सर्वासु दिक्षु। वलते स्म चचार। त्वं सर्वलोके तूष्णीके तव पदमधिरोक्ष्यन्तं शर्वमुद्वीक्ष्य अग्रतः दूरात् एव दानवाय पटुवटुवपुषा तस्थिषे। त्वं श्रीवैकुण्ठः। सर्वलोके सकलेषु जनेषु। तूष्णीके प्रासघोरवरं वृकासुरमुद्वीक्ष्यावचनेषु स्थितेषु। तव श्रीवैकुण्ठस्य। पदं विकुण्ठनिलयम्। अधिरोक्ष्यन्तम् अधिरोढुं प्रवृत्तम्। शर्वं शिवम्। उद्वीक्ष्य दृष्ट्वा। अग्रतः पुरस्तात्। दूरात् दूरे। दानवाय वृकासुराय। पटुवटुवपुषा पटुना निपुणेन वटुवपुषा वटुरूपेण। उपलक्षितः इति शेषः। अत्र पटुग्रहणेन भगवता गृहीतस्य वटुवेषस्य दर्शनमात्रेणासुरस्तदायत्तचित्तोऽभवदिति द्योत्यते। तस्थिषे आत्मानं प्रदर्श्य स्थितोऽसि॥

वृकासुरस्य भ्रंशं दर्शयति—

भद्रं ते शाकुनेय भ्रमसि किमधुना त्वं पिशाचस्य वाचा
सन्देहश्चेन्मदुक्तौ तव किमु न करोष्यङ्गुलीमङ्ग मौलौ।
इत्थं त्वद्वाक्यमूढः शिरसि कृतकरः सोऽपतच्छिन्नपातं
भ्रंशो ह्येवं परोपासितुरपि च गतिः शूलिनोऽपि त्वमेव॥ ६ ॥

भद्रमिति ॥ सः छिन्नपातम् अपतत्। सः वृकासुरः। छिन्नपातं छिन्नमूल इव द्रुमः। अपतत् निपत्य प्राणांस्तत्याज। अत्र हेतुः—शिरसि कृतकरः इति। शिरसि मूर्धनि। कृतकरः कृतः अर्पितः करो येन तथाविधस्सन्। शिरसि करार्पणे हेतुः—इत्थं त्वद्वाक्यमूढः इति। इत्थम् एवंविधेन। त्वद्वाक्यमूढः तव श्रीवैकुण्ठस्य वटुरूपधरस्य वाक्येन वचनेन मूढः वञ्चितः। भगवतो वचनप्रकारमाह—हे शाकुनेय ते भद्रम्, हे अङ्ग त्वम् अधुना पिशाचस्य वाचा भ्रमसि किम्, मदुक्तौ सन्देहः चेत् तव मौलौ अङ्गुलीं न करोषि किमु इति। शाकुनेय शकुनिज। ते तव। भद्रं शुभम्। भवत्विति शेषः। अयमुपचारः। अधुना इदानीम्। वाचा वचनेन। भ्रमसि मूढस्सञ्चितस्ततो धावसि। मदुक्तौ मम वचने। सन्देहः संशयोऽस्ति चेत्। मौलौ शिरसि। अङ्गुलीं करमित्यर्थः। न करोषि किमु नार्पयसि किम्। अथानेनोदाहरणेन लब्धं प्रकृते प्रतिपाद्यं दर्शयति—परोपासितुः एवं भ्रंशः, अपिच शूलिनः अपि त्वमेव गतिः हि इति। परोपासितुः अन्योपासकस्य। एवम् उक्तप्रकारेण। भ्रंशः नाश। अपि च किञ्च। शूलिनः शिवस्य। अपीति समुच्चये। किं पुनरन्येषामिति भावः। त्वं श्रीकृष्णः। एवकारेणान्येषां व्यवच्छेदः। गतिः शरणम्। हीति प्रसिद्धौ ॥

अथ महामुनेर्भृगोर्वृत्तान्तमुपवर्णयन् भगवतः श्रीवैकुण्ठस्य महत्त्वं दर्शयति द्वाभ्याम्—

भृगुं किल सरस्वतीनिकटवासिनस्तापसा-
स्त्रिमूर्तिषु समादिशन्नधिकसत्त्वतां वेदितुम्।
अयं पुनरनादरादुदितरुद्धरोषे विधौ
हरेऽपि च जिहिंसिषौ गिरिजया धृते त्वामगात् ॥ ७ ॥

भृगुमिति ॥ सरस्वतीनिकटवासिनः तापसाः त्रिमूर्तिषु अधिकसत्त्वतां वेदितुं भृगुं समादिशन् किल। सरस्वतीनिकटवासिनः सरस्वत्या नद्याः

समीपे वसन्तः। तापसाः मुनयः। त्रिमूर्तिषु ब्रह्मविष्णुगिरिशेषु। अधिकसत्त्वतां महत्त्वम्। वेदितुं ज्ञातुम्। भृगुं तन्नामानं मुनिम्। समादिशन् नियुयुजुः। किलेति वार्तायाम्। भृगोः कृत्यं दर्शयत्ययमित्यादिना—

अयं पुनः विधौ अनादरात् उदितरुद्धरोषे जिहिंसिषौ हरे गिरिजया धृते अपि च त्वामगात्। अयं पुनः भृगुः पुनः। विधौ विधातरि। अनादरात् प्रणामाद्यकरणरूपात् परिभवात्। उदितरुद्धरोषे उदितः पूर्वमुत्पन्नः पश्चाद्रुद्धो निवारितो रोषो येन तथाविधे सति। जिहिंसिषौ परिरम्भणारम्भजनितेन रोषेण हन्तुमिच्छौ। हरे रुद्रे। गिरिजया भवान्या। धृते निवारिते सति। अपि चेति समुच्चये। त्वां श्रीवैकुण्ठम्। अगात् प्राप॥

सुप्तं रमाङ्कभुवि पङ्कजलोचनं त्वां
विप्रे विनिघ्नति पदेन मुदोत्थितस्त्वम्।
सर्वं क्षमस्व मुनिवर्य भवेत् सदा मे
त्वत्पादचिह्नमिह भूषणमित्यवादीः ॥ ८ ॥

सुप्तमिति॥ विप्रे रमाङ्कभुवि सुप्तं पङ्कजलोचनं त्वां पदेन विनिघ्नति उत्थितः त्वं मुदा इति अवादीः। विप्रे भृगुमुनौ। रमाङ्कभुवि रमाया लक्ष्म्या अङ्कभुवि उत्सङ्गतले। शिरः कृत्वेति शेषः। सुप्तं निद्राणमित्यर्थः। पङ्कजलोचनं पद्मेक्षणम्। त्वां *श्रीवैकुण्ठरूपं श्रीकृष्णम्*। पदेन चरणेन। विनिघ्नति वक्षःस्थले ताडयति सति। उत्थितः प्रबुध्य स्थितः। त्वं श्रीवैकुण्ठरूपः श्रीकृष्णः। मुदा सन्तोषेण। अनेन पादप्रहारेऽपि भगवतः कोपलेशो नाभूदिति द्योतितम्। इति अनेन प्रकारेण। अवादीः उक्तवानसि। उक्तिप्रकारमाह—हे मुनिवर्य त्वं सर्वं क्षमस्व, इह त्वत्पादचिह्नं सदा मे भूषणं भवेत् इति। मुनिवर्य मुनिश्रेष्ठ। सर्वं भवदागमने प्रत्युत्थानपादावनेजनवन्दनाद्यकरणरूपं सकलमपराधम्। क्षमस्व तितिक्षस्व। मा कोपं कुर्वित्यर्थः। इह मम वक्षसि। त्वत्पादचिह्नं तव पादाग्रस्य चिह्नम्। सदा सन्ततम्। मे मम। भूषणं श्रीवत्सरूपेणालङ्कारः। भवेत् प्रकाशताम्॥

अथ सारस्वतानां मोक्षप्राप्तिमाह—

निश्चित्य ते च सुदृढं त्वयि बद्धभावाः
सारस्वता मुनिवरा दधिरे विमोक्षम्।
त्वामेवमच्युत पुनश्च्युतिदोषहीनं
सत्त्वोच्चयैकतनुमेव वयं भजामः ॥ ९ ॥

**निश्चित्येति ॥** सारस्वता· ते मुनिवराः निश्चित्य त्वयि सुदृढं बद्ध भावाः विमोक्षं दधिरे च। सारस्वताः सरस्वतीतीरवासिन। ते येऽधिक सत्त्वता वेदितुं भृगुं समादिशन्ते। मुनिवराः महर्षयः। निश्चित्य विधिगिरिशविष्णूनां स्वानुभूतं चेष्टितं भृगुमुखादुपश्रुत्याधिकसत्त्ववान् विष्णु रेवेत्यवधार्य। त्वयि विष्णुरूपे श्रीकृष्णे। सुदृढं निश्चलं यथा भवति तथा। बद्धभावा बद्धो धृतो भावो भक्तिरूपो यैस्तथाविधाः सन्तः। विमोक्षं भगवत्सायुज्यम्। दधिरे धृतवन्त·। हे अच्युत वयं पुनः एवं च्युतिदोषहीन सत्त्वोच्चयैकतनुं त्वामेव भजाम.। अच्युत विष्णो। पुन स्त्वर्थे। एवं सारस्वतेषु मुनिवरेष्विव। पुनश्च्युतिदोषहीनं पुनर्भ्रंशरूप दोषरहितम्। भक्तानां पुनर्भ्रंशो यथा न भवेत्तथा तेषामनुग्राहकम्। सत्त्वोच्चयैकतनुं परिपूर्णसत्त्वमात्रस्वरूपम्। त्वा श्रीकृष्णम्। एवकारो विधि शङ्करयोर्व्यवच्छेदे। भजाम. सेवामहे ॥

आदावुपनिषद्भिरपि स्तुतं भगवन्तं प्रार्थयते—

जगत्सृष्ट्यादौ त्वां निगमनिवहैर्वन्दिभिरिव
स्तुतं विष्णो सच्चित्परमरसनिर्द्वैतवपुषम्।
परात्मानं भूमन् पशुपवनिताभाग्यनिवहं
परीतापश्रान्त्यै पवनपुरवासिन् परिभजे ॥ १० ॥

**जगत्सृष्ट्यादाविति ॥** हे पवनपुरवासिन् भूमन् विष्णो अहं जग त्सृष्ट्यादौ निगमनिवहैः स्तुतं सच्चित्परमरसनिर्द्वैतवपुषं परात्मानं पशुपवनिता भाग्यनिवहं त्वा परीतापश्रान्त्यै परिभजे। पवनपुरवासिन् श्रीगुरुवायुपुर

नाथ। भूमन् परिपूर्ण। विष्णो श्रीनारायण। जगत्सृष्ट्यादौ जगतां लोकानां सृष्टेरुत्पादनस्यादौ प्रारम्भे। निगमनिवहैः उपनिषत्समूहैः। स्तुतं स्तवैः प्रीणितम्। सच्चित्परमरसनिर्द्वैतवपुषं सतः सत्तायाः चितः ज्ञानस्य परमरसस्य परमानन्दस्य च निर्द्वैतम् अभेद एव वपुः शरीरं यस्य तम्। सच्चिदानन्दस्वरूपमित्यर्थः। परात्मानं परब्रह्मात्मकम्। पशुपवनिताभाग्य निवहं पशुपवनितानां गोपस्त्रीणां भाग्यनिवहं पुण्यसञ्चयम्। तत्फलभूतावतार मित्यर्थः। त्वां श्रीकृष्णम्। परीतापशान्त्यै परीतापानां शारीरमानसरोग बाधाजातानां सन्तापानां शान्त्यै शमनाय। परिभजे भक्तिपुरस्सरं भजामि। परीतापशान्तिं प्रार्थयन् भगवद्भजनं करोमीत्यर्थः। नन्वशरीरिणो निगम निवहाः कथं भगवन्तं स्तोतुं शक्नुवन्तीति शङ्कामुपमया परिहरति—वन्दिभिः इव इति। यथा वन्दिनः उच्चैस्तरं स्तोत्राण्युपगायन्तः स्तुवन्ति, तथा एते मूर्तिमन्तः स्तुवन्ति स्मेत्यर्थः। त्रिमूर्तिषु विष्णावेव सत्त्वगुणाधिक्यमित्यत्र निगमनिवहस्तुतत्वमपि प्रमाणमित्यवगन्तव्यम्॥

इति वृकासुरवधवर्णनं मूर्तित्रितये भगवतः श्रैष्ठ्यवर्णनं च
एकोननवतितमदशकम् ॥

## नवतितमदशकम्।

ननु त्रिमूर्तिषु महत्त्वं श्रीशङ्करस्यैवेति स्कान्दादौ बहुशः श्रूयते, तत् कथं विष्णोर्महत्त्वोक्तिरुपपद्यत इत्याशङ्कां परिहरन्नाह—

वृकभृगुमुनिमोहिन्यम्बरीषादिवृत्ते-
ष्वयि तव हि महत्त्वं सर्वशर्वादिजैत्रम्।
स्थितमिह परमात्मन् निष्कलार्वागभिन्नं
किमपि यदवभातं तद्धि रूपं तवैव ॥ १ ॥

**वृकभृगुमुनीति ॥** अयि परमात्मन् इह तव 'महत्त्वं वृकभृगुमुनि मोहिन्यम्बरीषादिवृत्तेषु सर्वशर्वादिजैत्रं स्थितं हि। अयीति सम्बोधने। परमात्मन् परमः विधिशङ्करादिभ्योऽपि महत्त्वेन श्रेष्ठ आत्मा रूपं यस्य तथाविध। परब्रह्मस्वरूपेति वा। इह जगति। तव श्रीकृष्णस्य। महत्त्वं माहात्म्यम्। वृकभृगुमुनिमोहिन्यम्बरीषादिवृत्तेषु वृको भृगुमुनिर्मोहिन्य म्बरीषश्चादौ येषां तेषां वृत्तेषु चरित्रेषु। सर्वशर्वादिजैत्रं सर्वेषां सकलानां शर्वादीनां गिरिशादीनां जैत्रं न्यूनतापादकम्। वृकभृगुमुनिमोहिन्यम्बरीषाणां चरितेषु शर्वजैत्रम्, इन्द्रयागनन्दाहरणगुरुपुत्रानयनानलपानवत्सस्तेयादिषु क्रमादिन्द्रवरुणयमाग्निब्रह्मादिजैत्रश्चेत्यर्थः। स्थितं दृढीकृतम्। हीति प्रसिद्धौ। निरुपाधिकपरब्रह्मत्वमेवोपपादयति—यत् किमपि निष्कलार्वागभिन्नम् अव भातं तत् रूपं तव एव हि इति। किमपि किञ्चित्। निष्कलार्वा गभिन्नं निष्कले परमात्मनि अतोऽर्वाक्षु विपरीतेषु च। सकलेषु ब्रह्मविष्णु गिरिशेषु चेत्यर्थः। अभिन्नं भेदहीनम्। अवभातं प्रकाशितम्। तत् सकलनिष्कलभेदहीनम्। रूपं स्वरूपम्। तव श्रीकृष्णस्य। एवकारो ब्रह्मादीनां व्यवच्छेदे। हीति प्रसिद्धौ। यस्मादेवं विष्णोरवस्थाभेदा गिरि शादयः, तस्मात्त्रिमूर्तिषु विष्णोरेव महत्त्वमिति प्रसिद्धमित्यर्थः। उक्तञ्च श्रीमद्भागवते—'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते। स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्व तनोर्नृणां स्युः॥' इति॥

ननु 'एवमेको महादेवो मायया गुणरूपया। नामरूपक्रियाभेदैर्भिन्न वत् प्रतिभासते॥' इति वचनाच्छिवस्यैवावस्थाभेदो मूर्तित्रयं प्राधान्यं च तस्यैवेत्याशङ्क्य संज्ञाभेद एवायं विवाद इत्याह—

मूर्तित्रयेश्वरसदाशिवपञ्चकं यत्
प्राहुः परात्मवपुरेव सदाशिवोऽस्मिन्।
तत्रेश्वरस्तु स विकुण्ठपदस्त्वमेव
त्रित्वं पुनर्भजसि सत्यपदे त्रिभागे ॥ २ ॥

**मूर्तित्रयेति** ॥ यत् मूर्तित्रयेश्वरसदाशिवपञ्चकं प्राहुः तत्र सदा शिवः अस्मिन् परात्मवपुः त्वम् एव। अत्रादौ शैवा इति योजनीयम्। शैवाः शिवभक्ताः। यद्यस्माद्धेतोः। मूर्तित्रयेश्वरसदाशिवपञ्चकं ब्रह्मविष्णु गिरिशेश्वरसदाशिवाख्यानां मूर्तीनां पञ्चकम्। प्राहुः प्रकर्षेण वर्णयन्ति। तत्र शैवपक्षे वर्ण्यमानः सदाशिवः सदाशिवपदवाच्यः। अस्मिन् 'विष्णुं पञ्चात्मकं वन्दे' इत्युक्ते पक्षे। परात्मवपुः 'परब्रह्मस्वरूपः। त्वं श्रीकृष्णः। एवकारोऽन्येषां व्यवच्छेदे। ईश्वरः तु सः विकुण्ठपदः त्वं एव। ईश्वरः ईश्वरपदवाच्यः। तुर्विशेषे। विकुण्ठपदो वैकुण्ठवासी। सः परब्रह्मस्वरूपतयोक्तः। त्वं श्रीकृष्णः। एवकारोऽन्यस्य व्यवच्छेदे। एवं मूर्तिपञ्चके सदाशिवेश्वरपदवाच्यौ भगवान् श्रीकृष्ण एवेत्युपपाद्य विधिहरिहरपदवाच्या अपि श्रीकृष्ण एवेत्युपपादयति—त्वं पुनः त्रिभागे सत्यपदे त्रित्वं भजसि इति। त्वं श्रीकृष्णः। पुनरित्यवधारणे। त्रयो भागा विधिहरिहरलोका यस्मिंस्तस्त्रिभागं तस्मिन्। सत्यपदे सत्यलोके। त्रयाणां ब्रह्मविष्णुगिरिशानां भावस्त्रित्वं तत् भजसि। सत्यलोकस्थब्रह्मविष्णुशिवस्थानेषु त्रिमूर्तित्वमपि त्वमेव भजसीत्यर्थः। ब्रह्मा विष्णुः शिव ईश्वरः सदाशिव इति पञ्चमूर्तयो भगवतः श्रीकृष्णस्य रूपान्तराण्येवेति भावः॥

ननु यदि विष्णुशिवयोरभेदः, तर्हि कथं विष्णोः प्राधान्यमुच्यते इत्याशङ्क्य यद्यपि तत्त्वतो भेदो नास्ति, तथाऽप्युत्कर्षापकर्षावनयोर्भवत एवेत्याह—

> तत्रापि सात्त्विकतनुं तव विष्णुमाहु-
> र्धाता तु सत्त्वविरलो रजसैव पूर्णः।
> सत्त्वोत्कटत्वमपि चास्ति तमोविकार-
> चेष्टादिकं च तत्र शङ्करनाम्नि मूर्तौ ॥ ३ ॥

**तत्रेति** ॥ तत्र अपि तव सात्त्विकतनुं विष्णुमाहुः। तत्र त्रिमूर्तिषु। अपिस्त्वर्थे विशेषे। तव श्रीकृष्णस्य। सात्त्विकतनुं सत्त्वगुणमयीं तनुम्।

विष्णुं विष्णुपदवाच्यम्। आहुः भगवद्भक्ता ब्रुवन्ति। अथ धातृमूर्तेः प्रकृतिमाह—*धाता तु सत्त्वविरलः रजसा एव पूर्णः इति।* धाता ब्रह्मा। तुर्विशेषे। सत्त्वविरलः किञ्चिन्न्यूनसत्त्वगुणः। रजसा रजोगुणेन। एवकारस्तमोगुणव्यवच्छेदे। पूर्णः परिपूर्णः। ब्रह्मणः सत्त्वगुणभागोऽल्पः, रजोगुणेनैव पूरणमित्यर्थः। अथ शङ्करमूर्तेः प्रकृतिमाह—तव शङ्करनाम्नि मूर्तौ सत्त्वोत्कटत्वमस्ति, अपि च तमोविकारचेष्टादिकं च इति। तव श्रीकृष्णस्य। शङ्करनाम्नि शङ्कर इति नाम यस्यास्तस्याम्। मूर्तौ तनौ। सत्त्वोत्कटत्वं सत्त्वगुणबहुलत्वम्। अस्ति वर्तते। अपि च किञ्च। तमोविकारचेष्टादिकं तमसस्तमोगुणस्य विकारश्चेष्टाश्चादौ यस्य तत्। यद्यपि शङ्करमूर्तौ सत्त्वगुणस्यैव बाहुल्यम्, तमोगुणस्याल्पत्वमेव, तथापि तमोगुणस्यैव विकारचेष्टादयो दृश्यन्त इत्यर्थः॥

ननु 'तत्रेश्वरस्तु स विकुण्ठपदस्त्वमेव' इति यदुक्तम्, तदयुक्तम्, 'अम्बिकापतिरीशान उपास्यो गुणमूर्तिभिः। ईश्वरः परमात्मैको मायया स त्रिधा स्थितः॥' इत्युक्तेरिति चेत्तत्राह—

**तञ्च त्रिमूर्त्यतिगतं परपूरुषं त्वां**
**शर्वात्मनाऽपि खलु सर्वमयत्वहेतोः।**
**शंसन्त्युपासनविधौ तदपि स्वतस्तु**
**त्वद्रूपमित्यतिदृढं बहु नः प्रमाणम् ॥ ४ ॥**

**तमिति॥** त्रिमूर्त्यतिगतं तं परपूरुषं त्वां खलु उपासनविधौ शर्वात्मना अपि च शंसन्ति। त्रिमूर्त्यतिगतं त्रिमूर्तीः विधिहरिहरान् अतिक्रम्य तुरीयतया स्थितम्। तं शैवानामीश्वरपदवाच्यम्। परपूरुषं परं ब्रह्माण्डात् बहिर्भागस्थितं पूरुषं पुरि ब्रह्माण्डे वसन्तं ब्रह्माण्टमभिव्याप्य स्थितम्, पुरः अस्मिन् वसन्तीत्यन्तर्गतानेकब्रह्माण्डं च। त्वां श्रीकृष्णम्। खल्वित्यवधारणे। उपासनविधौ शैवानां भजनविधाने। शर्वात्मना शिवस्वरूपेण। अपि चेति समुच्चये। शंसन्ति शैवान् प्रति पौराणिका वर्णयन्ति। अत्र हेतुमाह—

सर्वमयत्वहेतोः इति। सर्वमयत्वस्य विधिहरिहरात्मकत्वस्य हेतोः कारणात्। त्वां शर्वरूपेणाभिसन्धाय भजनमपि नायुक्तमिति भावः। सा शर्वमूर्तिरपि भगवतः श्रीकृष्णस्यैवेति द्रढयति तत् अपि स्वतः तु त्वद्रूपम् इति नः अति दृढं बहु प्रमाणमिति। तत् शैवैरुपास्यमानं शर्वरूपम्। अपिस्समुच्चये। स्वतः परमार्थतः। त्वद्रूपं तव श्रीकृष्णस्य रूपम्। इति अस्मिन् विषये। नः अस्माकं वैष्णवानाम्। अतिदृढम् अबाधितनिश्चयोत्पादकम्। बहु अनेकम्। प्रमाणम्। अस्तीति शेषः। श्रुतिपुराणवचनप्रत्यक्षादिप्रमाणानि बहूनि सन्तीत्यर्थः॥

उक्तस्य प्रमाणबाहुल्यस्य प्रामाणिकानां सम्मतत्वं दर्शयितुमाह—

श्रीशङ्करोपि भगवान् सकलेषु ताव-
त्त्वामेव मानयति यो न हि पक्षपाती।
त्वन्निष्ठमेव स हि नामसहस्रकादि
व्याख्यत् भवत्स्तुतिपरश्च गतिं गतोऽन्ते ॥ ५ ॥

श्रीशङ्कर इति॥ भगवान् श्रीशङ्करः अपि सकलेषु त्वाम् एव तावत् मानयति। भगवान् श्रीशङ्करः केरलेषु 'कालटि' नाम्नि देशेऽवतीर्णो रुद्रांशभूतः श्रीमच्छङ्करभगवत्पादाचार्यः। शैवांशभूतोपीत्यपिशब्दार्थः। सकलेषु सकल रूपतया स्थितेषु विधिहरिहरेषु। त्वां विष्णुरूपं श्रीकृष्णम्। एवेत्यन्य योगव्यवच्छेदे। तावन्मानयति अर्चयति स्म। यः पक्षपाती न हि। यः श्रीमच्छ ङ्करभगवत्पादाचार्यः। पक्षपाती पक्षपातवान्। न। शैवांशजोऽपि शिव विष्णुभेदरहित इत्यर्थः। हीति प्रसिद्धौ। अत्र गमकमाह—सः नामसहस्र कादि त्वन्निष्ठमेव व्याख्यत्, भवत्स्तुतिपरः अन्ते गतिं गतः च इति। सः श्रीम च्छङ्करभगवत्पादाचार्यः नामसहस्रकादि नामसहस्रकं सहस्रनामस्तोत्रमादौ यस्य तत्। आदिशब्देन श्रीगीतादि गृह्यते। त्वन्निष्ठं विष्णुपरम्। न शिवपरमि त्येवकारार्थः। व्याख्यत् विशेषेण व्याख्यातवान्। सहस्रनामगीतादिकं शिव परतया व्याख्यातुं शक्तोपि विष्णुपरतयैव व्याख्यातवानित्यर्थः। भवत्स्तुतिपरः।

श्रीमद्विष्णुपादादिकेशान्तवर्णनस्तोत्रं निर्माय तेन भवन्तं स्तुवन्नित्यर्थः । अन्ते देहत्यागानन्तरम् । गतिं मोक्षम् । गतः प्राप्तः चकार समुच्चये ॥

सकलेषु त्वामेव मानयतीति यदुक्तं तदेव विशदयति—

मूर्तित्रयातिगमुवाच च मन्त्रशास्त्र
स्यादौ कलायसुषमं सकलेश्वरं त्वाम्।
ध्यानं च निष्कलमसौ प्रणवे खलूक्त्वा
त्वामेव तत्र सकलं निजगाद नान्यम् ॥ ६ ॥

मूर्तित्रयातिगमिति ॥ असौ मन्त्रशास्त्रस्य आदौ सकलेश्वरं त्वां मूर्तित्रयातिगम् उवाच च। असौ इत्युत्तरवाक्यादध्याह्रियते। असौ श्रीमच्छङ्करभगवत्पादाचार्यः। मन्त्रशास्त्रस्य आदौ प्रथनारम्भे मङ्गलत्वेनेत्यर्थः। सकलेश्वरं सर्वेश्वरम्। कलायसुषमं कलायकुसुमस्येव सुषमया परमशोभया युक्तम्। त्वां श्रीकृष्णम्। मूर्तित्रयातिगं मूर्तित्रयमतिक्रम्य स्थितं सन्तम्। तुरीयं परमेश्वरमित्यर्थः। उवाच वर्णितवान्। असौ च प्रणवे निष्कलं ध्यानमुक्त्वा खलु तत्र सकलं त्वामेव निजगाद। असौ पूर्वोक्तः। चकारस्त्वर्थे। प्रणवे ओङ्कारे। तदर्थविवृतावित्यर्थः। निष्कलं ब्रह्मात्मकम्। ध्यानम् उक्त्वा खलु उक्त्वैव। तत्र निष्कलध्यानाङ्गत्वे। सकलम् विष्णुरूपम्। त्वां श्रीकृष्णम्। एवकारोऽन्यव्यवच्छेदे। निजगाद वर्णितवान्। अन्यम् न। अन्यं शिवम्। न निजगादेत्यत्रापि सम्बध्यते॥

पुराणानां विष्णुमहिमपरत्वं पुराणसङ्ग्रहे स्पष्टं वर्ण्यत इत्याह—

समस्तसारे च पुराणसङ्ग्रहे
विसंशयं त्वन्महिमैव वर्ण्यते।
त्रिमूर्तियुक्सत्यपदत्रिभागतः
परं पदं ते कथितं न शूलिनः ॥ ७ ॥

समस्तसार इति॥ समस्तसारे पुराणसंग्रहे च त्वन्महिमा एव वर्ण्यते, विसंशयम्। समस्तसारे समस्तानामष्टादशमहापुराणानामुपपुराणानाम् च सारे सारार्थकथनरूपे। पुराणसंग्रहे तदाख्यग्रन्थे। त्वन्महिमा तव श्रीकृष्णस्य महिमा माहात्म्यम्। एवकारो गिरिशादिमाहात्म्यव्यवच्छेदे। वर्ण्यते प्रतिपाद्यते। विसंशयम् अत्र संशयो नास्तीत्यर्थः। कुत इत्यत आह—त्रिमूर्तियुक्सत्यपदत्रिभागतः परं ते पदं कथितमिति। त्रिमूर्तियुक्सत्यपदत्रिभागतः त्रिमूर्तियुक्ताः सत्यपदे सत्यलोके ये त्रयो भागा लोकास्तेभ्यः। पञ्चम्यर्थे तसिः। परं परस्तात्। ब्रह्माण्डात् बहिःस्थितमित्यर्थः। ते तव श्रीकृष्णस्य। पदं वैकुण्ठलोकः। कथितमुक्तम्। शूलिनः न। शिवस्य न। पदं कथितमित्यत्रापि सम्बन्धः॥

श्रीमाधवाचार्योऽपि पुराणसारे विष्णुमेवावर्णयदित्याह—

यद्ब्राह्मकल्प इह भागवतद्वितीय-
स्कन्धोदितं वपुरनावृतमीश धात्रे।
तस्यैव नाम हरिशर्वमुखं जगाद
श्रीमाधवः शिवपरोऽपि पुराणसारे ॥ ८ ॥

यदिति॥ हे ईश इह ब्राह्मकल्पे भागवतद्वितीयस्कन्धोदितं यत् वपुः धात्रे अनावृतम्, श्रीमाधवः पुराणसारे तस्य एव हरिशर्वमुखं नाम जगाद। ईश नाथ। इह इदानीन्तने। ब्राह्मकल्पे यस्मिन् कल्पे ब्रह्मा अभूत्तस्मिन्। ब्रह्मणः प्रादुर्भावानन्तरमाद्यदिनारभ्य इत्यर्थः। भागवतद्वितीयस्कन्धोदितं श्रीमद्भागवतस्य द्वितीयस्कन्धे उदितमुक्तम्। वपुः शरीरम्। धात्रे ब्रह्मणे। अनावृतं प्रत्यक्षीकृतम्। त्वयेति शेषः। श्रीमाधवः श्रीमाधवाचार्यः। पुराणसारे स्वकृते तदाख्यग्रन्थे। तस्य ब्रह्मणे दर्शितस्य रूपस्य। एवकारोऽन्यस्य व्यवच्छेदार्थः। हरिशर्वमुखं हरिः शर्वः इत्यादिकम्। नाम अभिधानम्। जगाद वर्णितवान्। ननु श्रीमाधवस्तथा

वर्णयतु, तत्र का हानिरिति चेत्तत्राह—शिवपरः अपि इति। शिवपरः शैवः। अपीति विरोधे॥

ननु 'गोप्ता विष्णुस्तमोमूर्तिर्व्यापारेण तु सात्त्विकः' इत्यादिवचनै र्हरेर्निकृष्टता श्रीवेदव्यासेनैवोक्तेत्याशङ्क्यार्थवादत्वेन तस्यातत्परत्वमाह द्वाभ्याम्—

ये स्वप्रकृत्यनुगुणा गिरिशं भजन्ते
तेषां फलं हि दृढयैव तदीयभक्त्या।
व्यासो हि तेन कृतवानधिकारिहेतोः
स्कान्दादिकेषु तव हानिवचोऽर्थवादैः ॥ ९ ॥

य इति॥ ये स्वप्रकृत्यनुगुणाः गिरिशं भजन्ते तेषां दृढया तदीय भक्त्या एव फलं हि। स्वप्रकृत्यनुगुणाः स्वस्य प्रकृतिं प्राग्जन्मवासनाम नुगता गुणा येषां तथा विधाः सन्तः। गिरिशं शिवम्। भजन्ते सेवन्ते। 'यस्येच्छा जायते यस्मिन्स्तं देवं स समाश्रयेत्' इति न्यायादिति भावः। तेषाम् तेषां गिरिशसेवकानाम्। दृढया निश्चलया। तदीयभक्त्या। गिरिशभक्त्या। एवकारेणेतरभक्तिव्यवच्छेदः। फलं सेवाफलम्। भवि ष्यतीति शेषः। हीति प्रसिद्धौ। तेन हि व्यासः अधिकारिहेतोः स्कान्दा दिकेषु अर्थवादैः तव हानिवचः कृतवान्। तेन यस्मात् स्वस्ववासनानु गुणं तत्तद्देवसेवाफलं भक्तः प्राप्नोति, तस्माद्धेतोः। हिरवधारणे। अधिकारि हेतोः गिरिशभजनाधिकारिणां प्रयोजनाय। स्कान्दादिकेषु स्कान्दप्रभृतिषु पुराणेषु। आदिशब्देन शिवपुराणादि गृह्यते। अर्थवादैः गिरिशभजनरुच्यु त्पादकैर्भूतार्थकीर्तनादिभिस्त्रिविधैर्वचनैः। तव श्रीकृष्णस्य। हानिवचः न्यूनतापादकवचनम्। कृतवान् उक्तवान्॥

ननु रुच्युत्पादनार्थं चेत्, गिरिशं स्तुवीतैव व्यासः, किमर्थं विष्णो र्हानिवचः कृतवानित्याशङ्कायामाह—

भूतार्थकीर्तिरनुवादविरुद्धवादौ
त्रेधाऽर्थवादगतयः खलु रोचनार्थाः।

स्कान्दादिकेषु बहवोऽत्र विरुद्धवादा-
स्त्वत्तामसत्वपरिभूत्युपशिक्षणाद्याः ॥ १० ॥

भूतार्थेति ॥ भूतार्थकीर्तिः अनुवादविरुद्धवादौ त्रेधा अर्थवादगतयः रोचनार्थाः खलु । भूतार्थकीर्तिः भूतानामतीतानाम् अर्थानां चरितानाम् । दुष्टनिग्रहशिष्टरक्षणभक्तवात्सल्यादिश्रुतचरसच्चरितानामित्यर्थः । कीर्तिः कीर्तनम् । अनुवादश्च विरुद्धवादश्चानुवादविरुद्धवादौ । अदमेव भजनीयो भगवान् , अहो भाग्यं तव, यत्ते मतिरीदृशी संवृत्तेत्यादिवचनमनुवादः । विरुद्धवादस्तु अयं देवत्रिमूर्तिषु हीनगुणस्तामसः कोविदः कामदानासमर्थः, किमर्थमयं सेव्यते, अस्माद्विपरीतगुणोऽयं सेव्यतामित्याक्षेपवचनम् । इतीत्यध्याहर्तव्यम् । इति एवम् । त्रेधा तिस्र इत्यर्थः । अर्थवादगतयः अर्थवादानां गतयः मार्गाः प्रकारा इत्यर्थः । रोचनार्थाः भजने रुच्युत्पादकाः । खल्वित्यवधारणे । भवन्तीति शेषः । अत्र त्वत्तामसत्वपरिभूत्युपशिक्षणाद्याः विरुद्धवादाः स्कान्दादिकेषु बहवः । अत्र एषु भूतार्थकीर्तनादिषु मध्ये । त्वत्तामसत्वपरिभूत्युपशिक्षणाद्याः तव श्रीकृष्णस्य तामसत्वं तमोगुणमयत्वं परिभूतिर्गिरिशादिभ्यः परिभवः उप शिक्षणं शासनं च आद्या येषाम् ते । विरुद्धवादाः विष्णुरपि यत्प्रसादमव लभ्यते, अहो गिरिशस्य प्राधान्यमित्यादयः । स्कान्दादिकेषु स्कान्दपुराणशिव पुराणादिषु । बहवः असंख्याः । सन्तीति शेषः । सर्वे एवैते गिरिशभजन रुच्युत्पादकाः, न तु विष्णोस्तामसत्वपराजयादौ प्रमाणभूता इत्यर्थः ॥

उक्तार्थे स्वकपोलकल्पितत्वशङ्कां वारयन् कविः श्रोतृश्रद्धां सम्पा दयति—

यत्किञ्चिदप्यविदुषापि विभो मयोक्तं
तन्मन्त्रशास्त्रवचनाद्यमिदृष्टमेव ।
व्यासोक्तिसारमयभागवतोपगीत
क्लेशान् विधूय कुरु भक्तिभरं परात्मन् ॥ ११ ॥

यदिति ॥ हे विभो अविदुषा अपि मया किञ्चित् अपि यत् उक्तम्, तत् मन्त्रशास्त्रवचनाद्यभिदृष्टम् एव। विभो सर्वव्यापिन्। अविदुषा विज्ञानरहितेन। अपिर्विरोधे। किञ्चिदपि अल्पमपि। उक्तं वर्णितम्। तत् मयोक्तम्। मन्त्रशास्त्रवचनाद्यभिदृष्टम् मन्त्रशास्त्रवचनादिषु अभिदृष्टं सर्वतः प्रतिपादिततया ज्ञातम्। एवकारोऽनभिदृष्टानां स्वकपोलकल्पितानां च व्यवच्छेदे। अथ प्रार्थयते—हे व्यासोक्तिसारमयभागवतोपगीत परात्मन् त्वं क्लेशान् विधूय भक्तिभरं कुरु इति। व्यासोक्तिसारमयभागवतोपगीत व्यासस्योक्तीनां वचनानां पुराणरूपाणां सारमये सारस्वरूपे भागवते उपगीत सरसं पुनः पुनरपि वर्णित। परात्मन् परब्रह्मस्वरूप। क्लेशान् आधिभौतिकानाध्यात्मिकांश्च सन्तापान्। विधूय निराकृत्य। भक्तिभरं त्वयि भक्त्यतिशयम्। कुरु विधेहि ॥

इत्यागमादीनां भागवत्येव परमतात्पर्यनिरूपणं
भवतितमदशकं सैकम् ॥

इति श्रीनारायणीयस्तोत्रव्याख्यायां बालबोधिन्यां

दशमस्कन्धपरिच्छेदः।

आदितः श्लोकसंख्या ९३४

एकादशस्कन्धपरिच्छेदः

एकनवतितमदशकम् ।

एवं प्रवृत्तिलक्षणा भगवल्लीला वर्णयित्वाऽनन्तरं भक्ताना मुक्तिमार्गप्रदर्शनाय निवृत्तिलक्षणास्ता वर्णयितुमारभमाणः प्रथमं मोक्षोपायमौलिभूतस्य भगवदुपासनस्य माहात्म्यं दर्शयति—

श्रीकृष्ण त्वत्पदोपासनमभयतमं बद्धमिथ्यार्थदृष्टे-
र्मर्त्यस्यार्तस्य मन्ये व्यपसरति भयं येन सर्वात्मनैव।
यत्तावत्त्वत्प्रणीतानिह भजनविधीनास्थितो मोहमार्गे
धावन्नप्यावृताक्षः स्खलति न कुहचिद्देवदेवाखिलात्मन् ॥ १ ॥

श्रीकृष्णेति ॥ हे देवदेव अखिलात्मन् श्रीकृष्ण अह त्वत्पदोपासनं बद्धमिथ्यार्थदृष्टे मर्त्यस्य आर्तस्य अभयतमं मन्ये। देवदेव देवाना ब्रह्मादीनामपि देव। अखिलात्मन् सर्वचराचरस्वरूप। श्रीकृष्ण श्रीकृष्णरूपेणावतीर्ण विष्णो। तदित्यत्राध्याहर्तव्यम्, उत्तरत्र यच्छब्ददर्शनात्। तत् तस्माद्धेतोरिति मननक्रियया सम्बन्ध। त्वत्पदोपासन तव श्रीकृष्णस्य पदोपासनं पादारविन्दभजनम्। बद्धमिथ्यार्थदृष्टे बद्धा रूढपदा मिथ्यार्थे शरीरादौ दृष्टि अहम्ममाभिमानो यस्य तस्य। अत एव मर्त्यस्य जननमरणधर्मिण। तस्मादेवार्तस्य आध्यात्मिकाधिदैविकाधिभौतिकदुःखपरम्परापीडितस्य। अभयतमं न विद्यते भय यस्मात्तदभयम्, अतिशयेनाभयमभयतमम्। जननमरणरूपसंसारनिवर्तकमित्यर्थ। मन्ये चिन्तयामि। अभयतमत्वमाह—सर्वात्मना येन भयं व्यपसरति एव इति। सर्वात्मना सर्वप्रकारेण क्रियमाणेन। येन भगवदुपासनेन। भयं जननमरणभीति। व्यपसरति विशेषेण दूरतो गच्छति। नश्यतीत्यर्थ। एवकारोऽवधारणे। न किञ्चिदप्यवशिष्टं तिष्ठतीति भाव। उपासनसाधनेषु भगवद्धर्मोऽकुतोभय इत्याह—यत् इह त्वत्प्रणीतान् भजनविधीन् तावत् आस्थित आवृताक्ष

मोहमार्गे धावन् अपि कुहचित् न स्खलति इति। यत् यस्मात् कारणात्। तन्मन्य इति पूर्वेण सम्बन्ध.। इह भगवद्भजनमार्गेषु मध्ये। त्वत्प्रणीतान् भक्तानुग्रहाय त्वया श्रीकृष्णेन प्रणीतान् स्वमुखेनैव प्रोक्तान् भागवताख्यान्। भजनविधीन् भजनस्य विधीन् धर्मान्। तावत् सत्सङ्गद्वारा क्रमेण। आस्थितः आश्रित.। आवृताक्ष. निमीलितनयनद्वन्द्वः। श्रुतिस्मृत्याख्यनयनद्वयरहितोऽपीत्यर्थः। 'श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते। एकेन रहित· काणो द्वाभ्यामन्ध. प्रकीर्तित·॥' इति वचनादिति भाव। मोहमार्गे मोहस्याज्ञानस्य मार्गे द्वारभूतरथ्यापणगणिकालेदगोष्ठ्यादिप्रदेशेषु। धावन् किञ्चित् किञ्चिदतिक्रम्यातिक्रम्यानुतिष्ठन्। अपिर्विरोधे। कुहचित् क्वचिदपि। अनुष्ठाने वैकल्यादिना न प्रत्यवायी स्यात्, नापि फलस्यानित्यतया पुनरपि संसारी स्यादित्यर्थ·। भगवत्प्रणीतभजनविधिसमनुष्ठानप्रभावोऽयमिति वेदितव्यम्॥

तानेव भागवतान् धर्मानाह—

भूमन् कायेन वाचा मुहुरपि मनसा त्वद्बलप्रेरितात्मा
यद्यत् कुर्वे समस्तं तदिह परतरे त्वय्यसावर्पयामि।
जात्याऽपीह श्वपाकस्त्वयि निहितमनःकर्मवागिन्द्रियार्थ-
प्राणो विश्वं पुनीते न तु विमुखमनास्त्वत्पदाद्विप्रवर्यः॥ २॥

**भूमन्निति॥** हे भूमन् असौ अहं कायेन वाचा मनसा अपि त्वद्बलप्रेरितात्मा मुहुः यत् यत् कुर्वे तत् समस्तं परतरे इह त्वयि अर्पयामि। भूमन् परिपूर्ण। असौ अनन्यशरण·। कायेन शरीरेण। वाचा वागिन्द्रियेण। मनसा अन्तरिन्द्रियेण। अपिशब्दात् सर्वेन्द्रियैरित्यर्थः। त्वद्बलप्रेरितात्मा तवान्तर्यामिणः श्रीकृष्णस्य बलेन वासनारूपेण प्रेरित. आत्मा मनो यस्य सः। मुहु नैकवारम्। सर्वदाऽपीत्यर्थ·। कुर्वे करोमि। अयमर्थ.—न केवलं विहितं कर्मेति नियम, किन्तु स्वभावानुसारि लौकिकमपि सकलं कर्म श्रीकृष्णे समर्पितं चेत् भगवद्धर्मो भव

त्येवेति। तत् सर्वं सकलविधं कर्म। परतरे परात्मनि। इह पुरो दृश्यमाने। त्वयि श्रीकृष्णे अर्पयामि श्रीकृष्णायेदमिति समर्पयामीत्यर्थः। अय माशयः—यथा राज्ञा प्रेरितस्य राजपुरुषस्य कर्म राज्ञः प्रीतये भवति, तथा सर्वात्म नेश्वरेण प्रेरितस्य,मम सकलमपि कर्म श्रीकृष्णप्रीतये स्यादिति। एवंविधस्य भगवद्धर्मस्यानुष्ठातुर्माहात्म्यमाह—इह जात्या श्वपाकः अपि त्वयि निहितमनः कर्मवागिन्द्रियार्थप्राण. विश्वं पुनीते इति। जात्या जन्मना। श्वपाकः श्वपचः। वेदमन्त्रादिश्रवणेप्यनर्होऽन्त्यजातिज इत्यर्थः। अपिर्विरोधे। त्वयि श्रीकृष्णे। निहितमनःकर्मवागिन्द्रियार्थप्राणः मनः सङ्कल्पविकल्पात्मकं मानसं कर्म, कर्म कायिकं कर्म, वाक् वाचिकं कर्म, इन्द्रियाणि ज्ञानकर्मलक्षणानि, अर्थाः तद्विषयाः, प्राणाः पञ्चविधाश्चेति मनःकर्मवागिन्द्रियार्थप्राणाः निहिता मनःकर्मवागिन्द्रियार्थप्राणा येन तथा विधस्सन्। विधिप्रतिषेधलक्षणं सर्वं कर्म देह वाङ्मनःप्रधानम्, इतरेन्द्रियकर्मणां तदङ्गतयाऽत्र देहादित्रयाणां पृथगुपादानम्। विश्वं लोकम्। किं पुनस्तत्तत्स्वेष्वेकांशमणुप्रायमात्मानमिति भावः। पुनीते तीर्थीकरोति। भगवद्धर्मस्यानुष्ठातुरवस्थामाह—विप्रवर्यः त्वत्पदात् विमुखमनाः तु न इति। विप्रवर्यः ब्राह्मणश्रेष्ठः। सन्ध्योपासनवेदाध्ययना द्यवश्यानुष्ठेयेषु स्थिरतरचित्तः उत्तमब्राह्मण इत्यर्थः। विरोधार्थस्यापिशब्द स्यात्र गम्यमानत्वादप्रयोगः। पुन का कथा श्वपचस्येति भाव.। त्वत्प दात् तव श्रीकृष्णस्य पदात् चरणकमलद्वयात्। विमुखमना विमुखं स्मर णादिरहितं मनो यस्य तथाविधः सन्। तुर्विशेषे। तमाह—नेति। पुनीते इत्यत्राप्यन्वेति। न पावयतीत्यर्थः॥

ननु विषयविक्षिप्तस्य कुतो मन.कर्मवागादीनां भगवति समर्पणं भवतीत्याशङ्क्य न तावद्विषयो नाम वास्तवतोऽस्ति, किन्तु मनोविलास मात्रम्, अतो मनोनिरोधपूर्वकं भगवति सर्वं समर्पयेदित्यभिप्रायेणाह—

**भीतिर्नाम द्वितीयाद्भवति ननु मनःकल्पितं च द्वितीयं**
**तेनैक्याभ्यासशीलो हृदयमिह यथाशक्ति बुद्ध्या निरुन्ध्याम्।**

मायाविद्धे तु तस्मिन् पुनरपि न तथा भाति मायाधिनाथं
तं त्वां भक्त्या महत्या सततमनुभजन्नीश भीतिं विजह्याम् ॥ २ ॥

**भीतिरिति** ॥ भीतिः द्वितीयात् भवति नाम। भीतिः संसारभयम्। द्वितीयात् आत्मीयत्वेनाभिमन्यमानाच्छरीरादेः। नत्वात्मनः। नामेति प्रसिद्धौ। देहादेरात्मीयत्वस्य सङ्कल्पमात्रतामाह—द्वितीयं च मनःकल्पितं ननु इति। द्वितीयम् आत्मीयत्वेनाभिमन्यमानं शरीरादि। मनःकल्पितं मनसा सङ्कल्प विकल्पात्मिकयाऽन्तःकरणवृत्त्या कल्पितमारोपितम्। न तु वास्तवत्वेन स्थितम्। नन्विति निश्चये। यद्येवं तर्हि प्रथमं मनसो नियन्त्रणं कर्तव्यम्, तत् कथमित्यत्राह—तेन अहम् ऐक्याभ्यासशीलः हृदयं बुद्ध्या यथाशक्ति इह निरुन्ध्यामिति। तेन शरीरादेर्मनःसङ्कल्पजनितत्वेन हेतुना। ऐक्याभ्यास शीलः ऐक्यस्याद्वैतस्याभ्यासे शीलमस्यास्तीत्यैक्याभ्यासशीलः सन्। यथा मृदादेरुत्पन्नस्य घटादेर्मृदाद्यात्मकत्वम्, तथा ब्रह्मण उत्पन्नत्वात् ब्रह्मैवेदं सर्वम्, न ततः पृथक्किञ्चिदस्तीति चिन्तनशीलः सन्नित्यर्थः। हृदयं मनः। बुद्ध्या निश्चयात्मिकयाऽन्तःकरणवृत्त्या। यथाशक्ति यावद्बुद्धिबलम्। इह ऐक्ये। निरुन्ध्यां नियच्छेयम्। भीतिजनकशरीराद्यहम्ममाभिमानादिपरिभ्रमणान्मनो निवारयेयमित्यर्थः, तथाप्यैक्यज्ञानस्य स्थिरतयाऽनवस्थाने हेतुमाह—तस्मिन् मायाविद्धे तु पुनः अपि तथा न भाति इति। तस्मिन् बुद्ध्या निगृहीते मनसि। मायाविद्धे मायया तत्कार्यभूतकामक्रोधादिभिरित्यर्थः। आविद्धे समन्तात् ग्रस्ते सति। तुर्विशेषे। तदित्यत्राध्याहर्तव्यम्। तत् ऐक्यम्। पुनरपि पश्चादपि। तथा स्थिरतया। न भाति न प्रकाशते। तर्हि कथं संसारभीतिस्त्यज्यत इत्यत्राह—हे ईश अहं मायाधिनाथं तं त्वां महत्या भक्त्या सततम् अनुभजन् भीतिं विजह्यामिति। ईश नाथ। मायाधि नाथं मायाया अधिनाथं स्वामिनम्। तं भक्तरक्षणैकतानत्वेन प्रसिद्धम्। त्वां श्रीकृष्णम्। महत्या अनपायिन्या। भक्त्या प्रेमलक्षणया। सततं सर्वदा। अनुभजन् भजनं कुर्वाणः। भीतिं संसारभयम्। विजह्यां सर्वात्मना त्यजेयम्॥

भगवद्भजनस्य भक्त्या कर्तव्यत्वात् कथं भक्तिरुत्पद्यत इति चेत्तत्राह—

भक्तेरुत्पत्तिवृद्धी तव चरणजुषां सङ्गमेनैव पुंसा-
मासाद्ये पुण्यभाजां श्रिय इव जगति श्रीमतां सङ्गमेन।
तत्सङ्गो देव भूयान्मम खलु सततं तन्मुखादुन्मिषद्भि-
स्त्वन्माहात्म्यप्रकारैर्भवति च सुदृढा भक्तिरुद्धूतपापा ॥ ४ ॥

भक्तेरिति ॥ भक्तेः उत्पत्तिवृद्धी तव चरणजुषां सङ्गमेन एव पुंसा मासाद्ये। उत्पत्तिश्च वृद्धिश्चोत्पत्तिवृद्धी। तव श्रीकृष्णस्य। चरणजुषां चरणौ पदकमले जुषन्ते सेवन्त इति चरणजुषस्तेषाम्। सङ्गमेन संसर्गेण। नान्येनेत्येवकारार्थः। 'सत्सेवया विना कस्य विष्णुभक्तिः प्रजायते' इति वचनादिति भावः। पुंसां पुरुषाणाम्। आसाद्ये प्राप्तुं शक्ये। भवत इति शेषः। तर्हि भगवच्चरणसेवकानां सङ्गमः कथं स्यादित्यत आह—पुण्यभाजामिति। अनेकजन्मार्जितपुण्यसञ्चयवतामेव भगवद्भक्तसङ्गमः स्यादिति भावः। अत्रोपमामाह—जगति श्रीमतां सङ्गमेन श्रियः इव इति। श्रीमतां धनधान्यादिसमृद्ध्या सम्पन्नानाम्। सङ्गमेन सम्पर्केण। श्रियः धनधान्यादेः। उत्पत्तिवृद्धी। आसाद्ये इत्यत्रापि सम्बध्यते। यथा अल्पधनो बहुधनैः सह क्रयविक्रयादि कुर्वाण सम्पन्नो भवति, तथा पुण्यसञ्चयाद्यदृच्छयोपगतभगवद्भक्तसङ्गमस्तद्वर्ण्यमानभगवत्कथाश्रवणोपजातभक्तिः अत एव पुनर्भगवत्कथा वर्णयन् क्रमेण भक्तेः सुदृढत्वं प्राप्नोतीति भावः। अथ कविस्तत्सङ्गं प्रार्थयते—हे देव मम खलु सततं तत्सङ्गः भूयादिति। देव श्रीकृष्ण। खल्विति निश्चये। सततम् अनवरतम्। तत्सङ्गः तेषां भक्तानां सङ्गः सम्पर्कः। प्रार्थनायाः फलमाह—तन्मुखात् उन्मिषद्भिः त्वन्माहात्म्यप्रकारैः भवति सुदृढा उद्धूतपापा भक्तिः च इति। तन्मुखात् तेषां भक्तानां मुखात्। उन्मिषद्भिः मिथो भगवच्चरितप्रस्तावे प्रादुर्भवद्भिः न तु तैरुपदिष्टैः। अनेन तेषां भगवच्चरितवर्णनशीलत्वं व्यज्यते। त्वन्माहात्म्यप्रकारैः श्रवणस्मरणनामसङ्कीर्तनादिमार्गभेदैः। भवति त्वयि श्रीकृष्णे। सुदृढा अनपायिनी। उद्धूतपापा उद्धूतानि निर्धू

तानि पापानि दुरितानि यया सा। भक्तिः प्रेमलक्षणा। चकारः समुच्चये। मम। सततं भूयादित्यत्राप्यनुषज्यते। यथा दूरतोऽपसारिततिमिरनिकर एव तरणिरुदेति तद्वद्दूरोत्सारितदुरितनिचया अनपायिनी भक्तिश्च सततं मम भूयादिति भावः॥

अथ भक्तसङ्गममात्रेण स्वस्य साधनभक्तिद्वारा साध्यभक्त्युत्पत्तिप्रकारमुत्पश्यन् प्रथमं स्वस्य भक्तिमार्गेऽधिकारप्राप्तिमाह—

श्रेयोमार्गेषु भक्तावधिकबहुमतिर्जन्मकर्माणि भूयो
गायन् क्षेमाणि नामान्यपि तदुभयतः प्रद्रुतं प्रद्रुतात्मा।
उद्यद्धासः कदाचित् कुहचिदपि रुदन् क्वापि गर्जन् प्रगाय-
न्नुन्मादीव प्रनृत्यन्नयि कुरु करुणां लोकबाह्यश्चरेयम्॥ ५॥

श्रेयोमार्गेष्विति॥ अयि त्वं करुणां कुरु। अयीति सम्बोधने। श्रीकृष्णेति शेषः। त्वं श्रीकृष्णः। करुणाम् अनुकम्पाम्। कुरु विधेहि। किं तयेत्यत्राह—अहं श्रेयोमार्गेषु भक्तौ अधिकबहुमतिः क्षेमाणि जन्मकर्माणि नामानि अपि भूयः गायन् तदुभयतः प्रद्रुतं प्रद्रुतात्मा कदाचित् उद्यद्धासः कुहचित् रुदन् क्वापि गर्जन् प्रगायन् प्रनृत्यन् अपि उन्मादी इव लोकबाह्यः चरेयम् इति। श्रेयोमार्गेषु श्रेयसः पुरुषार्थस्य। मोक्षस्येति यावत्। मार्गेषु प्राप्तिसाधनेषु भक्तिज्ञानकर्मतपोदानव्रतादिषु मध्ये। भक्तौ भक्तिमार्गे। अधिकबहुमतिः अधिका प्रवृद्धा बहुमतिः श्रद्धा यस्य सः। अनेन भक्तिमार्गे अधिकारिता प्रदर्शिता। उक्तञ्च—'यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्। न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः।' इति। क्षेमाणि पुरुषार्थसाधनरूपाणि। जन्मकर्माणि भगवदवतारचरितानि। नामानि श्रीकृष्णेत्यादीनि। अपिः समुच्चये। भूयः पुनः पुनः। गायन् कीर्तयन्। एतच्च स्मरणादीनामप्युपलक्षणम्। एवं साधनभक्तिलाभ उक्तः। तदुभयतः तयोर्भगवदवतारचरितवर्णननामसङ्कीर्तनयोरुभयतः युग्माद्धेतो.। प्रद्रुतम् अतिशीघ्रम्। अनेन साधनभक्तिलाभात् परं तदनुष्ठाने साध्यभक्त्युदयस्य

कालविलम्बाभावो द्योत्यते। प्रद्रुतात्मा प्रकर्षेण द्रुतः द्रवीभूतः आत्मा मनो यस्य सः। सकलजीवजालेषु सञ्जातकरुण इति भावः। कदाचित् एकदा। उद्यद्धासः उद्यन् उद्गच्छन् हासो हसनं यस्य सः। भगवन्तं भक्तपराजितमाकलय्य सहस्तताडनं प्रहसन्नित्यर्थः। एतच्च प्रवृद्धायाः साधनभक्तेरनुभावः। एवमुत्तरवाक्यत्रयेऽपि। कुहचित् क्वचित्। रुदन् एतावन्तं कालमुपेक्षितवानस्मीति रोदनं कुर्वन्। क्वापि कदाचित्। गर्जन् भगवद्रूपदर्शनौत्सुक्यादुच्चैस्तरं शब्दं कुर्वन्। प्रगायन् अनन्तरक्षणे भगवद्रूपं द्रक्ष्यामीति हर्षेण मधुरं गानं कुर्वन्। अत्रानन्तरवाक्येऽपि क्वापीत्यन्वेति। प्रनृत्यन् प्रकर्षेण सहस्तताडनं सशिरःकम्पं नर्तनं कुर्वन्। एतच्च परां कोटिं प्राप्तायाः साधनभक्तेरनुभावः। अपिस्समुच्चये। उन्मादश्चित्तविभ्रंशोऽस्यास्तीत्युन्मादी। इवेति सम्भावनायाम्। लोकबाह्यः लोकेभ्यः लौकिकवृत्तिमनुवर्तयद्भ्यः बाह्यः बहिष्ठः। तैर्बहिष्कृत इत्यर्थः। चरेयम् सञ्चरेयम्। अयञ्च साध्यभक्तेरनुभावः॥

अथ साध्यभक्तिं प्राप्तस्य प्रवृत्तिमाह—

**भूतान्येतानि भूतात्मकमपि सकलं पक्षिमत्स्यान् मृगादीन्**
**मर्त्यान् मित्राणि शत्रूनपि यमितमतिस्त्वन्मयान्यानमानि।**
**त्वत्सेवायां हि सिद्ध्येन्मम तव कृपया भक्तिदार्ढ्यं विराग-**
**स्त्वत्तत्त्वस्यावबोधोपि च भुवनपते यत्नभेदं विनैव ॥ ६ ॥**

**भूतानीति ॥** अहं यमितमतिः एतानि भूतानि भूतात्मकं सकलमपि पक्षिमत्स्यान् मृगादीन् मर्त्यान् मित्राणि शत्रून् अपि त्वन्मयानि आनमानि। यमितमतिः यमिता नियन्त्रिता मतिर्मनो येन तथाविधः सन्। विषयादिभ्यो मनो बलादाकृष्य निश्चलं बध्वेत्यर्थः। एतानि दृष्टश्रुतानि। भूतानि पृथिव्यप्तेजोवाय्वाकाशाख्यानि पञ्चमहाभूतानि। भूतात्मकं पञ्चभूतमयम्। सकलं सर्वं चराचरम्। अपिस्समुच्चये। पक्षिमत्स्यान् आकाशचारिणः पक्षिणः जलचारिणो मत्स्यांश्च। एतज्जलचराणामितरेषामप्युपलक्षणम्। मृगादीन्

स्थलचारिणो मृगसरीसृपादीन्। मर्त्यान् मनुष्यान्। मित्राणि बन्धून्। शत्रून् प्रतिपक्षिणः। अपिशब्देन शत्रुमित्रेतरानुदासीनानपीति गम्यते। अत्र सर्वचराचरस्य पञ्चमहाभूतात्मकत्वात्तदन्तर्भूतानां पक्षिमत्स्यादीनां पृथगुपादानं चाक्षुषप्रत्यक्षत्वाद्वैशिष्ट्यद्योतनार्थमित्यवगन्तव्यम्। त्वन्मयानि श्रीकृष्णस्वरूपाणि। इति अनुसन्धायेति शेषः। आनमानि साष्टाङ्गं नमानि नमस्करवाणि। एतच्च साध्यभक्तेरनुभावः। ननु उक्तलक्षणा भक्तिर्योगिनामपि बहुजन्मसाध्या, कथं भजनमात्रेण एकस्मिन् जन्मनि सिद्ध्येदित्याशङ्कायामाह—हे भुवनपते त्वत्सेवाया मम तव कृपया भक्तिदार्ढ्यं विरागः त्वत्तत्त्वस्य अवबोधः अपि च यत्नभेदं विना एव सिद्ध्येत् हि इति। भुवनपते जगन्नाथ। त्वत्सेवायां तव श्रीकृष्णस्य। भगवति सर्वकर्मणां समर्पणम्, अवतारकथानां नाम्नां च सङ्कीर्तनम्, सर्वत्र श्रीकृष्णदृष्ट्या प्रणामश्चेत्युक्तरीत्यां सेवाया सत्याम्। ममानन्य शरणस्य। कृपया अवश्यं भवितव्यया करुणया। भक्तिदार्ढ्यं भक्तेर्भगवति प्रेमलक्षणाया दार्ढ्यं निश्चलत्वम्। विरागः वैराग्यम्। त्वत्तत्त्वस्य तव श्रीकृष्णस्य तत्त्वस्य याथार्थ्यस्य। अवबोधः विज्ञानम्। अपि चेति समुच्चये। यत्नभेदं विना निष्प्रयासमित्यर्थः। सिद्ध्येत् सिद्धिं प्राप्नुयात्। हीत्यवधारणे। भगवत्सेवया भगवद्भक्तिः स्थिरता स्यात्, ततो वैराग्यम्, ततो भगवतस्तत्त्व ज्ञानं चेत्यतो भगवत्सेवैव प्रार्थ्यत इति भाव ॥

एवं भगवत्कृपोपलब्धभक्तिवैराग्यज्ञानप्रकर्षस्य प्रवृत्तिमाह—

नो मुह्यन् क्षुत्तृडाद्यैर्भवसरणिभवैस्त्वन्निलीनाशयत्वा-
चिन्तासातत्यशाली निमिषलवमपि त्वत्पदादप्रकम्पः।
इष्टानिष्टेषु तुष्टिव्यसनविरहितो मायिकत्वावबोधा-
ज्ज्योत्स्नाभिस्त्वन्नखेन्दोरधिकशिशिरितेनात्मना सञ्चरेयम् ॥ ७ ॥

नो मुह्यन्निति ॥ अहं त्वन्निलीनाशयत्वात् भवसरणिभवैः क्षुत्तृडाद्यैः नो मुह्यन् चिन्तासातत्यशाली निमिषलवमपि त्वत्पदात् अप्रकम्पः मायिक त्वावबोधात् इष्टानिष्टेषु तुष्टिव्यसनविरहितः त्वन्नखेन्दोः ज्योत्स्नाभिः अधिक

शिशिरितेन आत्मना सञ्चरेयम्। त्वन्निलीनाशयत्वात् त्वयि श्रीकृष्णे निलीनः नितरां लीनः आशयः अन्तरङ्गं यस्य तस्य भावस्तत्त्वं तस्माद्धेतोः। भव सरणिभवैः संसारमार्गोद्भूतैः। क्षुत्तृडाद्यैः बुभुक्षापिपासाप्रमुखैः। नो मुह्यन् परवशतामगच्छन्। चिन्तासातत्यशाली चिन्ताया भगवत्स्वरूपध्यानस्य सातत्येन सततानुष्ठानेन शालत इति तथाविधः। निमिषलवं निमिषस्य निमेषस्य लवं लेशम्। अत्यन्तसंयोगे द्वितीया। अपिः समुच्चये। अत्यल्प कालमपीत्यर्थः। त्वत्पदात् तव श्रीकृष्णस्य पदात् चरणारविन्दभजनात्। अप्रकम्पः अचञ्चलः। मायिकत्वावबोधात् शरीरादेर्भोग्यवस्तुनो मायानिर्मित त्वानुसन्धानात्। इष्टानिष्टेषु इष्टेषु अनिष्टेषु च। तुष्टिव्यसनविरहितः तुष्ट्या सन्तोषेण व्यसनेन दुःखेन च विरहितः वियुक्तः। इष्टेषु पुत्रजन्मादिषु तुष्टिविरहितः अनिष्टेषु पुत्रमरणादिषु व्यसनविरहितश्च सन्नित्यर्थः। त्वन्न खेन्दोः तव श्रीकृष्णस्य नखेन्दोः चरणनखचन्द्रस्य। ज्योत्स्नाभिः शीतलाभिः दीप्तिभिः। अधिकशिशिरितेन अधिकशीतलीकृतेन। आत्मना मनसा। उपलक्षितः सन्। नखेन्दोरित्येकवचनान्तोक्त्या एकस्यैव नखचन्द्रस्यानवरत पातिनीभिर्ज्योत्स्नाभिरधिकशिशिरितत्वमात्मनः सञ्जायते, किं पुनर्दशानां नखेन्दूनामिति कवेर्हर्षातिरेको व्यज्यते। सञ्चरेयम् केवलमेकाकी सञ्च रन् वर्तेयेत्यर्थः॥

अथोत्तममध्यमाधमभक्तानां धर्मानाह—

भूतेष्वेषु त्वदैक्यस्मृतिसमधिगतौ नाधिकारोऽधुना चे-
त्वत्प्रेम त्वत्कमैत्री जडमतिषु कृपा द्विट्सु भूयादुपेक्षा।
अर्चायां वा समर्चाकुतुकमुरुतरश्रद्धया वर्धतां मे
त्वत्संसेवी तथापि द्रुतमुपलभते भक्तलोकोत्तमत्वम्॥ ८॥

भूतेष्विति॥ एषु भूतेषु त्वदैक्यस्मृतिसमधिगतौ अधुना अधिकारः न चेत् त्वत्प्रेम त्वत्कमैत्री जडमतिषु कृपा द्विट्सु उपेक्षा भूयात्। एषु प्रागुक्तेषु। भूतेषु पञ्चमहाभूतेषु। तन्मयेषु सकलचराचरेष्विति भावः।

त्वदैक्यस्मृतिसमधिगतौ तव श्रीकृष्णस्य ऐक्यमेकीभावः। जगदाश्रयस्य श्रीकृष्णस्यैव जीवरूपेण पञ्चमहाभूतेष्ववस्थानादिति भावः। तस्य स्मृतिः अनुसन्धानम्। तस्याः समधिगतौ सम्यक् प्राप्तौ। अधुना अस्मिन् जन्मनि। मे इत्युत्तरवाक्यादाकृष्यात्र योजनीयम्। मे मम। अधिकारः योग्यता। नचेत् नास्ति यदि तर्हि। सर्वभूतेष्वन्तर्बहिश्च परिपूर्णो भगवान् श्रीकृष्ण इति ज्ञानस्योत्तमभक्तधर्मत्वात्तदभिलाषिणो ममास्मिन् जन्मनि तदधिकारिता न जाता चेत्तर्हीत्यर्थः। त्वत्प्रेम त्वयि श्रीकृष्णे प्रेम स्नेहः। भक्तिरिति यावत्। त्वत्कमैत्री त्वत्केषु तव श्रीकृष्णस्य सम्बन्धिषु पुरुषेषु। त्वद्भक्तेष्वि त्यर्थः। मैत्री सख्यम्। जळमतिषु जळबुद्धिषु। भगवच्चरणारविन्दभजन पराङ्मुखत्वमत्र जळत्वम्। कृपा दया। अहो वतेमे न सेवन्ते भगव न्तम्, ततः कथञ्चिदेतान् भजनोन्मुखान् करिष्य इतीयं मनोवृत्तिरिति भावः। द्विट्सु शत्रुषु। उपेक्षा त्यागः। प्रतीकारेच्छानिवृत्तिरिति भावः। अत्र समुच्चयार्थस्य गम्यमानत्वाच्चकारस्याप्रयोगः। एवं मध्यमभक्तानां धर्मः। अत्र भूयादित्येकवचनोक्तिस्त्वत्प्रेमादीनां चतुर्णां प्रत्येकश. समुपात्तत्वादिति मन्तव्यम्। तत्रापि नाधिकारश्चेत् किं कर्तव्यमित्यत आह—उरुतरश्रद्धया अर्चायां समर्चाकुतुकं मे वर्धतां वा इति। उरुतरश्रद्धया उरुतरया अति महत्या श्रद्धया भगवद्गुरुशास्त्रविषयेण विश्वासेन। भगवति श्री कृष्णे गुरूपदेशेषु शास्त्रेषु च सुदृढविश्वासेनेत्यर्थः। अर्चायां प्रति मायाम्। समर्चाकुतुकं समर्चायां सम्यग्विधिमनतिक्रम्य क्रियमाणायामर्चायां पूजायाम्। कुतुकमाग्रहः। प्रतिमासमर्चनाभिलाष इत्यर्थः। मे भक्तोत्तमत्वा भिलाषिणो मम। वर्धतां वृद्धिं प्राप्नोतु। वेति विकल्पे। मध्यमभक्त धर्मेऽप्यनधिकार्येव चेत्तर्हीति विकल्पार्थः। अयमधमभक्तानां धर्मः। किमि त्यधमभक्तधर्मप्रार्थनयेति चेत्तत्राह—तथा त्वत्संसेवी अपि द्रुतं भक्तलोकोत्तम त्वम् उपलभते इति। तथा तेन प्रकारेण। अधमभक्तधर्मानुष्ठानेनेत्यर्थः। त्वत्संसेवी तव श्रीकृष्णस्य संसेवी सम्यगेकाग्रमनसा सेवनं कुर्वाणः। अपीति विरोधे। अधमभक्तोपीत्यर्थः। द्रुतम् अचिरेण कालेन। भक्तलोकोत्तमत्वं

भक्तलोकेषूत्तमत्वं श्रेष्ठत्वम्। उत्तमभक्तत्वमित्यर्थः। उपलभते प्राप्नोति। उत्तमभक्तस्य मोक्षाधिकारान्मोक्षं प्राप्नोतीति भावः॥

मनसो मायाविद्धत्वात् केयं मायेति जिज्ञासायामाह—

आवृत्य त्वत्स्वरूपं क्षितिजलमरुदाद्यात्मना विक्षिपन्ती
जीवान् भूयिष्ठकर्मावलिविवशगतीन् दुःखजाले क्षिपन्ती।
त्वन्माया माऽभिभून्मामयि भुवनपते कल्पते तत्प्रशान्त्यै
त्वत्पादे भक्तिरेवेत्यवददयि विभो सिद्धयोगी प्रबुद्धः ॥ ९ ॥

आवृत्येति॥ अयि भुवनपते त्वत्स्वरूपम् आवृत्य क्षितिजलमरुदाद्यात्मना विक्षिपन्ती भूयिष्ठकर्मावलिविवशगतीन् जीवान् दुःखजाले क्षिपन्ती त्वन्माया मां मा अभिभूत्। अयीति सम्बोधने। भुवनपते जगन्नाथ। त्वत्स्वरूपं तव श्रीकृष्णस्य स्वरूपं स्वीयं रूपम्। ब्रह्मेति यावत्। आवृत्य आवरणशक्त्या आच्छाद्य। क्षितिजलमरुदाद्यात्मना क्षितिः पृथिवी जलं तोयं मरुद्वायुश्चेति क्षितिजलमरुतः ते आदिर्येषां त एवात्मा स्वरूपं तेन। अत्रादि शब्देन अग्न्याकाशे स्थूलशरीराणि ब्रह्माण्डं च गृह्यन्ते। विक्षिपन्ती विक्षेपशक्त्या विभावयन्ती। भूयिष्ठकर्मावलिविवशगतीन् भूयिष्ठानां काम्यनिषिद्धभेदेन बहु प्रकाराणां कर्मणामावल्या समूहेन। तज्जन्याभ्यामदृष्टवासनाभ्यामिति भावः। विवशा अस्वतन्त्रा गतिरुच्चावचशरीरप्राप्तिर्येषां तान्। जीवान् शरीरिणः। दुःखजाले संसारजन्यसङ्कटसन्दोहे। क्षिपन्ती पातयन्ती। एवं मायायाः स्वरूपमुक्तम्। त्वन्माया तव श्रीकृष्णस्य माया। मां भगवत्सेवकम्। मा अभिभूत् बुद्धिमाक्रम्य भगवत्स्मृतिं मा अपनयतु। तां वारयेति भाव। मायातरणे भगवद्भक्तिरेवोत्तमो मार्ग इति सप्रमाणमाह—अयि विभो सिद्धयोगी प्रबुद्धः इति अवदत् इति। विभो सर्वव्यापिन्। सिद्धो जीवन्मुक्तश्चासौ योगी चेति सिद्धयोगी। प्रबुद्धः योगिषु मध्ये ज्ञातृज्ञेयज्ञानभेदरहितत्वात् प्रबुद्ध संज्ञः ऋषभदेवसुतेषु चतुर्थो योगिवरः। यथोक्तं श्रीमद्भागवते—'कविर्हरि रन्तरीक्षः प्रबुद्धः पिप्पलायनः। आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः॥'

इति। विदेहाय राज्ञे नवयोगिवरकृतोपदेशेभ्यः प्रबुद्धोपदेशो भागवतादव गन्तव्यः। इति एवम्। अवदत् उक्तवान्। इतिशब्दार्थमाह—तत्प्रशान्त्यै त्वत्पादे भक्तिः एव कल्पते इति। तत्प्रशान्त्यै तस्या मायायाः प्रशान्त्यै प्रकर्षेण शान्त्यै शमनाय समूलोन्मूलनायेत्यर्थः। त्वत्पादे तव मायास्वामिनः पादे पादारविन्दयोः। भक्तिः प्रेमलक्षणा। एवेत्यवधारणे। कल्पते उपायो भवति। नान्योऽस्त्युपाय इति भावः॥

अथ वैराग्यविवेकद्वारा गुरूपदेशलब्धभक्तिज्ञानसमुच्चयेन मायाजयप्रकारमाह—

दुःखान्यालोक्य जन्तुष्वलमुदितविवेकोऽहमाचार्यवर्या-
 ल्लब्ध्वा त्वद्रूपतत्त्वं गुणचरितकथाद्युद्भवद्भक्तिभूमा।
मायामेनां तरित्वा परमसुखमये त्वत्पदे मोदिताहे
 तस्यायं पूर्वरङ्गः पवनपुरपते नाशयाशेषरोगान्॥ १०॥

दुःखानीति॥ अहं जन्तुषु दुःखानि आलोक्य अलम् उदितविवेकः आचार्यवर्यात् त्वद्रूपतत्त्वं लब्ध्वा गुणचरितकथाद्युद्भवद्भक्तिभूमा एनां मायां तरित्वा परमसुखमये त्वत्पदे मोदिताहे। जन्तुषु सदैव दुःखपरिहाराय सुखप्राप्तये च प्रयतमानेषु शरीरिषु। तत एव जातानि दुःखानि सङ्कटानि। आलोक्य दृष्ट्वा। अलम् अतिशयेन। उदितविवेकः उदितः यथेह पुत्रमित्रवित्तकलत्रादयः सुखसाधनत्वेनाभिमन्यमानाः दुःखमेव जनयन्ति, कर्मनिर्मितत्वात्, तथा स्वर्गेऽपीत्युत्पन्नो विवेकः विविक्तज्ञानं यस्य तथाविधः। आचार्यवर्यात् आचार्येषु ज्ञानविज्ञानसम्पन्नेषु गुरुषु वर्यात् परोपदेशकुशलतया श्रेष्ठात्। त्वद्रूपतत्त्वं तव श्रीकृष्णस्य रूपस्य स्वरूपस्य तत्त्वं सम्यक् ज्ञानम्। लब्ध्वा प्राप्य। गुणचरितकथाद्युद्भवद्भक्तिभूमा गुणानां भक्तवात्सल्यादिभगवद्गुणानां चरितानां भगवदवतारादिचरितानां च कथा कथनमादिर्येषां प्रदक्षिणप्रतिमार्चननामसङ्कीर्तनादीनां तानि गुणचरितकथादीनि तैरुद्भवन् उद्यन् भक्तेर्भूमा बाहुल्यं यस्य तथाविधश्च सन्। एनाम् अनुभूय

मानरागद्वेषादिजनयित्रीम्। तरित्वा अतिक्रम्य। परमसुखमये निरतिशया नन्दस्वरूपे। त्वत्पदे तव श्रीकृष्णस्य पदे स्थाने। विकुण्ठनिलय इत्यर्थ। अथवा भगवच्चरणनलिने। मोदिताहे आनन्दमनुभविताहिम। भक्तजनै सह भागवतधर्माभ्यासेन भगवत्सेवा करिष्यामीति भाव। तस्य अय पूर्वरङ्ग। तस्य तथाऽनुसन्धितस्य मोदस्य। अय मायाजय। अथवा, तस्य मायातरणादेर्मदनुष्ठेयस्यार्थस्य। अय मया असकृत् प्रार्थ्यमानो मद्रोग नाश। यद्वा, तस्य 'अग्रे पश्यामि' इत्यादिना वक्ष्यमाणभगवद्रूपप्रत्यक्षी भावस्य। अय 'सान्द्रानन्दावबाधात्मकम्' इत्यारभ्येतावत्पर्यन्त निबद्धो भग वदवतारचरितवर्णनबहुल स्तव। पूर्वरङ्ग नाटकप्रयोगे नान्द्यादिवत् प्रथम मवश्य निर्वर्त्य। भवतीति शेष। सर्व भगवत्करुणैकायत्तमित्याशयेन प्रार्थयते—हे पवनपुरपते त्वम् अशेषरोगान् नाशय इति। पवनपुरपते श्रीगुरुवायुपुरनाथ। अशेषरोगान् अशेषानखिलान् रोगान् बाह्यानाभ्यन्तरा श्चामयान्। नाशय समूलमुन्मूल्य॥

इति भक्तेरेव निश्रेयसावाप्तिहेतुत्ववर्णन, भक्तिस्वरूपतत्कार्यवर्णन च

एकनवतितमदशक सैरम् ॥

---

## द्विनवतितमदशकम्।

नन्वु सर्वकर्मणा भगवद्धर्मत्वापादनाय विना फलानुसन्धान भगवति समर्पणेनानुष्ठानमुक्तम्, तदनुपपन्नम्, स्वर्गाद्यर्थमेव ज्योतिष्टोमादीना विहि तत्वात् फलकामस्यैव तत्राधिकाराच्चेत्याशङ्क्य वेदाना परोक्षवादित्वात्तात्पर्यं दुर्ज्ञेय मित्यभिप्रायेण परिहरति—

वेदैः सर्वाणि कर्माण्यफलपरतया वर्णितानीति बुध्वा
तानि त्वय्यर्पितान्येव हि समनुचरन् यानि नैष्कर्म्यमीश।

मा भूद्वेदैर्निषिद्धे कुहचिदपि मनःकर्मवाचां प्रवृत्ति-
दुर्वर्ज्यं चेदवाप्तं तदपि खलु भवत्यर्पये चित्प्रकाशे ॥ १ ॥

वेदैरिति॥ हे ईश अहं वेदैः सर्वाणि कर्माणि अफलपरतया वर्णितानि इति बुध्वा तानि त्वयि अर्पितानि एव समनुचरन् नैष्कर्म्यं यानि हि। वेदैः वेदोक्तवाक्यैः। सर्वाणि सकलानि। कर्माणि ज्योतिष्टोमादीनि। अफलपरतया फलं परं प्रधानप्रयोजनं येषां तानि फलपराणि तानि न भवन्तीत्यफलपराणि, तेषां भावस्तत्ता तया। निष्फलत्वेनेत्यर्थः। वर्णितानि उक्तानि। नैष्कर्म्यार्थं विहितानीति भाव। यदि कर्मणा फलं नैष्कर्म्यम्, तर्हि फलश्रुतिरनुपपन्नेति चेत्तत्र ब्रूमः—यथा माता रोगनिवृत्त्यर्थं बालमौषधं गुलशर्करादिभि प्रलोभयन्ती पाययति, तथा वेदा अप्यवान्तरफलैः प्रलोभयन्त कर्ममोक्षायैव कर्मणां विधिं विदधति। फलश्रुतिस्तु तद्रोचनार्थमेवेति। इति एवम्। बुध्वा ज्ञात्वा। तानि कर्माणि फलपरत्वेन श्रुतान्यपि। त्वयि श्रीकृष्णे। अर्पितानि सर्वात्मना समर्पितानि सन्ति। एवकारेण फलाभिसन्धिर्व्यावर्त्यते। समनुचरन् सम्यगनुतिष्ठन्। निर्गतानि कर्माणि यस्मात् स निष्कर्मा तेन साध्यं नैष्कर्म्यम्। कर्मनिवृत्तिसाध्यमित्यर्थ। यानि प्राप्नुयाम्। अत्रायमर्थ — नैष्कर्म्यं कर्मणा फलम्, तस्मात् कर्मैव त्यजामीत्युदासीनतया कर्माण्यकुर्वतां कर्मवैकल्यरूपेणाधर्मेण पतनमेव स्यात्, अत कर्माण्यवश्यं कर्तव्यानीत्याशयेनाह —वेदै निषिद्धे कुहचित् अपि मन कर्मवाचा प्रवृत्ति मा भूत् इति। वेदैः दोषोक्तवाक्यैः। इदं स्मृत्यादेरप्युपलक्षणम्। निषिद्धे अकर्तव्यतया बोधिते। कुहचिदपि अभक्ष्यभक्षणादौ कुत्रचिदपि। अल्पदुष्कृतेष्वपि कर्मस्वित्यर्थ। मन कर्मवाचा मनस अन्तरङ्गकर्मण, कर्मण कायकर्मण, वाच वाक्कर्मणश्च। प्रवृत्ति करणम्। मा भूत् मम मा भवतु। कायवाङ्मनोभिर्वेदनिषिद्धकर्मणा करणे मम मतिर्माभूदित्यर्थ। दुर्वर्ज्यम् अवाप्तं चेत् अपि चित्प्रकाशे भवति अर्पये खलु। दुर्वर्ज्यम् दुस्त्याज्यम्। अवाप्तम् अनुष्ठितम्। कृतमिति वक्तव्ये अवाप्तमित्युक्त्या निषिद्धकर्मत्यागे कृतमतेरपि त्यक्तुमशक्यत्वादज्ञानाद्वा तदनुष्ठानं कचित् कदाचित् समापततीति द्योत्यते। चेत्तर्हि। यत् अनुष्ठित

निषिद्धं कर्म। अपीत्यनिषिद्धकर्मणां समुच्चये। चित्प्रकाशे चिदानन्दस्वरूपेण प्रकाशमाने। भवति श्रीकृष्णे। अर्पये मन्त्रपुरस्सरं समर्पयामीत्यर्थः। खल्विति निश्चये॥

एवं वैदिकं कर्मयोगमुक्त्वाऽनन्तरं तान्त्रिकमाह—

यस्त्वन्यः कर्मयोगस्तव भजनमयस्तत्र चाभीष्टमूर्तिं
हृद्यां सत्त्वैकरूपां दृषदि हृदि मृदि क्वापि वा भावयित्वा।
पुष्पैर्गन्धैर्निवेद्यैरपि च विरचितैश्शक्तितो भक्तिपूतै-
र्नित्यं वर्यां सपर्यां विदधदयि विभो त्वत्प्रसादं भजेयम्॥ २॥

य इति॥ अयि विभो अन्यः तु यः तव भजनमयः कर्मयोगः, अहं तत्र च हृद्यां सत्त्वैकरूपाम् अभीष्टमूर्तिं दृषदि हृदि मृदि क्व अपि वा भावयित्वा शक्तितः विरचितैः भक्तिपूतैः पुष्पैः गन्धैः निवेद्यैः अपि च नित्यं वर्यां सपर्यां विदधत् त्वत्प्रसादं भजेयम्। विभो शक्तिसम्पन्न। अन्य. वैदिककर्मयोगादपरस्तान्त्रिकाख्यः। तुर्विशेषे। यः यादृशः। तव श्रीकृष्णस्य। भजनमयः सेवारूपः। कर्मयोगः कर्मभिर्भगवत्पूजादिभिर्यो योगः भगवत्सायुज्यलाभोपायः। अथवा, कर्मणां योगः करणम्। यद्वा, कर्मयोगाख्यः। भवतीति शेषः। तत्र तान्त्रिककर्मयोगे। चकारो वैदिक कर्मयोगस्य समुच्चये। अनेन वैदिककर्मयोगेऽपि प्रतिमार्चनस्य कर्तव्यता प्रतिपादिता। अथवा, चकारस्त्वर्थे। हृद्यां मनोहराम्। नयनानन्द कारिणीमित्यर्थः। अनेन प्रतिमाया आकर्षकत्वं निर्माण एव सम्पादनीयमिति सूचितम्। सत्त्वैकरूपां केवलसत्त्वगुणमयीम्। अत्रैकशब्देन न रजोमयीं तमोमयीं वेति व्यञ्जितम्। अभीष्टमूर्तिं अभीष्टामभिमतां पार्थसारथिवेणु गोपालादिरूपां मूर्तिं भगवत्स्वरूपम्। दृषदि शिलामय्याम्। हृदि मनोमय्यां सङ्कल्पमात्रविरचितायाम्। मृदि लेप्यायाम्। क्वापि वा अष्टविधप्रति मासूक्तेतरसुवर्णादिरचितायां यस्यां कस्यांचित् प्रतिमायामित्यर्थः। उक्तञ्च— 'शैली दारुमयी लौही लेप्या लेख्या च सैकती। मनोमयी मणिमयी प्रति

गर्विष्ठाः। उक्तञ्च—'विद्यामदो धनमदस्तृतीयोऽभिजनो मदः' इति। द्विजाः वेदशास्त्रपुराणादिषु पण्डिता अपि विद्यादिमदान्धा वेदादिषु सगुणतया निर्गुणतया च सर्वत्र प्रतिपादितरूपं भगवन्तं श्रीकृष्णं न जानन्त इत्यर्थः। किमु कीदृग्विधं कर्म न विद्यते न कुर्वन्ति। आभिचारसज्जननिन्दाद्यनेककर्माणि कुर्वन्त्येवेत्यर्थः। तच्छब्दार्थमाह—अहं त्वत्पादासन्नयातान् अशान्तान् द्विजकुलजनुषः हन्त शोचामि इति। त्वत्पादासन्नयातान् *तव श्रीकृष्णस्य पादयोश्चरणकमलयोरासन्नं समीपं यातान् प्राप्तान्।* उपनयनादिसंस्कारैरर्थावबोधपर्यन्तेनाध्ययनेन च भगवद्भजनाधिकारं प्राप्ता नित्यर्थः। अशान्तान् विषयपरान्। द्विजकुलजनुषः द्विजानां त्रैवर्णिकानां कुले वंशे जनुर्जन्म येषां तान्। ब्राह्मणक्षत्रियवैश्यवंशजानित्यर्थः। हन्तेति खेदे। प्राप्तभजनाधिकारानपि भजनविमुखान् तान् प्रत्यात्मनो दुःखानुभूतेरनुसन्धानात् खेदोत्पत्तिः। शोचामि दुःखितो भवामि। ज्ञानलवदुर्विदग्धत येमे बोधयितुमप्यशक्या इति मम खेदो भवतीति भावः। भगवत्पादात् दूरस्थान् किं न शोचसीति चेत्तत्राह—दयार्हाः ते आसतामिति। दयामर्हन्तीति दयार्हाः। सद्भिर्दयया सुखं बोधनीया इत्यर्थः। तान् प्रति न शोचामीति भाव। तच्छब्दार्थमाह—स्त्रीशूद्राः त्वत्कथादिश्रवणविरहिताः इति। अत्र ये इत्यध्याहर्तव्यम्, उत्तरत्र तच्छब्ददर्शनात्। स्त्रीशूद्रा स्त्रियः शूद्राश्च। शूद्रादीनाना सकलजातीनामप्युपलक्षणमिदम्। त्वत्कथादिश्रवणविरहिता तव श्रीकृष्णस्य कथादीनाम्। आदिशब्देन नामादीनि गृह्यन्ते। श्रवणेन आकर्णनेन। कीर्तनादीनामप्युपलक्षणमिदम्। विरहिता वियुक्ताः। एतदज्ञानात्,- नानधिकारात्, 'भक्तिश्चेच्छूद्रयोपिताम्' इति वचनात्। भवन्तीति शेष ॥

तथाविधानां भगवत्पादविमुखानां विप्रादीनां प्रवृत्तिमेव प्रपञ्चयति—

पापोऽयं कृष्णरामेत्यभिलषति निजं गूहितुं दुश्चरित्रं
निर्लज्जस्यास्य वाचा बहुतरकथनीयानि मे विघ्नितानि।

भ्राता मे वन्ध्यशीलो भजति किल सदा विष्णुमित्थं बुधांस्ते
निन्दन्त्युच्चैर्हसन्ति त्वयि निहितमतींस्तादृशं मा कृथा माम् ॥ ४ ॥

पाप इति ॥ त्वं मां तादृशं मा कृथाः। पूर्ववत्। यादृश मित्याह—ते त्वयि निहितमतीन् बुधान् इत्थं निन्दन्ति, उच्चैः हसन्ति इति। ते अशान्तास्त्रैवर्णिकाः। त्वयि श्रीकृष्णे। निहितमतीन् निहिता स्थिरी कृता मतिर्मनो यैस्तान्। भगवद्भक्तानित्यर्थः। बुधान् विज्ञानसम्पन्नान्। अनेन न केवलमधमभक्तान्, किन्तु भगवत्तत्त्वविज्ञानसम्पन्नत्वादुत्तमभक्तांश्चेति व्यज्यते। इत्थम् एभिः प्रकारैः। निन्दन्ति निन्दां कुर्वन्ति। उच्चैः अमन्दम्। हसन्ति अन्यैः सह परिहसन्ति। इत्थमित्यनेनोक्तान् निन्दा प्रकारानाह—अयं पापः निजं दुश्चरितं गूहितुं कृष्ण राम इति अभिल पति इति। पापः परद्रव्यापहारादिपापकर्मकारी। निजं स्वीयम्। दुश्च रितं मोषणादि। गूहितुं साधुरयं तादृशं क्रूरं न कुर्यात्, तत्र न शक्नोति चेति परेषां विश्वासमुत्पाद्य अपह्नोतुम्। कृष्ण राम इत्येवम्। इदं मार्गप्रदर्शनपरम्। एवमन्यान्यपि नामानीत्यर्थः। अभिलपति अभितः सर्वत्र श्रवणार्थमुच्चैर्लपति उच्चरति। चरितवर्णनादेरप्युपलक्षणमेतत्। जप तीति वक्तव्ये लपतीत्युक्त्या नामोच्चारणे निन्दागर्भोऽपहासः सूच्यते। किञ्च, निर्लज्जस्य अस्य वाचा मे बहुतरकथनीयानि विमितानि। निर्लज्जस्य निर्गता लज्जा यस्मात्तस्य। अस्य पुरोदृश्यमानस्य भक्तम्मन्यस्य। वाचा वचनेन। श्रीकृष्णभक्तेरन्यत् सारभूतं न किमप्यस्ति, अतो भजन्तु भवन्तोऽपि भगवन्तं संसारसन्तापसंहारिणं केसारिणमित्याद्यस्मत्सन्निधौ लज्जां विहायोच्चै र्जल्पनेन हेतुनेत्यर्थः। मे मम कुटुम्बकार्यनिर्वर्तनैकतानस्य। बहुतरकथनी यानि बहुतराण्यनेकविधानि कथनीयानि बन्धुभिर्निरूपणीयानि कृत्यजातानि। विमितानि विघ्नवत्कृतानि। ननु तर्हि कथनीयेषु भ्राता किं न नियुज्यत इति चेत्तत्राह—वन्ध्यशीलः मे भ्राता सदा विष्णुं भजति किल इति। वन्ध्यशीलः वन्ध्यं निष्फलं शीलं स्वभावो यस्य सः। भ्राता सोदरः। सदा सर्वदा। भजति पुष्पार्चननमस्कारनामसङ्कीर्तनादीनि कुर्वाणो वर्तते।

नास्येतरकृत्यानां श्रवणमननकरणादिष्ववसरः, अतोऽयं मन्नियोगं न गृह्णातीति भावः। किलेत्यलीके। भजनव्याजेन वृथा वर्तत इति भावः॥

अथ युगानुरूपं सेवाप्रकारमाह—

श्वेतच्छायं कृते त्वां मुनिवरवपुषं प्रीणयन्ते तपोभि-
स्त्रेतायां स्रुक्स्रुवाद्यङ्कितमरुणतनुं यज्ञरूपं यजन्ते।
सेवन्ते तन्त्रमार्गैर्विलसदरिगदं द्वापरे श्यामलाङ्गं
नीलं सङ्कीर्तनाद्यैरिह कलिसमये मानुषास्त्वां भजन्ते ॥ ५ ॥

श्वेतच्छायमिति॥ मानुषाः कृते त्वां श्वेतच्छायं मुनिवरवपुषं तपोभिः प्रीणयन्ते। मानुषाः मनुष्याः। इदं कर्तृत्वेन चतुर्षु वाक्येष्व प्यनुपज्यते। कृते कृताख्ये प्रथमे युगे। त्वां श्रीकृष्णम्। श्वेतच्छायं श्वेता शुभ्रा छाया कान्तिर्यस्य तम्। शुक्लवर्णमित्यर्थः। मुनिवरवपुषं मुनिवरस्य ब्रह्मचारिण इव वपुः शरीरं यस्य तथाविधं च सन्तम्। जटा वल्कलकृष्णाजिनाक्षमालोपवीतदण्डकमण्डल्वादीन् बिभ्रतमित्यर्थः। यथोक्तं भागवते—'कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः। कृष्णाजिनोपवीताक्षान् बिभ्रद्दण्डकमण्डलू॥' इति। तपोभिः ध्यानमार्गैः। प्रीणयन्ते प्रसादयन्ति। अथ त्रेतायां सेवाप्रकारमाह—त्रेतायां स्रुक्स्रुवाद्यङ्कितम् अरुणतनुं यज्ञरूपं यजन्ते इति। त्रेतायां त्रेताख्ये युगे। त्वामित्यत्राप्यन्वेति। त्वां श्रीकृष्णम्। स्रुवस्रुवाद्यङ्कितं स्रुक्स्रुवादिभिर्जुहूस्रुवप्रभृतिभिर्यज्ञोपकरणैरङ्कितमुपलक्षितम्। अरुण तनुमरुणवर्णशरीरम्। यज्ञरूपं यज्ञस्वरूपं च सन्तम्। यथोक्तं भागवते— 'त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः। हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युप लक्षितः॥' इति। यजन्ते वेदोक्तकर्मपुरस्सरं यागेन तोषयन्ति। अथ द्वापरे सेवाप्रकारमाह—द्वापरे विलसदरिगदं श्यामलाङ्गं तन्त्रमार्गैः सेवन्ते इति। द्वापरे द्वापराख्ये युगे। त्वामित्यत्राप्यन्वेति। त्वां श्रीकृष्णम्। विलसदरिगदं विलसन्त्यौ प्रकाशमाने अरिगदे सुदर्शनकौमोदक्यौ यस्य तम्। एतच्छङ्खपद्मयोरप्युपलक्षणम्। शङ्खचक्रगदापद्मविलसत्करचतुष्टययुक्तमित्यर्थः।

भगवत्प्रसादलाभोपायैः। एवकारो बहुप्रयत्नतपःप्रभृत्यन्योपायानां व्यवच्छेदे। नचिरात् अत्यल्पकालेन। त्वत्प्रसादं तव श्रीकृष्णस्य प्रसादमनुग्रहम्। भजन्ते प्राप्नुवन्ति। कृतादियुगापेक्षया कलियुगे जन्मैव श्लाघ्यमित्याह—हि त्रेताकृतादौ जाताः अपि कलौ सम्भवं कामयन्ते किल इति। हि यस्मात् पूर्वोक्तकारणात्। त्रेताकृतादौ त्रेता कृतं चादौ यस्य स त्रेता कृतादिस्तस्मिन्। कृतत्रेताद्वापरेष्वित्यर्थः। जाताः उत्पन्नाः। मानुषा इत्यत्राप्यनुषज्यते। कलौ कलियुगे। सम्भवं जन्म। कामयन्ते वाञ्छन्ति। किलेति वार्तायाम्। हे विभो त्वं दैवात् तत्र एव जातान् अस्मान् विषयविषरसैः मा वञ्चय। विभो सर्वव्यापिन्। त्वं श्रीकृष्णः। दैवात् अनेकजन्मार्जितसुकृतनिचयपरिपाकवशात्। तत्र तादृग्विधे कलियुगे। एव कारोऽन्येषां युगानां व्यवच्छेदार्थः। जातान् अनायासेन लब्धजनुषः। अस्मान् मां मादृशानन्यान् भगवत्सेवकांश्च। विषयविषरसैः विषया एव विषरसाः विषद्रवास्तैः। सद्योमोहजनकविषरसवद्दारुणैर्विषयरसैरित्यर्थः। मा वञ्चय। मोक्षाभिलाषेण भजतोऽस्मांस्तद्विघातकारिविषयव्यासक्तमनसो मा कुर्वित्यर्थः। स्वभक्तेषु तदभीष्टविपर्यस्तार्थप्रापणमनुचितमेव, अतोऽनेन भगवतो दुष्कीर्तिरपि स्यादिति भावः॥

इतरयुगापेक्षया कलौ भक्तानां बाहुल्यमाह—

भक्तास्तावत् कलौ स्युर्द्रमिलभुवि ततो भूरिशस्तत्र चोच्चैः
कावेरीं ताम्रपर्णीमनु किल कृतमालां च पुण्यां प्रतीचीम्।
हा मामप्येतदन्तर्भवमपि च विभो किञ्चिदञ्चद्रसं त्व-
य्याशापाशैर्निबध्य भ्रमय न भगवन् पूरय त्वन्निषेवाम् ॥ ७॥

भक्ता इति॥ कलौ तावत् भक्ताः स्युः। कलौ कलियुगे। तावत् प्रथममेव। कलियुगारम्भतः प्रभृत्येवेत्यर्थः। भक्ताः भगवद्भक्तजनाः। भूरिशः इत्युत्तरवाक्यादाकृष्यात्र योजनीयम्। भूरिशः कृतयुगाद्यपेक्षया बहवः। स्युः भविष्यन्ति। तावत् स्युरित्येताभ्यां कलियुगे प्रारम्भतः प्रभृत्येव सर्वत्र

बहवो भक्ता बभूवुर्भवन्ति भविष्यन्ति चेत्यर्थो बोद्धव्यः। ततः द्रमिलभुवि भूरिशः। तावत् भक्ताः स्युरित्यत्रोत्तरवाक्ये च योजनीयम्। ततः सप्तम्यर्थे तसिः। कलियुगे सर्वत्र भक्तबाहुल्ये सत्यपि। अथवा बहुभक्ते कलियुगे। यद्वा तसिल्। इतरदेशापेक्षयेत्यर्थः। द्रमिलभुवि द्रमिलभूमौ। भारतभूमौ दक्षिणखण्ड इत्यर्थः। भूरिशः बहवः। तत्र च कावेरीं ताम्रपर्णीं कृतमालां पुण्यां प्रतीचीं च अनु उच्चैः। तत्र द्रमिलभुवि। द्रमिलभुव्यपि क्वचित् क्वचिद्विशेषोऽस्तीति विशेषद्योतकोऽत्र चकारः। वाक्यालङ्कारे वा। कावेरी ताम्रपर्णी कृतमाला चेति तिसृणां नदीनां नामानि। पुण्यां पावनीम्। प्रतीचीं पश्चिमाशां प्रति प्रवहन्तीम्। सह्यपर्वतादुद्भूय केरलेषु पतित्वा पश्चिमसमुद्रं प्रविशन्तीं निळाख्यां नदीमित्यर्थः। चकारः समुच्चये। अनु समीपे। कावेर्यादिनदीनामुभयकूलासन्नप्रदेशेष्वित्यर्थः। उच्चैः इतरप्रदेशेभ्योऽधिकाः। किलेति निश्चये वार्तायां वा। कावेर्यादिनदीनां प्रभावात्तज्जलपानादिना विशुद्धान्तःकरणास्तत्समीपवर्तिनो जना भगवद्भक्ता भवन्त्येवेत्यर्थः। उक्तञ्च श्रीमद्भागवते—'ये पिबन्ति जलं तासां मनुजा मनुजेश्वर। प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः' इति। हे विभो त्वम् एतदन्तर्भवम् अपि च त्वयि किञ्चिदञ्चद्रसं माम् अपि आशापाशैः निबध्य न भ्रमय। विभो सर्वव्यापिन्। त्वं श्रीकृष्णः। एतदन्तर्भवम् एतेषां कावेर्यादिपुण्यनदीविलसत्प्रदेशानामन्तर्भवम् अभ्यन्तरे लब्धजनुषम्। अपि च किञ्च। न केवलं भक्तजनसंकुलप्रदेशलब्धजन्मत्वम् विशेषान्तरमप्यस्तीत्यर्थः। त्वयि श्रीकृष्णे किञ्चिदञ्चद्रसं किञ्चित् ईषत् अञ्चन् उद्यन् रसः भक्तिरसो यस्य तम्। लब्धभगवत्तत्त्वैकदेशज्ञानतया किञ्चित्किञ्चिदास्वाद्यमानभक्तिरसमित्यर्थ.। माम् अनन्यशरणम्। यथा मदितरभक्तांस्तथा मामपीत्यपिशब्दार्थः। हेति खेदे। भ्रामणानुसन्धानात् खेदः। आशापाशैः बन्धनोपयोगिपाशवत् स्थिताभिः पुत्रमित्रकलत्रादिरूपसंसारबन्धनोपयोगिनीभिराशाभिः। विषयतृष्णाभिरिति यावत्। न भ्रमय भगवद्विचारविस्मृत्युत्पादनपूर्वकमितस्ततो भ्रमणं मा कारयेथा इत्यर्थः। किं पुनर्मया करणीयमिति चेत्तत्राह—हे भगवन् त्वं त्वत्सिेवां पूरय इति

भगवन् ऐश्वर्यादिसम्पन्न। त्वं श्रीकृष्णः। त्वन्निषेवां तव श्रीकृष्णस्य निषेवाम्। पूरय पूर्णां कुरु। अल्पाल्पशः क्रियमाणापि त्वन्निषेवा क्रमप्रवृद्धा यथा परिपूर्णा त्वदनुग्रहाय स्यात्तथा कुर्वित्यर्थः ॥

अथ कले गुणवत्त्वं शिक्षणीयत्वञ्चाह—

दृष्ट्वा धर्मद्रुहं तं कलिमपकरुणं प्राङ्महीक्षित् परीक्षि-
द्धन्तुं व्याकृष्टखड्गोपि न विनिहतवान् सारवेदी गुणांशात्।
त्वत्सेवाद्याशु सिद्ध्येदसदिह न तथा त्वत्परे चैष भीरु-
र्यत्तु प्रागेव रोगादिभिरपहरते तत्र हा शिक्षयैनम् ॥ ८ ॥

दृष्ट्वेति॥ परीक्षित् महीक्षित् धर्मद्रुहं तं कलिं दृष्ट्वा अपकरुणं हन्तुं व्याकृष्टखड्गः अपि गुणांशात् न विनिहतवान्। प्राक् पुरा। परीक्षित् तन्नामा। महीक्षित् राजा। धर्मं द्रुह्यतीति तथोक्तम्। वृषरूपिणं धर्मं पाशेन क्वापि बध्वा दण्डेन प्रहरन्तमित्यर्थः। तम् उक्तगुणम्। कलिम्। दृष्ट्वा विलोक्य। अपकरुणम् अपगता करुणा यस्मिन् कर्मणि तद्यथा भवति तथा। स्वतः करुणानिधेरपि परीक्षितो धर्मद्रोहकारिकलिनिग्रहे निष्करुणत्वोक्त्या स्वस्य धर्मपथात् कदापि न व्यतिचलनमिति व्यज्यते। हन्तुं कलिं निगृहीतुम्। व्याकृष्टखड्गं व्याकृष्टः कोशादुद्धृतः खड्गः कृपाणो येन स.। अपीति विरोधे। गुणांशात् कारणभूतात्। गुणदोषमिश्रस्य कलेर्दोषांशमविगणय्य गुणांशं निरूप्येत्यर्थः। न विनिहतवान् नावधीत्। कलेर्गुणांशावगमे हेतुमाह—सारवेदी इति। सारं गुणस्याल्पत्वेऽपि सारांशं भगवद्भक्तिसाधकत्वरूपं वेत्तीति तथाविधः। परीक्षिता ज्ञातं कलेर्गुणस्य सारांशमेवाह—त्वत्सेवादि आशु सिद्ध्येत् इति। इहेत्यु त्तरवाक्यादाकृष्याल योजनीयम्। इह कलौ युगे। त्वत्सेवादि तव श्रीकृष्णस्य सेवा प्रदक्षिणनमस्कारप्रतिमार्चननामसङ्कीर्तनादिरूपा आदौ यस्य तत्। आदिशब्देन सज्जनसङ्गमधर्ममार्गाव्यतिचलनादि गृह्यते। आशु अतिशीघ्रम्। अस्मिन् जन्मन्येवेत्यर्थः। सिद्ध्येत् भक्तिद्वारा मुक्तिमुत्पादयेत्।

माह—यः असौ सर्वकृत्यानि हित्वा सर्वात्मना त्वां शरणम् उपगतः इति। असौ भक्तः। सर्वकृत्यानि सर्वाणि सकलानि कृत्यानि विहितानि कर्माणि। हित्वा त्यक्त्वा। भगवत्यर्पयित्वेत्यर्थः। सर्वात्मना सर्वभावेन। त्वां श्रीकृष्णम्। शरणं रक्षितारम्। उपगतः प्राप्तः। भवतीति शेषः। ननु तर्हि क्वचि न्निषिद्धकर्मणां सर्वात्मनाप्यपरिहार्यत्वात् किं न कर्तव्यं प्रायश्चित्तादीत्यत आह—त्वं तस्य उत्पन्नं विकर्म अपि अखिलम् अपनुदसि एव इति। त्वं श्रीकृष्णः। अस्य तथा भगवन्तं शरणं प्राप्तस्य। उत्पन्नं प्रमादादिना समापतितम्। विकर्म निषिद्धकर्म। तत् तत्फलमित्यर्थः। विहितकर्मणां समुच्चयार्थोपिशब्दः। अखिलं निरवशेषं यथा भवति तथा। अपनुदसि अपाकरोषि। नन्वनेन पापक्षयार्थं भगवदुपासनं न कृतम्, पुनः कथमिद मिति चेत्तत्राह—चित्तस्थितः इति। चित्ते पापक्षयोद्देशं विनाप्यनवरतभगव दुपासनायाः प्रभावात्तस्यान्तरङ्गे स्थीयत इति तथाविधः सन्। न वस्तु शक्तिरर्थितामपेक्षते कार्योत्पादनाय, यथा ह्यौषधमुपयुक्तं फलार्थिनामफलार्थिनामप्य विशेषेणारोग्यादि जनयतीति भावः। अथ प्रार्थयते—हे पवनपुरपते त्वं तत् मे पापोत्थतापान् रुन्धि, भक्तिं प्रणीयाः इति। पवनपुरपते श्रीगुरुवायु पुरनाथ। त्वं श्रीकृष्णः। तत् यस्माच्चित्तस्थः पापान्यपनुदसि, तस्मात् कारणात्। मे ममानन्यशरणस्य। पापोत्थतापान् पापोत्थान् प्राग्जन्मकृत पापसञ्चयजनितान् तापान् बाह्याभ्यन्तरामयरूपान् सन्तापान्। रुन्धि निवा रय। किञ्च, भक्तिं भगवति प्रेमलक्षणाम्। प्रणीयाः कुर्याः॥

इति कर्ममिश्रभक्तिस्वरूपवर्णनं

द्विनवतितमदशकम्॥

एवं विंशत्या श्लोकैः कर्ममिश्रां भक्तिं निरूप्यानन्तरं ज्ञानमिश्रां निरूपयिष्यन् प्रथमं तदधिकारप्राप्तिमाह—

बन्धुस्नेहं विजह्यां तव हि करुणया त्वय्युपावेशितात्मा
सर्वं त्यक्त्वा चरेयं सकलमपि जगद्वीक्ष्य मायाविलासम्।
नानात्वात् भ्रान्तिजन्यात् सति खलु गुणदोषावबोधे विधिर्वा
व्यासेधो वा कथं तौ त्वयि निहितमतेर्वीतवैषम्यबुद्धेः ॥ १ ॥

बन्धुस्नेहमिति ॥ अहं बन्धुस्नेहं तव करुणया हि विजह्याम्। बन्धुस्नेहं बन्धुषु पुत्रमित्रकलत्रादिषु यः स्नेहस्तम्। तव श्रीकृष्णस्य। करुणया कृपया। हिरवधारणे। विजह्यां त्यजेयम्। यतो बन्धुस्नेहस्त्व न्मायाकृतः, ततस्त्वत्कृपयैव तं विजह्याम्; तद्धानेः साधनान्तररहित्यादिति भावः। बन्धुस्नेहत्यागे सति कथं गृहे वसन् जीवितं नयतीत्याशङ्कयाह—अहं त्वयि उपावेशितात्मा सर्वं त्यक्त्वा चरेयम् इति। त्वयि श्रीकृष्णे। उपावेशितात्मा समाहितचित्तः सन्। सर्वं सकलं कायवाङ् मनसां विधिनिषेधरूपं कर्म। त्यक्त्वा हित्वा। चरेयं गृहाद्यनपेक्षः सञ्चरे यम्। यदि लोकसञ्चारी स्यात् तर्हि तत्र तत्र तैस्तैर्नूतनविषयैराकृष्टः स्यात्, ततः सर्वत्यागस्यास्य वैफल्यमेवेत्याशङ्कायामाह— सकलं जगत् अपि माया विलासं वीक्ष्य इति। सकलं सर्वम्। जगत् चरमचरञ्च। अपिशब्दो निरवशेषत्वातिशयद्योतनार्थः। मायाविलासं मायाया विलासं विलसनम्। मायाकल्पितमित्यर्थः। वीक्ष्य दृष्ट्वा। भगवन्मायामयत्वात् भगवन्मयत्वेनैव सकलमपि जगदवलोकयानन्दन् विषयाकर्षणरहितः सन्निति भावः। ननु विहितस्य कर्मणोऽननुष्ठानं न युक्तम्, पापापत्तेः प्रायश्चित्तञ्च कार्यमेवेत्या शङ्क्य कर्मणामविद्वदधिकारित्वेन विदुषस्तदकरणे न दोष इत्याह— भ्रान्तिजन्यात् नानात्वात् गुणदोषावबोधे सति खलु विधिः व्यासेधः वा

इति। भ्रान्तिजन्यात् भ्रान्तिरहम्ममेत्यभिमान तज्जन्यात्। नानात्वात् वर्णाश्रमादिभेदेन बहुविधत्वाद्धेतो। गुणदोषावबोधे गुण सत्त्वशोधकत्वान्नित्यनैमित्तिक कर्म, पापशोधकत्वात् कृच्छ्रचान्द्रायणादिक वा, दोषो हिंसादिस्तयोरवबोधे ज्ञाने। सति सत्तया वर्तमाने सति। खल्वित्यवधारणे। अय गुणोऽय दोष इति विवेकसद्भावे सत्येवेत्यर्थ। विधि एव कर्तव्यमिति नियमवाक्यम्। व्यासेध नैव कर्तव्यमिति निषेधवाक्यम्। वाकारौ समुच्चये। भवतामिति शेष। गुणदोषज्ञानाभावे विधिनिषेधाभाव दर्शयति—त्वयि निहितमते वीतवैषम्यबुद्धे तौ कथम् इति। त्वयि श्रीकृष्णे। निहितमते निहिता ब्रह्मैव समस्तमिति निश्चित्य समर्पिता मतिर्बुद्धिर्येन तस्य। अत एव वीतवैषम्यबुद्धे वीता अपगता वैषम्यबुद्धि नानात्वभ्रमो यस्मात्तस्य। तौ विधिनिषेधौ। कथ केन प्रकारेण। स्यातामिति शेष। अतो विधिनिषेधानधिकारात् सर्वं त्यक्त्वा चरेयमिति भाव। एव विधिनिषेधातीतो ज्ञानमिश्रे भक्तियोगेऽधिकारीत्यपि दर्शितम्॥

एतत् सर्वं पुरुषशरीरेणैव साध्यमिति वक्तुम् तिर्यगादिदेहेभ्य पुरुषतनुरुत्कृष्टेति प्रथयितु पुरुषत्व स्तौति—

क्षुत्तृष्णालोपमात्रे सततकृतधियो जन्तवः सन्त्यनन्ता
स्तेभ्यो विज्ञानवत्त्वात् पुरुष इह वरस्तज्जनिर्दुर्लभैव।
तत्राप्यात्माऽऽत्मन स्यात् सुहृदपि च रिपुर्यस्त्वयि न्यस्तचेता
स्तापोच्छित्तेरुपाय स्मरति स हि सुहृत् स्वात्मवैरी ततोऽन्यः॥ २॥

क्षुदिति॥ क्षुत्तृष्णालोपमात्रे सततकृतधिय अनन्ता जन्तव सन्ति। क्षुत्तृष्णालोपमात्रे क्षुध अशनेच्छाया तृष्णाया पिपासाया लोप उपशमनम्। तृणकवलजलपानादीत्यर्थ। केवल क्षुत्तृष्णालोप क्षुत्तृष्णालोपमात्र तस्मिन्। सततकृतधिय सततम् अनवरत कृतधिय निश्चितचित्ता। जन्तव जीविन। सन्ति वर्तन्ते। अनन्तविधजन्तुमध्ये पुरुषस्य श्रैष्ठ्यमाह—इह विज्ञानवत्त्वात् तेभ्य पुरुष वर इति। इह भूमौ। विज्ञान

वत्त्वात् शेषज्ञानं विज्ञानम्। श्रुतिस्मृत्याद्यभ्यसनजनितज्ञानपरिशीलनसम्पादित भगवत्तत्त्वगवेषणचणधिषणेत्यर्थः। तदस्यास्तीति विज्ञानवान् तस्य भावस्त त्त्वम् तस्मात्। तेभ्यः बहुविधेभ्यो जन्तुभ्यः पुरुषः मनुष्यः। वरः श्रेष्ठः। भवतीति शेषः। तज्जनिः दुर्लभा एव। तज्जनिः तस्य मनुष्यस्य जनिर्जन्म। दुर्लभा दुःखेन लब्धुं शक्या। एवकारेण न कदाचिदपि सुलभा भवतीत्यर्थः। तत्र अपि आत्मा आत्मनः सुहृत् स्यात्, रिपुः अपि च। तत्र तेषु मनुष्येषु। अपिस्समुच्चये। आत्मा स्वयमेव। आत्मनः स्वस्य सुहृत् उपकारी। रिपुः अपकारी। अपि चेति समुच्चये। स्यादित्यत्रोत्तरवाक्ययोरप्यन्वेति। उपकार्यपकारिणोर्विवेकमाह—यः त्वयि न्यस्तचेताः तापोच्छित्तेः उपायं स्मरति, सः सुहृत् हि इति। त्वयि श्रीकृष्णे। न्यस्तचेताः समर्पितचित्तस्सन्। तापोच्छित्तेः तापानां संसारसन्तापानामुच्छित्तेः उच्छेदनस्य। मोक्षस्येति यावत्। उपायं साधनम्। स्मरति पर्यालोच्य जानाति। सः तापोच्छेदोपायस्मर्ता। सुहृत् ज्ञानोपदेशतः स्वयमेवात्मनो गुरुरूपो बन्धुः। हीत्यवधारणे। अथापकारिणमाह—ततः अन्यः स्वात्म वैरी इति। ततः तापोच्छेदोपायस्मर्तुः। अन्यः अपरः। स्वात्मवैरी स्वय मेवात्मनो वैरी ॥

यत् यस्याज्ञाननाशहेतुः स तस्य गुरुरिति विवक्षितत्वात्, स्थिरचरा णामपि तद्धेतुत्वात् गुरुत्वमूरीकरणीयम्, अतः पृथिव्यादिभ्यः शिक्षणीयानि क्षमादीन्यात्मनः प्रार्थयते षड्भिः श्लोकैः—

त्वत्कारुण्ये प्रवृत्ते क इव न हि गुरुर्लोकवृत्तेपि भूमन्
सर्वाक्रान्तापि भूमिर्न हि चलति ततस्सत्क्षमां शिक्षयेयम्।
गृह्णीयामीश तत्तद्विषयपरिचयेप्यप्रसक्तिं समीरा-
द्व्याप्तत्वञ्चात्मनो मे गगनगुरुवशाद्धातु निर्लेपता च ॥ ३ ॥

त्वत्कारुण्य इति॥ हे भूमन् त्वत्कारुण्ये प्रवृत्ते लोक वृत्ते अपि कः इव गुरुः न हि। भूमन् परिपूर्ण। त्वत्कारुण्ये तव

स्वच्छः स्यां पावनोऽहं मधुर उदकवद्वह्निवन्मा स्म गृह्णां
सर्वान्नीनोऽपि दोषं तरुषु तमिव मां सर्वभूतेष्ववेयाम्।
पुष्टिर्नष्टिः कलानां शशिन इव तनोर्नात्मनोऽस्तीति विद्यां
तोयादिव्यस्तमार्ताण्डवदपि च तनुष्वेकतां त्वत्प्रसादात् ॥४॥

स्वच्छ इति ॥ अहं त्वत्प्रसादात् उदकवत् स्वच्छः पावनः मधुरः स्याम्। त्वत्प्रसादात् तव श्रीकृष्णस्य प्रसादात् करुणयेत्यर्थः। उदकवत् जलमिव। स्वच्छः पापदोषादिरहितः, पङ्कादिमलरहितं च। पावनः दर्शनमात्रेण पाप शोधकः, स्नानपानादिना बहिरन्तः सन्तापशमनं च। मधुरः मधुरालापी, मधुररसयुक्तं च। अत्र समुच्चयार्थश्चकारोऽध्याहर्तव्यः। एते गुणा जलगुरोः शिक्षणीया इति भावः। अहं वह्निवत् सर्वान्नीनः अपि दोषं मा स्म गृह्णाम्। वह्निवत् अग्निरिव। सर्वान्नीनः सर्वभक्षः। अपिर्विरोधे। दोषमभक्ष्यभक्षणा दिजं पापमशुद्धवस्तुग्रहणादिजां निन्द्यतां च। मा स्म गृह्णाम् न स्वीकुर्याम्। किञ्च, तरुषु तम् इव मा सर्वभूतेषु अवेयाम्। तरुषु काष्ठेषु। तमग्निम्। मामात्मानम्। सर्वभूतेषु सकलस्थावरजङ्गमेषु। अवेयाम् अवगच्छेयम्। यथा काष्ठेषु प्रविष्टोऽग्निर्ह्रस्वदीर्घस्थूलसूक्ष्मत्वादिना काष्ठसमानरूपो दृश्यते, तथाऽऽत्मानं तरुलतादिसकलस्थावरेषु सुरनरतिर्यगादिसकलशरीरेषु च तदुपाधि वशात्तत्समानरूपतयाऽवगच्छामीत्यवगच्छेयमित्यर्थः। एतौ गुणौ वह्निगुरोः शिक्ष णीयाविति भावः। अहं शशिनः कलानामिव तनोः पुष्टिः नष्टिः आत्मनः न अस्ति इति विद्याम्। शशिनश्चन्द्रस्य। कलानां पूर्वपक्षप्रतिपदादारभ्य अतिदूरस्थितस्यादित्यमण्डलस्य यो य. पञ्चदशः पञ्चदशो भागो जलमये चन्द्र मण्डले प्रतिबिम्बितः प्रतिदिनं क्रमवृद्धो दृश्यते, तानि प्रतिबिम्बानि चन्द्रस्य कला उच्यन्ते, तासामिव। तनोः शरीरस्य। पुष्टिर्वृद्धिः। नष्टिर्नाशः। अत्र समुच्चयार्थश्चकारोऽध्याहर्तव्यः। अस्तीत्यनन्तरवाक्यस्थमत्र वचनविपरिणा मेन योजनीयम्। आत्मनः शरीरपरिच्छिन्नतया प्रतीयमानस्य। नास्ति न भवति। इति एवम्। विद्याम् अवगच्छेयम्। यथा कलानामेव वृद्धि

क्षयौ भवतः, न चन्द्रमण्डलस्य, तथा तनोरेव जन्मास्तित्वविपरिणामवृद्धिक्षयविनाशरूपाः षड्विकारा भवन्ति, नात्मन इत्यवगच्छेयमित्यर्थः। जन्मादयः शरीरस्य, नात्मन इति चन्द्रगुरोः शिक्षणीयमिति भावः। अहं तोयादिव्यस्तमार्ताण्डवत् तनुषु एकताम् अपि च। तोयादिव्यस्तमार्ताण्डवत् तोयमादिर्येषां तेषु। आदिशब्देन दर्पणादि गृह्यते। व्यस्तस्य अनेकशो दृश्यमानस्य मार्ताण्डस्य अर्कस्येव। तनुषु अनेकविधशरीरेषु। एकताम् आत्मन एकत्वम्। अपि चेति समुच्चये। विद्यामित्यत्राप्यन्वेति। यथा मार्ताण्डोऽनेकेषु घटोदकदर्पणादिष्वनेकतया दृश्यमानोऽप्येक एव, तथा सर्वशरीरेष्वात्मा उपाधिभेदाद्भिन्नतया प्रतीयमानोऽप्येक एवेति रविगुरोः शिक्षणीयमिति भावः॥

अथ कपोताजगरसिन्धुशलभभ्रमरेभ्य. शिक्षणीयान्याह—

स्नेहाद्व्याधास्तपुत्रप्रणयमृतकपोतायितो मा स्म भूवं
प्रासं प्राश्नन् सहेय क्षुधमपि शयुवत् सिन्धुवत् स्यामगाधः।
मा पप्तं योषिदादौ शिखिनि शलभवत् भृङ्गवत् सारभागी
भूयासं किन्तु तद्वद्धनचयनवशान्माऽहमीश प्रणेशम्॥ ५॥

स्नेहादिति॥ हे ईश स्नेहात् व्याधास्तपुत्रप्रणयमृतकपोतायितः मा स्म भूवम्। ईश नाथ। त्वत्प्रसादादित्यत्राप्यनुषज्यते। स्नेहात् स्नेहाद्धेतोः। व्याधास्तपुत्रप्रणयमृतकपोतायित व्याधेन लुब्धकेन अस्तेषु निगृह्य हतप्रायेषु पुत्रेषु अपत्येषु यः प्रणयः तेन मृतः कपोत इवाचरतीति तथोक्तः सन्। अत्रेदं बोध्यम्—कश्चिद्वनेचरो नीडान्तिके सञ्चरतः पक्षिशावकान् दृष्ट्वा जालमातत्य प्रतिपालयामास। तदजानन्त कपोतशिशवः प्रथमं जालेनावृताः। तान् दृष्ट्वा कपोती च दुःखेन स्वयं जालेऽपतत्। कपोतश्चापत्यभार्याविलपनविचेष्टनादिश्रवणदर्शनजातदुःखाघमना विलपन् जानन्नपि जाले स्वयं पतित्वा विपत्तिमवृणोदिति। मा स्म भूवम् न भवेयम्। स्नेहः सन्तापहेतुरिति कपोतगुरोः शिक्षणीयमिति भावः। अहं शयुवत् प्रासं प्राश्नन् क्षुधम् अपि सहेय। शयुवत् अजगर इव। प्रासं निज

सकाशमागतं क्षुच्छमनाय पर्याप्तमपर्याप्तं वा भैक्ष्यवस्तु। प्राश्नन् भक्षयन्। क्षुधं बुभुक्षाम्। तृष्णाया अप्युपलक्षणमिदम्। एवञ्च ततोपि तुच्छानां परकृतलोष्टप्रक्षेपणताडनादीनां का कथेत्यपिशब्देन दर्शितम्। सहेय सोढुं शक्तो भवेय। यथाऽजगरः क्षुधार्तः स्वदेहस्यातिगुरुतयाऽऽहारार्थं पर्यटनेऽसमर्थो यदा कदाचित् समीपमाप्तं यत्किञ्चित् क्षुधः शमनेऽपर्याप्तमप्यश्नन् क्षुधं सहते तथा वर्तेयेत्यर्थः। अनेन प्रारब्धकर्मफलस्यावश्यभोक्तव्यत्वात् सुखप्राप्तिदुःखपरिहारार्थप्रयत्नोपि वृथा कालक्षेपैकफल इत्यजगरगुरोः शिक्षणीयमिति भावः। अहं सिन्धुवत् अगाधः स्याम्। सिन्धुः समुद्र इव। अगाधः गम्भीरः। एतच्चास्य प्रसन्नत्वाक्षोभ्यत्वादिगुणानां चोपलक्षणम्। यथा सिन्धुः सरितां सम्प्राप्तावपि तीरं नातिक्रामति, यथा च ग्रीष्मकालेपि क्षयं न प्राप्नोति, सर्वदा प्रसन्नोऽक्षुब्धश्च भवति, तथाऽहं सुखदुःखयोः सममतिः प्रसन्नहृदयः क्षोभरहितश्च वर्तेयेत्यर्थः। एवं सिन्धुगुरोः शिक्षणीयं दर्शितम्। अहं शिखिनि शलभवत् योषिदादौ मा पतम्। शिखिनि अग्नौ। शलभवत् शलभ इव। योषिदादौ योषादौ। आदिशब्देन कनकरत्नादिकं गृह्यते। मा पतं न सक्तो भवेयम्। यथा शलभो वह्नौ तद्वर्णलुब्धः पतति, तथा रूपेण कटककटिसूत्रपट्टाम्बरादिविशिष्टभूषणैर्हावभावादिभिश्च रम्यायां रमण्यां कनकादीतरहृदयङ्गमवस्तुनिचये च परमार्थतो दुःखहेतावप्युपभोग्यबुद्ध्याऽत्यासक्तो भूत्वा न नश्येयमिति भाव.। सक्तिः नाशयेति शलभगुरोः शिक्षणीयमिति भावः। अहं भृङ्गवत् सारभागी भूयासम्। भृङ्गवत् भ्रमर इव। सारभागी सारस्य शास्त्रादिसारस्य च भागोऽस्यास्तीति तथोक्तः। यथा भृङ्गः पुष्पेषु सारभूतं मधु गृह्णाति, तथा शास्त्रादिपु सारभूतं श्रीकृष्णस्मरणरूपमर्थमेव भजेयमित्यर्थः। किञ्च, किन्तु अहं तद्वत् धनचयनवशात् मा प्रणेशम्। किन्तु तथापि विशेषोऽस्तीत्यर्थः। तद्वत् भृङ्ग इव। धनचयनवशात् धनसम्पादनाभिनिवेशाद्धेतोः। मा प्रणेशं मा नश्येयम्। यथा भृङ्गो विशिष्टगन्धलोभेनैकस्मिन्नेव पद्मे वसन्नस्तमये तस्मिन् मुकुलिते बहिर्गन्तुमक्षमो बध्यते, तथाऽहमप्यर्थार्जनाभिनिवे

शेनैकवासक्तो मा नाशं गच्छेयमित्यर्थः। प्रणेशमित्यत्र नशेर्लुङि पुषादि त्वादङ्। 'नशिमन्योरलिट्येत्वम्' इति भाष्यवार्तिकादत एत्वम्। छन्दो ग्रहणं तु वाक्यभेदेनामिषचोरेव सम्बध्यते। सर्वस्मादपि सारो ग्राह्यः, एक त्रैवात्यासक्तिर्दोषहेतुरिति भ्रमरगुरोः शिक्षणीयमिति भावः॥

अथ गजमधुहरहरिणमीनपिङ्गलाकुररेभ्यः शिक्षणीयान्याह—

मा बध्यासं तरुण्या गज इव वशया नार्जयेयं धनौघं
हर्तान्यस्तं हि माध्वीहर इव मृगवन्मा मुहं ग्राम्यगीतैः।
नात्यासज्जेय भोज्ये झष इव बलिशे पिङ्गलावन्निराशः
सुप्यां भर्तव्ययोगात् कुरर इव विभो सामिषोऽन्यैर्न हन्यै॥ ६॥

मा बध्यासमिति॥ हे विभो अहं वशया गज इव तरुण्या मा बध्या सम्। विभो सर्वव्यापिन्। त्वत्प्रसादादित्यत्राप्यनुषज्यते। वशया करिण्या। गजः हस्ती। गजो हि जनैः करिणी प्रदर्श्य निखातपिहितगर्ते निपात्य बध्यते, तद्वत्। तरुण्या कमन्या। मा बध्यासं बद्धो मा भवेयम्। स्त्रीणामङ्ग सङ्गो बन्धहेतुरिति गजगुरोः शिक्षेयमिति भावः। अहं धनौघं न आर्जये यम्। हि अन्यः तं माध्वीहरः इव हर्ता। अत्रादौ तस्मादित्यध्याहर्त व्यम्, हीत्युत्तरत्र दर्शनात्। धनौघं द्रविणसञ्चयम्। न आर्जयेयं न सम्पा दयेयम्। हि यस्मात्। अन्यः चोरादिः। तं धनौघम्। माध्वीहरः मधु हरः। मधु इत्यध्याहर्तव्यम्। मधु क्षौद्रम्। हर्ता हरिष्यति। चोरादि भयाद्धनसञ्चयो न कर्तव्य इति मक्षिकादिभिस्तरुकोटरादिषु सञ्चितस्य मधु नोऽपहर्तुर्माध्वीहराच्छिक्षयेयमित्यर्थः। अहं मृगवत् ग्राम्यगीतैः मा मुहम्। मृगवत् हरिण इव। ग्राम्यगीतैः ग्राम्यैर्ग्रामीणैर्गीतैः। यथा मृगो मृगयुप्रयुक्तैर्गान विशेषैः, तथाऽहं भगवत्सम्बन्धीतरैर्गीतैरित्यर्थः। मा मुहं मोहं नाधिग च्छेयम्। भगवद्गीतेतरगीतान्यात्मनो नाशायेति हरिणाच्छिक्षयेयमित्यर्थः। अहं बलिशे झषः इव भोज्ये न अत्यासज्जेय। बलिशे आमिषावृतलोहकण्टके। झष इव मत्स्य इव। भोज्ये भक्ष्यवस्तुनि। न अत्यासज्जेय अत्यासक्तिं

न गच्छेय। अवाप्तिशब्देन जीवितधारणमात्रोपयोगिभोज्यवस्तुनि सक्तिर्न दोषायेति गम्यते। अहं पिङ्गळावत् निराश. सुप्याम्। पिङ्गळावत् तदाख्या वेश्येव। निराशः निर्गता धनसुखाद्याशा यस्मात्तथाविधः सन्। सुप्या सुखं निद्रां कुर्याम्। अत्रेदं बोध्यम्—पुरा पिङ्गळा नाम स्वैरिणी अर्थाशया प्रथममागतान् स्वल्पार्थदान् पुरुषाननादृत्य 'अपि नामान्यो भूरिद्रविणप्रदो मामुपैष्यति' इति दुराशया दूयमाना, निशीथावधि तथाविधान् पुरुषान् प्रतिपालयन्ती जाग्रती पुनश्च विफलप्रतीक्षा निर्विण्णा भूत्वा निर्वेदासिना धनादौ दुराशालताश्छित्वा सुखं सुष्वापेति। आशा दु.खहेतुर्नैराश्यं सुखहेतुश्चेत्यस्या. शिक्षयेयमित्यर्थः। सामिष. कुरर इव भर्तव्ययोगात् अन्यैः न हन्यै। सामिष· आमिषेण भक्ष्येण सह वर्तत इति तथोक्तः। भक्ष्यं तुण्डे वहन्नित्यर्थः। कुररः पक्षिविशेषः। तुण्डस्थामिषः कोपि कुररोन्यैरामिषेच्छुभिर्बलिभिस्तर्जितस्तत्त्यक्त्वा तर्जनान्मुक्तोऽभूत्, तद्वदित्यर्थः। भर्तव्ययोगात् भर्तव्यानां ममत्वेन रक्षणीयानां कुटुम्बद्रव्यादीनां योगात् सम्बन्धाद्धेतोः। अन्यैः बलिभि। न हन्यै न पीडितस्स्याम्। यस्य कस्यचिदपि ममत्वेन स्वीकारो दु खहेतु·, अस्वीकारः स्वीकृताना त्यागश्च सुखहेतुः इति कुरराच्छिक्षयेयमित्यर्थ·॥

अथार्भककुमारीशरकारसर्पेभ्यश्शिक्षणीयान्याह—

वर्तेय त्यक्तमानः सुखमतिशिशुवन्निस्सहायश्चरेयं
कन्याया एकशेषो वलय इव विभो वर्जितान्योन्यघोषः।
त्वच्चित्तो नावबुध्यै परमिषुकृदिव क्ष्माभृदायानघोषं
गेहेष्वन्यप्रणीतेष्वहिरिव निवसान्युन्दुरोर्मन्दिरेषु ॥ ७ ॥

वर्तेयेति॥ हे विभो अहम् अतिशिशुवत् त्यक्तमानः सुखं वर्तेय। विभो परिपूर्ण। त्वत्प्रसादादित्यत्राप्यनुषज्यते। अतिशिशुवत् अतितरामर्भक इव। त्यक्तमान. त्यक्तो मानो येन तथाविधस्सन्। मानपदमवमानस्याप्युपलक्षणम्। सुखं यथा भवति तथा। यथा मानावमानयोरभावादर्भकस्य

सर्वदा सुखम्, तथेत्यर्थः। वर्तेय निवसानि। मानावमानत्यागः सुखायेत्य र्भकाच्छिक्षयेयमित्यर्थः। अहं कन्यायाः एकशेषः वर्जितान्योन्यघोषः वलयः इव निस्सहायः चरेयम्। कन्यायाः कुमार्याः। एकः शेषो यस्य स एकशेषः। अनेन करयोरनेकवलयानां सत्त्वाचेषां मिथस्सङ्घट्टनसम्भूतध्वनि मसहमाना किलैकावशिष्टमकरोदिति गम्यते। वर्जितान्योन्यघोषः वर्जितः त्यक्तः अन्योन्यघोषः मिथस्सङ्घट्टनध्वनिर्येन सः त्यक्तेतरेतरव्यर्थप्रलापादि रिति च। वलयः प्रकोष्ठधृतशङ्खवलयः। काचित् कन्यका आत्मवरणा यागतान् पुरुषान् भोजयितुं स्वयं शाल्यवहननं कुर्वती प्रकोष्ठस्थशङ्खवलयस्वन जुगुप्सया शङ्खवलयमेकावशिष्टमकरोत्। तादृशवलय इवेत्यर्थः। निस्स हायः सहायरहितः। चरेयम् इतस्ततः सञ्चरेयम्। परस्परमिथ्यासङ्कलन कलहादीनां भगवद्ध्याननामसङ्कीर्तनादिविघातकारकतया बहुभिः सह सञ्चारो वर्जनीय इति कुमारीवलयाच्छिक्षयेयमित्यर्थः। अहं त्वचित्तः इषुकृत् क्ष्माभृ दायानघोषम् इव परं न अवबुध्यै। त्वचित्तः त्वं श्रीकृष्णः सर्वदा चित्ते यस्य सः। इषुकृत् शरस्य ऋजुकरणे दत्तचित्तः शरकारः। क्ष्माभृदायान घोषं क्ष्माभृतः भूपतेरायाने यो घोषः भेर्यादिगम्भीरध्वनिस्तमिव। परम् अन्यत्। न अवबुध्यै न अवगच्छेयम्। भगवद्ध्याने एवं भाव्यमितिशर काराच्छिक्षयेयमित्यर्थः। अहम् अन्यप्रणीतेषु गेहेषु उन्दुरोः मन्दिरेषु अहिः इव निवसानि। अन्यप्रणीतेषु अन्यैः अपरैः प्रणीतेषु निर्मितेषु। गेहेषु वसतिषु। उन्दुरोः मूषिकस्य। मन्दिरेषु कुहररूपेषु गृहेषु। अहिः सर्प इव। निवसानि वसेय। गृहनिर्माणमनर्थायेति सर्पाच्छिक्षयेयमित्यर्थः॥

अथोर्णनाभात् पेशकाराद्देहाच्च शिक्षणीयान्याह—

त्वय्येव त्वत्कृतं त्वं क्षपयसि जगदित्यूर्णनाभात् प्रतीयां
त्वच्चिन्ता त्वत्स्वरूपं कुरुत इति दृढं शिक्षये पेशकारात्।
विड्भस्मात्मा च देहो भवति गुरुवरो यो विवेकं विरक्तिं
धत्ते सञ्चिन्त्यमानो मम तु बहुरुजापीडितोऽयं विशेषात्॥ ८॥

त्वयीति॥ त्वं त्वत्कृतं जगत् त्वयि एव क्षपयसि इति अहम्

ऊर्णनाभात् प्रतीयाम्। त्वं श्रीकृष्णः। त्वत्कृतं त्वया निमित्तोपादनभूतेन श्रीकृष्णेन कृतं सृष्टम्। जगत् चरमचरञ्च। त्वयि श्रीष्णे। एवकारोऽन्यस्य व्यवच्छेदे। क्षपयसि संहरसि। इति एवम्। ऊर्णनाभात् स्वेन निर्मितं तन्तुवितानं स्वस्मिन्नेव स्वयं संहरतो लूताविशेषात्। प्रतीयाम् अवगच्छेयम्। जगतः सृष्टिस्थितिसंहारकारको भगवान् श्रीकृष्ण एवेति ऊर्णनाभाच्छिक्षयेय मित्यर्थः। त्वच्चिन्ता त्वत्स्वरूपं कुरुते इति अहं पेशकारात् दृढं शिक्षये। त्वच्चिन्ता तव श्रीकृष्णस्य चिन्ता स्वरूपध्यानम्। त्वत्स्वरूपं तव श्रीकृष्णस्य स्वरूपम्। कुरुते करोति। इति एवम्। पेशकारात् पेशः क्षुद्र कुटी तां करोतीति पेशकारो भ्रमरविशेषस्तस्मात्। अत्रेदं बोध्यम्—पेशकारः कीटं निजनिर्मितायां क्षुद्रकुट्यां निवेश्य स्वमुखवायुना कुट्यन्तर्भागं सम्पूर्य द्वारं पिधाय गच्छति, कीटस्तु भयेन निजनिरोधकारिणमेव ध्यायन् केषुचिद्दिवसे ष्वतिक्रान्तेषु पेशकारो भूत्वा द्वारं निर्भिद्य बहिर्गच्छतीति। शिक्षये अव गच्छेयम्। गुरुभूताना सर्वचराचराणामसंख्येयतया निश्शेषतो निरुक्तेरशक्य त्वादेवं चतुर्विंशतिगुरून् प्रदिपाद्य देहगुरो. सर्वेभ्यः प्राधान्यात्तं विशे षेणाह—विड्भस्मात्मेति। स इत्यध्याहर्तव्यम्, उत्तरत्र यच्छब्ददर्शनात्। विड्भस्मात्मा स. देह च गुरुवरः भवति इति। विड्भस्मात्मा विडात्मा भस्मात्मा च। श्वादिभिर्भक्षितो विडात्मा भवति, अग्निना दग्धो भस्मात्मा चेति भाव·। देह. शरीरम्। चकारस्त्वर्थो विशेषे। विशेषमाह—गुरुवर इति। गुरुषु मध्ये वरः श्रेष्ठ इत्यर्थ। विवेकविरक्तिकरत्वादितरेभ्यो गुरुभ्यः श्रेष्ठतत्वमिति बोध्यम्। तच्छब्धार्थमाह—यः सञ्चिन्त्यमान· विवेकं विरक्तिं धत्ते इति। सञ्चिन्त्यमान सम्यक् चिन्त्यमान. विचार्यमाणः। विवेकं विविच्य ज्ञानम्। विरक्ति वैराग्यम्। समुच्चयार्थश्चकारोऽत्र योजनीयः। दुर्लभत्वोपकारित्वयोर्निरूपणे विवेकम्, अनित्यत्वपारक्यत्वदु खोदर्कत्वाना निरूपणे विरक्तिश्चेति भाव.। धत्ते तनोति। एवं सामान्यतो देहस्य गुरुवरत्व मुक्त्वाऽनन्तरं कविस्तत्र स्वदेहस्य विशेषमाह—मम तु बहुरुजापीडितः अयं विशेषात् इति। मम मे। तुर्विशेषे। बहुरुजापीडितः बह्वीभिरनेकाभि. रुजाभि

रोगकृतैरुपद्रवैः पीडितः व्याक्रान्तः। अयं देहः। विशेषात् अतिशयेन। विवेकं विरक्तिम्। चत्त इत्यत्राप्यन्वेति। विवेकविरक्त्योराधिक्यं करोतीत्यर्थः॥

ननु विवेकविरक्तिविधायकतया उपकारकारिणि देहे कथं मोहाभावः स्यादित्याशङ्क्य देहमोहे दोषमाविष्कुर्वन् भगवन्तं प्रार्थयते—

ही ही मे देहमोहं त्यज पवनपुराधीश यत्प्रेमहेतो-
र्गेहे वित्ते कलत्रादिषु च विवशितास्त्वत्पदं विस्मरन्ति।
सोऽयं वह्नेश्शुनो वा परमिह परतस्साम्प्रतश्चाक्षिकर्ण-
त्वग्जीह्वाद्या विकर्षन्त्यवशमत इतः कोऽपि न त्वत्पदाब्जे॥ ९॥

ही हीति॥ हे पवनपुराधीश त्वं मे ही ही देहमोहं त्यज। पवनपुराधीश श्रीगुरुवायुपुरनाथ। त्वं श्रीकृष्णः। मे ममानन्यशरणस्य। ही हीति देहमोहं प्रति निन्दागर्भोक्तिः। एवंविधेऽपि देहमोहे त्यक्ते सत्येव मोक्षप्राप्तिर्भवेदित्यभिप्रायेणैव प्रार्थ्यत इति भावः। देहमोहं देहे शरीरे यो मोहः सुखसाधनत्वभ्रान्तिस्तम्। त्यज दूरीकुरुष्व। त्यजेत्यनेन मया देहमोहत्यागो न शक्यते, अतस्त्वयैव मत्तोऽपहृत्य दूरीकर्तव्य इत्यभिप्रायो गम्यते। देहमोहस्यात्यागे दोषमाह—यत्प्रेमहेतोः गेहे वित्ते कलत्रादिषु च विवशिताः त्वत्पदं विस्मरन्ति इति। यत्प्रेमहेतोः यस्मिन् देहे प्रेमहेतोः स्नेहकारणात्। गेहे भवने। वित्ते धने। कलत्रादिषु दारप्रभृतिषु। आदिशब्देन पुत्रमित्रपशुभृत्यादयो गृह्यन्ते। चकारः समुच्चये। विवशिताः विवशीकृताः। तद्योगक्षेमैकचित्ताःसन्त इत्यर्थः। त्वत्पदं तव श्रीकृष्णस्य पदं चरणकमलद्वन्द्वम्। विस्मरन्ति न चिन्तयन्तीत्यर्थः। किञ्च, सः अयम् इह परतः परं वह्नेः शुनः वा इति। सः त्वत्पदविस्मृतिहेतुभूतप्रेमपात्रम्। अयं देहः। इह एषु सकलनरमृगपशुपक्ष्यादिषु। परतः अवसाने। परं केवलम्। वह्नेः अग्नेर्दहनाय। शुनः सारमेयस्य भक्षणाय। वेति विकल्पे। भवतीति शेषः। जीववियोगे देहेन न किमपि प्रयोजनमिति भावः। अस्त्वेवं देहस्य सजीवकाल एव यत्नः कर्तव्यो मोक्षायेति चेत्तत्र नेत्रादयः प्रतिबन्धका

भवन्तीत्याह—साम्प्रतं च अक्षिकर्णत्वग्जिह्वाद्याः अवशम् अत इतः विकर्षन्ति इति। साम्प्रतम् अधुना। जीवापायात् पूर्वकाल इत्यर्थ.। चकारस्त्वर्थे। अक्षिकर्णत्वग्जिह्वाद्याः अक्षिणी नेत्रेन्द्रियं कर्णौ श्रोत्रेन्द्रियं त्वक् त्वगिन्द्रियं जिह्वा रसनेन्द्रियं च आद्यानि आदौ भवानि येषां घ्राणवाक्पादपाणिपायूपस्थानां ते। अत्र अक्ष्याद्युक्त्या तदधिष्ठातृदेवताः क्रमादर्कदिग्वाताश्विवह्नीन्द्रविष्णुमित्र प्रजापतयो गृह्यन्ते, अक्ष्यादीनां तदधीनप्रवृत्तित्वात्। अवशम् आकुलं यथा भवति तथा। अत इतः स्वस्वविषयेषु रूपादिष्वित्यर्थः। विकर्षन्ति आकर्षन्ति। कोपि त्वत्पदाब्जे न। कोपि एष्वक्ष्यादिष्वेकोऽपि। त्वत्पदाब्जे तव श्रीकृष्णस्य पदाब्जे चरणारविन्दद्वन्द्वे विषये। न विकर्षन्तीत्यर्थः॥

ननु प्रारब्धकर्मफलस्यावश्यभोक्तव्यत्वात्तद्भोगस्य च देहगेहाद्यासक्त्यधीनत्वात्तत्यागोऽशक्य इति चेत्तर्हि प्रकारान्तरेणात्मनो जन्मसाफल्यकरणं प्रार्थयते—

> दुर्वारो देहमोहो यदि पुनरधुना तर्हि निश्शेषरोगान्
>   हृत्वा भक्तिं द्रढिष्ठां कुरु तव पदपङ्केरुहे पङ्कजाक्ष।
> नूनं नानाभवान्ते समधिगतममुं मुक्तिदं विप्रदेहं
>   क्षुद्रे हा हन्त मा मा क्षिप विषयरसे पाहि मां मारुतेश॥ १०॥

दुर्वार इति॥ हे पङ्कजाक्ष देहमोहः पुन अधुना दुर्वारः यदि तर्हि त्वं निश्शेषरोगान् हृत्वा तव पदपङ्केरुहे द्रढिष्ठां भक्तिं कुरु। पङ्कजाक्ष कमलदलनयन। देहमोहः देहविषयको मोहः। पुनरस्त्वर्थे। अधुना अस्मिन् जन्मनि। दुर्वारः दुःखेनापि वारयितुमशक्यः। यदि तर्हि एवञ्चेत्तर्हि। निश्शेषरोगान् निश्शेषान् बाह्यान् वातादीनाभ्यन्तरान् रागादींश्चाखिलान् रोगान् आमयान्। हृत्वा संहृत्य। तव श्रीकृष्णस्य। पदपङ्केरुहे चरणकमलयुगले। द्रढिष्ठाम् अनपायिनीम्। भक्तिं प्रेमलक्षणाम्। कुरु विधेहि। भगवद्भक्तिलाभे मोक्षप्राप्तिर्निश्चितैवेति भावः। अन्यथा सम्भाव्यमानमनर्थं प्रार्थनया दर्शयति—हे मारुतेश त्वं नानाभवान्ते समधिगतं मुक्तिदं

एवमुत्पन्नविवेकस्य तत्त्वज्ञानोत्पत्तिप्रकारमाह—

शुद्धा निष्कामधर्मैः प्रवरगुरुगिरा तत्स्वरूपं परं ते
शुद्धं देहेन्द्रियादिव्यपगतमखिलं व्याप्तमावेदयन्ते ।
नानात्वस्थौल्यकार्श्यादि तु गुणजवपुस्सङ्गतोऽध्यासितं ते
वह्नेर्दारुप्रभेदेष्विव महदणुतादीप्तताशान्ततादि ॥ १ ॥

शुद्धा इति ॥ निष्कामधर्मैः शुद्धाः प्रवरगुरुगिरा देहेन्द्रियादि व्यपगतं शुद्धम् अखिलं व्याप्तं परं ते तत् स्वरूपम् आवेदयन्ते । निष्काम धर्मैः निर्गतः कामो येभ्यस्ते निष्कामाः । फलकामनामन्तरेणानुष्ठिता इत्यर्थः । ते च ते धर्मा वर्णाश्रमधर्माश्च तैः । शुद्धाः रागादिदोषरहिताः । शम दमादिसाधनचतुष्टयसम्पन्ना इति यावत् । अनेनैषां प्रवरगुरूपदेशाधिकारः सूचितः । देहिन इति शेषः । प्रवरगुरुगिरा प्रवरस्य वेदवेदान्तादिषु तद र्थेषु च निष्णातचित्ततया प्रकर्षेण श्रेष्ठस्य गुरोः अज्ञाननिरोधनचतुरस्या चार्यस्य गिरा उपदेशवाक्येन । देहेन्द्रियादिव्यपगतं देहेन्द्रियादिभ्यो व्यप गतं व्यतिरिक्तम् । अत एव शुद्धं मायातत्कार्योपरागरहितम् । अखिलं सर्वाश्रयम् । व्याप्तं सर्वानुस्यूतम् । परं प्रधानम् । ते तव श्रीकृष्णस्य । तत् निष्कलम् । स्वरूपम् आवेदयन्ते सम्यगवगच्छन्ति । ननु आत्मनो नानात्वशरीरित्वपरिमितत्वक्षणिकत्वादीनि केचिदाचक्षते, तत् कथं सच्चिदानन्दादि रूपत्वेन ज्ञातव्यत्वमित्यत आह—ते नानात्वस्थौल्यकार्श्यादि तु गुणज वपुस्सङ्गतः अध्यासितम् इति । ते तवात्मनः । नानात्वस्थौल्यकार्श्यादि नानात्वं नानाप्रकारत्वं स्थौल्यं स्थूलत्वं कार्श्यं कृशत्वमादिर्यस्य तत् । तुर्वि शेषे । गुणजवपुस्सङ्गतः गुणेभ्यो मायागुणेभ्यो जायत इति गुणजम्, तच्च तद्वपुः शरीरं च गुणजवपुः तस्य सङ्गतस्तादात्म्याध्यासेन सम्बन्धेन । अध्यासितम् आरोपितम् । आत्मनः शरीरस्य चान्योन्याध्यासेन नानात्वा

देरात्मनि कल्पितत्वान्न वास्तवत्वमिति भावः। अत्रानुरूपं दृष्टान्तमाह— दारुप्रभेदेषु वह्नेः महदणुतादीप्तताशान्ततादि इव इति। दारुप्रभेदेषु दारुणः काष्ठचयस्य प्रभेदेषु स्थूलत्वसूक्ष्मत्वशुष्कत्वार्द्रत्वादिभिन्नभिन्नप्रकारेषु। वह्नेरग्नेः। महदणुतादीप्तताशान्तता आदौ यस्य तत्तथोक्तम् ॥

एतच्च ज्ञानमाचार्यालब्धमेवाज्ञानतत्कार्यनिरसनक्षममिति स्फुटीकर्तुं ब्रह्मज्ञानोत्पत्तिं रूपकेण निरूपयति—

आचार्याख्याधरस्थारणिसमनुमिलच्छिष्यरूपोत्तरार-
ण्यावेधोद्भासितेन स्फुटतरपरिबोधाग्निना दह्यमाने।
कर्मालीवासनातत्कृततनुभुवनभ्रान्तिकान्तारपूरे
दाह्याभावेन विद्याशिखिनि च विरते त्वन्मयी खल्ववस्था ॥ २ ॥

आचार्येति ॥ आचार्याख्याधरस्थारणिसमनुमिलच्छिष्यरूपोत्तरारण्यावेधोद्भासितेन स्फुटतरपरिबोधाग्निना कर्मालीवासनातत्कृततनुभुवनभ्रान्तिकान्तारपूरे दह्यमाने दाह्याभावेन विद्याशिखिनि च विरते अवस्था त्वन्मयी खलु। आचार्याख्याधरस्थारणिसमनुमिलच्छिष्यरूपोत्तरारण्यावेधोद्भासितेन आचार्याख्यः गुरुरूपो योऽधरस्थारणि. अधोगतमथनकाष्ठविशेषः, समनुमिलन् उपनयनद्वारा सन्निधिं प्राप्तो यः शिष्यस्तद्रूपो य उत्तरारणिः उपरिगतमथनकाष्ठविशेषः तयो रावेधः प्रवचनरूपेण मथनदण्डेन सङ्घट्टनं तेनोद्भासितेन अत्यन्तं प्रकाशितेन। नितरां स्फुटः स्फुटतरः अतिस्पष्टः स चासौ परिबोधस्सम्यग्ज्ञानं चेति स्फुटतरपरिबोधः स एवाग्निस्तेन। कर्मणां सजातीयकर्मणामाली समूहस्तस्या वासना उत्पादकसंस्कारः कर्मालीवासना तत्कृता तदुत्था तनुभुवनभ्रान्तिः शरीरादिप्रपञ्चविषयकमज्ञानं तत्कृततनुभुवनभ्रान्ति, कर्मालीवासना च तत्कृततनुभुवनभ्रान्तिश्चेति कर्मालीवासनातत्कृततनुभुवनभ्रान्ती तद्रूपे कान्तारपूरे काननसमूहे कर्मालीवासनातत्कृततनुभुवनभ्रान्तिकान्तरपूरे। दह्यमाने दाहरूपं नाशं प्राप्यमाने सति। दाह्याभावेन दाह्यस्याज्ञानरूपेन्धनस्य अभावेन नाशेन। विद्याशिखिनि विद्या ब्रह्मज्ञानमेव शिखी वह्निस्तस्मिन्। चकारस्त्वर्थे,

समुच्चये वा। विरते लीने सति। अवस्था अवस्थितिः। त्वन्मयी भगवन्मयी। खल्वित्यवधारणे। भवतीति शेषः। यथा अरणिद्वयसङ्घट्टनसञ्जातो वह्निर्वनं दहन्निन्धनाभावे स्वयं शाम्यति, तथा गुरुशिष्यप्रवचनजनितं ब्रह्मज्ञानमज्ञाननाशं कुर्वाणं तस्मिन् नष्टे स्वयं नश्यति, तदा च भगवदैक्यावस्थैव वर्तत इत्यर्थः॥

एवं श्लोकद्वयेन सर्वतो विरक्तस्य तत्त्वज्ञानेन संसारदुःखोच्छेदः परमानन्दावाप्तिश्चेत्युक्तम्। तदेव द्रढीकर्तुं मतान्तरं निरस्यति—

एवं त्वत्प्राप्तितोऽन्यो न हि खलु निखिलक्लेशहानेरुपायो
नैकान्तात्यन्तिकास्ते कृषिवदगदषाड्गुण्यषट्कर्मयोगाः।
दुर्वैकल्यैरकल्या अपि निगमपथास्तत्फलान्यप्यवाप्ता
मत्तास्त्वां विस्मरन्तः प्रसजति पतने यान्त्यनन्तान् विषादान्॥ ३॥

एवमिति॥ निखिलक्लेशहानेः उपायः एवं त्वत्प्राप्तितः अन्यः न खलु हि। निखिलक्लेशहानेः निखिलानाम् ऐहिकानामामुष्मिकानां च सर्वेषां क्लेशानां दुःखानां हानेर्नाशस्य। उपायः मार्गः। एवम् उक्तप्रकारेण। त्वत्प्राप्तितः त्वयि श्रीकृष्णे प्राप्तिरैक्यं तस्मात्। मोक्षप्राप्तेरित्यर्थः। अन्यः अपरः उपायः। न खलु नास्त्येव। हीति प्रसिद्धौ। ननु बहवोऽन्ये सन्ति देहिनां निखिलक्लेशहानेरुपायाः, किमेवं भगवत्प्राप्तिरेवेत्युच्यत इत्याशङ्कायामाह—ते अगदषाड्गुण्यषट्कर्मयोगाः कृषिवत् नैकान्तात्यन्तिकाः इति। ते येऽन्यैः क्लेशनाशोपायत्वेनोक्तास्ते। अगदषाड्गुण्यषट्कर्मयोगाः अगदा औषधानि आयुर्वेदोक्तारोग्यादिलाभोपायाः। मणिमन्त्रौषधरसायनादिप्रयोगा इति यावत्। *षण्णां गुणानां दण्डनीत्युक्तसन्धिविग्रहाद्यर्थार्जनोपायानां समाहारः षाड्गुण्यम्*, षट्कर्माणि अध्ययनाध्यापनादीनि, योगा वेदोक्तोपायाश्च। कृषिवत् कृषिरिव। नैकान्तात्यन्तिकाः नैकान्ताः नात्यन्तिकाश्च। नैकान्ताः दुःखमिश्रसुखहेतुत्वान्नाखिलदुःखनिवर्तकाः। नात्यन्तिकाः अनित्यफलत्वान्न दुःखपुनरावृत्तिनिवर्तकाः। भवन्तीति शेषः। कृषिविषये नैकान्तिकत्वं भूकर्षणखननसेचनपशुचोरादिसंरक्षणादि

दु:खोदर्कप्रयत्नैरेव फलजनकतया दु:खमिश्रसुखकारित्वम्, नात्यन्तिकत्वं तु कैवार भूकर्षणादिदु:खोदर्कप्रयत्नैरनवरतफलकारित्वशून्यत्वं चेति वेदितव्यम्। नन्विह पुत्र धनधान्यारोग्यादिपरिपन्थिनिरासफलकानि परत्र स्वर्गादिसाधनान्यपि वैदिककर्माणि बहूनि विद्यन्त इति चेत्तत्राह—निगमपथा: दुर्वैकल्यैः अकल्या: अपि इति। निगम पथा: वेदोक्तमार्गा:। दुर्वैकल्यै. दु:खेनापि परिहर्तुमशक्यैर्वैकल्यैर्द्रव्यकालकर्त्रादीनां दोषरूपैर्हेतुभि.। अकल्या: कलयितुं कर्तुमशक्या:। न केवलं नैकान्तात्यन्तिका इत्यपिशब्दार्थ:। किञ्च, तत्फलानि अवाप्ता: अपि मत्ता: त्वां विस्मरन्त: पतने प्रसजति अनन्तान् विषादान् यान्ति। तत्फलानि तेषां कथञ्चिन्निर्वैकल्यं कृतानां वेदोक्तकर्मणां फलानि स्वर्गादिफलानि। अवाप्ता: प्राप्ता.। अपीति विरोधे। मत्ता: सुरयुवतिभि. सह नन्दनादिषु क्रीडादेर्लाभात् गर्विष्ठा:। त्वां श्रीकृष्णम्। विस्मरन्त: स्मरणमकुर्वन्त:। पतने कर्मफलक्षयेणाध.पतने। प्रसजति प्राप्ते सति। अनन्तान् अपारान्। विषादान् संसारसञ्जातसङ्कटानि। यान्ति प्राप्नुवन्ति। सर्वथाऽपि भगवत्प्राप्तिरेव निखिलक्लेशहानेरुपाय इति भाव:॥

ननु वेदोक्तोपासनादिकर्मभि सत्यलोकं प्राप्ता: क्लेशरहिता: ब्रह्मणा सह मोदन्त इत्याशङ्कायामाह—

त्वल्लोकादन्यलोक: क्व नु भयरहितो यत् परार्धद्वयान्ते
त्वद्भीत: सत्यलोकेपि न सुखवसति: पद्मभू: पद्मनाभ।
एवंभावे त्वधर्मार्जितबहुतमसां का कथा नारकाणां
तन्मे त्वं छिन्धि बन्धं वरद कृपणबन्धो कृपापूरसिन्धो ॥ ४ ॥

त्वल्लोकादिति ॥ त्वलोकात् अन्यलोक भयरहित· क्व नु। तदि त्यत्र योज्यमुत्तरत्र यच्छब्ददर्शनात्। तत् तस्मात् कारणात्। त्वल्लोकात् तव श्रीकृष्णरूपस्य विष्णोर्लोकाद्वैकुण्ठाख्यात्। अन्यलोक अन्य: अपरो लोक: सत्यलोकादि:। भयरहित भयेन विनाशभयेन रहित: वियुक्त। क्व नु कुत्रास्ति। न कुत्रापीत्यर्थ.। अत्र हेतुमाह—हे पद्मनाभ यत् परार्धद्वयान्ते सत्यलोके पद्मभू· अपि त्वद्भीत सुखवसति: न इति। पद्मनाभ पद्म ब्रह्मणो जननस्थानं नलिनं नाभौ यस्य तथाविध। अनेन सम्बोध नेन ब्रह्मणोऽपि नियामकत्वं भगवतोऽस्तीति व्यज्यते। यत् यस्मात् कार

णात्। परार्धद्वयान्ते परार्धद्वयमन्तोऽवधिर्यस्य तस्मिन्। सत्यलोके ब्रह्मलोके। वत्सरपरार्धद्वयपरिमितायुषो ब्रह्मणो नाशे तल्लोकोऽपि नश्यतीत्यर्थः। परार्धद्वय संज्ञा तु अष्टमदशकचतुर्थश्लोकव्याख्यायां विवृता द्रष्टव्या। पद्मभूः ब्रह्माऽपि। अनेन निजनाभिकमलजातत्वान्निजपुत्रवत् सर्वप्रकारादपि भयात् ब्रह्मणो रक्षित व्यत्वेऽपि निर्विकारो भगवान्, सत्यलोकस्यापि नश्वरत्वात् ब्रह्मणोपि कर्म फलस्यावश्यमनुभाव्यत्वाच्च नाविनाशं ददातीति द्योत्यते। त्वद्भीतः भवतो जायमानान्नाशाद्भीतः। सुखवसतिः सुखरूपा भयरहिता वसतिर्वासो यस्य तथाविधः सन्। न न प्रभवतीत्यर्थः। अपिशब्दार्थमेव निरूपयति—एवम्भावे अधर्मार्जितबहुतमसां नारकाणां तु का कथा इति। एवम्भावे विद्याकर्मभ्यां प्राप्तैश्वर्यस्य ब्रह्मणोपि दुःखात्यन्तिकनिवृत्त्यभावे सति। अधर्मार्जितबहु तमसाम् अधर्मैः अविहितधर्मैरार्जितानि सञ्चितानि बहूनि अनेकविधानि तमांसि दुरितानि यैस्तेषाम्। नारकाणां नरके पतितानां संसारिणाम्। का कीदृशी। कथा भयहानेर्वार्ता। भवतीति शेषः। न किमपि वक्तुमस्तीत्यर्थः। सर्वदा भयाक्रान्ता नरकाण्यनुभवन्तीति भावः। अथ प्रार्थयते—हे वरद कृपण बन्धो कृपापूरसिन्धो त्वं तत् मे बन्धं छिन्धि इति। वरद भक्ताभीष्टवर प्रद। मम बन्धच्छेदार्था प्रार्थनां सफलीकर्तुं तव न कोपि श्रम इत्यनेन व्यज्यते। कृपणबन्धो कृपणानामार्तानां बन्धो रक्षक। आर्तोऽहम्, आर्त त्राणपरायणस्त्वम्, अतो मद्रक्षणं युक्तमेवेत्यनेनोक्तम्। कृपापूरसिन्धो करुणा पयोधे। मयि कृपां कुर्वित्यनेन द्योतितम्। त्वं श्रीकृष्णः। तत् तस्मात् पूर्वोक्तात् कारणात्। मे मम। बन्धं शरीराद्यहम्ममाभिमानादिरूपं संसार बन्धम्। छिन्धि छेदय। मोक्षं प्रयच्छेत्यर्थः॥

ननु जीवो नाम नेश्वरादन्यः, कुतस्तस्य बन्धमोक्षावित्याशङ्कां परिहरति—

याथार्थ्याच्चिन्मयस्यैव हि मम न विभो वस्तुतो बन्धमोक्षौ
मायाविद्यातनुभ्यां तव तु विरचितौ स्वप्नबोधोपमौ तौ।
बद्धे जीवद्विमुक्तिं गतवति च भिदा तावती तावदेको
भुङ्क्ते देहद्रुमस्थो विषयफलरसान्नापरो निर्व्यथात्मा ॥ ५ ॥

याथार्थ्यादिति ॥ हे विभो याथार्थ्यात् त्वन्मयस्य एव मम वस्तुतः बन्धमोक्षौ न हि । विभो सर्वात्मन् । याथार्थ्यात् परमार्थतः । त्वन्मयस्य तव श्रीकृष्णस्यैवांशभूतस्य । त्वमेवाहमिति ज्ञानोदयात्त्वदभिन्नस्येत्यर्थः । मम जीवस्य । वस्तुतः यथार्थतः । बन्धश्च मोक्षश्च बन्धमोक्षौ । बन्धः संसारबन्धः । मोक्षः तद्विमुक्तिः । न । भवत इति शेषः । हीत्यवधारणे । ननु यदि मग यदभिन्नत्वाज्जीवस्य बन्धमोक्षौ न स्तस्तर्हि कस्य स्यातां तावित्याशङ्कायामाह—तव मायाविद्यातनुभ्यां विरचितौ तौ तु स्वप्नबोधोपमौ इति । तव श्रीकृष्णस्य माया च विद्या च मायाविद्ये अज्ञानविज्ञाने तद्रूपाभ्यां तनुभ्यां शरीराभ्याम् । विरचितौ कल्पितौ । तौ बन्धमोक्षौ । अज्ञानकल्पितो बन्धः, विज्ञानकल्पितो मोक्ष इत्यर्थः । तुर्विशेषे । स्वप्नबोधोपमौ स्वप्नश्च बोधश्च स्वप्नबोधौ, तदुपमौ तत्तुल्यौ । भवत इति शेषः । यथा स्वप्नद्रष्टुः स्वप्नदृष्टेन देहेन बन्धः, प्रबुद्धस्य तन्मोक्षश्च, तद्वदज्ञानिनो देहबन्धः, विज्ञानिनो देहमोक्षश्चेत्यर्थः । स्वप्नवन्मायामयत्वेपि बन्धस्य दुःखहेतुत्वाद्विज्ञानेन बन्धमोक्षः प्रार्थनीय इति भावः । अथ बद्धविमुक्तयोर्वैलक्षण्यमाह—बद्धे जीवद्विमुक्तिं गतवति च भिदा तावत् तावती इति । बद्धे संसारिणि । जीवद्विमुक्तिं जीवन्मुक्तत्वम् । गतवति प्राप्तवति । जीवन्मुक्ते इत्यर्थः । चकारः समुच्चये । भिदा भेदः । ताव दिति स्वर्थे । तावती वक्ष्यमाणप्रकारा । भवतीति शेषः । तां भिदामेवाह—एकः देहद्रुमस्थः विषयफलरसान् भुङ्क्ते इति । एकः बद्धविमुक्तयोरेकः । प्रथमतयोक्तो बद्ध इत्यर्थः । देहद्रुमस्थः देह एव द्रुमः । अनित्यत्वादि धर्मवत्त्वात् द्रुमवत् स्थितो देह इत्यर्थः । तस्मिन् तिष्ठतीति देहद्रुमस्थः सन् । तस्मादपृथग्भूतः सन्नित्यर्थः । विषयफलरसान् फलानां रसाः फलरसाः विषया एव फलरसास्तान् । पक्वफलरसवदास्वादयुक्तान् विषयानित्यर्थः । भुङ्क्ते अनुभवति । यथा वृक्षमारुह्य तत्रस्थस्तत्फलरसानास्वादयति, तथा बद्धो देहस्थितो विषयरूपं कर्मफलमनुभवतीत्यर्थः । अपरः न निर्व्यथात्मा च । अपरः अन्यो जीवन्मुक्तः । देहद्रुमस्थ इत्यादिपदत्रयमत्राप्यन्वेति । न भुङ्क्ते नानुभवतीत्यर्थः । निर्व्यथात्मा निर्गता व्यथा यस्मात् स निर्व्यथः

स आत्मा यस्य सः तथाविधश्च भवतीत्यर्थः। इयानेवानयोर्भेद इति भावः ॥

ननु तर्हि जीवन्मुक्तत्वमेव प्रार्थ्यतामित्याशङ्क्यात्मनस्तदनधिकारमाकलय्य भक्तिं प्रार्थयते—

जीवन्मुक्तत्वमेवंविधमिति वचसा किं फलं दूरदूरे
तन्नामाशुद्धबुद्धेर्न च लघु मनसश्शोधनं भक्तितोऽन्यत्।
तन्मे विष्णो कृषीष्ठास्त्वयि कृतसकलप्रार्पणं भक्तिभारं
येन स्यां मङ्क्षु किञ्चिद्गुरुवचनमिलत्त्वत्प्रबोधस्त्वदात्मा ॥६॥

जीवन्मुक्तत्वमिति ॥ जीवन्मुक्तत्वम् एवंविधम् इति वचसा किं फलम्। जीवन्मुक्तत्वं जीवन्मुक्तिः। एवंविधम् एतल्लक्षणयुक्तम्। इति एतद्रूपेण। वचसा वाक्येन। किं फलं किं प्रयोजनम्। न किमपि प्रयोजनमस्तीत्यर्थः। कथमस्य वैफल्यमित्यत आह—अशुद्धबुद्धेः तत् दूरदूरे नाम इति। अशुद्धबुद्धेः अशुद्धा रागादिदुष्टा बुद्धिरन्तःकरणं यस्य तस्य। तत् जीवन्मुक्तत्वम्। दूरदूरे अत्यन्तं दूरे। अशुद्धबुद्धेरनधिकारितया प्राप्तुमशक्यं तदित्यर्थः। नामेति प्रसिद्धौ। रागादिदोषविहीनतया विशुद्धान्तःकरणा एवास्याधिकारिण इति प्रसिद्धमिति भावः। तर्हि अन्तःकरणशुद्ध्युपाया मृग्या इत्याशङ्क्य किमुपायान्तरेण, भक्तिरेव लघुरुपाय इत्याह—भक्तितः अन्यत् मनसः शोधनं लघु न च इति। अन्यत् अपरम्। मनसः अन्तःकरणस्य। शोधनं शुद्ध्युपायः तीर्थस्नानादि। लघु लघुप्रयत्नमनिशीघ्रं फलप्रदश्च। न भवति। चकारः समुच्चये। हे विष्णो तत् त्वं मे त्वयि कृतसकलप्रार्पणं भक्तिभारं कृषीष्ठाः। विष्णो सर्वव्यापिन्। तत् तस्मात् कारणात्। त्वं श्रीकृष्णः। मे ममानन्यशरणस्य। त्वयि श्रीकृष्णे। कृतसकलप्रार्पणं कृतमनुष्ठितं सकलानां शरीरतत्सम्बन्धिनां प्रार्पणं मन्त्रपुरस्सरमर्पणं यस्मिंस्तम्। भक्तिभारम् अनपायिनीं भक्तिम्। कृषीष्ठाः विधेहि। भक्तौ सत्यां गुरूपदेशलेशतोऽपि ज्ञानोत्पत्तिस्स्यादिति दर्शयति—अहं येन मङ्क्षु किञ्चिद्गुरुवचनमिलत्त्वत्प्रबोधः त्वदात्मा स्यामिति। येन भक्तिभार

लाभेन। मङ्क्षु शीघ्रम्। किञ्चिद्गुरुवचनमिलत्त्वत्प्रबोधः किञ्चिद्गुरुवचनेन गुरूपदेशलेशमात्रेण मिलन्नुद्यन् त्वत्प्रबोधः तव श्रीकृष्णस्य प्रबोधः तत्त्वज्ञानं यस्य तथाविधस्सन्। त्वदात्मा भगवत्स्वरूपः। स्यां भवेयम्। मोक्षं प्राप्नुयामित्यर्थः॥

भक्तिरहितानां शास्त्रश्रमोऽपि पाण्डित्यमात्रफल इत्याह—

**शब्दब्रह्मण्यपीह प्रयतितमनसस्त्वां न जानन्ति केचित्**
**कष्टं वन्ध्यश्रमास्ते चिरतरमिह गां बिभ्रते निष्प्रसूतिम्।**
**यस्यां विश्वाभिरामास्सकलमलहरा दिव्यलीलावताराः**
**सच्चित्सान्द्रं च रूपं तव न निगदितं तां न वाचं भ्रियासम् ॥७॥**

शब्दब्रह्मणीति॥ इह शब्दब्रह्मणि प्रयतितमनसः अपि केचित् त्वां न जानन्ति। इह जगति। शब्दब्रह्मणि मीमांसाद्युपबृंहिते साङ्गे वेदे। प्रयतितमनसः प्रयतितं प्रकर्षेण कृतप्रयत्नं मनो यैस्ते। अपीति विरोधे। केचित् अभक्ताः। त्वां तत्प्रधानप्रतिपाद्यं भगवन्तं श्रीकृष्णम्। न जानन्ति ज्ञात्वा नोपासनादि कुर्वन्तीत्यर्थ.। तान् प्रति खेदो जायत इत्याह—कष्टं वन्ध्यश्रमाः ते इह चिरतरं निष्प्रसूतिं गा बिभ्रते इति। कष्टमिति खेदे। तेषां श्रमवैफल्यानुसन्धानात् खेदः। वन्ध्यश्रमाः वन्ध्यः विफलः श्रमः प्रयत्नो येषां ते। ते ये शब्दब्रह्मणि कृतप्रयत्ना भगवदुपासनादिविमुखाश्च। चिरतरम् अतिचिरकालम्। निष्प्रसूतिं भक्तिज्ञानफलोत्पादनरहितां प्रसवहीना च। गां जल्पनरूपां वाचं धेनुं च। बिभ्रते बहिर्निर्गमयन्ति पुष्णन्ति च। यथा प्रसवरहितधेनुपोषणम्, तथैषा भक्तिज्ञानफलोत्पादनरहितो वाक्प्रसर इत्यर्थः। तर्हि भक्तिज्ञानफलोत्पादनासमर्था वाक् कीदृग्रूपेत्यत्राह—यस्या विश्वाभिरामा· सकलमलहराः दिव्यलीलावतारा. सच्चित्सान्द्रं तव रूपं च न निगदितम्, अहं ता वाचं न भ्रियासम् इति। यस्यां वाचि। विश्वाभिरामा. विश्वान् सकलानभिरमयन्ति प्रीणयन्तीति तथाविधा.। सकलमलहराः सकलान् सर्वान् मलान् दुरितानि रागादींश्च हरन्ति नाशयन्तीति तथाविधाः। दिव्य

लीलावताराः दिव्याः शुद्धसत्त्वमयाः लीलावताराः लीलायै क्रीडार्थं धृता अवताराः तवावतारचरितानि। न निगदिता इत्युत्तरवाक्याद‍ाकृष्य लिङ्ग वचनविपरिणामेनात्र योजनीयम्। निगदिताः उक्ताः। सच्चित्सान्द्रं सच्चिदानन्दमयम्। तव श्रीकृष्णस्य। रूपं स्वरूपम्। चकारः समुच्चये। न निगदितं न प्रतिपादितम्। तां सगुणनिर्गुणभगवत्प्रतिपादनरहिताम्। वाचं वचनम्। न श्रियासं व्यावहारिकत्वेनापि न स्वीकुर्याम्॥

अथ भगवत्स्वरूपज्ञानरहितानां भवत्युदयोपायं दर्शयन् प्रार्थयते—

यो यावान् यादृशो वा त्वमिति किमपि नैवावगच्छामि भूम-
न्नेवञ्चानन्यभावस्त्वदनुभजनमेवाद्रिये चैद्यवैरिन्।
त्वल्लिङ्गानां त्वदङ्घ्रिप्रियजनसदसां दर्शनस्पर्शनादि-
र्भूयान्मे त्वत्प्रपूजानतिनुतिगुणकर्मानुकीर्त्यादरोऽपि ॥ ८ ॥

य इति॥ भूमन् त्वं यः यावान् यादृशः वा इति अहं किमपि न अवगच्छामि एव। भूमन् परिपूर्ण। अनेन सम्बोधनेन एतादृशो भगवानित्यवगन्तुमशक्तेर्हेतुर्दर्शितः। त्वं श्रीकृष्णः। यः यत्स्वरूपः। यावान् यादृङ्महिमा। यादृशः यादृग्धर्मः। वेति विकल्पे समुच्चये वा। इति एवम्। किमपि किञ्चिदपि। नावगच्छामि न जानामि। एवेत्ययोग व्यवच्छेदे। तथाऽप्यहं कथञ्चिद्ध्यात्वा भजामीत्याह— हे चैद्यवैरिन् एवञ्च अहं अनन्यभावः त्वदनुभजनम् एव आद्रिये इति। चैद्यवैरिन् शिशुपाल शत्रो। भगवता येन रूपेण शिशुपालो निहतस्तादृग्रूपं मुक्तिप्रदं श्रीकृष्णं ध्यात्वा भजामि, यथार्थस्वरूपानवगमादित्यनेन सम्बोधनेन सूच्यते। एवञ्च एवं सत्यपि। अनन्यभावः अन्यभावरहितः। भगवत्येकाग्रचित्तस्सन्नित्यर्थः। त्वदनुभजनं तव श्रीकृष्णस्य अनुभजनं पुनः पुनर्भजनम्। एवकारोऽयोग व्यवच्छेदे। आद्रिये आदरेण करोमि। तत्प्रकाराणामनुस्यूतत्वाय प्रार्थ यते—त्वल्लिङ्गानां त्वदङ्घ्रिप्रियजनसदसां दर्शनस्पर्शनादिः त्वत्प्रपूजानतिनुति गुणकर्मानुकीर्त्यादरः अपि मे भूयात् इति। त्वल्लिङ्गानां तव श्रीकृष्णस्य

लिङ्गानां बालगोपालवेणुगोपालपार्थसारथ्याद्यनेकविधप्रतिमानाम्। त्वदङ्घ्रिप्रियजनसदसां तव श्रीकृष्णस्य अङ्घ्री चरणारविन्दे प्रिये प्रीतिजनके येषां तेषां तद्भक्तजनानामित्यर्थः। जनानां सदसां समुदायानाम्। अन्तरश्रस्य अपि शब्दस्य समुच्चयार्थोऽत्रापि सम्बध्यते। दर्शनस्पर्शनादिः दर्शनमवलोकनं स्पर्शनं सङ्गमः आदिर्यस्य सः। आदिशब्देन प्रदक्षिणादिर्गृह्यते। त्वत्पूजानतिनुतिगुणकर्मानुकीर्त्यादरः तव श्रीकृष्णस्य प्रपूजा समग्रोपचारयुक्ता पूजा, नतिः नमस्कारः, नुतिः स्तुतिः, गुणानां भक्तवात्सल्यादीनां कर्मणां दुष्टनिग्रहशिष्टानुग्रहरूपाणां चानुकीर्तिरनवरतकीर्तनञ्च एष्वादरः आसक्तिः। अपिः समुच्चये॥

भक्तियोगमेव प्रार्थयते—

यद्यल्लभ्येत तत्तत्तव समुपहृतं देव दासोऽस्मि तेऽहं
त्वद्गेहोन्मार्जनाद्यं भवतु मम मुहुः कर्म निर्मायमेव।
सूर्याग्निब्राह्मणात्मादिषु लसितचतुर्बाहुमाराधये त्वां
त्वत्प्रेमार्द्रत्वरूपो मम सततमभिष्यन्दतां भक्तियोगः ॥ ९ ॥

यदिति॥ यत् यत् लभ्येत तत् तत् तव समुपहृतम्। अत्र मयेत्यध्याहर्तव्यम्। यद्यद्वस्तु। लभ्येत लप्स्यते। तत्तत् सकलं वस्तु। तव श्रीकृष्णस्य। समुपहृतं चरणारविन्दयोः समर्पितम्। भवत्विति शेषः। तत्त्वया न त्याज्यमित्याशयेनाह—हे देव अहं ते दासः अस्मि इति। देव प्रकाशमान। अहम् अनन्यशरणः। ते तव श्रीकृष्णस्य। दासः भृत्यः। अस्मि भवामि। तस्मान्मया समर्पितं सर्वं भवता स्वीकर्तव्यमिति भावः। मम मुहुः त्वद्गेहोन्मार्जनाद्यं कर्म निर्मायम् एव भवतु। मुहुः पुनः पुनर्मया क्रियमाणम्। त्वद्गेहोन्मार्जनाद्यं तव श्रीकृष्णस्य गेहे क्षेत्रे उन्मार्जनं धूल्यादिनिस्सारणमाद्यं यस्य सेकोपलेपमण्डलवर्तनादेस्तत्। कर्म व्यापारः। निर्मायं दम्भादिरहितम्। एवकारोऽवधारणे। भवतु वर्तताम्। अथ पूजाधिष्ठानान्याह—अहं सूर्याग्निब्राह्मणात्मादिषु लसितचतुर्बाहुं त्वाम्

आराधये इति। सूर्याग्निब्राह्मणात्मादिषु सूर्यः रविः अग्निर्वह्निः ब्राह्मणः विप्रः आत्मा अन्तर्यामी चादिर्येषां गवादीनां तेषु। लसितचतुर्बाहुं लसिताः शङ्खचक्रगदापद्मप्रशोभिताश्चत्वारो बाहवः करा यस्य तम्। त्वां श्रीकृष्णम्। आराधये, सूर्यादिक्रमानुसारेण सौरसूक्तहविरातिथ्यविषयभोगयवसादिभिः पूजयामि। आराधनोद्देश्यमाह—त्वत्प्रेमार्द्रत्वरूपः भक्तियोगः मम सततम् अभिष्यन्दताम् इति। त्वयि प्रेम त्वत्प्रेम तेनार्द्रं द्रुतहृदयं यस्य तस्य भावस्त्वत्प्रेमार्द्रत्वं तद्रूपः त्वत्प्रेमार्द्रत्वरूपः। अत्रार्द्रपदप्रयोगोऽभिष्यन्दनसामर्थ्य प्रदर्शनपरः। भक्तियोगः भक्तिसम्पत्तिः। सततम् अनवरतम्। अभिष्यन्दताम् अविच्छिन्नप्रवाहरूपेण प्रवर्तताम्॥

भक्तिरेव मोक्षहेतुरिति सदृष्टान्तमाह—

ऐक्यं ते दानहोमव्रतनियमतपस्साङ्ख्ययोगैर्दुरापं<br>
त्वत्सङ्गेनैव गोप्यः किल सुकृतितमाः प्रापुरानन्दसान्द्रम्।<br>
भक्तेष्वन्येषु भूयस्स्वपि बहुमनुषे भक्तिमेव त्वमासां<br>
तन्मे त्वद्भक्तिमेव द्रढय हर गदान् कृष्ण वातालयेश ॥ १० ॥

ऐक्यमिति ॥ ते ऐक्यं दानहोमव्रतनियमतपस्साङ्ख्ययोगैः दुरापम्। ते तव श्रीकृष्णस्य। ऐक्यं सायुज्यम्। दानहोमव्रतनियमतपस्साङ्ख्ययोगैः दानं सत्पात्रे गोभूहिरण्यादीना वितरणम्, होमः, व्रतं, नियमः स्नानादिः, तपः कृच्छ्रचान्द्रायणाद्यनुष्ठानं, साङ्ख्ययोगश्चेति तैः। दुरापं दुःखेन प्राप्तुं शक्यम्। पुनः केन सुलभमिति चेत्तत्राह—गोप्यः त्वत्सङ्गेन एव आनन्दसान्द्रम् आपुः किल इति। गोप्यः गोपस्त्रियः। त्वत्सङ्गेन तव श्रीकृष्णस्य सङ्गेन सम्पर्केण। एवकारो दानहोमादिव्यवच्छेदार्थः। आनन्दसान्द्रं सान्द्रानन्दम्। मोक्षमिति यावत्। आपुः प्राप्ता बभूवुः। कथमासां भगवत्सङ्गलाभ इत्यत्राह—सुकृतितमाः इति। नितरां सुकृतिन्यः सुकृतितमाः। जन्मान्तरेषु सञ्चितानां सुकृतानां परिपाकवशादिति भावः। ननु सुकृतिनां सर्वेषामपि भगवत्सङ्गो न लभ्यते, तत् कथमित्याशङ्कायामाह—त्वम् अन्येषु

भक्तेषु भूयस्सु अपि आसां भक्तिम् एव बहुमनुषे इति। त्वं श्रीकृष्ण। अन्येषु अपरेषु। भक्तेषु भक्तियुक्तेषूद्धवादिषु। भूयस्सु बहुषु सत्सु। अपीति विरोधे। आसां गोपीनाम्। भक्तिं प्रेमलक्षणाम्। एवकार उद्धवादीनां भक्तेर्व्यवच्छेदार्थं। बहुमनुषे वैशिष्ट्येनाङ्गीकरणमित्यर्थः। अथ प्रार्थयते—हे वातालयेश कृष्ण त्वं तत् मे त्वद्भक्तिम् एव हृदय गदान् हर इति। वातालयेश श्रीगुरुवायुपुरनाथ। कृष्ण दुरितकर्षण। त्वं श्रीकृष्ण। त्वद्भक्तिं त्वयि भक्तिम्। एवकारोऽन्येषां व्यवच्छेदे। हृदय हृदीशुर। गदान् बाह्यानाभ्यन्तराश्चामयोघान्। हर नाशय॥

इति तत्त्वज्ञानोत्पत्तिप्रकारवर्णनं बन्धमोक्षस्वरूपवर्णनम्

भगवन्निद्राणूनक भक्तिप्रार्थनावर्णनं च

चतुर्णवतितमदशकम्॥

---

## पञ्चनवतितमदशकम्॥

ननु भक्त्या जीवेश्वरयोरैक्ये सति संसारनिवृत्तिरित्युक्तम्, तदनुपपन्नम्, तयोरभिन्नत्वे सर्वैक्ययायोगात् तथा तयोर्भिन्नस्य संसारबन्धानुपपत्तेश्चेत्याशङ्क्येश्वरस्यैव मायामयशरीरसम्बन्धात् संसारित्वम्, तदपाये स्वस्वरूपेणावस्थानं च भवतीत्याह—

आदौ हैरण्यगर्भीं तनुमविकलजीवात्मिकामास्थितस्त्वं
जीवत्वं प्राप्य मायागुणगणखचितो वर्तसे विश्वयोने।
तत्रोद्वृद्धेन सत्त्वेन तु गुणयुगलं भक्तिभावं गतेन
छित्वा सत्त्वं च हित्वा पुनरनुपहितो वर्तिताहे त्वमेव ॥ १ ॥

आदाविति॥ हे विश्वयोने त्वम् अविकलजीवात्मिकां हैरण्यगर्भीं तनुम् आस्थित जीवत्वं प्राप्य मायागुणगणखचित वर्तसे। विश्वयोने प्रपञ्च

कारणभूतविराड्रूप। आदौ ब्रह्मप्रलयावसाने तव सिसृक्षायां सत्याम्। त्वं श्रीकृष्णः। अविकलजीवात्मिकाम् अविकलः अविभिन्नतया वर्तमानो जीवः जीवसङ्घातः आत्मा स्वरूपं यस्यास्ताम्। जीवशब्देनात्र सूक्ष्मशरीर मुच्यते। सकलसूक्ष्मशरीरसङ्घातरूपामित्यर्थः। हैरण्यगर्भीं हिरण्यगर्भस्य ब्रह्मण इयं हैरण्यगर्भी ताम्। तनुं शरीरम्। आस्थितः प्राप्तः सन्। ब्रह्मा मूत्वेत्यर्थः। जीवस्य भावो जीवत्वं तत्। प्राप्य व्यष्टिरूपसूक्ष्म शरीरो भूत्वेत्यर्थः। मायागुणगणखचितः मायागुणानां मायाकार्याणां महदह ङ्कारभूतेन्द्रियप्राणपञ्चकरूपाणां गणेन सङ्घातेन खचितः सम्बद्धः। वर्तसे। त्वमेव शरीराभिमानितया संसारी भवसीत्यर्थः। अतो मम त्वद्रूपत्वात् त्वदैक्यं युज्यत इति भावः। एवं संसारिणो जीवस्य रजस्तमोवृद्धौ संसा रानिवृत्तिर्भवति, सत्त्वगुणवृद्धौ विशेषमाह—अहं तत्र उद्वृद्धेन भक्तिभावं गतेन सत्त्वेन तु गुणयुगलं छित्वा सत्त्वं च हित्वा पुनः अनुपहितः त्वम् एव वर्तिताहे इति। तत्र मायागुणेषु। उद्वृद्धेन सात्त्विकपदार्थ सेवया प्रवृद्धेन। अत एव भक्तिभावं गतेन भक्तिरूपतया परिणतेन। सत्त्वेन सत्त्वगुणेन। तुर्विशेषे। गुणयुगलं गुणयोः रजस्तमसोर्युगलं युग्मम्। तत्कार्यभूतं शरीरादिकं च। छित्वा रजस्तमसी मायामये इति ज्ञानमुत्पा द्यापाकृत्य। सत्त्वं साधनरूपं सत्त्वगुणम्। चकारः समुच्चये। हित्वा निराकृत्य। पुनः कार्यकारणाव्यवधानात् अनुपहितः परिपूर्णः। त्वं श्रीकृष्णः। एवकारोऽन्यस्य व्यवच्छेदार्थः। वर्तिताहे वर्तयिष्ये। भगवदे कीभावमनुभवितास्मीत्यर्थः॥

ननु तर्हि सत्त्ववृद्धिरेव प्रार्थ्यताम्, किं भक्त्येत्याशङ्कायामाह—

सत्त्वोन्मेषात् कदाचित् खलु विषयरसे दोषबोधेऽपि भूमन्
भूयोऽप्येषु प्रवृत्तिस्सतमसि रजसि प्रोद्धते दुर्निवारा।
चित्तं तावद्गुणाश्च ग्रथितमिह मिथस्तानि सर्वाणि रोद्धुं
तुर्ये त्वय्येकभक्तिश्शरणमिति भवान् हंसरूपी न्यगादीत्॥ २॥

सत्त्वोन्मेषादिति॥ हे भूमन् सत्त्वोन्मेषात् कदाचित् खलु विषयरसे दोषबोधे अपि भूयः अपि प्रवृत्तिः दुर्निवारा। भूमन् परिपूर्ण। सत्त्वोन्मेषात् सत्त्वस्य उन्मेषाद्वृद्धेः। कदाचित् खलु न सर्वदा। विषयरसे विषयाणां रसे आस्वादे। अनुभवे इति यावत्। दोषबोधे दोषावगमे सति। अपीति विरोधे। भूयोपि यस्य कस्यापि कारणान्तरस्य सम्पत्तौ सत्यां पुनरपि। एषु विषयेषु। प्रवृत्तिः रसास्वादप्रवर्तनम्। दुर्निवारा निवारयितुमशक्या। भवतीति शेषः। अत्र हेतुमाह—सतमसि रजसि प्रोद्धते इति। तमसा तमोगुणेन सह वर्तत इति सतमस्तस्मिन्। रजसि रजोगुणे। प्रोद्धते प्रकर्षेणोद्धते सत्त्वाभिभवसामर्थ्यशालिनि सति। अत्रायमाशयः—सत्त्वगुणवृद्ध्या विषयरसो दोषायेति बोधे सञ्जाते सोऽप्यल्पशस्त्यज्यते, पुनर्येन केनापि कारणेन रजस्तमोगुणयोर्वृद्धयोर्विषयरसप्रवृत्तिः पूर्वाधिकं वर्धते, दुर्निवारा च भवति, यथा सन्निपातज्वरः शान्तप्रायोऽप्यपथ्यसेवया पूर्वाधिकं प्रवृद्धो दुर्निवारो भवति, तथेति। एवंविधविषयरसप्रवृत्तिनिवारणमार्गं सप्रमाणमाह—इति भवान् हंसरूपी न्यगादीत् इति। इति एवम्। भवान् श्रीकृष्णः। हंसरूपी क्षीरनीरविवेचनचतुरहंसवदात्मानात्मविवेचननिपुणपरमहंसरूपी भूत्वा। न्यगादीत् उक्तवान्। सनकादिमुनिप्रश्नस्योत्तरमजानता ब्रह्मणा स्मृतस्तत्पुरतः हंसरूपी प्रादुर्भूयोत्तररूपेण सनकादिभ्यो भगवानुपदिदेशेत्यर्थः। उपदेशप्रकारमाह—इह तावत् गुणाः चित्तं च मिथः प्रथितम्, तानि सर्वाणि रोद्धुं तुर्ये त्वयि एकभक्तिः शरणम् इति। इह रजस्तमसोराधिक्याद्विषयास्वादप्रवृत्तिसद्भावे। तावत् क्रमेण। गुणाः विषयाः। चित्तम् अन्तरङ्गम्। चकारः समुच्चये। मिथः अन्योन्यम्। प्रथितं बद्धम्। भवतीति शेषः। चित्तं हि रागादिवशाद्विषयेषु प्रविशति, तथाऽनुभूता विषया वासनारूपेण चित्तं च प्रविशन्ति, अतो मिथःप्रथितं भवतीत्यर्थः। तानि मोक्षप्राप्त्युपायविघातकारीणि। सर्वाणि गुणचित्तरजस्तमांसि। रोद्धुं निवारयितुम्। तुर्ये गुणत्रयातीते, अथवा अवस्थात्रयातीते। त्वयि श्रीकृष्णरूपे परब्रह्मणि। एकभक्तिः उत्तमभक्तिः। शरणं रक्षाकर्त्री। भवतीति शेषः॥

भक्तितुल्यं श्रेयःसाधनं न किमप्यस्तीत्याह—

सन्ति श्रेयांसि भूयांस्यपि रुचिभिदया कर्मिणां निर्मितानि
क्षुद्रानन्दाश्च सान्ता बहुविधगतयः कृष्ण तेभ्यो भवेयुः ।
त्वं चाचख्याथ सख्ये ननु महिततमां श्रेयसां भक्तिमेकां
त्वद्भक्त्यानन्दतुल्यः खलु विषयजुषां सम्मदः केन वा स्यात् ॥ ३ ॥

सन्तीति ॥ कर्मिणां रुचिभिदया निर्मितानि भूयांसि श्रेयांसि सन्ति । कर्मिणां कर्माधिकारिणाम् । रुचिभिदया रुचिभेदानुसारेण । निर्मितानि बृहस्पति व्यासपतञ्जलिप्रभृतिभिराचार्यैः प्रोक्तानि । भूयांसि बहूनि । श्रेयांसि श्रेयःसाधनानि । सन्ति वर्तन्ते । तथापि तेषां न्यूनताऽस्तीत्याह—हे कृष्ण तेभ्यः क्षुद्रानन्दाः सान्ताः च बहुविधगतयः भवेयुः इति । तेभ्यः श्रेयःसाधनेभ्यः । क्षुद्रानन्दाः दुःखमिश्रतया स्वल्पसुखप्रदाः । सान्ताः अनित्याः । बहुविधगतयः बहुविधाः अनेकप्रकाराः स्वर्गादिरूपा गतयः फलानि । भवेयुः स्युः । त्वं च श्रेयसाम् एकां भक्तिं ननु महिततमां सख्ये आचख्याथ । त्वं श्रीकृष्णः । चकारस्त्वर्थे । श्रेयसां श्रेयस्साधनानां मध्ये । एकाम् अद्वितीयाम्, अनपायिनीं वा । भक्तिं भगवति प्रेमलक्षणाम् । नन्वित्यवधारणे । महिततमाम् अतिपूजनीयां सतीम् । सख्ये उद्धवाय । आचख्याथ आख्यातवानसि । विषयजुषां खलु त्वद्भक्त्यानन्दतुल्यः सम्मदः केन वा स्यात् । विषयजुषाम् इन्द्रियाणि प्रीणयताम् । खल्विति त्वर्थे । त्वद्भक्त्यानन्दतुल्यः त्वयि श्रीकृष्णे भक्त्या यः आनन्दः तत्तुल्यः । सम्मदः सुखम् । केन कीदृग्रूपेणान्यकर्मणा । स्यात् भविष्यति । न केनापि स्यादित्यर्थः ॥

त्वद्भक्त्यानन्दमेवाह—

त्वद्भक्त्या तुष्टबुद्धेः सुखमिह चरतो विच्युताशस्य चाशाः
सर्वाः स्युः सौख्यमय्यः सलिलकुहरगस्येव तोयैकमय्यः ।
सोऽयं खल्विन्द्रलोकं कमलजभवनं योगसिद्धीश्च हृद्या
नाकाङ्क्षत्येतदास्तां स्वयमनुपतिते मोक्षसौख्येऽप्यनीहः ॥ ४ ॥

त्वद्भक्त्येति ॥ त्वद्भक्त्या तुष्टबुद्धेः विच्युताशस्य इह सुखं चरतः च सर्वा आशाः सौख्यमय्यः स्युः । त्वद्भक्त्या त्वयि श्रीकृष्णे भक्त्या । तुष्टबुद्धेः तुष्टा भक्त्यैवालम्, किमन्यैरिति आत्तालम्भावा बुद्धिर्यस्य तस्य। अत एव विच्युताशस्य विच्युता विशेषेणापगता आशा विषयतृष्णा यस्मात्तस्य। सुखसञ्चरणहेतुगर्भमिदं विशेषणम्। इह लोके। सुखं यथा भवति तथा। चरतः सञ्चरतः। चकारस्त्वर्थो विशेषे। विशेषः सौख्यमयसर्वाशत्वम्। सर्वाः सकलाः। आशाः दिशः। सौख्यमय्यः केवलसुखरूपाः। स्युः भवेयुः। अत्रोपमामाह—सलिलकुहरगस्य तोयैकमय्यः इव इति। सलिलकुहरगस्य सलिलस्य जलस्य कुहरमन्तर्भागं गच्छतीति तथोक्तः तस्य। सर्वा आशा इत्यत्रापि योज्यम्। तोयैकमय्यः केवलजलरूपाः। किञ्च, सः अयम् इन्द्रलोकं कमलजभवनं हृद्याः योगसिद्धीः च न आकाङ्क्षति खलु। सः तादृग्भूतः। अयं भक्तः। इन्द्रलोकं स्वर्गम्। तत्रत्यसुखमित्यर्थः। कमलजभवनं कमलजस्य ब्रह्मणो भुवनं सत्यलोकम्। तत्रत्यसुखमित्यर्थः। हृद्याः मनोहराः। योगसिद्धीः योगैरुपासनाप्रकारैर्याः सिद्धय अष्टैश्वर्यपरकायप्रवेशदूरश्रवणदूरदर्शनमनोजवाद्यष्टादशसिद्धयस्ताः। नाकाङ्क्षति नेच्छति। खल्विस्त्यवधारणे। स्वर्गसुखादीनामनित्यत्वात्तत्तेच्छाभाव इति वेदितव्यम्। एवंभूतस्य भक्तोत्तमस्य मोक्षेच्छापि नास्तीत्याह—एतत् आस्ताम्, मोक्षसौख्ये अपि अनीहः इति। एतत् स्वर्गादीच्छाराहित्यम्। आस्ताम् न तत्राश्चर्यमित्यर्थः। सोऽयमित्यत्राप्यन्वेति। मोक्षसौख्ये मोक्षसुखे। अपीति विरोधे। अनीहः निराग्रहः। भवतीति शेषः। मोक्षसुखस्य दुष्प्रापत्वात्तत्रानिच्छा जायत एवेति चेन्नेत्याह—स्वयम् अनुपतिते इति। स्वयं न भक्तप्रार्थनया। अनुपतिते आपतिते। एतत् भक्तेराश्चर्यकर प्रभाव इति भावः॥

आस्तां तावदुत्तमभक्तकथा, इतः प्राकृता अपि भक्ता भक्त्या कृतार्था इत्याशयेनाह—

त्वद्भक्तो बाध्यमानोपि च विषयरसैरिन्द्रियाशान्तिहेतो-
र्भक्त्यैवाक्रम्यमाणैः पुनरपि खलु तैर्दुर्बलैर्नाभिजय्यः।

सप्तार्चिर्दीपितार्चिर्दहति किल यथा भूरिदारुप्रपञ्चं
त्वद्भक्त्योघे तथैव प्रदहति दुरितं दुर्मदः क्वेन्द्रियाणाम् ॥ ५ ॥

त्वद्भक्त इति॥ त्वद्भक्तः च इन्द्रियाशान्तिहेतोः विषयरसैः बाध्यमानः अपि भक्त्या एव पुनरपि आक्रम्यमाणैः दुर्बलैः तैः न अभिजय्यः। त्वद्भक्तः त्वयि श्रीकृष्णे भक्तः। चकारस्त्वर्थे। इन्द्रियाशान्तिहेतोः इन्द्रियाणां चक्षुरादीनामशान्तेरवशीकृतत्वाद्धेतो.। विषयरसै विषयास्वादैः। बाध्यमानः आक्रम्यमाणः। अपीति विरोधे। भक्त्या बलवत्या। एवकारो भक्तेः साहाय्यानपेक्षत्वस्फुटीकरणार्थ.। पुनरपि भूयोपि। आक्रम्यमाणैः अभिभूयमानै.। यदा भगवद्भक्तो विषयरसैर्बाध्यते, तदा भक्तिस्तानाक्रमते, तदाक्रमणात् कथञ्चिद्येनकेनापि कारणेन लब्धबलैर्विमुच्य यदा पुनरपि स बाध्यते, तदापि भक्तिस्तानाक्रमते इति पुनरपीत्यनेन दर्शितम्। अत एव दुर्बलैर्बलहीनै. तैः विषयरसैः। नाभिजय्यः जेतुमशक्यः। भवतीति शेषः। भक्तेः पुनराक्रमणेन क्रमेण विषयरसबाधाशान्तिरनुस्यूतभक्त्याविर्भावाद्दुरितशान्तिश्चोदेतीति भावः। यदि विषयरसबाधहेतुरिन्द्रियाशान्तिस्तर्हीन्द्रियजयो भक्त्या किं न क्रियत इति चेत्तत्रावश्यकमित्याह—यथा दीपितार्चिः सप्तार्चिः भूरिदारुप्रपञ्चं दहति किल, तथा एव त्वद्भक्त्योघे दुरितं प्रदहति इन्द्रियाणां दुर्मदः क इति। यथा येन प्रकारेण। दीपितार्चिः दीपितानि ज्वलितान्यर्चींषि यस्य सः। सप्तार्चिरग्निः। भूरिदारुप्रपञ्चं भूरीणां बहूनां दारूणां काष्ठानां प्रपञ्चं संघातम्। दहति भस्मीकरोति। किलेति प्रसिद्धौ। तथा तेन प्रकारेण। एवकारः प्रकारान्तरव्यवच्छेदे। त्वद्भक्त्योघे त्वयि श्रीकृष्णे या भक्तिस्तस्याः ओघे प्रवाहसदृशे सतताविर्भावे। दुरितं दुष्कृतम्। प्रदहति प्रकर्षेण दहति नाशयति सति। उन्मूलनाशं कुर्वति सतीत्यर्थः। प्रदहतीत्यनेन दुरितनाशने काष्ठभस्मीकरणवल्लाघवं दर्शयति। इन्द्रियाणां चक्षुरादीनाम्। दुर्मदः दुर्गर्वः। क न क्वापीत्यर्थः॥

भक्त्यभावेऽन्यत् साधनं व्यर्थमित्याह—

चित्तार्द्रीभावमुच्चैर्वपुषि च पुलकं हर्षबाष्पं च हित्वा
चित्तं शुद्ध्येत् कथं वा किमु बहुतपसा विद्यया वीतभक्तेः ।
त्वद्गाथास्वादसिद्धाञ्जनसततमरीमृज्यमानोऽयमात्मा
चक्षुर्वत्तत्त्वसूक्ष्मं भजति न तु तथाऽभ्यस्तया तर्ककोट्या ॥ ६ ॥

चित्तार्द्रीभावमिति ॥ चित्तार्द्रीभावं वपुषि उच्चैः पुलकं च हर्षबाष्पं च हित्वा चित्तं कथं वा शुद्ध्येत् । चित्तार्द्रीभावं चित्तस्यान्तरङ्गस्य आर्द्रीभावम् आर्द्रताम् । वपुषि शरीरे । पुलकं रोमाञ्चम् । हर्षबाष्पं हर्षेण सन्तोषेण यो बाष्पस्तम् । चकारौ समुच्चये । हित्वा त्यक्त्वा । स्फुटप्रतीयमानैश्चिह्नैर्गम्यमानया भक्त्या विनेत्यर्थः । चित्तं मनः । कथं वा केन प्रकारेण । शुद्ध्येत् रागादिदोषविहीनं स्यात् । भगवद्भक्त्यैव मनसः शुद्धिर्जायत इति भावः । भक्तेरभावे तपोज्ञानयोर्नैरर्थक्यमाह— वीतभक्तेः बहुतपसा विद्यया किमु इति । वीतभक्तेः वीता विगता भक्तिर्यस्मात्तस्य । बहुतपसा बहुना प्रभूतेन तपसा तपश्चरणेन । विद्यया ज्ञानेन । किमु न किमपि प्रयोजनमित्यर्थः । ननु ब्रह्मज्ञानादेवाज्ञानकल्पितसंसारनिवृत्तिर्भगवत्स्वरूपावाप्तिश्च, किमत्र भक्तिः करोतीत्याशङ्कायामाह — त्वद्गाथास्वादसिद्धाञ्जनसततमरीमृज्यमानः अयम् आत्मा चक्षुर्वत् तत्त्वसूक्ष्मं भजति इति । त्वद्गाथास्वादसिद्धाञ्जनसततमरीमृज्यमानः तव श्रीकृष्णस्य गाथानामवतारकर्मादिप्रथितगानविशेषाणाम् आस्वादः श्रवणकीर्तनादिजन्यानन्दानुभवः । स एव सिद्धाञ्जनं सिद्धफलमञ्जनं नेत्रयोरञ्ज्यमानमौषधं तेन सततम् अनवरतं मरीमृज्यमानः पुनः पुनः शोध्यमानः । अयं भक्तसम्बन्धी । आत्मा चित्तम् । चक्षुर्वत् नेत्रमिव । तत्त्वसूक्ष्मं तत्त्वस्य याथार्थ्यस्य सूक्ष्मं सूक्ष्मज्ञानम् । भजति प्राप्नोति । अभ्यस्तया तर्ककोट्या तु न तथा । अभ्यस्तया आवर्तनेन दृढीकृतया । तर्ककोट्या युक्तिसमूहेन । तुर्विशेषे । तथा तेन प्रकारेण । न न भजतीत्यर्थः । भक्तेरवान्तरव्यापार एव ज्ञानम्, अतस्तत्प्रयासो व्यर्थ एवेति भावः ॥

एवं शुद्धचित्तस्य ध्यानयोग्यतामाह—

ध्यानं ते शीलयेयं समतनुसुखबद्धासनो नासिकाग्र-
न्यस्ताक्षः पूरकाद्यैर्जितपवनपथश्चित्तपद्मं त्ववाञ्चम् ।
ऊर्ध्वाग्रं भावयित्वा रविविधुशिखिनः संविचिन्त्योपरिष्टा-
त्तत्रस्थं भावये त्वां सजलजलधरश्यामलं कोमलाङ्गम् ॥ ७ ॥

ध्यानमिति ॥ अहं ते ध्यानं शीलयेयम् । ते तव श्रीकृष्णस्य । ध्यानं स्वरूपध्यानम् । शीलयेयम् अनवरतमभ्यस्येयम् । ध्यानशीलप्रकार माह—अहं समतनुसुखबद्धासनः नासिकाग्रन्यस्ताक्षः पूरकाद्यैः जितपवनपथः अवाञ्चं चित्तपद्मं तु ऊर्ध्वाग्रं भावयित्वा उपरिष्टात् रविविधुशिखिनः संविचिन्त्य तत्रस्थं सजलजलधरश्यामलं कोमलाङ्गं त्वां भावये इति। समतनुसुखबद्धा सनः समतनुश्च सुखबद्धासनश्च। समतनुः समा पश्चात् पुरो वा वक्रता विहीना तनुरुत्सङ्गविन्यस्तकरद्वयोर्ध्वकायो यस्य सः। सुखबद्धासनः सुखं यथा भवति तथा बद्धमासनं येन सः। पद्मासनस्वस्तिकासनाद्यन्यतमसुखा सनस्थ इत्यर्थः। नासिकाग्रन्यस्ताक्षः नासिकाग्रे नासाग्रभागे न्यस्ते अर्पिते अक्षिणी येन सः। अक्ष्णोर्निमीलने मनोलयः, उन्मीलने मनोविक्षेपः, तदु भयपरिहारायोन्मीलननिमीलनयोर्मध्ये दृष्टिस्थापनेन नासिकाग्रन्यस्ताक्षता स्वयं भवतीति वेदितव्यम्। पूरकाद्यैः अनुलोमप्रतिलोमाभ्यस्तैः पूरककुम्भकरेचकैः। जितपवनपथः जिताः प्राणायामैः कफादिनिरसनेन शोधिताः पवनपथाः वायुसञ्चरणस्थानानीडापिङ्गलासुषुम्नाख्यनाडीविवराणि येन तथाविधश्च सन्। अवाञ्चम् अधोमुखम्। चित्तपद्मं विकचारुणकमलाकारं चित्तम्। 'वा पुंसि पद्मम्' इत्यमरः। तुर्विशेषे। ऊर्ध्वाग्रम् ऊर्ध्वमुखं सन्तम्। भावयित्वा सङ्कल्प्य। उपरिष्टात् तत्कर्णिकोपरिभागे। रविविधुशिखिनः रविः सूर्यः विधुश्चन्द्रः शिखी वह्निश्च तान्। संविचिन्त्य उत्तरोत्तरं सम्यक् भावयित्वा। तत्रस्थं सर्वोत्तरसम्भावितवह्निमण्डलमध्यस्थम्। सजलजलधरश्यामलं नूतनमेघ श्यामलवर्णम्। कोमलाङ्गं मनोहरशरीरम्। त्वां श्रीकृष्णम्। भावये सम्भावयामि ॥

अथ भगवतः केशादिपादान्तध्यानमाह—

आनीलश्लक्ष्णकेशं ज्वलितमकरसत्कुण्डलं मन्दहास-
स्यन्दार्द्रं कौस्तुभश्रीपरिगतवनमालोरुहाराभिरामम्।
श्रीवत्साङ्कं सुबाहुं मृदुलसदुदरं काञ्चनच्छायचेलं
चारुस्निग्धोरुमम्भोरुहललितपदं भावयेऽहं भवन्तम् ॥ ८ ॥

आनीलेति ॥ अहम् आनीलश्लक्ष्णकेशं ज्वलितमकरसत्कुण्डलं मन्दहासस्यन्दार्द्रं कौस्तुभश्रीपरिगतवनमालोरुहाराभिरामं श्रीवत्साङ्कं सुबाहुं मृदुलसदुदरं काञ्चनच्छायचेलं चारुस्निग्धोरुम् अम्भोरुहललितपदं भवन्तं भावये। आनीलश्लक्ष्णकेशम् आ समन्तान्नीलाः कृष्णवर्णाः श्लक्ष्णाः मृदुलाः केशाः यस्य तम्। ज्वलितमकरसत्कुण्डलं ज्वलिते प्रशोभिते मकरे मकराकृतिनी सती विशिष्टे कुण्डले यस्य तम्। मन्दहासस्यन्दार्द्रं मन्दहासस्य स्यन्दो द्रवः तेनार्द्रं सिक्तम्। कौस्तुभश्रीपरिगतवनमालोरुहाराभिरामं कौस्तुभस्य श्रीभिः कान्तिभिः परिगतया व्याप्तया वनमालया उरुभिर्महद्भिर्हारैः मुक्तादामभिश्च अभिरामं सुन्दरम्। श्रीवत्साङ्कं श्रीवत्सः तदाख्यः अङ्को लाञ्छनं यस्य तम्। सुबाहुं शोभना बाहवो यस्य तम्। मृदुलसदुदरं मृदु मार्दवयुक्तं लसत् शोभनमुदरं यस्य तम्। काञ्चनच्छायचेलं काञ्चनच्छायं सुवर्णवर्णं चेलं पट्टाम्बरं यस्य तम्। चारुस्निग्धोरुं चारू मनोहरौ स्निग्धौ मांसलौ ऊरू सक्थिनी यस्य तम्। अम्भोरुहललितपदम्। अम्भोरुहवद्विकचारुणकमलवत् ललिते मनोहरे पदे चरणौ यस्य तम्। भवन्तं श्रीकृष्णम्। भावये ध्यायामि ॥

अथ क्रमात् समाधिभूमिकारोहणप्रकारमाह—

सर्वाङ्गेष्वङ्ग रङ्गत्कुतुकमिति मुहुर्धारयन्नीश चित्तं
तत्राप्येकत्र युञ्जे वदनसरसिजे सुन्दरे मन्दहासे।
तत्रालीनं तु चेतः परमसुखचिदद्वैतरूपे वितन्व-
न्नन्यो चिन्तयेयं मुहुरिति समुपारूढयोगो भवेयम् ॥ ९ ॥

सर्वाङ्गेष्विति॥ अङ्ग ईश अहम् इति रङ्गत्कुतुकं चित्तं सर्वाङ्गेषु मुहुः धारयन् अपि तत्र एकत्र सुन्दरे मन्दहासे वदनसरसिजे युञ्जे। अङ्गेति सम्बोधने। ईश नाथ। इति 'सजलजलधरश्यामलमित्यादिप्रतिपादितप्रकारेण। रङ्गत्कुतुकं प्राप्तकौतुकम्। चित्तं मनः। सर्वाङ्गेषु तव सर्वेष्ववयवेषु। मुहुः पुनः पुनः। धारयन् प्रापयन्। अपि अपि च। तत्र तेष्ववयवेषु मध्ये। सुन्दरे मनोहरे। मन्दहासे मन्दो हासो यस्मिन् तस्मिन्। वदनसरसिजे तव मुखाम्बुजे। युञ्जे योजयामि। तेनान्यचिन्तारहितो भवेयमित्याह—अहं तत्र आलीनं चेतः तु परमसुखचिदद्वैतरूपे वितन्वन् अन्यत् नो चिन्तयेयम् इति। तत्र मुखकमले। आलीनं सम्यक् लीनम्। चेतः मनः। तुर्विशेषे। परमसुखचिदद्वैतरूपे परमसुखचिदः परमानन्दज्ञानस्य अद्वैतम् ऐक्यमेव रूपं तस्मिन्। वितन्वन् संयोजयन्। अन्यत् ध्यातृध्येयविभागादि। नो चिन्तयेयं न भावयेयम्। किञ्च, इति मुहुः समुपारूढयोगः भवेयम्। इति एवम्। उक्तक्रमेणेत्यर्थः। मुहुः पुनः पुनः। अनेन केवलमेकवारभावनया योगारोहणासाध्यत्वम्, विघ्नैरभिहन्यमानायामपि भावनायां नैराश्याभावश्च द्योत्येते। समुपारूढयोगः सम्यगुपारूढः प्राप्तो योगो ध्यानयोगो येन तथाविधः सन्। भवेयं स्याम्॥

ध्यानयोगेनाष्टैश्वर्यादिप्राप्तिप्रकारमाह—

इत्थं त्वद्ध्यानयोगे सति पुनरणिमाद्यष्टसंसिद्धयस्ता
दूरश्रुत्यादयोऽपि ह्यहमहमिकया सम्पतेयुर्मुरारे।
त्वत्सम्प्राप्तौ विलम्बावहमखिलमिदं नाद्रिये कामयेऽहं
त्वामेवानन्दपूर्णं पवनपुरपते पाहि मां सर्वतापात् ॥ १० ॥

इत्थमिति॥ हे मुरारे इत्थं त्वद्ध्यानयोगे सति पुनः ताः अणिमाद्यष्टसंसिद्धयः दूरश्रुत्यादयः अपि अहमहमिकया सम्पतेयुः हि। मुरारे मुरासुरमथन। इत्थम् अनेन प्रकारेण। त्वद्ध्यानयोगे तव श्रीकृष्णस्य ध्यानमेव योगः पुरुषार्थसाधनोपायः तस्मिन्। सति अविच्छिन्नतया प्रवर्त

माने सति। पुनस्त्वर्थे। ताः सत्त्वोत्कर्षजत्वात् प्रसिद्धाः। अणिमाद्यष्ट संसिद्धय अणिमादयः अष्टौ संसिद्धयः महासिद्धय। अत्रादिशब्देन महिमादयो गृह्यन्ते। दूरश्रुत्यादय दूरश्रुतिः दूरश्रवणम् आदिर्यासां दूरदर्शन मनोजवकामरूपादिदशक्षुद्रसिद्धीनां ताः। अपिस्समुच्चये। अहमहमिकया अहं पूर्वमहं पूर्वमिति मतिरहमहमिका तया। सम्पतेयुः अप्रार्थनया स्वय मापतेयुः। तेष्वनास्थामाह—अहम् अखिलम् इदं न आद्रिये इति। अखिलं सर्वम्। इदम् अष्टैश्वर्यादि। नाद्रिये नात्रादरयुक्तो भवामि। अत्र हेतुमाह—त्वत्सम्प्राप्तौ विलम्बावहम् इति। त्वत्सम्प्राप्तौ भगवदैक्य प्राप्तौ। विलम्बावहं विलम्बमावहति सम्पादयतीति तथोक्तम्। पुन किमा द्रियत इत्यत्राह—अहम् आनन्दपूर्णं त्वामेव कामये इति। आनन्दपूर्णं पूर्णानन्दस्वरूपम्। त्वां श्रीकृष्णम्। एवकारोऽन्यस्य व्यवच्छेदे। कामये प्राप्तुमिच्छामि। अथ प्रार्थयते—हे पवनपुरपते त्वं मां सर्वतापात् पाहि इति। पवनपुरपते श्रीगुरुवायुपुरनाथ। त्वं श्रीकृष्ण। माममन्य शरणम्। सर्वतापात् सर्वस्मात् बाह्यादाभ्यन्तराच्च सकलात् तापात् सन्तापात्। पाहि रक्ष॥

इति भक्त्या विशुद्धचित्तस्यैव भगवत्स्वरूपध्यानयोग्यतावर्णनं
पञ्चनवतितमदशकम् ॥

## षण्णवतितमदशकम्।

अथोक्तध्यानयोग्यतासिद्ध्यर्थं भगवतो विश्वमूर्तेरुपासनासौकर्याय द्वाभ्यां भगवद्विभूतीर्निरूपयति—

त्वं हि ब्रह्मैव साक्षात् परमुरुमहिमन्नक्षराणामकार-
स्तारो मन्त्रेषु राज्ञां मनुरसि मुनिषु त्वं भृगुर्नारदोऽपि।

प्रह्लादो दानवानां पशुषु च सुरभिः पक्षिणां वैनतेयो
नागानामस्यनन्तः सुरसरिदपि च स्रोतसां विश्वमूर्ते ॥ १ ॥

त्वमिति ॥ हे विश्वमूर्ते उरुमहिमन् त्वं साक्षात् परं ब्रह्म एव हि। विश्वमूर्ते विश्वस्वरूप। उरुमहिमन् उरुः महान् महिमा माहात्म्यं यस्य तथाविध। त्वं श्रीकृष्ण। साक्षात् अकृत्रिमम्। परं प्रधानम्। ब्रह्म। एवकारोऽन्यस्य व्यवच्छेदे। असीत्युपरि वाक्यादाकृष्यात्र योजनीयम्। हीति प्रसिद्धौ। अतः प्रभृति भगवद्विभूतिविवरणवाक्येष्वश्रूयमाणकर्तृक्रिये ष्वपि कर्तृक्रिये त्वमसीत्येवेति वेदितव्यम्। अक्षराणाम् अकारः। अक्षराणां वर्णानां मध्ये। अकारः आदिमवर्णः। मन्त्रेषु तारः। तारः प्रणवः। राज्ञां मनुः असि। राज्ञां राजर्षीणां मध्ये। मनुः स्वायम्भुवाख्यः। त्वं मुनिषु भृगुः नारदः अपि। मुनिषु ब्रह्मर्षिषु देवर्षिषु च। अपिस्समुच्चये। ब्रह्मर्षिषु भृगुर्देवर्षिषु नारदश्चेत्यर्थः। दानवानां प्रह्लादः। दानवानां दैत्यानां मध्ये। पशुषु च सुरभिः। पशुषु गोषु। चकारस्त्वर्थे। सुरभिः काम धेनुः। पक्षिणां वैनतेयः। पक्षिणां मध्ये। वैनतेयः गरुडः। त्वं नागानाम् अनन्तः असि। नागानां सर्पाणां मध्ये। अपि च स्रोतसां सुरसरित्। अपि च किञ्च। स्रोतसां नदीनां मध्ये। सुरसरित् आकाश गङ्गा ॥

ब्रह्मण्यानां बलिस्त्वं क्रतुषु च जपयज्ञोऽसि वीरेषु पार्थो
भक्तानामुद्धवस्त्वं बलमसि बलिनां धाम तेजस्विनां त्वम्।
नास्त्यन्तस्त्वद्विभूतेर्विकसदतिशयं वस्तु सर्वं त्वमेव
त्वं जीवस्त्वं प्रधानं यदिह भवदृते तन्न किञ्चित् प्रपञ्चे ॥ २ ॥

ब्रह्मण्यानामिति ॥ अत्रापि पूर्ववत् कर्तृक्रिये योजनीये। त्वं ब्रह्म ण्यानां बलिः। ब्रह्मण्यानां ब्राह्मणभक्तानां मध्ये। बलिः महाबलिः। क्रतुषु च जपयज्ञः असि। क्रतुषु यज्ञेषु। चकारस्त्वर्थे। जपयज्ञः नाम सङ्कीर्तनरूपो यज्ञः। वीरेषु पार्थः। पार्थः अर्जुनः। त्वं भक्तानाम्

उद्धवः। त्वं श्रीकृष्णः। भक्तानां मध्ये। बलिनां बलम् असि। बलिनां बलवताम्। बलं शक्तिः। त्वं तेजस्विनां धाम। तेजस्विनां तेजोवताम्। धाम तेजः। एवं व्यष्ट्या कतिचिद्विभूतीर्निरूप्य समष्ट्या प्राह— त्वद्विभूतेः अन्तः नास्ति इति। त्वद्विभूतेः तव श्रीकृष्णस्य विभूतेः महिम्नः। अन्तः अवसानम्। नास्ति न भवति। विकसदतिशयं सर्वं वस्तु त्वम् एव। विकसदतिशयं विकसत् स्फुटतया प्रतीयमानोऽतिशयो यस्य तत्। सर्वं सकलम्। वस्तु पदार्थः। त्वं श्रीकृष्णः। एवकारोऽन्यस्य व्यवच्छेदे। किञ्च, त्वं जीवः त्वं प्रधानम्। प्रकृतिपुरुषावपि त्वमेवेत्यर्थः। इह प्रपञ्चे यत् भवद्दते तत् किञ्चित् न। इह अस्मिन् प्रकृतिपुरुषात्मके प्रपञ्चे जगति। यत् यादृशं वस्तु। भवद्दते भवता विना। प्रतीयत इति शेषः। तत् तादृशं वस्तु। किञ्चित् किमपि। नास्ति। त्वमेवेदं सर्वमित्यर्थः॥

उक्तोपासनादावनधिकारिणामीश्वरार्पणेन स्वधर्मानुष्ठानाद्वैराग्यद्वारा मुक्तिः स्यादित्याह—

*धर्मं वर्णाश्रमाणां श्रुतिपथविहितं त्वत्परत्वेन भक्त्या*
　कुर्वन्तोऽन्तर्विरागे विकसति शनकैः सन्त्यजन्तो लभन्ते।
सत्तास्फूर्तिप्रियत्वात्मकमखिलपदार्थेषु भिन्नेष्वभिन्नं
　निर्मूलं विश्वमूलं परममहमिति त्वद्विबोधं विशुद्धम्॥ ३॥

धर्ममिति॥ वर्णाश्रमाणां श्रुतिपथविहितं धर्मं भक्त्या त्वत्परत्वेन कुर्वन्तः शनकैः अन्तः विरागे विकसति सन्त्यजन्तः विशुद्धम् इति त्वद्विबोधं लभन्ते। वर्णाश्रमाणां वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां च। श्रुतिपथविहितं श्रुतिषु वेदेषु तत्पथेषु स्मृत्यादिषु च विहितं पृथक् पृथक् प्रतिपादितं नित्यनैमित्तिकादिरूपम्। धर्मं धर्मात्मकमवश्यकर्तव्यं कर्मजातम्। भक्त्या भगवत्संबन्धिन्या। उपलक्षिता इति शेषः। त्वत्परत्वेन भगवदर्पिततया। कुर्वन्तः अनुतिष्ठन्तः। शनकैः मन्दं मन्दम्। न तत्क्षण एवेत्यर्थः। अन्तः अन्तरङ्गे। विरागे विरक्तौ। विकसति प्रादुर्भूय प्रका

शमाने सति। विहितानि कर्मजातानि सम्यग्विधिना त्यजन्तः। परमहं सत्वं प्राप्येत्यर्थः। विशुद्धं विशेषेण शुद्धं विषयाकारशून्यम्। इति अनेन प्रकारेण। त्वद्विबोधं त्वत्स्वरूपसम्बन्धिनं विबोधं विज्ञानम्। लभन्ते प्राप्नुवन्ति। इतिशब्दार्थं ज्ञानस्वरूपमाह—परमम् अहम् इति। परं ब्रह्मैवाहमित्यर्थः। ब्रह्मणस्तटस्थलक्षणमाह— विश्वमूलम् इति। विश्वस्य जगतः मूलं जन्मादिकारणम्। तदेवोपपादयति—भिन्नेषु अखिलपदार्थेषु अभिन्नम् इति। भिन्नेषु स्वभावतः पृथग्भूतेषु। अखिलपदार्थेषु अखिलेषु सकलेषु पदार्थेषु स्वसृष्टेषु कार्येषु। अभिन्नं कटककुण्डलादौ सुवर्णवत् कारणरूपेणैकत्वेन स्थितम्। ननु तद्वत् सच्चिदानन्दब्रह्म स्वसृष्टेषु कार्येषु न दृश्यत इति। चेत्, दृश्यत एवेत्याह—सत्तास्फूर्तिप्रियत्वात्मकमिति। भिन्नेषु घटपटादिषु घटः सन् पटस्सन्नित्येकरूपा सत्ता, भिन्नेष्वभिन्ना घटोऽयं पटोऽयमित्येकरूपा स्फूर्तिः ज्ञानम्, भिन्नेषु स्रक्चन्दनादिष्वभिन्नं प्रियत्वम् आनुकूल्यं चेति सत्तास्फूर्तिप्रियत्वानि तान्यात्मा स्वरूपं यस्य तं सत्तास्फूर्तिप्रियत्वात्मकम्। तदेव ब्रह्मेत्यर्थः। अत्र भिन्नेष्वभिन्नमित्यनेन कार्यकारणान्यत्वोक्तेरद्वितीयत्वमप्युक्तम्। अतः सत्तास्फूर्तिप्रियत्वात्मकमित्यनेन सच्चिदानन्दं ब्रह्मेति स्वरूपलक्षणमपि दर्शितम्। कुत एवंविधस्य ब्रह्मण उत्पत्तिरिति चेत्तत्राह—निर्मूलमिति। निर्गतं मूलं कारणं यस्मात्तम्। नित्यमित्यर्थः। अतस्तत्प्राप्तानां न पुनः आवृत्तिरित्यपि सूचितम्॥

ननु भक्त्यैव कृतार्था इति प्रागुक्तम्, किमिदानीं, 'सन्ति श्रेयांसि' इत्यादिना कर्मज्ञानयोगोपादानमित्याशङ्क्य अधिकारिभेदादेव तदुपादानमित्याह—

ज्ञानं कर्मापि भक्तिस्त्रितयमिह भवत्प्रापकं तत्र तावन्निर्विण्णानामशेषे विषय इह भवेज्ज्ञानयोगेऽधिकारः।
सक्तानां कर्मयोगस्त्वयि हि विनिहितो ये तु नात्यन्तसक्ता नाप्यत्यन्तं विरक्तास्त्वयि च धृतरसा भक्तियोगो ह्यमीषाम्॥ ४॥

ज्ञानमिति ॥ इह ज्ञानं कर्म भक्तिः अपि इति त्रितयं भवत्प्रापकम्। इह प्रपञ्चे। ज्ञानं ज्ञानयोगः। कर्म कर्मयोगः। भक्तिर्भक्तियोगः। अपिस्समुच्चये। इतीत्यत्र योजितम्। इति एवम्। त्रितयं त्रयः। भवत्प्रापकम् मोक्षसाधनम्। ज्ञानयोगेऽधिकारिण आह—तत्र तावत् इह अशेषे विषये निर्विण्णानां ज्ञानयोगे अधिकारः भवेत् इति। तत्र तेषु ज्ञानकर्मभक्तियोगेषु मध्ये। तावत् क्रमेण। विषयानल्पाल्पशस्त्यक्त्वा अन्ते इत्यर्थः। इह अस्मिन् शरीरसम्बन्धिनि। अशेषे विषये सर्वेष्वपि विषयेष्वित्यर्थः। निर्विण्णानां विरक्तानाम्। ज्ञानयोगे भगवत्प्राप्त्युपायभूते ज्ञाने। भवेत् स्यात्। अथ कर्मयोगाधिकारिण आह— सक्तानां हि त्वयि विनिहितः कर्मयोगः इति। सक्तानां विषयासक्तानाम्। हिस्त्वर्थे। त्वयि श्रीकृष्णे। विनिहितः विशेषेण समर्पितः। कर्मयोगः भगवत्प्राप्त्युपायभूतकर्मानुष्ठानम्। भवेदित्यत्राप्यन्वेति, उत्तरत्र च। सक्ता एव कर्मयोगेऽधिकारिणः स्युरित्यर्थः। अथ भक्तियोगाधिकारिण आह— ये तु अत्यन्तसक्ताः न अत्यन्तं विरक्ताः अपि न त्वयि धृतरसाः च, अमीषां भक्तियोगः हि इति। ये मुमुक्षवः। तुर्विशेषे। अत्यन्तसक्ताः अत्यन्तम् अतिमात्रं सक्ताः विषयासक्ताः। न भवन्ति ईषद्विषयासक्ता भवन्तीत्यर्थः। ये मुमुक्षवः। अत्यन्तम् अतिमात्रं विरक्ताः विषयविरक्ता न भवन्ति। ईषद्वैराग्ययुक्ता भवन्तीत्यर्थः। ये मुमुक्षवः। त्वयि श्रीकृष्णे। धृतरसाः यदृच्छया भगवत्कथादिषु जातश्रद्धाः। अपिशब्दश्चकारश्च समुच्चये। अमीषाम् एवम्भूतानाम्। भक्तियोगः भगवत्यनपायिन्या भक्त्या योगः। भवतीति शेषः। हीति प्रसिद्धौ ॥

एतत्त्रितयस्य मनुष्यशरीरसाध्यत्वात् प्राप्तौ न कालक्षेपः कर्तव्य इत्यभिप्रायेणाह—

ज्ञानं त्वद्भक्ततां वा लघु सुकृतवशान्मर्त्यलोके लभन्ते
तस्मात्तत्रैव जन्म स्पृहयति भगवन् नाकगो नारको वा।

आविष्टं मां तु दैवाद्भवजलनिधिपोतायिते मर्त्यदेहे
त्वं कृत्वा कर्णधारं गुरुमनुगुणवातायितस्तारयेथाः ॥ ५ ॥

ज्ञानमिति ॥ मर्त्यलोके सुकृतवशात् ज्ञानं त्वद्भक्ततां वा लघु लभन्ते। मर्त्यलोके मनुष्यसमुदाये। सुकृतवशात् पूर्वजन्मकृतपुण्यसञ्चय वशात्। ज्ञानं तत्त्वज्ञानम्। त्वद्भक्ततां भगवद्भक्तत्वम्। वाकारः विकल्पे। लघु अनायासेन। लभन्ते प्राप्नुवन्ति। मर्त्या इति शेषः। मनुष्य जन्मनः स्पृहणीयतामाह—हे भगवन् तस्मात् नाकगः नारकः वा अत्र एव जन्म स्पृहयति इति। भगवन् ऐश्वर्यादिसम्पन्न। तस्मात् मनुष्येष्वनाया सेन ज्ञानादिलाभहेतोः। नाकगः स्वर्गसुखानुभोगी। नारकः नरकयातना मनुभवन्। वाकारः समुच्चये। अत्र मर्त्यलोके। एवेत्यन्यलोकव्यवच्छेदे। जन्म जननम्। स्पृहयति आकाङ्क्षति। तादृशमर्त्यलोकोत्पन्नं मां संसा रात्तारयेति प्रार्थयते—त्वं भवजलनिधिपोतायिते मर्त्यदेहे दैवात् आविष्टं मां तु गुरुं कर्णधारं कृत्वा अनुगुणवातायितः तारयेथाः इति। त्वं श्रीकृष्णः। भवजलनिधिपोतायिते भवः संसार एव जलनिधिः समुद्रस्तत्र पोतवदाचरिते। जलवितानापरतीरमाप्त्युपायभूतो जलोपरि प्लवमानो बृहत्काष्ठविशेषः पोत इति वेदितव्यम्। मर्त्यदेहे मनुष्यशरीरे। दैवात् पूर्वजन्मकृतपुण्यपरिपाकतः। आविष्टं प्रविष्टम्। माम् अनन्यशरणम्। गुरुम् उपदेष्टारम्। कर्णधारं नाविकं सन्तम्। कृत्वा विधाय। तेनेत्यर्थाद्गम्यते। अनुगुणवातायितः अनुगुणः यां दिशं पोतः प्रापणीयस्तां दिशं प्रति गच्छन्नित्यर्थः। स चासौ वातश्चेत्यनुगुणवातः, तद्वदाचरतीत्यनुगुणवातायितः सन्। तारयेथाः पारं नयेथाः। यथा वायुरनुगुणो भूत्वा समुद्रजलोपरि पोतस्थं कर्णधारेणापरतीरं नयति तथा त्वं संसारसङ्कटसमुत्तरणोपायभूतमर्त्यदेहस्थं मां गुरूपदेशमार्गेणानुकूलो भूत्वा समुद्धृत्य मोक्षं प्रयच्छेत्यर्थः ॥

मोक्षसाधनेषु ज्ञानादिषु भक्तिरेव सुगमो मार्ग इत्याह—

अव्यक्तं मार्गयन्तः श्रुतिभिरपि नयैः केवलज्ञानलुब्धाः
क्लिश्यन्तेऽतीव सिद्धिं बहुतरजनुषामन्त एवाप्नुवन्ति।

दूरस्थः कर्मयोगोपि च परमफले नन्वयं भक्तियोग-
स्त्वामूलादेव हृद्यस्त्वरितमयि भवत्प्रापको वर्धतां मे ॥ ६ ॥

अव्यक्तमिति ॥ केवलज्ञानलुब्धाः श्रुतिभिः नयैः अपि अव्यक्तं मार्गयन्तः अतीव क्लिश्यन्ते। केवलज्ञानलुब्धाः केवलज्ञाने ज्ञानमात्रे लुब्धा लोलुपाः। श्रुतिभिः उपनिषद्भिः। नयैः मीमांसोक्तयुक्तिभिः। अपिः समुच्चये। अव्यक्तम् अप्रत्यक्षं ब्रह्म। मार्गयन्तः विचारयन्तः। अतीव नितराम्। क्लिश्यन्ते क्लेशमनुभवन्ति। तथाविधक्लेशानुभवपूर्वं ज्ञाने सम्पादिते किं न फलं लभ्यत इति चेत्तत्राह—बहुतरजनुषाम् अन्ते एव सिद्धिम् आप्नुवन्ति इति। ते इत्यत्र योज्यम्। ते ज्ञानमात्रेण ब्रह्ममार्गणपराः। बहुतरजनुषां बहुतराणाम् अतिबहूनां जनुषा जन्मनाम्। अन्ते अवसाने। अनेकजन्मसु क्लेशाननुभूयानन्तरमेवेत्यर्थः। सिद्धिं फलं मोक्षाख्यम्। आप्नुवन्ति लभन्ते। कर्मयोगोऽप्येतादृशफल एवेत्याह—कर्मयोगः अपि च परमफले दूरस्थः इति। अपि चेति समुच्चये। परमफले परमपुरुषार्थे। चरमफले इति पाठे पुरुषार्थेष्वन्तिमफले इत्यर्थः। मोक्षे इति यावत्। दूरस्थः कालान्तरफलप्रदः क्लेशात्मकश्च। भक्तियोगस्तु न तथेत्याह—अयि आ मूलात् एव हृद्यः अयं भक्तियोगः त्वरितं भवत्प्रापकः ननु इति। अयीति सम्बोधने। भगवन्निति शेषः। आ मूलात् मूलात् प्रभृति। एवकारोऽन्तराऽन्तराहृद्यत्वव्यवच्छेदे। श्रवणकीर्तनादिक्रमेणारम्भात् प्रभृति मोक्षपर्यन्तमित्यर्थः। हृद्यः सुखदः। अयं मया प्रार्थ्यमानः। तुर्विशेषे। फलप्रापणे ज्ञानकर्मयोगव्यतिरिक्तत्वं विशेषः। त्वरितं शीघ्रम्। भवत्प्रापकः मोक्षप्रदः। नन्विति प्रश्रयभारणे। अथात्मना प्रार्थ्यमानस्य भक्तियोगस्य वृद्धिं प्रार्थयते—मे वर्धतामिति। सः इत्यादौ योज्यम्। सः भक्तियोगः। मे भगवद्भक्तस्य मम। वर्धतां वृद्धिं प्राप्नोतु ॥

उक्तमर्थं सदाचारप्रमाणेनाह—

ध्यानार्थेनानिमयं मुनिरपवदते ब्रह्मतत्त्वं तु शृण्वन्
गाढं त्वत्पादभक्तिः शरणमयति यस्तस्य मुक्तिः कराग्रे।

त्वद्ध्यानेऽपीह तुल्या पुनरसुकरता चित्तचाञ्चल्यहेतो-
रभ्यासादाशु शक्यं तदपि वशयितुं त्वत्कृपाचारुताभ्याम् ॥ ७ ॥

ज्ञानायेति॥ मुनिः ज्ञानाय एव अतियत्नम् अपवदते। मुनिः श्रीवेदव्यासः। ज्ञानाय ज्ञानसम्पादनाय। नान्यार्थमित्येवकारार्थः। अति यत्नं बहुग्रन्थाभ्यासरूपमतिप्रयत्नम्। अपवदते पुराणेषु तत्र तत्र निषेधति। पुनः किं कर्तव्यमित्यत आह— तु यः ब्रह्मतत्त्वं गाढं शृण्वन् त्वत्पादभक्तिं शरणम् अयति, तस्य मुक्तिः कराग्रे इति। तु किन्तु। य पुमान् ब्रह्मतत्त्वं ब्रह्मणस्तत्त्वम् सिद्धान्तसारम्। शृण्वन् युक्त्या अनुसन्दधानः सन्। गाढं ध्यानादिना सुदृढं यथा भवति तथा। त्वत्पादभक्ति तव श्रीकृष्णस्य पादयोश्चरणकमलयोर्भक्तिम्। शरणं पालयित्रीं सतीम्। अयति प्राप्नोति। तस्य तादृशस्य भक्तस्य। मुक्तिः मोक्षः। कराग्रे करस्थफला दिवत् स्वाधीना भवतीत्यर्थः। एवं भक्तस्य प्रथमकर्तव्ये ध्यानेऽप्यतिप्रयत्न साध्यत्वं भवतीत्याह— इह त्वद्ध्याने अपि चित्तचाञ्चल्यहेतोः असु करता तुल्या इति। इह भक्तियोगे यमनियमादिसहिते। त्वद्ध्याने तव श्रीकृष्णस्य ध्याने। अपिर्ज्ञानस्य समुच्चये। चित्तचाञ्चल्यहेतोः चित्तस्य चाञ्चल्याद्धेतोः। असुकरता दुरनुष्ठेयता। तुल्या समा। ज्ञानध्यानयोः समैवेत्यर्थः। एवं समानप्रयत्नयोरनयोर्ध्यानस्यैव सुकरत्वमित्याह— तत् अपि अभ्यासात् आशु वशयितुं त्वत्कृपाचारुताभ्यां शक्यमिति। तत् दुष्करमपि ध्यानम्। आशु शीघ्रम्। वशयितुं स्वाधीनं कर्तुम्। फलो न्मुखं कर्तुमित्यर्थः। त्वत्कृपाचारुताभ्यां तव श्रीकृष्णस्य कृपा नैसर्गिकी या करुणा चारुता आकर्षकसौन्दर्यसन्दोहः ताभ्याम्। शक्यं न प्रयास इत्यर्थः॥

अथ स्वावस्थामनुसन्दधानः भक्तिवृद्धिं प्रार्थयते—

निर्विण्णः कर्ममार्गे खलु विषमतमे त्वत्कथादौ च गाढं
जातश्रद्धोऽपि कामानयि भुवनपते नैव शक्नोमि हातुम्।
तद्भूयो निश्चयेन त्वयि निहितमना दोषबुद्ध्या भजंस्तान्
पुष्णीयां भक्तिमेव त्वयि हृदयगते मङ्क्षु नङ्क्ष्यन्ति सङ्गाः॥ ८ ॥

निर्विण्ण इति ॥ अयि भुवनपते अहं विषमतमे खलु कर्ममार्गे निर्विण्णः त्वत्कथादौ च गाढं जातश्रद्धः अपि कामान् हातुं न शक्नोमि एव। अयीति सम्बोधने। भुवनपते लोकनाथ। विषमतमे दुःखभूयिष्ठे। खल्वित्येवकारार्थः। कर्ममार्गे कर्मणः कर्मयोगस्य मार्गे मार्गेण प्राप्ये स्वर्गादौ। निर्विण्णः विरक्तः। त्वत्कथादौ तव श्रीकृष्णस्य कथादौ कथा श्रवणनामसङ्कीर्तनादौ। जातश्रद्धः जाता श्रद्धा यस्य तथाविधश्च सन्। अपि विरोधे। निर्विण्णस्य कामत्यागेऽशक्तता विरोधः। कामान् पूर्वकृतकर्म फलभूतान् काम्यमानान् पुत्रमित्रवित्तकलत्रादीन्। हातुं त्यक्तुम्। न शक्नोमि अशक्तो भवामि। एवकारोऽवधारणे। तर्हि किं करोषीति चेत्तत्राह—तत् अहं भूयः निश्चयेन त्वयि निहितमनाः दोषबुद्ध्या तान् भजन् भक्तिमेव पुष्णीयामिति। तत् तस्मात् कारणात्। भूयः पुनरपि। निश्चयेन निर्णयेन। त्वयि श्रीकृष्णे। निहितं समर्पितं मनो येन तथाविधः सन्। दोषबुद्ध्या इमे दोषा इति बुद्ध्या। तान् कामान्। भजन् सेवमानः। भक्तिं भगवद्विषयाम्। एवकारोऽवधारणे। पुष्णीयां पुष्टां कुर्याम्। भक्ति पोषणेन किमित्यत्राह—त्वयि हृदयगते सङ्गाः मङ्क्षु नङ्क्ष्यन्ति इति। त्वयि श्रीकृष्णे। हृदयगते भक्त्या भजनेन हृदयं गते प्राप्ते सति। सङ्गाः पुत्रादिविषयसङ्गाः। मङ्क्षु त्वरितम्। नङ्क्ष्यन्ति नाशं गमिष्यन्ति ॥

भगवद्भजने मनोनिग्रहस्यावश्यमावश्यकत्वादथ द्वाभ्यां भिक्षुपुरूरवसोर्निदर्शनेन चित्तशान्ति प्रार्थयंस्तत्र प्रथमं भिक्षोर्निदर्शनमाह—

कश्चित् क्लेशार्जितार्थक्षयविमलमतिर्नुद्यमानो जनौघैः
प्रागेवं प्राह विप्रो न खलु मम जनः कालकर्मग्रहा वा।
चेतो मे दुःखहेतुस्तदिह गुणगणं भावयत् सर्वकारी-
त्युक्त्वा शान्तो गतस्त्वां मम च कुरु विभो तादृशीं चित्तशान्तिम् ॥

कश्चिदिति ॥ प्राक् कश्चित् विप्रः क्लेशार्जितार्थक्षयविमलमतिः जनौघैः नुद्यमानः एवं प्राह। प्राक् पुरा। कश्चित् अवन्तिराज्ये अज्ञात

कुरुनामादिः। विप्रः ब्राह्मणः। क्लेशार्जितार्थक्षयविमलमतिः क्लेशेन कृषिवाणिज्यादिवृत्तिमाश्रित्य महता दुःखेनार्जितस्य सम्पादितस्य अर्थस्य धनस्य क्षयेन चोरदैवकालबन्धुराजाद्यपहरणजनितेन नाशेन, चौरादिभिर्मम वित्तमखिलमपहृतम्, अहो न सत्पात्रे किञ्चिद्दत्तम्, न च मयाऽल्पमप्यनुभूतम्, तत्फलमेवाधुनाऽऽपतितमिति सञ्जातपश्चात्तापेन विमलमतिः विगता वियुक्ता मला रागादयो यस्याः तादृशी मतिर्बुद्धिर्यस्य तथाविधः सन्। निर्वेदात् प्रव्रजितित्यर्थः। पुनरपि जनौघैः जनसञ्चयैः। नुद्यमानः अयं कपटयोगी तस्करवर इत्यादिनिर्भर्त्सनेन शर्करालोष्टादिप्रक्षेपणेन मलमूत्रादिविसर्जनादिना च पुनः पुनस्तुद्यमानश्च सन्। एवं वक्ष्यमाणप्रकारेण। प्राह उक्तवान्। जनसामीप्ये सति पुनः पुनः कथयामासेत्यर्थः। कथनप्रकारमाह—जनः कालकर्मग्रहाः वा मे दुःखहेतवः न खलु इति। जनः मत्पीडाकरो लोकः। कालकर्मग्रहाः कालश्च कर्म च ग्रहाश्च। वेति जनादिचतुर्णां विकल्पे। दुःखहेतवः इत्युपरिष्टादाकृष्य वचनविपरिणामेनात्र योजितम्। दुःखहेतवः सङ्कटहेतुभूताः। न खलु नैव। भवन्तीति शेषः। अयमर्थः—अहं तावज्जनैः पीड्यमान इव प्रतीयते, वस्तुतो न मे पीडा भवति। यद्यस्ति पीडा, तर्हि स्वदशनैः स्वजिह्वादंशनजनितपीडायां कं प्रति कुप्येयम्। अतो जनो न मे दुःखहेतुः। तथा कालस्येश्वरात्मकत्वान्ममात्मनश्चेश्वरांशत्वादग्नेः स्वत उष्णपीडा हिमस्य स्वतः शीतपीडा च यथा न जायते, तथा स्वांशस्य स्वतः पीडायोगाभावाच्च कालो न मे दुःखहेतुः। एवमचेतनस्य देहस्य चित्स्वरूपस्यात्मनश्च कर्मयोगाभावात् कर्म च न मे दुःखहेतुः। जन्मलग्नात् षष्ठाष्टमाद्यनिष्टभावस्थैर्ग्रहैर्देहस्यैव पीडा नात्मनः। अतो ग्रहाश्च न मे दुःखहेतव इति। पुनः किं दुःखहेतुरित्यत्राह—चेतः मे दुःखहेतुः इति। चेतः आत्मत्वेनाभिमन्यमानं चित्तम्। मे मम। दुःखहेतुः सङ्कटकारणम्। चेतसो दुःखहेतुत्वं विवृणोति—तत् इह गुणगणं भावयत् सर्वकारि इति। तत् चेतः। कर्तृभोक्त्रादिरूपेण स्थितमित्यर्थः। इह स्वात्मन्येव। गुणगणं वैषयिकगुणसञ्चयम्। भावयत् आरोपयत्।

सर्वकारि सर्वं सकलं सुरनरमृगादिशरीरं भोग्यभोगस्थानादि करोतीति तथा विधं सत्। भवतीति शेषः। एवंविधस्य भिक्षोरनन्तरावस्थामाह—इति उक्त्वा शान्तः त्वां गतः इति। [redacted] इत्यत्र योजनीयम्। सः सर्वसङ्ग परित्यागी भिक्षुः। इति उक्तप्रकारेण। उक्त्वा निगद्य। शान्तः शान्तचित्तः। त्वां श्रीकृष्णम्। गतः प्राप्तः। मुक्तो बभूवेत्यर्थः। अथ प्रार्थयते— हे विभो मम च तादृशीं चित्तशान्तिं कुरु इति। विभो प्रभो। मम शमेच्छोः। चकारः समुच्चये। तादृशीं तथा भिक्षुप्राप्तया सदृशीम्। चित्तशान्तिं चित्तस्य शान्तिं शमम्। कुरु विधेहि। तर्हि भिक्षुवन्मुक्तो भवेयमिति भावः॥

अथ पुरूरवसो निदर्शनमाह—

ऐलः प्रागुर्वशीं प्रत्यतिविवशमनाः सेवमानश्चिरं तां
गाढं निर्विद्य भूयो युवतिसुखमिदं क्षुद्रमेवेति गायन्।
त्वद्भक्तिं प्राप्य पूर्णस्सुखतरमचरत्तद्वदुद्धूतसङ्गं
भक्तोत्तंसं क्रिया मां पवनपुरपते हन्त मे रुन्धि रोगान्॥ १०॥

ऐल इति॥ प्राक् ऐल. उर्वशीं प्रति अतिविवशमनाः भूयः तां चिरं सेवमानः गाढं निर्विद्य इदं युवतिसुखं क्षुद्रम् एव इति गायन् त्वद्भक्तिं प्राप्य पूर्णः सुखतरम् अचरत्। प्राक् पुरा। इलाया अपत्यं पुमान् ऐलः बुधसुतः पुरूरवाः। उर्वशीं प्रति उर्वश्याख्यां सुरसुन्दरीमधिकृत्य। स्वासक्तां स्वयमागतां चिरं सम्भुज्य समयभङ्गेन स्वं परित्यज्य गतामुर्वशीं प्रतीति भावः। अतिविवशमनाः अत्यन्तं विवशम् आकुलं मनो यस्य सः। तदधीनमनाः इत्यर्थः। भूयः पुनः। तां स्वर्लोकस्थाम्। यत्नैः प्राप्य चिरं चिरकालं सेवमान. तत्सम्भोगसुखमनुभूयमानः। गाढम् अतिशयेन। निर्विद्य निर्वेदं प्राप्य। इदं जनैरनुभूयमानम्। युवतिसुखं स्त्रीसुखम्। क्षुद्रं निस्सारम्। एवेत्यवधारणे। इति अनेन प्रकारेण। गायन् पुनः पुन वदन्। त्वद्भक्तिं त्वयि श्रीकृष्णे भक्तिम्। प्राप्य लब्ध्वा। पूर्णः

निरवशिष्टज्ञातव्यकर्तव्यभोग्यादिश्च सन्। सुखतरं नितरां सुखं यथा भवति तथा। अचरत् निस्सङ्गः सन् सर्वत्र सञ्चचार। अथ प्रार्थयते—हे पवनपुरपते त्वं मां तद्वत् उद्धूतसङ्गं भक्तोत्तंसं क्रियाः। हन्त मे रोगान् रुन्धि इति। पवनपुरपते श्रीगुरुवायुपुरनाथ। त्वं श्रीकृष्णः। माम् अनन्यशरणम्। तद्वत् पुरूरवसमिव। उद्धूतसङ्गं उद्धूताः उत्सारिताः सङ्गाः विषयबन्धा येन तम्। भक्तोत्तंसं भगवद्भक्तोत्तमं च सन्तम्। क्रियाः विधेहि। किञ्च। हन्तेति खेदे। रोगबाधानुसन्धानात् खेदः। मे मम। रोगान् बाह्यानाभ्यन्तरांश्चामयान्। रुन्धि निवारय॥

इति भगवद्विभूतिवर्णनं कर्मज्ञानभक्तिमार्गाधिकारिवर्णनं
चित्तोपशमप्रार्थनावर्णनं च
षण्णवतितमदशकम्॥

## सप्तनवतितमदशकम्।

अथ गुणत्रयवृत्तिजयेन द्वन्द्वोपरमाय त्रैगुण्यविभागमाह—

त्रैगुण्याद्भिन्नरूपं भवति हि भुवने हीनमध्योत्तमं यत्
ज्ञानं श्रद्धा च कर्ता वसतिरपि सुखं कर्म चाहारभेदाः।
त्वत्क्षेत्रत्वन्निषेवादि तु यदिह पुनस्त्वत्परं तत्तु सर्वं
प्राहुर्नैर्गुण्यनिष्ठं तदनुभजनतो मद्क्षु सिद्धो भवेयम् ॥ १ ॥

त्रैगुण्यादिति ॥ भुवने त्रैगुण्यात् भिन्नरूपं यत् ज्ञानं तत् हीनमध्योत्तमं भवति हि। भुवने प्रपञ्चे। त्रैगुण्यात् त्रयाणां गुणानां सत्त्वरजस्तमसां समाहारस्त्रैगुण्यम्, तस्माद्धेतोः। भुवनस्य गुणत्रयमयत्वादिति भावः। भिन्नरूपं भिन्नानि व्यस्तानि रूपाणि यस्य तत्। ज्ञानं विज्ञानम्। हीनमधमं च मध्यं मध्यममुत्तमञ्चेति हीनमध्योत्तमम्। हीति

प्रसिद्धौ। अत्र सत्त्वरजस्तमसां क्रमानुसारेणोत्तममध्यमाधममिति वक्तव्ये हीनमध्योत्तममित्युक्त्या क्रमविवक्षा नास्तीति वेदितव्यम्। अत्रायं विवेकः— सात्त्विकमुत्तमं सर्वभूतेष्वात्मन एकत्वज्ञानम्। राजसं मध्यमं पृथक्त्वज्ञानम्, तामसमधमं बालादिवत् ज्ञानमिति। नैतदेवेत्याह—श्रद्धा च कर्ता वसतिः अपि सुखं कर्म आहारभेदाः च इति। वाक्येऽत्रादौ भिन्नरूपा इति, अन्ते हीनमध्योत्तमा भवन्ति हीति च लिङ्गवचनविपरिणामेन योज्यम्। आहार भेदा बहुविधाहारवस्तूनि। चकारावपिश्च समुच्चये। अत्र चायं विवेकः— श्रद्धा स्वाध्यात्मिकधर्माधर्मविषयतया त्रिविधा, कर्तापि वैराग्यरागज्ञानभेदेन त्रिविधः, वनग्रामद्यूतसदनभेदेन वसतिरपि त्रिविधा, सुखमप्यात्ममोत्थविषयोत्थ निद्रामोहाद्युत्थभेदेन त्रिविधम्, कर्म च निष्कामसकामनिषिद्धभेदेन त्रिविधम्, आहारवस्तून्यपि शुद्धानीन्द्रियप्रेष्ठान्यशुचीनि चेति त्रिविधानीति। एवं त्रिगुणा त्मकमपि ज्ञानादिकं निर्गुणं भवतीत्याह—इह पुनः त्वत्क्षेत्रत्वन्निषेवादि तु यत् त्वत्परं सर्वं नैर्गुण्यनिष्ठं तु प्राहुः इति। इह ज्ञानादिषु। पुनस्त्वर्थे। त्वत्क्षेत्र त्वन्निषेवादि तव श्रीकृष्णस्य क्षेत्रं श्रीगुरवायुपुरादि त्वन्निषेवा भगव त्सेवा चादौ यस्य तत्। तुर्विशेषे। त्वत्परं भगवत्परम्, न फल परं चेत् भवति तर्हि। तत् सर्वं ज्ञानादिकम्। नैर्गुण्यनिष्ठं सत्त्वादि गुणरहितपरब्रह्मनिष्ठं सत्। तुरवधारणे। प्राहुर्वदन्ति। मुनय इति शेषः। अहं तदनुभजनतः मङ्क्षु सिद्धः भवेयम्। तदनुभजनतः तस्य नैर्गुण्य निष्ठस्य भगवत्क्षेत्रादेरनुभजनतः निरन्तरभजनेन। तृतीयार्थे तसि मङ्क्षु झटिति। सिद्धः मुक्तः। भवेयं स्याम्॥

अथ द्वाभ्यां 'श्रीकृष्ण त्वत्पदोपासनम्' इत्यादिना प्रस्तुतं भागवतं धर्ममुपसंहरति—

त्वय्येव न्यस्तचित्तः सुखमयि विचरन् सर्वचेष्टास्त्वदर्थं
त्वद्भक्तैः सेव्यमानानपि चरितचरानाश्रयन् पुण्यदेशान्।
दस्यौ विप्रे मृगादिष्वपि च सममतिर्मुच्यमानावमान-
स्पर्धासूयादिदोषः सततमखिलभूतेषु संपूजये त्वाम्॥ २॥

त्वयीति ॥ अयि अहं त्वयि एव न्यस्तचित्तः सर्वचेष्टाः त्वदर्थं सुखं विचरन् त्वद्भक्तैः सेव्यमानान् चरितचरान् अपि पुण्यदेशान् आश्रयन् दस्यौ विप्रे मृगादिषु अपि च सममतिः मुच्यमानावमानस्पर्धासूयादिदोषः सततम् अखिलभूतेषु त्वां सम्पूजये। अयीति सम्बोधने। भगवन्निति शेषः। त्वयि श्रीकृष्णे। एवकारोऽन्येषां व्यवच्छेदे। न्यस्तचित्तः न्यस्तं समर्पितं चित्तं मनो येन सः। सर्वचेष्टाः सर्वा विहिता वैदिकाः, अविहिता अलौकिकाश्च निश्शेषाश्चेष्टाः शारीराणि कर्माणि। त्वदर्थं तुभ्यं श्रीकृष्णाय। सुखमिति विचरणक्रियाविशेषणम्। भगवदर्पणपूर्वकं सर्वकर्मानुष्ठाने क्लेशराहित्यप्रदर्शनपरमिदम्। विचरन् कुर्वन्। श्रीकृष्णार्पणमस्त्विति समर्पणपूर्वकमनुतिष्ठन्नित्यर्थः। त्वद्भक्तैः त्वयि श्रीकृष्णे भक्तैः। सेव्यमानान् अधुना भजमानान्। चरितचरान् पूर्वं सेवितान्। अपिशब्दः समुच्चये। अत एव पुण्यदेशान् पुण्यान् सुकृतकरान् देशान् प्रदेशान्। आश्रयन् भजन्। दस्यौ तस्करे। विप्रे ब्राह्मणोत्तमे। मृगादिषु मृग आदिर्येषां पक्षिमत्स्यादीनां तेषु। अपि चेति समुच्चये। सममतिः समा भेदहीना मतिर्बुद्धिर्यस्य सः। मुच्यमानावमानस्पर्धासूयादिदोषः, अवमानः परेभ्यो मानविघातः, स्पर्धा द्वेषः, असूया परोत्कर्षासहिष्णुता च आदिर्येषां मदादीनां ते अवमानस्पर्धासूयादयः त एव दोषाः शरीराद्यभिमानजनिताः अवमानस्पर्धासूयादिदोषाः, मुच्यमानाः अवमानस्पर्धासूयादिदोषा येन तथाविधश्च सन्। सततम् अनवरतम्। अखिलभूतेषु प्रपञ्चान्तर्गतसकलचराचरेषु। त्वां श्रीकृष्णम्। सम्पूजये सम्यगर्चये ॥

*एवं समदृष्ट्योपासनस्यावधिमाह—*

त्वद्भावो यावदेषु स्फुरति न विशदं तावदेवं ह्युपास्तिं
कुर्वन्नैकात्म्यबोधे झटिति विकसति त्वन्मयोऽहं चरेयम्।
त्वद्धर्मस्यास्य तावत् किमपि न भगवन् प्रस्तुतस्य प्रणाश-
स्तस्मात् सर्वात्मनैव प्रदिश मम विभो भक्तिमार्गं मनोज्ञम् ॥ ३ ॥

त्वद्भाव इति॥ अहम् एषु त्वद्भावः विशदं यावत् न स्फुरति

तावत् एवं हि उपास्ति कुर्वन् ऐकात्म्यबोधे झटिति विकसति त्वन्मयः चरेयम् । एषु दस्युविप्रादिषु सर्वेष्वपि । त्वद्भाव. तवान्तर्यामिरूपेणाव स्थानम्। विशदं स्पष्टं यथा भवति तथा। यावत् यावत्कालम्। न स्फुरति न प्रकाशते। तावत् स्फुटीभावपर्यन्तम्। एवम् उक्तप्रकारेण। हीत्यवधारणे। उपास्तिम् उपासनाम्। कुर्वन् कुर्वाणः। चण्डालादिष्वप्य न्तर्यामिरूपेण भगवान् वर्तत इति दृष्ट्या तेभ्यो नमस्कारादि कुर्वन्नि त्यर्थः । ऐकात्म्यबोधे ऐकात्म्यस्य एकरूपत्वस्य बोधे ज्ञाने। झटिति सद्य.। विकसति प्रकाशति सति। सर्वभूतेष्वेक एवात्मेति ज्ञानेऽनुभव रूपे सञ्जाते सतीत्यर्थः। त्वन्मय. भगवन्मयः। चरेयं प्रपञ्चे सञ्चरेयम्। हे भगवन् प्रस्तुतस्य अस्य त्वद्धर्मस्य तावत् किमपि प्रणाशः न। भगवन् ऐश्वर्यादिसम्पन्न। प्रस्तुतस्य आरब्धस्य। एतावत्सम्पादितस्येत्यर्थः। अस्य उक्तप्रकारस्य। त्वद्धर्मस्य भागवतधर्मस्य। तावत् आदित आरभ्य याव त्समाप्ति। किमपि किञ्चिदपि। प्रणाश वैकल्यम्। न, भवतीति शेषः। हे विभो त्वं तस्मात् मम मनोज्ञं भक्तिमार्गं सर्वात्मना प्रदिश। विभो शक्तिसम्पन्न। त्वं श्रीकृष्ण.। तस्मात् अनुष्ठानसौकर्यात्। मनोज्ञं समी चीनम्। भक्तिमार्गं भक्ते. प्रेमलक्षणाया मार्गं साधनरूपं भागवतधर्मम्। सर्वात्मना तदपेक्षिताधिकाराङ्गादिसहितम्। प्रदिश देहि। मां तत्राधि कारिणं विधेहीत्यर्थ ॥

अथ भक्तियोगदार्ढ्यायुरारोग्यसम्पादनस्य प्रथमकर्तव्यतामाह—

तञ्चैनं भक्तियोगं द्रढयितुमयि मे साध्यमारोग्यमायु-
र्दिष्ट्या तत्रापि सेव्यं तव चरणमहो भेषजायेव दुग्धम्।
मार्कण्डेयो हि पूर्वं गणकनिगदितद्वादशाब्दायुरुच्चैः
सेवित्वा वत्सरं त्वां तव भटनिवहैर्द्रावयामास मृत्युम् ॥ ४ ॥

तमिति॥ अयि तम् एनं भक्तियोगं द्रढयितुं मे आरोग्यम् आयु. च साध्यम्। अयीति सम्बोधने। भगवन्निति शेष.। तं पूर्वोक्तम्।

एनम् पूर्वश्लोकेनोपसंहृतम्। द्रढयितुं किञ्चिदारब्धं दृढीकर्तुम्। मे मम। आरोग्यं बाह्याभ्यन्तररोगराहित्यम्। साध्यं सम्पादनीयम्। भवतीति शेष.। तत्र अपि दिष्ट्या तव चरणं सेव्यम् अहो। तत्र आयुरारोग्यसम्पादने। अपिस्समुच्चये। दिष्ट्या पूर्वजन्मकृतसुकृतपरिपाकवशात्। अनेन अस्मिन् जन्मनि सुकृतलेशस्याप्यकृतत्वादायुरारोग्यसम्पादने भगवत्सेवैव कर्तव्येति बोधोदये हेतुः पूर्वजन्मकृतसुकृतमेवेति द्योत्यते। तव श्रीकृष्णस्य। चरणं पादारविन्दयुगलम्। मयेत्यत्र योज्यम्। सेव्यं सेवार्हम्। भवतीति शेषः। अहो इत्याश्चर्ये। आयुरारोग्यसम्पादनोपायभूतस्य भगवद्भजनस्य सुकरत्वानुसन्धानमाश्चर्यहेतुः। तदेव सुखसाधकत्वमुपमया विशदयति—भेषजाय दुग्धम् इव इति। भेषजाय रोगशमनाय। दुग्धं क्षीरम्। यथा सन्निपातज्वरादिनिवृत्तये पातव्यतया सुखास्वाद्यं क्षीरम्, तथेत्यर्थ.। नन्वायुषः प्रारब्धकर्मनियमितत्वात्तदधिकस्य लाभः प्रार्थनयाऽपि कथं सम्भाव्यत इत्याशङ्कां मार्कण्डेयचरित्रदृष्टान्तेन परिहरति — पूर्वे गणकनिगदितद्वादशाब्दायुः मार्कण्डेयः वत्सरं त्वाम् उच्चैः सेवित्वा तव भटनिवहै· मृत्युं द्रावयामास हि इति। पूर्वे पुरा। स्वायम्भुवमन्वन्तर इत्यर्थ.। गणकनिगदितद्वादशाब्दायु· गणकेन जातककोविदेन केनचिज्ज्योतिश्शास्त्रविशारदेन निगदितम् अवश्यं भावितयोक्तं द्वादशाब्दं द्वादशसंवत्सरमायुर्जीवितकालो यस्य स.। मार्कण्डेयः मृकण्डुपुत्रः। वत्सरम् आयुरन्तदिनात् प्रागेकसंवत्सरम्। अत्यन्तसंयोगे द्वितीया। त्वां श्रीकृष्णम्। उच्चैः तीव्रेण समाधियोगेन। सेवित्वा पूजयित्वा। तव श्रीकृष्णस्य। भटनिवहैः पार्षदसमूहैः। सेवागौरवात् प्रसन्नेन भगवता प्रेषितैस्तत्क्षणमापतितैर्विष्णुपार्षदैरित्यर्थः। मृत्युम् अन्तकम्। द्वादशवत्सरान्ते आत्मानं नेतुमागतं पाशदण्डधरं मृत्युम्। द्रावयामास धावयामास॥

इति श्रीनारायणीयस्तोत्रव्याख्यायां बालबोधिन्याम्
एकादशस्कन्धपरिच्छेदः॥
आदितः श्लोकसङ्ख्या ९९८।

———

## द्वादशस्कन्धपरिच्छेदः ।

अथ पञ्चभिर्मार्कण्डेयस्य तपसा विष्णुमायाशिवदर्शनादिचरित्रवर्णन मिषेणाधिकारिणो योगलयेन ब्रह्मप्राप्त्य ब्रह्मभावतयाऽवस्थानं निरूपयिष्यन्नादौ तस्य तपश्चर्यादिकं वर्ण्यते—

मार्कण्डेयश्चिरायुः स खलु पुनरपि त्वत्परः पुष्पभद्रा-
तीरे निन्ये तपस्यन्नतुलसुखरतिः षट् तु मन्वन्तराणि ।
देवेन्द्रः सप्तमस्तं सुरयुवतिमरुन्मन्मथैर्मोहयिष्यन्
योगोष्मप्लुष्यमाणैन तु पुनरशकत्त्वज्जनं निर्जयेत् कः ॥ ५ ॥

**मार्कण्डेय इति** ॥ चिरायु. सः मार्कण्डेयः खलु पुनः अपि अतुलसुखरतिः त्वत्परः पुष्पभद्रातीरे तपस्यन् ॥ षट् मन्वन्तराणि निन्ये । सः भक्तोत्तमत्वेन चिरायुष्ट्वेन च प्रसिद्धः । खल्विति त्वर्थे । पुनरपि भगवद्भक्तोत्तमत्वे अत एव चिरायुष्ट्वे च लब्धे सत्यपीत्यर्थः । अतुलसुखरतिः अतुले निस्तुले सुखे भगवद्भजनरूपे रतिः श्रद्धा यस्य सः । अत एव त्वत्परः भगवत्सेवानिरतः । पुष्पभद्रातीरे पुष्पभद्राख्याया हिमवत उत्तरपार्श्वे प्रवहन्त्या नद्यास्तीरे कूले । तत्रस्थस्य भद्रवटाख्यन्यग्रोधस्याधोभागे चित्रशिलाख्यायां विशालायां शिलायामित्यर्थः । तपस्यन् तपश्चरन् । तुरवधारणे । मन्वन्तराणि मनूनामिदानीन्तनाद्वैवस्वतमनोः प्रागतीतानां स्वायम्भुवस्वारोचिषो त्तमतामसरैवतचाक्षुषाख्यानामन्तराणि प्रत्येकमेकसप्ततिचतुर्युगपरिमितकालरूपाणि । निन्ये निनाय । एतावत्कालं तपश्चरन्नवर्ततेत्यर्थः । मन्वन्तरे ष्विन्द्रादीनां मनोगुणव्यत्यासं दर्शयितुमाधुनिकेन्द्रो मार्कण्डेयमोहने नाशकदित्याह—*सप्तमः देवेन्द्रः तं सुरयुवतिमरुन्मन्मथैः मोहयिष्यन् योगोष्मप्लुष्यमाणैः* तु पुनः न अशकत् इति । सप्तमः वैवस्वताख्यसप्तममन्वन्तरभवः । देवेन्द्रः देवानामिन्द्रः पुरन्दराख्य तं तपस्यन्तं मार्कण्डेयम् । सुरयुवतिमरुन्मन्मथैः सुरयुवतिभिः अप्सरोभिः मरुता वासन्तेन मन्दमारुतेन मन्मथेन कामेन च ।

मोहयिष्यन् मोहयितुमिच्छन् योगोष्मप्लुष्यमाणैः योगस्य मार्कण्डेयतपसः ऊष्मणा प्लुष्यमाणैः दह्यमानैः । तैरीत्यत्राध्याहर्तव्यम्। तैः सुरयुवत्यादिभिः करणैः। तुर्विशेषे। न अशकन् तं मोहयितुमशक्तोऽभूत्। कः त्वज्जनं निर्जयेत्। कः त्वज्जनं तव श्रीकृष्णस्य जनं भक्तं निर्जयेत् जेतुं शक्तो भवेत्। न कोपि शक्नुयादित्यर्थः। अहो मोहो देवेन्द्रस्यापीति भावः॥

तपःप्रभावं दर्शयति—

प्रीत्या नारायणाख्यस्त्वमथ नरसखः प्राप्तवानस्य पार्श्वं
तुष्ट्या तोष्ट्यमानः स तु विविधवरैर्लोभितो नानुमेने।
द्रष्टुं मायां त्वदीयां किल पुनरवृणोत् भक्तितृप्तान्तरात्मा
मायादुःखानभिज्ञस्तदपि मृगयते नूनमाश्चर्यहेतोः ॥ ६ ॥

प्रीत्येति॥ नरसखः नारायणाख्यः त्वं प्रीत्या अस्य पार्श्वं प्राप्तवान्। नरः सखा यस्य सः नरसखः। नारायण इत्याख्या यस्य सः नारायणाख्यः। त्वं श्रीकृष्णः। प्रीत्या तपसा जातेन प्रसादेन। अस्य मार्कण्डेयस्य। पार्श्वं समीपम्। प्राप्तवान् प्राविथ। वरदानार्थमिति भावः। मार्कण्डेयस्य वरवरणवैमुख्यं दर्शयति—अथ सः तु तुष्ट्या तोष्ट्यमानः विविधवरैः लोभितः भक्तितृप्तान्तरात्मा न अनुमेने इति। अथ त्वत्प्राप्त्यनन्तरम्। सः मार्कण्डेयः। तुर्विशेषे। तुष्ट्या अतर्कितभगवद्दर्शनजनितपरमानन्दानुभवेन। तोष्ट्यमानः पुनः पुनः स्तुतिं कुर्वन्। विविधवरैः विविधैः नानाप्रकारैर्वरैरनुग्रहैः। लोभितः प्रलोभितः सन्। भक्तितृप्तान्तरात्मा भक्त्या तृप्तः अन्तरात्मा अन्तरङ्गं यस्य सः। भक्तितृप्तानां मुक्तावपि नेच्छा जायत इति भावः। नानुमेने तान् वरान् नावृणोदित्यर्थः। किन्तु एकं वरमवृणोदित्याह—पुनः त्वदीयां मायां द्रष्टुम् अवृणोत् किल इति। पुनरिति विशेषे। किन्त्वित्यर्थः। स इत्यत्राप्यन्वेति। सः मार्कण्डेयः। तव श्रीकृष्णस्येमां त्वदीयाम्। द्रष्टुम् अवलोकितुम्। अवृणोत् अयाचत। को हि नाम दुःखदात्रीं मायां वृणुयादतोऽस्मिन्नसंभावनीयमेतदिति किल

शब्दार्थ । अत्रोपपत्तिमाह—मायादु खानभिज्ञ आश्चर्यहेतो तत् अपि मृग यते नूनमिति। मायया यद्दु खम्, तस्यानभिज्ञ तदजानन्। आश्चर्यहेतो अदृष्टस्य दर्शनेऽद्भुतकारणात्। तत् मायादु खम्। अपीति विरोधे। 'सुखार्था सर्वभूताना मता सर्वा प्रवृत्तय' इति वचने सत्यपि तद्विपर्यस्त दु ख मृगयत इति विरोध । नूनमिति वितर्के। एवमह तर्कयामीति भाव ॥

अथ मायादर्शनप्रकारमाह—

याते त्वय्याशु वाताकुलजलदगलत्तोयपूर्णातिघूर्ण
त्सप्तार्णोराशिमग्ने जगति स तु जले सम्भ्रमन् वर्षकोटीः।
दीन प्रैक्षिष्ट दूरे वटदलशयन कञ्चिदाश्चर्यबाल
त्वामेव श्यामलाङ्ग वदनसरसिजन्यस्तपादाङ्गुलीकम् ॥ ७ ॥

यात इति॥ त्वयि याते जगति आशु वाताकुलजलदगलत्तोय पूर्णातिघूर्णत्सप्तार्णोराशिमग्ने स तु जले वर्षकोटी सम्भ्रमन् दीन वटदल शयन श्यामलाङ्ग वदनसरसिजन्यस्तपादाङ्गुलीक त्वाम् एव कञ्चित् आश्चर्य बाल दूरे प्रैक्षिष्ट। त्वयि नरनारायणाख्ये श्रीकृष्णे। याते मायादर्शना भिलाषिणे मार्कण्डेयायाभिमतवर दत्वा बदरिकाश्रम प्रति गते सति। जगति प्रपञ्चे। आशु शीघ्रम्। वाताकुलजलदगलत्तोयपूर्णातिघूर्णत्सप्तार्णो राशिमग्ने वातेन वायुना आकुलेभ्या जलदेभ्य मेघेभ्य गलता पतता तोयेन जलेन पूर्णै अत एवातिघूर्णद्भि उपर्युपरि भ्रमद्भि सप्तभिरर्णोराशिभि समुद्रै मग्ने अदर्शन प्रापिते सति। स मार्कण्डेय । तुर्विशेषे। लोके जलमग्ने आधाराधेयभावेन लोकस्थेष्वपि सकलचराचरेष्वदर्शन गतेष्ववशिष्ट एकोऽयमिति विशेष । जले तोयोपरि। वर्षकोटी अनेकवर्षाणि। सम्भ्रमन् इतस्तत सञ्चरन्। दीन क्षुत्तृड्भ्या जलान्तर्भिवायुना चोपहतत्वाच्छोकमोहभयादिभिराक्रान्त त्वाच्च परवश सन्। वटदलशयन वटस्य भूमावत्युन्नते कस्मिंश्चित् गिरिशृङ्गे स्थितस्य जलोपरि दृश्यमानशाखापल्लवस्यालस्य न्यग्रोधवृक्षस्य दल प्रागुत्तर शाखागतपत्रपुट शयन शय्या यस्य तम्। श्यामलाङ्ग सजलजलधरश्यामल

कोमलशरीरम्। वदनसरसिजन्यस्तपादाङ्गुलीकं वदनसरसिजे अरुणकमलोदर सदृशवदनकुहरे न्यस्ता कराभ्यामाकृष्य प्रवेशिता पादाङ्गुली चरणाङ्गुष्ठोदेन तम्। त्वां श्रीकृष्णम्। एवकारोऽन्यस्य व्यवच्छेदे। कश्चित् अपरिच्छेद्यम्। आश्चर्यबालम् एवंदृष्टतया आश्चर्यकारिणं पोतशरीरम्। दूरे दूरदेशे प्रैक्षिष्ट दृष्टवान्॥

मायादर्शनप्रकारमुपसंहरन्नाह—

दृष्ट्वा त्वां हृष्टरोमा त्वरितमुपगतः स्प्रष्टुकामो मुनीन्द्रः
श्वासेनान्तर्निविष्टः पुनरिह सकलं दृष्टवान् विष्टपौघम्।
भूयोऽपि श्वासवातैर्बहिरनुपतितो वीक्षितस्त्वत्कटाक्षै-
र्मोदादाश्लेष्टुकामस्त्वयि पिहिततनौ स्वाश्रमे प्राग्वदासीत् ॥८॥

दृष्ट्वेति॥ मुनीन्द्रः त्वां दृष्ट्वा हृष्टरोमा त्वरितम् उपगतः स्प्रष्टुकामः श्वासेन अन्तः निविष्टः पुनः इह सकलं विष्टपौघं दृष्टवान्। मुनीन्द्रः मार्कण्डेयः। त्वां वटदलशयनबालरूपं श्रीकृष्णम्। दृष्ट्वा दूरतोऽवलोक्य। हृष्टरोमा कथमिदं बालदर्शनमित्यद्भुतेन पुलकितशरीरः। त्वरितं कोऽयमिति जिगमिषया अतिशीघ्रम्। उपगतः समीपं प्राप्तः। स्प्रष्टुकामः बालं स्प्रष्टुं प्रवृत्तः। श्वासेन बालस्य निश्वासोच्छ्वासकरणावसरेऽन्तः प्रविशता वायुना कर्त्रा। अन्तः नासाद्वारेणान्तर्भागे। निविष्टः प्रविष्टश्च सन्। पुनः पुनरपि। इह बालोदरे। सकलं सर्वम्। विष्टपौघं प्रपञ्चसञ्चयम्। दृष्टवान् ददर्श। भगवतो मायासंग्रहणमाह—भूयः अपि श्वासवातैः बहिः अनुपतितः त्वत्कटाक्षैः वीक्षितः मोदात् आश्लेष्टुकामः त्वयि पिहिततनौ स्वाश्रमे प्राग्वत् आसीत् इति। मुनीन्द्रे इत्यत्रापि अन्वेति। भूयः पुनः। अपिः समुच्चये। श्वासवातैः बहिर्गच्छद्भिः श्वासानिलैः कर्तृभिः। बहिः शरीरान्तर्भागान्नासाद्वारेण बहिष्ठे प्रलयजले। अनुपतितः आपतितः। त्वत्कटाक्षैः तव वटदलशयनरूपस्य श्रीकृष्णस्य कटाक्षैः कर्तृभिः। वीक्षितः विशेषेणावलोकितः। यथा तत्त्वज्ञानोदयः स्यात्, तथाऽवलोकित इत्यर्थः। अत एव मोदात्

भगवत्कटाक्षसम्पातसम्भृतसम्मोहतया तत्त्वज्ञानोदयजनितात् सन्तोषात्। आश्लेष्टुकामः आश्लेष्टुं भगवन्तमालिङ्गितुं कामयतीति तथाविधश्च सन्। त्वयि श्रीकृष्णे। पिहिततनौ पिहिता तिरोहिता तनुः प्रलयजलवटवृक्ष तत्पत्रपुटशयानबालादिरूपं शरीरं येन तथाविधे सति। प्रथमं बालरूपं तिरोऽभूत, ततो वटवृक्षः, ततः प्रलयजलमिति सर्वस्मिन्नपि तिरोभूते सतीत्यर्थः। स्वाश्रमे स्वस्याश्रमे पुष्पभद्रातीरे भद्रवटाधश्शिलशिलायाम्। प्राग्वत् पूर्ववत्। स्थितः आसीत् बभूव। अत्र च मायायाः स्वरूपतः प्रदर्शनस्याशक्यत्वात् भगवता कार्यमुखेन दर्शिता सेति द्रष्टव्यम्॥

*अथ विष्णुभक्त्या सन्तुष्टस्य शिवस्यानुग्रहप्रकारमाह—*

**गौर्या सार्धं तदग्रे पुरभिदथ गतस्त्वत्प्रियप्रेक्षणार्थी**
**सिद्धानेवास्य दत्वा स्वयमयमजरामृत्युतादीन् गतोऽभूत्।**
**एवं त्वत्सेवयैव स्मररिपुरपि सम्प्रीयते येन तस्मा-**
**न्मूर्तित्रय्यात्मकस्त्वं ननु सकलनियन्तेति सुव्यक्तमासीत् ॥ ९ ॥**

**गौर्येति॥** अथ पुरभित् त्वत्प्रियप्रेक्षणार्थी गौर्या सार्धं तदग्रे गतः। अथ अनन्तरम्। पुराणि भिनत्तीति पुरभित् परमशिवः। त्वत्प्रियप्रेक्षणार्थी तव श्रीकृष्णस्य प्रियस्य भक्तस्य प्रेक्षणमवलोकनमर्थयते कामयत इति तथोक्तः सन्। गौर्या स्वप्रेयस्या पार्वत्या। सार्धं सह। तदग्रे तस्य मार्कण्डेयस्याग्रे पुरोभागे। गतः प्राप्तः। अभूदित्युत्तरवाक्यादाकृष्य योजनीयम्। वरदान प्रकारमाह—अयम् अस्य स्वयं सिद्धान् एव अजरामृत्युतादीन् दत्वा गतः अभूत् इति। अयं परमशिवः। अस्य मार्कण्डेयस्य। स्वयं सिद्धान् स्वतपःप्रभावेणैव प्राप्तान्। अजरामृत्युतादीन्। जरामरणरहितत्वादीन्। आदिशब्देन विरक्तियुक्तविज्ञानत्रिकालज्ञानादयो गृह्यन्ते। दत्वा प्रदाय। गतः तिरोभूतः। अनेन भगवतो मूर्तित्रयात्मकत्वसर्वेश्वरत्वे सिद्धे इत्याह— एवं येन त्वत्सेवया एव स्मररिपुः अपि सम्प्रीयते, तस्मात् त्वं मूर्तित्रय्यात्मकः सकलनियन्ता ननु इति सुव्यक्तं आसीत् इति। एवम् अनेन प्रकारेण।

येन हेतुना। त्वत्सेवया तव श्रीकृष्णस्य सेवया भजनेन। एवकारो हरादिसेवाया व्यवच्छेदे। स्मररिपुः कामान्तकः परमशिवः। अपीति ब्रह्मणः समुच्चये। सम्प्रीयते सम्यक् तुष्टो भवति। तस्मात् तद्धेतोः। त्वं श्रीकृष्णः। मूर्तित्रय्यात्मकः मूर्तीनां ब्रह्मविष्णुगिरिशानां त्रयी आत्मा स्वरूपं यस्य सः। विष्णोरेव कार्यनिमित्ता अवस्थाभेदा मूर्तित्रयमित्यभिप्रायः। सकलनियन्ता सर्वनियामकः। नन्वित्यवधारणे। इति एतत्। सुव्यक्तं सुष्ठु अतिशयेन व्यक्तं स्पष्टम्॥

ननु शिवस्यावस्थाभेदा इति किं न स्यादित्याशङ्क्य स्थानभेदेन विष्णोस्तेभ्यो व्यतिरेकः सम्भवत्यैक्येऽपीत्याह—

त्र्यंशेऽस्मिन् सत्यलोके विधिहरिपुरभिन्मन्दिराण्यूर्ध्वमूर्ध्वं
　तेभ्योऽप्यूर्ध्वं तु मायाविकृतिविरहितो भाति वैकुण्ठलोकः।
तत्र त्वं कारणाम्भस्यपि पशुपकुले शुद्धसत्त्वैकरूपी
　सच्चिद्ब्रह्माद्वयात्मा पवनपुरपते पाहि मां सर्वरोगात्॥ १०॥

त्र्यंश इति॥ अस्मिन् त्र्यंशे सत्यलोके ऊर्ध्वम् ऊर्ध्वं विधिहरिपुरभिन्मन्दिराणि। अस्मिन् ब्रह्माण्डे। त्रयः ब्रह्मविष्णुशिवलोकरूपा अंशा भागा यस्मिन् सः त्र्यंशस्तस्मिन्। सत्यलोके चतुर्दशसु लोकेषु सर्वोपरिस्थे सत्याख्ये लोके। ऊर्ध्वमूर्ध्वम् ऊर्ध्वक्रमेण। विधिहरिपुरभिन्मन्दिराणि ब्रह्मविष्णु शिवस्थानानि। सत्यलोके त्रिधा विभक्ते अधोभागे ब्रह्ममन्दिरम्, तदुपरि मध्यभागे विष्णुमन्दिरम्, तस्य चोपरिभागे शिवमन्दिरमित्यर्थः। भान्तीति वचनविपरिणामेनोत्तरवाक्याद‍ाकृष्याल योजनीयम्। तत्रस्थास्त्रिमूर्तयः सृष्टि स्थितिसंहारान् कुर्वन्तीति भावः। वैकुण्ठलोकस्थानमाह—मायाविकृतिविरहितः वैकुण्ठलोकः तु तेभ्यः अपि ऊर्ध्वं भाति इति। मायाविकृतिविरहितः माया विकृतिभिर्महदहङ्कारादिषोडशविकारैर्विरहितः वियुक्तः शुद्धसत्त्वमय इत्यर्थः। वैकुण्ठलोकः भगवन्निवासस्थानं विकुण्ठनिलयः। तुर्विशेषे। तेभ्योऽप्यूर्ध्वं भातीति विशेषः। तेभ्यः विधिहरिहरमन्दिरेभ्यः। सत्यलोकादित्यर्थः। अपिस्समुच्चये।

ऊर्ध्वम् उपरिभागे ब्रह्माण्डात् बहिर्भाग इत्यर्थः। भाति शोभते। तत्र कारणाम्भसि पशुपकुले अपि त्वं शुद्धसत्त्वैकरूपी सचिद्ब्रह्माद्वयात्मा। तत्र वैकुण्ठलोके। कारणाम्भसि आवरणोदके। पशुपकुले नन्दगोपगृहे। अविस्समुच्चये। त्वं भगवान् श्रीकृष्णः। शुद्धसत्त्वैकरूपी शुद्धमावरणाभावात् स्वच्छं सत्त्वैकं केवल सत्त्वमयं रूपं स्वरूपं यस्य सः। सचिद्ब्रह्माद्वयात्मा सचिदानन्दाद्वयब्रह्मशरीरश्च सन्। भासीति पुरुषविपरिणामेनात्राप्यन्वेति। अथ प्रार्थयते—हे पवनपुरपते त्वं मां सर्वरोगात् पाहि इति। पवनपुरपते श्रीगुरुवायुपुरनाथ। त्वं श्रीकृष्णः। माम् अनन्यशरणम्। सर्वरोगात् सर्वस्मान्निदोषाद्रोगात् बाह्यादाभ्यन्तराच्च आमयौघात्। पाहि त्रायस्व ॥

इत्युत्तमभक्तिप्रार्थनावर्णनं मार्कण्डेयस्य प्रलय

प्रदर्शनवर्णनं च

सप्तनवतितमदशकम् ॥

## अष्टनवतितमदशकम् ॥

एवं स्तुत्यस्य विष्णोर्निष्कलत्वं प्रसाध्य तद्रूपेण स्तौति—

यस्मिन्नेतद्विभातं यत इदमभवद्येन चेदं य एत-
द्योऽस्मादुत्तीर्णरूपः खलु सकलमिदं भासितं यस्य भासा।
यो वाचां दूरदूरे पुनरपि मनसां यस्य देवा मुनीन्द्रा
नो विद्युस्तत्त्वरूपं किमु पुनरपरे कृष्ण तस्मै नमस्ते ॥ १ ॥

यस्मिन्निति ॥ हे कृष्ण तस्मै ते नमः। कृष्ण सचिदानन्दस्वरूप। तस्मै तादृशाय। ते तुभ्यम् श्रीकृष्णाय नमः। अस्त्विति

शेषः। किं नमस्कारमात्रेणेत्यत्राह—एतत् यस्मिन् विभातम्, इदं यतः अभवत्, इदं येन च, एतत् यः, अस्मात् उत्तीर्णरूपः खलु यः, सकलम् इदं यस्य भासा भासितम्, यः वाचां दूरदूरे, पुनः मनसामपि, देवाः मुनीन्द्राः यस्य तत्त्वरूपं नो विदुः, अपरे पुनः किमु इति। एतत् जगत्। यस्मिन् भगवति। विभातं प्रकाशितम्। तिष्ठतीति शेषः। इदं जगत्। यतः निमित्तोपादानकारणभूतात् भगवतः। अभवत् बभूव। इदं जगत्। येन भगवता। चकारादेवं यातीत्यर्थः। एतत् जगत्। यः यद्रूपो भगवान्। भगवानेव जगदात्मना भाति, अतो जगदात्मना प्रतीतस्य सिद्धौ न कारणान्तरापेक्षेति भावः। अस्मात् आत्मन्यविद्याकल्पिताज्जगतः। उत्तीर्णरूपः उत्तीर्णं व्यतिरिक्तं रूपं यस्य सः। खल्वित्यवधारणे। यो भगवान्। भवतीति शेषः। भगवतो जगदात्मकत्व प्रसङ्गे विकारित्वप्रसङ्गो नैवेत्यर्थः। सकलं समस्तम्। इदं जगत्। यस्य भगवतः। भासा तेजसा। भासितं प्रशोभितम्। भवतीति शेषः। यः भगवान् वाचां लौकिकानां वैदिकानां च वचसाम्। दूरदूरे अत्यन्तं दूरे। वाच्यवाचक संबन्धाभावादित्यर्थः। तिष्ठतीति शेषः। पुनः अनन्तरम्। मनसां मनोव्यापाराणाम्। अपिः समुच्चये। दूरदूरे। तिष्ठतीत्यत्रापि सम्बध्यते। देवाः अमराः। मुनीन्द्राः ब्रह्मर्षिदेवर्षिप्रवराः। यस्य भगवतः। तत्त्वरूपम् पारमार्थिकम् स्वरूपम्। नो विदुः वेदितुं शक्ता न भवेयुः। अपरे अन्ये। पुनस्त्वर्थे। किमु विदुः नैव विदुरित्यर्थः। एवं दुर्ज्ञेयाय भगवते नम एव मया कर्तुं शक्यत इति भावः॥

एवं भगवतो जगत्कारणत्वमुपपाद्य अनन्तरं जगदनुग्राहकत्वमाह—

जन्माथो कर्म नाम स्फुटमिह गुणदोषादिकं वा न यस्मिन्
लोकानामूतये यः स्वयमनुभजते तानि मायानुसारी।
बिभ्रच्छक्तीररूपोऽपि च बहुतररूपो विभात्यद्भुतात्मा
तस्मै कैवल्यधाम्ने पररसपरिपूर्णाय विष्णो नमस्ते ॥ २ ॥

जन्मेति॥ हे विष्णो तस्मै पररसपरिपूर्णाय कैवल्यधाम्ने ते नमः। विष्णो व्यापिन्। तस्मै तथा जगदनुग्राहकाय। पररसपरिपूर्णाय पररसेन

परमानन्देन परिपूर्णाय। परमानन्दस्वरूपायेत्यर्थः। अत एव कैवल्यधाम्ने कैवल्यस्य मोक्षस्य धाम्ने निलयाय। अनेन भगवतो मोक्षप्रदत्वमुक्तम्। ते तुभ्यं श्रीकृष्णाय। नमः मम नमस्कारः। अस्त्विति शेषः। तच्छब्दार्थमाह— इह यस्मिन् जन्म अथो कर्म नाम गुणदोषादिकं वा स्फुटं न इति। इह प्रपञ्चे। यस्मिन् भगवति। जन्म श्रीकृष्णाद्यवतारः। अथो अनन्तरम्। कर्म कंसवधादि। नाम जन्मकर्मनिमित्तं श्रीकृष्णकंसान्तकादि। गुणदोषादिकं गुणश्च दोषश्च गुणदोषौ सदसदात्मकावादौ यस्य पुत्रमित्रकलत्रादेस्तत्। वाकारः समुच्चये, विकल्पे वा। स्फुटं परमार्थतः। न। अस्तीति शेषः। यः माया नुसारी लोकानाम् ऊतये। स्वयं तानि अनुभजते। यः भगवान्। माया नुसारी मायामनुसरन्। मायानाथाममिनीयेत्यर्थः। लोकानां जगताम्। ऊतये अनुग्रहाय। स्वयम् न परप्रेरणयेत्यर्थः। तानि जन्मकर्मनामगुण दोषादीनि। अनुभजते अङ्गीकरोति। अरूपोपि शक्तीः बिभ्रत् बहुतर रूपः अद्भुतात्मा विभाति च। य इत्यत्राप्यन्वेति। यः भगवान्। अरूपः रूपरहितः। निर्गुण इति यावत्। शक्ती विद्याऽविद्याज्ञानैश्वर्यादि लक्षणाः। बिभ्रत् दधत्। अपिर्विरोधे। बहुतररूपः बहुतराणि स्थावरजङ्गमभेदेन सुरनरतिर्यगादिभेदेन च नितरां बहूनि रूपाणि स्वरूपाणि यस्य सः। अत एवाद्भुतात्मा। अद्भुत आश्चर्यकरः आत्मा स्वरूपं यस्य स। विभाति विशेषेण शोभते। चकारः क्रियासमुच्चये॥

ननु बहुतररूपत्वे कथमरूपत्वमित्याशङ्क्य तत्स्वरूपस्य सर्वद्वैतनिषेधा वधित्वेनोपपादयति—

नो तिर्यञ्चं न मर्त्यं न च सुरमसुरं न स्त्रियं नो पुमांसं
न द्रव्यं कर्म जातिं गुणमपि सदसद्वापि ते रूपमाहुः।
शिष्टं यत् स्यान्निषेधे सति निगमशतैर्लक्षणावृत्तितस्तत्
कृच्छ्रेणावेद्यमानं परमसुखमयं भाति तस्मै नमस्ते ॥ ३ ॥

नो तिर्यञ्चमिति॥ ते रूपं तिर्यञ्चं नो आहुः। ते तव श्रीकृष्णस्य। रूपं स्वरूपम्। परब्रह्मेति यावत्। तिर्यञ्चं पक्षिमृगादिरूपम्।

पक्षिमृगाद्यन्यतमशरीरवत् । सम्भाव्य ज्ञातुमशक्यमित्यर्थः । आहुः ब्रुवन्ति । उपनिषद इति शेषः । एवमुत्तरवाक्येऽपि । मर्त्यं न, सुरम् असुरं च न, स्त्रियं नो पुमांसं नो, द्रव्यं कर्म जातिं गुणमपि सत् असत् अपि वा न । मर्त्यं मनुष्यम् । सुरं देवम् । असुरं दैत्यम् । चकारः सुरासुरयोस्समुच्चये । स्त्रियं योषितम् । पुमांसं पुरुषम् । स्त्रीपुंपदप्रयोगो नपुंसकस्याप्युपलक्षणम् । द्रव्यं पञ्चमहाभूतानि । कर्म जन्मनिमित्तं शुभाशुभकर्म । जातिं घटत्वपटत्वादिम्, ब्राह्मणत्वादिं वा । गुणं सत्त्वादि । अपिशब्दो द्रव्यादीनां समुच्चये । सत् चेतनम् । असत् अचेतनम् । तिर्यगादीन् निषिध्य तेभ्यो विभिन्नतया यत्किञ्चिदस्ति चेत्तदपीति प्रतिपादितमनेन सदसत्पदद्वयेन । आहुरिति सर्वत्र सम्बध्यते । यद्येवं दृष्टमदृष्टं च समस्तं निषिद्धम्, तर्हि कीदृशं भगवतो रूपमित्यत्राह—निषेधे सति यत् शिष्टं स्यात्, निगमशतैः लक्षणावृत्तितः कृच्छ्रेण आवेद्यमानं परमसुखमयं यत् भाति, तत् ते रूपमाहुः । निषेधे एवं सर्वेषामपि निषेधे । सति वर्तमाने सति । शिष्टम् अवशिष्टम् । स्यात् भवेत् । निगमशतैः निगमानाम् उपनिषद्वाक्यानां शतैः अनेकैः । लक्षणावृत्तितः निषेधवाक्यस्य मुख्यार्थस्य निषेधबाधितत्वात्तदवधिभूतेऽर्थे या वृत्तिस्सा लक्षणावृत्तिस्तया । तृतीयार्थे तसिः । कृच्छ्रेण वाच्यवाचकसंबन्धं विना । आवेद्यमानं प्रतिपाद्यमानम् । परमसुखमयं परमानन्दमयम् । भाति शोभते । स्यात् भातीत्यनयोः समुच्चयार्थे चकारोऽध्याहर्तव्यः । तत्ते रूपमाहुरित्यर्थः । एवंविधस्य भगवद्रूपस्य मन्दबुद्धिना मया ज्ञातुमशक्यत्वान्नमस्कार एव क्रियत इत्याह—तस्मै ते नमः इति । तस्मै च एवंविधस्तादृग्रूपाय । ते तुभ्यं श्रीकृष्णाय । नमः मम नमस्कारः । अस्त्विति शेषः । अन्यत् किमपि कर्तुमशक्यतयैवं क्रियत इति भावः ॥

अथ भगवतः सर्वसाक्षित्वं प्रतिपादयति—

मायायां बिम्बितस्त्वं सृजसि महदहङ्कारतन्मात्रभेदै-
र्भूतग्रामेन्द्रियाद्यैरपि सकलजगत् स्वप्नसङ्कल्पकल्पम् ।

भूयः संहृत्य सर्वं कमठ इव पदान्यात्मना कालशक्त्या
गम्भीरे जायमाने तमसि वितिमिरो भासि तस्मै नमस्ते ॥ ४ ॥

मायायामिति ॥ त्वं मायायां बिम्बितः महदहङ्कारतन्मात्रभेदैः भूतग्रामेन्द्रियाद्यैः अपि स्वप्नसङ्कल्पकल्पं सकलजगत् सृजसि। त्वं श्रीकृष्ण। मायायां स्वस्मात् पृथगिव स्थितायाम्। बिम्बितः चिच्छक्त्या प्रतिबिम्बितः सन्। महान् महत्तत्वम्, अहङ्काराणां सात्त्विकराजसतामसानां तन्मात्राणां शब्दस्पर्शरूपरसगन्धानां च भेदाः प्रकाराश्च महदहङ्कारतन्मात्रभेदास्तैः। भूतग्रामः पृथिव्यादिमहाभूतसञ्चयः, इन्द्रियाणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चायान्यादौ भवानि येषां प्राणादीनां तैर्भूतग्रामेन्द्रियाद्यैः। अपि समुच्चये। स्वप्नसङ्कल्पकल्पं स्वप्नसङ्कल्पसदृशम्। अनेन सत्तया दृश्यमानमपि जगन्मिथ्येति दर्शितम्। सकलजगत् सकलं सर्वं जगत् लोकम्। सृजसि उत्पादयसि। त्वं भूयः कमठः पदानि इव कालशक्त्या सर्वं संहृत्य जायमाने गम्भीरे तमसि वितिमिरः आत्मना भासि। त्वं श्रीकृष्ण। भूयः पुनः। स्वसृष्टस्य जगतश्चिरकालरक्षणानन्तरमित्यर्थः। कमठः कूर्मः। पदानि पादौ करौ च। यथा कूर्मश्चिरं विहृत्य स्वपदानि स्वस्मिन् संहृत्य तूष्णीं भवति, तथेत्यर्थः। कालशक्त्या कालाख्यया शक्त्या। सर्वं स्वसृष्टं सर्वम्। संहृत्य आत्मनि विलयं प्रापय्य। जायमाने सर्वजगद्विलयानन्तरमुद्भूयमाने। गम्भीरे अप्रतर्क्ये। तमसि सुषुप्तौ। वितिमिरः तिमिररहितः। आत्मना स्वस्वरूपेण। भासि शोभसे। अत्रायमाशयः—सर्वसंहारानन्तरं सुषुप्तौ सत्यां सकलजगन्निदानभूतमज्ञानं तमश्शब्दवाच्यं ■ लयं गच्छति, अन्यथा जगतः पुनरुत्पत्त्यभावात्, 'सुखमहमस्वाप्सम्, न किञ्चिदवेदिषम्' इत्युत्थितस्य परामर्शानुपपत्तेश्चेति। अथ नमस्करोति—तस्मै ते नम इति। यः एवम्भूतस्तस्मै। ते तुभ्यं श्रीकृष्णाय। नमः नमस्कारः। अस्त्विति शेषः॥

ननु भगवतो जगत्कारणत्वमसिद्धम्, वादिविप्रतिपत्तेरित्याशङ्कायां संज्ञाभेद एव विप्रतिपत्तिनान्यनीत्याह—

शब्दब्रह्मेति कर्मेत्यणुरिति भगवन् काल इत्यालपन्ति
त्वामेकं विश्वहेतुं सकलमयतया सर्वथा कल्प्यमानम् ।
वेदान्तैर्यत्तु गीतं पुरुषपरचिदात्माभिधं तत्तु तत्त्वं
प्रेक्षामात्रेण मूलप्रकृतिविकृतिकृत् कृष्ण तस्मै नमस्ते ॥ ५ ॥

शब्दब्रह्मेति ॥ हे भगवन् एकं त्वां शब्दब्रह्म इति कर्म इति अणुः इति कालः इति विश्वहेतुम् आलपन्ति। भगवन्नैश्वर्यादिसम्पन्न । एकम् अद्वितीयम् । त्वां श्रीकृष्णम्। शब्दब्रह्म नादब्रह्म । इति एवम् । कर्म जीवादृष्टम् । अणुः परमाणुः । कालः कालस्वरूपः । विश्वहेतुं जगत्कारणभूतं सन्तम् । आलपन्ति वदन्ति । वादिन इति शेषः । केचिद्वादिनः शब्दब्रह्म जगत्कारणभूतमिति, अन्ये कर्मेति, अपरे परमाणुरिति, इतरे काल इति च परस्परं प्रवदन्तीत्यर्थः । सर्वेषामप्यभिधेयस्त्वमेक एवेति भावः । अत्र हेतुं दर्शयति—सकलमयतया सर्वथा कल्प्यमानम् इति । सकलमयतया शब्दब्रह्मादिसर्वात्मकत्वेन । सर्वथा तत्तद्वादिवाक्यानुसारेण । कल्प्यमानं प्रतिपाद्यमानम्। सिद्धान्तमाह—वेदान्तैः तु यत् पुरुषपरचिदात्माभिधं तत्त्वं गीतम्, तत् तु प्रेक्षामात्रेण मूलप्रकृतिविकृतिकृत् इति । वेदान्तैः वेदान्तवाक्यैः । तुर्विशेषे । पुरुषपरचिदात्माभिधं पुरुषः मायाया बिम्बितः, परः मायासम्बन्धरहितः, चित् शुद्धचैतन्यम्, आत्मा सर्वानुगतः ते अभिधा यस्य तथाविधम् । तत्त्वं ब्रह्म सत् । गीतं प्रतिपादितम् । तत् तथाप्रतिपादितत्त्वम् । प्रेक्षामात्रेण मायायाः प्रेरणमात्रेण । मूलप्रकृतिविकृतिकृत् मूलप्रकृतेर्मायाया विकृतिं कार्यं करोतीति तथोक्तम् । ननु कथं ब्रह्म जगत् करोतीति चेदुच्यते—यथा राज्ञः प्रेक्षणमात्रेण स्वसन्निधिं प्राप्तया प्रतिहारिण्या क्रियमाणस्य कर्मणः, तथा स्वसमवेतक्रियाफलकारित्वलक्षणं मुख्यकर्तृत्वं विना प्रकृतिमुखेन भगवतो जगतः कर्तृत्वमिति । अथ नमस्करोति—हे कृष्ण तस्मै ते नमः इति । कृष्ण जगत्तापकर्षण । तस्मै य एवंविधस्तादृशाय । ते तुभ्यं श्रीकृष्णाय । नमः मम नमस्कारः । अस्त्विति शेषः ॥

केयं मूलप्रकृतिरित्याशङ्कायां सदसत्त्वाभ्यामनिर्वचनीया विद्याविद्यात्मिका भगवच्छक्तिरित्याह—

सत्त्वेनासत्तया वा न च खलु सदसत्त्वेन निर्वाच्यरूपा
धत्ते याऽसावविद्या गुणफणिमतिवद्विश्वदृश्यावभासम् ।
विद्यात्वं सैव याता श्रुतिवचनलवैर्यत्कृपास्यन्दलाभे
संसारारण्यसद्यस्त्रुटनपरशुतामेति तस्मै नमस्ते ॥ ६ ॥

सत्त्वेनेति ॥ या सत्त्वेन असत्तया वा सदसत्त्वेन च निर्वाच्यरूपा न खलु असौ अविद्या गुणफणिमतिवत् विश्वदृश्यावभासं धत्ते । सतो भावः सत्त्वं तेन । असतो भावोऽसत्ता तथा । वाकारो विकल्पे । सदसत्त्वेन सतोऽसतश्च भावस्सदसत्त्वं तेन । सत्त्वासत्त्वयोः सम्मिलिततयेत्यर्थः । चकारोऽत्र विकल्पे । एवं प्रकारत्रयेणापीति भावः । निर्वाच्यरूपा निष्कृष्य वक्तुं शक्यं निर्वाच्यं रूपं स्वरूपं यस्यास्तथाविधा सती । न खलु न भवत्येव । असौ सत्त्वाद्यनिर्वाच्यरूपा । अविद्या अविद्याख्या । गुणफणि मतिवत् गुणे रज्ज्वादौ फणी सर्प इति या मतिर्बुद्धिस्सेव । विश्वदृश्याव भासं विश्वस्य सकलस्य दृश्यस्य द्रष्टुं शक्यस्य अवभासं जीवस्य संसारदुःख निदानभूतमभिमानम् । धत्ते दधाति । करोतीत्यर्थः । तस्या एव संसार सङ्कटनाशकत्वं चाह—यत्कृपास्यन्दलाभे सा एव श्रुतिवचनलवैः विद्यात्वं याता संसारारण्यसद्यस्त्रुटनपरशुताम् एति इति । यत्कृपास्यन्दलाभे यस्य भगवतः कृपायाः करुणायाः स्यन्दस्य प्रवाहस्य लाभे प्राप्तौ सति । सा अविद्या । एवेत्यवधारणे । श्रुतिवचनलवैः श्रुतिवचनानामुपनिषद्वाक्यानां लवैरंशैः । श्रवण मात्रेणेत्यर्थः । विद्यात्वं याता विद्यारूपिणी भूत्वा । संसारारण्यसद्यस्त्रुटन परशुता संसाररूपस्यारण्यस्य वनस्य अतिनिशिततया सद्यः शीघ्रं त्रुटने खण्डने परशुता परशुत्वम् । एति प्राप्नोति । अथ नमस्करोति—तस्मै ते नमः इति । तस्मै तथाविधाय करुणानिधये । ते तुभ्यं श्रीकृष्णाय । नमः मम नमस्कारः । अस्त्विति शेषः ॥

एवं प्रकृत्यधिष्ठितस्य ब्रह्मणो जगत्कारणत्वमुक्तम्, अथ तदनन्यत्वेन जगदात्मकत्वमुच्यते—

भूषासु स्वर्णवद्वा जगति घटशरावादिके मृत्तिकाव-
त्तत्त्वे सञ्चिन्त्यमाने स्फुरति तदधुनाप्यद्वितीयं वपुस्ते ।
स्वप्नद्रष्टुः प्रबोधे तिमिरलयविधौ जीर्णरज्जोश्च यद्व-
द्विद्यालाभे तथैव स्फुटमपि विकसेत् कृष्ण तस्मै नमस्ते ॥ ७ ॥

भूषास्विति ॥ तत् ते अद्वितीयं वपु अधुना अपि स्फुरति। तत् तत्कारणभूतम्। ते तव श्रीकृष्णस्य। अद्वितीय परब्रह्माख्यम्। वपु स्वरूपम्। अधुना जगत स्थितिकाले। अपि समुच्चये। स्फुरति प्रकाशते। नन्विदं ब्रह्मेति कस्यापि नानुभव इत्यत आह—तत्त्वे सञ्चिन्त्य माने इति। तत्त्वे परमार्थे। सञ्चिन्त्यमाने विचार्यमाणे। ब्रह्म उपादान कारणम्, जगत् तत्कार्यम्। कार्यकारणयोश्चाभिन्नत्व शास्त्रे स्थितमित्य नुसन्दधतो ब्रह्मैवेदं सकलमिति स्फुरण संभवत्येवेति भाव। अत्र दृष्टान्तमाह— भूषासु स्वर्णवत् घटशरावादिके मृत्तिकावत् वा इति। भूषासु कटककुण्ड लादिषु। स्वर्णवत् स्वर्णमिव। घटशरावादिके कुम्भशरावादौ। मृत्तिकावत् मृदिव। वाकार समुच्चये। यथा स्वर्णेन कार्यस्य कटकादे क्रियमाणत्वात् तस्मिन् स्वर्णमेवेदमिति, मृत्तिकया कार्यस्य घटादे क्रियमाणत्वात्तस्मिन् मृत्तिकैवेयमिति चानुभवरूपा प्रतीतिरदेति, तद्वदित्यर्थ। विद्यालाभे अपि तथा एव स्फुटं विकसेत्। विद्यालाभे ब्रह्मज्ञानोदये सति। अपिस्समुच्चये। तथा तेन प्रकारेण। एवेत्यवधारणे। स्फुटम् अविद्यास्तमयात् स्पष्टम्। विकसेत् प्रकाशेत। प्रपञ्चाकारपरित्यागेनाखण्डं ब्रह्मेति प्राकाशतेत्यर्थ। तथेत्युक्त प्रकारं दृष्टान्तोक्त्या विशदयति—स्वप्नद्रष्टु प्रबोधे तिमिरलयविधौ जीर्णरज्जो च यद्वत् इति। स्वप्नद्रष्टु स्वप्ने निद्राया द्रष्टुर्यानि कानिचिदवलोकयत। प्रबोधे निद्रापाये सति। तथा जीर्णरज्जो अन्धकारे दृष्टस्य सर्पभ्रमकारिणो जीर्ण पाशस्य। तिमिरलयविधौ तिमिरस्य अन्धकारस्य लयविधौ लयस्य दीपादिना

दूरीकरणस्य विधौ विधाने सति। चकारस्समुच्चये। यद्वत् यथा। यथा स्वप्ने दृष्टस्याभाव प्रबोधे भवति, यथा वा अन्धकारे दृष्टे रज्ज्वादौ सर्पबुद्धिस्तिमिराभावे अपयाति, तथैवेति सम्बन्ध। अथ नमस्करोति—हे कृष्ण तस्मै ते नम इति। कृष्ण श्रीकृष्ण। तस्मै यस्यैव वपुर्विकसेत्तस्मै। ते, तुभ्य श्रीकृष्णाय। नम मम नमस्कार। अस्त्विति शेष॥

एव प्रपञ्चनिष्प्रपञ्चभेदेन भगवत्स्वरूप स्तुत्वा अथ सर्वनियन्तृत्वेन स्तौति—

यद्भीत्योदेति सूर्यो दहति च दहनो वाति वायुस्तथाऽन्ये
यद्भीताः पद्मजाद्याः पुनरुचितबलीनाहरन्तेऽनुकालम्।
येनैवारोपिताः प्राङ्निजपदमपि ते च्यावितारश्च पश्चा
त्तस्मै विश्वं नियन्त्रे वयमपि भवते कृष्ण कुर्मः प्रणामम्॥ ८॥

यद्भीत्येति॥ यद्भीत्या सूर्य उदेति, दहन दहति, वायु वाति च, तथा अन्ये पद्मजाद्या पुन यद्भीता उचितबलीन् अनुकालम् आहरन्ते। येन एव ते प्राक् निजपदम् आरोपिता अपि पश्चात् च्यावितार च। यद्भीत्या यस्मात् भगवता भीत्या भयेन। सूर्य भगवान् सप्ताश्व। उदेति उदय माप्नोति। अस्तमयस्याप्युपलक्षणमिदम्। दहन अग्नि। दहति भस्मसात्करोति। वायु नभस्वान्। वाति सर्वत सञ्चरति। यद्भीत्येति दहनवायोरपि सम्बध्यते। चकार समुच्चये। तथा तेन प्रकारेण। न केवलमेते इति भाव। अन्ये अपरे। पद्मजाद्या ब्रह्मप्रमुखा। आदि शब्देनोक्तशेषा इन्द्रादयो गृह्यन्ते। पुनरिति स्वर्थे। यद्भीता यस्मा दनिष्टमाशङ्कमाना सन्त। उचितबलीन् यथाधिकार विहिता पूजा। अनुकाल कालानुसारेण। आहरन्ते यस्मै समर्पयन्ति। येन भगवता। एवकारोऽन्यस्य व्यवच्छेदे। ते पद्मजाद्या। निजपद सत्यलोकादिक स्व स्व स्थानम्। आरोपिता प्रापिता। अपीति विरोधे। पश्चात् पुनर्द्वि परार्धावसाने। च्यावितार च्युति प्रापिता स्यु। चकार समुच्चये।

अथ नमस्करोति—हे कृष्ण वयमपि तस्मै विश्वं नियन्त्रे भवते प्रणामं कुर्मः इति। कृष्ण कालमेघश्यामलवर्ण। वयमित्यत्र बहुवचनेन मद्विधा अन्येपीत्यर्थः। अपिः समुच्चये। अनेन सूर्यादयोपि स्वनियन्तारं भगवन्तं प्रणमन्तीति द्योत्यते। तस्मै य एवंविधस्तादृशाय। विश्वं नियन्त्रे विश्वस्य विश्वस्थब्रह्मादीनां सकलचराचरजीविनाम्। नियन्त्रे नियामकाय। भवते श्रीकृष्णाय। प्रणामं साष्टाङ्गनमस्कारम्। कुर्मः कुर्महे॥

पुनरपि भङ्ग्यन्तरेण जगत्कर्तृत्वादिकं प्रतिपाद्याह—

**त्रैलोक्यं भावयन्तं त्रिगुणमयमिदं त्र्यक्षरस्यैकवाच्यं**
**त्रीशानामैक्यरूपं त्रिभिरपि निगमैर्गीयमानस्वरूपम्।**
**तिस्रोऽवस्था विदन्तं त्रियुगजनिजुषं त्रिक्रमाक्रान्तविश्वं**
**त्रैकाल्ये भेदहीनं त्रिभिरहमनिशं योगभेदैर्भजे त्वाम्॥ ९॥**

त्रैलोक्यमिति॥ अहं त्रिगुणमयम् इदं त्रैलोक्यं भावयन्तं त्र्यक्षरस्य एकवाच्यं त्रीशानाम् ऐक्यरूपं त्रिभिः निगमैः अपि गीयमानस्वरूपं तिस्रः अवस्थाः विदन्तं त्रियुगजनिजुषं त्रिक्रमाक्रान्तविश्वं त्रैकाल्ये भेदहीनं त्वां त्रिभिः योगभेदैः अनिशं भजे। त्रिगुणमयं सत्त्वरजस्तमोगुणात्मकम्। इदं दृश्यमानम्। त्रैलोक्यं लोकत्रयम्। भावयन्तं नियमेन सृजन्तम्। त्र्यक्षरस्य त्रीण्यक्षराणि यस्य तस्य प्रणवस्य। एकवाच्यम् एकं मुख्यं वाच्यम् अभिधेयम्। प्रणवार्थस्वरूपमित्यर्थः। त्रीशानां त्रिमूर्तीनाम्। ऐक्यरूपम् ऐक्यमेकीभाव एव रूपं स्वरूपं यस्य तम्। उक्तञ्च—'ब्रह्मा विष्णुश्च रुद्रश्च परस्यैव विभूतयः' इति। त्रिभिर्निगमैः ऋग्यजुस्सामाख्यैर्वेदैः। अपिस्समुच्चये। गीयमानस्वरूपं गीयमानं प्रतिपाद्यमानं स्वरूपं यस्य तम्। तिस्रोऽवस्थाः जाग्रत्स्वप्नसुषुप्तीः। विदन्तं वेत्तीति विदन् तम्। अवस्थात्रयसाक्षिणमित्यर्थः। त्रियुगजनिजुषं त्रिषु युगेषु त्रेतादिषु जनिं जुषत इति तथाविधम्। कृतयुगे प्रजानां कृतकृत्यतया अवतारप्रयोजनाभावादितरेषु त्रिषु त्रेताद्वापरकलिनामसु युगेष्ववतारजुषमित्यर्थः। त्रिक्रमाक्रान्तविश्वं त्रिभिः क्रमैः

पदविन्यासैराक्रान्तं व्याप्तं विश्वं ब्रह्माण्डं येन तम्। त्रैकाल्ये त्रयाणां कालानां भूतभविष्यद्वर्तमानरूपाणां समाहारस्त्रैकाल्यं तस्मिन्। भेदहीनं भेदेन भिदया हीनं वियुक्तम्। त्वां श्रीकृष्णम्। त्रिभिर्योगभेदैः ज्ञानकर्मभक्तियोगैः। अनिशम् अनवरतम्। भजे सेवे॥

भगवद्वपुषः सर्वोत्कृष्टत्वमाह—

सत्यं शुद्धं विबुद्धं जयति तव वपुर्नित्यमुक्तं निरीहं
निर्द्वन्द्वं निर्विकारं निखिलगुणगणव्यञ्जनाधारभूतम्।
निर्मूलं निर्मलं तन्निरवधिमहिमोल्लासि निर्लीनमन्त-
र्निस्सङ्गानां मुनीनां निरुपमपरमानन्दसान्द्रप्रकाशम्॥ १०॥

सत्यमिति॥ सत्यं शुद्धं विबुद्धं नित्यमुक्तं निरीहं निर्द्वन्द्वं निर्विकारं निखिलगुणगणव्यञ्जनाधारभूतं निर्मूलं निर्मलं निरवधिमहिमोल्लासि निस्सङ्गानां मुनीनाम् अन्तः निर्लीनं निरुपमपरमानन्दसान्द्रप्रकाशं तव तत् वपुः जयति। सत्यं परमार्थतः स्थितम्, असतः सत्ताप्रदत्वात्। शुद्धं शुद्धसत्त्वमयम्। विबुद्धं स्वप्रकाशसिद्धम्। नित्यमुक्तं नित्यमुक्तावस्थया बन्धराहित्येन स्थितम्। अथवा, नित्यं प्रपञ्चस्योत्पत्तेः प्राक् पश्चादपि विद्यमानत्वादुत्पत्तिक्षयरहितं सत्। उक्तम् उपनिषद्भिर्वर्णितम्। निरीहं निर्गता विगता ईहा चर्या चेष्टा यस्मात्तत्। कर्तृत्वभावतृ वादिरहितमित्यर्थः। निर्द्वन्द्वम् अद्वितीयम्, सुखदुःखशीतोष्णादिरहितमिति वा। निखिलगुणगणव्यञ्जनाधारभूतं निखिलानामशेषाणां गुणगणानां क्षमासत्यदयैश्वर्यादीनां व्यञ्जनस्य उत्पत्तेराधारभूतम्। निर्मूलं कारणहीनम्। निर्मलं रागादिदोषविमुक्तम्। निरवधिमहिमोल्लासि निरवधिभिः कालदेशापरिच्छिन्नैर्महिमभिर्माहात्म्यैरुल्लसतीति तथोक्तम्। निस्सङ्गानां निर्गता सङ्गाः मायाबन्धाः येभ्यस्तेषाम्। मुनीनामृषीणाम्। अन्तः अन्तरङ्गे। समाधाविति यावत्। निर्लीनं निश्चलतया प्रतिष्ठितम्। निरुपमपरमानन्दसान्द्रप्रकाशं परमानन्दः ब्रह्मानन्दश्च सान्द्रप्रकाशः सान्द्रावभासश्चेति परमानन्दसान्द्रप्रकाशौ, निरुपमौ निस्तुलौ परमानन्दसान्द्रप्रकाशौ

यस्मिंस्तथोक्तम् । तव श्रीकृष्णस्य । तत् अनिर्वाच्यम् । वपुः दिव्यमङ्गल विग्रहः । जयति सर्वोत्कर्षेण प्रकाशते ॥

अथोक्तरूपं परं ब्रह्म प्राप्तस्य न पुनः संसार इत्यभिप्रायेण कालचक्र परिभ्रमणभयनिवृत्तिं प्रार्थयते—

दुर्वारं द्वादशारं त्रिशतपरिमिलत्षष्टिपर्वाभिवीतं
सम्भ्राम्यत् क्रूरवेगं क्षणमनु जगदाच्छिद्य सन्धावमानम् ।
चक्रं ते कालरूपं व्यथयतु न तु मां त्वत्पदैकावलम्बं
विष्णो कारुण्यसिन्धो पवनपुरपते पाहि सर्वामयौघात् ॥ ११ ॥

दुर्वारमिति ॥ दुर्वारं द्वादशारं त्रिशतपरिमिलत्षष्टिपर्वाभिवीतं सम्भ्राम्यत् क्रूरवेगं क्षणमनु जगत् आच्छिद्य सन्धावमानं ते कालरूपं चक्रं त्वत्पदैकावलम्बं तु मां न व्यथयतु । दुर्वारं केनापि वारयितुमशक्यम् । द्वादशारं द्वादशमासात्मकद्वादशशिखरयुक्तम् । त्रिशतपरिमिलत्षष्टिपर्वाभिवीतं त्रिभिः शतैः परिमिलन्त्या षष्ट्या षष्ट्युत्तरत्रिशतेन पर्वभिः दिनसन्धिरूपधारासन्धिभि रभिवीतम् अभितो विशेषेण वीतं घटितम् । सम्भ्राम्यत् सम्यक् भ्राम्यमाणम् । क्रूरवेगम् अतिवेगम् । क्षणमनु क्षणं प्रति । जगत् लोकम् । आच्छिद्य बलादादायादर्शनं नेतुम् । सन्धावमानं सम्यक् धावमानम् । ते तव श्रीकृष्णस्य । कालरूपं कालस्वरूपम् । चक्रं संवत्सरात्मकमित्यर्थः । त्वत्पदैकावलम्बं तव श्रीकृष्णस्य । पदे चरणावेव एकः अद्वितीयः अवलम्बः आश्रयो यस्य तम् । तुरवधारणे । माम् अनन्यशरणम् । न व्यथयतु न पीडयतु । संसारदुःखं मा कार्षीदि त्यर्थः । अथ प्रार्थयते—हे पवनपुरपते कारुण्यसिन्धो विष्णो त्वं सर्वामयौघात् पाहि इति । पवनपुरपते श्रीगुरुवायुपुरनाथ । कारुण्यसिन्धो करुणापयोधे । विष्णो सर्वव्यापिन् । त्वं श्रीकृष्णः । मामित्यत्राप्यन्वेति । मां भगवदा श्रयमनन्यशरणम् । सर्वामयौघात् सर्वेषां सकलानामामयानां ओघात् समूहात् । पाहि त्रायस्व ॥

इति सत्यज्ञानादिस्वरूपाद् ब्रह्मणो जगदुत्पत्त्यादिनिरूपणम्
अष्टनवतितमदशकं संकम् ॥

## एकोनशततमदशकम् ॥

अथ नवभिः श्लोकैर्भगवन्महिमा वर्ण्यते—

विष्णोर्वीर्याणि को वा कथयतु धरणेः कश्च रेणून् मिमीते
यस्यैवाङ्घ्रित्रयेण त्रिजगदमिमितं मोदते पूर्णसम्पत् ।
योऽसौ विश्वानि धत्ते प्रियमिह परमं धाम तस्याभियायां
त्वद्भक्ता यत्र माद्यन्त्यमृतरसमरन्दस्य यत्र प्रवाहः ॥ १ ॥

विष्णोरिति ॥ कः वा विष्णोः वीर्याणि कथयतु । कः कीदृशो जनः । वीर्याणि महिम्नः । कथयतु । न कोपि कथयेदित्यर्थः । धरणेः रेणून् कः मिमीते च । धरणेर्भूमेः । रेणून् परागान् । को मिमीते । न कोपि गणयेदित्यर्थः । चकारो वाक्ययोः समुच्चये । भूरेणुगणनस्येव विष्णुवीर्यकथनस्यापारत्वान्न कोप्यत्र शक्तो भवेदिति भावः । प्रस्तुतं वीर्यं किञ्चित् वर्णयति—त्रिजगत् यस्य अङ्घ्रित्रयेण एव अमिमितं पूर्णसम्पत् मोदते इति । त्रिजगत् लोकत्रयम् । यस्य विष्णोः । अङ्घ्रित्रयेण त्रिभिः पदविन्यासैः । एवकारोऽवधारणे । जगत्त्रयाभिमितौ भगवतः पदत्रयेतरानपेक्षत्वमनेन व्यज्यते । अमिमितं परिच्छिन्नम् । अत एव पूर्णसम्पत् पूर्णाः सम्पदो यस्मिंस्तथाविधं सत् । मोदते सन्तुष्टसर्वजनं वर्तते । यः असौ विश्वानि धत्ते । योऽसौ विष्णुः । विश्वानि लोकान् । धत्ते योगैश्वर्येण दधाति । अहं तस्य प्रियम् इह परमं तत् धाम अभियायाम् । तस्य विष्णोः । प्रियम् इष्टम् । इह विश्वेषु । परमम् उत्कृष्टम् । तत् तथाविधम् । धाम वैकुण्ठपदम् । अभियायां प्राप्नुयाम् । परमत्वमुपपादयति—त्वद्भक्ताः यत्र माद्यन्ति इति । त्वद्भक्ता विष्णुभक्ताः । यत्र धाम्नि । माद्यन्ति उत्साहभरिता वर्तन्ते । अत्र हेतुमाह—यत्र अमृतरसमरन्दस्य प्रवाहः इति । यत्र वैकुण्ठपदे । अमृतरसमरन्दस्य अमृतरसो मोक्षसुखं तदेव मरन्दो मधु तस्य । प्रवाहः सर्वतो निष्यन्दः । व्याप्तिरिति यावत् ॥

यज्ञादयो भक्तानामैहिकसुखानुभवानन्तरमोक्षप्राप्तिहेतुभूता इत्याह—

आद्यायाशेषकर्त्रे प्रतिनिमिषनवीनाय भर्त्रे विभूते-
भक्तात्मा विष्णवे यः प्रदिशति हविरादीनि यज्ञार्चनादौ।
कृष्णाद्यं जन्म यो वा महदिह महतो वर्णयेत् सोऽयमेव
प्रीतः पूर्णो यशोभिस्त्वरितमभिसरेत् प्राप्यमन्ते पदं ते ॥ २ ॥

आद्यायेति ॥ स अयम् एव प्रीतः यशोभि. पूर्णः अन्ते प्राप्यं ते पदं त्वरितं अभिसरेत्। सः तादृग्विधः। अयं भक्तः। एवकारोऽन्यस्य व्यवच्छेदे। प्रीतः यथेष्टैहिकसुखानुभवेन सन्तुष्टः। यशोभिः सत्कीर्तिभिः। पूर्णः सम्पूर्णः। अन्ते शरीरपाते। प्राप्यम् अवश्यं प्रापणीयम्। ते तव श्रीकृष्णरूपिणो विष्णोः। पदं वैकुण्ठाख्यम्। त्वरितं जन्मान्तरविलम्बमन्तरेण। अभिसरेत् प्राप्नुयात्। तच्छब्दार्थमाह—यः भक्तात्मा आद्याय अशेषकर्त्रे प्रतिनिमिषनवीनाय विभूतेः भर्त्रे विष्णवे यज्ञार्चनादौ हविरादीनि प्रदिशति इति। यः जनः। भक्तात्मा भक्तियुक्तः आत्मा मनो यस्य तथाविधः सन्। भक्तियुक्तान्तरात्मा सन्नित्यर्थः। न पर वचनपटुः कपटभक्तवेषधारी चेति भावः। आद्याय आदौ भवाय। अशेषकर्त्रे सर्वजगतां स्रष्ट्रे। प्रतिनिमिषनवीनाय प्रतिनिमिष निमिषं प्रति नवीनाय नूतनाय। उपासकानां नित्यनूतनायेत्यर्थः। विभूते. श्रियः। भर्त्रे नाथाय। अनेन भक्तानां सम्पत्प्रदानसुकरत्वं भगवतो दर्शितम्। यज्ञार्चनादौ याग प्रतिमार्चनप्रभृतिषु। हविरादीनि हविरग्नौ होतव्यं घृतादिद्रव्यमादौ येषां नैवेद्यादीनां तानि। प्रदिशति प्रयच्छति। किञ्च, यः महतः महत् कृष्णाद्यं जन्म वर्णयेत् वा। यः भक्तात्मा जनः। महतः विष्णोः। महत् पूजनीयम्। कृष्णाद्यं जन्म श्रीकृष्णाद्यवतारम्। अत्र कृष्णाद्यं जन्मेत्यनेन कृष्णावतारात् प्रागेव बहुष्ववतारेषु जातेष्वपि तेषु कृष्णावतार एव स्वप्याधिका महिमनिः, यदत्र श्रीगुरवायुपुरक्षेत्रे भगवान् श्रीकृष्णमूर्तिर्भक्तानामुपासनाराधनाय प्रत्यक्षो भातीति कवेराशयो द्योत्यते। अयमाशयः कविनैव स्फुटीकृतो 'प्रद्युम्ना

वच्छक्रम्' इत्यादिना, सोऽयं कृष्णावतारो जयति' इत्यादिना च। वर्णयेत् पुनः पुनरुच्चरेत्। वाकारो विकल्पे॥

स्तुतिनामसङ्कीर्तनयोः फलमप्याह—

हे स्तोतारः कवीन्द्रास्तमिह खलु यथा चेतयध्वे तथैव
व्यक्तं वेदस्य सारं प्रणुवत जननोपात्तलीलाकथाभिः।
जानन्तश्चास्य नामान्यखिलसुखकराणीति सङ्कीर्तयध्वं
हे विष्णो कीर्तनाद्यैस्तव खलु महतस्तत्त्वबोधं भजेयम् ॥ ३ ॥

हे स्तोतार इति॥ हे कवीन्द्राः खलु स्तोतारः यूयम् इह यथा तं चेतयध्वे तथा एव वेदस्य सारं जननोपात्तलीलाकथाभिः व्यक्तं प्रणुवत। कवीन्द्राः कविश्रेष्ठाः। अनेनोपनिषद्वाक्यसारभूतभगवत्पराणां स्तवानां सुगम शब्दार्थतया निर्माणे स्तोतॄणां सामर्थ्यं व्यञ्जितम्। खल्वित्यवधारणे। न मन्दबुद्धयः कविम्मन्याश्चेति भावः। स्तोतारः स्तुतिपाठकाः। इह जगति। यथा येन प्रकारेण। तं विष्णुम्। चेतयध्वे अवगच्छथ। तथा तेन प्रकारेण। एवेति प्रकारान्तरव्यवच्छेदे। वेदस्य श्रुतेः। सारं सारभूतम्। वेदवाक्यानां परमतात्पर्यविषयीभूतमित्यर्थः। तमित्यत्रा प्यन्वेति। तं विष्णुम्। जननोपात्तलीलाकथाभिः जननैरवतारैरुपात्ताभिः अङ्गीकृताभिर्लीलानां कथाभिः कथनैः। वर्णनैरित्यर्थः। व्यक्तं विशदं यथा भवति तथा। यथा शब्दार्थयोः सुगमतया श्रोतॄणामानन्दप्रदं भवति, तथेत्यर्थः। प्रणुवत स्तुतिं कुरुत। हे जानन्तः यूयम् अखिलसुखकराणि इति अस्य नामानि सङ्कीर्तयध्वं च। जानन्तः परमार्थविदः मनुष्याः। अनेन नाम्नां सुखकरत्वं स्तोतृभिः सुविदितमेवेति द्योतितम्। अखिल सुखकराणि अखिलानि सकलानि सुखान्यैहिकान्यामुष्मिकाणि च कुर्वन्तीति तथोक्तानि। इति अस्माद्धेतोः। अस्य विष्णोः। नामानि हरे कृष्ण महादेवेत्यादीनि। सङ्कीर्तयध्वं सम्यक् कीर्तयध्वम्। तत्फलमाह—हे विष्णो अहं महतः तव कीर्तनाद्यैः खलु तत्त्वबोधं भजेयम् इति। विष्णो श्री

विकुण्ठनिलय। महतः पूज्यस्य। तव श्रीकृष्णस्य। कीर्तनाद्यैः कीर्तनध्यानादिभिः। तत्त्वबोधं तत्त्वज्ञानम्। भजेयं प्राप्नुयाम्॥

अथ विष्णोरिव तत्कर्मणां चानुसन्धानं कर्तव्यमित्याह—

विष्णोः कर्माणि सम्पश्यत मनसि सदा यैः स धर्मानबध्ना-
द्यानीन्द्रस्यैष भृत्यः प्रियसख इव च व्यातनोत् क्षेमकारी।
वीक्षन्ते योगसिद्धाः परपदमनिशं यस्य सम्यक्प्रकाशं
विप्रेन्द्रा जागरूकाः कृतबहुनुतयो यच्च निर्भासयन्ते ॥ ४ ॥

विष्णोरिति॥ यूयं विष्णोः कर्माणि सम्पश्यत। हे जानन्तो मनुष्याः यूयम्। विष्णोः श्रीविकुण्ठवासिनः। तानीत्यत्र योजनीयम्, उत्तरत्र यच्छब्ददर्शनात्। तानि तथाविधानि। कर्माणि प्रवृत्तीः। सदा सततम्। मनसि हृदये। सम्पश्यत सम्यक् पश्यत। ध्यायध्वमित्यर्थः। कर्मणां को विशेष इत्यत्राह—सः यैः धर्मान् अबध्नात् इति। सः विष्णुः। यैः कर्मभिः दुष्टनिग्रहशिष्टपरिपालनविद्यास्थापनलोकसङ्ग्रहणादिरूपैः। धर्मान् अभ्युदयार्थान् निश्रेयसार्थांश्च। अबध्नात् तत्तदधिकारिभिः संयोजयामास। किञ्च एषः इन्द्रस्य भृत्यः प्रियसखः च इव क्षेमकारी यानि व्यातनोत्। एषः विष्णुः। इन्द्रस्य त्रैलोक्यरक्षायामात्मना नियमितस्य देवराजस्य। भृत्यः दासः। इन्द्रकर्तृकस्य जगद्रक्षणस्य तेन कर्तुमशक्यत्वात् दासवत् स्वयं करणादित्यर्थः। प्रियसखः आप्तसुहृत्। तन्निर्देशं विनापि तद्धितानां करणात् प्रियसुहृदिवेति भाव.। चकारः समुच्चये। इवेति भृत्यप्रियसखयोः सम्भावनायाम्। क्षेमं सुखं करोतीति क्षेमकारी सन्। अर्थात् जगताम्। यानि कर्माणि शत्रुसंहरणसदुपदेशादिरूपाणि। व्यातनोत् कृतवान्। अथ विष्णोः सर्वोत्कृष्टत्वं दर्शयितुमाह—वीक्षन्त इत्यादि। योगसिद्धाः सम्यक्प्रकाशं यस्य परपदम् अनिशं वीक्षन्ते। योगसिद्धाः योगेन समाधियोगेन सिद्धाः विजितसमस्तैश्वर्यादिगुणा मुनयः। सम्यक्प्रकाशं सम्यक् आच्छादनलेशेनापि रहितः प्रकाशो यस्मिंस्तथाविधम्। यस्य विष्णोः। तदित्यत्र योज्यम्, उत्तर

यच्छब्ददर्शनात्। परपदं विकुण्ठनिलयम्। अनिशं अनवरतम्। वीक्षन्ते प्राप्य स्वेन पश्यन्ति। एवं समाधियोगेन विकुण्ठलोकदर्शनं सिद्ध्यतीति भावः। जागरूका. विप्रेन्द्राः कृतबहुनुतयः यत् निर्भासयन्ते च। जागरूकाः तात्पर्यवन्तः। विप्रेन्द्राः उत्तमब्राह्मणाः। सन्ध्योपासनवेदपाठादिभिस्समेधितब्रह्मतेजस्का इति भावः। कृतबहुनुतयः कृता बह्व्यो बहुप्रकाराः नुतयः स्तुतयो यैस्तथा विधाः सन्तः। यत् परपदम्। निर्भासयन्ते प्रकाशयन्ति। चकारः क्रिया समुच्चये ॥

अथ वैकुण्ठवासित्वेन भगवन्तं स्तौति—

**नो जातो जायमानोऽपि च समधिगतस्त्वन्महिम्नोऽवसानं**
**देव श्रेयांसि विद्वान् प्रतिमुहुरपि ते नाम शंसामि विष्णो।**
**तं त्वां संस्तौमि नानाविधनुतिवचनैरस्य लोकत्रयस्या-**
**प्यूर्ध्वं विभ्राजमाने विरचितवसतिं तत्र वैकुण्ठलोके ॥ ५ ॥**

नो इति ॥ हे देव जात जायमान. अपि च त्वन्महिम्नः अवसानं नो समधिगतः। देव प्रकाशमान। जातः प्रागुत्पन्न.। जायमानः अधुना वर्तमानः। अपि चेति समुच्चये। त्वन्महिम्नः तव श्रीकृष्णस्य महिम्नः माहात्म्यस्य। अवसानम् अन्तम्। नो समधिगतः न प्राप्तः। कोपि न प्राप्त इत्यर्थः। हे विष्णो अहं श्रेयांसि विद्वान् प्रतिमुहु अपि ते नाम शंसामि। विष्णो विकुण्ठनिलय। श्रेयांसि विद्वान् इदमेव श्रेयस्साधनमिति निश्चितबुद्धिस्सन्। प्रतिमुहुः पुनः पुनः। ते तव श्रीकृष्णस्य। नाम हरे कृष्णेत्यादि। शंसामि कीर्तयामि। अथ स्तौति—अहम् अस्य लोकत्रयस्य ऊर्ध्वं विभ्राजमाने तत्र वैकुण्ठलोके अपि विरचितवसतिं तं त्वा नानाविधनुतिवचनै. संस्तौमि इति। अस्य सम्भाव्यमानस्य लोकत्रयस्य ब्रह्माण्डस्य। ऊर्ध्वं ऊर्ध्वभागे। विभ्राजमाने विशेषेण प्रकाशमाने। तत्र मायाविकाररहितत्वादिगुणविशिष्टत्वात् प्रसिद्धे। वैकुण्ठलोके विकुण्ठनिलये। अपिना ब्रह्माण्डेपि भगवतो वास. समुचितः। विरचितवसतिं विरचिता कृता वसति. वासो येन तम्। तम्

अपरिच्छेद्यमहिमानम्। त्वां विष्णुरूपं श्रीकृष्णम्। नानाविधनुतिवचनैः नानाविधैः नानाप्रकारैः नुतिवचनैः स्तोत्रैः। संस्तौमि सम्यक् स्पष्टाक्षरं यथा भवति तथा स्तुतिं करोमि। निर्गुणे मनसोऽनवगाहनात् सगुणं त्वां स्तौमीत्यर्थः ॥

अथ श्रीनारायणरूपं स्तौति—

आपः सृष्ट्यादिजन्याः प्रथममयि विभो गर्भदेशे दधुस्त्वां
यत्र त्वय्येव जीवा जलशयन हरे सङ्गता ऐक्यमापन्।
तस्याजस्य प्रभो ते विनिहितमभवत् पद्ममेकं हि नाभौ
दिक्पत्रं यत् किलाहुः कनकधरणिभृत्कर्णिकं लोकरूपम् ॥ ६ ॥

आप इति ॥ अयि विभो सृष्ट्यादिजन्याः आपः प्रथमं त्वां गर्भदेशे दधुः। अयीति सम्बोधने। विभो शक्तिसम्पन्न। सृष्ट्यादिजन्याः सृष्टेरादौ जाताः। आपः जलानि। प्रथमम् आदौ। त्वां श्रीनारायणरूपं श्रीकृष्णम्। गर्भदेशे अन्तर्भागे। दधुर्बभ्रुः। हे जलशयन हरे। जीवा. यत्र त्वयि सङ्गताः ऐक्यम् आपन्। जलशयन जलोपशायिन्। हरे विष्णो। जीवाः जीवसञ्चयाः। यत्र अपां मध्ये संस्थिते। त्वयि विष्णुरूपे श्रीकृष्णे। सङ्गता प्राप्ताः। ऐक्यमेकीभावम्। आपन् प्रापुः। प्रलयजले हि जीवा ब्रह्मणा सह जलशायिनि श्रीनारायणे सङ्गता अनुशेरत इति भावः। हे प्रभो तस्य अजस्य ते नाभौ विनिहितम् एकं पद्मम् अभवत्। प्रभो करणाकरणान्यथाकरणसमर्थ। तस्य तादृग्भूतस्य। अजस्य विष्णोः। ते श्रीकृष्णस्य। नाभौ नाभिप्रदेशे। विनिहितम् अधिष्ठितम्। एकम् अद्वितीयम्। पद्मं कमलम्। अभवत् उद्भूतम्। यत् दिक्पत्रं कनकधरणिभृत्कर्णिकं लोकरूपम् आहुः किल। यत् नाभिकमलम्। दिक्पत्रं दिशः अष्टाशा एव पत्राणि दलानि यस्य तत्। कनकधरणिभृत्कर्णिकं कनकधरणिभृत् महामेरुरेव कर्णिका यस्य तत्। लोकरूपं लोकस्वरूपम्। आहुः वदन्ति। मुनय इति शेषः। नारमयनं यस्येत्यन्वर्थनामा श्रीनारायण

एव नाभिकमलेन भुवनमजनयदित्यर्थ । तस्मात् श्रीगुरुवायुपुरेश भगवन्त श्रीकृष्ण श्रीनारायणरूपेणपि ध्यात्वा स्तौमीति भाव ॥

उक्तरूप विष्णुमजानत शोचन्नाह—

हे लोका विष्णुरेतद्भुवनमजनयत्तन्न जानीथ यूय
युष्माक ह्यन्तरस्थ किमपि यदपर विद्यते विष्णुरूपम् ।
नीहारप्रख्यमायापरिवृतमनसो मोहिता नामरूपैः
प्राणप्रीत्येकतृप्ताश्चरथ मखपरा हन्त नेच्छा मुकुन्दे ॥ ७ ॥

हे लोका इति ॥ हे लोका विष्णु एतत् भुवनम् अजनयत् । लोका जना । विष्णु परब्रह्मरूप श्रीनारायण । एतत् दृश्यमानम् । भुवन लोकम् । अजनयत् सृष्टवान् । यूय तत् न जानीथ । तत् भुवनजनयिता विष्णुरित्येतत् । न जानीथ न वेत्थ । ननु परब्रह्मात्मको विष्णुस्तत्त्वज्ञान विना कथ ज्ञायत इति चेतस्यैव सुगम रूपान्तरमस्तीत्याह— अपर किमपि यत् विष्णुरूप युष्माकम् अन्तरस्थ हि विद्यते इति । अपरम् अन्यत् । किमपि ससारधर्मयुक्तम् । अन्तरे अन्तरङ्गे स्थीयते वर्तत इत्यन्तरस्थम् । हीत्यवधारणे । विद्यते वर्तते । यूय तदपि न जानीथ इति सम्बन्ध । अन्तरङ्गस्थतया सुगममप्यहो विष्णु न भाव यन्ति भवन्त इति भाव । तदज्ञाने हेतुमाह— नीहारप्रख्यमायापरिवृत मनस नामरूपै मोहिता इति । नीहारप्रख्यमायापरिवृतमनस नीहार प्रख्यया आवरणशक्त्या हिमतुल्यया मायया परिवृतमाच्छादित मनश्चित्त येषा ते । नामरूपैर्नामभि रूपैश्च । रामकृष्णेत्यादिस्वस्वाभिमतनामभि सौन्दर्यादिरूपगुणैश्चेत्यर्थ । मोहिता मिथ्याभूतेषु शरीरादिष्वहम्ममेत्याद्यभि मन्यमाना । किमेव कथ्यते, विष्णुप्रीत्यर्थं यागादि कुर्वाणानस्मानुद्दिश्येति चेत्तत्राह—यूय प्राणप्रीत्येकतृप्ता मखपरा चरथ, हन्त मुकुन्दे इच्छा न इति । प्राणप्रीत्येकतृप्ता प्राणानामिन्द्रियाणा प्रीतिरेवैका प्रधानभूता तया तृप्ता । अत एव मखपरा यागादिकाम्यकर्मपराश्च सन्त । इन्द्रियप्रीत्य

र्थमेव यागादि कुर्वाणा, न भगवत्प्रीत्यर्थमिति भावः। अदूषितम्। कृतयागादिकर्माणः सम्प्राप्तप्रतिग्रहग्रहणाधिकारा विभवसमृद्धाशनप्रति० लाभेच्छया तत्र तत्र विप्रादिगृहेषु नित्यं प्रविशन्ति। 'हन्तेति कवेरुपहा सोप्यनेन 'वाक्येन द्योत्यते। हन्तेति खेदे। तेषां भगवद्विमुखतानुसन्धानात् कवेः खेदः। मुक्तिं मोक्षं ददातीति मुकुन्दः श्रीकृष्णस्तस्मिन् इच्छा तद्विषयकमनोव्यापारः। न। भवतीति शेषः। भगवद्भजनचिन्तापि न दृश्यत इत्यर्थः। 'विष्णोः कर्माणि सम्पश्यत' इत्यादिश्लोकव्याख्यानान्तोक्तवदस्य श्लोकस्यापि स्तोत्रत्वसिद्धिर्वेदितव्या। अत्र 'तं न जानीथ' इति, 'तदपरं विद्यते' इति च पाठभेदौ दृश्येते॥

अथामूर्तो विश्वमूर्तेर्मूर्तिमनुसन्धत्ते—

**मूर्ध्नामक्ष्णां पदानां वहसि खलु सहस्राणि सम्पूर्य विश्वं**
**तत् प्रोत्क्रम्यापि तिष्ठन् परिमितविवरे भासि चित्तान्तरेपि।**
**भूतं भव्यं च सर्वं परपुरुष भवान् किञ्च देहेन्द्रियादि-**
**ष्वाविष्टोप्युद्गतत्वादमृतसुखरसं चानुभुङ्क्षे त्वमेव ॥ ८ ॥**

**मूर्ध्नामिति ॥** त्वं विश्वं सम्पूर्य मूर्ध्नाम् अक्ष्णां पदानां सहस्राणि वहसि खलु। त्वं विराडभिमानी श्रीकृष्णः। विश्वं ब्रह्माण्डम्। सम्पूर्य पूर्णतया व्याप्य। मूर्ध्नां सत्यलोकरूपाणां शिरसाम्। अक्ष्णां सवितृरूपाणां नेत्रद्वयानाम्। पदानां पाताललोकरूपाणां चरणयुगलानाम्। अत्र समुच्चयार्थस्य गम्यमानत्वाच्चकारस्याप्रयोग.। सहस्राणि अनेकानि। वहसि दधासि। खल्विति निश्चये। 'पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम्। सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत् ॥' इति भागवतवचनेनैकस्यैव विराड्रूपस्य सहस्रमूर्धादिमत्त्वादत्र सहस्रशब्दस्य बहुवचनान्तत्वाच्च ब्रह्माण्डानां तदन्तर्गतसत्यलोकादिरूपाणां मूर्धादीनां चानेकत्वमिति वेदितव्यम्। उक्तञ्च श्रीमद्भागवते—'संख्यानं परमाणूनां कालेन क्रियते मया। न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः॥' इत्यादि।

एव नाभिकमलेन तिष्ठन् अपि परिमितविवरे चित्तान्तरे अपि भासि। श्रीकृष्ण!। तत् ब्रह्माण्डम्। प्रोत्क्रम्य अतिक्रम्य। तिष्ठन् स्थीयमानः। अपिर्विरोधे। परिमितविवरे परिमितमतिसङ्कुचितं विवरमन्तरं यस्य तस्मिन्। चित्तान्तरे हृदयान्तर्भागे। अपिस्समुच्चये। भासि शोभसे। हे परपुरुष भूतं भव्यं च सर्वं भवान्। परपुरुष परब्रह्मस्वरूप। भूतं पूर्वं जातम्। भव्यं भविष्यत्। चकारो वर्तमानस्य समुच्चये। सर्वमशेषम्। भवान् श्रीकृष्ण एव। किञ्च त्वम् एव देहेन्द्रियादिषु आविष्टः अपि उद्गतत्वात् अमृत सुखरसम् अनुभुङ्क्षे च। किञ्च अपि च। त्वं श्रीकृष्णः। एवकारोऽवधारणे। अनेन देहाद्याविष्टस्य तस्मादुद्गतस्य च भगवतो भेदराहित्यं द्योत्यते। देहेन्द्रियादिषु शरीरेन्द्रियादिषु। आदिशब्देन हृदयादि गृह्यते। आविष्टः प्राप्तः। भगवतः सर्वस्वरूपित्वादेवमुक्तम्। अपिर्विरोधे। विषयरसानुभवत्रपीत्यर्थः। उद्गतत्वात् वस्तुतो देहेन्द्रियादिसम्बन्धराहित्यात्। अमृत सुखरसम् अमृतसुखस्य मुक्तिरूपपरमानन्दस्य रसमास्वादम्। अनुभुङ्क्षे अनुभवसि। चकारः आवेशानुभवयोस्समुच्चये॥

त्रैलोक्यरूपस्य भगवतो ज्ञानात्मकतया वर्तनमपि महिमैवेत्याह—

यत्तु त्रैलोक्यरूपं दधदपि च ततो निर्गतोऽनन्तशुद्ध-
ज्ञानात्मा वर्तसे त्वं तव खलु महिमा सोपि तावान् किमन्यत्।
स्तोकस्ते भाग एवाखिलभुवनतया दृश्यते त्र्यंशकल्पं
भूयिष्ठं सान्द्रमोदात्मकमुपरि ततो भाति तस्मै नमस्ते ॥ ९ ॥

यदिति ॥ हे अनन्त त्वं तु त्रैलोक्यरूपं दधत् अपि ततः निर्गतः शुद्धज्ञानात्मा वर्तसे च इति यत् सः अपि तव तावान् महिमा खलु। त्वं श्रीकृष्णः। तुरवधारणे। त्रैलोक्यरूपं लोकत्रयमयं स्वरूपम्। दधत् ध्रियमाणः। अपिर्विरोधे। ततस्त्रैलोक्यरूपात्। निर्गतः बहिर्गतः। शुद्धज्ञानात्मा शुद्धं शुद्धसत्त्वमयं ज्ञानं चात्मा यस्य सः शुद्धज्ञानात्मा। चकारः समुच्चये। सः उक्तरूपेण वर्तनम्। अपिः समुच्चये। तव श्रीकृष्णस्य।

तावान् तावन्मात्र । महिमा माहात्म्यम् । अन्यत् किम् ान्यदूपितम्। कि कीदृश वस्तु। महिमा न चेत् पुन कीदृश वस्तु भवेदिती॥ किञ्चिदपीति भाव । भगवत स्वरूपैकभाग एव ब्रह्माण्डमित्युच्यते—ते स्तोक भाग एव अखिलभुवनतया दृश्यते इति। ते विराड्रूपस्य श्रीकृष्णस्य। स्तोक अल्प। भाग स्वरूपाश। चतुर्धा विभक्तस्यैकोऽश इत्यर्थ। शिष्टत्रिभागापेक्षयाऽस्य स्तोकत्वम्। एवकारोऽवधारणे। अखिल भुवनतया ब्रह्माण्डरूपेण। दृश्यते लक्ष्यते। एव चेच्छिष्टभागत्रय कुत्रे त्यत्राह—भूयिष्ठ सान्द्रमोदात्मक त्र्यशकल्प तत उपरि भाति इति। भूयिष्ठम् अधिकतरम्। ब्रह्माण्डापेक्षयेति भाव। सान्द्रमोदात्मक परमानन्द मयम्। त्र्यशकल्प त्रयाणामशाना भागाना समाहार त्र्यशम्, प्रायेण त्र्यश त्र्यशकल्पम्। त्रयोऽशा इति कल्पना यस्य स्वरूपस्य तत् त्र्यशकल्प मिति वा। तत ब्रह्माण्डात्। उपरि बहिरूर्ध्वभागे। भाति शोभते। अथ नमस्करोति—तस्मै ते नम इति। तस्मै तथा अपरिच्छिन्नात्मने। ते तुभ्य श्रीकृष्णाय। नम मम नमस्कार। अस्त्विति शेष॥

एव 'यस्मिन्नेतत्' इत्यारभ्य विंशत्या श्लोकै सगुणनिर्गुणभेदेन भगवन्त स्तुतिमिषेणानुसन्दधान स्वस्य तत्रानधिकारमाशङ्कमानोऽभीष्टाया मूर्तौ चित्तमव तारयितुमारभते—

अव्यक्त ते स्वरूप दुरधिगमतम तत्तु शुद्धैकसत्त्व
व्यक्त चाप्येतदेव स्फुटममृतरसाम्भोधिकल्लोलतुल्यम्।
सर्वोत्कृष्टामभीष्टा तदिह गुणरसेनैव चित्त हरन्तीं
मूर्तिं ते सश्रयेऽह पवनपुरपते पाहि मा कृष्ण रोगात्॥ १०॥

अव्यक्तमिति॥ ते अव्यक्त स्वरूप दुरधिगमतमम्। ते तव परब्रह्मस्वरूपिण श्रीकृष्णस्य। केनापि न व्यज्यत इत्यव्यक्तम्। अस्प ष्टमित्यर्थ। स्वरूप यथार्थरूपम्। दु खेनाधिगन्तु माप्तु ज्ञातु वा योग्य दुरधिगमम्, नितरा दुरधिगम दुरधिगमतमम्। अतो न तत् भावयितु

एव नाभिकमलेन । व्यक्त भगवद्रूपमाह—तत् शुद्धैकसत्त्व तु व्यक्तम् श्रीकृष्णरूपं तत्र स्वरूपम्। शुद्धैकसत्त्व केवलशुद्धसत्त्वात्मकम्। तुर्वि शेष। तमाह—व्यक्तमिति। व्यक्त स्पष्टम्। एव भगवत्स्वरूपस्याव्यक्त व्यक्तविभाग उक्त । व्यक्तस्य सुगमत्वमाह—अपि च एतत् एव स्फुटम् अमृतरसाम्भोधिकल्लोलतुल्यम् इति। एतत् उक्तप्रकारयोर्व्यक्त भगवद्रूपम्। एवकारोऽव्यक्तस्वरूपव्यवच्छेदे। स्फुट श्रीगुरुवायुपुरक्षेत्रगर्भगृहप्रकाशमान - श्रीकृष्णादिव्यमङ्गलविग्रहतया स्पष्ट सत्। अमृतरसाम्भोधिकल्लोलतुल्यम् अमृत रस ब्रह्मानन्दरस एव अम्भोधिस्तस्य कल्लोलैर्वीचिपरम्पराभिस्तुल्य सदृशम्। समुद्रवीचीना निरवधितया तद्वत् पुन पुनर्ब्रह्मानन्द प्रवहदित्यर्थ । प्रकाशत इति शेष । ब्रह्मानन्दमय भगवत श्रीकृष्णरूपमधुना पुर प्रत्यक्षतया भाति, इयमेव शुद्धसत्त्वमयस्य भगवत्स्वरूपस्य यथार्थव्यक्ततेति भाव । तत एतादृशीं श्रीकृष्णमूर्तिमेव शरण गच्छामीत्याह—हे पवनपुरपते कृष्ण तत् अह सर्वोत्कृ ष्टाम् अभीष्टा गुणरसेन एव चित्त हरन्तीम् इह ते मूर्ति सश्रये। त्व मा रोगात् पाहि इति। पवनपुरपते श्रीगुरुवायुपुरनाथ। कृष्ण रोगकर्षणसमर्थ। तत् तस्मात् कारणात्। सर्वोत्कृष्टा सर्वाभ्यो भगवन्मूर्तिभ्य उत्कृष्टाम् उत्कर्षेण वर्तमानाम्। अभीष्टा सुखसेव्यतयाऽत्यन्तप्रियाम्। गुणरसेन गुणा भगवतो भक्तवात्सल्यादय सौन्दर्यादयश्चैव रस आस्वादस्तेन हेतुना। एवकारो भयादि व्यवच्छेदे। चित्त मन । हरन्तीमपहरन्तीम्। इह श्रीगुरुवायुपुरक्षेत्रगर्भगृहे। भासमानामिति शेष । ते श्रीकृष्णस्य। मूर्ति दिव्यमङ्गलविग्रहम्। सश्रये भगवन्मूर्त्या सहैक्य प्राप्नोमीत्यर्थ । वर्तमानार्थेन ऐक्यप्राप्तेरासन्नभावित्वसम्भा वना तत्र कालविलम्बासहत्व च द्योत्येते। शरण गच्छामीति वा। त्व श्रीकृष्ण । मामनन्यशरणम्। रोगात् ससारलक्षणात्। पाहि त्रायस्व ॥

इति भगवन्महिमानुवर्णनम्

एकोनशततमदशकम्।

## शततमदशकम् ॥

एवं भगवदवतारचरितमयस्तवनिर्माणस्वरूपध्यानकथाश्रवणकीर्तनाद्युपबृंहितप्रेमलक्षणभक्तिपरिपाकवशेन हृदयाकाशमध्ये समुदितं स्फुटमतीयमानावयववेषविशेषादिकं भगवद्रूपं पुरत इवावलोकयन् भट्टपादमुनिर्यथादृष्टं केशादिपादान्तं वर्णयिष्यन्नादौ क्षेत्रगर्भगृहे तेजोगोलदर्शनमाह—

अग्रे पश्यामि तेजो निबिडतरकलायावलीलोभनीयं
पीयूषाप्लावितोऽहं तदनु तदुदरे दिव्यकैशोरवेषम् ।
तारुण्यारम्भरम्यं परमसुखरसास्वादरोमाञ्चिताङ्गै-
रावीतं नारदाद्यैर्विलसदुपनिषत्सुन्दरीमण्डलैश्च ॥ १ ॥

अग्र इति ॥ अहम् अग्रे निबिडतरकलायावलीलोभनीय तेज पश्यामि । अहं श्रीगुरुवायुपुरक्षेत्रमण्डपस्थः स्तोत्रैरुपासना कुर्वाणः श्रीनारायणभट्टपाद कवि । अग्रे पुरोभागे क्षेत्रगर्भगृहे । निबिडतरकलायावलीलोभनीयं निबिडतरा नितरा निबिडा बहुला कलायावली कलायकुसुमसमूहस्तद्वल्लोभनीयम् आकर्षकम् । तेज प्रभामण्डलम् । पश्यामि अवलोकयामि । आत्मनः अनन्तरानुभवमाह—अहं पीयूषाप्लावित. इति । पीयूषेण अमृतेन आप्लावित· समन्तात् प्लावित अभिषिक्त. । अस्मीति शेषः । अमृतेनाभिषिक्तवदानन्द मनुभवामीति भाव. । प्रभामण्डलस्यैव सूक्ष्मतयाऽवलोकने तदन्तर्भागे दृष्टमाह— तदनु तदुदरे दिव्यकैशोरवेषम् इति । तदनु तस्य प्रभामण्डलस्य दर्शना दनुतरक्षणे । तदुदरे तस्य प्रभामण्डलस्योदरे मध्ये । दिव्यकैशोरवेषं दिव्य सात्त्विक किशोरस्यायं कैशोर, स चासौ वेषश्चेति कैशोरवेष, दिव्यश्चासौ कैशोरवेषश्चेति दिव्यकैशोरवेषस्तम् । 'आ षोडशाब्दात्कैशोरम्' इति वचनात् षोडशवार्षिकबाल्यवेषमित्यर्थ । पश्यामीत्यत्राप्यन्वेति । पुनरपि सूक्ष्मतोऽव लोकनाद्दृष्टं किशोरवेषस्यासाधारणवैभवमाह—तारुण्यारम्भरम्य परमसुखरसा

एव नाभिकमलेन ...कमलोपात्। अरुणकमलदलं रक्तपद्मदलं तद्वदाकार. श्रीकृष्ण... ...। आमुग्धतारम् आ समन्तान्मुग्धं रम्यं तारं नेत्रमध्यस्थ ... यस्य तत्। कारुण्यालोकलीलाशिशिरितभुवन कारुण्येन करुणया य आलोकः स एव लीला तया शिशिरितं शीतलीकृतम्। सुखितमित्यर्थः। भुवनं त्रैलोक्यं येन तत्। ते तव श्रीकृष्णस्य। नेत्रयुग्मं मया पुरतो दृश्यमानं दिव्यकैशोरवेषस्य नयनयुगलम्। अनाथे अशरणे मयि क्षिप्यता निक्षिप्यताम्। तेन मामवलोकयेत्यर्थ ॥

अथ मुखकमलदर्शनमुदित प्रार्थयते—

उत्तुङ्गोल्लासिनासं हरिमणिमुकुरप्रोल्लसद्गण्डपाली-
व्यालोलत्कर्णपाशाञ्चितमकरमणीकुण्डलद्वन्द्वदीप्रम् ।
उन्मीलद्दन्तपङ्क्तिस्फुरदरुणतरच्छायबिम्बाधरान्तः-
प्रीतिप्रस्यन्दिमन्दस्मितमधुरतरं वक्त्रमुद्भासतां मे ॥ ४ ॥

उत्तुङ्गेति ॥ उत्तुङ्गोल्लासिनासं हरिमणिमुकुरप्रोल्लसद्गण्डपालीव्यालोलत्कर्णपाशाञ्चितमकरमणीकुण्डलद्वन्द्वदीप्रम् उन्मीलद्दन्तपङ्क्तिस्फुरदरुणतरच्छायबिम्बाधरान्त प्रीतिप्रस्यन्दिमन्दस्मितमधुरतर वक्त्रं मे उद्भासताम्। उत्तुङ्गोल्लासिनासं उत्तुङ्गा उन्नता उल्लासिनी शोभमाना नासा यस्मिंस्तत्। हरिमणिमुकुरप्रोल्लसद्गण्डपालीव्यालोलत्कर्णपाशाञ्चितमकरमणीकुण्डलद्वन्द्वदीप्र हरिमणिमुकुरवत् इन्द्रनीलरत्नमयदर्पणवत् प्रोल्लसन्त्योरतिशयेन निल सन्त्योर्गण्डपाल्योर्गण्डप्रदेशयोर्व्यालोलता प्रतिबिम्बतया ... दोलायमानेन कर्णपाशयोरञ्चितेन अलङ्कृतेन मकरयोर्मकराकृत्योर्मणिकुण्डलयो रत्न कुण्डलयोर्द्वन्द्वेन युग्मेन दीप्रं प्रकाशमानम्। उन्मीलद्दन्तपङ्क्तिस्फुरदरुणतरच्छायबिम्बाधरान्त प्रीतिप्रस्यन्दिमन्दस्मितमधुरतरम् उन्मीलतां विकसतां दन्तानां दशनानां पङ्क्तिभिः समूहैस्सह स्फुरद्भ्यां प्रकाशमानाभ्यामरुण तरच्छायाभ्याम् अरुणतरा अतिशोणा छाया कान्तिर्ययोस्ताभ्यां बिम्बाधराभ्यां बिम्बाभ्यां पक्वबिम्बफलाभ्यामिव स्थिताभ्यामधराभ्यामोष्ठाभ्याम् अन्त प्रीति

एव नाभिकमलेन ...नलापात्। अरुणकमलद...
श्रीकृष्ण...त्। आमुग्धतारम् आ समन्ता...परश्मिस्फुटमणिरशना
...यस्य तत्। कारुण्यालोकलीला...श्रीकृष्णम्। ध्यायाम यथा
आलोक स एव लीला तया ...र्चनाच्चि ॥

भुवन-शैलाश्रय येन
अधोरन्नानुजङ्घा सेवते—

ऊरू चारू तवोरू घनमसृणरुचौ चित्तचोरौ रमाया
विश्वक्षोभ विशङ्क्य ध्रुवमनिशमुभौ पीतचेलावृताङ्गौ।
आनम्राणां पुरस्तान्न्यसनधृतसमस्तार्थपालीसमुद्ग-
च्छाय जानुद्वय च क्रमपृथुलमनोज्ञे च जङ्घे निषेवे ॥ ८ ॥

ऊरू इति ॥ अह घनमसृणरुचौ रमाया चित्तचोरौ विश्वक्षोभ विशङ्क्य ध्रुवम् अनिश पीतचेलावृताङ्गौ उरू चारू तव उभौ ऊरू आनम्राणा पुरस्तान्न्यसनधृतसमस्तार्थपालीसमुद्गच्छाय जानुद्वय च क्रमपृथुलमनोज्ञे जङ्घे च निषेवे। घनमसृणरुचौ घना निविडा मसृणा स्निग्धा रुक् कान्तिर्ययो तौ। रमाया लक्ष्मीदेव्या चित्तचोरौ हृदयाकर्षकौ। विश्वक्षोभ विश्वेषा सकलाना दृष्टृजनाना क्षोभ लोकोत्तररामणीयकदर्शनजनितपरवशताम्। विशङ्क्य शङ्कायुक्त सन्। यदूरुदर्शनेन जाता लोकाना परवशता, तर्हि लोकरक्षा कारिणो मम कापि हानि स्यादित्याशङ्कयेत्यर्थ। ध्रुवमिति निश्चये। तथाऽह निश्चिनोमीत्यर्थ। अनिश सततम्। पीतचेलावृताङ्गौ पीतचेलेन पीतपट्टाम्बरेण आवृतम्। आच्छादितम् अङ्ग शरीर ययोस्तौ। उरू महा तौ चारू सुन्दरौ। तव श्रीकृष्णस्य। ऊरू सक्थिनी। आनम्राणा भक्तानाम्। पुरस्तान्न्यसनधृतसमस्तार्थपालीसमुद्गच्छाय पुरस्तान्न्यसनार्थं पुरोभागे विन्यासाय। अत्रास्ति सकलार्थसञ्चय, यथेष्ट गृह्णतामित्यभिप्रायेण भक्तपुरोभागे निक्षेपणायेत्यर्थ। धृताना सम्भृताना समस्तार्थपालीना सकलपुरुषार्थसञ्चयाना य समुद्ग सम्पुटकस्तस्य छाया प्रतिच्छविरिव प्रतिच्छविर्यस्य तत्। जानुद्वय जान्वोर्द्वय युगम्। चकार समुच्चये। क्रमपृथुलमनोज्ञे क्रमेण प्रपदादूर्ध्वं जान्वधोभागपर्यन्तमिति क्रमशब्दार्थ। पृथुले

मांसले अत एव मनॆ द्विदलं तिलतैलं च पक्वान्नं मूल्यदूषितम्।
निषेवे। ऊरुवज्जान्वोर्जङ्घयास्वं शब्ददुष्टं वर्जयेत् कार्तिकव्रती॥
पश्यन्नेव सेवां करोमीति भावः। ... चना, मटर आदि दालो, तिलका तेल,
... दूषित पदार्थोका त्याग करना

अथ मञ्जीरयोः प्रपदयोरङ्गुलीना च नेत्रगोचरीभाव ...

मञ्जीरं मञ्जुनादैरिव पदभजनं श्रेय इत्यालपन्तं
पादाग्रं भ्रान्तिमज्जत्प्रणतजनमनोमन्दरोद्धारकूर्मम्।
उत्तुङ्गाताम्रराजन्नखरहिमकरज्योत्स्नया चाश्रितानां
सन्तापध्वान्तहन्त्रीं ततिमनुकलये मङ्गलामङ्गुलीनाम्॥ ९॥

मञ्जीरमिति। अहं पदभजनं श्रेयः इति मञ्जुनादैः आलपन्तमिव मञ्जीरं भ्रान्तिमज्जत्प्रणतजनमनोमन्दरोद्धारकूर्मं पादाग्रम् उत्तुङ्गाताम्रराजन्नखर हिमकरज्योत्स्नया आश्रितानां सन्तापध्वान्तहन्त्रीं मङ्गलाम् अङ्गुलीनां ततिं च अनुकलये। पदभजनं भगवत्पादारविन्दसेवा। श्रेयः श्रेयोमार्गः। भवतीति शेषः। इति एवम्। मञ्जुनादैः मञ्जुभिः श्रवणसुखकरैः नादैः निनादैः। आलपन्तमिव स्थितम्। मञ्जीरं नूपुरयुगलम्। भ्रान्तिमज्जत्प्रणतजनमनोमन्दरोद्धारकूर्मं भ्रान्त्या भ्रमरूपसमुद्रे मज्जतो निमज्जतः प्रणतजनमनोमन्दरस्य प्रणतजनानां भक्तजनानां मोक्षार्थिनां मन एव मन्दरस्तस्योद्धारे उद्धरणे कूर्मं कूर्मरूपम्। पादाग्रं पादयुगलोपरिभागद्वयम्। यथाऽमृतमथनावसरे पयोनिधौ निमज्जतो मन्दरपर्वतस्योद्धारणे कूर्मः प्राभवत्तथा संसारसङ्कटसम्भ्रमणविवशानां भक्तजनमनसां समुद्धरणे भगवत्पादारविन्दयुगलमेव समर्थमित्यर्थः। उत्तुङ्गाताम्रराजन्नखरहिमकरज्योत्स्नया उत्तुङ्गानाम् उन्नतानां आताम्राणाम् ईषत्ताम्रवर्णानां राजतां शोभमानानां नखराणां नखानामेव हिमकराणां चारुचन्द्राणां ज्योत्स्नया चन्द्रिकया। तद्वन्निर्मलया कान्त्या इत्यर्थः। आश्रितानां भक्तानाम्। सन्तापध्वान्तहन्त्रीं सन्तापस्य सङ्कटसन्दोहस्यैव ध्वान्तस्य अन्धकारस्य हन्त्रीं नाशकारिणीम्। मङ्गलां मङ्गलविधायिनीम्। अङ्गुलीनां भगवत्पादाङ्गुलीनाम्। ततिं समूहम्। दशकमित्यर्थः। अनुकलये यथाक्रमं पुनः पुनश्चिन्तयामीत्यर्थः॥

आलोक स एव लीला तया ...मलयं नाथ ते पादमूलम् ।
भुवन त्रैलोक्य ... नित्यं चित्तस्थितं मे पवनपुरपते कृष्ण कारुण्यसिन्धो
हृत्वा निश्शेषतापान् प्रदिशतु परमानन्दसन्दोहलक्ष्मीम् ॥ १० ॥

योगीन्द्राणामिति ॥ हे पवनपुरपते कारुण्यसिन्धो नाथ कृष्ण त्वदङ्गेषु योगीन्द्राणाम् अधिकसुमधुरं मुक्तिभाजां निवासः भक्तानां कामवर्षद्युतरुकिसलयं ते पादमूलं नित्यं मे चित्तस्थितं निश्शेषतापान् हृत्वा परमानन्दसन्दोहलक्ष्मीं प्रदिशतु । पवनपुरपते श्रीगुरुवायुपुरनाथ । अनेन एवमनिर्देश्यमहिमानं भगवन्तं श्रीगुरुवायुपुरनाथत्वेनैव ध्यायामीति व्यज्यते । कारुण्यसिन्धो करुणासागर । अनेन भगवतो भक्तपारवश्यं द्योत्यते । नाथ सर्वेश्वर । अनेनार्तरक्षणसमुचितत्वं भगवतः सूचितम् । कृष्ण पापकर्षण । अनेन सकलसन्तापसशमने भगवतः सामर्थ्यं दर्शितम् । त्वदङ्गेषु तव श्रीकृष्णस्य अङ्गेषु अवयवेषु मध्ये । योगीन्द्राणां योगीश्वराणाम् । अधिकसुमधुरम् अत्यन्तमधुरतरम् । भगवद्भजनसुखरसैकनिरता योगिवरा भगवतः इतरावयवापेक्षया पादमूलमेव नितरां सेवन्त इति भावः । मुक्तिभाजां मुक्तिं मोक्षं भजन्तीति मुक्तिभाजस्तेषाम् । निवासः वासस्थानम् । मुक्ता भगवत्पादमूले एव रमन्त इति भावः । भक्तानां सकामसेवकानाम् । कामवर्षद्युतरुकिसलयं कामानामभीष्टानां वर्षे वर्षधारावदविच्छिन्नतया अनवरतप्रदाने द्युतरुकिसलयं कल्पकवृक्षपल्लवं । अर्थिजनसमस्तार्थसाधनसमर्थो हि कल्पकवृक्षः । एवं त्रिप्रकारप्रभावयुक्तमित्यर्थः । ते तव श्रीकृष्णस्य । पादमूलं पादतलम् । नित्यम् अनवरतम् । मे ममानन्यशरणस्य । चित्तस्थितं चित्ते मनसि स्थितं स्थिरतया प्रकाशमानं सत् । निश्शेषतापान् निश्शेषानाध्यात्मिकादीन् तापान् सन्तापान् । हृत्वा अपहृत्य । परमानन्दसन्दोहलक्ष्मीं परमश्चासावानन्दश्चेति परमानन्दः तस्य सन्दोहः प्रवाहस्तस्य लक्ष्मीं शोभाम् । प्रदिशतु प्रकर्षेण दिशतु ददातु ॥

एव स्तोत्रमु॰ द्विदल तिलतैल च पक्वान्न मूल्यदूषितम्।
क्षन्तुमभ्यर्थयन् स्वकृतिं भगव॰ वदुष्ट शब्ददुष्ट वर्जयेत् कार्तिकव्रती॥
॰कव्रतीको चना मटर आदि दालो तिलका तेल
अज्ञात्वा ते महत्त्व यदि॰ ॰था शब्दसे दूषित पदार्थोंका त्याग करना
स्तोत्रश्चैतत्सहस्रोत्तरमधिक॰
द्वेधा नारायणीय श्रुतिषु च जनुषः स्तुत्यता॰ ॰का मुख्य कृत्य है।
॰पे तो
स्फीत लीलावतारैरिदमिह कुरुतामायुरारोग्यसौख्यम् ॥

अज्ञात्वेति॥ हे विश्वनाथ ते महत्त्वम् अज्ञात्वा इह यत् निगदित तत् त्व क्षमेथा। विश्वनाथ सर्वेश्वर। मयेत्यध्याहर्तव्यम्। मया मन्दबुद्धिना। ते तव श्रीकृष्णस्य। महत्त्व निरतिशय माहात्म्यम्। अज्ञात्वा अनवगम्य। इह स्तोत्रे। यत् भगवल्लीलादिकम्। निगदित वर्णितम्। तदित्यध्याहृतम्। वर्णितमित्यर्थ। तज्जन्यापराधमिति यावत्। अपरिच्छेद्यस्य भगवन्माहात्म्यस्य वाचा परिच्छेदनेन इयत्ताबुद्धेरुत्पादनात्, अज्ञानेनान्यथावर्णनाच्चापराधोदय। त्व श्रीकृष्ण। क्षमेथा क्षन्तु त्वामभ्यर्थये इत्यर्थ। सहस्रोत्तरम् एतत्स्तोत्रम् अधिकतर त्वत्प्रसादाय भूयात् च। सहस्रोत्तर सहस्रादप्यधिकम्। षट्त्रिंश दधिकसहस्रमित्यर्थ। एतत् मया रचित भगवत्यर्पितम् स्तोत्र स्तव। प्रत्येक स्तोत्रत्वेन निबद्धाना श्लोकाना सङ्घात इत्यर्थ। अधिकतरम् अत्यर्थम्। त्वत्प्रसादाय तव श्रीकृष्णस्य प्रसादाय प्रीतये। भूयात् भवतु। चकार उक्तक्रिययोस्समुच्चये। अथ स्तोत्रेऽस्मिन् पठता रुचिमुत्पादयितु स्तोत्रस्य वेदविहि तत्वप्रकाशनपूर्वकमायुरादिक प्रर्थयते–श्रुतिष्वित्यादि। श्रुतिषु च जनुष स्तुत्यता वर्णनेन लीलावतारै स्फीतं द्वेधा नारायणीयम् इदम् इह आयुरारोग्यसौख्य कुरुताम्। श्रुतिषु वेदवाक्येषु। चकार स्मृतिपुराणादीना समुच्चये। जनुष अवताराणाम्। जातावेकवचनम्। स्तुत्यतावर्णनेन स्तुत्यतया स्तोत व्यतया वर्णनेन प्रतिपादनेन हेतुना। तथा चायुरारोग्यसौख्यप्रदानसमर्थमेवेति भाव। लीलावतारै लीलया धृतैरवतारै। तद्वर्णनैरित्यर्थ। स्फीत पूर्णम्। 'जनुषा' इति पाठे जनुषा सह ते स्तुत्यतया वर्णनेनेत्यर्थ। द्वेधा द्वि